श्री १०८ निकुञ्जविहारिणे नमः

महामुनीन्द्राय श्री १०८ निम्बार्काचार्याय नमः

निखिल-शास्त्र-पारावारीण—

श्रीमत् १०८ केशवकाश्मीरिभट्टविरचिता

# वेदान्तकौस्तुभप्रभावृत्तिः



श्री पं० अमोलकराम शास्त्रिसम्पादितभावदीपिकाटीकासंवलिता



रोहतकजिलान्तर्गत 'बेरी' नगरनिवासिनः श्रेष्ठिराजारामस्य पुत्रेण श्रीहरिगुरु-भक्तिपरायणेन श्रीभगवन्निम्बार्कमहामुनीन्द्रापदाश्रिताश्रितेन श्रेष्ठि—श्रीजानकीदास महानुभावेन मुद्रापयित्वा प्रकाशिता



प्रथमसंस्करणम् } सन् १९३८ ई० { मूल्यं भगवद्भक्तिः

९०-००

श्री राधासर्वेश्वरो विजयतेतराम्

पूज्यपाद श्री १०८ महामुनीन्द्रभगवन्निम्बार्काचार्यचरणकमलाभ्यां नमः

# वेदान्तकौस्तुभप्रभाख्या



## ब्रह्मसूत्रवृत्तिः

अनादिनिवृत्तिपथप्रवर्त्तकब्रह्मविद्योपदेशकलोकाचार्यश्रीसनन्दनादिप्रवर्तित
श्री १०८ महामुनीन्द्रभगवन्निम्बार्काचार्यचरणोपबृंहितवैदिकसत्सं-
प्रदायानुगतनिखिलशास्त्रपारावारीणस्वाभाविकद्वैताद्वैतसि-
द्धान्तसमर्थनकुशलश्रीमन्मुकुन्दचरणारुणपद्ममक-
रन्दभृङ्गेण श्री१०८केशवकाश्मीरि-
भट्टेन विरचिता

तस्याश्च

भगवदवतारश्री१०८सनन्दनादिप्रवर्तितसम्प्रदायानुगत श्री१०८ निखिल-
रसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाश्रिताश्रित श्री१०८ स्वामिनी-
शरणपादपद्मचञ्चरीकेण कुरुक्षेत्रान्तर्गतपुण्डरीकलब्धजनिना
श्रीवृन्दावनवास्तव्येन गौड़वंशावतंस श्रीशालिग्रामोपाध्यायात्मजेन
तर्कादिशास्त्रविदुषा तर्कतीर्थतर्करत्नतर्कवागीशामोलकराम-
शास्त्रिणा निर्मितया भावदीपिकाख्यया टीकया संवलिता

सा च

रोहतकजिलान्तर्गतबेरीग्रामनिवासिनः श्रेष्ठिराजारामस्य सुपुत्रेण श्रीहरिगुरु-
भक्तिपरायणेन श्रीभगवन्निम्बार्कमहामुनीन्द्रपदाश्रिताश्रितेन
श्रेष्ठिश्रीजानकीदासमहानुभावेनस्वकीयद्रव्यसाहाय्येन
मुद्रापयित्वा प्रकाशिता ।

प्रथमसंस्करणम् } सन् १९३८ ई० { मूल्यं भगवद्भक्तिः

वेदान्त कौस्तुभप्रभाप्रकाशकः



श्री श्री १०८ श्रीसुदर्शनावतार श्रीभगवन्निम्बार्काचार्यप्रवर्तितस्वाभाविक-
भेदाभेदसमर्थनकुशलविद्वद्गोष्ठीवरिष्ठसकलशास्त्रनिष्णातश्रीहरि-
प्रियाशरणोपनामकपण्डितश्रीदुलारेप्रसादशास्त्रिणां चरण-
कमलानुगामिश्रीहरिगुरुसत्सेवापरायणरोहतक-
जिलान्तर्गतवेरीग्रामनिवासिश्रेष्ठिवर-
श्रीजानकीदासः ।

जन्म सम्वत् १९२९ श्रीवृन्दावन प्राप्ति सम्वत १९९४

# कृतज्ञता-प्रकाशः



अनादिनिवृत्तिपथप्रवर्तक-ब्रह्मविद्योपदेशक-लोकाचार्यश्रीसनन्द-नादिप्रवर्तितश्री १०८महामुनीन्द्रभगवन्निम्बार्काचार्योपबृंहितवैदिकसत्सम्प्र-दायानुगतस्य 'भावदीपिका'ख्य टीकासंवलितस्य मुद्रितस्यास्य 'वेदान्त-कौस्तुभप्रभा' नाम्नो ग्रन्थस्याध्ययनाध्यापनतस्तत्सम्प्रदायस्यभविष्यति विपुलः प्रचारः। किञ्च साम्प्रतमेतत्सम्प्रदायानुयायिनो वैष्णवा विद्वां-सश्च स्वसिद्धान्तजिज्ञासाहितौत्सुक्याः समुपलक्ष्यन्ते तेऽप्येतद्ग्रन्थमव-लोक्य स्वसम्प्रदायसिद्धान्तं विज्ञाय अत्यन्तस्य याथात्म्यतत्त्वज्ञानेन सन्तुष्टाः सन्तः स्वीयसम्प्रदायस्योन्नतावनिष्टनिवृत्तिपूर्वकेष्टप्राप्तये निबद्धकक्षा भविष्यन्तीत्याशास्यते।

'रोहतक' जिलान्तर्गत 'वेरी' नगरनिवासिने श्रीभगवद्भक्तकुल-कमलप्रभाकरश्रेष्ठिप्रवर श्री 'राजाराम' सूनवे हरिगुरुसत्सेवापरायणाय श्रीश्रेष्ठिवर "जानकीदासाय" दानिवदान्याय सकुटुम्बाय बहुतरं धन्य-वादं वितरामः। येषां प्रचुरद्रव्यसाहाय्येनास्य महानिबन्धस्य सर्वेषां सौलभ्य सम्पादने वयं कृतार्थतामलभामहि। अतएवास्योदारमहानु-भावस्यात्यन्तमनुगृहीताः महोपकृतिश्च मन्यमानाः सततमस्योन्नतिं कामयामहे।

——अमोलकराम शास्त्री

॥ श्रीसर्वेश्वरो जयति ॥

॥ श्रीभगवते निम्बार्काय नमः ॥

# भूमिका

को न जानात्यासेतुहिमाचलं श्री१०८भगवदवताराः महर्षयश्चत्वारो वेधसा मनसा सृष्टाः संसारान्मोचणशक्त्यन्विता निवृत्तिधर्मप्रवर्तका मोक्षशास्त्रेषु लोकाचार्याः श्री१०८सनन्दनादय इति । तदुक्तं महाभारते मोक्षधर्मे ।

सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा ।
न ते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते ॥
सर्वे ते चागतज्ञाना वीतरागा विमत्सराः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममाश्रिताः ॥
एते योगविदो मुख्या लोकाचार्याः प्रकीर्तिताः ।
आचार्या मोक्षशास्त्रेषु मोक्षशास्त्रप्रवर्तकाः ॥ इति ॥

श्रीभागवते ब्रह्माप्याह—

"तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् ।
प्राक्कल्पसंप्लवविनष्टमिहात्मतत्वं सम्यग् जगाद मुनयो यदचक्षतात्मन्" इति ॥

एकादशे श्रीभगवताऽप्युक्तम्—

'एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा" इति ॥

तस्मादनादिनिवृत्तिपथप्रवर्तकाः ब्रह्मविद्योपदेष्टारः स्वाभाविकद्वैताद्वैतसिद्धान्तप्रवर्तकाः श्रीसनन्दनादयश्चत्वारः कुमाराः श्री१०८मद्धंसरूपेणावतीर्णस्य सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयत्वातिशयसाम्यशून्यत्वसच्चिदानन्दरूपत्वजगज्जन्मादिकारणत्वसर्वनियन्तृत्वमुक्तोपसृप्यत्वादिधर्माश्रयस्य भगवतः परमात्मनः श्रीकृष्णस्य शिष्या इति निश्चीयते । एते परमभागवता जगद्गुरवः सनन्दनादयः देवर्षिपूज्यपादश्रीनारदाय तत्त्वं परं भागवतञ्च धर्मं सत्सम्प्रदायार्थमुपादिशन् । एतच्च छान्दोग्ये सप्तमाध्याये भगवत्सनत्कुमारश्रीनारदसम्वादे स्पष्टम् ।

"नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः ।
आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय वै ॥
उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु ।
एवं परम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षरः ॥"

इति (विष्णुयामलवचनेभ्यः) प्राङ्निर्दिष्टानामाचार्यचरणानां गुरुशिष्यभावः सिद्धः ॥

॥ श्रीसर्वेश्वरो जयति ॥

॥ श्रीभगवते निम्बार्काय नमः ॥

# भूमिका

को न जानात्यासेतुहिमाचलं श्री१०८भगवदवतारा: महर्षयश्चत्वारो वेधसा मनसा सृष्टाः संसारान्मोचणशक्त्यन्विता निवृत्तिधर्मप्रवर्तका मोक्षशास्त्रेषु लोकाचार्याः श्री१०८सनन्दनादय इति । तदुक्तं महाभारते मोक्षधर्मे ।

सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा ।
न ते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते ॥
सर्वे ते चागतज्ञाना वीतरागा विमत्सराः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममाश्रिताः ॥
एते योगविदो मुख्या लोकाचार्याः प्रकीर्तिताः ।
आचार्या मोक्षशास्त्रेषु मोक्षशास्त्रप्रवर्तकाः ॥ इति ॥

श्रीभागवते ब्रह्माप्याह—

"तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् ।
प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतात्मन्" इति ॥

एकादशे श्रीभगवताऽप्युक्तम्—

'एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा" इति ॥

तस्मादनादिनिवृत्तिपथप्रवर्तकाः ब्रह्मविद्योपदेष्टारः स्वाभाविकद्वैताद्वैतसिद्धान्तप्रवर्तकाः श्रीसनन्दनादयश्चत्वारः कुमाराः श्री१०८मद्धंसरूपेणावतीर्णस्य सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयत्वातिशयसाम्यशून्यत्वसच्चिदानन्दरूपत्वजगज्जन्मादिकारणत्वसर्वनियन्तृत्वमुक्तोपसृप्यत्वादिधर्माश्रयस्य भगवतः परमात्मनः श्रीकृष्णस्य शिष्या इति निश्चीयते । एते परमभागवता जगद्गुरवः सनन्दनादयः देवर्षिपूज्यपादश्रीनारदाय तत्त्वं परं भागवतञ्च धर्मं सत्सम्प्रदायार्थमुपादिशन् । एतच्च छान्दोग्ये सप्तमाध्याये भगवत्सनत्कुमारश्रीनारदसम्वादे स्पष्टम् ।

"नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः ।
आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय वै ॥
उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु ।
एवं परम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षरः ॥"

इति ( विष्णुयामलवचनेभ्यः ) प्राङ्निर्दिष्टानामाचार्यचरणानां गुरुशिष्यभावः सिद्धः ॥

तदेव तत्त्वं तदनुसरणीविद्भिः परवर्तिभिराचार्यैः ऋषिमहर्षिभिश्चानेकधोपबृंहितम्—तद्यथा—

इह खलु ब्रह्मादिसुरगणेडितकीर्तिरनन्ताचिन्त्यकल्याणगुणालय इतिहासपुराणधर्मशास्त्रोपबृंहित-साङ्गवेदैकवेद्यो जगदुत्पत्तिस्थितिलयहेतुर्विश्वभूतान्तरात्मा भगवान्वासुदेवाख्यः श्रीकृष्णद्वैपायनव्यासरूपेण सत्यवत्यामवतीर्य निखिलप्राणिनामखिलपुरुषार्थसिद्धये स्वनिःश्वसितान् वेदान् ऋग्यजुःसामादिरूपेण विभज्य स्त्रीशूद्रजनोद्दिधीर्षया भारतादिपुराणसमुदायं विधाय मुमुक्षुजनानुकम्पया शारीरकमीमांसाख्यं वेदान्तशास्त्रं सूत्रयामास। तेषां सूत्राणां निरतिशयाचिन्त्यानन्तशक्तिवैभवो निरवधिककरुणावरुणालयो जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरवनितलावतीर्णो भगवान्सुदर्शनावतारः श्रीदेवर्षिनारदानुग्रहभाजनो श्रीनिम्बार्काचार्यः वेदान्तपारिजातसौरभाख्यव्याख्यानं चक्रे। निखिलभुवनजन्मस्थितिलयकारणाचिन्त्यानन्तशक्तिवैभवो निरवधिककरुणावरुणालयनिखिलकल्याणगुणाश्रयः श्रीपुरुषोत्तमः श्रीकृष्णस्तेषामवतारसमये अत्यन्तार्थप्रतिष्ठापकानां भक्तवृन्दवन्दितचरणानां मुनीन्द्रवृन्दाग्रगण्यानां स्वाभाविकद्वैताद्वैतसिद्धान्तप्रचारकानां श्रीराधाकृष्णोपासननिरतानां भगवन्निम्बार्काचार्यचरणानां प्रादुर्भावस्तैलङ्गदेशे जातः।

"सुदर्शनो द्वापरान्ते विष्णवाज्ञप्तो जनिष्यति।
निम्बादित्य इति ख्यातो धर्मग्लानिं हरिष्यति॥"

इति भविष्योत्तरे श्रीकृष्णद्वैपायनवचनान्निश्चीयते—

"जयन्त्यामरुणस्यर्षेः पत्न्यामूर्जे सिते दले।
तनयः परमानन्द आविरासीन्महाबुधः॥

एतेनैतेषामरुण इति जनकाभिधानं 'जयन्ती'ति जननीसमाख्यां च प्रतीयते। श्रीकमलाकरभट्टेन निर्णयसिन्धौ प्रथमपरिच्छेदे वेधप्रस्तावे उक्तं तद्यथा 'हेमाद्रिस्तु केषाञ्चिदर्धरात्रेऽपि दशमीवेधमाह। अर्धरात्रे तु केषाञ्चिद्दशम्या वेध उच्यते।' 'कपालवेध इत्याहुराचार्या ये हरिप्रियाः।' इति तत्रैव जन्माष्टमीव्रतनिर्णयप्रस्तावे निम्बादित्योपासकास्तु जन्माष्टमी-रामनवमी-शिवरात्र्यादौ पूर्वेऽह्नि कर्मकालीनां तिथिं त्यक्त्वा द्वित्रिमुहूर्ता परैव तिथिर्ग्राह्या। "उदयव्यापिनी ग्राह्या कुले तिथिरुपोषणे। निम्बार्को भगवान्येषां वाञ्छितार्थफलप्रद" इति मात्स्योक्तमुक्तिसप्तमीव्रते भविष्योक्तेः। इति श्रीव्यासाचार्येणापि श्रीनिम्बार्काचार्य्यस्य भगवत्त्वविशेषणेन वैशिष्ट्यमभिहितं भगवत्त्वञ्च षड्गुणसम्पन्नत्वम्। एतदेव वचनं तिथिनिर्णये विद्वद्गोष्ठीवरिष्ठेन श्रीभट्टोजिदीक्षितेनापि जन्माष्टमीप्रसङ्गे उदाहृतम्। एतत् पर्यालोचनयाऽपि निश्चीयते श्रीनिम्बार्कसम्प्रदायस्य सर्वेभ्यः सम्प्रदायेभ्यः प्राचीनत्वम्। गोवर्धनगिरिनेदिष्ठे निम्बग्रामे नैमिषारण्ये चैषां स्थितिः नियमानन्दविशेषगण्यं मुनिजनैरुपसंकीर्णं नैमिषारण्यमिति नारदपरिव्राजकोपनिषदि तेषां नियमानन्द इतिनामकीर्तनञ्च स्कन्दपुराणान्तर्गतनैमिषखण्डे श्रीनिम्बार्काचार्याणां कथाप्रस्तावो विस्तरेण निरूपितः। एतेषां भगवत्पादानां सुविख्याता श्रीदुम्बराचार्यप्रभृतयः शिष्या आसन्, तेषां मध्ये तत्पादपीठाधिश्रितः श्रीपुरुषोत्तमशङ्खावतारः सर्वतन्त्रस्वतन्त्रः वेदशास्त्रपारंगतः श्रीपुरुषोत्तमभक्तिरहस्योपदेष्टा भाष्यकारः श्रीश्रीनिवासाचार्य्योऽभूत् श्रीवज्रनाभराज्ञः समये, तदुक्तं—

"धर्मभृतां वरिष्ठस्य युधिष्ठिरस्य भूभृतः।
राज्यादुत्तरकालेऽभूद् वज्रनाभो नृपोत्तमः॥
स शशास महाभागो मथुरामण्डले महीम्।
तदा श्रीनिवासाचार्य्यो गुरूणां शरणं गतः॥"

इति। स च श्रीभगवन्निम्बार्काचार्यनिर्मितवादरायणसूत्रार्थवेदान्तपारिजातसौरभाख्यग्रन्थस्यातिगहनगम्भीरार्थतया तदर्थं बुद्ध्यवतरणार्थं वेदान्तकौस्तुभाख्यभाष्यं रचयामास।

वादरायणसूत्रभाष्यकाराणां पूज्यपादश्रीश्रीनिवासाचार्यचरणानां शिष्याः श्रीविश्वाचार्या आसन्, तैः प्रणीता निबन्धाः सम्प्रति नोपलभ्यन्ते। ततः स्वाभाविकभेदाभेदसिद्धान्तसमर्थनदक्षाः विवरणकाराः श्रीपुरुषोत्तमाचार्याः भुवो भागमलंचक्रुः। एते भगवत्पादश्री१०८निम्बार्काचार्य्यनिर्मितदशश्लोकिव्याख्यां वेदान्तरत्नमञ्जूषां व्याकुर्वन्। सिद्धान्तक्षीरार्णवो ग्रन्थोप्येभि निर्मितः सच नोपलभ्यते। एतेषां पादपद्मान्तेवासिश्रीविलासाचार्य्य आसीत्तदनु श्रीस्वरूपाचार्यः, श्रीमाधवाचार्य्य स्ततो वलभद्राचार्यः श्रीपद्माचार्यः, श्रीश्यामाचार्यः, श्रीगोपालाचार्य्यः, श्रीकृपाचार्य्यः, श्रीदेवाचार्य्य एभि र्निर्मिता वादरायणसूत्राणां जाह्नवीविवृतिः = एते सर्वेप्याचार्य्या ब्रह्मविद्योपदेष्टारः भगवद्धर्मप्रवर्त्तकाः नैष्ठिकब्रह्मचर्य्यधर्मपरायणाः परमविरक्ता अनादिवैदिकसत्सम्प्रदायानुयायिनः वेदवेदाङ्गपारंगताः वभूवुस्तदनुजाह्नविव्याख्यासेतुकाख्यारचयिता श्रीसुन्दरभट्टः श्रीदेवाचार्य्यपादपद्माश्रितः स्ततः-पद्मनाभभट्टः श्रीउपेन्द्रभट्टः श्रीरामचन्द्रभट्टः श्रीवामनभट्टः श्रीकृष्णभट्टः श्रीपद्माकरभट्टः श्रीश्रवणभट्टः श्रीभूरिभट्टः श्रीमाधवभट्टः श्रीश्यामभट्टः श्रीगोपालभट्टः श्रीवलभद्रभट्टः श्रीगोपीनाथभट्टः श्रीकेशवभट्टः श्रीगाङ्गलभट्टः। निखिलशास्त्रपारावारीणभगवद्धर्मप्रवर्त्तकानां श्रीगाङ्गलभट्टपादानां शिष्याः श्रीभगवत्सनत्कुमारसन्ततिप्रवर्तकश्रीमद्भगवन्निम्बार्कमहामुनीन्द्रोपबृंहितभेदाभेदसिद्धान्तसमर्थनकुशलाः वेदवेदाङ्गनिष्णाता, अतिविसृत्वरस्वकीर्त्तिकिरणधवलीकृतदिङ्मण्डनाः श्रीकेशवकाश्मीरिभट्टाचार्य्या आसन्। एते महानुभावा युगनभोनयनेन्दुमिते १३०२ विक्रमसम्वत्सरे आन्ध्राभिधे जनपदे वैदर्यपत्तनमलञ्चक्रुः। एते दिग्विजये वेदविरुद्धार्थवादिनो विजित्य श्रीपुरुषोत्तमोपासनरूपं भगवद्धर्ममुपदिष्टवन्तः। एकदा मधुपुर्यां मधुपुरि तोरणे, अङ्गभङ्गकारकं यन्त्रं यवनैर्निहितम्। तादृशमहोत्पातं दृष्ट्वा तादृशोपद्रवेनोद्विग्नमनस स्तत्रत्याः जनाः, आचार्यपादश्रीकेशवकाश्मीरिभट्टानयनार्थं काश्मीरं पत्तनमगमन्। पौरमुखात्तादृशं वृत्तान्तं निशम्य भक्तिज्ञानोपदेष्टृभिः सहस्रसङ्ख्यापरिमितैरन्तेवासिभिः सार्द्धं मथुरायामाचार्य्यपादा आजग्मुः। तत्र समेत्योचुः अरे यवनाधिप वतो यन्त्रमपसारय। आरादागतमृत्यवः यवनास्तद्वचनं न जगृहुः तस्मिन् दुराग्रहिणि जाते तदुपर्येकं म्लेच्छमूर्च्छाप्रदं यन्त्रमाचार्यपादाः स्थापयामासुः तदात्वाकुलः सन् यवनाधिपोऽपतत्तदंघ्रौ सर्वैरपि यवनैः सार्द्धम्, स उवाच, भूयः कदाप्येवं दुष्टं कार्यमहं न करोमीति स्वापराधान् क्षमापयामास। तथाचोक्तं तच्चरिते।

इन्द्रजालकृतं यन्त्रं पश्यन्ति स्मात्र माथुराः।
दर्शनादेव यन्त्रस्य त्विन्द्रजालप्रभावतः॥
अङ्गहीना द्विजन्मानो म्लेच्छतां प्राप्नुवंश्च वै।
स्थापिते गोपुरे यन्त्रे म्लेच्छाश्च ददृशुस्तदा॥
दर्शनादेव यन्त्रस्य मूर्च्छां म्लेच्छाः प्रपेदिरे॥" इति।

अन्यत्र—

"काश्मीरिकेशवं विद्धि केशवं तस्य कर्मतः।
यवनेशो जितो येन मथुरायां स्वतेजसा॥
यो वा जघान यवनं मुचुकुन्ददृष्ट्या।
श्रीकेशवो यदुपतिः श्रवणीयशीलः।
भूयः स एव मुनिरूपधरश्च भट्टो।
भूत्वाविता तमनिशं शरणं प्रपद्ये॥

विनिर्जिता येन दिशः समस्ता निराकृताः शास्त्रविरुद्धतर्काः ।
विद्योतयामास रमेशभक्तिं काश्मीरपादं तमहं प्रपद्ये" इति ॥

वर्णितञ्चेदं वृत्तं सङ्क्षेपतो भक्तमालग्रन्थनिर्मातृभिरार्यगृह्यैः श्रीनाभास्वामिभिर्विस्तरतस्तट्टीकाकृद्भिः गौडेश्वरसम्प्रदायानुगतश्रीप्रियदासाभिधैस्तत्र ।

तद्यथा—

छप्पय

श्रीकेशवभट्ट नरमुकुटमणि जिनकी प्रभुता विस्तरी,
काश्मीरी की छाप पापतापन जगमण्डन ।
दृढ हरिभक्ति कुठार आनमत विटप विहंडन ॥
मथुरा मध्य म्लेच्छ वाद करि बरबट जीते ।
काज़ी अजीत अनेक देखि परचे भै भीते ॥
विदित बात संसार सब सन्त साखी नाहि न दूरी ।
श्रीकेशवभट्ट नरमुकुटमणि जिनकी प्रभुता विस्तरी ॥

टीकाकारस्योक्तिः—

आय काश्मीर सुनी बसत विश्रामतीर तूरकसमूह द्वारयन्त्र इक धारिये ।
सहज सुभाऊ क्रोध निकपट आइ ताको पकरत धाई ताके सुनत निहारिये ॥
सङ्ग ले हजार शिष्य भरे भक्तिरङ्ग महा अरे वाही ठौर बोले नीच पट टारिये ।
क्रोध भरि भ्हारे आय सुवापे पुकारे वेतो देख सबे हारे मारे जल बोर डारिये ॥

एतैर्विनिर्मिता निबन्धाः—

१ श्रीब्रह्मसूत्रवृत्तिकौस्तुभप्रभा
२ उपनिषत्प्रकाशिकाख्यं द्वादशोपनिषद्भाष्यम्
३ तत्त्वप्रकाशिकाभिधा श्रीमद्भगवद्गीता व्याख्या
४ विष्णुमन्त्रोद्धारकतन्त्रग्रन्थात्मिका क्रमदीपिका
५ श्रीविष्णुसहस्रनामभाष्यम्
६ श्रीमद्भागवततिलकम्
७ अनेकानि श्रीभगवत्स्तोत्राणि च

प्रकृतमनुसरामः । कैश्चिदाचार्यपादैर्बादरायणीयसूत्राणामर्थोऽन्यथात्वं नीतस्तदसहिष्णुना प्रौढपाण्डित्येनातिविसृत्वरस्वकीर्तिकिरणधवलीकृतसर्वदिङ्मण्डलेन भगवदवतारश्रीसनन्दनादिप्रवर्तितपूज्यपादसुदर्शनावतारश्री १०८भगवन्निम्बार्कमहामुनीन्द्रोपबृंहितानादिवैदिकसत्सम्प्रदायानुगतस्वाभाविकभेदाभेदसिद्धान्तसमर्थनदक्षनिखिलशास्त्रपारावारीणेन जगद्विजयिश्रीकेशवकाश्मीरिभट्टपादेन वाद्युक्ततर्कोत्सारणपुरस्सरद्वैताद्वैतसिद्धान्तप्रकाशिका ब्रह्मसूत्रवृत्तिरूपा वेदान्तकौस्तुभप्रभाख्या व्यरचि ।

यद्यप्येष निबन्धो महाजटिलातिकुटिलवादियुक्तिनिराकरणपरः कथमप्यनवाप्तान्वीक्षिकीशिक्षाणामनासादितर्ककौशलानामगोचरतयाऽशुद्ध्यादिदोषदूषितत्वाच्चोपेक्षास्पदतां गतः सम्प्रत्यस्य ग्रन्थस्य संशोधनेन

टीकाप्रणयनेन च दुर्बोधविषया आञ्जस्येन बुद्धयारूढा भवेयुरिति प्रेक्षिष्यन्ते विपश्चितः। यद्यपि तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति तासां वादस्य वीतरागकथात्वेन तत्त्वनिर्णयमात्रमुद्देश्यं न पुनः परपक्षाधिक्षेपः सहि सरागतामावहति तथापि तत्त्वनिर्णयावसाना वीतरागकथा तया नच परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यते कर्त्तुमिति तत्त्वनिर्णयाय वीतरागेणापि स्वपक्षस्थापनाय परपक्षो दूष्यत इति परपक्षदोषोद्भावनेन न वीतरागकथात्वव्याहतिः। अतः तत्र निरास्थञ्च शतधा सहस्रधा श्रुत्या युक्त्या च निर्विशेषवादं जगन्मिथ्यात्ववादमध्यासवादं नैर्गुण्यवादं देहात्माध्यासवादमित्येवमादिप्रतिद्वन्द्विवादजातं निरसितम्।

तत्र तावत्, इतरशास्त्राधिकारिभ्योऽस्य वेदान्तशास्त्रस्याधिकारी विलक्षणस्तदुपायानां फलस्य विलक्षणश्रवणात्तथाच भगवद्भावापत्तिलक्षणमोक्षकामो दर्शनश्रवणादेष्टसाधनसमर्थोऽभीष्टफलसाधनसम्पादनसमर्थोऽभीष्टफलसाधनविषयकविद्वत्त्वाश्रयो वेदान्तशास्त्रस्याधिकारी, तथाभूताधिकारसिद्धये शुद्धोपसत्तिपूर्विका गुरूपसत्तिः वस्तुयथात्म्यविवेको विरागो भगवत्प्रपत्तिस्तदनुग्रहप्रार्थनादीनि साधनानीति विवेकः। सन्ति च शतशः सहस्रशः श्रुतिसूत्रस्मृतयश्चिदचिद्ब्रह्मरूपतत्त्वत्रयाभिधायिन्यः ब्रह्मसूत्रनिर्मात्रा श्रीकृष्णद्वैपायनव्यासाचार्येणोपक्रमसूत्रे जिज्ञास्यं जिज्ञासुस्तदज्ञानमूलभूता त्रिगुणात्मिका माया चेति तत्त्वत्रयं प्रदर्शितमन्यथा जिज्ञासानुपपत्तेः।"भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म ह्येतत्, क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।" इति तत्रापि चिद्वर्गभिन्नो ज्ञानस्वरूपो ज्ञातृत्वकर्तृत्वादिधर्मकोऽहमर्थरूपो भगवदायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरं भिन्नो बन्धमोक्षार्हश्चित्पदार्थः "तस्माद्वा एतस्माद्वा मनोमयादन्योऽन्तरात्मा विज्ञानमयः। यथा "सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नप्रज्ञानघन एव अत्रायं पुरुषः स्वयंज्योतिर्भवति। अविनाशी वारेऽयमात्माऽनुच्छित्तिधर्मा। अथ योऽयं वेद पुरुष एव द्रष्टा श्रोता रसयिता मन्ता बोद्धा। जानात्येवायं पुरुषः, ज्ञोऽतएव; कर्त्ता शास्त्रार्थवत्त्वात्, एष एव साधु कर्म कारयति, अणुर्ह्येष आत्माऽयं वा एते सिनीताः पुण्यं पापम्, वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते। बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः। उत्क्रान्तिगत्यागतीनाम् नाणु, तच्छ्रुतेरिति चेन्नेतराधिकारात्। तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्, नित्यो नित्यानां चेतनश्चेतनानाम्। अंशो नानाव्यपदेशात्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, निरञ्जनः परमं साम्यमुपैति, न स पुनरावर्त्तते, अनावृत्तिशब्दात् इत्यादीनि क्रमश उक्तार्थसाधकानि श्रुतिसूत्राण्यनुसन्धेयानि। अचित्पदार्थस्त्रिविधः। प्राकृताप्राकृतकालभेदात्। तत्र गुणत्रयाश्रयीभूतं द्रव्यं प्राकृतं तच्च नित्यं परिणामादिविकारि च। "गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च सर्वकामदुघा विभोः। अजामेकामित्यादि" श्रुतिभ्यः। अथाप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनञ्च प्रकृतिमण्डलभिन्नदेशवृत्तिनित्यविभूतिविष्णुपदपरमव्योमपरमपदब्रह्मलोकादिपदाभिधेयम्। "आदित्यवर्णं तमसः परस्तात्, सोऽध्यक्षः परमे व्योमन्, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति। "मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमि"ति श्रीमुखवचनञ्चात्रानुसन्धेयम्। तच्च धाम भगवदीयानादिसङ्कल्पात्तस्यं तदीयानां नित्यमुक्तानाञ्च भोग्यादिरूपेणानेकरूपं परिणामादिविक्रियानर्हञ्च कालातीतत्वात्। कालमहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः। अथ प्राकृताप्राकृतोभयभिन्नोऽचेतनद्रव्यविशेषः कालो नित्यो विभुश्च। "अथ नित्यमिह वै पुरुषः प्रकृतिकाल" इत्यादिश्रुतेः। "सदेव सोम्येदमग्र आसीदि"ति श्रुतौ सृष्टेः प्राक् अग्रशब्दवाच्यस्य कालस्य सत्त्वश्रवणाच्च। ब्रह्मपदार्थस्तु वक्ष्यमाणजगत्कर्तृत्वादिगुणगणाश्रयपरब्रह्मनारायणवासुदेवशब्दाभिधेयः सर्वेश्वरः श्रीपतिः श्रीकृष्ण एव चिदचिद्ब्रह्मपदार्थानां तत्तत्प्रकरणपठितैस्तत्तद्गुणस्वरूपादिविशेषत्वबोधकैर्वाक्यैरितरेतरवैलक्षण्यमुपदिश्यते। सदेव सोम्येदमग्र आसीत्, तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, त्वं वा अहमस्मि भगवो देवते तदात्मानमेव वेदाहं ब्रह्मास्मि, इत्युभयपरवचनैश्चिदचितो ब्रह्मतादात्म्यमुपदिश्यते। "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां विदधाति कामान्। ज्ञाज्ञौ द्वावजावीशानीशौ, द्वा सुपर्णा सयुजा

सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति । प्रधानक्षेत्रज्ञपतिर्गुणेशः । अक्षरात्परतः पर सर्वस्य वशी सर्वस्येशानः । एको वशी सर्वगः कृष्ण ईड्यः अन्तः प्रविष्टः शास्ता जनानाम् । य आत्मनि तिष्ठन्नात्मनोऽनन्तरोऽयमात्मा न वेद यस्यात्मा शरीरम् । एष ते आत्माऽन्तर्याम्यमृतः संसारबन्धस्थितिमोक्षहेतुः इत्यादिभेदाभिधायिनीभ्यः श्रुतिभ्यः 'भेदव्यपदेशाच्चान्यः' भेदव्यपदेशाच्च अनुपपत्तेस्तु न शारीरः । कर्मकर्तृव्यपदेशाच्च पत्यादिशब्देभ्यः । अधिकन्तु भेदनिर्देशादित्यादिसूत्रेभ्यः । "इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च, ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरम् । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत्, विष्णुशक्तिः परा प्रोक्ता चेतनाख्या तथाऽपरा" ममैवांशो जीवलोके जीवभूतः सनातनः । द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । अज्ञो जन्तुरनीशश्च स्वात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं श्वभ्रमेव वा । दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे च विद्यते । तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः । तवान्तरात्मा मम च ये चान्ये देहसंज्ञिताः, सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचिदिति भेदविषयकेतिहासपुराणादिवाक्येभ्यः प्रत्यगात्मब्रह्मणोर्भेदोऽभिधीयते । भेदविषयकश्रुतिस्मृतिसूत्रपुराणवाक्यानामत्यन्ताभेदवादिमते निर्विषयत्वापत्त्या बाधः प्रसज्येत तथात्वे चार्द्धनास्तिकतापत्तिर्दुर्वारा । अयं दोषोऽत्यन्तभेदवादिमतेऽपि समानः । तन्मतेऽभेदवाक्यानां बाधप्रसङ्गात् नह्येकविधवाक्यबाधं विना केवलभेदोऽभेदो वा समर्थयितुं शक्यते । द्वैताद्वैतसिद्धान्ते तु उभयविधवाक्यानां न कथमपि विरोधः शङ्कनीयस्तेषां क्षेत्रक्षेत्रज्ञप्रकृतिपुरुषक्षराक्षरादिशब्दाभिधेयस्य जडचेतनजातस्य ब्रह्मात्मकत्वतद्व्याप्यत्वतदधीनत्वादिहेतुभिर्ब्रह्मणो ऽभिन्नत्वं सर्वात्मत्वसर्वव्यापकत्वस्वतन्त्रसत्वादिभिर्भिन्नत्वं तस्येति प्रतिपादनेन चरितार्थत्वात् । तथाहि "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा यच्च किञ्च जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । अहमात्मा गुडाकेश सर्वभूताशये स्थितः । इन्द्रियाणि मनो बुद्धिरिति यदासीत्तदधीनमासीत् । सर्वस्य वशी सर्वस्येशानः । आत्मा हि परमः स्वतन्त्रोऽधिगुणः । जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः । सत्वं स्वतन्त्रमुद्दिष्टं तच्च कृष्णे नचापरे । अस्वातन्त्र्यात्तदन्येषामसत्वं विद्धि भारत । किमनेन जगन्नाथ सर्वं त्वद्वशगं जगदिति । यद्यदायत्तस्थितिप्रवृत्तिकं वस्तु तत्तदभेदव्यपदेश्यमिति व्याप्तिमामनन्ति छान्दोगाः प्राणेन्द्रियसम्वादे "न वै वाचो न चक्षूंषि न मन इत्याचक्षते" प्रसिद्धानां प्राणायत्तत्वादेव प्राणाभिन्नत्वमिति । तथा भेदव्यपदेशश्च क्षेत्रक्षेत्रज्ञपरमात्मनां स्वरूपस्वभाववैलक्षण्यप्रतिपादनेन मुख्यार्थतयैव सूपपन्नः । 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद नान्यतोऽस्ति द्रष्टा" द्वितीयाद्वै भयं भवतीत्यादिभेदव्यपदेशनिषेधास्तु परमात्मेतरस्वतन्त्रत्वावच्छिन्नवस्तुनिषेधेन सूपपन्नाः । एवञ्च न कस्यापि वाक्यस्य विरोधशङ्कागन्धोऽपि । अतएव च भेदविषयकाणामभेदविषयकाणाञ्च वाक्यानां परस्परं बाध्यबाधकभावोऽपि वक्तुं न शक्यस्तुल्यबलत्वात् । इदमेव तात्पर्यं हृदि निधाय भगवान् श्रीसूत्रकारो व्यासाचार्यः परस्परविरुद्धार्थकानां भेदवाक्यानामभेदवाक्यानाञ्चाविरोधेन समन्वयप्रकारप्रदर्शनाय चेतनाचेतनयोर्ब्रह्मणा स्वाभाविकभेदाभेदसम्बन्धस्यैव निर्दोषत्वख्यापनाय घटकसूत्राणि प्रणीतवान् । अंशो नानाव्यपदेशात्, अन्यथाचापि दासकितवादित्वमधीयते एके, उभयव्यपदेशात्त्वहिकुण्डलवत्, प्रकाशाश्रयवद्वा तेजस्त्वादिति 'बहुधा बहून् प्रविष्टः, त्वमेकोऽसि बहुधा बहून् प्रविष्टः' इत्याद्या घटकश्रुतयश्च । तस्मादस्य शास्त्रस्य विषयो ब्रह्मशब्दाभिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिगुणशक्त्याद्याश्रयो भगवान्वासुदेवः पुरुषोत्तमः । विषयविषयिभावलक्षणः सम्बन्धस्तत्रोक्तलक्षणसम्पन्नो मुमुक्षुरधिकारी भगवद्भावापत्तिलक्षणो मोक्षोऽत्र प्रयोजनमिति ।

---

# विषयानुक्रमणिका



## प्रथमाध्यायः

अथ अत्यन्तवचनानां परब्रह्मणि पुरुषोत्तमे श्रीनिवासे समन्वयार्थस्य प्रथमाध्यायस्य प्रथमपादे श्रद्धोपपत्तिपूर्वकगुरूपसत्त्यादिना जातसंसारमोचेच्छावत्तया ब्रह्मजिज्ञासायां प्रवृत्तं मुमुक्षुं प्रति ब्रह्मलक्षणप्रमाणे निरूप्य प्रधानपुरुषावेव जगत्कारणतया वेदान्तप्रतिपाद्यावित्याशङ्क्य सर्वज्ञसत्यसङ्कल्पनिखिलहेयप्रत्यनीकगुणाकरस्य परब्रह्मणः श्रीकृष्णस्यैव जगत्कारणतया वेदान्तप्रतिपाद्यत्वमभिहितमिति तत्त्वनिर्णायके जिज्ञासाधिकरणे

( १ सूत्रम् )


| विषयः | पृष्ठाङ्काः |
|---|---|
| मङ्गलाचरणम् | १—३ |
| शास्त्रावतरणम् | ४ |
| अथशब्दार्थनिर्वचनम् | ५ |
| ब्रह्मजिज्ञासापूर्ववृत्तप्रदर्शनम् | ६ |
| पूर्वाचार्योक्तिविरोधनिरसनम् | ७ |
| आदिमसूत्रस्थातश्शब्दार्थनिर्वचनम् | ८ |
| कर्मषष्ठीसमाससमर्थनम् | ८ |
| ब्रह्मशब्दार्थनिर्वचनम् | ८ |
| शुद्धमायोपहिताज्ञानाध्यस्तब्रह्मणो जिज्ञासाविषयत्वखण्डनम् | ९ |
| शास्त्रारम्भप्रयोजकानुबन्धचतुष्टयनिर्वचनम् | १० |
| अत्यन्ताभेदवादिमते वेदान्तशास्त्रस्य विषयप्रयोजनादीनां खण्डनम् | १२ |
| स्वसिद्धान्तेन प्रयोजनस्य भगवद्भावापत्तिलक्षणमोक्षस्य निर्वचनम् | १३ |
| एकजीववादे दोषोद्घाटनम् | १७ |
| औपाधिकभेदस्य भङ्गः | |
| प्रतिबिम्बवादस्य निरसनम् | २० |
| कल्पितगुरुशिष्यभावस्य व्युदसनम् | २१ |
| प्रत्यगात्मनां भेदः स्वाभाविक इति समर्थनम् | २१ |
| परमते बन्धमोक्षानुपपत्तिः | २१ |
| विस्मृतकण्ठमणिरिव मोक्षावाप्तिनिरसनम् | २२ |
| परमतेऽधिकार्य्युपपत्तिनिरसनम् | २२ |
| शास्त्रस्याधिकारिविषयप्रयोजनानामज्ञानप्रयुक्ताध्यासपूर्वकप्रमाणप्रमेयादिव्यवहारान्तर्गतत्वाज्ञानुपत्तिरिति तेषां पूर्वपक्षस्योत्थानम् | २२ |
| अधिष्ठानादिरूपसामग्र्यभावेनाध्यासो नोपपद्यत इति सिद्धान्तितम् | २३ |

| विषयः | पृष्ठाङ्काः |
| --- | --- |
| अधिष्ठानप्रयोजकस्य निरसनम् | २३ |
| आरोप्यासिद्धेरध्यासासिद्धिः | २३ |
| असत आरोपो न सम्भवति | २३ |
| असत्यर्थे ज्ञानं न भवति | २४ |
| असतः कारणत्वं नोपपद्यते | २४ |
| पराभिमताध्यासलक्षणनिरसनम् | २५ |
| स्मर्यमाणसदृश इत्यध्यासविशेषणस्य खण्डनम् | २५ |
| अध्यासस्य द्वैविध्यं साधनादिभेदादिति पूर्वपक्षस्तस्य समाधानम् | २६ |
| सतोऽपि निवृत्तिः सम्भवति सम्बन्धनिवृत्तिरेव ज्ञानजन्या न स्वरूपनाश इति निरूपणम् | २७ |
| अध्यासे प्रमाणनिरसनम् | २७ |
| अध्यासस्यासम्भवः किमयुक्तत्वादिति विकल्पत्रय मत्यन्ताभेदवादिना दूषितमिति पूर्वपक्षं व्युत्पाद्य तत् खण्डनप्रकारो दर्शितः | २९ |
| तत्त्वमस्यादिवाक्यं लक्षणयाऽकर्तृब्रह्मबोधनपरमिति परेषां पन्था स्तत्खण्डनप्रकारो लक्षणानिरासेनाभिहितः | ३१ |
| पराभिमताज्ञानलक्षणत्रयं निरस्तम् | ३३ |
| आदिमसूत्रविषयवाक्यस्यात्मा द्रष्टव्य इत्यस्यार्थो निरूपितः | ३४ |
| श्रवणमनननिदिध्यासनानां लक्षणमुपदिष्टम् | ३५ |
| निदिध्यासनस्यापूर्वविधित्वमभिहितम् | ३५ |

## २ जन्माद्यधिकरणम् २ सू०

| | |
| --- | --- |
| जन्माद्यस्येतिसूत्रार्थः | ३६ |
| ब्रह्मणः स्वरूपलक्षणं तटस्थलक्षणं तत्खण्डनञ्च | ३७ |
| सत्यादिपदानां यौगिकत्वं रूढत्वञ्चेति विकल्प स्तस्य समाधानम् | ३८ |
| सत्यादिपदानां लक्षणया निर्विशेषब्रह्मत्वमितिपक्षस्य भङ्गः | ३८ |
| सत्यज्ञानानन्तादिपदानामेकार्थपरत्वे पर्यायत्वापत्तिः | ३८ |
| पदान्तरवैयर्थ्यं च्वेत्युपपादितम् | ३९ |
| ब्रह्मणः सत्यादिपदलक्ष्यत्वखण्डनम् | |
| व्यावृत्तीनां सत्यत्वमिथ्यात्वाभिधानस्य निराकरणम् | ३९ |
| व्यावृत्तीनां ब्रह्मभिन्नत्वाभिन्नत्वमाशङ्क्य तत् खण्डनम् | ४० |
| व्यावृत्ति र्ब्रह्मणि कल्पितेतिपक्षस्य भङ्गः | ४० |
| शुद्धोपहिताज्ञानाध्यस्तब्रह्मणो जगत्कारणत्वखण्डनम् | ४१ |
| पराभिमतपरमेश्वरशब्दार्थनिर्वचनभङ्गः | ४१ |
| यतो वा इमानीतिविषयवाक्यस्यार्थो निरूपितः | ४२ |
| सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्यर्थः शङ्कोत्तरभावेन प्रदर्शितः | ४४ |

## ३ शास्त्रयोनित्वाधिकरणम् ३ सू०

| | |
| --- | --- |
| शास्त्रयोनित्वादितिसूत्रार्थः | ४५ |

विषयः | पृष्ठाङ्काः
ब्रह्मणो न प्रत्यक्षानुमानादिगोचरत्वं किन्तु शास्त्रैकवेद्यत्वमिति निरूपितम् ४५
यदि ब्रह्मणश्शास्त्रज्ञाप्यत्वमभ्युपेयते तदा परप्रकाशप्रसक्त्या स्वप्रकाशत्वं व्याहन्येतेति पूर्वपक्षस्य समाधानम् ४८

## ४ समन्वयाधिकरणम् ४ सू०

समस्तवेदवचनानां परब्रह्मणि समन्वयाद्वेदप्रमाणकत्वसमर्थनम्
जैमिनिना सर्वोऽपि वेदः क्रियायां योजितः वेदान्तवाक्यानामपि क्रत्वङ्गकर्तृप्राशस्त्यप्रकाशनद्वारा क्रियायां समन्वयोऽभिहितस्तन्मतखण्डनाय तन्मतनिरूपणम् । ५१
उपनिषद्भागस्य साक्षात्तत्स्वरूपगुणप्रतिपादनत्वेन साक्षादेव ब्रह्मणि समन्वयः
नित्यनैमित्तिकधर्मपराणां वाक्यानां चाधिकारिसत्त्वशुद्धिसम्पादनद्वारा ब्रह्मविषयकज्ञानाद्युपपादनेन काम्यानामपि संयोगपृथक्त्वन्यायेन ब्रह्मण्येव परम्परया समन्वय इति निरूपितम् ५४

## ५ ईक्षत्यधिकरणम् । ५-१२ सू०

प्रधाने वेदान्तवाक्यसमन्वयवादिसाङ्ख्यमतनिरासाय तन्मतस्यानुवादः ५५
ब्रह्मण ईक्षितृत्वोपपादनेन प्रतिज्ञादृष्टान्तयोरसम्भवेन च साङ्ख्यमतस्य निराकरणम् । ५६
प्रधानेऽपि गौणेक्षितृत्वोपपादनेन तस्य जगत्कारणत्वमाशङ्क्योत्तरसूत्रमवतारितम् ५७
ऐतदात्म्यमिति श्रुत्या सत आत्मत्वोक्तिः सा चाचेतने प्रधाने न घटते न तस्य जगत्कारणत्वमिति प्रतिपादितम् ।
आत्मशब्दस्य चेतनाचेतनसाधारणत्वात्तत्प्रयोगः प्रधानेऽपि युज्यत इत्युत्तरसूत्रावतरणम् ।
मुमुक्षोः श्वेतकेतोः तत्त्वमसीतिसदात्मकत्वानुसन्धानमुपदिश्य शरीरपातानन्तरं मोक्ष उपदिश्यते इति-प्रधाने तन्नोपपद्येत इत्युत्तरम् ५८
न च प्रधाननिष्ठस्य मोक्ष इति साङ्ख्यानामप्यभिमतमिति
प्रधानस्य सच्छब्दावाच्यत्वे हेत्वन्तरमुक्तं हेयत्वेति । ५८
कारणविज्ञानेन कार्यप्रतिज्ञाविरोधादपि न प्रधानस्य जगत्कारणत्वमित्युपपादितमुत्तरसूत्रेण ५९
सत्प्रधानमिति पक्षे तु स्वाप्ययसंकीर्तनं न घटत इति प्रदर्शितम् वेदान्तेषु चैतन्यमेकमेव कारणमित्ये-वावगम्यते इति हेत्वन्तरं निर्दिष्टम् ५९
सर्वत्र वेदान्तवाक्येषु सर्वज्ञस्य ब्रह्मण एव कारणत्वं श्रूयते ब्रह्मैव जगत्कारणं न प्रधानमिति हेत्वन्तरोक्तिः ।
प्रधानकारणवादखण्डनमुखेन निर्विशेषचिन्मात्रवादोऽपि निरस्तः ६१

## ६ आनन्दमयाधिकरणम् १३-२० सू०

पूर्वोत्तराधिकरणयोः सङ्गतिप्रदर्शनम् ६१
अधिकरणरचना तत्रानन्दमयः प्रत्यगात्मेतिपूर्वपक्षस्य निरूपणम्, परमात्मैव स इतिसिद्धान्तनिरूपणम् ।
आनन्दमय इत्यत्र, विकारार्थकमयट्प्रत्ययमाशङ्क्य प्राचुर्य एव मयडिति समाधानमित्युत्तरसूत्रेण प्रतिपादितम् ६३
आनन्दप्राचुर्यं प्रतियोगिसापेक्षं तस्य निरूपकं तदधिकरणवृत्ति दुःखाल्पत्वमेव न तु व्यधिकरणगता-नन्दाल्पत्वमित्याशङ्क्य अपहतपाप्मेत्यादिप्रमाणेन न ब्रह्मणि दुःखगन्धस्य सम्भावना तथा च जीवगता-ल्पानन्दापेक्षया ब्रह्मानन्दस्य प्रचुरत्वमिति समाहितम्—
प्रत्यगात्मवृत्त्यानन्दहेतुः परमात्मैवेति हेत्वन्तरमग्रिमसूत्रेण प्रदर्शितम्— ६४

विषयः पृष्ठाङ्काः

मन्त्रवर्णयोश्चैकविषयत्वादतः परमात्मैवानन्दमय इतिनिरूपितम्— ६४

नहि परमेश्वरादन्यः कश्चित् प्रत्यगात्मा नान्यतो द्रष्टेतिश्रुतेरित्याशङ्क्य नेतरोऽनुपपत्तेरिति सूत्रमवतारितम्
औपाधिकभेदाङ्गीकारे उपाधिगमनकाले पदे पदे बन्धमोक्षौ स्याताम् अनादिबुद्धस्य साधनं विनैव मोक्षः
स्यात् कृतनाशाकृताभ्यागमप्रसङ्गश्चेति तत्खण्डनम् । १७ सू० ६४

स्वाभाविकजीवेश्वरभेदप्रदर्शनायोत्तरसूत्रम् । १८ सू० ६५

"सोऽकामयत बहु स्यां प्रजायेय" इत्यादिना सङ्कल्पपूर्वकसृष्टिकर्तृत्वश्रवणाज्जीवादन्यः परमात्मैवानन्दमय
इत्युपपादितम् । सू० १९ ६६

आनन्दमये परमात्मनि जीवस्य योगं सम्बन्धं भगवद्भावापत्तिलक्षणं शास्ति शास्त्रम् । अत आनन्दमयः
परमात्मेत्युत्तरसूत्रेण निरूपितम् । सू० २० ६६

भगवत्पादश्रीशङ्कराचार्य्यैः स्वभाष्ये वृत्तिकारमतं दूषितमिदन्त्विह वक्तव्यमित्यादिना तस्य समाधानाय
तन्मतस्यानुवादः, अत्र केचिदित्यादिना कृतः । पर्य्यायचतुष्टये मयटो विकारार्थत्वात् पञ्चमप्रकारे ता-
दर्थ्यमिति पूर्वपक्षस्य समाधानम् । ६७

यद्यत्र विकारार्थकमयटः प्रवाहः स्यात्तदा तदन्तःपातित्वात् आनन्दमय इत्यत्रापि मयट्प्रत्ययस्य विका-
रार्थत्वं कल्पयितुं युक्तं तदेवात्र नास्तीत्युपपादितम् । ७५

७ अन्तराधिकरणम् । २१-२२ सू०

ईक्षत्यधिकरणेनाचेतनस्य प्रधानस्यानन्दमयाधिकरणेन च प्रत्यगात्मनो जगत्कारणत्वं निषिद्धं प्राप्तवैभवानां
शारीराणां जगत्कारणत्वनिषेधार्थमस्याधिकरणस्यारम्भः ।

आदित्यमण्डलाद्यन्तर्गतो जीवविशेष उत परमपुरुष इतिसंशयादिभिरधिकरणरचना
सर्वपापगन्धास्पर्शत्वस्वोपासकसर्वमोचयितृत्वसर्वात्मकत्वादिधर्माणामस्मिन् वाक्य उपदेशात् आदित्य-
मण्डलाद्यन्तर्गतः परमपुरुष एवेति शङ्कोत्तरभावेन सिद्धान्तितम् ७६

'य आदित्ये तिष्ठन्नादित्यादन्तरो यमयति' इत्यादिभिः श्रुतिभिः आदित्यादिक्षेत्रज्ञवर्गात् परमात्मनो-
भेदेन व्यपदेशादादित्यान्तःस्थ परमेश्वर इत्युत्तरसूत्रेणोपपादितम् । ७८

८ आकाशाधिकरणम् । २३ सू०

जगत्कारणं वस्तु आकाशादिकमेव न ततो जगत्कारणब्रह्म नामास्तीतिशङ्कानिराकरणायास्याधि-
करणस्यारम्भः । आकाशपदेन भूताकाशस्य परस्य ब्रह्मणो वा ग्रहणमिति विमर्शादिभिरधिकरणरचना ७८
शालावत्यजैवालिसम्वादे अस्य लोकस्य का गतिरितिशङ्कानिरूपणम् । सर्वकारणत्वज्यायस्त्वपरायणत्व-
लिङ्गादिभिः परमात्मा एवाकाशपदवाच्य इति सिद्धान्तितम् ।

लिङ्गापेक्षया श्रुतेर्बलीयस्त्वं श्रुतिलिङ्गवाक्येत्यादिन्यायेनाशङ्क्य ब्रह्मणोऽसाधारणानां लिङ्गानां भूताकाशे
ऽनुपपन्नत्वादनुपपत्तिसहकृतलिङ्गस्य प्राबल्यात्तेन श्रुतेर्बाधो घटत एवेति समाहितम् । ८०

९ प्राणाधिकरणम् । २४ सू०

आकाशाधिकरणोक्तन्यायस्तदुत्तरवायुवाक्येऽपि भवतीत्यतिदेशेनैतदधिकरणारम्भः । विशेषाशङ्का-
निवृत्त्यर्थश्च । ८१

विषयः | पृष्ठाङ्काः

## १० ज्योतिरधिकरणम् । २५-२८ सू०

आकाशप्राणशब्दयोर्ब्रह्मणि वृत्तिरित्यभिहितं सम्प्रति ज्योतिश्शब्दस्य ब्रह्मणि वृत्तिं प्रदर्शयितुमस्याधिकरणस्यारम्भः । ८२

तत्रविषयवाक्यप्रदर्शनपुरस्सरं संशयादिभिरधिकरणरचना

सर्वभूतानां ब्रह्मणश्चरणत्वाभिधानात् ज्योतिश्शब्दवाच्यं ब्रह्म न त्वादित्यादिकमित्यर्थनिरूपणम् ।

तद्वाक्यस्य गायत्रीच्छन्दोविषयकत्वेनोपपत्तेर्न ब्रह्मविषयकत्वमित्यस्य निरासायोत्तरसूत्रारम्भः । ८३

नह्यत्र गायत्रीशब्देन छन्दोमात्रमभिधीयते छन्दसः सर्वभूतपादत्वाऽसम्भवात् । अपि तु ब्रह्मणि गायत्रीसादृश्यानुसन्धानमिह फलायोपदिश्यत इति समाधानोक्तिः ।

अस्तु किञ्चित् सर्वभूतपादं वस्तु पूर्वत्राभिहितं तथापि न तस्येह प्रत्यभिज्ञानं 'दिवि' दिव इति निर्देशभेदादित्याशङ्क्योत्तरसूत्रमवतारितम् । ८४

द्यौराधारत्वेन मर्यादात्वेन चोपदेशभेदेऽपि "आदित्यवर्णं तमसस्तु पार" इति निरतिशयदीप्तियुक्तदिव्यमङ्गलविग्रहवत्त्वेन प्रतिपन्नं यत्परमपुरुषाख्यं ब्रह्म तदेवात्र निरतिशयदीप्तियुक्तं ज्योतिरिति निर्दिश्यत इतिसमाहितम् ।

## ११ इन्द्रप्राणाधिकरणम् । २९-३२ सू०

प्राणेन्द्रादिशब्दानां जीवपरत्वनिराकरणायास्याधिकरणस्यारम्भः । ८५

हिततमशब्दोक्तामृतत्वप्राप्त्युपासनाकर्मत्वश्रवणमस्ति तथाभूतोपासनाकर्मत्वञ्च जगत्कारणत्वव्याप्तं लिङ्गमित्युपपादितम् ।

इन्द्ररूपदेवतात्मा प्राण इतिशङ्कासमाधानाय सूत्रान्तरारम्भः परमात्मधर्माणामजरामृतत्वानन्दत्वादीनामिन्द्ररूपदेवतायामसम्भवादिन्द्रप्राणशब्दनिर्दिष्टः परमात्मैवोपास्येतिसमाधानोक्तिः ।

इन्द्रो हि सर्वस्य ब्रह्मात्मकत्वमवधार्य मामेव विजानीहीति शास्त्रदृष्ट्या युक्तमुक्तवानिति प्रतिपादनाय सूत्रान्तरारम्भः । ८६

जीवलिङ्गमुख्यप्राणलिङ्गान्यथानुपपत्त्या नेदं वाक्यं ब्रह्मपरमिति शङ्का तत्समाधानाय च सूत्रान्तरानुसरणम् । ८७

परमात्मन एव त्रिविधमुपासनं विवक्षितं स्वरूपेण ब्रह्मण उपास्यत्वम् । जीववर्गान्तर्यामितया प्राणान्तर्यामितया चेत्युपपादितम् ।

अस्पष्टजीवलिङ्गकस्पष्टजीवलिङ्गकवाक्यानां ब्रह्मणि समन्वय इति प्रतिपादनाय द्वितीयतृतीयपादयोरारम्भ. ॥

# द्वितीय पादः

## १ सर्वत्रप्रसिद्ध्यधिकरणम् । १-८ सू०

द्वितीयपादोत्थानोपयिकतया सङ्गतिप्रदर्शनपुरस्सरं पूर्वपदार्थानुवादपूर्वकोत्तरपादार्थस्य निरूपणम् । विषयवाक्यतद्गतविमर्शादिभिरधिकरणरचना एष मे आत्मान्तर्हृदय इतिवाक्यस्य हृदयायतनत्वाणीयस्त्वलिङ्गेन जीवपरत्वमस्त्वित्याशङ्का मनोमयत्वादिगुणकः परमात्मैवोपास्य इतिप्रथमवर्णके तस्याःसमाधानोक्तिः

तत्र मनोमयत्वं विशुद्धमनोग्राह्यत्वं प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वञ्चोपपादितम् । ८९

द्वितीयवर्णके सर्वान्तर्यामितया सर्वात्मत्वसर्वज्ञत्वसर्वशक्तिमत्त्वादिधर्माणां परब्रह्मण्येव विद्यमानत्वात् परमात्मैवात्र ब्रह्मशब्दवाच्य इति निरूपितम् । ९०

विषयः पृष्ठाङ्काः

येसत्यकामत्वसत्यसङ्कल्पत्वसर्वकामत्वसर्वगन्धादिगुणाः सन्ति ते पुरुषोत्तमे भगवत्येवोपपद्यन्ते न तु शारीरे इत्यर्थनिरूपणायोत्तरसूत्रारम्भः । ९१

प्रत्यगात्मनो मनोमयत्वादिगुणकत्वाभावनिरूपणायोत्तरसूत्रारम्भः । तत्रैव हेत्वन्तरसूचनाय सूत्रान्तराण्युपात्तानि । ९२

स्मृतेश्चेति सूत्रे परभाष्ये यद्व्याख्यानं कृतं तदनूद्य दूषितम् ९३

अल्पायतनत्वात् स्वरूपेणाल्पव्यपदेशाच्चाणुपरिमाणको जीव एवात्रोपास्य इति शङ्का तत्समाधानञ्चोत्तरसूत्रेण कृतम्, प्रत्यगात्मनि सुखदुःखभोगप्राप्तिमाशङ्क्य तत्समाधानोक्तिः सूत्रान्तरेणाभिहिता । ९४

सुखदुःखाद्युपभोगस्य हेतुर्नत्वेकत्र स्थितिः अपि तु पुण्यादिकर्मपरवशत्वम् । तच्च परमात्मनि नोपपद्यते तस्यापहतपाप्मत्वादिति निरूपितम् । ९५

## २ अत्त्रधिकरणम् । ९-१० सू०

ब्रह्मणोऽभोक्तृत्वेऽत्तृत्वमनुपपन्नमित्याशङ्कापरिहारायात्रधिकरणम् ९५

यस्य ब्रह्म च क्षत्रियञ्चेतिविषयवाक्येन तत्राग्निजीवब्रह्मविषयकत्वेन विमर्शादिभिरधिकरणरचना

चराचरात्मककृत्स्नस्य जगतोऽत्तृत्वं ब्रह्मण एव न त्वग्न्यादेरिति समाहितम् ।

प्रत्यगात्मनो ऽत्तृत्वनिरासायोत्तरसूत्र मवतारितम् ९६

## ३ गुहाप्रविष्टाधिकरणम् । ११-१२ सू०

"ऋतं पिबन्तौ सुकृतस्य लोक" इतिवाक्यस्य ब्रह्मण्येव समन्वय इत्यर्थप्रतिपादनायास्याधिकरणस्यारम्भः । ९७

तत्र विषयवाक्यप्रदर्शनपुरस्सरमधिकरणरचना ऋतपानलिङ्गावगतजीवस्य द्वितीयश्चेतनत्वेन तत्सजातीयः परमात्मेति निरूपितम्

गन्तृगन्तव्यमन्तृमन्तव्यत्वविशेषणैर्जीवपरमात्मानौ गृह्येते न तु बुद्धिजीवाविति प्रदर्शनाय सूत्रान्तरम् । ९८

## ४ अन्तराधिकरणम् । १३-१८ सू०

पूर्वत्र द्विवचनदर्शनाज्जीवपरमात्मनो र्ग्रहणमिह त्वेकवचनदर्शनात् कस्य ग्रहणमित्याशङ्कानिराकरणपूर्वकं यएषोन्तरक्षिणीत्यादिश्रुतिसमन्वयं ब्रह्मणि प्रदर्शनायास्याधिकरणस्यारम्भः ९९

विषयवाक्येऽक्ष्यन्तर्गतपुरुषप्रतिबिम्ब—जीवेन्द्रियाद्यधिष्ठाता देवता—परमात्मेति संशयादिभिरधिकरणरचना

आत्मत्वामृतत्वाभयत्वापहतपाप्मत्वसंयद्वामत्वादिधर्माणां परमात्मन्येवोपपत्तेरक्ष्याधारः पुरुषः परमात्मैवेति समाधानोक्तिः ।

सर्वगतस्याल्पाक्षिस्थानव्यपदेशायोगात् प्रतिबिम्बजीवदेवताविज्ञानात्मैवोपास्य इत्याशङ्कानिराकरणायोत्तरसूत्रारम्भः ।

आक्षिपुरुषः परमात्मैव कं ब्रह्म सुखविशिष्टं ब्रह्म इत्यभिधानाच्चेतिप्रतिपादनाय सूत्रान्तरमुपात्तम् । ९९

कमितिशब्दस्य वैषयिकसुखे रूढत्वात् कथं सुखविशिष्टं ब्रह्मेतिशङ्कापनोदाय सूत्रान्तरारम्भः । १००

श्रुतिस्मृत्या या गति र्विदुषो ब्रह्मप्राप्तये दर्शिता सैवाक्षिपुरुषविदः श्रूयते तस्मादप्यक्ष्यन्तरः पुरुषः परमात्मेत्यनन्तरसूत्रेणोपपादितम् १०१

न हि परमात्मेतरस्य नियमेन चक्षुष्यवस्थानं घटत इत्युपपादनाय सूत्रान्तरारम्भः । यश्चक्षुषि तिष्ठन्नित्यादिनोक्तं चक्षुषि स्थितिनियमनत्वादिकं परमात्मधर्म इति । १०२

विषयः पृष्ठाङ्का.

## ५ अन्तर्याम्यधिकरणम् । १९-२१ सू०

अन्तर्यामिश्रुतिर्ब्रह्मपरा न तु प्रधानपृथिव्याद्यभिमानिदेवताजीवात्मपरेत्युपपादनायास्याधिकरणस्यारम्भः । विषयवाक्यसंशयादिभिरधिकरणरचना । १०३

सर्वान्तर्यामित्वात्मत्वामृतत्वादीनां परमात्मासाधारणधर्माणामभिधानात् परमात्मैवान्तर्यामी भवितुमर्हति अतो न देवतादिपरिग्रह इति समाधानम्

अन्तर्यामित्वं प्रधानस्यापीत्येवं शङ्कानिरासायोत्तरसूत्रारम्भः । १०३

शारीरस्यान्तर्यामित्वनिरासायोत्तरसूत्रावतरणम् । १०४

## ६ अदृश्यत्वाधिकरणम् । २२-२४ सू०

द्रष्टृत्वादिचेतनधर्मायोगात् प्रधानं नान्तर्यामि भवतीति चेत् भूतयोनिवाक्ये द्रष्टृत्वाद्यनुक्ते भूतयोनिः प्रधानं स्यादित्याशङ्कापनोदायास्याधिकरणस्यारम्भः । १०५

विषयवाक्यसंशयपूर्वपक्षोत्तरपक्षादिभिरधिकरणरचना परमात्मासाधारणसर्वज्ञत्वादेर्निर्देशात् अदृश्यत्वादिगुणकः परमात्मैवेति समाधानोक्तिः ।

प्रधानपुरुषयोर्भूतयोनित्वनिरासाय सूत्रान्तरे निर्दिष्टे १०६

## ७ वैश्वानराधिकरणम् । २५-३३ सू०

वैश्वानरत्वेनापि भगवानेवोपास्य" इति वदन् को न आत्मा किं ब्रह्मेत्यादिश्रुतिसमन्वयं दर्शयितुमस्याधिकरणस्यारम्भः । १०७

विषयवाक्यसंशयादिभिरधिकरणरचना ।

यद्यपि वैश्वानरशब्दस्य नानार्थसाधारणत्वं तथाप्यत्र प्रकरणे परमात्मासाधारणधर्माणां सर्वात्मत्वादीनां परमात्मन्येवोपपत्तेः नतु जाठराग्निभूताग्निदेवताविशेषेषु तस्माद्वैश्वानरशब्दवाच्यः परमात्मेति समाहितम् ।

स्मृत्यापि श्रुत्यर्थनिर्णयेन वैश्वानरः परमात्मेत्यर्थप्रतिपादनायोत्तरसूत्रारम्भः । १०८

जाठराग्नौ वैश्वानरशब्दस्य रूढत्वादग्नित्रेताविधानात् प्राणाहुत्याधारत्वसङ्कीर्तनादन्तःप्रतिष्ठानश्रवणाच्च न वैश्वानरः परमात्मा किन्तु जाठराग्निरिति शङ्का जाठरे परमेश्वरदृष्टेरुपदेशात् द्युमूर्द्धत्वपुरुषत्वश्रवणाच्च वैश्वानरः परमात्मैवेति तत्समाधानञ्चाग्रिमसूत्रेण निरूपितम् । १०९

अग्न्यभिमानिदेवताभूतयोर्वैश्वानरत्वमतिदेशेन निराकर्त्तुमनन्तरसूत्रारम्भः । १०९

विश्वश्चासौ नरश्च सर्वात्मा समासान्तरेण सर्वकारणं सर्वनियन्ता भगवान् वैश्वानरशब्दवाच्यइति जैमिनिमतप्रदर्शनाय सूत्रान्तरमुपात्तम् । ११०

अनन्यशरणानामनुग्रहाय भगवान् हृत्पुण्डरीके नित्यानन्दाप्राकृतविग्रहेण प्रादेशपरिमाणेन निजभक्तेच्छापूरकेण स्तम्भे नृहरिरिवाभिव्यज्यते इत्याश्मरथ्याचार्यमतप्रदर्शनाय सूत्रान्तरारम्भः । ११०

मूर्द्धादिपादान्तदेहकल्पनं परमात्मप्राप्तयेऽनुस्मरणार्थं तथोपासनार्थमिति वादिराचार्य्यस्य मतं सूत्रान्तरेण प्रदर्शितम् । १११

पुरुषविधत्वं पुरुषेऽन्तःप्रतिष्ठितत्वञ्च वैश्वानरस्य ब्रह्मत्वे गमकमिति व्युत्पादनाय सूत्रान्तरमुत्थापितम् प्रथमाध्याये तृतीयपादे ।

## तृतीयपादः

### १ द्युभ्वाद्यधिकरणम् । १–७ सू०

विषयः पृष्ठाङ्काः

योहि परमात्मा द्युमूर्द्धावयवी पूर्वाधिकरणे दर्शितः तस्मिन् त्रैलोक्यायतनत्वमपि सम्भवतीति त्रैलोक्यायतनत्वप्रदर्शनायास्याधिकरणस्यारम्भः । ११४

विषयवाक्यसंशयादिभिरधिकरणरचना

सर्वनियन्तृत्वसर्वव्यापकत्वमोक्षसाधनसेतुत्वादिधर्मैः द्युभ्वाद्यायतनं परमात्मैव निश्चीयते,

द्युभ्वाद्यायतनं परमात्मैव संसारबन्धान्मुक्तैः प्राप्यत्वादिति बोधनाय सूत्रान्तरमुपात्तम् । ११५

प्रधानस्य द्युभ्वाद्यायतनत्वनिराकरणायोत्तरसूत्रारम्भः । ११५

जीवस्य द्युभ्वाद्यायतनत्वनिराकरणायानन्तरसूत्रोपादानम् । ११५

ज्ञातृज्ञेयभावेन जीवपरमात्मनोर्भेदोक्तेर्न जीवो द्युभ्वाद्यायतनमिति वक्तुमुत्तरसूत्रारम्भः

परमात्मप्रकरणान्न द्युभ्वाद्यायतनं जीव इति प्रतिपादनाय सूत्रान्तरम्

तत्रैव हेत्वन्तरोपन्यासायोत्तरसूत्रारम्भः ।

### २ भूमाधिकरणम् । ८–९ सू०

"भूमात्वेव विजिज्ञासितव्य" इत्यादिश्रुतिसमन्वयप्रदर्शनायास्याधिकरणस्यारम्भः

विषयवाक्यसंशयपूर्वपक्षादिभिरधिकरणरचना निरतिशयवैपुल्यविशिष्टसुखप्राप्तिकामेन मुमुक्षुणा भूमैव निरतिशयवैपुल्यविशिष्टसुखरूपः परमात्मैव विजिज्ञासितव्यः । आत्मन एवेदं सर्वमिति श्रूयमाणस्य सर्वकारणत्वस्यान्यत्रासम्भवादितिसमाधानोक्तिः । ११७

परमात्मासाधारणधर्माणां निरतिशयसुखरूपत्वामृतत्वस्य महिमप्रतिष्ठितत्वादीनां परमात्मन्येवोपपत्तेः परमात्मा भूमेति व्युत्पादनाय सूत्रान्तरारम्भः । ११९

### ३ अक्षराधिकरणम् । १०–१२ सू०

भूम्नि श्रुतधर्माणामुपपत्त्या परो भूमेतिवदक्षरे श्रुतजगद्विधारणस्य परत्रोपपत्तेरक्षरं परं ब्रह्मैवेत्युपपादनायोत्तराधिकरणारम्भः । १२०

अम्बरान्तधारणं प्रधानेऽव्याकृते वायावुपपद्यतइति कथमम्बरान्तधृतेरक्षरः परमात्मेत्याशङ्कानिरासायोत्तरसूत्रारम्भः । १२२

परमात्मैवात्राक्षरशब्दग्राह्य इत्यत्र हेत्वन्तरोक्त्यै उत्तरसूत्रारम्भः ।

### ४ ईक्षत्यधिकरणम् ।

प्रकृतेरनुपादेयत्वं तद्विलक्षणस्य परमात्मलोकस्योपादेयत्वञ्च जीवस्य ध्यातृत्वं गन्तृत्वं परमात्मनो ध्येयत्वमुपेयत्वञ्चेत्युपपादनायास्याधिकरणस्यारम्भः । १२३

विषयवाक्यपूर्वपक्षव्यवस्थापनादिभिरधिकरणरचना चतुर्मुखस्येक्षतिकर्मत्वं निरस्य परमात्मन ईक्षतिकर्मत्वं समाहितम् विद्वत्प्राप्यत्वशान्तत्वाजरत्वामरत्वामृतत्वाभयत्वादीनामसाधारणधर्माणां परमात्मन्येवोपपत्तेः ।

### ५ दहराधिकरणम् । १४–२३ सू०

"पुरिशयं पुरुषमीक्षत" इत्यनेन वाक्येन पुरिशयत्वमीक्षतिकर्मत्वञ्चाविष्कृतमङ्गलमूर्तिमत्त्वेन परमात्मनं उपपद्यते तथैवेदानीं हृत्पुण्डरीकाख्यवेश्मवर्तित्वेन दहरत्वं तस्योपपादनायास्याधिकरणस्यारम्भः । १२४

विषयः | पृष्ठाङ्काः

विषयवाक्यसंशयादिभिरधिकरणरचना १२५

जीवस्यैव दहरत्वं युक्तमिति पूर्वपक्षसमाधाननिरूपणम् भूताकाशस्य दहरत्वनिराकरणम्

"यावान्वा ऽयमाकाश स्तावानेषोऽन्तर्हृदये आकाश" इति प्रसिद्धेनाकाशेन दहराकाशः पर एवोपमीयते भिन्नयोरेवोपमानोपमेयभावदर्शनात् अपहतपाप्मत्वसत्यकामत्वसर्वविकाराधारत्वधर्माः परमात्मपरिग्रहे सङ्गच्छन्त इत्युपपादितम् । १२६

सर्वप्राणिनामहरहःसुषुप्तावस्थायां गमनं तत आगमनञ्च दृष्टं ब्रह्मैव लोक इतिकर्मधारयसमासेन एत-मिति दहरार्थकपदसमानाधिकरणतया निर्दिष्टब्रह्मलोकशब्दश्च दहराकाशस्य परब्रह्मत्वे लिङ्गमित्युपपाद-नाय सूत्रान्तरारम्भः । १२७

सर्वलोकविधारकत्वात् दहरः परमात्मेति निरूपणाय सूत्रान्तरमुपन्यस्तम् १२८

जीवस्य दहराकाशत्वमाशङ्का तस्याः समाधानञ्चोत्तरसूत्रेण निरूपितम् ।

प्रजापतिवाक्यात् जीवेऽपहतपाप्मत्वादिगुणाष्टकमवगम्यत इत्याशङ्क्य समाहितमुत्तरसूत्रेण १२८

जीवपरामर्श—जीवपरामर्शः परमात्मनो जीवस्वरूपाविर्भावहेतुत्वप्रदर्शनार्थं इत्युपपादनाय सूत्रान्त-रारम्भः । १२९

जीवस्य दहरत्वनिराकरणाय सूत्रान्तराणि ।

## ६ प्रमिताधिकरणम् । २४–२५ सू०

दहरत्वेन ब्रह्मण उपास्यत्वं निर्णीतम् सम्प्रति अङ्गुष्ठमात्रत्वेन ब्रह्मोपासनीयमित्युपपादनायास्याधिकरण-स्यारम्भः । १३०

विषयवाक्यसंशयपूर्वपक्षादिभिरधिकरणरचना अङ्गुष्ठमात्रः पुरुषः कठवल्युक्तः परमात्मैव कुतः "ईशानो भूतभव्यस्येतिश्रुतेः" इति समर्थितम् ।

कथं सर्वगतस्य परमाणोरपदेश इतिशङ्कानिराकरणायोत्तरसूत्रारम्भः । प्राणिभेदेन भिन्नभिन्नहृदयपरि-माणे हृदये परमात्मनोऽवस्थिते स्तत्तद्धृदयस्य भिन्नभिन्नपरिमाणत्वेनाङ्गुष्ठत्वमात्रोक्तिः कथमित्या-शङ्क्य शास्त्रस्य मनुष्याधिकारिकत्वेन तद्धृदयस्योपासनास्थानत्वेन समाहितम् । १३१

## ७ देवताधिकरणम् । २६–३० सू०

ब्रह्मविद्यायां मनुष्यमात्रस्यैवाधिकारोक्तौ तत्र देवानामधिकारो नेति प्राप्तशङ्कानिरासायोत्तराधिकरणा-रम्भः । १३२

देवादीनां मन्त्रमूर्त्तित्वेन देहादिमत्वाभावे सामर्थ्याभावान्न देवादीनामुपासनास्वधिकारः सम्भवतीत्या-शङ्कानिराकरणम्

प्रजापतिविद्यायामिन्द्रविरोचनयोः जिज्ञासुत्वश्रवणादस्ति देवानां ब्रह्मविद्यायामधिकार इति ।

देवादीनां ब्रह्मविद्याधिकारोपपत्तये विग्रहस्वीकारे यागादावेकस्य युगपदनेकयागेषु सान्निधानानुपपत्या विरोध इति शङ्का तस्याःसमाधानमित्थं तादृशशक्तिमतां देवानां नानाविग्रहस्वीकारान्नानायागेषु सन्नि-धानेन तदुपपत्ते र्न विरोध इत्यर्थोक्त्यै सूत्रान्तरारम्भः । १३३

देवादीनां विग्रहयोगे सावयवत्वेनास्मदादिवत्तेषामपि जन्ममरणयोगादनित्यत्वं दुर्वारम् । तथात्वे नित्यः शब्दो नित्येनार्थेन नित्यसम्बन्धवत्तया प्रतीयते, इति वैदिके शब्दे यन्नित्यत्वं पूर्वतन्त्रसिद्धं तद्विरुद्धं स्यादिति शङ्का तत्समाधानञ्चोत्तरसूत्रेण कृतम् । शब्दानां सम्बन्धो जातौ न तु व्यक्तौ, तथा च जातीनां नित्य-त्वान्नित्य एव तेषां वाचकभाव इत्युपपादितम् । १३४

विषयः | पृष्ठाङ्काः

वेदस्य नित्यत्वदार्ढ्यायोत्तरसूत्रारम्भः ।
प्राकृतप्रलये तु सर्वविच्छेदात् कुतो वेदस्य सृष्टेः पूर्ववर्तित्वं कथञ्च नित्यत्वं कथञ्च तत्पूर्वत्वं जगत
इति शङ्कानिरासायोत्तरसूत्रारम्भः । १३५

८ मध्वधिकरणम् । ३१–३३ सू०

मध्वादिषु विद्यासु देवानामधिकारोऽस्ति न वेति चिन्तयितुमस्याधिकरणस्यारम्भः । १३६
विषयवाक्यसंदेहपूर्वपक्षैरधिकरणरचना ।
मध्वादिषु विद्यासु सूर्यवस्वादीनामधिकाराभाव इति जैमिन्याचार्य्यस्य मतमुपपादितम् ।
देवानामुपासकत्वे न मध्वादिष्वनधिकार इतिपूर्वपक्षपरमुत्तरसूत्रम्
मध्वादिष्वप्यधिकारसद्भावो देवादीनामिति बादरायणसिद्धान्तपरमुत्तरसूत्रम् १३७

९ अपशूद्राधिकरणम् । ३४–३९ सू०

ब्रह्मविद्यायां मनुष्येषु द्विजस्यैव जानश्रुतौ सम्वर्गविद्याधिकारिणि शूद्रशब्दप्रयोगाच्छूद्रस्याधिकारः
स्यादित्याशङ्कानिराकरणायास्याधिकरणस्यारम्भः । १३७
शूद्रस्य तत्राधिकारः कुतो नेति शङ्का
शूद्रस्योपनयनविध्यविषयत्वान्न तत्र तस्याधिकार इति समाधानम्
सम्वर्गविद्यास्थशूद्रशब्दस्याख्यायिकाप्रदर्शनेनार्थो निरूपितः
अत्र शूद्रशब्दो यौगिक एव क्षत्रियजातिं जानुश्रुतिं प्रति तस्य सम्बोधनार्थं प्रयोगादितिहेत्वन्तरोक्त्या
जातिशूद्रस्य तत्राधिकाराभावनिरूपणार्थमुत्तरसूत्रारम्भः । तस्य क्षत्रियत्वनिरूपणम् १३९
जातिशूद्रस्य नोपनयनादिकाः संस्कारा इति हेत्वन्तरेण च तत्रानधिकारकथनायोत्तरसूत्रारम्भः । १४०
जाबालस्योपनयने शूद्रत्वाभावं निर्धार्य्य प्रवृत्तेर्न शूद्रस्याधिकार इत्यर्थनिरूपणायोत्तरसूत्रारम्भः । १४०
जातिशूद्रस्य वेदश्रवणप्रतिषेधकेन हेत्वन्तरेणापि न तस्य तत्राधिकार इतिप्रतिपादनायोत्तरसूत्रमुपन्यस्तम्
स्मृतिवचनादपि न शूद्रस्याधिकार इत्यर्थनिरूपणाय सूत्रान्तरारम्भः ।
एवं प्रासङ्गिकेऽधिकरणत्रये वृत्ते यदङ्गुष्ठाधिकरणान्ते स्थितं तत् सूत्रद्वयेन समापयति १४१
प्राणशब्दितः प्रमितोऽङ्गुष्ठपरिमाणकः पर एव कृत्स्नस्य जगतः कम्पनहेतुत्वादित्युपपादनाय सूत्रमुपात्तम् ।
तत्र हेत्वन्तरप्रदर्शनायोत्तरसूत्रम्

१० अर्थान्तरत्वादिव्यपदेशाधिकरणम् । ४२–४४ सू०

पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदन्तरश्रुताया आकाशश्रुतेः ब्रह्मणि समन्वयप्रदर्शनमुखेन परमा-
त्मनोऽसङ्गत्वसर्वगतत्वोपपादनायास्याधिकरणस्यारम्भः ।
विषयवाक्यसंशयादिभिरधिकरणरचना ।
मुक्तजीवभूताकाशयोराकाशपदवाच्यत्वं निराकृत्य परमात्मनस्तथात्वमुपपादितम्
जीवात्मनो व्यतिरिक्तः परमात्मैव नास्ति । अयमात्मा ब्रह्मैवेत्यैक्योपदेशात्, द्वैतप्रतिषेधाच्च । तथाचाकाश-
पदवाच्यो न मुक्तात्मा किन्तु तद्भिन्नः परमात्मेति निर्णयो न युक्त इतिशङ्काव्युदासाय सूत्रान्तरारम्भः ।
जीवपरमात्मनोर्भेदप्रतिपादनायोत्तरसूत्रारम्भः । १४३
अथ प्रथमाध्याये चतुर्थपादे साङ्ख्यतन्त्रप्रतिपादनच्छायापन्नानां वाक्यानां साङ्ख्याभिमतार्थनिरासेन ब्रह्मणि
समन्वयः प्रतिपाद्यते ।

## चतुर्थपादः

### १ आनुमानिकाधिकरणम् । १-७ सू०

| विषयः | पृष्ठाङ्काः |
| --- | --- |
| साङ्ख्याभिमतस्य प्रधानस्याशब्दत्वं केवलानुमानिकत्वञ्चेति शङ्कानिराकरणायास्याधिकरणस्यारम्भः । | १४६ |
| विषयवाक्यविमर्शादिभिरधिकरणरचना | |
| प्रधानं रूढ्या काठकश्रुतावव्यक्तशब्दप्रतिपाद्यं जगत्कारणञ्चेत्याशङ्क्य प्रकरणादपि न प्रधानमव्यक्तशब्द-वाच्यं शरीरमेवेत्यर्थप्रतिपादनेन समाहितम् | |
| न व्यक्तमव्यक्तमिति व्युत्पत्त्या यौगिकोऽत्राव्यक्तशब्दः व्यक्तशब्दार्हं शरीरं कथं निर्दिशतीति शङ्कानिराकर-णायोत्तरसूत्रारम्भः । | १४७ |
| भूतसूक्ष्ममव्यक्तमेवावस्थान्तरापन्नं शरीरं भवतीतिसमाहितम् । | |
| अव्यक्तशब्दं प्रधानं न स्वतन्त्रं किन्त्वीश्वराधीनमित्युपपादनायोत्तरसूत्रारम्भः । | १४८ |
| नानुमानिकं प्रधानमव्यक्तशब्देन गृहितुं शक्यं प्रधानस्य ज्ञेयत्वबोधकवचनाभावात् काठक इत्यर्थप्रति-पादनायोत्तरसूत्रारम्भः । | |
| प्रधानस्य ज्ञेयत्वमुच्यते श्रुतिप्रमाणेनेत्युक्ते आत्मन एव ज्ञेयत्वं न प्रधानस्य ज्ञेयत्वं वदतीत्यर्थप्रतिपाद-नायोत्तरसूत्रारम्भः कठवल्ल्यां परमात्मतदुपासनोपासकानां त्रयाणामेवोपन्यासः न तु प्रधानस्य तदनु-क्तेरपि प्रधानं नात्र ग्राह्यमित्यर्थनिरूपणायोत्तरसूत्रारम्भः । | १४९ |
| महच्छब्दस्यात्मनि प्रयोगात् तत्साहचर्येणाव्यक्तशब्दोऽप्यात्मपर एवेति हेत्वन्तरोक्त्यै सूत्रारम्भः । | १५२ |

### २ चमसाधिकरणम् । ८-१० सू०

| विषयः | पृष्ठाङ्काः |
| --- | --- |
| अजातन्त्रसिद्धा प्रकृतिः स्यादित्याशङ्कानिरासायास्याधिकरणस्यारम्भः । | १५३ |
| विषयवाक्यसंशयादिभिरधिकरणरचना | |
| ब्रह्मात्मिकाऽजा मन्त्रेणोक्ता नतु त्रिगुणात्मिका साङ्ख्याभिमतेत्युपपादितं चमसदृष्टान्तेन | |
| उपक्रमोपसंहारन्यायेनाजाशब्देन ब्रह्मात्मिकैवाजा ग्राह्या इत्युपपादनाय सूत्रान्तरारम्भः | |
| अव्याकृता सूक्ष्मरूपा ब्रह्मशक्तिः प्रकृति र्ब्रह्मशक्तित्वाद्ब्रह्मवन्नित्याजेत्युच्यते इति दृष्टान्तेनोपपादितमग्रि-मसूत्रेण | १५३ |

### ३ सङ्ख्योपसङ्ग्रहाधिकरणम् । ११-१३ सू०

| विषयः | पृष्ठाङ्काः |
| --- | --- |
| पञ्चजनशब्दस्य प्रधानार्थकत्वं स्यादिति शङ्कानिरासायास्याधिकरणस्यारम्भः । | १५५ |
| पञ्चजना इतिशब्दे योगेन पञ्चविंशतितत्त्वग्रहणेऽस्मदुक्तं श्रुतिशब्दवत्त्वं प्रधानस्यागतमिति साङ्ख्यपूर्व-पक्षनिरूपणम् । पञ्चजना अत्र नामतो ग्रहणमवयवार्थस्याविवक्षितत्वात् यथा सप्तर्षय इति समाहितम् । | |
| पञ्चजनशब्दो रूढ इत्युक्त्वा तादृशरूढ्यर्थं प्राणादिकं दर्शयितुमुत्तरसूत्रारम्भः । वाक्यशेषे श्रुतत्वेन-तेषामेव प्राणादीनां पञ्चजनशब्देन ग्रहणमित्यस्योपपादनम् । | १५७ |
| माध्यन्दिनैः स्तथोक्तेः पञ्चजनशब्देन प्राणादिग्रहणेऽपि काण्वैस्तथानुक्तेः कथं तेषां ग्रहणमित्याशङ्का-पनोदायोत्तरसूत्रारम्भः । | १५७ |

### ४ कारणत्वाधिकरणम् । १४-१५ सू०

| विषयः | पृष्ठाङ्काः |
| --- | --- |
| ब्रह्मैकहेतुकं विश्वमिति मतमपि सन्दिग्धमेव कारणप्रतिपादकवेदान्तवाक्येषु सृष्टेरनेककारणकत्वद-र्शनात् क्वचित् सद्धेतुका क्वचिदात्महेतुका क्वचिदसद्धेतुका सृष्टिरुच्यते इत्याशङ्कापरिहारायास्याधिकर-णस्यारम्भः । | |

| विषयः | पृष्ठाङ्काः |
|---|---|
| विषयवाक्यसंशयादिभिरधिकरणरचना | १५८ |
| जगज्जन्मादिकारणं ब्रह्म नेत्यर्थे विरोधप्रतिपादनम् | |
| सृष्टेःक्रमवैचित्र्यकथनम् | |
| सर्वेषु सृष्टिवाक्येषु एकस्यैव ब्रह्मणः कारणत्वमुक्तं भवति सृष्टिवैचित्र्यं न कर्तृभेदमापादयतीति विशेष-परिहारः | |
| असद्वा इदमग्र आसीदित्यादौ ब्रह्मैव सूक्ष्मशब्दापरपर्य्यायेणासच्छब्देनोच्यते सृष्टिप्रतिपादकवाक्येषु तस्यैव ग्राह्यत्वादिति प्रतिपादनायोत्तरसूत्रारम्भः । | १५९ |
| **५ जगद्वाचित्वाधिकरणम् । १६–१८ सू०** | |
| भोक्तृत्वलिङ्गेन वेदान्ते साङ्ख्याभिमतपुरुषपरिग्रहस्तदधिष्ठाता प्रकृति र्जगद्धेतुरिति शङ्कानिरासायास्या-धिकरणस्यारम्भः । | १६० |
| यस्य चैतत्कर्म स वेदितव्य इत्यत्र वेदितव्यत्वेन साङ्ख्यतन्त्रसिद्धः प्रकृत्यध्यक्षो भोक्ता पुरुष उपदिश्यते उत परमात्मेति शङ्का पुरुषाणां कर्ता पुरुषोत्तम एव वेदितव्यत्वेनावगम्यते | |
| कर्मशब्दस्य जगद्वाचित्वात् नच जगत्कर्तृत्वं परमात्मनो ऽन्यत्राञ्जसा सम्भवतीति सिद्धान्तनिरूपणम् | |
| भोक्तृत्वलिङ्गाज्जीवो ग्राह्यो मुख्यप्राणलिङ्गाच्च प्राणो वेत्याशङ्का तत्समाधानञ्चोत्तरसूत्रेण कृतम् | |
| प्राणशब्दस्य ब्रह्मणि प्रसिद्धत्वात् तल्लिङ्गानां ब्रह्मपरत्वं कथं पुनर्जीवलिङ्गानां ब्रह्मपरत्वमित्याशङ्कापरि-हारायोत्तरसूत्रारम्भः । | १६१ |
| अत्र प्रकरणे जीवग्रहणं जीवव्यतिरिक्तब्रह्मबोधनार्थमितिजैमिनेराचार्य्यस्य मतं प्रदर्शितम् | १६२ |
| **६ वाक्यान्वयाधिकरणम् । १९–२२ सू०** | |
| साङ्ख्याभिमतपुरुषनिरासायास्याधिकरणस्यारम्भः । | १६३ |
| द्रष्टव्यत्वादिरूपेण साङ्ख्याभिमतः पञ्चविंशक आत्मा पुरुषोत्तमः श्रीवासुदेव इति विमृश्य द्रष्टव्यत्वादिना पञ्चविंशकस्तन्त्रप्रसिद्ध आत्मोपदिश्यत इति पूर्वपक्षः । | |
| पुरुषोत्तम एवात्र द्रष्टव्यत्वादिनोपदिश्यते उपक्रमोपसंहारैकार्थपराणां सर्वेषां वाक्यानां परमात्मपरत्व-यान्वयदर्शनादिति सिद्धान्तः । | |
| जीवस्य परमात्मकार्यतया तदन्यत्वाज्जीवात्मशब्देन परमात्मनो ऽभिधानमित्याश्मरथ्य आचार्य्यो मन्यत-इत्युपपादनाय सूत्रान्तरारम्भः । | |
| श्रुतिस्मृतिभ्योऽजत्वेन प्रसिद्धस्य जीवस्यैवंभावात् परमात्मना सह ब्रह्मभावापन्नत्वाज्जीवशब्देन परमात्मा ऽभिधीयते, इत्यौडुलोमिराचार्य्यो मन्यते स्म इत्युपपादनाय सूत्रान्तरारम्भः । | |
| स्वनियम्यभूते जीवात्मन्यात्मतया परमात्मनो ऽवस्थिते र्हेतो र्जीवशब्देन परमात्माऽभिधीयते इति नियम्य नियन्तृत्ववित् काशकृत्स्न आचार्यो मन्यते स्म तदेवं मुनित्रयमतद्वारा प्रसङ्गाद्भेदाभेदप्रकारो भगवता सूत्रकारेण दर्शित इत्युपपादनायानन्तरसूत्रारम्भः । | १६६ |
| **७ प्रकृत्याधिकरणम् । २३–२७ सू०** | |
| विषयवाक्यसंन्देहपूर्वपक्षादिभिरधिकरणरचना | |
| विश्वं प्रति ब्रह्मणो निमित्तकारणत्वम् 'स ईक्षाचक्रे तदैक्षत' इत्यादिश्रुत्युक्तेक्षापूर्वककर्तृत्वस्य लोके | |

विषयः पृष्ठाङ्काः

निमित्तकारणेषु कुलालसुवर्णकारादिष्विव निमित्तमात्र एव सम्भवात् कार्यकारणयोश्च सारूप्यदर्शनात् ब्रह्मणोऽपरिणामितया तदधिष्ठितेनाचेतनेन कार्यसधर्मेण परिणामिना प्रधानोपादानेन भाव्यमिति पूर्वपक्षः १६६

कारणविज्ञानेन सर्वकार्यविज्ञानविषया: प्रतिज्ञा दृष्टान्तश्च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्या'दित्यात्मकः तयोः सामञ्जस्यं ब्रह्मणो ऽभिन्ननिमित्तोपादानकारणत्व उपपद्येत नान्यथेति सिद्धान्तः । १७०

ब्रह्मणो जगदुपादानत्वे "यतो वा इमानि भूतानि, 'जन्माद्यस्य यतः 'यतः सर्वाणि भूतानी'त्यादि-श्रुतिस्मृतिसूत्रेषु जनिकर्तुः प्रकृतिरितिसूत्रेण प्रकृत्यर्थाभिहितपञ्चम्याः प्रामाण्यादित्युपपादितम् पुत्रात्प्रमोदो जायते' इत्यनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुपरमित्युपादानपरत्वं निषिध्यते इति वृत्तिकाराणामाशङ्का तत्र न्यासकारमहाभाष्यकारकैयटानामपि मतं प्रदर्शितम् । १७१

कारणमात्रार्थकत्वे ऽप्युपादानपरत्वमप्यभ्युपेयते छागपशुन्यायेनेति सिद्धान्तितम् ।

कारणत्वलक्षणं तद्विभागश्च दर्शितः । १७२

परमते तु तत्वं दुर्घटम् । कार्यस्य कल्पितत्वाङ्गीकारेण कुलालवदुपादानगोचरप्रयत्नचिकीर्षादिमत्वासम्भवात् । नहि कल्पितशुक्तिरूप्यादिकं प्रति भ्रान्तस्यान्यस्य वा कर्तृत्वं प्रामाणिकमित्यादिकं शङ्कोत्तरभावेन निरूपितम् । १७२

हेत्वन्तरेणाप्यात्मनोऽभिन्ननिमित्तोपादानकारणत्वप्रदर्शनायोत्तरसूत्रारम्भः । १७७

तदात्मानं स्वयमकुरुतेति श्रुत्या आत्मानमिति द्वितीयया कृतिविषयत्वं स्वयमिति कृतिमत्वच्च बोध्यते तच्चोभयमेकस्यानुपपन्नं कार्यं हि साध्यं कर्त्ता हि सिद्ध इति एकत्र सिद्धत्वमसिद्धत्वमविरुद्धमिति शङ्का १७७

अव्यक्तरूपेण कर्तृत्वं व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात् तथाच कर्तृतावच्छेदकर्मतावच्छेदकभेदादुभयमविरुद्धमिति समाधानोक्तिः । १७८

आत्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं पुनः कृतिकर्मत्वमिति शङ्कितम् परिणामो द्विविधः स्वरूपपरिणामः शक्तिविक्षेपलक्षणपरिणामश्च तत्राद्यो ब्रह्मानधिष्ठितस्वतन्त्रप्रकृतिस्वरूपपरिणामवादोऽयं साङ्ख्यानां सिद्धान्तः द्वितीयश्चोपनिषदाम् १७८

परमात्मनः सर्वस्य कार्यस्य योनित्वेनाप्यभिन्ननिमित्तोपादानकारणत्वं योनिशब्दस्य चोपादाने शक्तिः-सुप्रसिद्धेत्युपपादनाय सूत्रान्तरारम्भः । १७९

अतीतपञ्चत्रिंशदधिकरणन्यायमतिदेष्टुमधिकरणान्तरारम्भः ।

अतीताधिकरणोक्तन्यायैरेव सर्वेऽप्युक्तानुक्ता वेदान्ताः परमपुरुषविषयाः सिद्ध्यन्तीत्युपपादितम् १८०

---

# द्वितीयाध्यायः

स्मृतिन्यायविरोधपरिहाराख्यस्य द्वितीयाध्यायस्य समन्वयस्य साङ्ख्यस्मृतियुक्त्यादिभि र्विरोधस्य परिहाराख्ये प्रथमपादे—

## १ स्मृत्यधिकरणम् । १-२ सू०

साङ्ख्यस्मृतिविरोधेन वेदान्तानामन्यपरत्वशङ्कानिरासायास्याधिकरणस्यारम्भः । १

पृष्ठाङ्काः

विषयः

पूर्वोत्तराध्याययोरेकवाक्यताप्रतिपत्तये सङ्गतिप्रदर्शनम् प्रथमाध्यायप्रसाधितं ब्रह्मणो जगत्कारणत्वमयुक्तं युक्तम्वेति साङ्ख्यमन्वादिस्मृतिविप्रतिपत्तेः किं साङ्ख्यस्मृत्योपबृंहणीयास्सन्तो वेदान्तास्तदनुसारेण प्रधानकारणपरा उत मन्वादिस्मृत्युपबृंहणीयास्सन्तस्ते ब्रह्मकारणपरा इत्यनिर्धारणात् संशये पूर्वपक्षः साङ्ख्यस्मृत्योपबृंहणीयाः तस्याः निरवकाशत्वादिति पूर्वपक्षप्रतिपादनम्

आप्ततमप्रणीतानां मन्वादिस्मृतीनां ब्रह्मैककारणत्वप्रतिपादकानां श्रुतिमूलकानामनवकाशत्वरूपदोषापत्तिरिति सिद्धान्तितम्

यदि स्मृतित्वेन रूपेण सर्वासां स्मृतीनां प्रामाण्यमभ्युपेयते तदा कपिलस्मृतेरपि तथात्वान्न तां बाधयितुं क्षमत इतिशङ्का श्रुतिविरुद्धायाः कापिलस्मृतेरप्रामाण्यमिष्टं तथा सूत्रितं भगवता जैमिनिना विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति समाधानोक्तिः । ४

वेदविरुद्धसाङ्ख्यादिस्मृतिबाधो न दोषावह इत्यत्र हेत्वन्तरप्रदर्शनाय सूत्रान्तरम् ।

## २ योगप्रत्युक्त्यधिकरणम् । ३ सू०

योगस्मृतौ साङ्ख्यस्मृतेरसादृश्याद्वेदान्तोपयोगित्वाच्च तेन वेदान्तोपबृंहणं युक्तमिति शङ्कानिरासायास्याधिकरणस्यारम्भः । ५

## ३ विलक्षणत्वाधिकरणम् । ४-११ सू०

अचेतनस्याशुद्धस्य जगतोऽचेतनमशुद्धं प्रधानमेव कारणं भवितुमर्हति न चेतनं शुद्धं ब्रह्मेत्याशङ्कानिराकरणायाधिकरणान्तरारम्भः । ५

नास्य जगतः ब्रह्मप्रकृतिकत्वम् विलक्षणत्वादिति पूर्वपक्षः ।

अचेतनत्वेनाभिमतानां भूतेन्द्रियाणां क्वचिच्चेतनत्वं श्रूयते तथा प्रकृतेऽपीत्याशङ्कानिरासायोत्तरसूत्रारम्भः । ६

श्रुतिषु चेतनत्वेन प्रतिपादनमचेतनानां भूतेन्द्रियादीनां तत्तद्भूतेन्द्रियाभिमानिदेवतापरमिति जगत्प्रधानप्रकृतिकमेवेति प्रधानेनैव तत्र समन्वयो युक्त इतिपूर्वपक्षदृढीकरणम् । ब्रह्मैव जगत्कारणमिति सिद्धान्तनिरूपणायोत्तरसूत्रारम्भः । दृश्यते हि विलक्षणयोरपि कार्यकारणभावः । यथा भुक्तादन्नात्केशनखादिविलक्षणास्योत्पत्तेरुपलम्भादित्युपपादितम् । ६

यदि विलक्षणयोरपि कार्यकारणभावस्तर्हि द्रव्यान्तरत्वेनोपादाने ब्रह्मणि उपपत्तेः पूर्वमुपादेयं जगदसदिति प्रसज्येत असत एवोत्पत्तिः स्यादित्यसत्कार्यवादस्त्वयाङ्गीकृतः स्यादितिशङ्कानिरासायानन्तरसप्तमसूत्रारम्भ । ७

प्रलयवेलायामचेतनत्वादिमज्जगत्सृष्टिप्रतिलोमक्रमेणोपादाने चेतनत्वादिगुणके ब्रह्मणि लीयमानं तत्र दुग्धे पतितं दुग्धमिव स्वधर्मैं ब्र्ह्म दूषयेदित्याक्षेपायोत्तरसूत्रारम्भः । ८

यथा कटककुण्डलादयो विकारा अपीतिं गच्छन्तः स्वधर्मैः सुवर्णपिण्डं न दूषयन्ति तथा ब्रह्मणि लीयमानं जगत् चिदचिच्छक्तिमद्ब्रह्म नैव दूषयतीति समाधानायोत्तरसूत्रारम्भः । ८ ६

त्वदुपलम्भाविता दोषास्त्वदभिमते प्रधानकारणवादेऽपि समाना इत्यभिप्रायेणानन्तरसूत्रमुपात्तम् । ६

तर्कमूलस्य साङ्ख्यसिद्धान्तस्यैवासामञ्जस्यं ननु श्रुतिमूलस्योक्तसिद्धान्तस्येत्युपपादनाय सूत्रान्तरारम्भः ।

## ४ शिष्टापरिग्रहाधिकरणम् । १२ सू०

तर्ककुशलानां साङ्ख्यानां प्रधानवादनिराकरणवत् तर्कपटूनां कणभक्षाक्षपादक्षपणकभिक्षुप्रभृतीनां तर्केण स्थापिताण्वादिवादस्य निराकरणप्रक्रियामतिदेष्टुमुत्तराधिकरणारम्भः । ११

## ५ भोक्त्रधिकरणम् । १३ सू०


विषयः ..................................................................... पृष्ठाङ्काः

ब्रह्मणो जगदुपादानत्वे भोक्तृभोग्यविभागो नोपपद्येत इतिशङ्का ... १२

यथा मृत्पिण्डजन्यस्य मृन्मयस्य घटाद्यवस्थापन्नस्य मृदमन्तरेण पृथक्प्रवृत्त्यनर्हतया मृदभिन्नत्वेऽपि स्वरूपस्वभावनामरूपसङ्ख्याव्यवहारादिभेदः सुप्रसिद्धः तद्वत्तोब्रह्मोपादानकस्य जगतोऽपि ब्रह्मव्यतिरेकेण पृथक्स्थितिप्रवृत्त्यनर्हतया ब्रह्माभिन्नत्वेऽपि स्वरूपस्वभावादिभेदस्य श्रुतिस्मृतिसूत्रासिद्धस्य स्वाभाविकत्वादितिसमाधानोक्तिः ।


## ६ आरम्भणाधिकरणम् । १४–२० सू०


करणात्कार्यस्यानन्यत्वं नास्ति कार्यञ्चोत्पद्यत इति वैशेषिका वदन्ति तन्मतनिराकरणायास्याधिकरणस्यारम्भः । ... १३

प्रपञ्चस्य सदसद्विलक्षणत्वे रूपानिर्वचनीयत्वे मिथ्यात्वं तर्कितं ज्ञाननिवर्त्यत्वान्यथानुपपत्तिर्जगन्मिथ्यात्वे मानमाशङ्क्य जगतः सत्यत्वं समाहितम् ... १३

सेत्वादिदर्शनेन सत्यस्यैव ब्रह्महत्यादे र्निवृत्ति र्भवतीति शङ्कोत्तरभावेन निरूप्य सत्यस्यैव प्रपञ्चस्य ब्रह्मज्ञानान्निवृत्तिरिति व्युत्पादितम् । ... १४

श्रीवासुदेवानुग्रहादेव बन्धो निवर्त्तते, इति श्रुतिस्मृतिमुखेन समर्थितम् ... १६

यदि भगवत्प्रसादस्यैव बन्धनिवर्त्तकत्वं तदा ज्ञानस्य नैष्फल्यं स्यादित्युट्टङ्कितं ज्ञानस्य भगवत्प्रसादद्वारहेतुकत्वं निरुच्य तत्समाहितम्

पराहतं सत्तकै रन्यथानुपपत्तिरूपप्रमाणम् ... १७

प्रपञ्चस्य सत्यत्वसाधकास्तर्काः प्रदर्शिताः

ऐन्द्रजालिकवत्तस्य मिथ्यात्वपालनमितिशङ्कोत्तरभावेन निरूप्य श्रौतिकदम्बेन, ईक्षणबहुभवनसङ्कल्पपूर्वकं सृष्ट्यादिकर्तृत्वं परमात्मन इति दृढीकृतम् । परमेश्वरस्य सार्वज्ञ्यादीनां तद्गुणानां तच्छक्तीनाञ्च व्यवहारिकत्वं तद्भाष्यानुसारेणाशङ्क्य पराऽस्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति कण्ठरवेणैव तदीयशक्त्यादीनां स्वाभाविकत्वं समाहितम् । ... १८

भेदवाक्यानामनुवादपरत्वमस्त्विति शङ्कायाः खण्डनम् प्रत्युताभेदवाक्यानामेवानुवादकत्वं स्यात् घटोऽस्तीति प्रत्यक्षेण निर्विशेषाधिष्ठानवस्तुनो गम्यत्वादिति निरूपितम् ... १९

यदि प्रपञ्चस्य मिथ्यात्वं श्रौतं स्यात्तदा शुक्तिदृष्टान्ता वेदे उपन्यस्ताः स्युः यद्यनिर्वचनीयवादः सूत्रकाराभिमतः स्यात्तर्हि सूत्रितमपि स्यान्न तु तथा दृश्यते तस्मात्कार्यं सदेवेति सिद्धान्तः । ... २०

जगतो मिथ्यात्वेऽनुमानप्रमाणमुपन्यस्तं तस्य पक्षसाध्यहेतुदृष्टान्तानामसम्भवेनाभासत्वं प्रतिपादितम् ... २१

मिथ्यात्वसाधकं दृश्यत्वं हेतुः किं वृत्तिव्याप्यत्वं शब्दाजन्यवृत्त्यविषयत्वं वा सप्रकारवृत्तिविषयत्वंवा चिद्विषयत्वं वा स्वव्यवहारे स्वभिन्नचिदपेक्षानियमो वा अस्वप्रकाशत्वस्वेति विकल्प्य क्रमशः प्रत्येकस्य खण्डनं कृतम् । ... २३

जडत्वहेतुनिरासः । ... २४

मिथ्यात्वसाधकतृतीयपरिच्छिन्नत्वहेतोराभासत्वसमर्थनम् । प्रमाणमालायां विवादाध्यासिताः स्वानुगतप्रतिभासे वस्तुनि कल्पिता विभक्तत्वात् यथा सर्पमालादिकमित्यानन्दबोधोक्तं मिथ्यात्वसाधकमनुमानं दूषितम् । ... २६

पृष्ठाङ्का:

विषय:

सन् घट इत्यत्र ब्रह्मणः घटादिकं सद्रूपे कल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वादित्यनुमानमपि चक्षुरादिगृहीतस्य-
स्फुरणे रूपादिहीनतया चाक्षुषानुपपत्ति र्बाधिका न तस्य घटादिकं प्रत्यधिष्ठानता ब्रह्मणस्तथात्वे महावाक्योपदेशस्यानुवादकत्वापत्तेः । २७
इत्यन्वस्य मिथ्यात्वादिति च निराकृतम् । २८
अन्योन्याभावप्रतियोगित्वरूपवस्तुपरिच्छिन्नत्वात्मकहेतोरनैकान्तिकत्वमभिहितम् । २८
दृश्यत्वादिहेतूनां सोपाधिकत्वादाभासत्वमुपपादितम् । ३०
शक्तिरूपस्य दृष्टान्तत्वं खण्डितम् । ३१
मिथ्यात्वसाधकानुमानं प्रतिकूलतर्कैरपाकृतम्
श्रुतिसूत्राभ्यां विश्वस्य अनिर्वचनीयवादं निरस्य कार्यस्य कारणात्मकत्वात्तदपृथक्सिद्धत्वमित्युक्त्वा सद्रूपत्वमभिहितम् । ३३
येनाश्रुतमित्यादिश्रौतप्रतिज्ञावाक्ये कारणविज्ञानात् कार्यविज्ञानं तत्र किन्तावत्कारणं शुद्धं निर्विशेषब्रह्म वा उपहितमिति विकल्प्य निराकृतम् । ३४
कार्यं स्वकारणावच्छिन्नचैतन्ये ऽध्यस्तमिति विवर्तवादे दृष्टान्तत्वमुपपाद्य खण्डितम् । ३५
श्रीमत्भगवत्पादानां शङ्कराचार्याणां "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रस्य व्याख्यानमनूद्या-पाकृतम् । ३५
वाचारम्भणशब्दस्य मिथ्यापरत्वमितिशङ्काया समाधानम् ३६
यदि श्रुतीनां विवर्त्तवादे तात्पर्यं स्यात्तदा विकार इति मृत्पिण्डादिदृष्टान्तांश्च न श्रावयेदपि तु भ्रान्ति नामधेयमिति ब्रूयात् शुक्तिरजतादिदृष्टान्तांश्चोपन्यसेदित्यभिहितम् । ३६
असतोऽपि सदुत्पादकं दृष्टं यथा असतः प्रतिबिम्बात् सतो बिम्बस्य सिद्धिर्दृष्टचरा यथा वा रेखास्व-कारत्वभ्रान्त्या सत्या अकारादयो ज्ञायन्ते वर्णे ह्रस्वत्वं दीर्घत्वञ्चारोपित तस्माद्वर्णगतह्रस्वत्वज्ञानान्तगः पर्वत इत्यर्थभेदः । एवं वर्णवृत्तिदैर्घ्यज्ञानान्तगः करीत्यर्थभेदश्च सिद्ध्यतीति शङ्कानिरासायानन्त-रसू(१९)त्रारम्भः । ३७
मृदादिभाव एव घटादिकार्यस्योपलब्धि र्नान्यथा तस्मात्सदेवोपादानमुपादेयस्य तदनन्यत्वञ्च व्यु-त्पादितम् ३८
रेखायाश्च वर्णे पदस्यार्थ इव संकेतितत्वेन रेखास्मारितवर्णस्यैव बोधकत्वम् दीर्घत्वादिकं वर्णगतं सत्य-मेवेति एवकत्र सत एवान्यत्रारोपो नियतः स्वरूपेणासतः खपुष्पादेः क्वचिदप्यारोपादर्शनादिति समाधानोक्तिः । ३९
कार्यस्य सत्यत्वप्रतिपादनाय हेत्वन्तरमुपन्यासाय सूत्रान्तरमुपन्यस्तम् ।
यथा स्वाप्निकार्थानां मृषात्वं तद्वत् जाग्रत्पदार्थस्याप्यनृतत्वमिति शङ्कितं तत्समाधानञ्च निरूपितम् स्वाप्नसृष्टिः पारमेश्वरीया नतु जीवीयेत्युपपादितम् स्वाप्निकार्थास्तत्तत्प्राणिकर्मापेक्षाः तावत्कालावस्थायिन स्तत्पुरुषैरनुभवविषयीभूताः भगवत्सङ्कल्पसृष्टा एव नतु जीवसृष्टास्तेषां मुक्तितः प्राक् सत्यसङ्कल्पत्वा-भावादिति सिद्धान्तितम् । ४०
अचेतनानां स्वरूपान्यथाभावलक्षणोत्पत्तिः सम्भवति प्रत्यगात्मनान्तु सा नास्तीति कथं ब्रह्मणः सर्व-जगत्कारणत्वमिति शङ्कितम् । ४१
सर्वकार्यं प्रत्येव श्रुत्या ब्रह्मणः कारणत्वं प्रतिपाद्यते जीवे तत्प्रसङ्गाभावात् यदि प्रत्यगात्मा कार्यं स्याद् ब्रह्मणश्च तदुपादानत्वाभावे सर्वकारणत्वे न्यूनताप्रसक्तिः स्यान्नतु तदस्ति तस्यानाद्यनन्तकूटस्थत्वश्रवणा-दिति समाहितम् । ४१

| विषयः | पृष्ठाङ्काः |
|---|---|
| वेदानां नित्यत्वात् तत्कारणत्वाभावे ब्रह्मण. कथं सर्वकारणत्वोपपत्तिरित्याशङ्क्य तत्समाहितम् । | ४१ |
| असत्कार्यवादिनां वैशेषिकादीनां मतनिरासाय जगतः सत्यत्वव्यवस्थापनायोत्तरसूत्रारम्भः । | ४२ |
| घटः पट इतिशब्दात् कार्यप्रत्ययः मृत्तन्तव इतिशब्दःकारणप्रत्ययः इति शब्दभेदात् फलभेदाच्च काल-भेदादपि कार्यकारणयो र्भेदः । यदिकरणव्यापारादूर्ध्वमपि कार्यं सदेव तदा कारकव्यापाराणां वैयर्थ्यं प्रसज्येत । अतः कार्यमसदेवेति पूर्वपक्षः । | |
| अभिव्यक्तनामरूपत्वलक्षणाद्धर्मादनभिव्यक्तनामरूपलक्षणं धर्मान्तरं तेन धर्मान्तरेण असद्वा इदमग्र आसीदिति जगद्व्यपदिश्यते नासत्स्वरूपतोऽभिधीयते इतिसमाधानोक्तिः । | ४३ |
| भेदपराणां श्रुतीनां व्यावहारिकसत्वपरत्वेन नैराकाङ्क्ष्याच्च पारमार्थिकत्वमभेदपरश्रुत्यादीनान्तु पारमार्थिकसत्वपरत्वात् प्राबल्यमिति शङ्कितम् कपोलकल्पनां विना प्रमाणाभावान्नोक्तार्थः साधीयान् । नच षड्लिङ्गोपेतत्वेन प्राबल्यमिति वाच्यं भेदपरश्रुत्यादीनामपि तथात्वस्य पूर्वाचार्य्यैः प्रतिपादितत्वा-दिति शङ्कोत्तरभावेन निरूपितम् | ४५ |
| यदि विवर्त्तपक्षानङ्गीकारस्तर्हि को वा पक्षोऽभिप्रेतः । सङ्घातवादो वा आरम्भवादो वा परिणामवादो वा इति संशये चरमपक्ष एवास्मदभिप्रेतः सूत्रकाराभिप्रेतश्च आत्मकृतेः परिणामात् । स्वयमात्मानमकुरु-तेति श्रुतिसूत्राभ्यामिति समर्थितम् | ४६ |
| आकाशकल्पस्य विभो र्वस्तुनः परिणामोऽसम्भव एवेत्याशङ्क्य परिणामस्वाभाव्यात् क्षीरवत्सर्वज्ञत्वात् सर्वशक्तिमत्वाच्च ब्रह्म परिणामयोग्यमिति समाहितम् | ४७ |
| स्यादेतन्निरवयस्यापि विभोस्तादृशशक्तियोगादेव परिणामस्तथापि तत्र कृत्स्नस्य ब्रह्मणः परिणामोऽभि-प्रेतः तदेकदेशस्य वेति शङ्कितम् | ४७ |
| शक्तिविक्षेपस्यैव परिणामशब्दवाच्यत्वमङ्गीकृत्य ब्रह्मस्वरूपपरिणामानभ्युपगम एवेति सिद्धान्तितम् । | ४८ |
| सम्वेष्टनसमये किमयं पटो वस्त्वन्तरम्वेति गृहीतुं न शक्यते तस्य प्रसारणवेलयां पटत्वेन रूपेण गृह्यत इति दृष्टान्तेनापि कार्यस्य सत्वं व्युत्पादयितुं सूत्रान्तरारम्भः | ४८ |
| उक्तसिद्धान्तसिद्धये तदुपोद्बलनरूपं दृष्टान्तान्तरं दर्शयितुमनन्तरसूत्रारम्भः । | ४८ |
| कार्यस्य सत्वमनुपपन्नम् । नेह नानास्ति किञ्चन मृत्योः स मृत्योमाप्नोति य इह नानेव पश्यतीत्यादि श्रुतिभिः सावधारणाभिरन्वयव्यतिरेकेण कारणैकत्वनिश्चायिकाभिः कारणेतरवस्तुमात्रस्य निषिध्यमान-त्वान्मृषात्वमेवेति शङ्कितम् । | ४९ |
| एकत्वावधारणश्रुतीनां जगत्कारणसार्वज्ञ्यादिमत्परब्रह्मैकत्वपरत्वेन नेह नानेत्यादिश्रुतीनाञ्च कारणगत-स्वतन्त्रसत्त्वावच्छिन्नवस्तुमात्रनिषेधपरत्वेन चास्मत्पक्षे स्वार्थ एव प्रामाण्यं न तावत्कारणैकत्वावधारणं निषेधश्चेतरस्य वस्तुजातस्यानृतत्वे नियामकम् । अपि तु स्वविषयसमसत्ताकत्वनिषेधमात्र एव यथा चोलराजा एकोऽद्वितीयोऽभूदिति वाक्यं न तद्राजान्तरमात्रस्य तत्सेनादीनां वा निषेधपरं किन्तु तत्तुल्यनृपान्तरस्य निषेधमात्रपरमेव एवं प्रकृतेऽपि समञ्जसमिति समाधानोक्तिः । | ४९ |
| यत्र त्वस्येति श्रुतिः न हि प्रपञ्चबाधपरा किन्तु कारकजातस्य स्वतन्त्रसत्तानिषेधेन तस्य ब्रह्मात्मकत्व-विधानपरेति निरूप्य श्रुत्यर्थः सप्रमाणो निरूपितः । | ५० |
| अस्य वाक्यस्य सजातीयादिभेदशून्यपरत्वमेव तत्र चेतनवृत्तिभेदः सजातीयभेदो जडभेदो विजातीयभेदः धर्मभेदः स्वगतभेदस्तथा च त्रिविधभेदस्य श्रुत्यैव निषिद्धत्वेन तद्विषयस्य कथं पारमार्थिकत्वमिति पूर्वपक्षः | ५१ |

पृष्ठाङ्काः

विषयः

अद्वितीयपदेनैव द्वितीयपदार्थमात्रस्य निषेधसिद्धौ पदान्तरस्य वैयर्थ्यं प्रसज्येत ब्रह्मेतरस्य त्रैकालिकनिषेध-प्रतियोगित्वं वदन्तोऽत्र प्रष्टव्याः। श्रुत्याभिहिताद्वितीयमात्राभावः कालत्रयेऽस्ति न वा नाद्यः स्वोक्तव्याघातात्। अन्त्ये द्वितीयस्य सत्वापत्तेः। न च नाभावो द्वितीयोऽद्वैतविरोधीतिवाच्यम्। अभावत्वाधेयत्वाधारत्वादिभावैरविनाभूतेनातिशयोऽप्यद्वैतभङ्गात्। अभावस्वरूपप्रवृत्तिनिमित्तसम्भवेन वेदान्तानां सखण्डार्थतापत्तेश्चेति सिद्धान्तितम्। ५१

को वा तत्पदार्थः शुद्धो वोपहितोऽव्याकृतो वेति विकल्प्य समाहितम् ५१

को वाऽद्वितीयपदार्थः। नद्वितीयोऽद्वितीय इति नञ्समासे नञर्थः षड्विधः न तावत्सादृश्यं द्वितीयसदृशमिति पदार्थापत्तेः निर्विशेषे सादृश्यधर्मासम्भवाच्च। नाप्यभावः, असदेव स भगवति असद्ब्रह्मेति वेद चेदिति निन्दाश्रवणात्। एवमन्येषामप्यर्थानां निरास इति सप्रपञ्चं निरूपितम् ५२

अथ नेहनानेतिश्रुत्यर्थः प्रदर्शितः। ५२

## ७ इतरव्यपदेशाधिकरणम्। २०–२२ सू०

जीवस्य ब्रह्मत्वोपदेशात् ब्रह्मणो वा शारीरत्वव्यपदेशाच्च जीवगता दोषाः ब्रह्मणि प्रसज्येरन्नित्याशङ्कापरिहारायोत्तराधिकरणारम्भः। ५३

ब्रह्मकारणवादे अयमात्मा ब्रह्मेति जीवस्य ब्रह्मत्वनिरूपणात् सर्वक्लेशालयजगज्जननेनात्मनो हिताकरणदोषप्रसक्तिरित्याक्षेपप्रतिपादनायास्य सूत्रस्यारम्भः।

न जीवेशयोरत्यन्ताभेदोऽस्ति यतो हिताकरणादिदोषप्रसक्तिः स्यादितितत्परिहारायोत्तरसूत्रारम्भः ५४

प्रत्यगात्मनो ब्रह्मात्मकत्वादिना ब्रह्मत्वाविशेषेऽपि न स्वरूपैक्यमिति परब्रह्मैव जीवकर्मानुगुणसुखदुःखहेतुजगत्सर्गकर्तृ इति परकल्पितदोषानुपपत्तिरिति व्युत्पादनायानन्तरसूत्रारम्भः

## ८ उपसंहारदर्शनाधिकरणम्। २३–२४ सू०

जीवस्य ब्रह्माभिन्नत्वात्तदभिन्नस्यानादिकर्मवशगस्य स्वरूपतो भिन्नत्वेन संसारार्हत्वादिदानीं ब्रह्मणो न जगत्कर्तृत्वं वाह्यकारककलापाभावादित्याशङ्कापनोदायास्याधिकरणस्यारम्भः ५५

असहायं ब्रह्म जगत्सृष्टौ कथं प्रवर्त्तते अतो न ब्रह्म जगत्कारणमिति शङ्का तत्समाधानाय चानन्तरसूत्रस्यारम्भः

ब्रह्मणः सर्वशक्तिमत्त्वात्तस्य न जगज्जनने कारककलापापेक्षा कुलालादीनान्तु तादृशसामर्थ्याभावाद्दण्डचक्राद्यपेक्षेति समाधानम्

यथा देवा लोके वाह्यसाधनमनपेक्ष्याभिध्यानमात्रेण त्वपेक्षितानि वस्तूनि सृजन्ति तन्तुनाभश्च स्वयमेव प्रवर्त्तते तथा पुरुषोत्तमः भगवान् स्वसङ्कल्पमात्रेण सर्वं सृजतीति व्युत्पादनायानन्तरसूत्रमुपात्तम्। ५५

## ९ कृत्स्नप्रसक्त्यधिकरणम्। २५–३० सू०

ब्रह्मणः सावयवत्वे निरवयवत्वादिबोधकश्रुतीनां विरोधः स्यात् निरवयवत्वे कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामः स्यादित्याशङ्काव्युदासायास्याधिकरणस्यारम्भः। ५६

ब्रह्मणः परिणामानुपपत्ते जगदुपादानत्वं न सम्भवति किन्तु प्रधानमेवेष्टव्यमित्याक्षेपप्रतिपादनायास्यसूत्रस्यारम्भः

उर्णनाभेरिव शक्तिविक्षेपलक्षणपरिणामाङ्गीकारः नतु स्वरूपपरिणामाङ्गीकार इतिसमाधानायानन्तरसूत्रारम्भः

विषयः | पृष्ठाङ्का.

देवादिशरीरेऽप्रच्युतस्वरूपतयैव विचित्रहस्त्यश्वादिसृष्टयो दृश्यन्ते किमुत ब्रह्मणः स्वरूपाप्रच्युतिरत्रमिति प्रदर्शनायाग्रिमसूत्रस्यारम्भः । ५७

साङ्ख्यास्त्रिगुणं निरवयवं प्रधानं महदाद्याकारेण परिणमते इति वदन्ति एवं सति कृत्स्नप्रसक्त्यादयो दोषास्तत्रापि भवेयुरित्युपपादनायानन्तरसूत्रारम्भः । ५७

ब्रह्मणः सर्वशक्त्युपेतत्वं श्रुत्यैव प्रतिपद्यत इति बोधनाय सूत्रान्तरम् । ५८

सर्वशक्तियुक्तस्य ब्रह्मणः करणनिषेधात् जगत्कर्तृत्वं नोपपद्यत इति शङ्कानिरासायोत्तरसूत्रारम्भः । ५८

## १० प्रयोजनवत्त्वाधिकरणम् । ३१–३५ सू०

स्वतो नित्याप्तकामस्य ब्रह्मणः जगज्जनने प्रयोजनाभावान्न जगत्कर्तृत्वमुपपद्यत इति पूर्वशङ्कानिरासायानन्तराधिकरणारम्भः । ५८

ब्रह्मणो विचित्रविश्वसृष्टौ प्रवृत्तिर्लीलैव केवला न तत्र प्रयोजनोद्देशः लोकवदिति सिद्धान्तसमर्थनायानन्तरसूत्रमुपात्तम् ५८

न ब्रह्मणो वैषम्यनैर्घृण्ये प्रसज्येते प्राणिपुण्यापुण्यकर्मसापेक्षत्वादित्युपपादनायोत्तरसूत्रारम्भः । ५९

पूर्वसृष्टौ क्षेत्रज्ञैः कृतानि पुण्यापुण्यमिश्राणि कर्माण्युत्तरसृष्टिगतवैचित्र्यनिमित्तानि भवन्तीति तत्सापेक्षत्वं ब्रह्मण इति व्युत्पादनायोत्तरसूत्रम् ५९

कारणत्वोपपादकानां सर्वेषां धर्मोपपत्तेश्च ब्रह्मैव कारणं न प्रधानादिः परिमितशक्तित्वादिति निरूपणायोत्तरसूत्रम् ६०

# द्वितीय पादः

## १ रचनानुपपत्त्यधिकरणम् । १–१० सू०

प्रधानेऽपि सर्वज्ञत्वादयो गुणा वक्तुं शक्या इत्याशङ्कानिराकरणायोत्तराधिकरणारम्भः । प्रधानं जगदुपादानमिति साङ्ख्यपूर्वपक्षनिरूपणम् । ये च परिमितास्ते सामान्यकारणपूर्वकाः यथा घटादयः । एवं परिमिता महदादिपृथिव्यन्ता भेदास्तेषामेकं गुणत्रयसामान्यं कारणमस्तीत्युपपादितम् ६१

अचेतनस्य प्रधानस्य तदुपादानत्वं न सम्भवत्येवं तत्खण्डनम् । सूत्रगतचकारानुगृहीतस्य सुखदुःखमोहविषादान्वयहेतोरसिद्धिरितिहेत्वन्तराद्युक्तिः अचेतनस्य प्रधानस्य सृष्ट्यर्थं प्रवृत्ति र्नोपपद्यत इत्यर्थनिरूपणाय सूत्रान्तरारम्भः । ६३

चेतनानधिष्ठितं पयो दध्यात्मना परिणमते तथा प्रधानमपीत्याशङ्काव्युदासायानन्तरसूत्रारम्भः । ६३

सर्वस्य चेतनाधिष्ठितत्वात् क्षीरादावपि चेतनाधिष्ठितत्वमितिसमाहितम्

प्रधानस्य प्रवृत्तेर्निरपेक्षत्वात्सर्वदा सृष्टिरेव स्यादित्युपपादयानन्तरसूत्रम् । ६३

यथा धेन्वाद्युपभुक्तं तृणादिकं क्षीराकारेण परिणमते न त्वनडुहाद्युपभुक्तं तथा प्रधानमपि प्राज्ञाधिष्ठितमेव महदाद्याकारेण परिणमते न तु स्वत इति निरूपणाय सूत्रान्तरमुपात्तम् । ६४

न प्रधानं जगत्कारणं भवितुमर्हति तस्याचेतनत्वेन प्रवृत्तिप्रयोजनाभावादित्युपपादनायानन्तरसूत्रारम्भः । ६४

पुरुषस्य प्रधानप्रवर्त्तकत्वाङ्गीकारे पुरुषोऽकर्त्तेति प्रतिज्ञाहानिः प्रधानस्य पुरुषप्रवर्त्यत्वे प्रधानं स्वतन्त्रं जगत्कर्तृ हीतिप्रतिज्ञाहानिः पङ्गुर्हि गमनशक्तिमन्तं वाचा प्रेरयति ६५

विषयः पृष्ठाङ्काः

प्रेर्य्योऽन्धपुरुषस्तद्वचनानुसारेण चेतनत्वात् प्रवर्त्तते अश्मा तु पुरुषेणायसा संयोज्यमानोऽपः प्रवर्त्तयति। अयोऽपि स्वभावतो न प्रवर्त्तते इत्युपपादितमनन्तरसूत्रेण

प्रलये साम्येनावस्थितानां गुणानां परस्पराङ्गीभावासम्भवाच्च नानुमानं जगत्कारणमिति निरूपणायोत्तरसूत्रारम्भः। ६५

चलं गुणवृत्तमित्यभ्युपगमात्साम्यावस्थिता अपि गुणा यथाकार्यं वैषम्यागमयोग्या एवेति शङ्कानिराकरणायानन्तरसूत्रारम्भः। तेषां साम्यावस्थायां वैषम्यहेतोरभावेन वैषम्यासम्भवः कारणाभावेऽपि कार्योत्पत्तिश्चेत्सर्वदा वैषम्यं स्यादिति समाहितम् ६५

असमञ्जसं कापिलमतं वेदान्तविरुद्धत्वात् पूर्वापरविरुद्धत्वाच्चेत्युपपादनाय सूत्रान्तरम् ६५

## २ महद्दीर्घाधिकरणम्। १-१७ सू०

आनुमानिकप्रधानकारणवादवत् आनुमानिकपरमाणुकारणवादोऽपि न युक्त इतिसमर्थनायास्याधिकरणस्यारम्भः। ६६ ६७

परमाणूनां कार्यारम्भक्रमप्रक्रियाप्रदर्शनपुरस्सरं तत्खण्डनम्। ६८

परमाणूनामाद्यकर्मसम्पादकस्य कारणस्यानभ्युपगमे न कर्मेति जगज्जन्माभाव इतिव्युत्पादनाय सूत्रारम्भः।

यथाद्व्यणुकं समवायिकारणादत्यन्तं भिन्नं तत्समवायमवश्यमपेक्षते तथा समवायोऽपि समवायिभ्यामत्यन्तं भिन्नं तत्समवायमपेक्षते तथा तत्समवायोऽपि समवायिभ्यामत्यन्तं भिन्नः सन्नितरेण समवायलक्षणेन सम्बन्धेन समवायिभ्यामवश्यं सम्बद्धव्येतात्यन्तभिन्नत्वसाम्यात्, सोऽपिसमवायान्तरेणेत्यवनस्थेत्युपपादनायानन्तरसूत्रारम्भः। ६९

परमाणूनां प्रवृत्तिनिवृत्त्यादिचतुर्विधस्वभावायोगादपि परमाणुवादो न युक्त इत्यर्थप्रतिपादनायानन्तरसूत्रोपन्यासः। ७०

परमाणूनां रूपादिमतां रूपादिमद्भौतिकारम्भकत्वं नित्यत्वञ्च वैशेषिकोक्तं रूपादिमत्त्वेन स्थूलत्वनित्यत्वयोरापत्त्या न युक्तमित्यर्थनिरूपणाय सूत्रान्तरारम्भः। ७१

उपचितगुणानां स्थौल्यमपचितगुणानां सौक्ष्म्यतारतम्यमिति कल्पने मूर्त्युपचयादपरमाणुत्वं प्रसज्यते न चेत् परमाणुत्वसाम्यप्रसिद्धये पृथिव्यादिः सर्वोऽप्येकैकगुण एव स्यादिति तेजआदौ स्पर्शाद्युपलब्धि नं स्यादित्येवमुभयथाप्यनुपपत्तिप्रदर्शनायोत्तरसूत्रारम्भः। ७१

शिष्टैः परमाणुकारणवादस्यानभ्युपगमादपि श्रेयोर्थिभिर्नायं पक्षः समादरणीय इत्युपपादनायानन्तरसूत्रारम्भः। ७२

## ३ समुदायाधिकरणम्। १८-२७ सू०

७२

बौद्धपक्षमतनिराकरणायोत्तराधिकरणारम्भः। तत्रसौत्रान्तिकवैभाषिकमतनिरूपणम्

भूतभौतिकसमुदायनिरूपणाय भूतभौतिकपदार्थनिरूपणम् परमाणुपुञ्जस्यैव पृथिव्यादिशब्देनाभिधानमिति तत्परमाणुस्वरूपनिरूपणम् ७३

खरस्नेहोश्मेरणपदार्थविवरणम् पञ्चस्कन्धेषु विज्ञानस्कन्ध एव चित्तम् आत्मेत्यस्यार्थस्योक्तिः। ७३

पञ्चस्कन्धस्य निरूपणम्।

सर्वेषां क्षणिकत्वेन स्थिरस्य कस्याभावात् भूतभौतिकसमुदायस्य पञ्चस्कन्धसमुदायस्यासम्भवात्तन्निमित्तकस्य सर्गस्यासम्भव इत्यर्थप्रतिपादनम्। ७४

| विषयः | पृष्ठाङ्काः |
|---|---|
| अविद्यादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति निमित्तत्वाङ्गीकारेऽपि सङ्घातोत्पत्तिं प्रति सर्वेषां क्षणिकत्वेन निमित्तत्वासम्भव इत्यर्थनिरूपणायानन्तरसूत्रारम्भः । | ७५ |
| अविद्यादीनां मिथो हेतुत्वमभ्युपगम्य सङ्घातासिद्धिरित्युक्तं वस्तुतोऽन्योन्यकारणत्वमेवाविद्यादीनां न सम्भवति तन्मते सर्वेषां क्षणिकत्वादिति वक्तुमुत्तरसूत्रारम्भः । | ७५ |
| नोपपद्यते वस्तुनः क्षणिकत्ववादे हेतुहेतुमद्भावस्तथात्वे कथं लोकयात्रानिर्वाह इत्यर्थप्रतिपादनायोत्तरसूत्रारम्भः । | ७५ |
| उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्य कारणत्वमभ्युपेयते तस्योत्पन्नस्य कारणत्वमाहोस्विदनुत्पन्नस्येति विकल्प्य तत्खण्डितम् | |
| यदि भावानां नित्यत्वं स्यात्तदा विनाशो न स्यादथोपलभ्यते मुद्गरपातेन घटादीनां विनाश इत्याशङ्क्य समाहितम् | |
| तन्मते भावाः सन्तानिनः सन्तानो नाम भावानां फलहेतुभावेन प्रवाहः तन्मते सन्तानो द्विविधः विसदृशः सदृशश्च निषेधोऽपि तन्मते द्विविधः बुद्धिपूर्वकोऽबुद्धिपूर्वकश्च इत्यर्थप्रतिपादनम् । | |
| असत उत्पत्तिनिरासायानन्तरसूत्रारम्भः । | ७८ |
| असति हेतौ कार्यमुत्पद्यते चेत् चतुर्भ्यः कारणेभ्यः कार्योत्पत्तिरितीयं प्रतिज्ञा हीयेत । निर्हेतुकोत्पत्तौ च प्रतिबन्धाभावात्सर्वं सर्वत्रोत्पद्येत इत्युपपादितम् | |
| निरोधशब्दार्थो द्विविधः स्थूलसूक्ष्मश्च मुद्गरपातानन्तरं सर्वैरुपलभ्यमानो घटविनाशः स्थूलः प्रतिसङ्ख्याविरोधः । | ७९ |
| अप्रतिसङ्ख्यानिरोधः सूक्ष्मः स च प्रतिक्षणं भावानां विनाशः इतितन्मतप्रक्रियां निरुच्य तन्मतखण्डनायोत्तरसूत्रारम्भः । | |
| प्रतिसङ्ख्यानिरोधान्तर्गताविद्यानिरोधनिरसनायोत्तरसूत्रारम्भः । | ८० |
| आकाशस्य निःस्वरूपत्वनिरसनम् । | ८० |
| आत्मनः स्थायित्वात् सोगतोक्तायाः क्षणिकत्वोक्तेर्निराकरणाय सूत्रान्तरारम्भः । | ८१ |
| सर्वेषां क्षणिकत्वं वदत उपलब्धुरात्मनोऽपि क्षणिकत्वापत्त्या स वादोऽयुक्त इत्यर्थनिरूपणम् । विज्ञानवाद्युक्तिनिराकरणम् | |
| कारणभावात्कार्योत्पत्तिरितिसौगताख्यवैनाशिकमतनिराकरणाय सूत्रान्तरारम्भः । अभावाद्भावोत्पत्तिरिति तन्मते दृष्टान्तं प्रदर्श्य तन्मतनिराकरणम् । | ८२ |


## ४ उपलब्ध्यधिकरणम् । २८–३१ सू०


| | |
|---|---|
| विज्ञानस्य निरालम्बनत्ववादिवैनाशिकमतनिराकरणायोत्तराधिकरणारम्भः । | ८२ |
| विज्ञानस्य निरालम्बनत्वमिति बौद्धपक्षनिरूपणम् । | ८३ |
| प्रश्नपूर्वकं विज्ञानातिरिक्तबाह्यार्थाभावनिरूपणम् | |
| ज्ञानवैचित्र्यहेतुत्वं वासनावैचित्र्यस्यैव नार्थवैचित्र्यस्येत्यस्यार्थस्याक्षेपसमाधानम् । | |
| बाह्यार्थस्यात्यन्तासत्वस्यायुक्तत्वनिरूपणम् । | |
| स्वाप्नज्ञानमपि विषयासिद्ध्या मृषैवेति वक्तुं न शक्यते विषयस्य तत्रापि सत्वात् तथाहि स्वाप्नपदार्थस्येश्वरसृज्यत्वेन वाथात्म्यं सद्रूपत्वात् । आकाशादिवत् । एवञ्च तद्विषयकज्ञानस्य याथार्थ्यमित्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । | ८४ |

विषयः | पृष्ठाङ्काः

वाह्यार्थाभावेऽपि वासनानिबन्धनं ज्ञानवैचित्र्यमितिशङ्कानिरासायानन्तरसूत्रमुपात्तम् ८१

भावमात्रस्य क्षणिकत्वेन पूर्वविज्ञानस्य विनष्टत्वान्न तेनोत्तरज्ञानं वासयितुं शक्यत इत्युपपादनाय-सूत्रान्तरम्।

## ५ सर्वथानुपपत्त्यधिकरणम्। ३२ सू०

सर्वशून्यवादिमाध्यमिकपक्षनिरासायास्याधिकरणस्यारम्भः। ८१

स्वतः परतो वोत्पत्तिर्न सम्भवति स्वतश्चेत् आत्माश्रयदोषापत्तेः प्रयोजनाभावाच्च परतश्चोत्पत्तौ परत्वावि-शेषात्सर्वतः सर्वोत्पत्तिप्रसङ्ग इति समाधानोक्तिः।

## ६ एकस्मिन्नसम्भवाधिकरणम्। ३३–३६ सू०

विवसनानां जैनानां मतनिरासायास्याधिकरणस्यारम्भः। तन्मते जीवादिसप्तपदार्थस्वरूपोक्तिः ८६

जीवाजीवसम्बरनिर्जरबन्धमोक्षाख्यसप्तपदार्थनिरूपणम् जीवास्तिकायभेदेन पञ्चप्रकारनिरूपणम्

जीवपुद्गलधर्माधर्माकाशास्तिकायपदानामर्थोक्तिः।

सप्तभङ्गानामर्थनिरूपणम्।

## ७ पशुपत्यधिकरणम्। ३७–४१ सू०

पाशुपत्यानां प्रक्रियानिरूपणम् पञ्च तत्र पदार्थाः निर्णीताः प्रधानमुपादानकारणमीश्वरो निमित्तकारणमिति ९०

पाशुपतमतानुयायिनश्चतुर्विधाः कापालाः कालमुखाः पाशुपताः शैवाश्चेति एतेषां मतं दूषितम् ९१

## ८ उत्पत्त्यसम्भवाधिकरणम्। ४२–४५ सू०

श्रुतिविरुद्धायाः स्मृतेरप्रामाण्यं हि विरोधाधिकरणन्यायसिद्धम्। ९२


श्रुतिविरुद्धञ्चेदं तन्त्रम्। "न जायते" इत्यादिश्रुतिभिर्जीवनित्यत्वावगमेऽपि "संकर्षणो नाम जीवो जायते" इति जीवोत्पत्तेरत्रप्रतिपादनात्। उत्पत्तावभ्युपगम्यमानायां हि जीवस्यानित्यत्वादयो दोषाः प्रस-ज्येरन्। सूत्रकारो हि जीवस्योत्पत्तिं प्रतिषेधयति।

तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादि श्रुतिभिः परमात्मनो मन उत्पत्तिः प्रमिता। अत्र तु सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायत इति जीवात्तदुत्पत्तिः न चैतदुपपद्यते। विरोधादेव, तथा "चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान्" इति वेदनिन्दासङ्कीर्तनाद्वेदार्थविप्रतिषेध-श्चास्मिन्नुपलभ्यते। तथा ज्ञानैश्वर्यशक्तिबलवीर्यतेजसां गुणानां "आमन एवैते भगवन्तो वासुदेवाः" इति गुणित्वकल्पनेन विरुद्धार्थप्रकल्पनं बहुलं चेदमिति तेषां पूर्वपक्षः; अत्रेदं समाधानम्। यदि नामावश्यं जीवोत्पत्तिकथनमप्रामाण्यमापादयतीति मतं हन्त तर्हि तोयेन जीवान् व्यससर्ज भूम्याम्, प्रजापतिः प्रजा असृजत, सन्मूलाः सोम्येमाः सर्वाः प्रजाः, यतो वा इमानि भूतानि जायन्ते, इत्या-दिभिर्जीवोत्पत्तिप्रतिपादनाच्चोत्पत्तिवादिन्यः श्रुतयोऽन्यथा नेया इति। एवं तर्हि "सह्यनादिरनन्तश्च परमार्थेन निश्चितः" इत्येवं सर्वास्वपि संहितासु जीवस्य नित्यत्वप्रतिपादनाज्जीवस्वरूपोत्पत्तिः पञ्च रात्रे तन्त्रे प्रतिषिद्धैवेति जीवोत्पत्तिवादिवाक्यानामन्यथानेयत्वं तुल्यं किमिति न पश्यसि। वस्तु-तस्तु—उदाहृतवाक्येऽपि वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलतया स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया स्वात्मानं सङ्कर्षणादिरूपेण चतुर्धा विभज्यावतिष्ठत इति प्रतिपादयितुं जीवाभिमानसङ्कर्षणादि-रूपेण परमपुरुषस्य शरीरविशेषपरिग्रहः प्रतिपाद्यते न जीवोत्पत्तिरिति पञ्चरात्रसिद्धान्तमजानतामेवेदं चोद्यं यज्जीवोत्पत्तिर्वेदविरुद्धा प्रतिपाद्यत इति। एतेन कर्तुः करणसम्भवोऽपि प्रत्युक्तः सङ्कर्षणस्य

विषयः पृष्ठाङ्काः

परमात्मनोऽनन्यत्वे सति तस्मादुत्पद्यमानं मनः परमात्मन एवोत्पद्यमानं भवतीति श्रुतिविरोधगन्धाभावात् ।

यच्चोक्तं वेदनिन्दावचनाद्वेदार्थप्रतिषेध इति तदिदं वेदतदुपबृंहणन्यायस्वरूपानभिज्ञाननिबन्धनम् ।

वेदेऽपि वेदनिन्दा प्रतीयते यथा—उदितहोमे अनुदितहोमनिन्दा यथा वा भूमविद्यायां तद्व्यतिरिक्तविद्यानिन्दा । अत्र हि निन्दान्यायादुदितहोमप्रशंसार्थमनुदितहोमनिन्देति वक्ष्यमाणभूमविद्याप्रशंसार्था तदितरविद्यानिन्देति च न्यायविदो मन्यन्ते । एवमन्यत्रापि पञ्चरात्रप्रशंसार्था तदितरनिन्देति किं नाभिप्रेपि

यदप्युक्तम् सूत्रकारेणापि पञ्चरात्रप्रामाण्यं प्रतिषिद्धयत इति तदिदमाशामात्रमतिसाहसञ्च ।

वेदार्थमुपबृंहयता बादरायणेन मोक्षधर्मे विंशत्यध्यायैः । आश्वमेधिके त्रयोविंशत्यध्यायैश्च पञ्चरात्रप्रामाण्यं प्रख्यापितं तदा शारीरिके कथं तदप्रामाण्यं प्रतिपाद्येत

पञ्चरात्रस्य प्रामाण्यं षड्लिङ्गोपेतभारतवाक्यैर्निर्णीतम् ।

## कार्यविषयपरोक्तदोषपरिहारकः— तृतीयपादः

### १ वियदधिकरणम् । १–६ सू०

आकाशस्योत्पत्तिप्रतिपादनायास्याधिकरणस्यारम्भः त्रयाणामेव तेजोऽबन्नानां सृष्टिश्छान्दोग्येऽभिहिता नाकाशस्येति प्रतिपादनायास्य सूत्रस्यारम्भः । १०२

आकाशस्योत्पत्तिरस्तीति सिद्धान्तमवलम्ब्यानन्तरसूत्रारम्भः ।

आकाशस्योत्पत्त्यभावात्तदुत्पत्तिप्रतिपादकश्रुतीनां गौणत्वमिति प्रदर्शनायोत्तरसूत्रारम्भः । १०३

सम्भूतशब्दस्य ब्रह्मशब्दवन्मुख्यगौणार्थकत्वेनाकाशविषये गौण्युत्पत्तिर्न मुख्येति शङ्काप्रदर्शनायोत्तरसूत्रारम्भः ।

आकाशस्यानुत्पत्त्यभ्युपगमे सर्वविज्ञानप्रतिज्ञाविरोध इतिबोधनायोत्तरसूत्रारम्भः । १०३

आकाशस्यामृतत्वश्रवणादुत्पत्त्यश्रवणाच्चोत्पत्तिरनुपपन्नेतिशङ्का तस्याः समाधानायोत्तरसूत्रारम्भः । १०४

### २ मातरिश्वाधिकरणम् । ७ सू०

आकाशवद्वायोरपि कार्यत्वमेवेत्यर्थनिरूपणायाधिकरणान्तरारम्भः । अधिकरणान्तरत्वेनास्याश्रयणे हेतुप्रदर्शनम् १०५

### ३ असम्भवाधिकरणम् । ८ सू०

आकाशवाय्वोरमृतत्वश्रवणेऽपि यद्युत्पत्तिरभ्युपगता तर्हि ब्रह्मणोऽप्युत्पत्तिः किं स्यादितिशङ्कानिरासायास्याधिकरणस्यारम्भः । ब्रह्मणो जन्माभावः उत्पत्त्यश्रवणात् । प्रत्युत स कारणं कारणाधिपाधिपः न चास्य कश्चिज्जनिता नचाधिप इति ब्रह्मणः सर्वकारणत्वश्रवणाच्चेति समाहितम् । १०५

### ४ तेजोऽधिकरणम् । ९–१३ सू०

तत्तेजोऽसृजत इति छान्दोग्यश्रुत्या ब्रह्मणस्तेजस उत्पत्तिरिति वायोरग्निः इति तैत्तरीयश्रुत्या वायोस्तेजस उत्पत्तिरिति चोभयोर्विरोधपरिहारायाधिकरणान्तरारम्भः । १०५

विषयवाक्यसंशयादिभिरधिकरणरचना १०६

विषयः — पृष्ठाङ्काः

तेजोऽत इत्यारभ्य चत्वारि पूर्वपक्षसूत्राणि तेजआदिकार्याणां वाय्वाद्यन्तरात्मा परमकारणः सर्वेश्वरः श्रीवासुदेवः स्रष्टा इत्यर्थनिरूपणाय सिद्धान्तसूत्रम्

## ५ विपर्ययाधिकरणम् । १४ सू०

पृथिव्या अप्सु अपां तेजसि तेजसो वायावित्येवं सृष्टिविपरीतक्रमेणैव कार्याणां स्वस्वकारणेषु लयः न सृष्ट्युक्तप्रकारेणेत्यर्थप्रतिपादनायाधिकरणान्तरारम्भः । १०७

## ६ अन्तराविज्ञानाधिकरणम् । १५ सू०

इन्द्रियमनोबुद्धीनां भूतोत्पत्त्यनन्तरमेवोत्पत्तिर्न भूतसृष्टेः प्रागिति आत्मन आकाशः इत्यादिक्रमभङ्गो नेत्यर्थनिरूपणायाधिकरणान्तरारम्भः । १०८

भूतानुग्रहसापेक्षत्वाच्चेन्द्रियाणां क्रमो न विरुध्यत इत्यर्थनिरूपणम् ।

## ७ आत्माधिकरणम् । १६-१७ सू०

अजात् परस्माद्ब्रह्मणो वियदादेर्जनिरुक्ता तद्वज्जीवस्य जन्यत्वमस्ति न वेति विचारायास्याधिकरणस्यारम्भः । १०९

देवदत्तो जातो मृत इत्यादिप्रतीतेर्जीवात्मनो जन्मादयः सन्तीति पूर्वपक्षः । स्थूलशरीरसंयोगवियोगयोरेव जन्मपदार्थत्वश्रवणान्नोक्तदोष इतिसमाधानोक्तिः ।

अग्निविस्फुलिङ्गादिदृष्टान्तैरात्मजन्मादेः श्रूयमाणत्वात्कथं भाक्तत्वमिति शङ्कानिरासायोत्तरसूत्रारम्भः ।

सृष्टिप्रकरणेषु जीवात्मन उत्पत्तिर्न श्रूयते प्रत्युत तस्य न जायते, इत्यादिश्रुतिभ्य एव नित्यत्वावगम इति समाधानम् ।

## ८ ज्ञाधिकरणम् । १८ सू०

प्रत्यगात्मस्वरूपनिरूपणायास्याधिकरणस्यारम्भः । ११०

देहात्मवादिचार्वाकदिगम्बरलोकायतिकवैभाषिकमाध्यमिकानां भिन्नभिन्नस्वरूपेणात्मानं वदतां मतमपाकृतम् ।

इन्द्रियात्मवादिमनआत्मवादिप्राणात्मवादिनां मतस्य निरसनम् । देहेन्द्रियव्यतिरिक्तः ज्ञानेच्छाप्रयत्नाद्याश्रयः विभुः प्रतिदेहं भिन्नो द्रव्यविशेष आत्मेति वैशेषिकादयो मन्यन्ते चैत्रस्य सुखानुभवकाले मैत्रादीनां सुखदुःखानुभवः स्यादात्मनो विभुत्वादित्यादिदोषोद्भावनेन तन्मतं खण्डितम् । १११

नच यददृष्टोत्पादितं शरीरं तदीयमिति नियम इति वाच्यम् । अदृष्टस्याप्युक्तन्यायेन नियामकत्वासम्भवादितिशङ्कोत्तरभावेन निरूपितम् ।

आत्मनश्चैतन्यमात्ममनः संयोगजं मन्यन्ते तार्किकाः नित्यचैतन्ये हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यादतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्यमात्मेति तार्किका वदन्ति तन्न विचारचारु । अत्रायं पुरुषः स्वयंज्योतिर्भवतीति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादित्यादिश्रुतिविरोधात् सुप्तिमूर्च्छादौ तु सदेव ज्ञानं कर्मणा सङ्कुचितमनभिव्यक्तमपि जागरादौ विकाशितमभिव्यज्यत इति न विरोधः । एतेन कर्ममीमांसकपक्षोऽपि निरस्तः दोषतुल्यत्वात् । इयांस्तु विशेषः, तन्मते आत्मवन्मनसामपि विभुपरिमाणकत्वमिति तथा तत्रापि सर्वैर्मनोभिः सर्वेषां जीवात्मनां संयोगादेः साम्यमित्यादिकमुपपादितम् । ११२

| विषयः | पृष्ठाङ्काः |
|---|---|
| नापि चिन्मात्र एवेति पक्षः सम्भवति "विज्ञातारमरे केन विजानीयात्, जानात्येवायं पुरुषः, एष एव हि द्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्त्ता, विज्ञानात्मा पुरुषः" इत्यादिश्रुतिव्याकोपात् । तस्माद्देहभिन्नो ज्ञानस्वरूपो ज्ञातृत्वादिधर्माश्रयः प्रत्यगात्मेति सिद्धान्तितम् । न दृश्यतेऽभेदे कुत्राप्याधाराधेयभावः किन्तु विभिन्नवस्तुनोरिति लोकविरुद्धत्वान्न ज्ञानस्वरूपस्यात्मनो ज्ञानाश्रयत्वं स्वस्मिन् स्ववृत्तित्वाभावेन विरोधः जले निक्षिप्तस्य जलान्तरस्याधाराधेयभावादर्शनादिति शङ्का, तत्समाधानञ्चेत्थं ज्ञानस्वरूपजीवतद्धर्मयोर्ज्ञानत्वेन साम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतयाऽऽधाराधेयभाव उपपद्यते धर्मित्वेन धर्मत्वेन ज्ञानयोर्विजातीयत्वात्तदुपपत्तिः ज्ञानस्वरूपात्मा धर्मी ज्ञानं तद्धर्म इति विवेकः द्युमणित्वेन प्रभात्वेन धर्मधर्मिभावस्य द्युमणिप्रभयोः सर्वानुभवसिद्धत्वान्न काप्यनुपपत्तिरित्युपपादितम् । | ११३ |
| अहमर्थो नात्मा सुषुप्त्याद्यवस्थानुगतत्वात् स्थूलदेहादिवदित्यनुमानेनात्मनोऽहमर्थत्वनिरसनम् । अथातोऽहङ्कार इत्यादिश्रुत्योभयोः पार्थक्योपदेशादिति सप्रमाणपूर्वपक्षस्योत्थापनम् | ११४ |
| सर्वोऽपि भ्रमः मायावादिनां मते द्व्यंशविषयोऽन्यथा निरधिष्ठानभ्रमापत्तेः न चाहमिति बुद्धे र्द्व्यंशविषयत्वमनुभूयते । इदं रजतमिति बुद्धेर्द्व्यंशविषयत्वमिदमित्यधिष्ठानविषयत्वं रजतमित्यारोपविषयत्वं यथानुभूयते न तथाहमिति बुद्धावितिप्रकारेणाहमर्थस्य द्व्यंशता निराकृता शङ्कोत्तरभावेन । | ११४ |
| ज्ञानेच्छादीनां सम्बन्धेनैवात्मनः प्रत्यक्त्वं नान्यथा सुखमहमस्वाप्समित्यहमर्थस्यैव सुखत्वेनानुभवादात्मत्वमविरुद्धमिति न किञ्चिदवेदिषमित्यज्ञानाश्रयत्वेनानुभवाच्चेत्यादिबहुतरयुक्तिभिरहमर्थस्यात्मत्वं निर्णीतम् । | ११५ |
| किञ्च त्वन्मतेऽहङ्कार एव क्रियाशक्त्या प्राणः विज्ञानशक्त्या मन इति तथा च सुषुप्तौ लये प्राणकार्यं निःश्वासादि न स्यादित्युपपादितम् | ११८ |
| अथातोऽहङ्कारादेश इत्यादिश्रुतिस्मृत्योः गर्वोऽभिमानोऽहङ्कार इत्यभिधानात् गर्वादिवाच्याहङ्कारो विषयः स तु प्राकृत एव अहङ्कारश्चाहंकर्त्तव्यञ्चेतिश्रुत्यन्तरात् । स च मान्तोऽव्ययरूपः कारप्रत्ययान्तः । आत्मवाच्यहंशब्दस्तु दकारान्तोऽस्मच्छब्दस्तस्मादुभयोरर्थतः शब्दतश्च भेदान्नोक्तदोषावकाशः । | ११८ |
| एतावन्तं कालं सुखमहमस्वाप्समिति सुषुप्तिकालीनसुखावच्छिन्नोऽहमर्थ इतिस्मृतेश्च अन्यथा स्मर्येत ह्यस्तन इवाहमर्थ इति चोद्यं निरुत्तरं स्यादित्युपपादितम् । | ११९ |
| एतावन्तं कालं मामप्यहन्नावेदिषमित्यस्यार्थः प्रदर्शितः । | |
| किञ्च प्राकृतप्रलये विश्वलयात्मकेऽवशिष्यमाणस्यैव परब्रह्मणः श्रीपुरुषोत्तमस्यापि प्राणमनोभूतादिसृष्टेः प्रागपि ज्ञात्रभिन्नाहमर्थस्वरूपत्वमेव गम्यते । | १२० |
| अहं मनुरभवं सूर्यश्चेत्यत्राहमर्थस्य मोक्षान्वयित्वमवगम्यते अहमात्मा गुडाकेशेति सर्वात्मकत्वम् न त्वेवाहं जातु नासमित्यादिना कालत्रयाबाध्यत्वं ददामि बुद्धियोगमिति मोक्षोपेयिकज्ञानदातृत्वमित्यादिकमुपपादितम् । | १२४ |


## ९ उत्क्रान्त्यधिकरणम् । १९–३१ सू०


| | |
|---|---|
| जीवात्मनः परिमाणनिरूपणायोत्तराधिकरणारम्भः | १२५ |
| अयं जीवात्मा मध्यमपरिमाणकः उत विभुपरिमाणकः आहोस्विदणुपरिमाणक इति सन्दिह्य विभुपरिमाणक इति पूर्वपक्षः जीवस्य विभुपरिमाणत्वे उत्क्रान्तिगत्यागतयः नोपपद्यन्ते मध्यमपरिमाणकत्वे त्वनित्यत्वं स्यात्तस्माज्जीवात्मनोऽणुपरिमाणकत्वं वाच्यमिति समाहितम् | |
| एक एवात्मा विभुः, अनेकोपाधिभिरवच्छिन्नो घटावच्छिन्नाकाशवत् भिन्नतया भाति उपाधीनामेवेतरे- | |

विषयः | पृष्ठाङ्काः
--- | ---


तरभिन्नानां भेदनियामकत्वेन न सुखदुःखभोगसाङ्कर्य्यं न वा बन्धमोक्षव्यवस्थानुपपत्तिः। यद्वा बिम्बस्थानीयमेकब्रह्म जलादिस्थानीयेऽन्तःकरणाद्युपाधौ प्रतिबिम्बितं सज्जीवत्वमापद्यते उपाधेश्चाविद्यकत्वात्तत्प्रयुक्तभेदोऽप्याविद्यकः यथा सूर्यस्य जलपूरितघटेषु तत्र तत्र प्रतिबिम्बविशेषो घटोपाधिकृतो भेदश्च तत्रैकस्मिंश्चाल्यमाने घटजले तद्गतस्यैव प्रतिबिम्बस्य कम्पादियोगो नान्येषामिति पूर्वपक्षः सर्वगतात्माद्वितीयवादे उपाधेर्विभुत्वाङ्गीकारश्चेत् सर्वस्यापि चेतनस्यावृतत्वेन जगदान्ध्यप्रसङ्गः प्रकाशकाभावात् गत्याद्यनुपपत्तिश्च मुक्तोपसृप्यब्रह्मोच्छेदप्रसङ्गः। — १२६

ब्रह्मविदाप्नोतिपरम्, पूता मद्भावमागताः इत्यादिशास्त्राणां बाधः प्रसज्येत। उपाधिपरिच्छिन्नात्मवादे पदे पदे बन्धमोक्षापत्त्यादिदोषाणां पूर्वमेव विस्तृतत्वमिति समाधानोक्तिः।

आवरकोपाधेः सत्यत्वं मिथ्यात्वं विकल्प्य तत् समाहितम् तत्वज्ञानाज्जीवोपाधिनाशे सति जीवो नश्यति न वेति शङ्कितं तदपि समाहितम्। — १२७

अविद्याकल्प्यस्य जीवस्य को वा कल्पकः। अविद्येति चेन्नाचेतनत्वात्, नापि जीवः। आत्माश्रयापत्तेः शुक्तिरजतवदविद्याकल्पितत्वाच्च। जीवस्य ब्रह्मैव कल्पकमित्यपि न ब्रह्मण्यज्ञानस्यैव पातात्। — १२७

किं ब्रह्म जीवान् पश्यति नवेति विकल्प्य दूषितम्। — १२८

यदि च ब्रह्म मिथ्यात्वेन स्वव्यतिरिक्तं जानाति कथं तर्हि तान्मोहयति नह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान्मोहयितुमीहते। — १२८

जीवब्रह्मणोर्वास्तवो भेदो न तु काल्पनिक इति समर्थितम्। — १२९

एक एव हि भूतात्मा भूते भूते व्यवस्थित इति श्रुत्यर्थो निरूपितः। — १३०

त्वदभिप्रेतं बिम्बभूतं ब्रह्म उपाध्यन्तःस्थं तदन्तर्गतं वा नाद्यः जलान्तःस्थस्य मत्स्यकूर्मादेः प्रतिबिम्बादर्शनात्। नान्त्यः, तव पक्षे ब्रह्मणो विद्यावहिःस्थत्वासम्भवात्। अन्यथा सदेशत्वापत्तेरित्युपदर्शितम्

एकजीववादोऽपि निरस्तः प्रमाणशून्यत्वादिति शङ्कोत्तरभावेन व्युत्पादितम्। — १३१

नित्यो नित्यानां चेतनश्चेतनानाम्, अंशो नानाव्यपदेशात्, नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः बहवो ज्ञानतपसा पूता मद्भावमागताः, इत्यादिश्रुतिस्मृतिन्यायाः जीवस्यैकत्वे बाध्येरन्। ब्रह्मण एवजीवत्वेन नित्यमुक्तत्वप्रतिपादकश्रुतिव्याकोपः स्यात्।

स्थितस्याप्यात्मनो ग्राम्यनिवृत्तिवदुत्क्रान्तिः स्यात् गत्यागत्योस्तु आत्मना स्वरूपेणैव साध्यत्वाज्जीवोऽणुरित्यर्थनिरूपणायानन्तरसूत्रारम्भः। — १३२

जीवो नाणुः स वा एष महानज आत्मेति महत्वश्रुतेरितिशङ्कापनोदायानन्तरसूत्रमुपात्तम्।

जीवस्याणुत्वसमर्थनाय हेत्वन्तरोक्तिसूचनाय सूत्रान्तरारम्भः।

आत्मनोऽणुपरिमाणकत्वे कृत्स्नदेहव्यापिसुखाद्यनुभवः कथमुपपद्यते इति शङ्कानिरासायानन्तरसूत्रारम्भः। यथा हरिचन्दनविन्दुः शरीरैकदेशे निपतितः कृत्स्नं शरीरमाह्लादयति तथा धर्मिणोऽणुत्वेऽपि तद्धर्मभूतज्ञानस्य विभुत्वादितिसमाधानोक्तिः।

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्योत्तरसूत्रमवतारितम् एकदेशवर्तिनोऽप्यात्मनो सकलदेहं व्याप्य कार्यकारित्वमिति व्युत्पादनायानन्तरसूत्रारम्भः।

ज्ञानस्य व्यापकत्वेऽणुजीवव्यतिरेकेणावस्थानं वक्तव्यं तच्चायुक्तं गुणिव्यतिरिक्तदेशे गुणस्यावस्थानादर्शनादिति शङ्कापनोदायानन्तरसूत्रारम्भः।

जीवतद्ज्ञानयोर्ज्ञानत्वाविशेषेऽपि धर्मधर्मिभावो युक्त इत्यर्थप्रतिपादनायानन्तरसूत्रारम्भः। — १३३

विषयः — पृष्ठाङ्काः

आत्मगुणस्य ज्ञानस्य नित्यत्वं चेत्तर्हि सुषुप्त्यादावपि विषयस्य प्रतीतिः स्यादित्याशङ्कापनोदायानन्तर-सूत्रारम्भः । — १३६

चेतनभूतात्मविभुत्ववादिमते दोषप्रदर्शनायानन्तरसूत्रारम्भः । तस्मात् ज्ञातृत्ववान् ज्ञानस्वरूपोऽणुपरिमाणो जीव इति सिद्धम् — १३६

## १० कर्त्रधिकरणम् । ३२–३८ सू०

जीवस्यैव कर्तृत्वं न बुद्धेरित्यर्थप्रतिपादनायानन्तराधिकरणस्यारम्भः । — १३७

"स्वर्गकामो यजेत" मुमुक्षुर्ब्रह्मोपासीत, इत्यादिभोगमोक्षसाधनोपदेशशास्त्रस्यार्थवत्वादेवात्मनः कर्तृत्व-मित्यर्थप्रदर्शनाय सूत्रारम्भः ।

नास्त्यात्मनः कर्तृत्वं किन्तु मनोवृत्तिकर्तृत्वमात्मन्यध्यस्यते तदेव कर्तृत्वमात्मनि भासते यथा जपाकुसुम-लौहित्यं स्फटिके, इति शङ्कितं प्रत्येकं स्फटिके पुष्पे च रक्तत्वबुद्धिवच्चिति बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन यदि भवेत्तर्ह्येवायं भ्रमः स्यान्नचैवमस्तीति समाहितम्, सोपाधिकोऽयमध्यासः निरुपाधिको वेति विकल्प्य तच्छङ्कोत्तरभावेन समाहितम् । — १३७

कर्तृत्वभोक्तृत्वाद्यनर्थरूपो बन्धो बुद्धिगतश्चेन्मोक्षोऽपि तद्गतः स्यात् । बन्धमोक्षयोस्सामानाधिकरण्य-नियमात् । अज्ञानमपि दुःखादिभोगद्वारेणैवानर्थं इति तव सिद्धान्त इत्युपपादितम् । — १३६

कर्तृत्वादिबन्धवन्मोक्षस्यापि कल्पितस्यैव पुरुषार्थत्वादात्मनि बन्धमोक्षयोः सामानाधिकरण्योपपत्ति-रितिशङ्का भट्टवार्तिकसमत्या परिहृता । — १३६

आत्मनः कर्तृत्वप्रतिपादिकानि वाक्यान्युदाहृतानि यद्यात्मा कर्ता न स्यात्तर्हि भोगमोक्षसाधनोपदेशोऽपि न स्यादित्यर्थापत्त्या च सिद्धमात्मनः कर्तृत्वमित्युपपादितम् — १४०

आत्मरूपचेतनस्य निर्धर्मिकत्वान्न तस्य कर्तृत्वमित्याशङ्क्य तत् परिहृतम् । — १४१

आत्मनां कर्तृत्वाङ्गीकारे तस्य सुषुप्तावपि सत्त्वे तत्रापि कर्तृत्वापात इत्याशङ्क्य तत्रापि श्वासादिकर्तृत्व-दर्शनात् कर्तृत्वमिति समाहितम् । — १४२

प्रकृतेःक्रियमाणानीति स्मृतेर्बाधकत्वमित्याशङ्कितं यत् तत् परिहृतम् — १४३

बद्धावस्थायां प्रत्यगात्मनां सङ्कुचितज्ञानशक्तिकतया ज्ञानक्रियादिजनने मनआदीनां सहकारित्वं मुक्ता-वस्थायान्तु बुद्धीन्द्रियादीनां न तथात्वमिति श्रुतिप्रमाणेन व्यवस्थापितम् — १४३

उपाधिसंसर्गेणात्मनः कर्तृत्वमाशङ्क्यापाकृतम् । यद्यपि वन्हेर्दाहकत्वं स्वाभाविकं तथापि काष्ठादिसंसर्ग-मन्तरा न तस्य दाहकत्वं तद्वत् प्रत्यगात्मनः स्वाभाविककर्तृत्वेऽपि बद्धदशायां करणाधीनं तदित्यर्थस्य निरूपणम् । — १४४

प्रत्यगात्मनां कर्तृत्वं सर्वान्तरात्मश्रीपुरुषोत्तमाधीनं तत्तत्कर्मसापेक्षञ्चेति सप्रमाणं निरूपितम् । — १४५

जीवात्मनः कर्तृत्वसमर्थनाय हेत्वन्तरात्मकं सूत्रद्वयमुपन्यस्तम् — १४६

'विज्ञानं यज्ञं तनुते'इति श्रुतौ विज्ञानपदेन बुद्धेर्ग्रहणञ्चेत्तदा बुद्धेः करणत्वात् विज्ञानेनेतिकरणव्यपदेशः स्यादित्यर्थप्रतिपादनाय सूत्रान्तरारम्भः । — १४६

यदि जीवात्मनः कर्तृत्वं स्यात्तदा सदा स्वात्मनो हितमेव कुर्यान्न त्वहितमितिशङ्कानिरासायानन्तर सूत्रारम्भः । — १४६

बुद्धेः कर्तृत्वे भोक्तृशक्तिरपि बुद्धेरेव स्यात् । एवं सति बन्धमोक्षौ बुद्धेरेव प्रसज्येयातामित्यर्थनिरूपणाय सूत्रान्तरमुपन्यस्तम् । — १४६

विषयः — पृष्ठाङ्काः

प्रत्यगात्मनः कर्तृत्वे हेत्वन्तररूपं सूत्रमुपात्तम् । — १४७

आत्मनः कर्तृत्वे हितस्य भोगवाञ्छायां करोति तदभावे न करोत्युभयथा व्यवस्था सिद्ध्यति बुद्धेः कर्तृत्वे तु सा न सिद्ध्येदित्यर्थप्रतिपादनाय सूत्रान्तरारम्भः । — १४७

## ११ परायत्ताधिकरणम् । ४०–४१ सू०

जीवस्य कर्तृत्वं परमात्मायत्तमित्यर्थसमर्थनायास्याधिकरणस्यारम्भः ।

जीवस्य कर्तृत्वं किं स्वायत्तं परमात्मायत्तमिति विमृश्य पूर्वपक्षरचनादिभिरधिकरणारम्भः । — १४७

श्रुतिस्मृतिप्रमाणेन प्रत्यगात्मनः कर्तृत्वं परमात्मायत्तमिति सिद्धान्तितम् ।

परमात्मनः कारयितृत्वे वैषम्यादिप्रसक्तिरिति शङ्कानिरासायानन्तरसूत्रारम्भः । — १४७

परमात्मनः कर्मसापेक्षत्वाद्विधिप्रतिषिद्धकारयितृत्वेन निग्रहानुग्रहकर्तृत्वेन खलु वैषम्यादि नास्तीति समाधानोक्तिः ।

## १२ अंशाधिकरणम् । ४२–५२ सू०

'अंशो ह्येष परस्ये'ति श्रुत्या प्रत्यगात्मनोंऽशत्वाभिधानात् निष्कलं निष्क्रियमिति श्रुत्या च ब्रह्मणो निरवयवत्वाभिधानादित्युभयश्रुतिविरोधसन्देहे उभयोरविरोधप्रकारप्रदर्शनायास्याधिकरणस्यारम्भः । — १४८

किमत्यन्तभिन्नांशोयं किंस्वित्तदुपाध्यवच्छिन्नो ब्रह्मप्रदेशः, ब्रह्मैवाविद्यया कल्पितांश इति वा उत शक्तिमतः शक्तिरिव स्वाभाविकभिन्नाभिन्न इति विमृश्य पूर्वपक्षादिभिरधिकरणरचना ।

अत्यन्तभेदपक्षो न युक्तः ब्रह्मणो निरवयवत्वेनात्यन्तभिन्नत्वांशत्वासम्भवात् । अभेदश्रुतीनामपि प्राबल्येनौपचारिकत्वायोगात् भेदनिन्दाश्रवणाच्च । न द्वितीयपक्षोऽपि विकल्पासहत्वात् तथाहि नतावदुपाधिना च्छिन्नो ब्रह्मखण्डो जीवः ब्रह्मणोऽच्छेद्यत्वात् जीवस्य सादित्वापत्तेश्च नाप्यवच्छिन्न एकाणुरूपोपाध्यवच्छिन्नो ब्रह्मप्रदेशविशेषो जीवोंशः ब्रह्मैकदेशे उपाधिसम्बन्धापत्त्या सर्वे दोषास्तस्यैव स्युः — १४९

किञ्चोपाधिना ब्रह्मणो जीवभावे सार्वज्ञ्यादिधर्मा आच्छादिताः स्वरूपं वा । नाद्यः । असम्भवात्, तथा हि सार्वज्ञ्यादयः स्वाभाविका धर्मा औपाधिका वा । नान्त्यः । औपाधिकत्वे उपाधेः सत्त्वमसत्त्वं वा । सत्त्वेऽपि ब्रह्मभिन्नत्वमभिन्नत्वं वा भिन्नत्वेऽपिस्वप्रयुक्तत्वमन्यप्रयुक्तत्वं ब्रह्मप्रयुक्तत्वं वेति विकल्प्य दूषितम् । — १५०

मुक्तावस्थायां जीवः स्वरूपेण तिष्ठति न वा । आद्ये उपाधिविगमेऽपि जीवस्य रूपस्य विद्यमानताङ्गीकारे औपाधिकभेदवादो दत्ततिलाञ्जलिः स्यात्स्वरूपेणैव भेदाङ्गीकारात् । द्वितीये स्वरूपनाश एव मुक्तस्वरूपः स्यात् तथात्वे प्रच्छन्नबाह्यान्मायावादिनः को वा विशेष इति त्वयैव चिन्तनीयः । दृष्टान्तानामग्निविस्फुलिङ्गप्रायमनोवृत्तीनामत्र प्रामाण्यमाशङ्क्य निराकृतम् । — १५१

तस्मान्न जीवस्योपाधिकृतांशत्वम् एवञ्च नैतेषु पक्षेषूभयश्रुत्यविरोधः सम्भवति अतः परिशिष्ट एव पक्ष एव सूत्रकृताभिप्रेत इति निश्चीयते । — १५२

चेतनाचेतनयोर्ब्रह्मणा स्वाभाविकभेदाभेद इति सिद्धान्तितं तत्र भेदविषयकश्रुतिसूत्रपुराणवाक्यानामत्यन्ताभेदवादिमते निर्विषयत्वापत्त्या बाधः प्रसज्येत तथात्वेऽर्धनास्तिकतापत्तिर्दुर्वारा । अयं दोषः केवलभेदवादिमतेऽपि समानः तन्मतेऽभेदवाक्यानां बाधप्रसङ्गात् नह्येकविधवाक्यबाधं बिना केवलभेदोऽभेदो वा समर्थयितुं शक्यते । द्वैताद्वैतसिद्धान्ते तु उभयविधवाक्यानां न कथमपि विरोधः शङ्कनीयः । तेषां चेत्रचेत्रज्ञप्रकृतिपुरुषक्षराक्षरादिशब्दाभिधेयस्य जडचेतनजातस्य ब्रह्मात्मकत्वतद्व्याप्यत्वतदधीनत्वादिहेतुभिर्ब्रह्मणोऽभिन्नत्वं सर्वात्मत्वसर्वव्यापकत्वस्वतन्त्रत्वादिभिर्भिन्नत्वं तस्येति प्रतिपादनेन

विषयः | पृष्ठाङ्काः

चरितार्थत्वात्, एवञ्च न कस्यापि वाक्यस्य विरोधशङ्कागन्धोऽपि । अत एव च भेदविषयकाणामभेद-
विषयकाणाञ्च वाक्यानां परस्परबाध्यबाधकभावो वक्तुं न शक्यःतुल्यबलत्वादिति श्रुतिप्रमाणमुखेन
पूर्वपक्षोत्तरभावेन निरूपितम् । १५३
सत्ताया द्वैविध्यं प्रदर्श्य तत्तल्लक्षणं सप्रमाणं निरूपितम् । १५४
भेदाभेदयोः स्वरूपप्रतिपादनम् । १५५
त्वंपदस्य जीवान्तर्यामिपरत्वे त्वमसीतिमध्यमपुरुषो न घटेत न त्वदन्तर्यामिपरमात्माऽसीत्यन्वयो
युज्यत इत्याशङ्क्य समाहितम् । १५७
मन्त्रवर्णादप्युक्तार्थस्य निश्चय इत्यर्थप्रतिपादनायोत्तरसूत्रम् । १५८
श्रुतिमुखवचनेनाप्युक्तार्थः सिध्यतीत्यर्थप्रदर्शनाय सूत्रान्तरारम्भः । १५९
जीवस्य स्वाभाविकाभिन्नांशत्वे जीवगतदोषाः ब्रह्मण एव स्युरिति शङ्का तन्निरासायानन्तरसूत्रस्यारम्भः । १५९
ब्रह्मांशस्यापि जीवस्यानादिकर्मात्मकाविद्यापरियुक्तत्वात्तत्कृतसुखदुःखानुभवितृत्वं न परस्य तद्योगो-
दोषास्पृष्टस्वभावत्वादिति समाहितम् ।
यथा न प्रत्यगात्मदुःखेनेश्वरस्य दुःखित्वं तथा ऋषयः स्मरन्तीत्यर्थप्रदर्शनायानन्तरसूत्रमुपात्तम् । १५९
येषान्तु जीवो वास्तवो नास्ति ब्रह्मैवाविद्यया जीवभावं प्राप्तं तेषां कदापि कथञ्चिदपि नोक्तदोषोद्धारः
सम्भवति । कर्मवश्यस्य वस्तुतोऽभावात् ब्रह्मण एव सर्वदोषप्रसङ्गः । १६०
अत्रैव विशिष्टाद्वैतवादिनां मतं प्रदर्श्य खण्डितम् । १६०
सर्वेषां प्रत्यगात्मनां ब्रह्मांशत्वादिभिः समानत्वात् त्रैवर्णिकानां वेदाध्ययनादावनुज्ञा तदितरेषां तन्निषेधः
उत्तमवर्णानां दर्शनस्पर्शनादिः शास्त्रेणाभिहितस्तदन्येषां निषेधश्चेत्यत्र किं नियामकमित्याशङ्कानिरासा-
यानन्तरसूत्रारम्भः । १६३
सर्वेषामेकरूपत्वे देहसम्बधानुज्ञापरिहारौ चेदकेनाश्वमेधे कृते सर्वैः कृतं स्यादेकेन सुरापाने कृते सर्वैः
कृतमिति कथं नोच्यते आत्मनां वास्तवैकत्वादित्याशङ्कानिरासायोत्तरसूत्रारम्भः । १६३
सर्वजीवानामणुपरिमाणकत्वात् प्रतिशरीरं स्वरूपेण भिन्नत्वात् न कर्मसङ्करः फलभोगसाङ्कर्यं वेति
समाधानोक्तिः ।
सजातीयविजातीयस्वगतभेदशून्यतत्ववादिनां मते ब्रह्मण्युपाधिकल्पने युक्तय आभासा एव शास्त्रप्रमाणा-
भावश्चेत्यर्थप्रतिपादनाय सूत्रान्तरारम्भः । श्रीशङ्करपादानां व्याख्यानमुपन्यस्य दूषितम् । १६४
सर्वेषामात्मनां सर्वगतानां सन्निधौ उत्पद्यमानमदृष्टं कस्य स्यात् कस्य तु न स्यादित्यदृष्टानियमादित्यर्थ-
निरूपणाय सूत्रान्तरमुपन्यस्तम् । १६४
अहमिदं करवै इदं नेति यस्याभिसन्धिस्तस्यादृष्टमिति नियमो भविष्यतीति शङ्कानिरासायानन्तर-
सूत्रारम्भः । १६५
उपाधिसम्बन्धिब्रह्मप्रदेशादनुपहितब्रह्मप्रदेशो भिद्यतेऽतो व्यवस्थोपपद्यत इतिशङ्कापनोदायानन्तरसूत्रम् । १६५
प्रदेशभेदेन सम्बन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात् प्रदेशसम्बन्धि दुःखं ब्रह्मण्येव स्यादिति समाधानम् ।

## चतुर्थपादः

### १ प्राणोत्पत्त्यधिकरणम् । १–४ सू०

जीवोपकरणानामिन्द्रियाणामुत्पत्तिरित्यर्थप्रतिपादनायास्याधिकरणस्यारम्भः । १६६

विषयः पृष्ठाङ्का.

प्राणाः नोत्पद्यन्त इत्याशङ्क्य तदुत्पत्त्युपपादनम् ।
प्राणानां मुख्यजन्मत्वे हेत्वन्तरात्मकं सूत्रमुपात्तम् । १६७
तेजसादीनां सृष्टिप्रकरणे प्राणस्य सृष्टिर्न श्रूयते किन्तु तेषामेव सृष्टेः शिष्टत्वादिति शङ्कानिरासाय-
सूत्रान्तरारम्भः । १६७
वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वाच्च प्राणस्य कार्यत्वमिति समाहितम् ।

## २ सप्तगत्यधिकरणम् । ५–६ सू०

प्राणविषयकश्रुतीनामविरोधेनास्याधिकरणस्यारम्भः । १६८
प्राणानां सप्तसङ्ख्याकत्वाष्टसङ्ख्याकत्वनवसङ्ख्याकत्वदशसङ्ख्याकत्वैकादशसङ्ख्याकत्वद्वादशसङ्ख्याकत्वत्र–
योदशसङ्ख्याकत्वं वृत्तिभेदापेक्षमिति श्रोत्रचक्षुर्नासावागिति सप्तप्राणा इति पूर्वपक्षोक्तिः ।
प्राणा एकादशेति सिद्धान्तनिरूपणाय सूत्रान्तरारम्भः । १६८
पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि सङ्कल्पादिहेतुरन्तरिन्द्रियं मनः इत्येकादशैवेन्द्रियाणीत्युपपादितम् ।

## ३ प्राणाणुत्वाधिकरणम् । ७ सू०

प्राणानामणुत्वपरिमाणनिरूपणायास्याधिकरणस्यारम्भः । प्राणा अणवः । उत्क्रान्त्यादिश्रवणादित्यर्थ-
निरूपणायोत्तरसूत्रारम्भः । १६९

## ४ मुख्यप्राणोत्पत्त्यधिकरणम् । ८ सू०

मुख्यस्य प्राणस्य नासदासीये जगदुत्पत्तेः प्रागसत्वोक्तेः प्राणोऽज इतिशङ्कानिरसनद्वारा श्रेष्ठः मुख्यः
प्राणोऽपि भूतादिवदुत्पद्यत इत्यर्थो निरूप्यते १७०

## ५ वायुक्रियाधिकरणम् । ९-१२ सू०

प्राणस्वरूपनिरूपणायास्याधिकरणस्यारम्भः । १७१
स मुख्यः प्राणः किं वायुरुत करणव्यापारःअथ वायुरेव कञ्चन विशेषमापन्न इति शङ्का
महाभूतविशेषो वायुरेवावस्थान्तरमापन्नः प्राण इतिसमाधानम् ।
यथा चक्षुराद्यपेक्षया जीवस्य स्वातन्त्र्यं तद्वत् प्राणस्यापि श्रेष्ठत्वात् प्रधानत्वात् स्वातन्त्र्यं स्यादित्या-
शङ्कापनोदायानन्तरसूत्रारम्भः । १७२
यथा राजमन्त्री अन्यराजभृत्येषु प्रधानमपि राजानमपेक्ष्य परतन्त्र एव एवं प्राणोऽपि इन्द्रियापेक्षया प्रधा-
नमपि जीवेऽस्वतन्त्र इति समाधानोक्तिः ।
चक्षुरादीनां करणानां रूपरसादयः विषयाः सन्ति प्राणस्यापि विषयान्तरं वक्तव्यं तथात्वे एकादशकरण-
गणनव्याकोपः प्रसज्येत इतिशङ्कानिरासाय सूत्रान्तरारम्भः १७२
प्राणाधीना देहस्थितिर्भवत्यतः सा प्राणस्यासाधारणकार्यभूता इति श्रुतिमुखेन समर्थितम् ।
एक एव प्राणः वृत्तिभेदाद्बहुधा व्यपदिश्यत एवं सति वायुरेवावस्थान्तरापन्नः जीवोपकरणभूतो बहु-
वृत्तिमान् श्रेष्ठः प्राण इत्यर्थसमर्थनायानन्तरसूत्रमुपात्तम् १७३

## ६ श्रेष्ठाणुत्वाधिकरणम् । १३ सू०

मुख्यप्राणस्य परिमाणप्रदर्शनायास्याधिकरणस्यारम्भः । १७३

## ७ ज्योतिराद्यधिकरणम् । १४–१८ सू०

इन्द्रियाणामग्न्यादिदेवताभिरधिष्ठितत्वमिति प्रदर्शनायास्याधिकरणस्यारम्भः । १७४

| विषयः | पृष्ठाङ्काः |
|---|---|
| इन्द्रियाणि स्वतन्त्रतया स्वयमेव स्वकार्ये प्रवर्त्तन्ते स्वस्वाधिष्ठातृदेवताप्रेरितानि वा इति शङ्का अग्न्यादिभिर्देवताभिरधिष्ठितमेव वागादिकं चेष्टत इति समाहितम् । | |
| यद्येवं तर्हि भोक्तृत्वमपि देवानां स्यादितिशङ्कानिरासायानन्तरसूत्रारम्भः । | १७४ |
| प्राणोपलक्षितदेहेन्द्रियादिसमुदायस्वामिना शारीरेणैव प्राणानां सम्बन्धः न देवादिभिरतो न तेषां भोक्तृत्वमितिसमाधानम् | |
| प्रागुक्तार्थसाधनाय हेत्वन्तररूपाग्रिमसूत्राभिधानम् ते प्राणा इन्द्रियसंज्ञकानि तत्वान्तराणि न तु श्रेष्ठस्य प्राणस्य वृत्तिविशेषा इति प्रदर्शनायानन्तरसूत्रमुपात्तम् । | १७५ |
| मुख्यप्राणादितरे प्राणास्तत्वान्तराणीति व्युत्पादनाय सूत्रान्तरारम्भः । | १७६ |

## ८ संज्ञामूर्त्तिक्लृप्त्यधिकरणम् । १९–२१ सू०

| | |
|---|---|
| नामरूपे व्याकरवाणीति श्रुत्युक्तस्य नामरूपव्याकरणस्य जीवकर्तृकत्वं तत् प्रतिपादकश्रुतिविरोधपरिहारायाधिकरणान्तरारम्भः । | १७८ |
| तस्य जीवकर्तृकत्वनिरसनद्वारा त्रिवृत्कर्तृपरमेश्वरकर्तृकं नामरूपव्याकरणम् । | |
| त्रिवृत्कृतानां तेजोऽबन्नानां कार्यविभागप्रदर्शनाय सूत्रान्तरारम्भः । | १८० |
| सर्वं भूतभौतिकं वस्तुमात्रं त्रिवृत्कृतमेव तर्हि इदं भूमेःकार्यमिदमपामिदं तेजस इति भेदनिर्देशासम्भवप्रसङ्गो दुर्वारः सर्वेषां सर्वत्र सत्वादिति शङ्कापरिहारायानन्तरसूत्रारम्भः । | १८१ |

## श्रीपुरुषोत्तमप्राप्त्युपायभूतसाधनप्रतिपादके तृतीयाध्याये जीवस्य पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदप्रतिपादकेः—तृतीयाध्याये

### प्रथमपादः

### १ तदन्तरप्रतिपत्त्यधिकरणम् । १–७ सू०

| | |
|---|---|
| जीवस्य प्राणेन्द्रियमनोभूतसूक्ष्मैः सम्परिष्वक्तः परिवेष्टितो जीवो गच्छतीत्यर्थनिरूपणम् | १८३ |
| तत्र पञ्चाग्निविद्या तद्द्यु, पर्जन्य, पृथिवी, पुरुष, योषिद्रूपेषु, श्रद्धासोमवृष्टिरेतोरूपा आहुतय इत्याद्युक्तिद्वारा जीवस्य सूक्ष्माभिरद्भिः परिवेष्टितस्य लोकान्तरं प्रति क्रमणमित्यर्थस्य निरूपणम् | |
| अद्भिः; परिवेष्टितो जीवो याति न तु भूतसूक्ष्मैर्वेष्टित इतिशङ्कानिरासायानन्तरसूत्रारम्भः । त्रिवृत्करणश्रुत्याऽपां त्र्यात्मकत्वादितरयोरपि अन्नतेजसोःपरिग्रह इति समाधानम् । | १८३ |
| भूतसूक्ष्मसम्परिष्वक्त एव रंहतीति प्रतीयते निराश्रयाणां प्राणानां गमनासम्भवादित्यर्थप्रतिपादनायानन्तरसूत्रमुपात्तम् | १८४ |
| वागादिप्राणानां देहमरणसमयेऽग्न्यादिषु लयश्रवणान्न प्राणानां जीवेन सह गमनमितिशङ्कापनोदायोत्तरसूत्रारम्भः । | १८४ |
| वागादीनामग्न्यादिगमनश्रवणमौपचारिकमितिसमाहितम् । | |
| प्रथमेऽग्नौ होम्यत्वेन श्रद्धायाः श्रवणं न त्वपां तथा च कथं पञ्चम्याहुतावपां पुरुषभाव इति शङ्का उपक्रमोपसंहाराभ्यां श्रद्धाशब्देन ता एवाप उच्यन्त इति समाधानञ्चोत्तरसूत्रेण निरूपितम् | १८५ |
| भूतपरिष्वक्तो जीवो गच्छतीत्ययुक्तं श्रद्धां जुह्वतीत्यादिवाक्येषु जीवस्याश्रुतत्वादिति शङ्का तस्याःसमाधान- | |

विषयः | पृष्ठाङ्काः
---|---

मित्थम्, अथ य इमे ग्रामादिति वाक्ये धूमाद्रात्रिमित्यादिना पितृलोकादाकाशमाकाशाच्चन्द्रमसमित्थमित्थम्, अथ य इमे ... स्तेनेष्टादिकारिणां धूमादिमार्गेण चन्द्रप्राप्त्युक्त्यनन्तरम्, एष सोमो राजा तद्देवानामन्नं ते देवा भक्षयन्तीति तेषां सोमराजभावः श्रूयते तेषु सोमराजशब्दस्त्वमृतमयदेहवत्त्वसादृश्यादिति तस्य प्रदर्शनायोत्तरसूत्रारम्भः ।

एष सोमो राजा तद्देवानामन्नं ते देवा भक्षयन्ति इति श्रुत्या देवभक्ष्यत्वश्रवणात् कथमिष्टादिकारिणामुपभोगः सम्भवतीति शङ्कानिरासायानन्तरसूत्रम् । १८

## २ कृतात्ययाधिकरणम् । ८–११ सू०

इष्टादिकारिणां भोगेन कर्मक्षये सति पुनर्देहप्राप्तिर्न भवितुमर्हतीति शङ्कानिरासायोत्तरसूत्रारम्भः । १८

स्वर्गप्राप्तिहेतुभूतं कर्मजातं यावत्सम्पातमित्यादिश्रुत्योच्यते तद्भिन्नमैहिकशरीरप्राप्तिहेतुभूतकर्मानुशयशब्देन गृह्यते तद्वानारोहमार्गेण प्रत्यवरोहतीति समाधानोक्तिः ।

शीलवाचिना चरणशब्देन कर्माशयो लक्ष्यते सानुशया एवावरोहन्तीत्यर्थप्रतिपादनाय सूत्रान्तरारम्भः । १८

ब्राह्मणजन्मादीनामपि कर्मफलतया आचारवैयर्थ्यमिति शङ्का सुखसाधनपुण्यकर्माधिकारस्याचारपूर्वकत्वमिति समाधानञ्चोत्तरसूत्रेण प्रतिपादितम् । १८

चरणशब्दस्य कर्मणि मुख्यार्थत्वं मन्यते बादरिराचार्य्य इति तन्मतप्रदर्शनायोत्तरसूत्रस्यारम्भः । १८

## ३ अनिष्टादिकार्यधिकरणम् । १२-२१ सू०

अनिष्टादिकारिणां गतिचिन्तनायास्याधिकरणस्यारम्भः । १८

सर्वेषामविशेषेण गतिश्रवणादनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्तीत्यर्थप्रतिपादनायानन्तरसूत्रस्यारम्भः । सुकृतिनां दुष्कृतकर्मणाञ्च समानफलत्वमयुक्तमितिशङ्कासमाधानायानन्तरसूत्रारम्भः ।

अनिष्टादिकारिणां यमयातनानुभवेन विशेष इतिसमाधानम्, पराशरादयः यमवश्यत्वं सर्वेषां स्मरन्तीत्यर्थप्रतिपादनायानन्तरसूत्रम् । १८

पापिनां गन्तव्यत्वेन रौरवादीन् सप्तनरकान् स्मरन्तीत्यर्थप्रतिपादकमुत्तरसूत्रम् १८

यमस्यैव वशं यान्तीत्यनुपपन्नं चित्रगुप्तादयः परेऽप्यधिष्ठातारः सन्तीतिशङ्कापनोदायोत्तरसूत्रारम्भः । १८

अनिष्टादिकारिणां चन्द्रलोकगतिर्नोपपद्यत इतिसिद्धान्तसमर्थनायानन्तरसूत्रम् १९

अनिष्टादिकारिणान्तु विनैवाहुतिसङ्ख्यानियमं भूतान्तरप्रविष्टाभिरद्भिः शरीरमारभ्यते न तु श्रद्धादिक्रमप्राप्तिरित्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । १९

पुण्यकर्मणामपि धृष्टद्युम्नप्रभृतीनां पञ्चमाहुत्यनपेक्षो देहारम्भ इत्यर्थनिरूपणायानन्तरसूत्रम् १९

स्वेदजोद्भिज्जप्रभृतीनामुत्पत्तिदर्शनाच्च पञ्चमाहुत्यपेक्षेत्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । १९

भूतग्रामस्य त्रिविधत्वमाशङ्क्य चतुर्विधत्वं स्थापितमित्यर्थप्रतिपादनायानन्तरसूत्रम् १९

## ४ तत्स्वाभाव्यापत्त्यधिकरणम् । २२ सू०

इष्टादिकारिणामवरोहप्रकारचिन्तनायास्याधिकरणस्यारम्भः । १९

तत्र विषयवाक्यसंशयादिभिरधिकरणरचना

## ५ नातिचिराधिकरणम् । २३ सू०

आकाशादिसाम्येनात्यल्पकालमवस्थितानां वर्षधाराभिः सह (वर्षसाम्येन) भुवमापाद्य चिरं व्रीह्यादिभावेन स्थूलशरीरं प्राप्य चिरं दुःखमनुभवतीत्यर्थप्रतिपादनायाधिकरणान्तरारम्भः । १९

## ६ अन्याधिष्ठिताधिकरणम् । २४–२७ सू०


विषयः — पृष्ठाङ्काः

वर्षसाम्योत्तरमप्राप्य स्थावरजन्म अन्यजीवाधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनां न तत्सुखदुःखानुभव इत्यर्थनिरूपणायाधिकरणान्तरारम्भः । — १५२

किमनुशयिनो व्रीह्यादिशरीरा जायन्ते, किम्वाऽऽकाशादाविव व्रीह्यादौ तेषां संश्लेषमात्रमिति विमृश्य व्रीह्यादिशरीरवत्त्वेनोत्पद्यन्त इतिपूर्वपक्षः । यथाकाशादिषु वर्णान्तेषु तेषां संश्लेशमात्रमुक्तं न तु तत्तच्छरीरित्वम् तत्र कर्मपरामर्शभावादिति समाधानोक्तिः ।

इष्टादिकारिणामशुद्धमग्निषोमीयपशुहिंसायोगात् पापमिश्रं ज्योतिष्टोमादिकर्मास्ति तत्र पुण्यांशस्य स्वर्गे फलमनुभूय हिंसांशफलानुभवार्थं व्रीह्यादिषु स्थावरेषु ते जन्म प्राप्नुवन्तीत्याशङ्कानिरासायानन्तरसूत्रारम्भः ।

हेत्वन्तरेणापि व्रीह्यादिसंश्लेषमात्रमित्यर्थप्रदर्शनाय सूत्रान्तरम् ।

योनिप्राप्तेः पश्चादेवानुशयिनां देहप्राप्तिः । तत्रैव सुखदुःखादिभोगस्य सत्वात् । ततः पूर्वं ह्याकाशादिप्राप्तौ तद्योगमात्रमित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः । — १५३

प्रथमपादे आत्मानात्मविवेकार्थं भूतभौतिकसम्बन्धो वैराग्यार्थञ्च स्वर्गनरकसम्बन्धो जाग्रतो जीवस्य प्रपञ्चितः सम्प्रति विवेकवैराग्ययोर्दार्ढ्यार्थं स्वप्नाद्यवस्थाया विचारः ब्रह्मणि पुरुषोत्तमे भक्त्युद्रेकसिद्धये तद्गुणा निरूप्यन्त इत्यर्थनिरूपकः—


## द्वितीयपादः

### १ सन्ध्यधिकरणम् । १–६ सू०


विषयवाक्यसंशयादिभिरधिकरणरचना । — १५४

सान्ध्ये स्वप्नस्थाने रथादिसृष्टिर्जीवकर्तृका इतिपूर्वपक्षपरे सूत्रद्वये

स्वाप्नसृष्टिःपरमेश्वरनिर्मितैव न जीवकर्तृका इति सिद्धान्तप्रतिपादनायानन्तरसूत्रारम्भः ।

हेत्वन्तरेणापि भगवत्कर्तृकत्वं स्वाप्नरथादेरवगम्यत इत्यर्थप्रदर्शनाय सूत्रान्तरारम्भः । — १५५

बद्धावस्थायां जीवस्य सत्यसङ्कल्पादिकं कुतस्तिरोहितमितिशङ्कापनोदायानन्तरसूत्रमुपात्तम् । — १५६

अनादिकर्मात्मकाविद्याविमोहितस्य जीवस्यात एव भगवत्पराङ्मुखस्य स्वाभाविकमपि सत्यसङ्कल्पादिकं तिरोहितं बद्धावस्थायां परमेश्वरस्याभिध्यानात् जीवकर्मानुरूपात् सङ्कल्पादिति समाधानोक्तिः ।

सृष्टिवेलायां देहयोगात् सत्यसङ्कल्पस्य तिरोभावः । प्रलयवेलायां प्रकृतियोगाद्भवत्यतोऽनभिव्यक्तस्वरूपत्वान्न जीवस्य स्वाप्नसृष्टिकर्तृत्वमित्यर्थप्रतिपादनायोत्तरसूत्रारम्भः । — १५६


### २ तदभावाधिकरणम् । ७–८ सू०


उक्तार्थस्य पुष्ट्यर्थं सुषुप्तिस्थानस्य चिन्तनायास्याधिकरणस्यारम्भः । — १५७

तत्रविषयवाक्यसंशयादिभिरधिकरणरचना । ब्रह्मैव साक्षात्सुषुप्तिस्थानमिति सिद्धान्तितम्

यतो ब्रह्मैव सुषुप्तिस्थानम् अतोऽस्माद्ब्रह्मणो जीवस्य प्रबोधो जागरितस्थानप्राप्तिरुपपद्यत इत्यर्थप्रतिपादनाय सूत्रान्तरारम्भः ।


### ३ कर्मानुस्मृतिशब्दविध्यधिकरणम् । सू० ६


सुषुप्तिस्थाने ब्रह्मणि प्रविष्टस्य दुःखालयावस्थाद्वयविनिर्मुक्तस्य जीवस्योत्थानं न सङ्गच्छत इति शङ्कानिराकरणायास्याधिकरणस्यारम्भः । — १५८

| विषयः | पृष्ठाङ्काः |
|---|---|
| यदि सुप्तेतर उत्तिष्ठति तदैते हेतवो बाध्येरन् तस्मात्सुषुप्त एवोत्तिष्ठतीति सिद्धान्तितम् । | |
| **४ मुग्धाधिकरणम् । १० सू०** | |
| मूर्च्छावस्थाविचारायास्याधिकरणस्यारम्भः । | १९८ |
| मूर्च्छावस्था लोकसिद्धा किं सुषुप्त्यादावेवान्तर्भवति आहोस्वित्तदतिरिक्तेति शङ्का । मूर्च्छावस्था सुषुप्त्याद्यन्यतमा नास्ति किन्त्ववस्थान्तरमितिसमाधानोक्तिः । | |
| **५ उभयलिङ्गाधिकरणम् । ११–२१ सू०** | |
| परस्मिन्ननुरागजननाय तस्य स्वभावतोऽपास्तदोषत्वं कल्याणगुणैकराशित्वञ्च प्रतिपादयितुमस्याधिकरणस्यारम्भः । | १९९ |
| विषयवाक्यसंशयादिभिरधिकरणरचना | |
| जागरादिस्थानस्थितस्य जीवस्येव तदन्तर्यामितया स्थितस्य ब्रह्मणोऽपि तत्तत्स्थानप्रयुक्ता दोषाः सम्भवन्ति उत नेति शङ्का | |
| जीवान्तर्यामितया तत्तत्स्थानेषु प्रविष्टस्यापि ब्रह्मणः तत्तत्स्थानप्रयुक्ता दोषाः नैव सन्ति सर्वत्र श्रुतिस्मृतिषु स्वभावतोऽपहतपाप्मत्वश्रवणादिति समाधानम् । | |
| तत्तत्कर्मानुसारिपराभिध्यानात्तिरोहितस्वरूपस्य जीवस्योक्तदोषाः सन्ति न तु नित्याविर्भूतस्वरूपस्य परस्येत्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । | २०० |
| कर्मवश्यस्य जीवस्यैव दोषभाक्त्वमपरस्यकर्मावश्यस्य न तथात्वमिति निरूपणाय सूत्रान्तरम् | २०१ |
| नामरूपकर्तृत्वेन ब्रह्मणस्तद्दोषकृत्वं प्राप्नोतीत्याशङ्कानिरासायोत्तरसूत्रारम्भः । | २०१ |
| आकाशो वै नामेत्यादिश्रुत्या सर्वानुप्रविष्टस्यापि तस्य नामरूपकार्यास्पर्शेन केवलं निर्वोढृत्वप्रतिपादनादिति समाधानम् । | |
| ब्रह्मणः सत्यकामत्वादिकं मिथ्याभूतं तेषां शबलगततया नेति नेत्यादिश्रुतिप्रतिषिद्धत्वादित्याशङ्कानिरासायानन्तरसूत्रारम्भः । एकस्यैव वाक्यस्योभयलिङ्गब्रह्माभिधायित्वं द्योतयितुमिदं सूत्रम् । | २०१ |
| सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यं प्रकाशस्वरूपं ब्रह्मेत्येतावन्मात्रमाह न तु वाक्यान्तरात्रगतं कल्याणगुणसागरत्वसत्यकामत्वादिकं निषेधतीत्यर्थनिरूपणायोत्तरसूत्रारम्भः । | २०२ |
| वेदान्तवाक्यगणैः परस्य ब्रह्मणः समस्तहेयलेशास्पृष्टत्वं कल्याणगुणसागरत्वं प्रतिपाद्यते, इत्यर्थप्रदर्शनाय सूत्रान्तरमुपात्तम् । | २०२ |
| यथा जलादौ प्रतिबिम्बितोऽपि सूर्यादिस्तत्प्रयुक्तदोषैर्न स्पृश्यते तथा चेतनेऽचेतने च स्थितमपि परं ब्रह्म तत्तद्दोषैर्न स्पृष्टमिति शास्त्रे उपमा दीयत इत्यर्थप्रतिपादनाय सूत्रान्तरारम्भः । | २०२ |
| जलाधारेषु विषमेषु प्रतिबिम्बितोंऽशुमान् तदीयवृद्धिह्रासादिदोषभाग्न भवति प्रत्युत जलभाजनजातं प्रकाशयति तथा परं ब्रह्म चेतनाचेतनवस्तुषु एकमेव तत्तदन्तर्यामितया बहुधा वर्त्तते न तत्तद्दोषैः संस्पृश्यते न तत्तद्भेदैर्भिद्यते चेत्यर्थनिरूपणायानन्तरसूत्रस्यारम्भः । | २०३ |
| दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितांशमात्रेण ग्राह्यमित्यर्थप्रदर्शनायानन्तरसूत्रम् । | २०३ |
| **६ प्रकृतैतावदधिकरणम् । २२–३० सू०** | |
| प्रत्यक्षादिप्रमाणैर्दुर्ज्ञेयस्य ब्रह्मणो ज्ञानाय स्थूलादिरूपोपदेशेन प्राप्तेयत्तानिषेधपूर्वकं सत्यज्ञानाद्यनन्तकल्याणगुणाश्रयमपरिच्छिन्नस्वरूपमितिविचारायास्याधिकरणस्यारम्भः । | २०४ |

विषयः पृष्ठाङ्कः

विषयवाक्यसंशयादिभिरधिकरणरचना

नेति नेति श्रुतिः किं पूर्वोपदिष्टं मूर्त्तामूर्त्तादिरूपमात्रं प्रतिषेधति उत प्राप्तं ब्रह्मण एतावत्त्वं प्रतिषेधति इति शङ्का प्रकृतैतावत्त्वमेव ब्रह्मणः प्रतिषेधति प्रकृतं यन्मूर्तामूर्त्तंप्रपञ्चमेतावदेव ब्रह्म न भवतीति अथात आदेशो नेति नेतीत्यत्र प्रतिपाद्यते न तु प्रपञ्चस्वरूपं निषिद्ध्यते । अतत्परत्वाद्वाक्यस्येति सप्रमाणं सिद्धान्तितम् ।

यद्येवं तर्हि कथं न गृह्यते इतिशङ्कानिरासायानन्तरसूत्रम् ।

शास्त्रानुसारिभिर्दर्शनेप्सुभिर्महानुभावैः कृते तु यत्ने व्यक्तो भवतीत्यर्थप्रदर्शनाय सूत्रान्तरारम्भः । २०७

यथा च सर्वसाधारणस्याग्नेर्द्विजानां कर्मणि मन्थनादौ अभ्यासात् प्रकाशः तथा सर्वसाधारणमपि ब्रह्म मुमुक्षूणां संराधनाभ्यासादाविर्भवतीत्यर्थनिरूपणायानन्तरसूत्रम् २०८

प्रसङ्गाद्ब्रह्मसाक्षात्कारस्य फलप्रदर्शनाय सूत्रान्तरम् । श्रीशाङ्करीयं भाष्यमनूद्य दूषितम् ।

प्रपञ्चस्य कार्यस्य कारणेन ब्रह्मणा सह भेदाभेदसम्बन्धं सर्वश्रुत्यर्थनिर्वाहकं स्वकीयं सिद्धान्तं भगवान् सूत्रकारो दर्शयति अनन्तरसूत्रेण ।

यथाहिकुण्डलयोरहित्वेन कुण्डलत्वेन च भेदः । अह्यात्मकत्वाद्विना च कुण्डलस्याभेदस्तथा तदात्मकत्वतदाधेयत्वतदायत्तसत्ताकत्वादिना तदपृथक्सिद्धत्वेनाभिन्नत्वेऽपि परतन्त्रसत्वावच्छिन्नतदात्मीयस्वरूपेण नामरूपविभागेन च भिन्नत्वमिति स्वाभाविकभिन्नाभिन्नत्वमेवेति सिद्धान्तितम् ।

जीवस्य तु ब्रह्मणा सह भेदाभेदसम्बन्धो न सङ्गच्छते । "अन्तोऽनन्तेन तथा हि लिङ्ग" मित्यत्र जीवोऽनन्तेन सह साम्यं प्राप्नोतीति तयोरत्यन्तभेदप्रतीतेरितिशंकानिरासायानन्तरसूत्रारम्भः ।

प्रकाशाश्रययोस्तेजस्त्वादप्यभेदस्तद्वदंशभूतस्य जीवस्यांशिना सह स्वाभाविकौ भेदाभेदौ भवत इति निरूपितम् ।

अहेः कुण्डलवद्ब्रह्मणोऽवस्थाविशेष एव प्रपञ्चश्चेत्तर्हि कृत्स्नप्रसक्तिनिरवयवशब्दव्याकोपादिदोषपूगश्च-प्राप्नोतीति शङ्कानिरासायानन्तरसूत्रारम्भः ।

ब्रह्मणः सर्वान्तःस्थत्वेन सर्वकारणत्वेन च ब्रह्मणः सर्वरूपत्वेऽपि न दोषयोगः । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यत इति श्रुतेः इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

उभयव्यपदेशादितिसूत्रं तदुत्तरसूत्रञ्च पूर्वपक्षत्वेन भेदाभेदपरं श्रीशङ्करपादैर्योजितं तद्व्याख्यानमनूद्य दूषितं तथा विद्वान्नामरूपाद्विमुक्त इति श्रुतिबलात् सत्यस्यापि बन्धस्य ज्ञानान्निवृत्तिः सम्भवति सेतु-दर्शनात्सत्यस्यापि पापस्य नाशः श्रूयते तथा च सत्यस्य वस्तुनो निवृत्तिर्नास्तीति नियमोऽनैकान्तिक इत्युपपादितम् ।

बन्धस्य तुच्छत्वात् कस्य मुक्तये प्रयासविशेषः मुमुक्षोरेवासिद्धेः प्रयोजनासिद्धेश्शास्त्रारम्भो व्यर्थ एव । बन्धत्वं शुद्धब्रह्मगतं मायाशबलगतम्वेति विकल्प्य दूषितम् ।

प्रमाणाभावादप्यज्ञानासिद्धिः । अज्ञानाश्रयस्तद्विषयोऽपि दुर्निरूपः । अज्ञानस्य प्रयोजकासिद्ध्या तदसिद्धि-रित्युपपादितम् ।

विशिष्टाद्वैतसिद्धान्तानुयायिनामस्य सूत्रस्य व्याख्यानं दूषयितुमुपन्यस्तम् । २१७

श्रुतिस्मृतिमहाभारतवचसाऽपि भेदाभेदसिद्धान्तो दृढीकृतः । २२०

७ पराधिकरणम् । ३१–३७ सू०

तदियत्तानवच्छिन्नत्वपोषकं तन्निरतिशयत्वं प्रतिपादयितुमस्याधिकरणस्यारम्भः । ब्रह्मणः परमपि किञ्चित्स-

व्याकोपाच। नच मायावच्छिन्नविषयकैव सार्वज्ञ्यादिश्रुतिः शुद्धे धर्मत्वायोगादिति वाच्यम्। बालभाषितत्वात्। मायावच्छिन्नस्य भ्रान्तस्य सार्वज्ञ्यादियोगमनुन्मत्तः को ब्रूयात्। नच 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति श्रुतिरेव मायित्वं वदतीति वाच्यम्, मायित्वं मायानियन्तृत्वमितिश्रुतेर्विवक्षितत्वात्। तच्च सार्वज्ञ्याद्यचिन्त्यानन्तस्वाभाविकशक्त्याश्रयस्य महाविभूत्याख्यस्य शुद्धस्यैव साधारणो धर्मो नान्यस्य पारिभाषिकशुद्धस्य मायावच्छिन्नस्य वा निर्विशेषस्येक्षणबहुभवनसङ्कल्पाद्यसम्भवात्। मायावच्छिन्नस्य भ्रान्तियोगादिति सङ्क्षेपः। तस्मादचिन्त्यानन्तस्वाभाविकासङ्ख्येयसद्गुणगुणसागरो भगवांच्छ्रीपुरुषोत्तम एव जगतोऽभिन्ननिमित्तोपादानकारणं तत्रैव लक्षणस्य समन्वय इति राद्धान्तः। प्रथम-विषयवाक्यार्थः सूत्रार्थेनैवोक्तः। तत्र पित्रादिष्वतिप्रसक्तेरभिसम्विशन्तीति पदसन्निवेशः। मृदादावतिव्याप्तेः येन जातानि जीवन्ति यत्प्रयन्तीति पदसन्निवेशः। प्रकर्षेण कर्मध्वंसेन यन्ति प्राप्नुवन्तीति मुक्तप्राप्यत्वम्। अभिसंविशन्तीति प्रलयकालीनप्रवेशो विवक्षितः। द्वितीयवाक्यार्थस्तु सत्यत्वज्ञानत्वानन्तत्वाद्यवच्छिन्नं ब्रह्मेति। तत्र सत्यपदमसत्यस्य ज्ञान-पदमचिद्वर्गस्यानन्तपदं जीववर्गस्य व्यावृत्तिपरम्। अनन्तत्वञ्चात्र स्वरूपगुणशक्तिभिर्विवक्षि-तमन्यथा जीवज्ञानेऽतिप्रसङ्गः। नच सत्यादीनामेव गुणत्वान्न सत्यत्वादिपर्यन्तधावनं

---

इयत्तावच्छेदेनानन्ताः परिच्छेदशून्याः स्वाभाविकाः नत्वौपाधिकाः। असङ्ख्येयाः सङ्ख्यातुमशक्याः। सद्गुणानां गणाः परार्द्धानां समूहास्तेषां सागरः। स्वाभाविका इत्यनेनानादित्वविवक्षायां मुक्ता, अन्यानधीनत्वविवक्षायां नित्याश्च व्यावृत्ताः। एतेन गुणानामविद्याकल्पितत्वपक्षव्यावृत्तिरपि ध्वनिता। गुणाश्च ज्ञानशक्तिबलैश्वर्य्यसौ-शील्यवात्सल्यार्जवसौहार्दसर्वशरण्यत्वतेजोवीर्य्यत्वसौम्यकारुण्यस्थिरत्वधैर्य्यदयामाधुर्य्यसौकुमार्य्यसौन्दर्य्यलावण्यमार्दवाद-यः। तेषां बहूनामन्तर्भावाभिप्रायेण गणशब्दोपात्तः। भगवद्गुणानामियत्तावच्छेदेन वाङ्मनसागोचरत्वमिति सूचितम्। सागरशब्देनागाधतलास्पर्शित्वं ध्वनितम्। पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामुत्तरोत्तरगुणेभ्यः पूर्वपूर्वगुणानां माधुर्य्यलावण्यसौकुमार्य्यादीनां सागरतरङ्गवन्नवनवायमानत्वं मुमुक्षोस्तादृशसागरावगाहनमात्रेऽशेषदोषनिवृत्तिपूर्वकं निरतिशयानन्दप्राप्तिश्चेति सूचितम्। भगवान्=षड्विधैश्वर्य्यसम्पन्नः। **श्रीपुरुषोत्तम इति**। श्रिया युक्तः पुरुषोत्तमः श्रीमुकुन्दः श्रीकृष्ण इत्यर्थः। "अतोऽस्मिंल्लोके वेदेच प्रथितः पुरुषोत्तम" इति सर्वविदुक्तेः। तत्रैव=निरुक्त-विशेषणविशिष्टे भगवति पुरुषोत्तमे। **प्रथमविषयवाक्यार्थ इति**। "यतो इमानि भूतानि जायन्त" इति सूत्रविषयवाक्यस्यार्थः। श्रुत्युक्तपदानां प्रयोजनं विवेचयति। **तत्रेति**। यतो इमानीति विषयवाक्य इत्यर्थः। जन्ममात्रस्यैव लक्षणत्वे पित्रादीनामपि पुत्रादिजन्मकारणत्वात्तत्रातिप्रसङ्गवारणायाभिसम्विशन्तीत्युक्तमित्यर्थः। उभयस्यापि लक्षणत्वे मृदादावतिव्याप्तिस्तस्यापि घटादेरुत्पत्तिप्रलययोः कारणत्वस्य प्रसिद्धत्वात्तद्व्यावृत्तयेऽसाधारण-विशेषणद्वयमित्याह। **मृदादाविति**। प्रपदसन्निवेशप्रयोजनं निर्वक्ति। **प्रकर्षेणेति**। वक्ष्यते च मुक्तोपसृप्यत्व-सूत्रेणेतिभावः। पौनरुक्त्यमपाकर्त्तुमाह। **अभिसम्भवतीति**। द्वितीयवाक्यार्थः=सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यस्यार्थः। सत्यादिपदानां व्यावर्त्यं दर्शयति। **तत्र सत्यपदमिति**। 'तत्र'=विषयवाक्ये सत्यादिपदानां भावप्रधाननिर्देशपरत्वमङ्गीकृत्य सत्यत्वमिति प्राग्व्याख्यातं, तत्र सत्यादीनां गुणत्वा-देवोपपत्तौ तद्व्याख्यानमसङ्गतं प्रतिभातीत्याशङ्क्य परिहरति **नचेति**। यदि सत्यादिपदानां स्वरूप-वाचकत्वं न स्यात्तदा ब्रह्मणोऽसत्यादिस्वरूपत्वमापद्येत इत्याह। **सत्यादिपदानामिति**। **अयम्भाव इति**। त्रैविध्यस्वरूपापत्या=सत्यस्वरूपं ज्ञानस्वरूपमनन्तस्वरूपमिति त्रैविध्यस्वरूपापत्या। सत्यादिपदत्रयेणैकं

युक्तं गौरवादिति वाच्यम् । सत्यादिपदानां स्वरूपवाचकत्वाभावेऽसत्यजडपरिच्छिन्नमेव लक्ष्यं ब्रह्मस्वरूपं सत्यादिगुणकं त्वन्मतेऽभ्युपेतं स्यात् । अयम्भावः । त्वन्मते सत्यादिपदं स्वरूपपरं गुणपरं वा ? आद्ये स्वरूपस्य त्रैविध्यापत्याऽद्वैतभङ्गः । सत्यादेरेकार्थत्वे पर्यायतापत्तिः । अन्त्ये तूक्तदोषस्तदवस्थ एव । किञ्च सत्यादेः स्वरूपवाचकत्वे ब्रह्मणो वाक्यगोचरत्वापत्तिस्तथात्वे निर्विषयत्वसिद्धान्तभङ्गः वाक्यागोचरत्वाङ्गीकारेऽप्यनिर्वचनीयत्वापत्तौ मिथ्यात्वापत्तिदुर्वारा तथाच प्रयोगाः-ब्रह्म मिथ्याऽनिर्वचनीयत्वात् यदेवं तदेवं तव मते मायादिवत् । ब्रह्म मिथ्या असत्यत्वस्वरूपत्वात् । तव मते रज्जुसर्पवत्, जडत्वात् परिच्छिन्नत्वाच्च तवाभिमतघटादिवदित्यादयः । तस्मात्सत्यत्वादिगुणकं सत्यादिस्वरूपं ब्रह्मेत्युक्तार्थ एव वरीयान् । कैश्चिदेतद्वाक्यमेवं व्याख्यायते । सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः । नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह तेन कदाचित् सङ्कुचितज्ञानवत्त्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशादिपरिच्छेदशून्यस्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यं तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपगुणा नित्या व्यावृत्ता इति । तन्न

---

स्वरूपं बोध्यत इति नाद्वैतभङ्ग इत्यत्राह । **सत्यादेरिति** । **उक्तदोषइति** । यदि सत्यादिपदानां स्वरूपवाचकत्वं नोररीक्रियते तदा ब्रह्मणोऽसत्वस्वरूपत्वं स्यादित्यर्थः । दोषान्तरमाह **किञ्चेति** । ब्रह्मणो वाक्यगोचरत्वमस्ति नवेत्याशङ्क्याद्यपक्षंनिरसितुमाह । **सत्वादेरिति** । **तथात्व इति** । वाक्यगोचरत्वे । द्वितीयपक्षाभिप्रायेणाह **वाक्यागोचरत्वाङ्गीकार इति** । ततः किमित्यत आह **तथाचेति** । निगमयति **तस्मादिति** । भवदभिमतव्याख्यानस्य दोषग्रस्तत्वादित्यर्थ । "यतो वा इमानि भूतानि जायन्ते" इति कारणवाक्येन प्रतिपन्न जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते । "सत्यं ज्ञानमनन्तं ब्रह्मेति" तस्य व्याख्यानं विशिष्टाद्वैतसिद्धान्तमतरीत्या प्रदर्शयन्नाह । **कैश्चिदेतद्वाक्यमिति** । व्यावृत्तस्वस्वरूपाभिधानमाह । **सत्यपदमिति** । केनापि परिणामविशेषेण तत्तदवस्थस्य सत्ता सोपाधिकसत्ता, अतो निरूपाधिकसत्ता निर्विकारत्वम् । सत्यपदव्यावर्त्यमाह । **तेनेति** । कथमित्यत्राह । **नामान्तरेति** निरुपपदं सत्यपदमसङ्कोचात् स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीत्यचित्-तत्संसृष्टजीवव्यावृत्तः । नन्वेवं परमात्मनोऽपि सत्यत्वं न स्यात् धर्मभूतचिदचितोर्विकारसत्वादिति । मैवं, स्वरूपे वा धर्मभूतज्ञाने वा विकारशून्यस्य तदर्थत्वात् । नन्वेवमपि परमात्मधर्मभूतस्य ज्ञानस्यापि सिसृक्षादिरूपेणासत्वात परमात्मनोऽपि सत्यत्वं न स्यादिति चेन्न । धर्मकृतविकाराभावस्यैव तदर्थत्वात् । ज्ञानशब्दार्थमाह **ज्ञानपदमिति** । इदानीमस्मिन् विषय इत्याद्युपपदरहितं ज्ञानपदमसङ्कुचितत्वं नित्यत्वञ्च दर्शयति नित्यासङ्कुचितज्ञानत्वमेवाकारो यस्य स तन्नित्यासङ्कुचितज्ञानैकाकारम् । तेन ब्रह्मणः कदाचित् क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः । नित्यासङ्कुचितज्ञानत्वमद्वारकं धर्मद्वारकञ्च परमात्मन आकारो भवति "आत्मज्योतिः सम्राडिति होवाच । ब्रह्मणा विपश्चिता विज्ञातारमरे केन विजानीयादि"त्यादिभिः स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात् । ज्ञानपदेन मुक्तव्यावृत्तिसिद्धिमाह । **तेनेति** अनन्तपदस्यार्थमाह । **अनन्तेति** । इहेदम्-नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीम्-नान्यदेति-परिच्छेदायोग्यत्वं कालापरिच्छेदः नतु देशकालाभावौ । एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः किन्तु इदमिदं न भवतीति परिच्छेदानर्हत्वमेव, सर्ववस्तुसामानाधिकरण्यार्हत्वरूपं वस्त्वपरिच्छेद इति यावत् । गुणतोऽप्यानन्त्यमाह । **सगुणत्वादिति** । गुणानां देशकालापरिच्छेदौ विद्येते नतूक्तलक्षणवस्तुपरिच्छेदाभावः । सतु स्वरूपस्यैव ।

विषयः पृष्ठाङ्काः

रुपसंहार इत्येकेन पूर्वपक्षं प्रदर्श्य समाहितं सूत्रद्वयेन २३८

८ सम्भृत्यधिकरणम् । २३ सू०

विषयवाक्यसंशयादिभिरधिकरणरचना २३९

ब्रह्मगुणास्तदीयोपनिषद्विहितासु शाण्डिल्यादिब्रह्मविद्यासूपसंह्रियन्ते उत नोपसंह्रियन्ते इति शङ्का

यथा नामनी नोपसंह्रियेते तद्वत्सम्भृत्यादिगुणजातमपि नोपसंह्रियते इतिसमाधानम् ।

९ पुरुषविद्याधिकरणम् । २४ सू०

पुरुषविद्याभेदं दर्शयन् पुरुषविद्यायां समाख्याविशेषाद्विद्यैक्यमस्त्वित्याशङ्कानिरासायास्याधिकरणस्यारम्भः । २४०

विद्याभेदे सति गुणानामुपसंहार इति समाधानम् ।

१० वेधाद्यधिकरणम् । २५–२६ सू०

यथा सन्निधिपाठात् पुरुषविद्यायाः ब्रह्मविद्याङ्गत्वं तथा वक्ष्यमाणमन्त्राणां कर्मणाञ्च ब्रह्मविद्यासन्निधिपाठात्तदङ्गत्वेन तत्रोपसंहारोऽस्ति न वेति विचारायास्याधिकरणस्यारम्भः । २४२

मन्त्राणां कर्मणाञ्च विद्याङ्गत्वेनोपसंहारो युक्तः, सन्निधिपाठादिति पूर्वपक्षः ।

प्रवर्ग्यादिकर्मणाञ्च सन्निधेर्बलीयसा श्रुत्यादिना ज्योतिष्टोमादौ विनियोगो गम्यते न तु विद्याङ्गत्वेन तेषां तत्रोपसंहार इतिसमाधानोक्तिः ।

११ हान्यधिकरणम् । २६ सू०

यत्र यस्यार्थस्य योगस्तस्य शाखान्तरस्थत्वेऽप्युपसंहारो युक्त इत्यर्थप्रदर्शनायास्याधिकरणस्यारम्भः । २४२

विषयवाक्यसंशयादिभिरधिकरणरचना ।

किं त्यक्तयोः पुण्यपापयोरितरत्र श्रूयमाणमुपायनं ताण्डिनां रहस्ये आथर्वणवाक्येनोपसंह्रियते उत नेति शङ्का । कौषीतकिरहस्ये सुकृतदुष्कृतत्यागवादिवाक्यशेषत्वेन सुकृतदुष्कृतग्रहणवादिवाक्यं श्रूयते तथेहापि विदुषा त्यक्तयोः पुण्यपापयोरन्त्येन ग्रहणमावश्यकमिति समाधानम् ।

१२ साम्परायाधिकरणम् । २७–३१ सू०

पुण्यपापयोर्हानस्य कालचिन्तनायास्याधिकरणस्यारम्भः । २४४

किं विदुषः पुण्यपापयोः कश्चिदंशश्चरमशरीरवियोगवेलायां कश्चिदंशश्च तत्परित्यज्य परंब्रह्मलोकं व्रजतोऽध्वनि क्षीयते अथवा तद्वियोगकाले एव तद्धानमिति शङ्का ।

परलोकगमने शरीरादुत्सर्पणकाल एव विद्वत्पापपुण्यहानिः पुण्येनेष्टस्य पापेनानिष्टस्य च निवर्त्यस्य फलस्य शरीरत्यागादूर्ध्वमविद्यमानत्वादिति समाधानोक्तिः ।

यो हि विदुषां शुभं वाञ्छति तस्य सुकृतापत्तिर्यस्तु द्वेषादहितं सङ्कल्पयति तस्य दुष्कृतावाप्तिरिति शास्त्रादेवावगतमित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः । २४६

सुकृतहानिर्देहवियोगकाले नोपपद्यते अनिष्टत्वादितिशङ्कापनोदायानन्तरसूत्रारम्भः । २४६

केवलात्मनो गतिर्नोपपद्यत इति देवयानगतिश्रुतिर्विरुद्धेतिपूर्वपक्षः तस्य समाधानार्थमुत्तरसूत्रारम्भः ।

विदुषां शरीरत्यागकाले सर्वकर्मक्षयेऽपि देवपन्थ उपपन्नः । प्रक्षीणसुकृतदुष्कृतस्यापि विदुषः आविर्भूतस्वरूपस्याकर्मजन्यदेहादिसम्बन्धलक्षणार्थोपलब्धेरिति समाधानम् ।

विषयः पृष्ठाङ्काः

१३ अनियमाधिकरणम् । ३१ सू०

एवंभूतात्युत्कृष्टा गतिः सर्वेषां ब्रह्मविद्यावताम्, उत येषां विद्याप्रकरणे पठिता तेषामेवेति विचारायास्याधिकरणस्यारम्भः । किमुपकोशलविद्यावतामेव मार्गोऽस्ति किं वा सर्वेषां ब्रह्मविद्यावतामिति शङ्का । येषां विद्याप्रकरणे मार्गः पठ्यते तेषामेवायमिति नियमो नास्ति किन्तु सर्वेषां ब्रह्मविद्यावतां मार्ग इति समाधानम् । २४६

१४ यावदधिकाराधिकरणम् । ३२ सू०

आधिकारिकाणां वशिष्ठादीनां कर्मविशेषेण वेदप्रवर्त्तनादिष्वधिकारेषु वर्त्तमानानां यावदधिकारमवस्थितिरित्यर्थप्रतिपादनायास्याधिकरणस्यारम्भः । २४७

१५ अक्षराधिकरणम् । ३३–३५ सू०

श्रीपुरुषोत्तमस्य गुणा अस्थूलत्वानणुत्वादयो विद्वद्भिः सर्वासु विद्यासु तद्विषयिकासु चिन्तनीया इत्यर्थनिरूपणायास्याधिकरणस्यारम्भः । २४८

ब्रह्मणोऽस्थूलत्वानणुत्वादयो गुणाः बृहदारण्यकाथर्वणपठिताःसर्वासु ब्रह्मविद्यासूपसंहर्त्तव्याः, उत नेति शङ्का । अस्ति प्रयोजनं तस्यापि ब्रह्मविद्यासु प्रतिपत्तृभिश्चिदचिद्विलक्षणं ब्रह्म प्रतिपत्तव्यमिति समाधानोक्तिः ।

सर्वकर्मा सर्वगन्धः सर्वरस इत्यादिश्रुत्युक्तगुणानामपि प्रधानानुवर्तित्वेन सर्वत्रोपसंहार उक्तन्यायेन प्राप्नोतीतिशङ्कानिरासायानन्तरसूत्रारम्भः २४९

अस्थूलत्वादिविशेषितमानन्दाद्येव सर्वत्रानुसन्धेयमिति समाधानम् ।

१६ अन्तरत्वाधिकरणम् । ३५–३७ सू०

अस्थूलत्वादिगुणोपसंहारार्थके पूर्वाधिकरणे तत्वान्तरविलक्षणत्वं वेद्यस्य दर्शितम् । तदाक्ष्यर्थमिदानीं वक्ष्यमाणवाक्यद्वये विद्यैव दर्शयन्नेकस्मिन्नपि वेद्ये तत्वद्वयभ्रान्तिनिराकरणायास्याधिकरणस्यारम्भः । २५०

किमुभयत्र प्रश्नप्रतिवचनयोर्विद्याद्वयपरत्वम्, उत विद्यैक्यपरत्वमिति शङ्का विद्याभेदो नास्ति प्रश्नप्रतिवचनद्वयस्यैकरूपपरमात्मपरत्वादिति समाधानं सप्रमाणं निरूपितम् ।

विद्यैक्यं न भवति पूर्वब्राह्मणे सर्वप्राणिप्राणनहेतुत्वगुणविशिष्टस्य मुख्यान्तरात्मन उषस्तप्रतिपत्तव्यतया भिन्नरूपत्वेन उत्तरब्राह्मणेऽशनायतीतत्वगुणविशिष्टस्य मुख्यान्तरात्मनः कहोलप्रतिपत्तव्यतया भिन्नरूपत्वेन च विद्याभेदसम्भवादिति शङ्कानिराकरणायानन्तरसूत्रारम्भः । २५१

उषस्तस्य या सर्वान्तरस्य ब्रह्मणः प्राणनादिहेतुत्वविषया बुद्धिः सा कहोलेनापि कार्या तथाऽशनायतीतत्वविषया बुद्धिरुषस्तेनापि एवं सति ब्रह्मणो जीवव्यावृत्तिर्निश्चिता भवतीति समाधानम्

प्रश्नप्रतिवचनानुवृत्तिसत्वे सद्विद्यायामप्युपास्यैक्यं कथमवगम्यत इतिशङ्कानिरासाय सूत्रान्तरारम्भः । २५२

प्रथमपर्याये पठिता एव सत्यादयः सर्वे पर्यायेषूपसंह्रियन्तेऽतः सद्विद्यायामुपास्यमेकमेव तस्मादुभयत्र प्रश्नप्रतिवचनयोर्विद्यैक्यपरत्वमितिसमाधानम् ।

१७ कामाधिकरणम् । ३८–४० सू०

एकत्र पठितेन ब्राह्मणद्वयेन प्रतिपादिता विद्या रूपभेदान्न भिद्यते इति किमु वक्तव्यं रूपभेदात् पृथक्ग्रन्थेऽपि श्रूयमाणा विद्या न भिद्यते इत्यर्थप्रतिपादनायास्याधिकरणस्यारम्भः । २५३

पृष्ठाङ्काः

विषयः

विषयवाक्यसंशयादिभिरधिकरणरचना

छान्दोग्ये श्रुतं सत्यकामादिगुणजातमितरत्र वाजसनेयके संग्रहीतव्यं वशित्वादयस्तत्र छान्दोग्ये संग्रही-तव्याः समानं ह्युभयत्र हृदयमायतं सेतुत्वविधारणत्वादि चेत्यर्थप्रदर्शनाय सूत्रान्तरारम्भः ।

उक्तार्थो नोपपद्यते मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चनेतिवाक्यात् प्रतीतस्य निर्विशेषस्य ब्रह्मणो न सत्यकामत्वादयो वशित्वादयश्च पारमार्थिकाः गुणाः अतस्तेषां मोक्षफलासु विद्यासु लोप इतिशङ्का-निरासायानन्तरसूत्रारम्भः । २५३

तद्य इह आत्मानमनुविद्येत्यादिषु सत्यकामत्वादिगुणवत्प्रकृतब्रह्मविदां मुमुक्षूणामपि बुभुक्षुसाधारण-लोकप्राप्तिः श्रूयते एवं सति कर्मनिष्ठातो ज्ञाननिष्ठायाः को वा विशेष इतिशङ्कानिराकरणायानन्तर-सूत्रारम्भः । २५४

सत्यकामत्वादिगुणविशिष्टब्रह्मज्ञाननिष्ठायाः कर्मनिष्ठातो महद्वैलक्षण्यमस्ति तस्माच्छान्दोग्यानां वाज-सनेयिनाञ्च सत्यकामत्वादेर्वशित्वादेश्चेतरेतरोपसंहारेण ब्रह्मविद्यैकैवेति सिद्धान्तितम् ।

## १८ तन्निर्धारणाधिकरणम् । ४१ सू०

साङ्गस्यापि कर्मणोऽनुष्ठितस्य फलात् कर्माङ्गाश्रितायाः विद्यायाः फलस्य श्रेष्ठत्वात् कर्मणो विद्यायाः श्रैष्ठ्यप्रदर्शनायास्याधिकरणस्यारम्भः । २५४

विषयवाक्यसंशयादिभिरधिकरणरचना ।

यथा गोदोहनेन पशुकामस्यापः प्रणयेदित्यत्राप्प्रणयनमाश्रित्य गोदोहनफलं साधयति प्रणयतिशब्दो-पादानसामर्थ्यान्न तत्र गोदोहनस्य कर्माङ्गत्वं तद्वत् कर्मसु कर्माङ्गाश्रयाण्युपासनान्यनियमेनोपसंहार्या-णीति सिद्धान्तितम् ।

## १९ प्रदानाधिकरणम् । ४२ सू०

पूर्वत्र कर्माङ्गाश्रयमुपासनं कर्मसु नियमेनोपसंहार्यमित्युक्तं तत्राङ्गाश्रयमुपासनमङ्गिनिरपेक्ष्यं यथा तथा गुणोपासनं गुणिनिरपेक्ष्यमित्याशङ्कानिरासायास्याधिकरणस्यारम्भः । २५६

गुणवेदने दहराकाशस्य गुणिनस्तत्तद्गुणवत्त्वेन वेद्यत्वमस्ति न वेति शङ्का

प्रदानवद्दहराकाशस्य गुणिनस्तेषां गुणानां चिन्तने तत्तद्गुणविशिष्टत्वेन चिन्तनमावर्तनीयमिति समाहितम् ।

## २० लिङ्गभूयस्त्वाधिकरणम् । ४३–५० सू०

मनश्चिदादयोऽग्नयो विद्यामयक्रत्वङ्गभूता एवेति प्रतिपादनायास्याधिकरणस्यारम्भः । २५७

एते अग्नयः मनश्चिदादयः कर्मप्रकरणपठितत्वात् किं क्रियामयक्रत्वङ्गभूताः आहोस्विद्विद्यामयक्रत्वङ्गभूता इति शङ्का विद्यामयक्रत्वङ्गभूता एव लिङ्गानां भूयस्त्वात् लिङ्गं हि प्रकरणाद्बलीय इतिसमाधानोक्तिः ।

"इष्टकाभिरग्निं चिनुते"इति विहितस्य पूर्वस्यैवाग्नेरयं विकल्पः स्यात्तथा चैषां विद्यामयक्रत्वङ्ग-भूता प्रकरणेन बाध्यते तस्मादेते विद्यारूपा अग्नयः क्रियारूपा एव मानसवदितिपूर्वपक्षपरं सूत्रद्वयम् ।

सिद्धान्तदर्शनायानन्तरसूत्रम् विद्यैवतुनिर्धारणदर्शनाच्च । मनश्चिदादयोऽग्नयः क्रियारूपा न भवन्ति किन्तु विद्यात्मका एव तत्र तेहैतेविद्याचित एवेति निर्द्धारणादिति सिद्धान्तितम् २५८

न खलु प्रकरणेन तेषां विद्यामयक्रत्वङ्गताबाधः श्रुत्यादेः प्रकरणाद्बलीयस्त्वादित्यर्थप्रतिपादनायानन्तर-सूत्रारम्भः ।

विषयः | पृष्ठाङ्काः

"मनसैवाधीयन्ते"इत्यादौ विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्च तेषां न विद्यामयक्रत्वङ्गता युक्तेति शङ्कानिरासायानन्तरसूत्रारम्भः । ।२५९

प्रज्ञान्तराणां शाण्डिल्यादिविद्यानां तत्तदसाधारणैरनुबन्धादिभिः क्रियामयक्रतोर्यथा पृथक्त्वं विद्यान्तरेभ्यस्तद्वदत्रापि, एवं सति विधिः परिकल्प्यत इति समाधानम् ।

मानसवन्मनश्चिदादीनामग्नीनां क्रियामयक्रत्वङ्गत्वमिति प्रागुक्तं दूषयितुमनन्तरसूत्रारम्भः ।

पूर्वोत्तरब्राह्मणयोः केवलविद्याविधानात् तन्मध्यस्थस्यापि ब्राह्मणस्य केवलविद्याविधिपरत्वमित्यर्थंप्रदर्शनायानन्तरसूत्रारम्भः । २६०

## २१ शरीरेभावाधिकरणम् । ५१–५२ सू०

उपासनाकाले तत्फलाधिकारी प्रत्यगात्माऽपि किमाकारोऽनुसन्धेय इत्यर्थप्रदर्शनायानन्तराधिकरणारम्भः ।

तत्रैके बद्धावस्थ एव ज्ञातृत्वाद्याकारमात्रोऽनुसन्धेयस्तदानीं मुक्तावस्थस्यात्मनोऽभावादित्यर्थप्रतिपादनायास्य सूत्रस्यारम्भः । मुक्तावस्थः प्रत्यगात्मा साधनावस्थायामनुसन्धेयः तद्भावभावित्वादिति सिद्धान्तप्रदर्शयानन्तरसूत्रस्यारम्भः ।

## २२ अङ्गवद्धाधिकरणम् । ५३–५४ सू०

आकारविशेषस्यार्थसाधकत्वाद्येन स्वरादिविशेषेण यस्यां शाखायामुद्गीथादयो यदाकाराः पठ्यन्ते तत्तदाकारोद्गीथाद्यालम्बनास्तत्तदाश्रिताः उपासनाः स्युरिति शङ्कानिरासायास्याधिकरणस्यारम्भः । २६१

उदीथाङ्गप्रतिबद्धा उपासना न स्वशाखास्वेव व्यवस्थिता अपि तु प्रतिवेदं सर्वशाखासु सम्बध्यन्त इत्यर्थप्रदर्शनायानन्तरसूत्रम् ।

एकत्रोक्तानामुपासनानामन्यत्रोक्तोद्गीथादिसम्बन्धेऽविरोध मन्त्रादिवच्चेत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## २३ भूमज्यायस्त्वाधिकरणम् । ५५ सू०

पूर्वत्र श्रुत्याऽन्यत्रोक्तानामुपासनानामन्यत्रयोगः उक्तः । अथेदानीं वैश्वानरविद्यायां श्रुत्या व्यस्तोपासनं कुतो नेति शङ्काव्युदासायास्याधिकरणस्यारम्भः । २६३

भूम्नः समग्रोपासनस्यैव ज्यायस्त्वं प्राशस्त्यं न व्यस्तोपासनस्य यतः मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यन्धो भविष्यसि यन्मां नागमिष्ये"इत्यादिका व्यस्तोपासने दोषं ब्रुवन्ती श्रुतिरित्यर्थप्रदर्शनपरमनन्तरसूत्रम् ।

## २४ शब्दभेदाधिकरणम् । ५६ सू०

शाण्डिल्यविद्यादिकासु सर्वासु ब्रह्मविद्यासु विधिश्रुतीनां सत्त्वेऽपि विद्यैक्यं भवत्विति शङ्कानिराकरणायास्याधिकरणस्यारम्भः । २६४

प्राणाद्येकविषयकफलानां सर्वासां ब्रह्मविद्यानां किं समुच्चित्योपासनं कर्त्तव्यम् उत भेदेनेति शङ्का ।

भेदोपासनं कर्त्तव्यं न समुच्चित्य प्रतिप्रकरणमुपासनाविधीनामन्योन्यनिराकाङ्क्षत्वादितिसमर्थितम् ।

## २५ विकल्पाधिकरणम् । ५७–५८ सू०

किमेता ब्रह्मप्राप्तिफलाः शाण्डिल्यविद्याभूमविद्यासद्विद्यादिकाः समुच्चयेनानुष्ठेयाः । किम्वा विकल्पेनेति शङ्काविकल्प इति सिद्धान्तः । २६५

विषयः पृष्ठाङ्काः

## २६ यथाश्रयाश्रयिभावाधिकरणम् । ५९-६४ सू०

क्रत्वङ्गाश्रयाणामपि विद्यानां क्रतुषु यथाकाममुपादानं "तन्निर्धारणानियम" इत्यत्रोक्तमपि पुनर्दृढतया प्रतिपादयितुमङ्गवत्क्रत्वर्थतया क्रतुषु तासां नियमेनोपादानं भवत्वित्याक्षेपपरिहारायास्याधिकरणस्यारम्भः । २६५

कर्माङ्गेषूपाश्रितानां विद्यानां कर्मसु यथाश्रयाभावः यथाकर्माङ्गानामुद्गीथादीनामङ्गत्वं तद्वद्विद्यानामित्यर्थं प्रदर्शनायानन्तरसूत्रारम्भः । २६६

उक्तार्थं साधयितुं हेत्वन्तररूपमुत्तरसूत्रमुपात्तम्

होतृकर्मणः शंसनात्समादधतीत्यनेन समाधानं ब्रुवन्ती श्रुतिर्वेदनस्योपादाननियमं दर्शयतीत्यर्थप्रदर्शनायानन्तरसूत्रम्

विद्याश्रयेणोङ्कारेणायं त्रयीवर्त्तते वेदत्रयीप्रोक्तं कर्म भवतीत्यर्थप्रदर्शकमग्रिमसूत्रम् ।

बहुक्रमुद्गीथादिविद्यानां कर्माङ्गाश्रयाणामङ्गवत्कर्मसु नियमेनोपादानमितिशङ्कापकरणायानन्तरसूत्रोपन्यासः । २६७

हेत्वन्तररूपेणानन्तरसूत्रेणोक्तार्थसाधनम् ।

## इतितृतीयाध्यायस्य तृतीयपादः ।

## विद्यातःपुरुषार्थप्रतिपादकःचतुर्थपादः

### १ पुरुषार्थाधिकरणम् । २० सू०

विद्यायाः स्वातन्त्र्येण फलसाधनत्वे सिद्ध एव तदङ्गकर्मविशेषचिन्तनं युक्तम् । अतो विद्यायाः कर्माङ्गत्वशङ्कानिराकरणायास्याधिकरणस्यारम्भः । २७०

किं विद्यातः पुरुषार्थं उत विद्याङ्गात् कर्मण इति शङ्का, तरतिशोकमात्मविदित्यादिशब्दात् विद्यातः पुरुषार्थ इति समाधानोक्तिः ।

कर्त्तुर्देहादिव्यतिरिक्तात्मज्ञाने सति स्वर्गाद्यर्थकर्मणि प्रवृत्तिसम्भवात् । अतः कर्तृसंस्कारद्वारा विद्यायाः कर्माङ्गत्वमिति पूर्वपक्षप्रदर्शनायानन्तरसूत्रारम्भः ।

श्रुत्यनुग्राहकं जनकादीनां कर्मप्राधान्येनाचारलिङ्गमपिदृश्यत इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

यदेव विद्यया करोतीतिश्रुतिःविद्याकर्माङ्गत्वमाहेति प्रदर्शनायानन्तरसूत्रम् । नचपुनरावर्त्तते इति श्रुतिः अध्ययनवतो गार्हस्थ्याश्रमविहितानि कर्माणि विदधत्यर्थज्ञानं कर्माङ्गत्वेन विनियुङ्क्ते अर्थबोधपर्यन्तमध्ययनमतोब्रह्मविद्यापि कर्मसु विनियुङ्क्तएवेत्यर्थप्रतिपादनायानन्तरसूत्रम् । २७१

कृत्स्नस्य पुरुषायुषस्य कर्मसु नियमेन विनियोगमीशावास्यश्रुतिराहइत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

विद्यात एव पुरुषार्थः नतु विद्यसंस्कृतकर्तृकात् कर्मणः । सर्वेषु वेदान्तेषु कर्मकर्त्तुर्जीवादधिकस्य सकलजगदभिन्ननिमित्तोपादनस्य सकलजीवनियन्तुरपहतपाप्मत्वादिगुणकस्य निरतिशयानन्दरूपस्य परब्रह्मण उपदेशात् । तद्विद्यायाः कर्तृसंस्कारतया क्रत्वर्थत्वायोगादित्यर्थप्रदर्शनाय सिद्धान्तसूत्रारम्भः । २७१

आचारदर्शनन्तु विद्यायाः कर्मानङ्गत्वेऽपि तुल्यम् । किमर्थं वयमध्येष्यामहे किमर्थं वयंयक्ष्यामहे येषां न आत्मेत्यपि दर्शनादित्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । २७२

यदेव विद्ययेति श्रुतिः प्रकृतोद्गीथविद्याविषयानत्वौपनिषदात्मविषयाऽपीत्यर्थप्रदर्शनायानन्तरसूत्रमुपात्तम् । २७२

विषयः पृष्ठाङ्काः

तं विद्याकर्मणी इति श्रुतौ विद्या स्वस्मै फलायान्वारभते कर्म च स्वस्मै फलायेति विभागो द्रष्टव्य इत्यर्थं निरूपणायानन्तरसूत्रम् । २७३

अध्ययनमात्रवतः कर्मविधानात् आचार्यकुलाद्वेदमधीत्येत्यादि श्रुत्यापि न विद्यायाः कर्माङ्गत्वसिद्धिरित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

कुर्वन्नेवेहेति यावज्जीवं कर्मानुवृत्तिनियमेनापि न विद्यायाः कर्माङ्गत्वसिद्धिः । नियमस्य विद्याङ्गकर्मविषयतयाऽप्युपपत्तेरित्यर्थप्रदर्शनपरमुत्तरसूत्रम् ।

विद्यास्तुतये विदुषः कर्मानुमतिः कर्मानुज्ञा क्रियते । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर इति-वाक्यशेषान्नरमत इति नरो निस्सङ्गस्सन्नात्मविदि त्वयि यावज्जीवं यत्किञ्चित्क्रियमाणमपि, न लिप्यते इदं तत्त्वमिति हि विद्यामाहात्म्यस्तुतिरितः प्रतीयते इत्यर्थप्रतिपादनायानन्तरसूत्रम् । २७४

विद्याया यदि कर्माङ्गत्वमभ्युपगतं स्यात्तर्हि तद्विरोधाद् गार्हस्थ्यत्यागविधानानानुपपत्तिरित्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । २७४

अतएव विद्यया कर्मोपमर्दश्चेत्यर्थनिरूपणायाग्रिमसूत्रम्

ऊर्ध्वरेतस्सु आश्रमेषु विद्यादर्शनाच्च तस्याः स्वातन्त्र्यं निश्चीयत इत्यर्थप्रतिपादनायानन्तरसूत्रारम्भः । २७५

"त्रयो धर्मस्कन्धाः" इत्यादौ तेषामाश्रमाणामनुवादमात्रं विधायकशब्दाभावात् । आश्रमान्तरमननुष्ठेयमिति जैमिनिमतप्रदर्शनायानन्तरसूत्रमुपात्तम् ।

आश्रमान्तरमप्यनुष्ठेयमिति सूत्रकारमतं दर्शयितुमनन्तरसूत्रोपादानम् २७६

उक्तवाक्ये आश्रमाणां विधिरेव नानुवाद इत्यर्थप्रदर्शनायानन्तरसूत्राभिधानम्

## २ स्तुतिमात्राधिकरणम् । २१–२२ सू०

उद्गीथादिषु रसतमत्वादिदृष्टिविधानार्थमस्याधिकरणस्यारम्भः । २७८

इदं रसतमत्वादिप्रतिपादनं प्रकृतोद्गीथस्तुत्यर्थमुत तस्मिन् रसतमत्वादिदृष्टिविधानार्थमितिशङ्का ।

उद्गीथादीनां रसतमादिताया मानान्तरेणाप्राप्तत्वात् उद्गीथादिषु रसतमत्वादिदृष्टिविधायकत्वमेवेति समाधानोक्तिः ।

उद्गीथमुपासीतेत्यादिविधिशब्दादप्युक्तार्थस्य निष्पत्तिरित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## ३ पारिप्लवाधिकरणम् । २३–२४ सू०

आख्यानविशेषवाक्यानामन्यविषयत्वमाशङ्क्य विद्यायां समन्वयदर्शयितुमस्याधिकरणस्यारम्भः । २७९

तत्र विषयवाक्यसंशयादिभिरधिकरणरचना ।

पारिप्लवमाचक्षीतेत्युक्त्वा तत्रैव मनुर्वैवस्वतो राजेत्यादिना कासाञ्चिच्छ्रुतीनामेव पारिप्लवपरतया विशेषितत्वादित्यर्थनिरूपणायानन्तरसूत्रम् ।

विद्याप्रकरणगताख्यानानां न पारिप्लवे विनियोग इति तत्तद्विधिभिरेव सम्बन्धस्तथा च तदेकवाक्यताऽप्युपपद्यत इत्यर्थप्रतिपादनायानन्तरसूत्रारम्भः ।

## ४ अग्नीन्धनाद्यधिकरणम् । २५ सू०

ऊर्ध्वरेतस्सु अग्निसाध्यकर्मानपेक्षा विद्येत्यर्थप्रदर्शनायास्याधिकरणस्यारम्भः ।

## ५ सर्वापेक्षाधिकरणम् । २६ सू०

कर्मणां विद्यायां विनियोगदर्शनायास्याधिकरणस्यारम्भः ।

विषयः पृष्ठाङ्काः

विद्यैव परमपुरुषार्थश्चेत्तर्हि सा सर्वथा सर्वाश्रयकर्मनिरपेक्षा उत सर्वापेक्षा इति शङ्का ।

विद्योत्पत्तौ सर्वाण्याश्रमकर्माण्यपेक्षत इति सर्वापेक्षा उत्पन्ना सती तु पुरुषार्थसिद्धौ निरपेक्षेत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## ६ शमदमाद्यधिकरणम् । २७ सू०

विद्योत्पत्तौ यज्ञादिबहिरङ्गसाधनमुक्त्वाथान्तरङ्गसाधनं दर्शयितुमस्याधिकरणस्यारम्भः । २८१

यज्ञादिकर्माण्यपि पापनिर्हरणद्वारेणैकाग्रतामापादयन्तीत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## ७ सर्वान्नानुमत्यधिकरणम् । २८–३१ सू०

शमादीनां विद्याङ्गत्वमुक्त्वेदानीं तद्वत्सर्वान्नभक्षणमपि विद्याङ्गमितिशङ्कानिराकरणायास्याधिकरणस्यारम्भः ।

किमिदं प्राणविदः सर्वान्नभक्षणं शमादिवत्प्राणविद्याङ्गतया स्वस्थावस्थायाम् उत प्राणात्यये ? किन्तावदुक्तं स्वस्थावस्थायामिति पूर्वपक्षः । प्राणात्यये एव सर्वान्नानुमितिरिति सिद्धान्तः ।

विद्योत्पत्त्यर्थमाहारशुद्धिविधानादप्युक्तार्थसिद्धिरित्यर्थप्रतिपादनायानन्तरसूत्रोपादानम् । २८२

प्राणसङ्कट एव सर्वान्नभक्षणं स्मर्यत इत्यर्थदर्शनायानन्तरसूत्रम् ।

प्राणोपासकस्य सर्वान्नानुज्ञानमापद्विषयं भवति । अनापद्विषयमिव तच्छ्रवणन्तु तत्तद्विद्यास्तुत्यर्थं न तु शमादिवत् प्राणविद्याङ्गतया विधीयतइत्यर्थप्रतिपादनाय सूत्रान्तरम् । २८३

## ८ विहितत्वाधिकरणम् । ३२–३५ सू०

अभ्युदयार्थं यज्ञादिकर्माण्यमुमुक्षुणा श्रमिणाप्यनुष्ठेयानि नवेति चिन्तनायास्याधिकरणस्यारम्भः ।

यद्विद्याङ्गतया श्रुत्योक्तं यज्ञदानादिकर्मं तदाश्रयकर्मापि भवति अमुमुक्षुणाचाश्रमकर्मत्वेनाप्यनुष्ठेयम् विहितत्वादिति समाधानोक्तिः ।

विद्योत्पत्तिद्वारा विद्यासहकारित्वेन च यज्ञादेर्विहितत्वाच्च मुमुक्षुणा अपि यज्ञादिकर्मानुष्ठेयमेवेत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

यज्ञादयः प्रत्येकमेकैकरूपाण्याश्रमकर्मतया विद्याङ्गतया चेत्यत्र तत्तच्छब्दैरुपदिश्यते इत्यर्थं प्रतिपादनायानन्तरसूत्रारम्भः । २८४

केवलाश्रमधर्मत्वेनानुष्ठिता यज्ञादयः स्वर्गादिप्रापका भवन्ति । ते विद्याङ्गतयानुष्ठिता विद्यामुत्पादयन्ति अतो विनियोगभेदो नतु कर्मभेद इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## ९ विधुराधिकरणम् । ३६–३९ सू०

येऽन्तराले वर्त्तमानास्तेषां विद्यायामधिकारस्तत्कृतकर्मणां विद्याङ्गत्वसिद्धये विचार इत्यर्थप्रतिपादनायास्याधिकरणस्यारम्भः ।

आश्रममन्तरा वर्त्तमाना ये विधुरादयस्तेषां ब्रह्मविद्यायामधिकारोऽस्ति नवेति शङ्का ।

ब्रह्मविद्यायामधिकारस्यानाश्रमिणां रैक्वसम्वर्त्तादीनां श्रुतौ स्मृतौ च दर्शनात् आश्रमन्तरावर्त्तमानानामपि ब्रह्मविद्यायामधिकारोऽस्तीति समाधानोक्तिः ।

जपादिभिरेवानाश्रमिणामपि सिद्धत्वं स्मर्यत इत्यर्थप्रदर्शकमनन्तरसूत्रम् । २८५

जन्मान्तरीयेणापि साधनविशेषेण विद्यानुग्रह इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

दैवादाश्रमप्रतिपत्त्यसम्भवे जपोपवासदानदेवताराधनाऽहिंसासन्तोषार्जवमहत्सङ्गादिभिरपवर्गन्तु साधयेदेवेत्यर्थप्रदर्शनायानन्तरसूत्रम् । २८६

विषयः | पृष्ठाङ्काः

## १० तद्भूताधिकरणम् । ४०–४३ सू०

नैष्ठिकाश्रमेभ्यः प्रच्युतानामपि विद्याधिकारोऽस्ति नवेति चिन्तनायास्याधिकरणस्यारम्भः ।

विधुरादिवत्तेषामनाश्रमित्वाभावान्नब्रह्मविद्याधिकारः जैमिनेराचार्य्यस्याप्येतत्सम्मतमित्यर्थप्रदर्शनायानन्तरसूत्रम्, प्रतिपन्नाश्रमप्रच्युतौ प्रमादो निमित्तमस्तु पतितस्य च प्रायश्चित्तं पुनर्विद्याधिकारे हेतुरस्त्विति-शङ्कानिरासायानन्तरसूत्रारम्भः ।

नैष्ठिकानां ब्रह्मचर्य्यच्यवने प्रायश्चित्तसम्भवाद्विद्यायामधिकार इति केचनमन्यन्त इत्यर्थपरमग्रिमसूत्रम् ।

ऊर्ध्वरेतस उपपातकित्वे महापातकित्वे चोभयथापि स्वाश्रमप्रच्युतत्वाच्छिष्टैस्ते बहिः कार्याः कुतः आरूढो नैष्ठिकमित्यादिस्मृतेः । इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## ११ स्वाम्यधिकरणम् । ४४–४५ सू०

अङ्गाश्रितमुपासनमृत्विजः कर्मेति दर्शयन्नतदभिमतार्थमनादृत्य तदभिमतोऽर्थ उपादेय इति द्रढयितुमस्याधिकरणस्यारम्भः । २२८

कर्माङ्गाश्रितमुद्गीथाद्युपासनं यजमानस्य स्वामिनः कर्म आहोस्विदृत्विज. इतिशङ्का स्वामिन इत्यात्रेय आचार्यो मन्यत इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

कर्माङ्गाश्रितमुद्गीथाद्युपासनं ऋत्विजा कर्त्तव्यमित्यौडुलोमिराचार्य्यो मन्यत इत्यर्थप्रदर्शनायानन्तरसूत्रम् । २८९

## १२ सहकार्य्यन्तरविद्याधिकरणम् । ४६–४८ सू०

यथा विद्यावतः सहकारिभूताः यज्ञादयः शमादयश्च तद्वद्विद्यावतः सहकार्य्यन्तरं मौनमस्तितद्विषयकविचारायास्याधिकरणस्यारम्भः । २९०

विद्यावतो बाल्यपाण्डित्ययोरपेक्षया तृतीयं मौनं साधनं विधीयत एतदेवाग्रिमसूत्रेण प्रतिपाद्यते ।

यदि सर्वाश्रमविदुषां स्वस्वाश्रमसहकारिणां पाण्डित्यादिसहकारिणी च विद्या ब्रह्मप्राप्तिकेत्युच्यते तर्हि कथं छान्दोग्ये "आचार्य्यकुलाद्वेदमधीत्य" यथाविधानमित्यारभ्य गृहस्थेनोपसंहार इति शङ्कानिरासायानन्तरसूत्रारम्भः ।

गृहिणोपसंहारात्तस्यैव यथोक्तविद्यानुष्ठानाद्ब्रह्मप्राप्तिरिति नाभिप्रेयते अपितु कृत्स्नानां धर्माणां तत्र सत्वात्तेनोपसंहार इति समाहितम् २९१

"अथ भिक्षाचर्य्यं चरन्ती"इति भिक्षाचरणपूर्वकः, अथमुनिरिति मौनोपदेशः सर्वाश्रमधर्मप्रदर्शनार्थं एतदेवाग्रिमसूत्रेणोच्यते । २९२

## १३ अनाविष्काराधिकरणम् । ४९ सू०

बाल्यशब्दार्थप्रदर्शनायास्याधिकरणस्यारम्भः । २९२

श्रवणादिजन्यवैदुष्यायनाविष्कुर्वन्बाल्येन दम्भराहित्येन बुद्धिपूर्वकेन ब्रह्ममननाद्यनुरूपेण स्थातुमिच्छेत् दम्भादिराहित्यस्यैव प्रकृतेऽन्वयसम्भवात् स्वच्छन्दाचरणस्य तु सर्वथाऽनन्वयादित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

## १४ ऐहिकाधिकरणम् । ५० सू०

विद्योत्पत्तिकालचिन्तनायास्याधिकरणस्यारम्भः । २९३

सूत्रकारप्रतिपादितैः साधनैरिहैवजन्मनि विद्योत्पत्तिः उतजन्मान्तरे, इतिशङ्का

विद्योत्पत्तिसाधनसमूहे स्वानुष्ठिते च सति ऐहिकं विद्याजन्मप्रतिबन्धे तादृशकर्मणि प्रस्तुते सति चामुष्मिकमपि उभयथा विद्याजन्मदर्शनात् ।

विषयः | पृष्ठाङ्काः

१५ मुक्तिफलाधिकरणम् । ५१ सू०

प्राप्तविद्यस्यापवर्गार्थिनोऽपवर्गकालप्रदर्शनायास्याधिकरणस्यारम्भः । २१४

प्राप्तविद्यस्य विद्यायाः मुक्तिरूपफलस्यानियमः । असति प्रारब्धे कर्मणि शरीरवियोगानन्तरं विदुषो विद्यायाः मुक्तिरूपं फलं सति च शरीरान्तरवियोगानन्तरमित्यनियम इत्यर्थपरमनन्तरसूत्रम् ।

फलाध्याये तूर्य्ये फलसिद्धिर्दृढैः साधनैरञ्जसा भवेत्तदर्थं साधनावृत्तिरप्रायात्कर्त्तव्या इत्यर्थप्रतिपादनपरस्यः—चतुर्थाध्यायस्य

प्रथमपादः ।

१ आवृत्त्यधिकरणम् । १–२ सू०

ब्रह्मदर्शनाय विधीयमानानि श्रवणादीनि सकृत्कर्त्तव्यानि उतासकृदावर्त्तनीयानीति शङ्का । २१६

असकृद्ब्रह्म दर्शनसाधनावृत्तिः कर्तव्या श्रवणमननोपदेशादितिसमाधानोक्तिः ।

स्मृत्यन्तरेणाप्युक्तार्थः सम्पद्यत इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

२ आत्मत्वोपासनाधिकरणम् । ३ सू०

अनन्तराधिकरणेऽसकृद्वेदनावृत्तिर्दर्शिता सा वेत्तुर्वेद्येनात्यन्तं भेदं द्योतयति तच्छङ्कां तन्निरासायास्याधिकरणस्यारम्भः ।

किं वेद्यं ब्रह्म वेत्तुरनन्यत्वेनानुसन्धेयम् आहोस्विद्वेत्तुरात्मत्वेनेति शङ्का

परमात्मा ममांशभूतस्यात्मांशिरादहञ्च तदात्मकस्तन्निरपेक्षस्थितिप्रवृत्तिरहितत्वात् । यथास्वांशापेक्षया सहस्रांशुः स्वाधीनस्थितिप्रवृत्तिमान् तेषामात्मा ते च तदात्मकास्तदभिन्नमिति समाधानोक्तिः ।

३ प्रतीकाधिकरणम् । ४–५ सू०

प्रतीकोपासने त्वनुसन्धानं न कार्यमित्यर्थप्रदर्शनायास्याधिकरणस्यारम्भः । २१७

किं प्रतीकोपासनेष्वात्मत्वेनानुसन्धानं कार्य्यम्, आहोस्विन्नेतिशङ्का न प्रतीके आत्मत्वानुसन्धानं कर्त्तव्यमिति सिद्धान्तः ।

मनआदौ ब्रह्मदृष्टिर्युक्तैव न तु ब्रह्मणि मनआदिदृष्टिर्ब्रह्मण उत्कर्षादित्यर्थनिरूपणायानन्तरंसूत्रारम्भः ।

४ आदित्यादिमत्यधिकरणम् । ६ सू०

आदित्यादेरुत्कर्षादादित्यादिदृष्टिरुद्गीथादौ कार्येत्यर्थप्रदर्शनायास्याधिकरणस्यारम्भः ।

५ आसीनाधिकरणम् । ७–११ सू०

ब्रह्मदर्शनासाधारणसाधनानुष्ठानमनिमेन कुर्यात् उतासीन एवेति चिन्तनायास्याधिकरणस्यारम्भः । २१८

आसीन एवोपासनं कुर्यान्नतुशयानः निद्रासम्भवाद्गच्छतस्तिष्ठतश्च शरीरधारणादियत्नवशाद्विक्षेपे सत्युपासनं न सम्भवतीत्यर्थप्रदर्शनाय सूत्रान्तरम् ।

निदिध्यासितव्य इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रतावश्यं भाविनीत्यर्थप्रदर्शनायोत्तरसूत्रम् ।

तच्च ध्यानं नैश्चल्यसापेक्षं तदभावे तदसिद्धेरित्यर्थप्रदर्शनायोत्तरसूत्रम् ।

स्मृतिवचनादप्युक्तार्थं साधयितुमुत्तरसूत्रारम्भः । २१९

यत्र चित्तैकाग्र्यं तत्रोपासीतेत्यर्थपरमनन्तरसूत्रम् ।

विषयः | पृष्ठाङ्काः


### ६ अप्रयाणाधिकरणम् । १२ सू०

प्राकृसाधना वृत्तिरसकृत्कर्त्तव्येत्युक्तमिदानीं तत्कालस्य विचारायास्याधिकरणस्यारम्भः ।

ध्यानवेदनादिपदवाच्यमुपासनं किमल्पकाले समापनीयम् । उत देहपातपर्य्यन्तमावर्त्तनीयमिति शङ्का

आमरणान्नैरन्तर्य्येणोपासनमावर्त्तनीयमिति समाधानम् ३००

### ७ तदधिगमाधिकरणम् । १३ सू०

विद्याफलप्रतिबन्धनिवृत्तिं दर्शयितुमस्याधिकरणस्यारम्भः ।

किं प्राप्तविद्यस्योत्तरपूर्वयोः पापकर्मणोरश्लेषविनाशौ उपपद्येते आहोस्विन्नेति शङ्का ।

तथाभूतेन ध्यानपरिपाकेन ध्रुवास्मृत्याख्यज्ञानाधिगमे उत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते एवम्विदि पापं कर्म न श्लिष्यते इत्युत्तराघाश्लेषव्यपदेशादित्यर्थप्रदर्शनायोत्तरसूत्रम् ।

### ८ इतराधिकरणम् । १४ सू०

पुण्यकर्मणामपि निवृत्तिं दर्शयितुमस्याधिकरणस्यारम्भः । ३०१

मुमुक्षोः पापकर्मणो यथा मोक्षविरोधित्वेन हेयत्वव्यपदेशस्तथा पुण्यकर्मणोऽपि व्यपदेश इत्यर्थपरमग्रिमसूत्रम् ।

### ९ अनारब्धकार्याधिकरणम् । १५ सू०

सुकृतदुष्कृतयोर्विद्यया विनाश उक्तः । इदानीमारब्धकार्ययोरपि सुकृतदुष्कृतयोर्विद्यया विनाशो भवत्वित्याशङ्कानिरासायास्याधिकरणस्यारम्भः । ३०२

पूर्वे सुकृतदुष्कृते कर्मणी । अनारब्धकार्ये अप्रवृत्तफल एव विद्यया क्षीयेते नतु प्रवृत्तफले । तस्य तावदेवेति देहपातविलम्बावधित्वश्रवणादित्यर्थाख्यान परमनन्तरसूत्रम् ।

### १० अग्निहोत्राधिकरणम् । १६–१८ सू०

विद्यासामर्थ्यादितरस्याप्येवमसंश्लेष उक्तस्तद्वन्नित्यनैमित्तिकानां स्वाश्रमकर्मणामप्यसंश्लेषः प्राप्नोत्यतस्तान्यननुष्ठेयानीति शङ्कानिरासायास्याधिकरणस्यारम्भः ।

अग्निहोत्रादिनित्यनैमित्तिकं कर्म विदुषा न कर्त्तव्यम्, उत कर्त्तव्यमिति शङ्का ३०३

स्वाश्रमकर्म विदुषा नित्यनैमित्तिकं विद्योत्पत्तिकार्यायैवानुष्ठेयमिति समाधानम् ।

तर्हि तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामितिवाक्यं किं विषयं स्यादित्याशङ्कानिरासायोत्तराधिकरणारम्भः ।

अग्निहोत्रादेरन्यान्यपि विद्याधिगमात् पूर्वोत्तरयोरुभयोरपि कर्मणोः प्रबलकर्मान्तरप्रतिबद्धा साध्वसाधुकृत्याऽस्त्येवेत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

कर्मणः प्रबलत्वदुर्बलत्वसूचनार्थमिदमुच्यते यदेवविद्ययेति, इत्यर्थपरमनन्तरसूत्रम् ।

### ११ इतरक्षपणाधिकरणम् ।

विद्याफलप्रतिबन्धभूतस्यारब्धकार्यस्योभयविधस्य कर्मणः कुतो निवृत्तिः कस्य च देहविशेषस्यपाते मुक्तिरितिशङ्कानिरासायास्याधिकरणस्यारम्भः ।

प्रवृत्तकार्ये पुण्यपापरूपेकर्मणी स्वफलप्रवृत्तभोगेन क्षपयित्वाऽथतत्फलसमाप्त्यनन्तरं ब्रह्म सम्पद्यते । प्रारब्धं कर्म यद्येकशरीरे भोग्यं तर्हि तच्छरीरावसाने मोक्षः । अनेकशरीरभोग्यञ्चेदनेकशरीरावसान इति सिद्धान्तोऽनन्तरसूत्रेण समर्थितः ।

## ब्रह्मप्राप्तये विदुष उत्क्रान्त्यादिनिरूपणे द्वितीयपादे

### १ वागधिकरणम् । १-२ सू०

पृष्ठाङ्काः

विषयः

किमत्र वाग्वृत्तेर्मनसि सम्पत्तिरुच्यते, उत वृत्तिमत्या वाचएवेतिशङ्का वागेव वृत्तिमती मनसि सम्पद्यते — ३०६

वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिदर्शनादित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

वाचमनुसर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते । इन्द्रियैर्मनसि सम्पद्यमानैरितिशब्दाच्चेत्यर्थप्रदर्शनाया-नन्तरसूत्रारम्भः ।

### २ मनोधिकरणम् । ३ सू०

सर्वेन्द्रियसंयुक्तं मनः प्राणेन संयुज्यत इति प्रतिपादनायास्याधिकरणस्यारम्भः । — ३०६

### ३ अध्यक्षाधिकरणम् । ४ सू०

प्राणो जीवेन संयुज्य पुनस्तेन सह तेजसा संयुज्यत इत्यर्थप्रदर्शनायास्याधिकरणस्यारम्भः । — ३०७

प्राणस्तेजसीतिवाक्ये किं प्राणस्तेजसि सम्पद्यते । उतजीवे इतिशङ्का ।

यत्र मनसः सः प्राणः देहेन्द्रियाध्यक्षे जीवे सम्पद्यते तस्यानुगमनप्रतिष्ठानेभ्य इतिसमाधानम् ।

### ४ भूताधिकरणम् । ५-६ सू०

तेजश्शब्देन कस्य ग्रहणमितिचिन्तनायास्याधिकरणस्यारम्भः ।

अध्यक्षसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिर्भवतु सा किं तेजोमात्रे आहोस्वित्तेजःसहितेषु भूतेषु इतिशङ्का

तेजःसहितेषु भूतेषु सम्पद्यते इतिसिद्धान्तः ।

तेजःप्रभृतिष्वेकैकस्मिन्क्रमेण जीवसंयुक्तस्य प्राणस्य सम्पत्तिर्न सम्भवति । अनेन जीवेनात्मनानुप्रवि-श्येतिश्रुत्या एकैकस्यकार्यानर्हत्वदर्शनादित्यर्थप्रदर्शनायानन्तरसूत्रम् ।

### ५ स्मृत्युपक्रमाधिकरणम् । ७-१३ सू०

उक्तप्रकारोत्क्रान्तिर्विद्वदविद्वत्समाना भवति नवेति विचारायास्याधिकरणस्यारम्भः । — ३०८

किमियमुत्क्रान्तिरविदुष एवाहोस्विद्विद्वदविदुषोः समानैवेति शङ्का आसृत्युपक्रमाद्विद्वदविदुषोरुत्क्रान्तिः समानैवेतिसमाधानोक्तिः । — ३०९

उक्तार्थविशदयितुं सूत्रान्तरारम्भः ।

ब्रह्मभावापत्तिरर्चिरादिक्रया सृत्या देशविशेषं गत्वा भवति तदर्वाक्देहसम्बन्धरूपसंसारस्य व्यपदेशादिति-सिद्धान्तितम् ।

विदुषस्तं प्रतिब्रूयादिति चन्द्रमसा सम्वादबोधकं वचनमस्ति तस्मात् प्रमाणात् सूक्ष्मशरीरभावोपलब्धेरि-त्यर्थप्रदर्शनायानन्तरसूत्रम् — ३१०

अथमर्त्योऽमृतोभवतीतिश्रुतिः देहसम्बन्धोपमर्देनामृतत्वं वदतीत्यर्थप्रदर्शनायानन्तरसूत्रम् ।

सूक्ष्मशरीरस्यैवधर्मभूतः स्थूलशरीरे जीवावस्थायामूष्मोपलभ्यते इत्यर्थ निरूपणाय सूत्रान्तरम् ।

यदुक्ता विदुष उत्क्रान्तिः साऽनुपपन्ना "अथाऽकामयमानो" इत्यादिकायाःश्रुतेर्विदुष उत्क्रान्तिप्रतिषेधदर्श-नादिति शङ्का शरीरादयमुत्क्रान्ति प्रतिषेधो न भवति । "अथाकामयमानः"इति प्रकृतं शारीरं तच्छब्देन परामृश्य "नतस्यप्राणा उत्क्रान्तीत्येन वाक्येन शारीराज्जीवात्तेषामुत्क्रान्तिः प्रतिषिद्ध्यते । तस्येतिषष्ठ्या प्राणसम्बन्धित्वेनाप्राकृतस्य शरीरस्य निर्देशाभावात् । तेनप्रद्योतेनैष आत्मेत्यादिना संसारावस्थायां शरी-रारम्भाय शारीरस्य प्राणानामुत्क्रान्तिः प्राप्ता सा निषिद्ध्यते, इत्यर्थ निरूपणायानन्तरसूत्रारम्भः । — ३११

विषयः पृष्ठाङ्काः

स्मृतिप्रमाणेनाप्युक्तार्थंसाधयितुमनन्तरसूत्रारम्भः । ३१२

६ सम्परायाधिकरणम् । १४ सू०

तेजःपरस्यांदेवतायामित्यस्यार्थंप्रदर्शनायास्याधिकरणस्यारम्भः ।

विदुषः सूक्ष्मदेहावयवरूपाणि वागादिप्राणान्तसहितानि भूतसूक्ष्माणि स्वकार्याय यथोपयोगं गच्छन्ति किम्वा परमात्मनि लीयन्त इति शङ्का तानि परस्मिन् सर्वात्मनि ब्रह्मणि सम्पद्यन्ते "तेजः परस्यां देवताया-मितिश्रुतेरिति समाधानोक्तिः ।

७ अविभागाधिकरणम् । १५ सू०

तेषां जगत्कारणे परमात्मनि तादात्म्यापत्तिरूपासम्पत्तिरितिप्रदर्शनायास्याधिकरणस्यारम्भः ।

विद्वत्परित्यक्तसेन्द्रियप्राणसंयुक्तभूतसूक्ष्मसम्पत्तिः किं वागादेर्मनआदाविव संयोगरूपा उतसमुद्रे नद्यादि-सम्पत्तिवत्तादात्म्यरूपेति शङ्का । एवमेवास्यपरिद्रष्टुरिमाः षोडशकलाःपुरुषायणाः पुरुषंप्राप्यास्तं गच्छन्तीति श्रुत्यासर्वकारणे ब्रह्मणि तेषामविभागः तादात्म्यापत्तिरूपासम्पत्तिरितिसमाधानोक्तिः । ३१३

८ तदोकोऽधिकरणम् । १६ सू०

विद्वदुत्क्रान्तौ विशेषप्रदर्शनायास्याधिकरणस्यारम्भः ।

विद्वान् देहादुत्क्रम्य शताधिकतया शतादतिरिक्तयैकशततम्या हृदयादुद्गतया ब्रह्मरन्ध्रप्राप्तया सूर्यरश्मि-भिरेकीभूतया सुषुम्णाख्यनाड्यैवनिष्क्रामति । न च तेन विवेक्तुमशक्या यतोऽयंविद्वान् परमात्माराधन-भूतविद्यया उपासनासामर्थ्यात् विद्याङ्गभूतगतेरतिवाहिकैस्तत्पदप्राप्तेरनुचिन्तनयोगाच्च प्रीतेन हृदिस्थितेन परमात्मनाऽनुकम्पितो भवति । ततश्च प्रकाशिताग्रं भवति तेनहार्देनपरमात्मना प्रकाशितं द्वारं सुषुम्णामूलं यस्मै तादृशो विद्वांस्तां विजानातीति तया तस्यगतिर्युक्तैवेतीत्यर्थंप्रदर्शनायानन्तरसूत्रारम्भः । ३१४

९ रश्म्यनुसार्यधिकरणम् । १७ सू०

विदुष ऊर्ध्वगतौ सूर्यरश्म्यानुसारित्वं नियतमेवेतिप्रदर्शनायास्याधिकरणस्यारम्भः । ३१५

१० निशाधिकरणम् । १८ सू०

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तिप्रदर्शनायास्याधिकरणस्यारम्भः

प्रारब्धकार्यकर्मसम्बन्धस्य यावद्देहभावित्वेन देहपाते सति विनाशसम्भवात् प्रतिबन्धाभावान्निशि मृतस्य विदुषोऽर्चिरादिमार्गेण ब्रह्मप्राप्तिःस्यादित्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

११ दक्षिणायनाधिकरणम् । १९ । २० सू०

दक्षिणायने मृतस्य विदुषः ब्रह्मप्राप्तिचिन्तनायास्याधिकरणस्यारम्भः । ३१६

कर्मसम्बन्धस्य यावद्देहभावित्वादेव दक्षिणायनेऽपिमृतस्य विदुषो ब्रह्मप्राप्तिरिष्टा । भीष्मस्योत्तरायण-प्रतीक्षातु धर्मप्रवर्त्तनार्थं स्वच्छन्दमरणशक्तिज्ञापनार्थंञ्चेत्यर्थंप्रतिपादनायास्यसूत्रस्यारम्भः ।

ब्रह्मनिष्ठानुप्रतिहेयोपादेयतया पितृयानदेवयानाख्यसृतिद्वयं तत्र स्मर्यते न तु विदुषः कालविशेषोनि-यम्यते । इत्यर्थनिरूपणायानन्तरसूत्रारम्भः ।

ब्रह्मप्राप्तये गतिश्चिन्तनपरे तृतीयपादे

१ अर्चिराद्यधिकरणम् । १ सू०

सर्वासु श्रुतिषु सर्वेषामन्यत्रोक्तानां पर्वणामन्यत्रोपसंहारेण सर्वविशेषणविशिष्टोऽर्चिरादिमार्गएक एव प्रति

पृष्ठाङ्काः

विषयः ३१३

पाद्यत इतिप्रदर्शनायास्याधिकरणस्यारम्भः ।

किं परस्परं भिन्नाः मार्गाः श्रुतिभिः प्रतिपाद्यन्त उतार्चिरादि एकएवेतिशङ्का ।

सर्वाभिःश्रुतिभिरर्चिरादिरेक एव मार्गः प्रतिपाद्यत इतिसमाधानोक्तिः ।

वाय्वधिकरणम् । २ सू०

अन्यत्रोक्तानां तदवयवानांसन्निवेशप्रकारनिर्णयायास्याधिकरणस्यारम्भः ।

विषयवाक्यसंशयादिभिरधिकरणरचना । किमर्चिरात्मकादग्नेरनन्तरं वायुं विद्वानुगच्छति उत प्रदर्शितस्थानादब्दादनन्तरमादित्यात्पूर्वमितिशङ्का । अब्दात्सम्वत्सरादनन्तरमादित्यात्पूर्वं वायुं विद्वान्विशति । कुतः ? अविशेषविशेषाभ्यामितिसमाधानम् ।

३ वरुणाधिकरणम् । ३ सू० ३२१

वायोः स्थानानन्तरश्रुतस्य वरुणस्य स्थानप्रदर्शनायास्याधिकरणस्यारम्भः ।

पाठक्रमाद्वायोरुपर्येव युक्तो वरुणोऽश्रुतकल्पनाया अन्याय्यत्वादतिपूर्वपक्षः ।

विद्युद्वरुणयोः सम्बन्धात् तडितोऽधिवरुण इति तडितश्चन्द्रमसो विद्युतमितिश्रुत्या विद्युतोऽप्युपरि वरुण इतिसमाधानम् ।

४ आतिवाहिकाधिकरणम् ।४। ५सू०

विदुषोऽर्चिरादयो यत्कार्यंकुर्वन्ति तच्चिन्तनायास्याधिकरणस्यारम्भः ।

किं ब्रह्मजिगमिषोर्विदुष एतेऽर्चिरादयो मार्गचिन्हभूताः। आहोस्विद्भोगभूमय उतातिवाहिका इतिशङ्का ।

अर्चिरादयःशब्दादस्तभिमानिदेवताविशेषपरा इति सिद्धान्तः ।

तान्वन्वैद्युतात्पुरुषोऽमानव एत्य ब्रह्मलोकं गमयतीति बृहदारण्यके तस्यामानवस्यगमयितृत्वश्रवणात् अर्चिरादिविद्युदन्ताः । नचप्राधान्ये नातिवाहिका वरुणेन्द्रप्रजापतयस्त्रयः सहकारित्वेनोपकारका इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः ।

५ कार्याधिकरणम् । ६।१५ सू०

अर्चिरादिक आतिवाहिको गणः परब्रह्मोपासकान् परब्रह्मात्मकतया प्रकृतिवियुक्तस्वस्वरूपोपासकांश्च परंब्रह्म गमयतीति प्रदर्शनायास्याधिकरणस्यारम्भः । कार्य्यंहिरण्यगर्भाख्यं गमयति तदुपासकान् देशविशेषवर्त्तिनः कार्यस्यैव ब्रह्मणो गन्तव्यत्वोपपत्तेरितिवादरिराचार्यो मन्यत इत्यर्थप्रदर्शनायानन्तरसूत्रारम्भः । ३२५

उक्तार्थं साधयितुं हेत्वन्तररूपं सूत्रान्तरम् ।

परब्रह्मवाचकस्य ब्रह्मशब्दस्य नपुंसकस्य हिरण्यगर्भपरत्वं न सम्भवतीतिशङ्कानिरासायानन्तरसूत्रस्योपादनम्, कार्यब्रह्मलोकनाशे कार्यब्रह्मणा सह कार्यब्रह्मणःपरं प्राप्नोतीत्यर्थप्रदर्शनायोत्तरसूत्रारम्भः ।

स्मृतिवचनेनाप्युक्तार्थंदर्शयितुमनन्तरसूत्रारम्भः ।

आतिवाहिकगणः परब्रह्मोपासीनान् परंब्रह्मगमयतीतिजैमिनिराचार्य्यो मन्यत इत्यर्थपरमुत्तरसूत्रम् ।

"प्रजापतेः सभां वेश्मप्रपद्य"इतिश्रुत्या कार्यब्रह्मपरत्वमेव पूर्वश्रुतस्य ब्रह्मशब्दस्येति चेतिशङ्कानिरासायानन्तरसूत्रारम्भः । ३२७

परब्रह्मविषयकाभिसन्धिः "नामरूपयोर्निर्वहिताते तै यदन्तरा तद्ब्रह्मेति परस्यैवाधिकारादितिसमाधानोक्तिः । ३३०

पक्षद्वयं दर्शयित्वा स्वसिद्धान्तं दर्शयितुमनन्तरसूत्रम् ।

यस्य स्पर्शनमात्रेण ध्रुवः सर्वज्ञतां गतः ॥३॥
श्रीनिवासपदाम्भोजध्यानविध्वस्तकिल्बिषान् ।
श्रीमत्सुन्दरभट्टादीन् वन्देऽहं परमान् गुरून् ॥४॥
श्रीमुकुन्दं गुरुं नत्वा पूर्वाचार्योक्तवर्त्मना ।
ब्रह्मसूत्राणि संक्षेपाद्विव्रियन्ते स्वतुष्टये ॥५॥

इह खलु भगवान्वासुदेवः पुरुषोत्तमः श्रीकृष्णः कणभक्षाक्षपादसाङ्ख्यजैमिन्यादिभिश्शास्त्रकृद्भिर्हिरण्यगर्भपाशुपतसौरगाणपत्यमतवादिभिश्च प्रणीतैः परतत्वापह्नवपरैरन्यविषयैश्शास्त्रैः भ्रान्तान् स्वभक्तिज्ञानहीनान् सङ्कीर्णमतीञ्जीवान्वीक्ष्य तेषु स्वज्ञानभक्ती द्रढयितुं कृष्णद्वैपायनरूपेण परतत्वप्रकाशकं समन्वयाविरोधसाधनफलाध्यायाख्यचतुष्टयात्मकं शारीरकमीमांसाख्यवेदान्तशास्त्रं सूत्रयामास। तस्य व्याख्यानं श्रीसुदर्शनावतारः श्रीनिम्बार्काचार्यो वाक्यार्थरूपेण वेदान्तपारिजातसौरभाख्यं सङ्गृहीतवान् । तदपि श्रीशङ्खावतारः श्रीश्रीनिवासाचार्यो वेदान्तकौस्तुभभाष्यरूपेण विशदयामास, तत्र सौक-

---

श्रीश्रीनिवासाचार्य्यं प्रणमति **श्रीश्रीनिवासेति** । बादरायणसूत्राणां भाष्यकारं श्रीश्रीनिवासाचार्य्यं नमामि स्वावधिकोत्कर्षवत्तया ज्ञापनं नमस्कारः । यस्य शंखावतारस्य श्रीनिवासाचार्यस्य स्पर्शनमात्रेण श्रीदेवर्षिनारदशिष्यः श्रीध्रुव औत्तानपादिः सर्वज्ञतां गतः । श्रीसर्वेश्वरकरगतशंखस्पर्शमात्रेण श्रीध्रुवस्य सर्वज्ञत्वं प्राप्तमिति पुराणे प्रसिद्धम् ॥ परमगुरूनष्टादशान् श्रीसुन्दरभट्टादीन् स्तौति **श्रीनिवासेति** । श्रीनिवासपदाम्भोजध्यानेन विध्वस्तानि किल्बिषानि पापानि येषां तान् श्रीमत्सुन्दरभट्टादीन् परमान् गुरुनहं बन्दे स्तौमि ॥४॥

स्वगुरुं प्रणमति **श्रीमुकुन्दमिति** । श्रीमुकुन्दं गुरुं नत्वा पूर्वाचार्य्यैः श्रीनिम्बादित्यश्रीनिवासाचार्य्यप्रभृतिभिरुक्तं वर्त्म मार्गस्तेन । स्वतुष्टये स्वेषां वैष्णवानां या तुष्टिः सन्तोषस्तदर्थं संक्षेपेण ब्रह्मसूत्राणि विव्रियन्ते विवरणं क्रियते तेषां मयेत्यर्थः ॥५॥

भगवान्वासुदेवः कृष्णद्वैपायनरूपेण शारीरकमीमांसाख्यवेदान्तशास्त्रं सूत्रयामासेत्यन्वयः । भगवान् = "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥" इति पराशरोक्तषड्गुणाश्रयः । भगवच्छब्दस्यान्यत्र वृत्तिं व्यावर्त्तयितुं विशिनष्टि । **वासुदेव इति** । कृष्णशब्दार्थः प्राक्व्याख्योक्तदिशावसेयः । अवतार प्रयोजनमाह—**कणभक्षेत्यादिना** । कणभक्षाक्षचरणप्रभृतीनां सिद्धान्तस्याग्रे दूष्यत्वात्तन्नाम्नो निर्देशः कृतः । **शारीरकेति** । शारीरकस्य मीमांसा । शारीरकश्च शरीरे भवाः शारीराः प्रत्यगात्मानस्तेषां क आनन्दरूप आत्मा परब्रह्माख्यः श्रीपुरुषोत्तमः । यद्वा शारीराणां क आनन्दो मोक्षलक्षणो यस्मात् स शारीरकः "कं ब्रह्म एव आनन्दयती" ति श्रुतेः, तस्य मीमांसेति विग्रहः, सा एवाख्या यस्य तत्तथोक्तम्, तच्च वेदान्तशास्त्रमित्यर्थः । एतस्य ग्रन्थस्य प्रवृत्ति-

र्येण प्रवेशाय मिताक्षरा वेदान्तकौस्तुभप्रभाख्या सूत्रवृत्तिर्मया संगृह्यते ।

## अथातो ब्रह्मजिज्ञासा १ । १ । १

### अथशब्दार्थनिर्वचनम्

अत्रानन्तर्य्यार्थक एवाथशब्दः नार्थान्तरपरः, उपक्रमवाक्यत्वात् । पूर्वनिर्वचनाद् व्याख्यान्तरकथनमर्थान्तरम् । यथा माया रमाया धवः स्वामी माधवः, अथवा मधुवंशे भवो माधव इति । स चात्र न सम्भवति, पूर्वनिर्वचनाभावात् । नापि मङ्गलार्थको, वेदान्तानां भगवत्स्वरूपगुणादिप्रतिपादनपरतया सर्वेषामपि वाक्यपदवर्णमात्राणां मङ्गलरूपत्वेन मङ्गलान्तरनिरपेक्षत्वात् । नाप्यधिकारपरः, शब्दादिब्रह्मणोऽधिकार्यत्वाभावात् ।

नाप्यारम्भपरो, वेदान्तानामनादित्वाभ्युपगमात् । अन्यथौपचारिकत्वापत्त्याऽप्राधान्यप्रसंगात् । अतः परिशेषादानन्तर्य्यार्थक एवेति । श्रीसुन्दरभट्टपादैरेवमेवोक्तेः । आनन्तर्य्यमपि केवलानन्तर्य्यमेव ग्राह्यम्, न तु हेतुभूतानन्तर्य्यमतश्शब्दोपादानात् । एवञ्च सति धर्मजिज्ञासायां यथा वेदाध्ययनं पूर्ववृत्तमपेक्षितम् । तत्र

---

प्रकारं व्यनक्ति—**तस्येति** । शारीरकमीमांसाशास्त्रस्येत्यर्थः । तत्स्वरूपं दर्शयति तच्छक्तिज्ञापनाय—**सुदर्शनावतार** इति । तस्य मङ्गलरूपं नामधेयमाह—**निम्बार्काचार्य्य इति** ।

अथातो ब्रह्मजिज्ञासेति सूत्रार्थं व्याचिख्यासुः अथशब्दं व्याचष्टे—**अत्रेति** । आदिमसूत्र इति तदर्थः । एवकारव्यवच्छेद्यं स्पष्टयति—**नार्थान्तरपर** इति । तत्र हेतुमाह—**उपक्रमेति** । उपक्रमः=प्रारम्भः । अर्थान्तरशब्दं विवृणोति—**पूर्वेति** । एकार्थनिर्वचनानन्तरमर्थान्तरनिर्वचनार्थकाथशब्दार्थमुदाहरति—**यथेति** । पूर्वं माधवशब्देन रमापतित्वं निर्वाचितम्, ततो मधुवंशोद्भवत्वं माधवशब्दस्यार्थान्तरं मध्ये निविष्टोऽथशब्दो ब्रूते । **स चेति** । पूर्वनिर्वचनाद् व्याख्यान्तरकथनार्थकाथशब्द इत्यर्थः । तत्र हेतुमाह—**पूर्वेति** । शास्त्रारम्भे शिष्टाचारप्राप्तत्वादराध्यं मङ्गलं, तच्चाथशब्देनोच्यत इत्याशङ्क्य परिहरति—**नापीति** । नाथशब्दार्थो मङ्गलम्, अपितु तच्छ्रवणमुच्चारणञ्च मङ्गलम् शंखवीणानादश्रवणवदिति भावः । पातञ्जलमहाभाष्येऽथशब्दानुशासनमित्युपक्रमेऽथशब्दस्याधिकारार्थत्वमङ्गीकृतम्, तद्वदत्रापि स्यादत आह—**नापीति** । शब्दानुशासनोपक्रमे त्वन्यार्थस्याघटमानत्वादगत्याऽधिकारार्थत्वं स्वीकृतम् । अत्र तु प्रयोजनवदर्थान्तरसम्भवान्नाधिकारार्थता । अथ शब्दस्यानन्तर्य्यार्थकत्वे प्रयोजनं स्वयमेव वक्ष्यत इत्याशयः । अथ योगानुशासनमिति सूत्रे यथा अथ शब्द आरम्भार्थको योगशास्त्रमारभ्यत इति तदर्थस्तद्वदत्रापि किं न स्यादित्याशङ्क्य परिहरति—**नापीति** । तत्र हेतुमाह—**वेदान्तानामिति** ।

विपक्षे बाधकतर्कमाह—**अन्यथेति** । वेदान्तानां सादित्व इत्यर्थः । उपचारश्च सादृश्यसम्बन्धेन प्रवृत्तिस्तथा च वेदान्तानां चेत् सादित्वं स्यात्तदा गौर्वाहीक इत्यादिवदौपचारिकत्वं स्याद्, तथा सति मुख्यार्थबाधे गौणत्वं वेदान्तानां प्रसज्येत । वक्ष्यति चोपरिष्टाद्भगवान्सूत्रकारः । "**अतएव च नित्यत्व**" मित्यत्र तेषां नित्यत्वमिति भावः । प्रागुदाहृतेषु यत्परिशिष्टं तदेव प्रकृतेऽथशब्दार्थ इत्याह—**अतः परिशेषादिति** । उक्तार्थानां प्रागुपदर्शितप्रकारेणासम्भवादेवेत्यर्थः । **परिशेषादिति** । अथशब्द आनन्तर्यार्थकः । आनन्तर्यभिन्नार्थकत्वाभाववत्वे सति सार्थकत्वादिति परिशेषानुमानमनुसन्धेयम् । उक्तार्थमाचार्य्यपादवचसा दृढयति—**श्रीसुन्दरभट्टपादैरिति** । अथशब्दोपस्थाप्यं पूर्ववृत्तं तस्य कारणत्वमपि वस्तुसामर्थ्येन सिध्यत्येवातश्शब्दोपादानं निष्प्रयोजनकमित्यत आह—**आनन्तर्यमपीति** । स्वाध्यायोऽध्येतव्य इति । अष्टवर्षं ब्राह्मणमुपनयीत इत्यध्ययनविधिना "**अथातो धर्मजिज्ञासे**" ति सूत्रेऽथशब्दार्थः

मुमुक्षुर्भूत्वा ऽऽत्मन्येवात्मानं पश्येदितिश्रुते तथा ब्रह्मजिज्ञासायामपि नियमविधिना पूर्व-वृत्तमपेक्षितम्। मुमुक्षेति विज्ञेयम्। मुमुक्षासिद्धये श्रद्धोपपत्तिपूर्वकगुरूपसत्तिवस्तुयाथात्म्य-विवेकविरागभगवत्प्रपत्तितदनुग्रहप्रार्थनादिसाधनानीति । 'श्रद्धान्वितो भव ।' 'आचार्यदेवो भव' 'स गुरुमेवाभिगच्छेत्' । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' । 'यो वै भूमा तदमृतं ततोऽन्यदार्तम्' । 'नास्त्यकृतः कृतेन' 'प्लवा ह्येते अदृढा यज्ञ-रूपाः' । 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्', मुमुक्षुर्वै 'शरणमहं प्रपद्ये ।' श्रीकृष्णरुक्मिणी

---

पूर्ववृत्तं वेदाध्ययनं यथोच्यते तथात्रापि पूर्ववृत्तमपेक्षितमित्याह—**एवञ्चेति** । अथ शब्दस्यानन्तर्य्यार्थकत्वे सिद्धे· चेत्यर्थः । किन्तद्वस्तु यदनन्तरं ब्रह्मजिज्ञासा विधीयत इत्यपेक्षायामाह–**तत्रेति** । आनन्तर्य्यजिज्ञासायामिति तदर्थः । मुमुक्षानन्तर्य्यं दर्शयितुं श्रुतिं तावत्पठति–**मुमुक्षुरिति** । मुमुक्षायाः साधनानि निर्दिशति–**श्रद्धोपपत्तिरिति** । आचार्य्यशास्त्रोक्तवाक्यार्थे इदमित्थमेवेत्यास्तिक्यबुद्धिः श्रद्धा, नैतावत्वमपि तु उपपत्तिः, उपपन्नस्तत्परः शास्त्राभ्यासे तद्विरोधिनिरासे च सदोद्युक्त इति यावत्। तदुक्तं श्रीमद्भगवद्गीतायाम् "श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रिय" इति ।

उपसत्तिः—गुरुसमीपे गमनम्। **वस्त्विति** । वस्तुनः याथात्म्यविवेको नाम तद्वति तत्प्रकारकज्ञानम् । विरागः–प्रापञ्चिकपदार्थेष्वनासक्तिः । भगवत्प्रपत्तिः–भगवतः षड्गुणसम्पन्नस्यैव प्रपत्तिः प्रपत्तव्यस्य माधवस्याधारणप्रसादहेतुः प्रपत्तिरेवेति निश्चयेन रक्ष्यमाणस्स्यात्मनोऽहंममत्वस्वाम्यादीनां भारस्य श्रीभगवत्यर्पणमात्मनिक्षेपः स च पुरुषोत्तम-स्यैवोचितो नान्यदेवस्येतिभावः । **तदनुग्रहेति**। तस्य भगवतः श्रीकृष्णस्यानुग्रहः कृपा तस्य प्रार्थना। मामुद्धर जग· द्गुरोरित्यादिवक्ष्यमाणरीत्येत्यर्थः । आदिना शमदमादिपरिग्रहः । उक्तमर्थं क्रमशः श्रुतिप्रमाणेन द्रढयति—**श्रद्धान्वित इति** । आस्तिक्यबुद्धिसम्पन्न इत्यर्थः । स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवति । **आचार्य्येति** । आचार्य्यः देव उपास्य भगवत्स्वरूपादिद्योतको वा यस्य सः । **स गुरुमिति** । तद्विज्ञानार्थं ब्रह्मणः स्वरूपगुणादि-विषयकज्ञानार्थं साक्षात्कारानुभवार्थं स मुमुक्षुः गुरुम्, वेदान्तार्थावगाहिनं ब्रह्मस्वरूपगुणाद्यनुभवपरिपूर्णमनस्कम् । अभिगच्छेत् । गुरुदेवयोर्भक्तेः साम्यमुपदिशति । **यस्येति** । गुरूपसत्तौ प्रमाणं प्रदर्श्य सम्प्रति वस्तुयाथात्म्यविवेकं प्रमाणेन द्रढयति । **योभूमेति** । भूमशब्दो हि वहुत्ववाची वहुत्वञ्चात्र वैपुल्यम् । तथाच नाल्पे सुखं विद्यते किन्तु भूमैव सुखं तस्माद्भूमात्वेव विजिज्ञासितव्यः । निरतिशयवैपुल्यविशिष्टसुखप्राप्तिकामेन मुमुक्षुणा भूमा, निरुक्तार्थकः परमात्मैव विजिज्ञासितव्य इत्यर्थः । **ततोऽन्यदार्तम्** । अस्मात् परमात्मनो यदन्यत् प्राणिजातं तद् दुःखीत्यर्थः । ब्रह्म· व्यतिरिक्तसर्वस्य प्रपञ्चस्य दुःखसाधनत्वेन दुःखरूपत्वं निश्चित्य ततो विरज्येत इति निर्वेद उक्तश्रुत्याऽभिहितः । न च कर्मणां साक्षान्मोक्षौपयिकत्वमिति श्रुतिमुखेन दर्शयति । **नास्त्यकृत इति** । अकृतः–नित्यः, कृतेन, कर्मणा न सिद्ध्यतीत्यर्थः । प्रत्युत कर्मणामनिष्टहेतुत्वमेवेत्याह । **प्लवा ह्येत इति** । देवतोद्देशेन द्रव्यत्यागो यज्ञः । दानादेरुपलक्षणमिदं, ततश्चैते यज्ञदानतपोरूपाः प्लवाः नदीतरणोपायविशेषाः । 'उडुपन्तु प्लवः कोल, इत्यभिधानात् । अदृढाः–यथा अदृढैः प्लवैः महानद्यादितरणं कुर्वतामिष्टसिद्धिर्न भवति किन्त्वनर्थ एव तद्वदित्यर्थः । अस्याश्श्रुतेः परभागस्तु "एतच्छ्रेयोऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवोपयान्तीति" कर्मफलस्य क्षयित्वं श्रुतिमुखेन दर्शयति । **तद्यथेति** । कर्मणा चितः सम्पादितः । लोक्यत इति लोकः फलं, यथा इह क्षीयते एवमेवामुत्र पुण्यचितः, अमुत्र = परलोके पुण्येन सम्पादितः फलं नश्यतीत्यर्थः । मुमुक्षासाधनं वैराग्यं प्रमाणेन द्रढयति–**परीक्ष्येति** । ब्राह्मणः = ब्रह्मज्ञानयोग्यः । कर्मचितान् = कर्मसम्पादितान्, लोकान् परीक्ष्य = असारानित्यतया विचार्य्य । निर्वेदं = वैराग्यम् । आयात् = प्राप्नुयादित्यर्थः । भगवत्प्रतिपत्तौ श्रुतिमानं दर्शयति । **मुमुक्षुरिति** ।

कान्त गोपीजनमनोहर। संसारसागरे मग्नं मामुद्धर जगद्गुरो इत्यादि श्रुतिभ्यः। वेदाध्ययनधर्मजिज्ञासानित्यनैमित्तिकादीनां विवेकादिसम्पत्यर्थकत्वान्न स्वातन्त्र्येण पूर्ववर्तित्वम्। तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेतिश्रुतेः। यस्य विवेकादयो न सन्ति तस्य तदर्थं धर्मजिज्ञासाद्यपेक्षाऽन्यथा धर्मस्वरूपज्ञानाभावे धर्मानुष्ठानानुपपत्तिः, धर्मानुष्ठानादिकं विना च बुद्धिशुद्धयभावेन विवेकादीनां दुर्घटत्वात्।

यस्य विवेकादयो जातास्तस्य न तदपेक्षा, फलप्राप्तौ सत्यां साधनानामप्रयोजकत्वात् तत्र प्रवृत्त्यनुपपत्तेश्च। विवेकादिना तु जन्मान्तरीयधर्माचरणस्येदानीमपि संस्कारात्मना सत्वमनुमीयते। अन्यथा विवेकादयो न स्युः कारणाभावे कार्याभावनियमात्। एवञ्च धर्मजिज्ञासाविषयीभूतधर्मस्वरूपतत्साधनतदनुष्ठानप्रकारतत्फलविषयकज्ञानानन्तरमितिपूर्वाचार्योक्तौ कर्मणां तज्ज्ञानादेश्च परम्परयैव साधनत्वाभ्युपगमात्। अत्रापि तेषां विवेकादिकारणत्वमेवोक्तं नतु कर्मविवेकादिसमुच्चयोऽतो नाचार्योक्तिविरोध इति भावः।

---

तदनुग्रहप्रार्थनां दर्शयति–**श्रीकृष्ण इति**। वेदाध्ययन-धर्मजिज्ञासा-नित्यनैमित्तिकादीनां कर्मणां विवेकादिसम्पत्तावेवोपयोगो नतु ब्रह्मजिज्ञासायाः प्राक् स्वातन्त्र्येण तेषां पूर्ववृत्तित्वमपेक्ष्यत इति फलितार्थमाह–**वेदाध्ययनेति**। **स्वातन्त्र्येणेति**। वेदाध्ययनप्रभृतिकर्मणां विवेकादिद्वारा मुमुक्षायामुपयोगस्तद्द्वारमुखेन तेषां ब्रह्मजिज्ञासायां पूर्ववृत्तित्वमित्यर्थः। उक्तार्थं श्रुतिमुखेन द्रढयति। **तमेतमिति,** विविदिषन्ति=वेदितुमिच्छन्ति नतु विदन्ति, वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यं गौणमुख्ययोरिति न्यायेन तत्रैव यज्ञादीनां करणानामन्वयः। तथाच, तमेतं निखिलजगत्कारणं परमात्मानं यज्ञेन देवतोद्देश्यकद्रव्यत्यागेन, दानं नाम न्यायार्जितस्य धनादेर्देशे काले पात्रे प्रतिपादनं तेन। तपोऽत्र श्रीमद्भगवद्गीतोक्तं ग्राह्यम् तथाहि—"देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते। अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते। मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत् तपो मानसमुच्यते"। तेन। **अनाशकेन**=अनशनव्रतेन। वेदानुवचनमिति तु दृष्टान्तार्थम्, वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधानम्। ब्राह्मणा वेदितुमिच्छन्तीति श्रुत्यर्थः।

विवेकादिसाधनहीनस्य पुंसस्तदुपपत्तये धर्मजिज्ञासा–तत्स्वरूप–तत्साधन-तदनुष्ठानादीनामपेक्षा जायते। इतरथा तस्य विवेकादयो नोत्पद्येरन्। यस्य तु स्वतएव विवेकादयस्सन्ति तस्य न धर्मजिज्ञासादीनामपेक्षा, फलावाप्तये साधनेषु प्रवृत्तेर्दृष्टचरत्वात्। इदमेवार्थमनुवदति। **यस्येत्यादिना**। तस्य–पुंसः, तत्र–साधने। प्रागभवीयधर्माचरणस्य सत्वं विवेकादिसाधनजातेनानुमातुं शक्यत इत्याह। **विवेकादिनात्विति**। अत्र बाधकतर्कमाह। **अन्यथेति**। धर्माचरणस्य संस्कारात्मना सत्वानभ्युपगम इति तदर्थः। स्वोक्तौ पूर्वाचार्यवचसा समं विरोधं निरस्यति–**एवञ्चेत्यादिना**। ब्रह्मजिज्ञासायां मुमुक्षानन्तर्यसिद्धावित्यर्थः। प्रकारः–हस्तक्रियादिः।

**परम्परयैवेति**। कर्म–तज्ज्ञान–तदनुष्ठानेन वैराग्यविवेकौ जायेते ताभ्याञ्च मुमुक्षा सम्पद्यते ततो ब्रह्मजिज्ञासोदेति इति पारम्पर्येणैव ब्रह्मजिज्ञासायां कर्मतज्ज्ञानादीनामुपयोग इत्यर्थः। प्रकृते योजयति। **अत्रापीति**। आनन्तर्यार्थप्रस्तावे। तेषां=कर्मतज्ज्ञानादीनाम्। **नतुकर्मेति**। नहि विवेकादिमतः पुंसोऽपवर्गार्थिकर्त्तव्यतया कर्माणि विहितानि येन तत्समुच्चयस्स्यादित्यर्थः।

अतश्शब्दो हेत्वर्थः । अत उक्तश्रुतेः, 'आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति स्मृतेश्च—कर्मफलसान्तत्वसातिशयत्वनिश्चयात् । ब्रह्मज्ञानस्य च—तमेव विदित्वाऽतिमृत्युमेतीत्यादिश्रुतेर्निरतिशयानन्तफलकत्वनिश्चयाद्धेतोर्मुमुक्षानन्तरं ब्रह्मजिज्ञासा कर्त्तव्येत्यध्याहृतविध्यर्थकपदेनान्वयः । ब्रह्मजिज्ञासेति कर्मषष्ठ्या समासः । कृद्योगा च षष्ठी समस्यत इत्युक्तेः । न शेषषष्ठ्या, सन्प्रत्ययवाच्याया इच्छाया ज्ञानकर्मकत्वात् । ज्ञानस्य च ब्रह्मकर्मकत्वात् । तत्र सकर्मकक्रियायाः कर्मज्ञानं विना ज्ञातुमशक्यत्वात् प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं न शेषः ।

अतएव न चतुर्थ्यपि जिज्ञासापदे इच्छाया मुख्यार्थत्वात् तस्याश्च प्रथमं कर्मापेक्षितं पश्चात् फलं ततश्चादौ कर्मज्ञानार्थे षष्ठीसमासो युक्तः । ब्रह्मशब्देन च "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् । व्यूहाङ्गिनं ब्रह्मपरं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरि, मित्युक्तेः श्रीकृष्ण एवात्राभिधीयते, तस्य "भगवानिति शब्दोऽय-

---

एतावताऽथशब्दार्थः प्रदर्शितः, सम्प्रति अतःपदार्थं व्याचष्टे **अतश्शब्द इति** । अत इति हेतुनिर्देश इत्याह—**हेत्वर्थ** इति । तदर्थं स्फोरयति—**अत इति** । उक्तश्रुतेः"तद्यथेह कर्मचितो लोकः क्षीयते" इति प्रागुदाहृताया इत्यर्थः । कर्मफलस्य क्षयित्वं श्रुतिमुखेनाभिधाय श्रीमुखवचनेनापि तद् दर्शयति । **आब्रह्मेति** । विविधकर्मानुष्ठानाद् ब्रह्मलोकपर्य्यन्तं प्राप्ता अपि पुनरावर्तन्त इति तदर्थः । सान्तत्वं=नाम ध्वंसाभावप्रतियोगित्वम्, सातिशयत्वञ्चातिशयेन ज्ञानफलेन साहित्यं ज्ञानफलान्मोक्षादत्यन्तन्यूनमिति । तयोर्निश्चयादिति विग्रहः । उक्तसातिशयत्वं व्याख्यास्यन् हेत्वन्तरमाह । **ब्रह्मज्ञानस्येति** । उक्तार्थे श्रुतिं प्रमाणयति-**तमेवेति** । तं=परमात्मानं विदित्वा=साक्षात्कारंकृत्वा, अतिमृत्युं=मोक्षमेति, प्राप्नोति, अयनाय=मोक्षमार्गायईश्वराराधनोत्पन्नज्ञानोपलब्धात्मसाक्षात्कारंविनाऽन्यः पन्था न विद्यत इत्यर्थः । मूलविषयवाक्यानुकूल्येनैव सूत्रार्थो व्याख्येय इति विषयवाक्ये विध्यर्थकपदसत्वात् सूत्रेऽपि विध्यर्थककर्त्तव्यपदमध्याहृत्य सूत्रं योजयति **मुमुक्षानन्तरमिति** । यतः कर्मणां फलमनित्यं ज्ञानफलकमोक्षादतिनिकृष्टमिति श्रुतिस्मृतिद्वारा निश्चित्य ब्रह्मजिज्ञासा कर्त्तव्येत्यर्थः । ब्रह्मजिज्ञासापदस्य समासार्थं निरूपयितुमाह—**ब्रह्मजिज्ञासेति** । 'नज्ञु ज्ञोऽविदर्थस्ये' त्यनेन षष्ठीसमासनिषेधोऽवेदनार्थकजानातेः कृद्योगः क्वचित् सन्नपि तत्र करणषष्ठीमनपेक्ष्य सर्पिषो जानीत इत्युदाहरणादित्यत निषेधस्य सङ्कोचमाह । **कृद्योगेति** । विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयानिति न्यायमनुसृत्य कृद्योगषष्ठीसमासोऽभिहितः शेषषष्ठ्यान्तु कर्मत्वबुद्धेः विलम्बेनोपस्थितत्वापत्तेः । नच कर्तृकर्मणोरर्थयोर्लाक्षणिकत्वान्न झटिति बुद्ध्यारोहणं भवितुमर्हतीति वाच्यम् । कर्त्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात् । कर्मार्थस्य प्राथमिकोपस्थितत्वात् द्रुतमेव बुद्ध्यारोहणाच्चेत्याशयेनाह । **न शेषषष्ठ्या इति**।

अतएव=प्रथमापेक्षितत्वादेव । तदेवोपपादयति । **जिज्ञासापद इति** । तस्याः=इच्छायाः, ततः=कर्मापेक्षितत्वादेव । आद्याचार्य्योक्तं ब्रह्मशब्दार्थं व्याचष्टे । **ब्रह्मशब्देनेति** । ब्रह्मशब्देन श्रीकृष्ण एवाभिधीयत इति योजना । अस्य श्लोकस्य व्याख्यानन्तु श्रीपुरुषोत्तमाचार्य्यप्रणीतवेदान्तरत्नमञ्जूषायां द्रष्टव्यम् । उक्तार्थं श्रीपराशरवचसा द्रढयति । **तस्येत्यादिना** । तस्य=श्रीकृष्णस्य । ब्रह्मशब्दार्थं निरुच्य जिज्ञासापदं विवृणोति । **तद्विषयकेति** । ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्त्या ज्ञानविषयिणीच्छा तत्र विषयवैलक्षण्याधीनाया इच्छायाः कर्मभूतज्ञानस्यैव विधानार्हतामाह । **तथाभूतेष्यमाण इति** । अस्य सूत्रस्य विषयवाक्यमुदाहरति । **आत्मेति** । अत्र दर्शनमुद्दिश्य निदिध्यासनं विधीयते । **अप्राप्ते शास्त्रमर्थवदिति** न्यायात् तस्यैव निदिध्यासनस्यैव मोक्षस्यान्तरङ्गोपायत्वात् । अत्र श्रोतव्य इत्यनुवादः । अध्ययनविधिना साङ्गस्य स्वाधायस्य ग्रहणेऽधीतवेदस्य पुंसः प्रयोजनवदर्थदर्शनात्तन्निर्णयाय

न्तथा पुरुष इत्यपि । निरूपाधी च वर्तेते वासुदेवे सनातने" इति भगवच्छब्दवद्वासुदेवे सर्वेश्वर एव मुख्यवृत्तित्वात्तद्विषयकमेव ज्ञानं तथाभूतेष्यमाणज्ञानविषयिकैवेच्छेत्यर्थः । "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "भूमा त्वेव विजिज्ञासितव्य' इत्यादि श्रुतेः । परमत जिज्ञास्यो दुरुपपादः विकल्पासहत्वात्तथाहि—शुद्धो वा मायोपाहितो वाऽज्ञानाध्यस्तेश्वरो वा जिज्ञासाविषयत्वेनाभिप्रेतः नाद्यः, तस्याविषयत्वाभ्युपगमात् । अन्यथा मिथ्यात्वप्रसङ्गात् । शुद्धं ब्रह्म मिथ्या जिज्ञासाविषयत्वात् तव मते घटादिवत् । अपसिद्धान्तापत्तेरविषयत्वाभ्युपगमसिद्धान्तभङ्गाच्च । न द्वितीयः । जिज्ञासया श्रवणाद्यभ्यासजन्योपहितसाक्षात्कारेण तद्विषयकाज्ञाननाशेऽपि शुद्धविषयकाज्ञानस्य तादवस्थ्येनानिर्मोक्षप्रसङ्गात् । अप्रयोजकत्वाच्च । किञ्चोपहितज्ञानं मोक्षहेतुर्नवा । नाद्यस्तस्यैव मुक्तोपसृप्यत्वप्रसक्त्या शुद्धाभ्युपगमस्याप्रयोजकत्वेन वैयर्थ्यात् । न द्वितीयः । जिज्ञासावैयर्थ्यापत्तेस्तदर्थकभाष्यादिशास्त्रप्रणयनस्य जलताडनसाम्यापत्तेश्च । नाप्यध्यस्तजिज्ञासाङ्गीकारस्तृतीयोऽध्यासस्य सपरिकरस्य निरसिष्यमाणत्वात् । तस्मात्स्वरूपगुणशक्त्यादिभिर्निरतिशयबृहत्तमो ब्रह्मशब्दवाच्यो भगवान्वासुदेवः श्रीकृष्ण एव जिज्ञास्य इत्युक्तम् ।

## ब्रह्म शब्दार्थ निर्वचनम्

"बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहन्तो गुणा अस्मिन्निति ब्रह्म" । "एष

---

स्वरसत एव श्रवणे प्रवर्त्तमानतया तस्य प्राप्तत्वात् । मन्तव्य इति चानुवादः । श्रवणप्रतिष्ठार्थत्वेन मननस्यापि प्राप्तत्वात् इति भावः । **भूमेति** भूमा शब्दो ब्रह्मपर्यायः । स्वसिद्धान्तानुसारेण ब्रह्मणो जिज्ञास्यत्वमुपपाद्य मायावादिनां मते तस्य जिज्ञास्यत्वं दुरुपपादमित्याह **परमत इति** । त्रिधा विकल्पयति । **तथाहीत्यादिना** । आद्यविकल्पं निरस्यति **नाद्य इति** तस्य=शुद्धस्य ।

बाधकतर्कमुपन्यस्यति-**अन्यथेति** । शुद्धब्रह्मणो जिज्ञासाविषयत्व इति तदर्थः । प्रयोगं दर्शयति-**शुद्धमिति** । बाधकान्तरमाह **अपेति** । ब्रह्मणो जिज्ञासाविषयत्वं स्वीकृतञ्चेत्तदा ब्रह्मणो निर्विषयत्वसिद्धान्तः तव भज्येत इत्याह-**अविषयत्वेति** । नच निरवद्यत्वात् द्वितीयकल्पोऽस्त्वित्यत आह-**नद्वितीय इति** उपहितब्रह्मविषयकजिज्ञासया उपहितब्रह्मविषयकसाक्षात्कारो जातस्तेन तद्विषयकमज्ञानं नष्टं नतु शुद्धब्रह्मविषयकाज्ञानं तद्विषयकाज्ञानस्य विद्यमानत्वान्न मुक्त्युपपत्तिरित्याह-**जिज्ञासयेति** । यद्विषयकश्रवणमननादिना यस्य साक्षात्कारस्तद्विषयकस्याज्ञानस्य नाशो नत्वन्यविषयकस्येति भावः । उपहितब्रह्मणो जिज्ञासाविषयत्वेऽनुकूलतर्को नास्तीत्याह-**अप्रयोजकत्वादिति** । उपहितब्रह्मज्ञानं मोक्षौपयिकं जिज्ञासाविषयत्वादित्यनुमानस्यानुकूलतर्कशून्यत्वादप्रमाणमिति भावः । अप्रयोजकत्वमेव भङ्ग्या निरूपयति-**किञ्चेति** । उपहितब्रह्मज्ञानं मोक्षजनकं नवेति विकल्पयति-**किञ्चोपहितज्ञानमिति** । आद्यपक्षं निरस्यति-**नाद्य इति** । तस्यैव=उपहितब्रह्मणः । यद्युपहितब्रह्मविषयकज्ञानस्य मोक्षौपयिकत्वं नास्ति तदा तद्विषयिका जिज्ञासाऽपार्था, इत्याशयेन द्वितीयकल्पं निरस्यति-**न द्वितीय इति** । जलताडनादिवन्निष्फलत्वात्नारब्धव्यं वेदान्तशास्त्रं जिज्ञास्योपहितब्रह्मज्ञानस्य मोक्षसाधनत्वाभावादित्याह **तदर्थकेति** । ब्रह्मज्ञानार्थक इत्यर्थः । अज्ञानाध्यस्तेश्वरो वा जिज्ञासाविषयत्वेनाभिप्रेत इति तृतीयकल्पं परिहरति-**नापीति** । **निरसिष्यमाणत्वादिति** संस्कारसादृश्यसम्प्रयोगादीनामध्यासे ह्यावश्यकानामभावेन

प्रकृतिरव्यक्तः कर्त्ता चैव सनातनः। परश्च सर्वभूतेभ्यस्तस्माद्वृहत्तमोऽच्युत" इत्यादि श्रुतिस्मृतिभ्यः। श्रुत्यर्थनिर्णायकस्यास्य सूत्रस्योपोद्घातरूपत्वात्। शास्त्रारम्भहेत्वनुबन्धा अप्यनेन निरूपिताः। ते त्वधिकारिविषयसम्बन्धप्रयोजनाख्यास्तत्र श्रेयस्कामो मुमुक्षुरत्राधिकारी। विषयश्चास्य ब्रह्मशब्दाभिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिशक्तिगुणाद्याश्रयो ब्रह्मरुद्रेन्द्रप्रकृतिपरमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभिन्नाभिन्नत्वाश्रयो भगवान् वासुदेवः श्रीपुरुषोत्तमः॥

## मायावादिमते वेदान्त विषयस्य दुर्निरूप्यत्वसमर्थनम्

परमते तु विषयस्य दुर्निरूप्यत्वेन शास्त्रारम्भोऽसम्भव एव विकल्पासहत्वात्।

---

कथमध्यासोपपत्तिरित्यादिनेत्यर्थः। ब्रह्मशब्दार्थमुपसंहरन्नाह। **तस्मादिति।** "सत्यं ज्ञानमनन्तं ब्रह्म" ति श्रुतौ, वेदान्तस्यादिमसूत्रे च ब्रह्मशब्दप्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात्स चार्थो महत्वरूप इति व्याकरणादपि निश्चीयते। **"बृहि वृद्धौ"** विति स्मरणात्। सा च वृद्धिर्निरवधिकमहत्वसङ्कोचाभावाच्छ्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायते निरवधिकमहत्वञ्च स्वरूपेण गुणैः शक्त्यादिभिरिति। उक्तार्थं श्रुतिस्मृतिप्रमाणैः द्रढयति। बृहतीति। **उपोद्घात इति** चिन्तां प्रकृतसिद्धयर्थामुपोद्घातं विदुर्बुधा इति प्राचीनोक्तेः प्रकृतसिद्धयर्थानुकूलचिन्ताविषयत्वं तदर्थः। अनुबन्धचतुष्टयं दर्शयति-**तेत्वित्यादिना।** विषयं दर्शयति-**विषयश्चेति।** निरतिशयमहत्वस्यान्तवत्वादिदोषवत्वे सर्वज्ञत्वादिगुणहीने च न सम्भवति लोके गुणहीनदोषवतोऽल्पत्वप्रसिद्धेरतो बृंहणाद् ब्रह्मेति व्युत्पत्या देशकालवस्तुनः परिच्छेदाभावरूपमनन्तत्वमभिप्रेत्याह-**सर्वज्ञ इति।** इयत्तावच्छेदेन चिन्ताविषयत्वं चिन्त्यत्वं तद्भिन्नमचिन्त्यत्वम्। स्वाभाविकत्वञ्च स्वरूपवदात्मवृत्तित्वम्। अन्यत्रातिप्रसक्तिवारणाय "सर्वज्ञ" इति विशेषणम्। ब्रह्मशब्दाभिधेयत्वस्य चतुर्मुखादीनां वारणाय ब्रह्म रुद्रेन्द्रेति विशेषणमुपात्तम्। ब्रह्मणा चिदचितोर्भिन्नाभिन्नस्वाभाविकसम्बन्ध इत्याह-**चिदचिदिति** भगवान्=षड्गुणसम्पन्नः। तस्यान्यत्र वृत्तिवारणायाह **वासुदेव इति॥**

### "इति ब्रह्मशब्दार्थ निर्वचनम्"

अद्वैतवादिमते विषयप्रयोजनादीनां दुर्निरूप्यत्वेन शास्त्रारम्भ एव न सम्भवतीत्याह-**अथ परमत इति।** अत्यन्ताभेदवादिमते। ब्रह्मज्ञानाय विचारः कर्त्तव्य इति ब्रह्मजिज्ञासासूत्रार्थं व्याचक्षते। तत्र ज्ञानं न स्वतः फलरूपं किन्तु कर्तृत्वाद्यनर्थनिवर्त्तकत्वेनैव तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याप्यध्यस्तत्वमर्थात्सूचितं विषयस्याध्यस्तत्वे शास्त्रविषयप्रयोजनवत्वसिद्धिः। तथाहि—"शास्त्रं प्रयोजनवत् बन्धनिवर्त्तकज्ञानहेतुत्वात्, रज्जुरियमित्यादिवाक्यवत्"। "बन्धो ज्ञाननिवर्त्यः अध्यस्तत्वात् रज्जुसर्पवदिति" प्रयोजनसिद्धिः। एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूचयज्जीवब्रह्मणोरैक्यं विषयमप्यर्थात्सूचयतीत्याशयेन तन्मतं प्रदर्शयन्नाह—**तथाहीत्यादिना। तन्मते**=अद्वैतवादिमते। विकल्पयति—**तच्चेति।** तन्मते ब्रह्मव्यतिरिक्तस्य निखिलस्यापि वस्तुनोऽध्यस्तत्वस्वीकारादैक्यस्याप्यध्यस्तत्वेन भवितव्यमित्यत आह—**अध्यस्तमिति।** प्रथमकल्पं निराकरोति—**नाद्य इति।** यथा लोके सामग्रीसमवधानात् "शुक्ताविदं रजतमिति" भ्रमो जायते, तदुत्तरकाले नेदं रजतं किन्तु शुक्तिरियमित्यधिष्ठानसाक्षात्कारेण भ्रमो निवर्त्त्यते। तथा प्रकृतेऽपि ब्रह्मसाक्षात्कारेण कथमपि निवर्त्तेत। एवञ्च जीवब्रह्मणोरैक्यं न वास्तविकं किन्तु तयोर्भेद इति भेदस्य पारमार्थिकत्वं प्रसज्येतेत्याह **अध्यस्तस्येति।** नन्वैक्यस्य मिथ्यात्वे भेदस्य सत्यत्वं कुत इत्यतस्तत्र व्याप्तिमुपपादयति—**अवश्यमिति।** "यत्र यदध्यस्तं तत्र तद्विरोधि, तज्ज्ञानावाध्यमिति" नियमाकारः। यत्र शुक्तौ यद्रूप्यत्वमध्यस्तं तत्र शुक्तौ

तथाहि—तन्मते जीवब्रह्मैक्यं विषयः। तच्चैक्यमध्यस्तमनध्यस्तं वा। नाद्यः। अध्यस्तस्या-वश्यम्बाध्यत्वेन भेदस्य तात्त्विकत्वापत्तेः। द्वितीये, ऐक्यस्य ब्रह्माभिन्नत्वेन भेदस्त-दवस्थ एव। नन्वैक्यस्य ब्रह्मभेदो नाभ्युपगम्यत इति चेन्न। ऐक्यस्य निर्विशेषब्रह्मा-भिन्नत्वे तत्त्वं पदार्थपराणां "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं" "विज्ञानघन" मित्यादीनामैक्यपरमहावाक्यैकवाक्यत्वाभावेन वैयर्थ्यापत्तेः। नचैक्यस्य स्वप्रकाशब्रह्मा-भिन्नत्वेन स्थितिप्रतीत्यादौ निरपेक्षत्वेऽपि लक्षितार्थभेदभ्रमनिवर्तकवृत्तिजनने पदार्थसापे-क्षत्वेन स्वरूपपरवाक्यानामेकवाक्यतायाः सत्वात् भेदरूपप्रतियोगिसापेक्षत्वेन तत्र सापेक्षत्वव्यवहार इति वाच्यम्; निर्विशेषब्रह्माभिन्नैक्यस्य कुत्रापि सापेक्षत्वासम्भवात्। अभावसादृश्यादेः सप्रतियोगिकत्ववदैक्यस्य सापेक्षतायाः स्वाभाविकत्वात्। एतेनमन्मत

---

तद्विरोधि, अरूप्यत्वं तज्ज्ञानाबाध्यं शुक्तिज्ञानाबाध्यम् दृष्टम्, एवं ब्रह्मण्यैक्यमध्यस्तं तत्र ब्रह्मणि तद्विरोधिभेदो ब्रह्मज्ञानाबाध्यः। अत्र व्याप्त्यन्तरमपि द्रष्टव्यं—तथाहि यत्र यदैक्यमध्यस्तं तत्र तद्भेदस्तज्ज्ञानाबाध्यः। यथा-चूते पनसैक्यमध्यस्तं तत्र चूते तेन पनसेन भेदश्चूतज्ञानाबाध्यो दृष्टः, एवं ब्रह्मणि जीवैनैक्यमध्यस्तमिति तेन जीवेन भेदो ब्रह्मज्ञानाबाध्यः। यत्र यदध्यस्तं तत्र तद्विरोधि तात्त्विकं, यथा ब्रह्मण्यनृतत्वस्याध्यस्तत्वे सत्यत्वं तात्त्विकम्, एवमैक्यमध्यस्तं तद्विरोधिभेदस्तात्त्विक इति। श्रुतिसमर्थिता। यद्येकता भेदाभावो, यदिवैकत्वसंख्या, यदिवा ज्ञानात्मकत्वं, यदिवा अन्य एकत्वनामा कश्चिदपरपर्य्यायो धर्मोऽभ्युपेयते, यद्येकत्वं संख्या तदा गुणगुणि-भावादद्वैतक्षतिः। यदिवा विश्वस्य संवेद्यस्य संवेदनैक्यं तर्हि विज्ञानवादवद् ग्राह्यग्राहकभेदादद्वैतव्याघात एव। यद्येकत्वं घटपटादीनां परस्परभेदको धर्मस्तदपि धर्मवत्त्वं सोढुं न शक्नोत्यद्वैतव्याघातादेवेति विकल्पत्रयं वहिरेव दूषयित्वा भेदाभावरूपं विकल्पं दूषयति—**ऐक्यस्य ब्रह्माभिन्नत्वेनेति। भेदस्तदवस्थ इति।** ऐक्यस्य भेदाभावात्म-कस्य प्रामाणिकत्वात्तत्प्रतियोगिनो भेदस्यापि पारमार्थिकत्वेऽद्वैतव्याघातापत्तिरिति भावः। "ब्रह्मैवेदं सर्वम्" इति श्रुत्यर्थेन सहैक्यमात्मनैक्यं ब्रह्मैव स्यात् "विज्ञानमानन्दं ब्रह्म" ति श्रुत्या च ज्ञानात्मकतया व्यवस्था-नादित्याशङ्कते। **नन्विति।** "ब्रह्म तदैक्येऽभिन्ने ब्रह्मैवेदं सर्वमिति श्रुतिबोधितत्वादिति" प्रयोगः। ब्रह्मणः स्वयं प्रकाशत्वेन ज्ञातत्वादैक्यमपि तदनतिरेकितया ज्ञातमेवेति तज्जिज्ञासाऽपार्थी स्यात् तदभावे च न ब्रह्मज्ञानाय वेदान्ताः पठ्येरन्, अपितु अविवक्षितार्था जपमात्र उपयुज्येरन्। एवं सत्यं ज्ञानमनन्तेत्यादि स्वरूपपरवाक्यानां 'तत्वमसी' ति महावाक्यैकवाक्यत्वापादनमपि निष्प्रयोजनकं प्रतिभातीत्याशयेन परिहरति। **नेतीति।** यदि जीवब्रह्मणो-रैक्यं ब्रह्मातिरिक्तं स्यात् तदा ब्रह्मात्मैकत्वप्रतिपत्तये सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि वेदान्ता महावाक्यैकवाक्यतापन्ना आरभ्येरन्। नत्वेवं, यत ऐक्यस्य निर्विशेषब्रह्माभिन्नत्वेन निरपेक्षत्वात्तेषां वैयर्थ्यं दुर्वारमित्यर्थः। **महावाक्यैकवाक्य-त्वाभावेनेति।** ऐक्यापेक्षित जीवब्रह्मस्वरूपप्रतिपादकत्वेन तदेकवाक्यत्वं ब्रह्मानतिरेकिण ऐक्यस्य निरपेक्षत्वेन तन्न स्यादित्यर्थः। यथा समस्तजातिः स्वस्थितये व्यक्तिमपेक्षते विशिष्टप्रतीतौ च विशेषणज्ञानविधया जात्यादेरपेक्षा तथा ब्रह्मणि विद्यमानस्य ब्रह्माभेदरूपैक्यस्य निरपेक्षब्रह्मस्वरूपत्वान्न तदैक्यं स्वस्थितौ स्वप्रतीतौ च कमपि पदार्थमपेक्षते किन्तु लक्षितार्थभेदभ्रमोऽभेदज्ञानेनैव निवर्त्यते तच्चाभेदज्ञानं वेदान्तवचनैरेवोत्पत्तुमर्हति नान्यथेति वेदान्ता आरब्धव्यास्तथासति, ऐक्यापेक्षितजीवब्रह्मस्वरूपप्रतिपादकत्वेन 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति श्रुत्या सह महावाक्यरूपतत्वमस्यादिश्रुतीनामेकवाक्यत्वं सार्थकमेव प्रतिभातीत्याशङ्कां परिहरति। **नचैक्यस्येति। लक्षितार्थेति।** परमते ब्रह्म लक्षितार्थः लक्षणावृत्त्या प्रतिपाद्यो नतु शक्यार्थस्तथात्वे मिथ्यात्वं स्यात् तस्मिन् यो भेदभ्रमस्तन्निवर्तिका या वेदान्तवाक्यजन्या वृत्तिस्तस्या जनन इत्यर्थः। **पदार्थसापेक्षत्वेनेति।** ऐक्यापेक्षितजीव-

अविद्यानिवृत्त्यद्वैतयोः सापेक्षयोरपि ब्रह्मैक्यमस्तु तत्राभावत्वसापेक्षत्वादेर्मायिकत्वेन विरोधाभावात् । तव तु सापेक्षत्वनिरपेक्षत्वयोस्तात्त्विकत्वेन विरोधस्य दुष्परिहरत्वादिति निरस्तम् । त्वदभिमताद्वैतश्रुतिबोध्यस्याभावत्वादेः कल्पितत्वायोगात् । अन्यथा श्रुतेरप्रामाण्यापत्त्याऽद्वैतनिवृत्त्यादेरासिद्ध्यापत्तेः । ज्ञानस्य ज्ञानत्वेन दण्डादेः कारणत्वेनाभावसादृश्येच्छादेस्तत्त्वेन सापेक्षत्वेऽपि प्रमेयत्वदण्डत्वादिना निरपेक्षत्ववद्भेदत्वेन सापेक्षत्वेऽपि घटत्वादिना निरपेक्षत्वोपपत्तेः । नह्यस्माकमेकरूपेण सापेक्षत्वनिरपेक्षत्वाङ्गीकार इतिसङ्क्षेपः । विस्तरस्त्वाकरे द्रष्टव्यः ।

इतिपराभिमतवेदान्तविषयस्य निरसनम्

---

ब्रह्मस्वरूप्रतिपादकस्वरूपपरवाक्यैकवाक्यतापन्नमहावाक्यार्थीनाऽखण्डार्थबोधात्मको यः पदार्थस्तत्सापेक्षत्वेनेत्यर्थः । प्रतियोगिनो भेदस्य सापेक्षत्वादैक्येऽपि सापेक्षत्वव्यवहार इत्याह । **भेदरूपप्रतियोगिसापेक्षत्वेनेति** । यद्यैक्यं निर्विशेषब्रह्मस्वरूपं तदा तस्य सापेक्षत्वं कथमपि न घटते तथाच स्वरूपपरवाक्यैकवाक्यतापन्नमहावाक्यानां वैयर्थ्यं दुर्वारम् । ब्रह्मातिरिक्तमैक्यञ्चेत्तस्य सापेक्षत्वमभावसादृश्यादिवद्दुर्वारमित्याशयेनोक्तां शङ्कां समाधत्ते । **निर्विशेषेति** । **एतेनेति** । वक्ष्यमाणदोषेणेत्यर्थः । अविद्यानिवृत्तिजीवब्रह्मैक्ययोः प्रतीतौ सापेक्षत्वस्याविद्यकतया तात्त्विकनिरपेक्षत्वविरोधित्वाभावेनाभेदरूपैक्यस्य ब्रह्मस्वरूपत्वे न किञ्चिद्बाधकमित्याह । **अविद्येति** । तत्र=ब्रह्मणि । **अभावत्वसापेक्षत्वेति** । ब्रह्मनिष्ठभेदाभावरूपैक्यवृत्ति यदभावत्वं तस्य भेदरूपप्रतियोगिसापेक्षत्वमित्यर्थः । **मायिकतयेति** । आविद्यकतयेत्यर्थः । एतेन सापेक्षत्वमतात्त्विकमिति स्फोरितम् । ब्रह्मवृत्तिनिरपेक्षत्वन्तु तात्त्विकमिति न तयोर्विरोध इति भावः । **तव त्विति** । भेदाभेदवादिन इत्यर्थः । निरासे हेतुमाह । **त्वदभिमतेति** । भेदाभावरूपैक्यं श्रुत्यैव भवता समर्थनीयम् । तच्च न काल्पनिकं किन्तु पारमार्थिकमेवान्यथा श्रुतेरतत्त्वावेदकत्वेनाप्रामाण्यतया द्वैतनिवृत्तिरशक्यसम्पादनीया स्यात्तथा च तव मते भेदाभावात्मैक्यस्य भेदसापेक्षत्वेन तात्त्विकत्वमेव वक्तव्यं ब्रह्मवृत्तिनिरपेक्षत्वस्यापि तात्त्विकत्वेन तयोर्विरोधस्य दुष्परिहरत्वमेव । एवञ्च प्रतियोगिसापेक्षं भेदनिषेधरूपैक्यं न निरपेक्षब्रह्मस्वरूपत्वं भवितुमर्हति किन्तु तदतिरिक्तमेव । तथासति भेदस्य पारमार्थिकत्वं दुर्वारमेवाद्वैतव्याघातश्चेति भावः । तात्त्विकयोरपि सापेक्षत्वनिरपेक्षत्वयोरेकस्मिन् धर्मिणि संयोगतदभावयोरिवावच्छेदकभेदेनैवोपपत्तेर्नास्माकं मते विरोधलेशावकाशः । युक्तञ्चैतत्; केनचिद्रूपेण निरपेक्षस्यापि केनचिद्रूपेण सापेक्षतादृष्टत्वादित्याशयेन स्वमते विरोधं परिहरन्नाह । **ज्ञानस्येति** । ज्ञानाभावसादृश्येच्छादीनां प्रमेयत्वादिना प्रतीतौ प्रतियोग्यादिसापेक्षत्वाभावेऽपि । अभावत्वादिना प्रतीतौ सापेक्षत्वं दण्डत्वादिना निरपेक्षस्यापि दण्डादेः कारणत्वेन प्रतीतौ निरूपकसापेक्षत्वात् । अस्येदं कारणमिति प्रतीतिः । तथाच सन्ति च ब्रह्मणि, अनन्तधर्मा ज्ञानत्वब्रह्मत्वभेदाभावत्वादयः । ब्रह्मत्वेन विषयनिरपेक्षस्यापि ब्रह्मणो ज्ञानरूपत्वेन भेदाभावत्वेन च प्रतीतौ विषयप्रतियोग्यादिसापेक्षत्वमित्यर्थः । **सङ्क्षेप इति** । नन्वेवं सर्वस्यापि पदार्थस्य केनचिद्रूपेण प्रतियोग्यादिसापेक्षत्वनिरपेक्षत्वसम्भवेनेदं सप्रतियोगिकमिदं निष्प्रतियोगिकमिति व्यवस्था कथमुपपद्येत इति चेन्मैवम् । यदसाधारण्येन स्ववाचकपदप्रवृत्तिनिमित्ततावच्छेदेन प्रतीतौ प्रतियोगिप्रतीतिसापेक्षं तत् सप्रतियोगिकमन्यत् निष्प्रतियोगिकमिति सप्रतियोगिकनिष्प्रतियोगिकयोर्व्यवस्थोपपत्तेः । यथाऽभाववाचकं यत्पदं तस्य तत् प्रवृत्तिनिमित्तमभावत्वं तदवच्छेदेन प्रतीतौ प्रतियोगिसापेक्षत्वात् सप्रतियोगिकं घटादिपदं घटादिवाचकप्रवृत्तिनिमित्तभूतघटत्वावच्छेदेन प्रतीतौ प्रतियोग्यादिनिरपेक्षत्वान्निष्प्रतियोगिकमिति सर्वं सुस्थितमिति ।

इतिपराभिमतवेदान्तविषयस्य निरसनम्

प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः परमते तु विषयाभावे सम्बन्धानुपपत्तिरेव ।

( अस्य शास्त्रस्य प्रयोजनं निर्वक्ति )

श्रीभगवद्भावापत्ति लक्षणो मोक्षोऽत्र प्रयोजनम् । "मद्भक्तएतद्विज्ञाय मद्भावायोपपद्यते। बहवो ज्ञानतपसा पूता मद्भावमागताः" इति श्रीमुखोक्तेः । भावपदं स्वयमेव व्याख्यातं श्रीमुखेन । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता" इतिश्लोकेन । सएव साम्यसायुज्य ब्रह्मामृतमहिमादिशब्दैरभिधीयते । निरञ्जनः परमं साम्यमुपैति । नारायणे सायुज्यमाप्नोति । ब्रह्मविद् ब्रह्मैव भवति । जुष्टं तेनामृतत्वमेतितन्महिमानमेति वीतशोकः, इत्यादिश्रुतिभ्यः परमते प्रयोजनं दुर्निरूपमसम्भवात् । तथाहि-यस्मै ब्रह्मभावापत्तिलक्षणो मोक्षः प्रयोजनत्वेनाभ्युपगम्यते । तस्य चेतनस्यैकत्वमनेकत्वम्वा ? नाद्यः । चैत्रमैत्रादीनां सुखादि भोगसाङ्कर्य्यप्रसङ्गात् । नचोपाधिकभेदस्य तन्नियामकत्वोक्तदोष इति वाच्यम् ।

---

परमतेनिरसनमुखेन वेदान्तशास्त्रस्य विषयो ब्रह्मशब्दाभिधेयो भगवान्वासुदेवः श्रीपुरुषोत्तमोऽभिहितः । सम्प्रति शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः यः सम्बन्धस्तं दर्शयति । **प्रतिपाद्य इति** । अत्यन्ताभेदवादिमते यदि शास्त्रस्य विषयः सिद्धयेत्तदा शास्त्रविषययोः सम्बन्धो जिज्ञास्येत नत्वेवं तथाच विषयस्याभावे सम्बन्धस्य सुतरामभाव इत्याह **परमते त्विति** । "प्रयोजनमनभिसन्धाय मन्दोऽपि न प्रवर्त्तते" अतोऽस्य शास्त्रस्य प्रयोजन निर्वक्ति । **श्रीभगवद्भावापत्तिलक्षण इति** । भगवद्भावापत्तिरूपमुक्तौ पराभिमतार्थप्रतिकूलार्थं स्मृतिवचनं दर्शयति **मद्भक्त एतदिति** । एतत् क्षेत्रयाथात्म्यं क्षेत्रज्ञस्य प्राप्त्युपायं क्षेत्रज्ञस्वरूपयाथात्म्यञ्च विज्ञाय मद्भावायोपपद्यते । मम यो यो भावः साधर्म्यं तत्प्राप्तये योग्यो भवतीत्यर्थः । **बहव इति** । बहवो भक्ता ज्ञानतपसा मज्जन्मकर्मविषयकज्ञानमेव तपः सर्वकर्मभर्जकम् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत" इति वचनात् । तेन पूता निरस्ताऽज्ञानतत्कार्यशुभाशुभवासनाः सन्तो मम यो भावः । अपरिच्छिन्नज्ञानानन्दवत्वे सत्यप्राकृतप्रकाशानन्दविग्रहवत्वं तमागताः प्राप्ताः । स्वरूपाभेदे सति सर्वं ह पश्यः पश्यतीति श्रुतौ सार्वज्ञ्ययोगोक्तेः सार्वज्ञ्यादिदिव्यधर्माभावेन विग्रहसाम्येन चाभेदं तादात्म्यलक्षणं भेदाभेदं प्राप्ता इत्यर्थः । भेदसहिष्णुरभेदस्तादात्म्यमिति पतञ्जल्युक्ततादात्म्यलक्षणसमन्वयात् । ननु "ब्रह्मविद् ब्रह्मैव भवती" त्यनुरोधादैक्यापत्तिरेव भावशब्दार्थ इत्यत आह । **भावपदञ्चेति** । **इदंज्ञानमिति** । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यमागता मत्साम्यंप्राप्ता इत्यर्थः । एवं साधर्म्यवचनेन मुक्तौ स्वरूपैक्यवाद केवलभेदवादश्च बहुवचनेनात्मैक्यवादश्च स्पष्टं निरस्तः । तदैक्यश्रुतेः प्रतिकूलार्थसाम्यश्रुतिमुक्तार्थे प्रमाणतयोपन्यस्यति । **निरञ्जन इति** । निरञ्जनः निर्दुःखः सन् प्रत्यगत्मा । अत्र साम्यशब्दः सादृश्यरूपार्थमेव प्रतिपादयति नत्वैक्यम् । ऐक्यस्य मुख्यार्थत्वाऽभ्युपगतेऽपि स्वारस्याभावात्समशब्दस्य सादृश्यार्थ एव भूरिप्रयोगदर्शनान्नोक्तार्थत्वमिति भावः । **जुष्टमिति** । यदा तु जुष्टं ब्रह्मादिसेवितं ( स्वस्मिन्नवाऽनेकजन्मकृतपुण्यपुञ्जैः प्रीतं ) स्वस्मादन्यं स्वामितया नियन्तृतया मोक्षदातृतया च भिन्नमीशं परमात्मानं पश्यति साक्षात्करोति तदा वीतशोकः सन् अस्य महिमानं सार्वज्ञ्यादिलक्षणं तत्साम्यापत्तिमेति प्राप्नोतीत्यर्थः "आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने । विकार्यमात्मनो शक्त्या लोहमाकर्षको यथा" आत्मनः भावं साधर्म्यम् भोगमात्रसाम्यलिङ्गाच्च । मुक्तोपसृप्यव्यपदेशाच्च "य इहात्मानमनुविद्य व्रजत्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति । "ब्रह्मविदाप्नोति परं" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितः "एतमानन्दमात्मानमुपसङ्क्रम्य इमाँल्लोकान्कामान्नीकामरूप्यनुसञ्चरन् स तत्र पर्य्येति रसो वै सः रसं ह्येवायं लब्धानन्दी भवतीति श्रुतिसूत्रस्मृत्यादयोऽनुसन्धेयाः" । अत्यन्ताभेदवादिमते प्रयोजनस्य दुर्निरूप्यत्वमाह । **परमत इति** । तदेवोपपादयति । **तथाहीति**

हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदर्शनात् । नचान्तःकरणभेदोऽविद्याभेदो वा तन्नियामक इति वाच्यम् । चैतन्यैक्ये चक्षुरादिभेदवदन्तःकरणभेदस्याप्रयोजकत्वात् । नन्वन्तःकरणभेदस्याप्रयोजकत्वेऽपि तदैक्याध्यासापन्नान्तःकरणभेदस्यानुसन्धाने प्रयोजकताङ्गीकारान्नोक्तदोषयोग इति चेन्न । निर्विशेषे स्वप्रकाशे ज्ञाताज्ञातविभागहीने चेतनेऽन्तःकरणादेस्तादात्म्यारोपाऽसम्भवात् । उपरिष्टादध्यासस्य निराकरिष्यमाणत्वात् । किञ्चानेकाविद्यासम्बन्धस्य दुःखाद्यनुसन्धानरूपस्यानर्थस्य च विशिष्टवृत्तित्वं शुद्धगतत्वम्वा । नाद्यः वन्धमोक्षयोर्वैयधिकरण्यात् । अन्त्ये च यच्छुद्धं चैत्रीयदुःखानुसन्धातृ तदेव मैत्रीयदुःखानुसन्धातृइतिसाङ्कर्यं तदवस्थम् । नन्वविद्यारूपवन्धनिवृत्तिरूपमोक्षस्य शुद्धगतत्वेऽपि दुःखानुसन्धातृत्वस्योपहितगतत्वान्न शुद्धे तदापादकत्वमिति चेन्न । दुःखानुसन्धानरूपानर्थस्योपहितनिष्ठत्वेन वन्धमोक्षयोर्वैयधिकरण्यस्य तादवस्थ्यात् । वद्धस्य निवृत्तिरेव नतु मोक्ष इत्यापत्तेश्च ननूपाधेः कल्पितत्वान्निवृत्तावपि उपधेयस्याकल्पितत्वेन निवृत्त्ययोगात् मोक्षान्वयित्वमितिचेन्न । शुद्धभिन्नतया भवदभिमतस्य विशिष्टस्य मृषात्वेन

---

त्यादिना । तस्य=चेतनस्य । **भोगसाङ्कर्येति** । चैत्रभुङ्क्ते मैत्रस्यापि तृप्तिस्स्यात् चैत्रस्य दुःखनिवृत्तौ मैत्रस्यापि तत्प्रसङ्ग इत्यर्थः । चेतनस्यैकत्वेऽपि तत्तदुपाधीनां शरीराणां भेदान्न भोगसाङ्कर्य्यमित्याशङ्क्य परिहरति । **नचेति** । **तन्नियामकत्वादिति** । सुखदुःखादिभोगनियामकत्वादित्यर्थः । यद्युपाधिभेदादेकस्यानुसन्धानमन्यस्याननुसन्धानमित्युच्यते तदा हस्तपादाद्युपाधिभेदस्य सत्वादेकस्य पुंसोऽनुसन्धानाननुसन्धानञ्च स्यादित्याह । **हस्तपादादीति** । बाल्यशरीरेणानुभूतस्य स्थविरे स्मरणं न स्यात् । बाल्यादिशरीरभेदस्य सत्वादित्यपिदूषणं द्रष्टव्यम् । अन्तःकरणभेदेनाविद्याभेदेन वा सुखदुःखादिभोगव्यवस्थोपपद्यत इत्याशङ्क्यापाकरोति । **नचेति** । यथा चक्षुरादिभेदो नानुसन्धानप्रयोजकस्तथान्तःकरणभेदोऽपि न तथेत्याह । **चैतन्यैक्य इति** । अध्यासमहिम्ना सर्वमुपपन्नं भवतीत्याशङ्कते । **नन्विति** । **तदैक्येति** । चैतन्यैक्याध्यासापन्नान्तःकरणभेदस्येत्यर्थः । तेषां मते सर्वमध्यस्तमिति स्वीकारेण चैतन्येऽन्तःकरणमध्यस्तमित्यर्थः । भिन्नभिन्नान्तःकरणभेदाध्यासेन तत्तदन्तःकरणमादाय सुखदुःखादीनां व्यवस्थोपपत्तिरित्याशयः । परिहरति । **नेति** । भवद्भिर्निर्विशेषं चिन्मात्रं स्वप्रकाशं ब्रह्माभ्युपेयते तत्रेदं ज्ञातमिदमज्ञातमिति विभागो न सम्भवति नापि तत्रान्तःकरणादेस्तादात्म्यारोप इत्यर्थः । तत्र हेतुमाह **उपरिष्टादिति** । अविद्याया अनर्थस्य च सम्बन्धः शुद्धे ब्रह्मणि अविद्यावच्छिन्ने वेति विकल्पयति । **किञ्चेति** । आद्यपक्षं निरस्यति । **नाद्य इति** । **वैयधिकरण्यादिति** । अनर्थस्याविद्यावच्छिन्नब्रह्मवृत्तितया मुक्तेः शुद्धब्रह्मगतत्वादिति वैयधिकरण्यादित्यर्थः । द्वितीयकल्पमपि साङ्कर्यदोषप्रदर्शनमुखेन दूषयति । **अन्त्येचेति** । चैत्रीयमैत्रीयचैतन्ययोरैक्यादिति भावः । दुःखानुसन्धातुरुपहितचैतन्याच्छुद्धचैतन्यं भिन्नमिति शङ्कते । **नन्विति** । **तदापादकत्वमिति**=दुःखापादकत्वमिति तदर्थः । उपहितचैत्रीयमैत्रीयचैतन्ययोर्भेदान्नोक्तसाङ्कर्यावकाश इति भावः । उक्तव्यवस्थायां स्वीकृतायामपि वन्धमोक्षयोस्सामानाधिकरण्यं नोपपद्यत इत्याशयेन निरस्यति **नेति** । तेषां मते चरमवृत्त्युपलक्षितात्मनोऽज्ञानहानिरूपो मोक्षो नतु वन्धनिवृत्तिमात्रम्, तथात्वे उपहितस्य निवृत्तत्वात् कस्य मोक्षः स्यादित्याह । **वद्धस्येति** । यत्कल्पितं तन्निवर्त्तते यच्चाकल्पितं तन्न निवर्त्तत इत्यभिप्रेत्य-वन्धमोक्षयोस्सामानाधिकरण्यमुपपादयति **नन्विति** । **उपधेयस्येति**=चैतन्यस्येत्यर्थः । उपाधिमात्रस्य निवृत्तिर्नतु चैतन्यस्याकल्पितत्वात् । यस्यैव वन्धस्तस्यैव मोक्ष इति सामानाधिकरण्यमनुपपन्नमिति भावः । मोक्षान्वयित्वं=

तत्र मोक्षान्वयासम्भवात् विशिष्टस्य सत्यत्वे तत्र दृश्यत्वादेर्व्यभिचारापत्तेः। ननु दुःखानुसन्धानमुपहितगतमपि, अविद्यारूपबन्धस्य शुद्धवृत्तित्वात् तत्रैव मोक्ष इति तयोर्वैयधिकरण्याभाव इति चेन्न। दुःखानुभवद्वारैवाविद्याया अनर्थत्वात्। यत्र दुःखाद्यनुसन्धानं स एव बद्धस्तस्यैव मोक्षौचित्यात्। नाप्यविद्यावच्छिन्नद्वाराऽवस्थात्रयातीते शुद्धेऽप्यनुसन्धानमिष्टमिति वाच्यम्। दुःखानुसन्धातुरवस्थात्रयातीतत्वासम्भवात् अथ चोपहितस्योपाधिकृतत्वेनोपाधेः शुद्धगतत्वमेव वक्तव्यं तथात्वे च किमेकैकोपाध्यपगमे मोक्षः। उत सर्वोपाध्यपगमे। आद्ये सदामुक्तिरेव नतु बन्ध इत्यापातात्। द्वितीये अधुना बन्धएव न कस्यापि मुक्तिरित्यङ्गीकृतं स्यात्। नच जीवानामनेकत्वात् येनोपाधिना यस्य परिच्छिन्नत्वं तस्मिंश्चेतने तदुपाध्यपगमे मोक्ष इति वाच्यम्। विकल्पासहत्वात्। तथाहि—जीवनानात्ववादे चेतनभेदो वास्तवः औपाधिको वा। आद्ये, अद्वैतवादो दत्ततिलाञ्जलिस्स्यात् तवानङ्गीकाराच्चास्मत्पक्षप्रवेशाच्च। द्वितीये एकोपाधिविनिर्मुक्तस्यापि शुद्धस्योपाध्यन्तरावच्छिन्नत्वेन कदापि मुक्तेरसम्भवात्। भग्नोपाधेश्चेतनस्योपाध्यन्तरोपहितेभ्यो भिन्नत्वाभावात्। ननु माभूदनेकजीववादे मुक्तेः सामञ्जस्यम्। एकजीववादे तु सर्वोपाध्यपगमान्मोक्ष इति चेन्न शुकादिमोक्षविधायक-

---

मोक्षसम्बन्धित्वम्। विशिष्टचैतन्यशुद्धचैतन्ययोर्भेद इति भवतां राद्धान्तस्तत्र विशिष्टस्य मिथ्यात्वं सत्यत्वंवेति विकल्पद्वयमभिप्रेत्याद्यपक्षं दूषयति **नेति**। तत्र=विशिष्टे। **मोक्षान्वयासम्भवादिति**। मोक्षासम्बन्धित्वात्। वस्तुनः सत्वावस्थायामेव सम्बन्धो घटते नतु तदसत्व इति भावः। द्वितीयपक्षमपि निरस्यति। **विशिष्टस्य सत्यत्व इति**। तत्र=विशिष्टचैतन्ये, सर्वं मिथ्या दृश्यत्वादित्यनुमानप्रयोगे दृश्यत्वं हेतुस्तस्य मिथ्यात्वाभाववति विशिष्टचैतन्ये सत्वाद्व्यभिचारित्वं स्यादित्यर्थः। दुःखानुसन्धातृत्वमुपहिते स्वीकृत्य बन्धमोक्षयोः सामानाधिकरण्यमुपपादयति। **नन्वित्यादिना**। पुनरपि तयोः सामानाधिकरण्यपक्षं दूषयति। **नेति**। अविद्यावच्छिन्नत्वेन शुद्धेऽपि दुःखानुसन्धानमिति बन्धमोक्षयोस्सामानाधिकरण्यमाशङ्क्य परिहरति। **नापीति**। यदि शुद्धेऽपि दुःखानुसन्धातृत्वमिष्यते तदाऽवस्थात्रयातीतत्वरूपं शुद्धत्वं व्याहन्येतेत्याह। **दुःखानुसन्धातुरिति**। उपाधीनां नानात्वात् प्रत्येकोपाधिनिवृत्तौ मोक्षः सर्वेषामुपाधिनिवृत्तौ वेति विकल्पयितुमाह। **अथेति** प्रतिदिनमेकैकस्य चिदुपाधेरुपरमात् सदा मुक्तिरेवोररीकृता स्यादित्याशयेनाद्यपक्षं निरस्यति। **आद्य इति**। सर्वेषामुपाधीनामुपरमाभावान्न कस्यापि मुक्तिरुपपद्येत इत्यभिप्रायेण द्वितीयपक्षेऽपि दोषं निर्वक्ति। **द्वितीय इति**। सर्वेषामुपाधीनामुपरमे तु संसारोच्छेदस्स्यादिति भावः। यस्य शरीरिणो यदुपाध्यवच्छिन्नत्वं तस्य तदुपाध्युपगमे मोक्षो भवतीति प्रत्यगात्मनां नानात्वान्नोक्तदोषावकाश इत्याशङ्क्य परिहरति। **नचेति**। प्रत्यगात्मनां ब्रह्मणा सह भेदः पारमार्थिकः, औपाधिको वेति विकल्पयति **तथाहीत्यादिना** यदि भेदस्य पारमार्थिकत्वमभ्युपेयते तदाऽद्वैतसिद्धान्तो व्याहन्येतेति प्रथमपक्षं निरस्यति। **आद्य इति**। ब्रह्मणा सह प्रत्यगात्मनां स्वाभाविको भेदो न भवतां राद्धान्तः तदभ्युपगमे त्वस्मत्पक्षे प्रविष्टाः भवन्त इत्याह। **तवेति**। जीवेश्वरयोरुपाधिप्रयुक्तो भेदो वस्तुतस्तयोरभेद इति द्वितीयकल्पं निरसितुमाह। **द्वितीय इति**। एकस्योपाधेर्विनिर्मोकेऽपि शुद्धस्य चैतन्यस्य द्वितीयोपाध्यवच्छिन्नत्वात्कदापि मुक्तिर्न स्यादित्याह। **एकोपाधीति**। एकजीववादे, उपाध्यवच्छिन्नतदनवच्छिन्नचैतन्ययोर्भेदो नास्तीत्याह। **भग्नोपाधेश्चेति**। एकजीववादे मुक्तेस्सामञ्जस्यमुपपादयन्नाशङ्कते। **नन्विति**। एकजीववादे

शास्त्रस्य बाधापत्त्या तन्मतस्यैवाप्रामाणिकत्वात् दुःखानुसन्धानस्याव्यवस्थापत्तेश्च। किञ्चोपाधिरेकदेशेन सम्बद्धः कृत्स्नेन वा। आद्ये तन्मते स्वाभाविकांशाभावेनौपाधिकत्वमेव वाच्यं तथात्वे चानवस्थाप्रसङ्गः। अन्त्ये च न भेदकता कृत्स्नस्यैवोपाधिनैव ग्रस्तत्वात्। नच सर्वविकल्पासहत्वेन मिथ्याभूतस्योपाधेर्मिथ्याभेदप्रयोजकत्वमिति वाच्यम्। उत्तरास्फूर्तौ प्रधानसम्वित्योर्विकल्पाद्यसहत्वमिति साङ्ख्यबौद्धाभ्यामपि वक्तव्यत्वेन तन्निरासासम्भवात्। मृषाभूतस्यापि व्यावहारिकस्य त्वयाङ्गीकारात्। अन्यथा जीवजडयोर्विश्वकर्तृत्वान्तर्यामित्वादिकं निरस्येश्वरे तत्समर्थयतः समन्वयाध्यायस्योच्छेदापत्तेः। तव मते परमेश्वरकर्तृत्वस्यापि व्यावहारिकत्वात्। तस्माद्बद्धमुक्तदुःखानुसन्धानुपपत्त्या चितो वास्तवो भेदोऽवश्यमभ्युपगन्तव्य इति सिद्धं भेदस्य पारमार्थिकत्वम्।

---

अविद्याया एकत्वेनैकस्य मुक्तत्वे सम्प्रति प्रपञ्चानुपलम्भापत्तेः। पूर्वं मुक्त्यभावे वामदेवादिमुक्तिप्रतिपादकबहुवाक्यविरोधः प्रसज्येत वामदेवादीनामुत्पन्नसाक्षात्काराणामप्यमुक्तावर्वाचीनानामाषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारधिरेव काष्ठा' इति नियमेन मुक्तिर्दूरोत्सारिता स्यादित्याशयवान् परिहरति। **शुकादीति**। जीवन्मुक्तानां तत्त्वसाक्षात्कारात् पारमार्थिकत्वसम्पादनपरीयशक्तिविशेषविशिष्टाज्ञानस्य नाशेऽपि प्रातिभासिकत्वसम्पादनपरीयशक्तिविशेषविशिष्टाज्ञानस्यानिवृत्तेर्देहधारणं युक्तमिति यदद्वैतवादी ब्रूयात्तदाप्याह। **किञ्चेति**। तथात्वे=औपाधिकत्वे। अनवस्थाप्रसङ्गः। एकदेश औपाधिकः सोऽप्यौपाधिक इत्येवं परम्परयाऽनवस्थाप्रसङ्ग इत्यर्थः। द्वितीयपक्षमपि निरस्यति। **अन्त्ये चेति**। जीवब्रह्मणोरौपाधिकभेदे कथं न भेदकतेति जिज्ञासायां हेतुमुपन्यस्यति। **कृत्स्नस्यैवेति**। परमतमुपहसन्नाह। **उत्तरास्फूर्ताविति**। प्रधानं; मायाः सम्विद्‌ज्ञानम्? साङ्ख्यमते विकल्पासहत्वेन हेतुना प्रधाने बौद्धमते च सम्विदि च जगत्कारणत्वं न सिध्यति मिथ्याभूतस्य साङ्ख्यबौद्धमतस्य व्यावहारिकत्वेनाङ्गीकारादन्यथा तन्मतनिरासोऽनुपपन्न इत्याह **मृषाभूतस्येति**। साङ्ख्येन। "सदेव सोम्येद"मित्यादिवाक्ये प्रकृतेरेव जगज्जन्मादिकारणत्वेन प्रतिपाद्येऽभिहिते "**ईक्षतेर्नाशब्दमिति**" त्वया दूषिते सति साङ्ख्यस्योत्तरास्फूर्तौ अस्मान् प्रति तद्वत् त्वां प्रति तेनापि प्रकृतेर्दार्ढ्यं भूषणमिति सुवचत्वेन तव तन्मतनिरासायोगात्। तथा बौद्धेनापि सम्वित्तेरेव जगत्कारणत्वेऽभिहिते त्वद्दूषणेन सम्वित्तावनुपपन्नायां सत्यां तस्योत्तरास्फूर्तौ दार्ढ्यं भूषणमित्युक्त्या सोऽपि कृती स्यादतस्तव तन्निरासायोगादित्याभिसन्धिः। विपक्षे बाधकमाह। **अन्यथेति**। मृषाभूतस्य व्यावहारिकव्यवस्थानङ्गीकारे, प्रधाने जीवे च जगज्जन्मादिकर्तृत्वं निरस्य मिथ्यात्वं सम्पाद्य व्यावहारिकत्वं तयोरङ्गीकृतमित्यर्थः। औपाधिकभेदं निरस्य स्वमतसिद्धान्तमुपसंहरन्नाह। **तस्मादिति**। **बद्धमुक्तेति**। कश्चिज्जीवो बद्धः कश्चिन्मुक्त इति बद्धव्यवस्थाया जीवानां परस्परभेदसिद्धौ सुतरामीश्वरे स्वाभाविकभेदः सिद्धः। यदि बद्धमुक्तयोर्भेदो न स्यात्तदा बद्धस्य दुःखानुसन्धानेन मुक्तस्यापि तदापत्तिः, मुक्तस्य दुःखाननुसन्धानेन बद्धस्यापि तदनापत्तिरित्यर्थः। इत्यौपाधिकभेदनिरसनमुखेन भेदस्य पारमार्थिकत्वं समर्थितम्। यथा स्वप्नो यावदविद्या तावत्पर्य्यन्तं तिष्ठति तथा बन्धमोक्षगुरुशिष्यादिव्यवस्थोपपद्यत इति शङ्कते। **नन्विति**। एकजीवपक्षमभिप्रेत्य परिहरति। **नेति**। पुनः शङ्कते। **नन्विति**। नच समष्ट्यभिमानिनो हिरण्यगर्भादेः स्वीकारान्नोक्तदोष इति वाच्यम्। सर्वाभिमानिनो हिरण्यगर्भस्य जीवत्वस्वीकारे तस्य कल्पान्तरे मुक्त्या सर्वमुक्त्यापत्तेः। दूषणान्तरमाह। **प्रत्यक्त्वेति**। प्रत्यक्त्वं नाम स्वस्मै भासमानत्वं पराक्त्वं परस्मा एव भासमानत्वमित्यर्थः। तदेवोपपादयति। **नहीति**। अन्तःकरणानां नानात्वमङ्गीकृत्यैकजीववादेऽहन्त्वमादिव्यवहारमुपपादयन् शङ्कते। **नन्विति**। सौभरिप्रभृतिषु नानाशरीरधारणं पुराणेषु श्रूयते तत्र नाना-

ननु बन्धमोक्षादिव्यवस्थायाः स्वप्नवद्यावद्विद्यमुपपद्यमानत्वमेवेति चेन्न, तस्मिन्नेकस्मिन्नपि सुप्ते सर्वजगदप्रतीत्यापत्तेः । ननु समष्ट्यभिमानिनोऽस्वापान्नोक्तदोषापत्तिरिति चेन्न, सृष्टिमारभ्याप्रलयाप्रसुप्तत्वस्य जीवेऽसम्भवात् । जीवैक्याङ्गीकारे अहं त्वमयमिति प्रत्यक्त्वपराक्त्वप्रत्ययानामुच्छेदापत्तेः । नहि देवदत्तस्य त्वमितिधीविषयस्याहमिति धीविषयत्वं युक्तमित्यर्थः । ननु नायं दोषः भिन्नभिन्नान्तःकरणभेदाध्यासेन तत्तदन्तःकरणमादयाहं त्वमादिप्रत्ययानां सविषयत्वव्यवस्थोपपत्तेरिति चेन्न, योगिनः कायव्यूहे नानान्तःकरणतादात्म्यारोपेऽप्यहमित्येव प्रतीतेः । नच तत्रान्तःकरणस्यैकत्वमेवेति वाच्यम् । वाह्यकरणानामप्यैकत्वापत्त्या कायव्यूहस्यैवासम्भवात् । किञ्च त्वन्मते एकस्यैव चितः सर्वान्तःकरणैरभेदाध्यासेन चत्रस्य शुक्तिसाक्षात्कारेण रूप्यभ्रमनिवृत्त्यावन्येषामपि तन्निवृत्त्यापत्तिः । अन्तःकरणस्य भोगाद्यव्यवस्थापकत्वात् । अन्यथा योगिकायव्यूहे देहोऽपि भोक्तृभेदकस्स्यात् । अथ चैक एव जीवः सर्वकल्पकस्तेनैव सर्वमिदं कल्पितमिति चेन्न । जीवस्य कारणतां निषिध्य परमेश्वरत्वबोधकानां श्रुतीनां बाधापत्तेः । सार्वज्ञ्यबोधकश्रुतीनां निर्विषयत्वापत्तेश्च । जीवभिन्नेशाभावात् जीवे सार्वज्ञ्यस्यानुभवविरोधाच्च । नच समष्ट्यभिमानिनो जीवस्यैव सार्वज्ञ्यादियोगोऽभ्युपगम्यत इति वाच्यम् । लोके जीवत्वेन प्रसिद्धेषु सार्वज्ञ्यादेः प्रत्यक्षादिना बाधितत्वात् । प्रसिद्धभिन्नस्य सार्वज्ञ्यस्वीकारे तस्यैवेश्वरत्वेनेष्टापत्तेरिति सङ्क्षेपः । द्वितीये चेतनानेकत्वपक्षे तद्भेदस्यौपाधिकत्व उक्तदोषाणां योगः । किञ्चौपाधिकभेदाङ्गीकार उपाधिगमनकाले तदवच्छिन्नस्य कौटस्थ्यात् गत्यभावेन पदे पदे बन्धमोक्षौ

---

न्तःकरणसत्वेऽप्यहमित्येव प्रतीतिरित्याशयेन दूषयति । **नेति । योगिन इति ।** कायव्यूहे=नानाशरीरे । तत्र=कायव्यूहे । तत्र हेतुमाह । **वाह्यकरणानामिति ।** एकजीववादे दोषान्तरमाह । **किञ्चेति । एकस्येति ।** तत्तन्मनोवच्छिन्ननानादेहाभिमानिनश्चैतन्यस्यैक्यादित्यर्थः । अन्तःकरणभेदाद्व्यवस्थोपपद्यत इत्यतआह—**अन्तःकरणस्येति ।** यद्यन्तःकरणस्यैव भेदनियामकता नतु देहस्येत्यत्र किं नियामकमित्याह । **अन्यथेति ।** कायव्यूहे देहभेदेऽपि भोक्ता एक एवेत्याशयः । पुनरेकजीववादी प्रत्यवतिष्ठते । **अथेति ।** सर्वम्=प्रपञ्चमात्रं नतु तदन्यः परमात्मेति जीवैक्यवादिन आशयः । परिहरति । **नेति ।** जीवभिन्नेशाभावादिति एकजीवप्रकरणाल्लभ्यत इत्याशयः । तस्यैव=प्रसिद्धभिन्नसर्वज्ञस्येत्यर्थः । यस्मै ब्रह्मभावापत्तिलक्षणो मोक्षः प्रयोजनत्वेनाभ्युगम्यते तस्य चेतनस्यैकत्वमनेकत्वं वेति यत् प्रागुक्तं तत्र चैतन्यस्यैकत्वपक्षं निरस्य द्वितीयपक्षं निरसितुमाह । **द्वितीय इति ।** द्वितीयकल्पं स्फुटयति **चेतनेति ।** तद्भेदस्य=चेतनभेदस्य । **उक्तदोषाणामिति ।** उपहितस्योपाधिकृतत्वेनोपाधेः शुद्धगतत्वमेव वक्तव्यं तथात्वे च किमकैकोपाध्यपगमे मोक्षः उत सर्वोपाध्यपगमे ? आद्ये सदा मुक्तिरेव नतु बन्ध इत्यापातादित्यादिग्रन्थेनोक्ता दोषा अनुसन्धेया इत्यर्थः । दोषान्तरमाह । **किञ्चेति ।** पदे पदे=क्षणे क्षणे=उपाधिसंयुक्तस्यात्मन आकर्षणाभावादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ स्यातामित्यर्थः । आकर्षणमन्तरा नोपाधिपरिहारसम्भवस्तथासति ब्रह्मण उपाधिविशिष्टतया कृत्स्नस्याकर्षणं स्यात् । निरंशस्य व्यापिन आकर्षणं न सम्भवतीतिचेत्तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोष इत्याशयः । तदेवोपपादयति । **अनादिबद्धस्येति ।**

स्याताम् । अनादिवद्धस्याकस्मात्साधनं विनैव मोक्षः । कूटस्थनित्यशुद्धबुद्धमुक्तस्वभावस्याकस्मान्निष्कारणमेव बन्ध इत्यर्थः । कृतनाशाकृताभ्यागमप्रसङ्गश्च । स्वाभाविकत्वे चास्मत्पक्षप्रवेशोऽद्वैतभङ्गश्च । (अथ प्रतिविम्बवादस्य खण्डनम्)

ननु माभूदुपाध्यवच्छिन्नस्योक्तदोषकदम्बाज्जीवत्वम् । किन्तु चेतनप्रतिविम्ब एव जीवस्तस्याविद्यया अन्तःकरणस्यैवोपाधेः कल्पितत्वेन तन्नाशे जीवब्रह्मैक्यसिद्धिरिति चेन्न । प्रतिविम्बभावे, उपाधेर्विम्बस्य च सावयवत्वरूपवत्त्वप्रमाणविषयत्वादीनां तत्कारणानामभावात् । तथाहि—विम्बरूपो रूपी प्रत्यक्षविषयोऽवयववान्वा नीरूपप्रमाणाविषयो निरवयवो वा ? । नाद्योऽनङ्गीकारात् । अन्यथा निर्विशेषाद्द्वितीयवादभङ्गापत्तेः । न द्वितीयोऽसम्भवात् । नीरूपस्य रूपस्य प्रत्यक्षगोचरस्वाश्रयद्रव्यविशिष्टस्यैव सावयवे प्रत्यक्षगोचर एव द्रव्ये प्रतिविम्बभावापत्तिदर्शनान्न केवलस्यातो न तत्र व्यभिचारश्शङ्कनीयः । नचाकाशस्य निरवयवनीरूपस्यापि प्रतिविम्बदर्शनाद्व्यभिचार इति वाच्यम् । पञ्चीकृतस्याकाशस्य सावयवत्वरूपित्वचाक्षुषत्वादीनां सत्वेन प्रतिविम्बस्याविरुद्धत्वात् । अपञ्चीकृतस्य केवलस्य तु प्रत्यक्षगोचरत्वाभावेन प्रतिविम्बकल्पनाया अप्रामाण्यात् । अन्यथा कालधर्मादीनां शब्दस्पर्शादौ वायुपिशाचादीनाञ्चाचाक्षुषाणां कालादौ प्रतिविम्बनापत्तेः ।

---

**कृतनाशेति** । यत्कृतं श्रवणादिकं साधनादि तेषां नाशः, अकृतस्य सुखदुःखादेरुत्पादस्स्यादित्यर्थः । अनेकजीववादेऽपि स्वाभाविक एव भेद इति भङ्ग्यन्तरेणाह । **स्वाभाविकत्व इति** । एतावता प्रवन्धेनावच्छिन्नजीववादो निरस्तः सम्प्रति प्रतिविम्बवादं निरसितुं तन्मतमनूद्यते । **नन्वित्यादिना** । एकमेव चैतन्यं विम्बत्वाक्रान्तमीश्वरचैतन्यं प्रतिविम्बत्वाक्रान्तं जीवचैतन्यं विम्बप्रतिविम्बकल्पनोपाधिश्चैकजीववादेऽविद्या, अनेकजीववाद अन्तःकरणान्येवाविद्यान्तःकरणोपाधिप्रयुक्तो जीवेश्वरयोर्भेदः तस्योपाधिकल्पितत्वेन तन्नाशे जीवब्रह्मणोरैक्यमित्यर्थः । रूपादिहीनस्य ब्रह्मणो न प्रतिविम्बसम्भवः रूपादिमत एव तथात्वदर्शनादित्याह **प्रतिविम्बभाव इति** । प्रतिविम्बभावे यानि कारणानि सन्ति तेषामभावान्न प्रतिविम्बभावस्सम्भवति तानि विकल्प्य दूषयितुमाह । **तथाहीत्यादिना** । रूपवत्व-प्रत्यक्षविषयत्व-सावयवत्वादिकं प्रतिविम्बभावप्रयोजकं ब्रह्मण्यस्ति नवा ? अस्ति चेत् निर्विशेषचिन्मात्रवादस्य भङ्गः स्यात् । नास्ति चेत्तदा कारणाभावात्प्रतिविम्बभावो न सिद्ध्येदित्याशयेनाद्यपक्षं निरस्यति । **नाद्य इति** । **अनङ्गीकारादिति**-रूपवत्वप्रत्यक्षविषयत्वसावयवत्वादीनां निर्विशेषे ब्रह्मण्यनङ्गीकारादित्यर्थः । विपक्षे बाधकतर्कं दर्शयति । **अन्यथेति** । रूपादिमत्व इति तदर्थः । नीरूपत्वप्रमाणाविषयत्वनिरवयत्वादिधर्माणां निर्विशेषे ब्रह्मण्यसम्भवात् द्वितीयपक्षोऽपि हेय इत्याह । **न द्वितीय इति** । गुणे गुणानङ्गीकारान्नीरूपस्यापि रूपस्य प्रतिविम्बदर्शनाद्व्यभिचारमाशङ्क्य तं निरस्यति । **नीरूपस्येति** । **स्वाश्रयेति** स्वं रूपमित्यर्थः । रूपादिमतो द्रव्यस्यैव प्रतिविम्बो दृश्यते नतु केवलस्य रूपस्य द्रव्यातिरेकेण केवलस्य रूपस्य कुत्रापि प्रतीतिरदृष्टत्वात् तथाच न तत्र व्यभिचारशङ्काकलङ्कावकाश इत्यर्थः । पुनरप्याकाशे व्यभिचारमाशङ्क्य परिहरति । **नचेति** । पञ्चीकृत आकाशे सावयवत्वादीनां सत्वान्न तत्र व्यभिचारावकाशस्तद्रहिते तु गगने न प्रतिविम्बभाव इत्याशयेनाह । **पञ्चीकृतस्येति** । बाधकतर्कमुपन्यस्यति । **अन्यथेति** । नीरूपस्यापि प्रतिविम्बाभ्युपगम इत्यर्थः । नीरूपाणां कालधर्मादीनां वायुपिशाचादीनाञ्च शब्दस्पर्शादौ प्रतिविम्बभावापत्तिरित्याह । **कालेति** । प्रकारान्तरेणाप्युक्तव्यभिचारं निरस्यति । **किञ्चेति** । विपक्षे बाधकतर्कमुपन्यस्यति । **अन्यथेति** । सूर्यचन्द्रादिप्रभामण्डलयुक्तस्याकाशस्य प्रतिविम्बभावानङ्गीकार

तच्च दृष्टश्रुत्यगोचरत्वादनुपपन्नम् । किञ्च सूर्यचन्द्रादिप्रभामण्डलयुक्तस्यैवाकाशस्य प्रतिविम्बभावापत्तिर्न केवलस्यान्यथान्धकारेऽपि तद्दर्शनापत्तिरतो न तत्र व्यभिचारावकाशः । किञ्चोपाधिसम्बन्धो जीवे स्वाभाविकः औपाधिको वा ? नाद्यस्तन्मतेऽनिर्मोक्षप्रसङ्गात् । न द्वितीयः अनवस्थान्योन्याश्रयाच्च । नचोपाधिरेव स्वसम्बन्धहेतुरिति वाच्यम् । आत्माश्रयात् । वस्तुतस्तु विम्बसमसत्ताक एवोपाधौ लोके प्रतिविम्बदर्शनात् प्रकृते ऽविद्याद्युपाधीनां ब्रह्मसमसत्ताकत्वाभावान्नेष्टसिद्धिरन्यथा मृगमरीचिकाजलेऽपि सूर्यादिप्रतिविम्बदर्शनापत्तिः । नच दर्पणस्थनेत्रप्रतिफलितमुखादिदर्शने व्यभिचारः । सोपाधिकारोपे दृष्टस्य स्ववाध्यौपाधिकत्वस्य तत्रासत्वेन नेत्रदेशावच्छेदेन तन्मुखप्रतिफलनमित्यङ्गीकारात्, तत्राप्युभयोः प्रतिविम्बयोः प्रतिविम्बभावेन स्थितत्वेऽपि विम्बसमसत्ताकोपाध्युपहितत्वस्य नियामकत्वान्न व्यभिचारः । किञ्चोपाधेर्विम्बान्यदेशावस्थान एव प्रतिविम्बभावो नत्वेकत्रैव; प्रकृते तदभावादिष्टासिद्धिः । अयम्भावः उपाधिर्ब्रह्मैकदेशवृत्तिः व्याप्यवृत्तिर्वा ? नाद्यः, ब्रह्मणः सदेशत्वापत्तेर्निर्विशेषत्वहानिः । द्वितीये सर्वस्याप्युपाधिमत्त्वे प्रतिविम्बनासिद्धिः सुतरां-

---

इत्यर्थः । तद्दर्शनापत्तिः=प्रतिविम्बदर्शनापत्तिः तत्र=आकाशे । उपाधिसम्बन्धं विकल्प्य दूषयति । **किञ्चेति** । नहि शिल्पिसहस्रेणापि नीलस्य पीतत्वं कर्तुं शक्यते इति स्वाभाविकस्योपाधिसम्बन्धस्यानिरासात् मोक्षाभावापत्तेरिति नाद्यः पक्षः साधीयानित्याह । **नाद्य इति** । अविद्यासम्बन्ध औपाधिकः सोऽप्यौपाधिक इत्येवं परंपरयाऽनवस्था प्रसज्येत इति द्वितीयपक्षं निरस्यति । **न द्वितीय इति** । **अन्योन्याश्रयाच्चेति** । उपाधिसम्बन्धाज्जीवसत्वं जीवसत्वादुपाधिसम्बन्धसत्वमित्यन्योन्याश्रयादित्यर्थः । उपाधिसम्बन्धोत्पत्तावुपाधिरेव हेतुरिष्यत इत्याशङ्क्य परिहरति । **न चेति** । आत्माश्रयात्=स्वोत्पत्तौ स्वस्यापेक्षणादात्माश्रय इत्यर्थः । विम्बसमसत्तायामुपाधौ प्रतिविम्बभावो नतु विषमसमसत्ताकयोस्तयोरित्याह । **वस्तुतस्त्विति** । अविद्याद्युपाधीनामिति जीवैक्यानेकवादाभिप्रायेणोक्तम् । एकजीववाद अविद्याया उपाधित्वमनेकजीववादे अन्तःकरणस्योपाधित्वमिति तेषां कल्पनेत्याशयः। विपक्षे वाधकतर्कं दर्शयति । **अन्यथेति** । उपाधिविम्बयोः समसत्ताकत्वाभाव इत्यर्थः । समसत्ताकयोरेवोपाधिविम्बयोरेव विम्बप्रतिविम्बभाव इति नियमे व्यभिचारमाशङ्क्य परिहरति । **नचेति** । दर्पणादौ मुखप्रतिविम्बताप्रयोजकविम्बसमसत्ताकत्वसत्वेऽपि दर्पणस्थनेत्रे मुखप्रतिविम्बितं यन्मुखादि तत्र विम्बसमसत्ताकत्वं दर्पणस्थनेत्ररूपोपाधौ नास्तीति व्यभिचार इत्यर्थः । दर्पणस्थनेत्रे जायमानमिदं मुखमिति ज्ञानं भ्रमात्मकमेव नतु मुखस्य प्रतिविम्बस्तथाच तत्र नोक्तनियमस्य व्यभिचारावकाशो यद्येवमाशङ्केत तन्निराकुर्वन्नाह । **सोपाधिकारोप इति** । आरोपो द्विविधो निरुपाधिकसोपाधिकभेदात् । आत्मन्यहङ्कारारोप आद्यः । द्वितीयस्तावदेकस्मिन्नेव ब्रह्मण्युपहिते जीवेश्वररूपेण भेदावभासः । तदुक्तं "दोषेण कर्मणा वापि क्षोभिताज्ञानसम्भवः । तत्त्वविद्याविरोधी च भ्रमोऽयं निरुपाधिकः ।" उपाधिमात्रसन्निधिप्राप्तक्षोभाविद्याविजृम्भितम् । उपाध्यगमापोह्यमाहुः सोपाधिकभ्रमम्" इति । सोपाधिकारोपे जाते उपाधिर्न ज्ञायते तेन सोपाधिकारोप उपाधिज्ञानं प्रति प्रतिबन्धक इति कल्प्यत इत्याह । **स्ववाध्योपाधिकत्वस्येति** । स्वेनारोपेण वाध्योऽप्रतीत उपाधिर्यस्यारोपस्य तत्कत्वमित्यर्थः । दर्पणस्थनेत्रे मुखारोपस्य नेत्ररूपोपाधिप्रतीतिं प्रति प्रतिबन्धकत्वाभावान्न तत्र सोपाधिकारोपत्वस्य सम्भावनापीत्यर्थः । तत्र=दर्पणस्थनेत्रप्रतिफलितमुखादिदर्शने । स्ववाध्योपाधिकत्वस्यासत्वेनेत्यर्थः । एतेन तत्रारोपो निरस्तः । **नेत्रदेशावच्छेदेनेति** । नेत्रदेशावच्छेदेन दर्पणोपाधौ मुखस्य प्रतिविम्बान्तर एवाभ्युपेतव्यो नतु मुखस्यारोप इत्यर्थः । एतेन मुखप्रतिविम्बतायां नेत्रदेशोऽवच्छेदको नतूपाधिरिति स्फोरितम् । तत्रापि

शुद्धत्वहानिश्च। इतरथा जलनिमग्नानामपि जलौकसां प्रतिबिम्बो दृश्येत ननु तदस्ति तथा प्रकृतेऽपि बोध्यम्। तस्माद्बिम्बप्रतिबिम्बवज्जीवब्रह्मैक्यं वक्तुमशक्यत्वात्सर्वथानुपपन्नमिति सिद्धम्।

( इति बिम्बप्रतिबिम्बवज्जीवब्रह्मैक्यस्य निरसनम् )

किञ्च 'आचार्यवान् पुरुषो वेद' इति श्रुतेरेकजीववादे ह्युपदेष्टव्याद्न्यस्य चेतनस्याभावादुपदेष्टुरभावे तत्वज्ञानासम्भवस्तस्मिंश्च मोक्षासम्भवः। नच कल्पिततत्वस्योपदेष्टत्वं शास्त्रोक्तलक्षणलक्षितस्यैव तथात्वश्रवणात् 'स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति' श्रुतेः। नच स्वाप्नस्य गुरोरिवोपदेष्टृत्वेऽपि सत्यभावेन तथात्वोपपत्तिरिति वाच्यम्। स्वाप्नस्य गुरोरज्ञाननिवर्त्तकत्वादर्शनात्। अन्यथा 'यदेव भगवान्वेद तदेव मे ब्रूहि' इति श्रुतेः'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः' इति स्मृतेश्च व्याकोपात्। किञ्चोपदेष्टुर्गुरोर्निश्चिताद्वैततत्वं नवा ? नाद्यः। अद्वैतज्ञानवतः पुंसो द्वैतदर्शनात्मकशास्त्रप्रणयनासम्भवात्। द्वितीये च प्रतारकत्वापत्तिः अन्धपरम्परान्यायापत्तिश्च। किञ्चानादिसंसारे

---

दर्पणेऽपि। उभयोः—दर्पणे मुखस्यैकः प्रतिबिम्बः, दर्पणे नेत्रप्रदेशावच्छेदेन मुखस्य प्रतिबिम्बोऽपरश्चेत्यर्थः। नियामबिम्बसमसत्ताकेति। बिम्बेन समा सत्ता यस्यैवम्भूत उपाधिर्दर्पणादिस्तदुपहितत्वं तद्विशिष्टत्वं तस्येत्यर्थः। नियामकत्वादिति। प्रतिबिम्बतायां प्रयोजकत्वादित्यर्थः। देशविशेषस्थत्वरूपं बिम्बोपाध्योराभिमुख्यं प्रतिबिम्बतायां प्रयोजकमिति नियममनुसृत्याह। किञ्चेति। बिम्बान्यदेशे भूतलादिस्थितदर्पणादौ मुखस्य प्रतिबिम्बो यथा दृश्यते तथा प्रकृते नास्ति बिम्बे ब्रह्मण्येवोपाधिभूताया अविद्याया अवस्थानात् न तत्र ब्रह्मणः प्रतिबिम्बो घटत इत्यर्थः। ननु चैतन्याविद्ययोर्व्यापकत्वादाभिमुख्यमस्तीत्यत आह अयम्भाव इति। उपाधिब्रह्मण एकांशेन वर्त्तते सर्वांशेनेति विकल्पयति। उपाधिरिति। इतरथेति अन्यथेत्यर्थकम्। उपाधेर्बिम्बान्यदेश अवस्थानत्वं प्रतिबिम्बताप्रयोजकमिति नियमाङ्गीकार इति तदर्थः। तदस्तीति। प्रतिबिम्बोऽस्ति। तथेति। प्रतिबिम्बप्रयोजकीभूताया अविद्याया ब्रह्मणोऽन्यत्रावस्थानाभावान्न प्रतिबिम्बवादः कथमप्युपपद्यत इत्यर्थः। फलितार्थं प्रदर्शयन्नुपसंहरति। तस्मादिति।

( बिम्बप्रतिबिम्बवज्जीवब्रह्मैक्यस्य निरसनम् )

सिंहावलोकन्यायेनैकजीववादं दूषयितुमाह। किञ्चेति। यः कल्पको जीवस्तस्यापि भ्रान्तितत्वज्ञानमुपदेशसाध्यमित्याह। आचार्य्यवानिति। नचान्यस्तत्वविद्गुरुरस्तीत्याशयेनाह। एकजीववाद इति। स्वप्नवत्तत्ववित्वेनैवान्यो गुरुः कल्पित इत्याशङ्क्य निराकरोति नचेति। तथात्वश्रवणात्। उपदेष्टृत्वश्रवणात्। स्वप्ने तु शब्दविशेषवक्तृत्वेनैव गुरुकल्पना नतूपदेशसाध्यज्ञानविषयत्वविशेषवित्वेन। तथाच स्वाप्नस्य गुरोर्नाज्ञाननिवर्त्तकत्वमित्याह। स्वाप्नस्येति। विपक्षे बाधकतर्कमुपन्यस्यति। अन्यथेति। स्वाप्नगुरोरप्यज्ञाननिवर्त्तकत्व इत्यर्थः। तत्वदर्शिनः शास्त्रार्थभूततत्वसाक्षात्कारा श्रयस्तेऽनुभ्यं ज्ञानं जीवेश्वरस्वरूपयाथात्म्यमुपदेक्ष्यन्ति। तत्वदर्शिभिरेवोपदिष्टे ज्ञाने सर्वं फलदं कर्मान्तर्भवति नत्वन्योपदिष्ट इत्यर्थः। विकल्पयति। किञ्चेति। आद्यविकल्पं निरस्यति। आद्य इति। द्वितीयविकल्पमपि परिहरति। द्वितीय इति। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। योऽयमिति। देवानां मध्ये यो यो देवः ब्रह्म प्रत्यबुध्यत स एव तज्ज्ञानानुसारेण सर्वात्मभूतपरमात्मकोऽभवत्, तथा ऋषीणां मध्ये यो य ऋषिर्यथा तत्प्रत्यबुध्यत तथा स एव तदभवत्, एवं मनुष्याणामित्यर्थः। नित्यानां बहव इति। सर्वत्र बहुवचननिर्देशाज्जीवानां बहुत्वम्। चेतनश्चेतनानामिति निर्धारणस्य, अजोऽन्य इत्यत्र भेदस्य च बोधनादुक्ताभिः

कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभून्नवा ? आद्ये जीवस्यैकत्वेनेदानीं संसारानुपलब्धिप्रसङ्गः। द्वितीये शुकादीनां मुक्तिर्यदि नासीत्तर्हि ममापि न भविष्यतीति शङ्कया वेदान्तश्रवणादौ प्रवृत्त्यनुपपत्तिः। नच शास्त्रप्रामाण्यदार्ढ्यात् प्रवृत्त्युपपत्तिरिति वाच्यम्। एवञ्चेच्छ्रुतिप्रामाण्यदार्ढ्यादेव सदासिद्धो जीवभेदः श्रुतिप्रमितः केषाञ्चिन्मोक्षश्च कुतो नाङ्गीक्रियते 'यो यो देवानां प्रत्यबुद्धयत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'नित्यो नित्यानामि' त्यादिश्रुतिभ्यः। 'अतीतानागताश्चैव यावन्तः सहिताः क्षणाः। ततोऽप्यनन्तगुणिताः जीवानां राशयः पृथक्'' इत्यादिस्मृतिभ्यश्च। तस्मात्तन्मते मोक्षस्य स्वरूपत्वेन सदैव स्वत एव प्राप्तत्वादबन्धस्य चाविद्यकत्वेन मृगतृष्णाकल्पितोदकेनैव तन स्पर्शासम्भवात्तन्निवृत्तये शास्त्रप्रणयनस्य श्लेष्मविलोडनमात्रत्वेन सुतरां वैयर्थ्यम्। शुद्धस्य नित्यमुक्तत्वात् बद्धस्य च तुच्छत्वात् कस्य मुक्तये प्रयासविशेषः मुमुक्षोरेवासिद्धेस्तस्मात्प्रयोजनासिद्धेश्शास्त्रारम्भो व्यर्थ एव।

---

श्रुतिभिर्भेदस्य च तात्त्विकत्वं समर्थितं भवतीति भावः। उक्तार्थं स्मृतिमुखेनाप्याह। **अतीतेति**। फलितार्थं निगमयति। **तस्मादिति**। तन्मते=मायावादिमते। स्वरूपत्वेन=ब्रह्मस्वरूपत्वेन। स्वत एव=श्रवणमननादिसाधननैरपेक्ष्येण इत्यर्थः। **स्पर्शासम्भवादिति**। स्वभावशुष्कमरुभूमौ मृगतृष्णाकल्पितोदकस्य कदापि न स्पर्शस्तद्वत् स्वयं प्रकाशे ब्रह्मणि तेजसि तम इव आविद्यकबन्धस्य कदापि न स्पर्श इत्याशयः। यदि प्रयोजनं परमते सिद्ध्येत्तदा शास्त्रारम्भस्य सार्थक्यमुपपद्येत नत्वेवमिति दर्शयन्नुपसंहरति। **तस्मादिति**। चैतन्यं प्राप्तमप्यनाद्यविद्यावशादप्राप्तमिवेति प्रेक्षितं भवति तथा स्वग्रीवगतमपि ग्रैवेयकं कुतश्चिद् भ्रमान्नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोतीत्याशङ्क्यापाकरोति। **नचेति**। दृष्टान्तवैषम्येन निराकरोति। **मण्युपदेशस्येति**। तत्तासम्भवात्=विस्मृत्यर्हतासम्भवात्। **सङ्क्षेपः इति**। अस्य विषयस्याधिक्येन विवेचनन्तु अध्यासगिरिवज्रे द्रष्टव्यम्। परमते नास्त्यधिकार्य्यादीनामुपपत्तिरित्याह। **एतेनेति**। प्रागुक्तवक्ष्यमाणदोषेणेत्यर्थः। अर्थिसमर्थो विद्वानधिकारीत्यधिकारिणो लक्षणम्। अर्थी=प्रयोजनवान्। समर्थः=प्रयोजनसम्पादनसमर्थः। विद्वान्=तत्साङ्गोपाङ्गस्वरूपवेत्ता। आद्यविशेषणेन निष्प्रयोजनानां स्थावराणाञ्चाधिकारो वारितः द्वितीयेन चासमर्थानां तृतीयेन च धर्मस्वरूपनिरूपणासमर्थनामधिकारो निराकृत इति विवेकः। तच्च लक्षणं परमते नोपपद्यते इत्याह। **प्रयोजनाभाव इति**। तदभावे=अर्थित्वाभावे इति परमते प्रयोजनाधिकारिणोर्निरासः इतरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिकवैदिकाश्च प्रवृत्ता इति तेषां सिद्धान्तः। तदनुसारेण विषयप्रयोजनाधिकारिणां प्रमाणप्रमेयादिव्यवहारान्तर्गतत्वात्सर्वमध्याससामर्थ्येन व्यवस्थापयितुं शक्यत इति शास्त्रस्य विषयस्तत्प्रयोजनञ्च व्युत्पादयन्नाह। **मन्मत इति**। अत्यन्ताभेदवादिमत इत्यर्थः। परिहरति। **नेति**। **अधिष्ठानेति**। अधिष्ठानञ्चारोप्यञ्च लक्षणञ्च सामग्रीचादिर्येषान्ते सामग्र्यादयस्तेषामभाव इति विग्रहः। तथाधिष्ठानासिद्धया अध्यासासिद्धिः। एवमारोप्यासिद्धया तदसिद्धिः। एवमग्रेऽपि द्रष्टव्यम्। सामान्यतो ज्ञातत्वे सत्यविज्ञातविशेषवत्त्वमधिष्ठानत्वे प्रयोजकमिति नियममनुसृत्याह। **तथाहीत्यादिना**। सामान्यधर्मश्च साधकः विशेषधर्मश्च बाधक इति विवेकः। यत्सामान्येन ज्ञातं सत् विशेषेणाज्ञातं स्यात्तदधिष्ठानं भवितुमर्हति दृष्टञ्चैतत् इदं रजतमित्यत्रेदन्तत्वरूपसामान्यधर्मो रजतस्य साधकः शुक्तावस्ति शुक्तित्वञ्च तस्य बाधकमित्याह। **सामान्यत इति**। तदेवोदाहरति। **यथेदमिति**। सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वं यदधिष्ठानत्वे प्रयोजकमुक्तं तद्विरुद्धयोर्निस्सामान्यत्वनिर्विशेषत्वधर्मयोः

नच स्वरूपस्य नित्यप्राप्तत्वेऽपि कण्ठस्थस्य नित्यप्राप्तस्य विस्मृतस्य मणेरुपदेशवदुपदेशः सार्थक इति वाच्यम् । मण्युपदेशस्य सुखं दुःखाद्यभावश्च फलं न च त्वन्मते स्वरूपभिन्नं प्राप्यं किञ्चिदस्ति स्वप्रकाशात्मकस्य नित्यप्राप्तत्वात् । किञ्च मणेर्देहादिभिन्नत्वेनाहन्तानास्पदत्वाद्विस्मरणविषयत्वं वक्तुं शक्यं ब्रह्मणस्तु स्वरूपत्वेन विस्मरणासम्भवान्नोक्त दृष्टान्तसिद्धिः । किञ्च मणेः स्वल्पपदार्थस्य देहैकदेशवृत्तित्वेन विस्मृत्यर्हत्वं भवेत् । आत्मनस्तु सर्वगतत्वेन स्वरूपत्वेन च तत्तासम्भवात् दृष्टान्तस्यात्यन्तवैषम्यमेवेति सङ्क्षेपः । एतेनाधिकार्य्युपपत्तिरपि निरस्ता प्रयोजनाभावेऽर्थित्वाभावस्तदभावे च सामर्थ्यविद्वत्त्वयोरकिञ्चित्करत्वादप्रयोजकमिति । मन्मते सर्वस्याप्यकार्य्यादिकथनस्याज्ञानप्रयुक्ताध्यासपूर्वकप्रमाणप्रमेयादिव्यवहारान्तर्गतत्वान्नोक्तदोषावकाशोऽध्यासमाहात्म्येन निखिलविरोधस्यापरिहरणीयत्वादिति चेन्न । अधिष्ठानारोप्यलक्षणप्रमाणसामग्र्याद्यभावेनाध्यासासम्भवस्य पूर्वाचार्य्यैर्विवृतत्वात् । तथाहि साधकबाधकोभयविधसामान्यविशेषधर्मवत्त्व-

---

ब्रह्मणि सत्वाच्च तस्याध्यासाधिष्ठानत्वं सम्भवतीत्याह । **त्वन्मते त्विति** । अत्यन्ताभेदवादिमत इति तदर्थः । तथाच ब्रह्मणः सामान्यधर्मत्ववादिना तावज्ज्ञातत्वं न सम्भवति निस्सामान्यत्वात् । अज्ञातविशेषवत्त्वञ्च न सम्भवति निर्विशेषत्वाङ्गीकारादिति भावः । विपक्षे बाधकतर्कमाह । **अन्यथेति** । उभयविधधर्माभ्युपगम इत्यर्थः । निगमयति । **तस्मादिति** । तत्प्रयोज्याध्यासासिद्धिः=अधिष्ठानप्रयोज्याध्यासासिद्धिः ।

## ( इत्यधिष्ठाननिरसनम् )

अधिष्ठानासिद्धिप्रयुक्ताध्यासस्य सिद्धिं व्युदस्य सम्प्रति आरोप्यासिद्धिनिबन्धनाध्यासस्य सिद्धिं निरसितुं तर्कान्तरमाह । **यद्यदारोपितमिति** । प्रधानम् आरोप्यस्य प्रपञ्चस्य सत्तापेक्षयाऽधिकसत्ताकं सत्यभूतमित्यर्थः । यथा शुक्तिरूप्यस्य मिथ्यात्वात्तदध्याससिद्ध्यर्थमर्थक्रियाकार्योपयोगस्थं रजतं सत्यमभ्युपेयते । एवमस्य प्रपञ्चस्य मिथ्यात्वसिद्ध्यर्थं प्रधानीभूतं सत्यं प्रपञ्चान्तरमभ्युपेतव्यं तस्य त्वन्मते सत्यरूपस्य प्रपञ्चान्तरस्याभावान्न विश्वस्मिन् कल्पितत्वं सिद्ध्यतीति भावः । प्रधानं नाम सजातीयं तच्च पूर्वपूर्वप्रपञ्चसजातीयत्वस्योत्तरप्रपञ्चे सत्वात्तदध्यासो ब्रह्मण्यापादयितुं शक्यते इति शङ्कते । **नन्विति** । सत्यार्थविषयकसंस्कारोऽध्यासे कारणं तव मते सत्यस्य प्रपञ्चस्याभावेन तद्विषयकसंस्कारानुपपत्तिरित्यत आह । **अध्यासो हीति** । स्वकारणतया=अध्यासकारणतया । प्रमाणजन्य एव संस्कारो भ्रमहेतुरतो विषयस्य सत्यत्वमावश्यकमित्यत आह । **नहीति** । संस्कारो नार्थजन्यो येन प्रधानमावश्यकं किन्त्वर्थज्ञानजन्यः ज्ञानञ्च प्रमेव भ्रमोपीति भावः । परिहरति । **नेति** । अनाद्यविद्यायाः साजात्यं न कुत्रापि दृष्टं श्रुतम्वेति न तस्या अध्यासो ब्रह्मण्यभ्युपगन्तुं शक्यते तस्याः पारमार्थिकत्वं प्रसज्येत न चेष्टापत्तिः द्वैतभङ्गभङ्गापत्तेरित्याह । **अनाद्यविद्यादेरिति** । अविद्यातिरिक्ताध्यासे प्रधानसजातीयत्वमपेक्षते नतु तदध्यास इत्याशङ्क्य परिहरति । **नचेति** । यदुक्तनियमं सङ्कोच्याविद्याया अध्यासः समर्थितस्तदा ब्रह्मणोऽप्यविद्यायां प्रपञ्चे वा भ्रमस्यात् तथासति तस्यासत्यत्वं प्रसज्येत । **ब्रह्मणोऽपीति** । एकत्र विद्यमान एवान्यत्रारोपयितुं शक्यत इति नियमेन प्रधानस्य सत्यत्वेन भाव्यमित्याह । **अपिचेति** । उक्तनियममेव तर्केण द्रढयति । **नहीति** । विषयस्य प्रतीतिमात्र एव हेतुत्वमित्याशङ्क्य परिहरति । **नचेति** । मात्रपदं स्वयं व्याचष्टे । **नन्विति** तद्विषयस्य=आरोपविषयस्य । असतः प्रतीतिरिति प्रतीतेः पूर्वं विषयस्यासत्वेन न कथमपीन्द्रियसन्निकर्षः सम्भवतीति भावः । दोषात्मककारणादेव प्रतीतिरुदेति नत्वर्थस्य सत्यत्वमपेक्षते इत्याशङ्क्यापाकरोति । **नचेति** । दोषात्मकं कारणं सद्वाम्, असद्वाम्वा ? आद्येऽद्वैतव्याघातः द्वितीये कारणत्वानुपपत्तिरित्य-

स्याधिष्ठानत्वे प्रयोजकत्वं सामान्यतो ज्ञातं विशेषेणाज्ञातमेवाधिष्ठानं लोके प्रसिद्धम् । यथेदं रजतमित्यत्रेदन्तासामान्यधर्मो रजतस्य साधकः शुक्तौ वर्त्तते शुक्तित्वञ्च विशेषधर्मस्तस्य बाधकः । त्वन्मते तु निर्विशेषाद्वितीयचिन्मात्रस्य वस्तुनोऽधिष्ठानत्वासम्भवउभयविधधर्मवत्त्वाभावादन्यथासिद्धान्तभङ्गः । तस्मादधिष्ठानासिद्ध्या तत्प्रयोज्याध्यासासिद्धि श्रुतिसङ्क्षेपः अथारोप्यासिध्याऽध्यासासिद्धिः । यद्यदारोपितं तत्तत्सप्रधानं शुक्तिरूप्यवत् यन्नैवं तन्नैवं शशशृङ्गवदित्यन्वयव्यतिरेकव्याप्तेस्सर्वसम्मतत्वात् । ननु प्रधानं सजातीयमस्त्येव पूर्वप्रपञ्चसजातीयस्योत्तरप्रपञ्चस्याध्यासाङ्गीकारात् । अध्यासो हि स्वकारणतया संस्कारमपेक्षते नतु संस्कारविषयस्य सत्यत्वमनुपयोगात् । नहि प्रमाणजन्यस्यैव संस्कारस्याध्यासहेतुत्वमिति नियम इति चेन्न । अनाद्यविद्यादेरध्यस्तत्वासम्भवेन तात्विकत्वप्रसङ्गात् । नचाविद्याध्यासस्य प्रधानादिविनैवाङ्गीकारान्नोक्तदोष इति वाच्यम् । ब्रह्मणोऽपि प्रवाहानाद्यारोपापत्तेरित्याकरे विस्तृतं पूर्वैः । अपिचासत आरोपासम्भवादेकत्र सत एवान्यत्रारोपनियमात् नहि स्वरूपेणासतः

---

भिप्रेत्याह । **दोषात्मककारणेति** । सदेव कार्योत्पादकं नासदित्याह । **कुत्राप्यसत इति** । असतः कार्यकालेऽन्यतो विशेषे शून्यत्वहानिः । अविशेषे च न नियमेन कार्यजन्म स्यादिति । तदुक्तं कुसुमाञ्जलौ श्रीमदुदयनाचार्य्यैः प्रथमस्तवके "उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्य्यनियमश्च कार्यकारणभावः । नचैकं पूर्वमपरञ्च । तत्वस्य भेदाधिष्ठानत्वात् अनुपाख्यस्य हेतुत्वे प्रागपि सत्वप्रसक्तौ पुनः सदातनत्वापत्तेरिति । किञ्चासति कार्यानुकूलशक्तिमत्वलक्षणं कारणत्वमेव दुर्घटम् अन्यथा कार्यानुकूलशक्त्यधिकरणत्वेन सद्रूपत्वं तस्य प्रसज्येतेत्यपि द्रष्टव्यम् । नन्वसतोऽपि सर्पस्य भयकम्पादिकार्यदर्शनात् कार्यस्य कारणसत्तापेक्षनियमे व्यभिचार इत्यत आह । **सर्पादीति** । विपक्षे बाधकतर्कमुपन्यस्यति । **अन्यथेति** । असतः सर्पस्य कारणत्वाभ्युपगम इति तदर्थः । कथं पुनरसतः कारणत्वमवसेयम् । इदमस्मान्नियतं प्राक् सदिति यत्र बुद्धिस्तत्कारणत्वेन व्यवह्रियते तच्च त्वया नानुमन्यत इत्यत आह । **कारणमात्रस्येति** । ज्ञानं प्रति विषयस्य कारणत्वमावश्यकमुत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टभया द दृश्यते विषयस्याकारणत्वे तदुत्कर्षाधानं कार्यं न स्यादिति-ज्ञानं प्रति विषयस्य कारणत्वेनैवोपपत्तावसद्विषयकज्ञानस्य कारणान्तरत्वकल्पने गौरवमिति शङ्कते । **नन्विति** । असद्विषयकज्ञानं प्रति दोषस्यैव कारणत्वं नत्वसतो विषयस्य असत्वेन कारणत्वासम्भवात् । अतः प्रपञ्चप्रतीतावपि दोषमात्रं करणं यथा तथा सर्पादिभ्रमं प्रत्यपि दोषस्य कारणतयैवोपपत्तावसद्विषयस्य कारणत्वकल्पने मानाभावादित्याशयेन परिहरति । **नेति** । तत्रापि=प्रपञ्चप्रतीतावपि । दोषात्मककारणस्यासत्वसाम्येन तव पक्षे न प्रतीतिलक्षणकार्योत्पत्तिर्भवितुमर्हति कार्यस्य कारणसत्तासापेक्षत्वनियमादिति भावः । उपसंहरति । **तस्मादिति** । **"इत्यारोप्यसिद्ध्याऽध्यासासिद्धिः ।" सङ्क्षेप इति** । यदि विश्वं कल्पितं स्यात्तदा प्रधानाधिष्ठानसादृश्योपेतं स्यात् । नच तदङ्गीकर्त्तुं शक्यते, सादृश्यं हि गुणकर्मादिकृतं वाच्यं तथाच जगदारोपाधिष्ठानस्य ब्रह्मणः प्रधानसादृश्यं वक्तव्यं तन्न सम्भवति गुणादिरहिते ब्रह्मणि गुणादिकृतसादृश्यायोगादतः प्रधानप्रतियोगिकसादृश्यकारणसाम्र्यभावान्न विश्वस्याध्यासो ब्रह्मणि सम्भवति । कल्पादौ तत्पूर्वं प्रधानविश्वस्याभावात् तद्भ्रमजन्यसंस्काराभावेन कल्पाद्ये भ्रमो न स्यात् । अतः कल्पान्तरीयजन्यजगद्भ्रमजन्यसंस्कारात्कल्पाद्ये भ्रम उत्पद्यत इत्येवं परंपरया संस्कारस्यानादित्वं वाच्यं सच संस्कारोऽधिष्ठानगत एवातएवाधिष्ठानसमसत्ताकस्तथासति तस्य सत्यत्वमङ्गीकार्यं तथात्वेऽद्वैतव्याघातः स्यात् । ननु संस्कारो यं प्रति संस्कारेणाध्यस्तसंस्कार एव हेतुर्न तस्य सत्यत्वं वाच्यम् । नच

शशशृङ्गादेरारोपः सम्भवति। अदृष्टश्रुतत्वात्। नचारोपे तद्विषयकप्रतीतिमात्रमेवापेक्षितं ननु तद्विषयस्य सत्यत्वमपीति वाच्यम्। असतः प्रतीतेरेवासम्भवात्। नच रज्जौ सर्पप्रतीतेरिव प्रपञ्चप्रतीतेरपि दोषमात्रमेव कारणमपेक्षितं ननु विषयसत्यत्वमपीति वाच्यम्। दोषात्मककारणस्याप्यसत्यसाम्येन तव पक्षे प्रतीतिविलक्षणकार्योत्पत्तेरसम्भवात्। कार्यस्य कारणसत्तापेक्षत्वनियमात्। कुत्राप्यसतः कारणत्वासम्भवाच्च। सर्पादिभ्रमस्थलेऽपि कल्पितसर्पादिविषयकज्ञानस्यैव भयकम्पादिहेतुत्वं न विषयस्य सर्पज्ञानाभाववतो बालस्य सत्सर्पदर्शनेपि भयाद्यभावात्। प्रत्युत तद्ग्रहणे प्रवृत्तिदर्शनाच्च। अन्यथा कारणमात्रस्यासत्वाङ्गीकारे कार्योत्पत्तिकथाया एवानवसरात्। नन्वसतो रज्जुसर्पादेस्तज्ज्ञानकारणत्वोपपत्तिवद्भयादिकारणोपपत्तिरपि सुकरा, भिन्नकारणाङ्गीकारे गौरवादिति चेन्न। तत्रापि दोषस्यैवासद्विषयकज्ञानकारणत्वेनासतो विषयस्य कारणत्वासम्भवात् तस्मादारोप्यासिद्ध्याऽध्यासासम्भवस्यावश्यकत्वमेवेति सङ्क्षेपः। अथाध्यासलक्षण सिद्ध्या तदसिद्धिः। किमध्यासलक्षणमित्यपेक्षायामाह स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इत्याहुः।

---

भ्रमरूपकार्ये सति अस्य संस्कारः पूर्वं वृत्त इति तस्य कार्यानुमेयत्वं कार्यैकज्ञेयधर्माणां यथा कार्यमुन्नयनादिति वाचनात्तथाच भ्रमात् प्राक् कार्यानुमेयस्य संस्कारस्याध्यासकारणत्वं नोपपद्यत इति वाच्यम्। भ्रमात् प्रागज्ञातस्य संस्कारस्य व्यावहारिकसत्वाभ्युपगमादुक्तदोषस्याप्रसक्तत्वात्। इति चेन्नाज्ञातस्याध्यासे तत्वे मानाभावेन तस्य पारमार्थिकत्वप्रसङ्गात्। ज्ञातस्यैवाध्यासो भवति नत्वज्ञातस्येति निर्विवादत्वात्। किञ्च कोवा संस्काराश्रयः? शुद्धब्रह्म जीवो वा? नाद्यः शुद्धत्वभङ्गात्। नापि द्वितीयः। अध्यासोत्तरभाविनो जीवस्य पूर्वसिद्धसंस्काराश्रयताया अनुपपन्नत्वात्। अतो न संस्कारस्याध्यासहेतुता सम्भवतीत्यधिकमन्यत्र द्रष्टव्यम्। लक्षणेन वस्तु सिद्ध्यति तदभावे तदभाव इत्यन्वयव्यतिरेकमुखेनाह। अध्यासेति तदसिद्धिः=अध्यासस्यासिद्धिः। यत्रहि योग्येऽधिकरणे पूर्वदृष्टस्य यस्यकस्यचिद्वस्तुनः सादृश्यादिसन्दर्शनवशात् प्रतिभासो भवति भवति तत्राध्यासलक्षणसमधिगमः। तथाहि, इदं रजतमिति पुरोवर्तिन्यां शुक्तौ यो रजतस्य प्रत्यवभासः सहि अध्यासस्य स्फुटमुदाहरणम्। एवमनात्मसु देहेन्द्रियादिष्वनवहितचेतसां पुंसामात्मभावभावनाऽपि न ततोऽतिरिच्यत इति। ननु शुक्तौ स्मर्यमाणं सत्यरजतमेवावभासते तथाचान्यथाख्यातिरेव कश्चिद् विशेषधर्ममवगाहमानः पृथगिव प्रत्यवभासते नत्वाध्यास इति शङ्कां निराकुर्वन्नाह। स्मृतिरूप इति। स्मर्यते इति स्मृतिः सत्यरतादिस्तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्यमाणसदृश इत्यर्थः। सादृश्यपदेन स्मर्यमाणारोप्यस्य भेदात्नान्यथाख्यातिः। सादृश्यमुपपादयति। पूर्वदृष्टेति। दृष्टं=दर्शनम्। संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासस्तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोपयोः सादृश्यं बोध्यते। तहर्यारोपस्य स्मृतित्वमेव विवक्षितमिति चेन्न। दोषसम्प्रयोगजन्यत्वस्यापि विवक्षितत्वेन तन्मात्रजन्यत्वाभावात्। सम्प्रयोगो नामाधिष्ठानसामान्यज्ञानम्, अहङ्काराध्यासे इन्द्रियसम्प्रयोगालाभात्। एवञ्च दोषसम्प्रयोगसंस्कारबलाच्छुक्तौ रजतमुत्पन्नमस्तीति परत्रावभासस्य लक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितम्। अध्यासो द्वेधा अर्थाध्यासो ज्ञानाध्यासश्चेति। मनुष्योऽहमित्यभिमन्यत इत्यर्थाध्यासः। तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासः। तत्राद्ये स्मर्यमाणसदृशः परत्र पूर्वदर्शनादवभास्यत इति योजना। द्वितीये-स्मृतिसदृशः परत्र पूर्वदर्शनादवभास इति वाक्यं योजनीयमित्याशयः। मूलाविद्याध्यासे संस्कारादिघटितसाम-

नैतद्युक्तं मूलाविद्याध्यासे तदसम्भवस्य दुर्वारत्वात् एकत्र सतोऽन्यत्रारोपत्वं भ्रमत्व-मत्यन्तासतोऽध्यासायोगादित्युक्तं प्रागेव। इदं रजतमिति प्रतीतिवदियमविद्येति कस्यचित्क-दाचिदपिप्रतीत्यभावात् संस्कारसादृश्यसम्प्रयोगसामग्रीविरहाच्च। नच संस्कारजन्यज्ञान-विषयत्वं सादृश्यमिति वाच्यं, संस्कारस्यानुभवपूर्वकत्वेन तदभावे संस्कारासिद्धेस्तदसिद्धौ तज्जन्यज्ञानाभावस्तदभावेच कथं तद्विषयत्वरूपं सादृश्यमिति। किञ्चाविद्यासादृश्यं कस्मिन् वर्त्तत इति वक्तव्यं? न शुद्धे तस्य निर्विशेषत्वादन्यथाशुद्धत्वहानिःस्यात् नापिजीवे तस्याध्यस्तत्वेनोत्तरभावित्वात्। किञ्चाविद्यायां चितोऽध्यासेऽपि चित्सादृश्यस्य कथं वृत्तिरिति वक्तव्यं सूर्यसादृश्यस्य तमस्यसम्भववत्महद्विरोधात्। अथ स्मृतिरूप इत्यस्य यथा-श्रुतार्थे भ्रान्तेर्व्यावृत्तिर्न कर्त्तुं शक्यते तन्निरासाय स्मृते रूपमिव रूपमस्येत्यर्थ स्तत्रयावश्यमभ्युपेतव्यः तेन स्मर्य्यमाणसदृश इति लभ्यते तदपि न युक्तम्।

प्रथमाध्यासे स्मर्यमाणस्यैव शशशृङ्गायमाणत्वात् कुतस्तत्सादृश्यसम्भावनापीति सम्प्रयोगो नामाधिष्ठानसामान्यज्ञानमिति परेषां सिद्धान्तः। तदपि न सम्यक्। निर्वि-शेषे सामान्यविशेषवत्वाभावात्। कल्पितसामान्यादिधर्मस्याध्यासजन्यत्वेन तदानीम-भावाच्च। किञ्च तवाभिमताधिष्ठानसामान्यज्ञानाश्रयाभावेन कुत्राप्यवृत्तित्वात् ज्ञातुर-भावाज्ज्ञानासिद्धेः। किञ्च सामग्रीविरहादध्यासासम्भवः कारणाभावे कार्याभाव इति

---

अ्यभावान्नोक्तलक्षणस्य सत्वं तथाचाव्याप्तिप्रसक्तत्वान्नेदं लक्षणं सम्भवदुक्तिकमित्याशयेनोक्ताध्यासलक्षणं निरस्यति **नैतदिति**। वणिग्वीथौ स्थितस्य रजतस्य सत्यत्वात् शुक्तौ तमारोपयितुं शक्यते। अत्यन्तासतः प्रपञ्चस्य ब्रह्मण्यध्यासो भवितुं नार्हति इत्याह **एकत्रेति**। **प्रागेवेति**—यद्यदारोपितं तत् सप्रधानं दृष्टमित्यादिग्रन्थेन विवेचितम्। सर्वं हि वस्तुजातं प्रतीत्या व्यवस्थाप्यमिति नियमेन प्रकृत इयमविद्येति प्रतीत्यभावान्न तदारोपो ब्रह्मणि सम्भवति आरोपे तद्विषयकप्रतीतिमात्रापेक्षितत्वस्य त्वयैव प्रागभिहितत्वादित्यभिप्रायं मनसि निधायाह। **इदमिति**। अध्यासप्रयोजकसामग्र्यभावादपि नाविद्याया अध्यासः सम्भवतीत्याह। **संस्कारेति**। विजातीयसादृश्यमाशङ्क्य परिहरति। **नचेति** तदभावे=अनुभवाभावे। तदसिद्धौ=संस्कारासिद्धौ। तज्जन्यज्ञानाभावः संस्कारजन्यज्ञानाभावः। तदभावे=संस्कारजन्यज्ञानाभावे। **तद्विषयत्वरूपमिति**। संस्कारजन्यज्ञानविषयत्वरूपम्। अविद्यासादृश्यं नामाविद्यावृत्तिधर्मवत्वं तद्धर्मस्य शुद्धे ब्रह्मणि वृत्तौ शुद्धत्वमेव व्याहन्येतेत्याह। **किञ्चेति**। विपक्षे बाधकतर्कमुपन्यस्यति। **अन्यथेति**। अविद्यावृत्तिधर्माभ्युपगम इति तदर्थः। प्रत्यगात्मन्यप्यविद्यायास्सादृश्यं परिहरति। **नापीति**। कल्पितबिम्बभावस्य जीवस्याविद्योत्तरभावित्वेन पूर्वसिद्धाया अविद्याया सादृश्यस्य तत्र वक्तुमशक्यत्वा द-त्यर्थः। नहि कारणमन्तरा क्वचिदपि कार्यं दृश्यत इति तावन्निर्विवादं तथाच अध्यासकारणस्य ब्रह्मणस्सादृश्य-स्याविद्यायामसत्वान्न तत्र तस्या अध्यास इत्याह **किञ्चेति**—अन्यथाख्यातिवादिनां तार्किकाणां मते प्रवेशात् स्वसिद्धान्तभङ्गः स्यादतः तद्रक्षणाय स्मृतिरूप इत्यध्यासलक्षणावसरे निर्दिष्टं तावन्मात्रेण भ्रमस्य व्यावृत्तिर्न सम्भवति तद्वारणाय तदर्थं व्याचष्टे। **अथेति**। समासनिविष्टत्वशब्दार्थं निर्वक्ति। **तेनेति**। सादृश्यपदेन स्मर्यमाणा-दारोपस्य भेदान्नान्यथाख्यातिरितिभावः। आरोपे स्मृतित्वापत्तिवारणाय दोषसम्प्रयोगजन्यत्वमपि सादृश्यकोटौ निवेश्यमित्यभिप्रायमनुसृत्याह। **सम्प्रयोगो नामेति**। निर्धर्मके ब्रह्मणि अध्यासात् प्रागध्यासजन्यकल्पित-सामान्यधर्माभावान्नाध्यासस्य सिद्धिरित्याह। **निर्विशेषेति**। ज्ञातारमन्तरा नाधिष्ठानसामान्यज्ञानसिद्धिस्तदसिद्धाव-ध्यासप्रयोजकसामग्र्यभावात् सुतरामध्यासाभाव इत्याह। **किञ्चेति**। अध्यासप्रयोजकस्य दोषसादृश्यादिघटित-

नियमात् । तथाहि अध्यासमात्रस्य दोषसादृश्यसंस्कारसम्प्रयोगसामग्रीजन्यत्वनियम-स्तावन्निर्विवादः, तत्रेदं रजतमिति प्रतीतौ दोषसादृश्यज्ञानसंस्काराणां भ्रान्तिमत्पुरुषनिष्ठत्वात् रजतसादृश्यस्य च शुक्तिवृत्तित्वात्सम्प्रयोगस्य च सम्बन्धरूपत्वेनोभयनिष्ठत्वात्तत्सङ्घातरूपसामग्र्याऽध्याससिद्धिः । प्रकृते तु सामग्रीतदाश्रययोरभावात् । जीवदोषादीनामध्यासकार्यत्वेनोत्तरभावित्वाच्च कथमविद्याध्यास इति । नन्वध्यासो द्विविधः सादिरनादिश्च । तत्र सादावेवोक्तसामग्र्यपेक्षा नत्वनादौ तथाचाविद्याध्यासस्यानादित्वान्नोक्तदोषावकाशः । 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप' इति भाष्यकृदुक्तेरितिचेन्न । अध्यासमात्रस्य सादित्वदर्शनात् । अनादः सतोऽपि वस्तुनोऽध्यस्तत्वाङ्गीकारे ब्रह्मणोऽपि तथात्वं वक्तुं शक्यते तस्याप्यनादित्वसाम्यात् । नन्वत्रानादित्वं नामानादिविद्याकार्यत्वं नैसर्गिकत्वञ्चाध्यासात् संस्कारस्ततोऽध्यास इति प्रवाहरूपेण । अनन्तत्वञ्च ज्ञानं विना ध्वंसायोग्यत्वं विविक्षितं तस्मान्नोक्तदोषावकाश इति चेन्न । असदुत्तरत्वात् । तथाहि न तावदुक्तलक्षणानादित्वं वक्तु शक्यम् अनादित्वकार्यत्वयोरितरेतरव्याघातात् । प्रत्युत कार्यत्वस्य सादित व्याप्तिदर्शनात् । नापि नैसर्गिकत्वं वक्तुमर्हम्, अन्योन्याश्रयत्वप्रसङ्गात् । नाप्युक्तलक्षणानन्तत्वं ज्ञानेन तत्सम्बन्धस्यैव ध्वंसात् न स्वरूपस्य 'गौरनाद्यन्तवती' 'अजामेकामिति' श्रुतेः । अनाद्यनन्तरूपस्य निवृत्तिरेव श्रूयते नतु स्वरूपनाशः । अन्यथा मुक्तात्मनां वाहुल्यादि-

---

कारणकूटस्य विद्यमानत्वाच्छुक्तिकायां रजतत्वमध्यसितुं शक्यते । निरुक्तसामग्र्यभावान्न कथमपि ब्रह्मण्यविद्याध्यास उपपद्यत इत्याह । **किञ्चेति** । दोषः=दूरत्वादिः । सादृश्यं=तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम् । संस्कारः=पूर्वं रजतानुभवादात्मन्युत्पन्नः । सम्प्रयोगः=चक्षुस्संयोगः एतच्चतुष्टयसत्व एवाध्यासो जायत इति प्रसिद्धमेवेत्यर्थः । तदेतोदाहरणमुखेन स्फुटयति । **तत्रेदमिति** । दार्ष्टान्ते योजयति । **प्रकृतेत्विति** । सामग्री च तदाश्रयश्च सामग्रीतदाश्रयौ तयोरित्यर्थः । उभयोरसत्वान्नाविद्याध्यासस्य सम्भावनापीत्यर्थः । कार्याव्यवहितप्राग्वृत्तित्वं कारणत्वं, कारणोत्तरभावित्वञ्च कार्यत्वमिति निर्विवादम्; प्रकृतेऽध्यासहेतूनां दोषादीनां तदाधारभूतप्रत्यगात्मनाश्चाध्यासप्राग्वृत्तित्वाभावान्नाविद्याध्यासः सिद्ध्यतीत्याह । **जीवदोषादीनामिति** । अविद्याध्यासोपपत्तिमनादित्वेन समर्थयन्नध्यासस्य द्वैविध्यं दर्शयति । **नन्विति** । उक्तसामग्र्यपेक्षा=दोषसादृश्यज्ञानसंस्कारादिसामग्र्यपेक्षा । प्रागुक्तार्थं द्रढयितुं भगवत्पादश्रीशङ्कराचार्योक्तिं प्रमाणत्वेनोपन्यस्यति । **एवमिति** । अनाद्यविद्यात्मकतया कार्यस्यानादित्वम् । अध्यासात्संस्कारस्ततोऽध्यास इति प्रवाहतो नैसर्गिकत्वमित्यर्थः । परिहरति । **नेति** । तथात्वं=अध्यस्तत्वम् । तस्यापि=ब्रह्मणोऽपि । उक्तां शङ्कां परिहरन्ननादित्वमन्यथा निर्वक्ति । **नन्विति** । तस्मात्=निरुक्तानादित्वनिर्वचनात् । **उक्तदोष इति** । अनाद्यविद्याकार्यरूपस्यानादित्वस्य ब्रह्मण्यसत्वान्न तस्याध्यस्तत्वमित्यर्थः । परिहरति । **नेति** । असदुत्तरत्वात् । असदुत्तरत्वं कथमित्यत आह । **तथाहीति** । **व्याघातादिति** । यद्यनादित्वं तदा कार्यत्वं कथं, यदि कार्यत्वं तदानादित्वं कथमिति परस्परव्याहतिः । कार्यत्वं सादित्वनियतमित्यभिप्रायेणाह । **प्रत्युत इति** । उक्तलक्षणनैसर्गित्वं परिहरति । **नापीति** । **अन्योन्याश्रयत्वप्रसङ्गादिति** । आरोपस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः । समारोपनिवन्धना च प्रतीतिरित्यर्थः । उक्तलक्षणमनन्तत्वं व्युदस्यति **नापीति** । तत्वज्ञानेनाविद्यासंसर्गस्यैव ध्वंसो नतु स्वरूपेण तस्या ध्वंस इत्याह **ज्ञानेनेति** ।

दानीमनुपलब्धिप्रसङ्गात्। 'भूयश्चान्ते विश्वमायानिवृत्तिः' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिश्रुतिस्मृतिभ्याम्। ननु सर्ववादिसम्मतत्वात्कथमध्यासो निरस्यत इति चेन्न। साद्यध्यासस्य सम्मतत्वेऽप्यनाद्यध्यासस्य केषामप्यसम्मतत्वादिति सङ्क्षेपः।

( अथ प्रमाणाभावादप्यध्यासानुपपत्तिः )

ननु द्रष्टाऽनुमाता श्रोताऽहमित्यादिप्रत्यक्षस्य देवदत्तादिकर्तृकः सर्वोऽपि व्यवहारस्तदीयदेहादिष्वहं ममाध्यासमूलकस्तदन्वयव्यतिरेकानुसारित्वात् यदेवं तदेवं मृन्मूलघटवदित्यनुमानस्य यद्यध्यस्तः प्रमाता न स्यात्तर्हि प्रमाणादिव्यवहारो न स्यात्सर्वस्यापि व्यवहारजातस्याविद्यावद्विषयकत्वादित्यर्थापत्तेश्च मानत्वात्। तथाचाह भगवान् भाष्यकारः तमेतमविद्याख्यमात्मनात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः। सर्वाणि शास्त्राणि विधिप्रतिषेधमोक्षपराणीत्युक्त्वा कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादिप्रमाणानि शास्त्राणिचेत्याक्षिप्य समादधे। उच्यते। देहेन्द्रियादिष्वहं ममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरित्यादिनेति, कथं

---

उक्तार्थं श्रुतिमुखेन प्रमाणयति **गौरनाद्यन्तवतीति**। गौर्माया आद्यन्तरहिता इति तदर्थः। बाधकतर्कमुपन्यस्यति। **अन्यथेति**। स्वरूपनाशाङ्गीकार इति तदर्थः। उक्तार्थं श्रुतिस्मृतिप्रमाणमुखेन द्रढयति। **भूयश्चान्त-इति**। एवंलक्षणकोऽध्यासः सर्वेषां वादिनां सम्मतः कथं तन्निरासो भवितुमर्हतीति शङ्कते। **नन्विति**। परत्र परावभासरूपाध्यासस्य सम्मतत्वेऽपि अविद्याध्यासस्यानादित्वे केषामपि सम्मतिर्नास्तीत्यर्थः। इतिलक्षणाभावप्रयुक्ताध्यासाभावः। सन्ति चाध्यासस्य सद्भावे प्रत्यक्षानुमानार्थापत्तयः प्रमाणानीति प्रदर्शयन्नाशङ्कते। **नन्विति**। द्रष्टा अज्ञः कर्त्ता मनुष्योऽहमिति प्रत्यक्षानुभवोऽध्यासे तावन्मानमाह। **द्रष्टेति**। पक्षं निर्दिशति। देवदत्तेत्यारभ्य व्यवहारान्तमित्यनेन। साध्यमाह **तदीयेति**। **तदन्वयेति**। देहादिष्वध्याससत्वे व्यवहारसत्वं, तदभावे व्यवहारासत्वमिति तदर्थः। अर्थापत्तिस्वरूपं निर्दिशति। **यद्यध्यस्त इति**। उक्तार्थं भगवत्पादवचसा द्रढयति **तथाचेति**। अध्यासे प्रमाणं प्रदर्शयितुमाह **तमेवेति**। तं वर्णितमेतं साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकः कर्मशास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्त्तत इत्यर्थः। तत्र विधिनिषेधपराणि कर्मशास्त्राण्यृग्वेदादीनि विधिनिषेधशून्यब्रह्मपराणि वेदान्तवाक्यानीति विभागः। एवं व्यवहारहेतुत्वेनाध्यासे प्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छति **कथं पुनरिति**। अविद्यावानहमित्यध्यवसायवानात्मा प्रमाता सविषय आश्रयो येषां तानि अविद्यावद्विषयाणीति विग्रहः। तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया अध्यासात्मकप्रमात्राश्रितत्वात् प्रमाणानामविद्यावद्विषयत्वं यद्यपि प्रत्यक्षं तथापि पुनरपि कथं केन प्रमाणेनाविद्याविषयत्वमिति योजना। यद्वाऽविद्यावद्विषयाणि कथं प्रमाणानि स्युः आश्रयदोषादप्रामाण्यापत्तेरित्याक्षेपः। तत्र प्रमाणप्रश्ने व्यवहाराक्षेपं तल्लिङ्गकानुमानञ्चाह। **उच्यत** इत्यादिना। तत्र व्यतिरेकं दर्शयति। **देहेन्द्रियादिष्विति**। देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभाव दृष्टः। जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इति व्यतिरेकान्वयाविस्यर्थः। अनेन लिङ्गेन कारणतयाध्यासः सिद्ध्यति व्यवहाराकार्यानुपपत्त्या वेति भावः। ननु मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद् व्यवहारः सिद्ध्यतु किमिन्द्रियादिषु ममाभिमानेनेति चेन्न। यत इन्द्रियपदं लिङ्गादेरप्युपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगात्। तथाच प्रत्यक्षादिलिङ्गादिप्रयुक्तो यो व्यवहारो द्रष्टा अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीति तेषां मतं पूर्वपक्षत्वेनोपपाद्य निरस्यति। **नेति**। आत्मना संयुक्तं शरीराद्येव प्रत्यक्षानुमानादीनां विषयो भवितुमर्हति किमध्यासेनेत्याह **तथाहीत्यादिना**।

प्रमाणाभाव इति चेन्न। उक्तप्रत्यक्षानुमानादेराभासमात्रत्वात्। तथाहि उक्तप्रत्यक्षादीनां शरीरेन्द्रिययुक्तात्मपरत्वेनाध्यस्तविषयकत्वाभावात्। 'आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः' इति श्रुतेः। अन्यथा युक्तस्थानेऽध्यस्त इति प्रयोगः श्रुतौ स्यात्। श्रुतिगृहीतत्वादुक्तार्थस्यैव सम्यक्त्वेनोक्तमानस्याध्यासपरत्वाभावात्। किञ्चाध्यासस्याद्याप्यसिद्धया तदनुमाने साध्यासिद्धेः। अध्यासप्रयुक्तो व्यवहारस्तत्प्रयुक्तश्चाध्यास इत्यन्योन्याश्रयाच्च। किञ्च हेतोरपि स्वरूपासिद्धत्वात् अध्यासासिद्धया तदन्वयव्यतिरेकस्य सुतरामसिद्धेः। घटादीनां मृत्परिणामेन दृष्टान्तवैषम्याच्च। तथैव व्यवहारस्य देहादिप्रयुक्तात्मकर्तृत्वेनान्यथासिद्धत्वादर्थापत्तेरपि निर्मूलत्वादाभासमात्रत्वमिति। ननु मास्तु प्रत्यक्षादीनामत्र प्रामाण्यं 'ब्राह्मणो यजेत' 'नहवै स्नात्वाभिक्षेत्' 'अष्टवर्षं ब्राह्मणमुपनयीत' 'कृष्णकेशोऽग्निनादधीतेत्यादिश्रुतीनां वर्णाश्रमवयोऽवस्थाध्यासवन्तमेवाधिकृत्य प्रवृत्तिदर्शनात्। तथोक्तं भगवत्पादैर्भाष्यकारैः 'ब्राह्मणो यजेत'इत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थाद्याध्यासमाश्रित्य प्रवर्त्तन्ते' इति तस्माच्छास्त्रप्रमाणकत्वादध्यासोऽवश्यं माननीय इतिचेन्न। उक्तश्रुतीनामपि वर्णाश्रमवयोवस्थादिमच्छरीरसंयुक्ताधिकारिविषयकत्वाविशेषात्।

---

उक्तार्थं श्रुतिमुखेन प्रमाणयति। आत्मेति। शरीरेन्द्रियमनोभिः संयुक्तः आत्मा भोक्ता। कर्तृत्वभोक्तृत्वादिमानित्याहुर्मनीषिणः विवेकिनः नहि केवलस्यात्मनः कर्तृत्वं भोक्तृत्वं वाऽस्तीतीत्यर्थः। विपक्षे बाधकतर्कमुपन्यस्यति अन्यथेति। कर्तृत्वभोक्तृत्वादिव्यवस्थाप्रकोपादध्यासस्वीकार इति तदर्थः। श्रुत्यनुसारिपन्था ग्रहीतव्यो न तु तदननुकूल इत्याह। श्रुतिगृहीतत्वादिति। संदिग्धसाध्यवत्वं पक्षत्वमिति मतेऽनुमानात् प्रागध्यासस्यासिद्धत्वात् साध्यसंन्देहरूपपक्षतायां अभावात्तदीयदेहादिष्वहं ममाध्यासमूलकत्वविधेयताकानुमितिर्नोदयत इत्याशयेनोक्तानुमानं निषेधति। किञ्चेति। यदिच सिद्ध्यभावरूपपक्षता एवानुमानाङ्गमित्युच्यते तदापि साध्याप्रसिद्धिपदेन साध्ये साध्यतावच्छेदकाभावरूपा साध्याप्रसिद्धिर्विवक्षिता तथाच निरुक्तसाध्येऽध्यासत्वरूपसाध्यतावच्छेदकाभावसत्वात्साध्याप्रसिद्धिदोषस्तेन परामर्शप्रतिबन्धान्नानुमितिरित्याशयः। उक्तानुमानमन्योन्याश्रयेणापि दूषयति। अध्यासप्रयुक्त इति। उक्तानुमाने स्वरूपासिद्धिमुद्भावयति। किञ्चेति। तदेवोपपादयति अध्यासासिद्धयेति। विशेषणासिद्ध्या तद्विशिष्टहेतोरसिद्धत्वमित्यर्थः। दृष्टान्तासिद्धिमुपन्यस्यति घटादीनामिति। व्यवहारान्यथानुपपत्त्याऽध्यासः कल्प्यत इति यदुक्तं तदप्यपाकरोति तथैवेति। देहेन्द्रियायुक्तात्मकर्तृत्वेनैव व्यवहारोपपत्तावर्थापत्तिर्निर्मूलेत्यर्थः। पुनरपि प्रमाणोपन्याससुखेनाध्यासं समर्थयन्नुत्तिष्ठते। ब्राह्मण इति। ब्राह्मणाद्याश्रयस्य शरीरस्य जडत्वेनानियोज्यत्वात् तदैक्याध्यासवानात्मैव नियुज्यत इत्यर्थः। देहैक्याध्यासाभावे सुषुप्तौ प्रमातृत्वाद्यदर्शनात्तदन्यथानुपपत्तिश्च देहाध्यासे मानम्। उदाहृतश्रुतीनामपि तदंश एव तात्पर्यमित्याशङ्कितुराशयः। उक्तार्थं भगवत्पादवचसा द्रढयति। तथोक्तमिति। "ब्राह्मणो यजेत" "अष्टवर्षं ब्राह्मणमुपनयीत" "कृष्णकेशोऽग्निमादधीत" इत्यागमो ब्राह्मणादपदैर्वर्णाश्रमवयोऽवस्थामच्छरीरसंयुक्ताधिकारिविशेषं गमयति नत्वाध्यासमित्याशयेन निषेधति। नेति। आसाम्="ब्राह्मणो यजेत" इत्यादिश्रुतीनाम्। तदैकवाक्यत्वात्="आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः" इत्यनेन सहैकवाक्यत्वात्। 'आत्मेन्द्रिय' इति श्रुतिस्थपदप्रयोगस्यार्थं विवृण्वन्नाह। तन्निष्ठानामिति। देहेन्द्रिययुक्तोऽऽत्मा भोक्ता इति श्रुत्यर्थनिष्ठानामित्यर्थः। तद्विपरीतवादिनां=आत्मनि वर्णाश्रमवयोऽवस्थाद्याध्यास इति वादिनाम्। अध्यासवादिन उपसंहरन्नुपसंहरति। तस्मादिति। विनिर्धूताशेषाविद्यावतां लब्धतत्साम्यानां मुक्तानां वामदेवयाज्ञवल्क्यप्रभृतीनामहमर्थस्वरूपत्वं

आत्मानमपि तथैकवाक्यत्वाच्च तन्निष्ठानां मनीषित्वयोगं श्रावयन्ती भगवती श्रुतिस्तद्विपरीतवादिनां कुमनीषित्वं सूचयति तस्माद्येषां मतेऽध्यासो वेदादिप्रमाणविरुद्धोऽपि कुलधर्मत्वेन ग्राह्यस्तैरेव माननीय इति मनीषिपदस्वारस्यार्थः। किञ्च तत्र मते जीवन्मुक्तानामपि याज्ञवल्क्यादीनां तादृशव्यवहारस्य तादवस्थ्यदर्शनेन तेषामप्यध्यासवत्त्वं स्वीकार्यमन्यथा व्यतिरेके नियमभङ्गः स्यात् तथात्वे च तेषामज्ञत्वाविशेषेण तदुपदेशस्यानाप्तपरम्परापत्तेरनाप्तत्वयोगो दुर्वारस्तदुपदेशमूलकानामिदानीन्तनानां पौरुषेयशास्त्रव्याख्यातृवाक्यजन्योपदेशानां सुतरामनाप्तत्वप्रसङ्गेनोपदेशसन्ततेः सुतमां वञ्चकत्वयोगेनानिर्मोक्षप्रसङ्ग इति सङ्क्षेपः। नन्वध्यासस्याऽसंभवः किंप्रयुक्तत्वाद्वा मानाऽभावाद्वा कारणाभावाद्वेति विवेचनीयम्। आद्ये इष्टापत्तिः। अध्यासस्यासङ्गे स्वप्रकाशात्मन्ययुक्तत्वस्यास्माकमलङ्कारत्वात्। न द्वितीयः। अज्ञः कर्त्ता मनुष्योऽहमिति प्रत्यक्षानुभवात्। न तृतीयः। मिथ्याज्ञानस्य तत्कारणस्य भावात्। तथाह भाष्यकारः। 'मिथ्याज्ञाननिमित्त' इति। मिथ्या च तदज्ञानं। तदेव निमित्तमुपादानं यस्य स तथेत्यर्थः। इति चेन्नापातरमणीयत्वात्। तथाहि यदुक्तमात्म-

---

श्रावयन्त्यः शतशः श्रुतयस्सन्ति ताभिः किं तेषामध्यासवत्त्वमनुमातव्यं तथासति तेषामज्ञत्वाविशेषात् तदुपदेशानामानर्थक्यं प्रसज्येत इत्याह **किञ्चेति**। तादृशव्यवहारस्य=स्वस्याहमर्थत्वेन व्यवह्रियमाणस्य। तथाच "मामेव विजानीहि मामुपास्स्वेति।" "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे। अहं मनुरभवं सूर्यश्च कक्षीवानृषिरस्मि विप्र इति तमेवाऽवोचत्। अतो मामेव विजानीहीत्यादि" व्यवहारदर्शनात् किन्तेषामध्यासवत्त्वमनुमातुं शक्यते। नचेष्टापत्तिस्तदुपदेशानामप्रामाण्येनानाश्वासात् कस्यापि मोक्षरूपपरमपुरुषार्थे प्रवृत्त्यनुपपत्तेरिति भावः। विपक्षे बाधकतर्कमाह **अन्यथेति**। तेषामध्यासवत्त्वास्वीकारे। **व्यतिरेकेति**। अध्यासे सति व्यवहार इत्यन्वयः। अध्यासाऽभावे व्यवहाराऽभाव इति व्यतिरेकरूपो यो नियमस्तस्य भङ्गः स्यादित्यर्थः। ततः किमनिष्टमापद्यत इत्यत आह। **तथात्वे चेति**। अध्यासवत्त्वे चेत्यर्थः। **तदुपदेशमूलकः**। याज्ञवल्क्यप्रभृतीनामुपदेशो मूलं यस्य स तथा।

**इत्यध्यासप्रमाणनिरासः।**

**अध्यासे पूर्वपक्षः।**

अध्यासस्यासम्भवः किम्प्रयुक्त इत्याशङ्कते। **नन्विति**। अध्यासस्य युक्तत्वन्त्वस्माकमिष्टमेवेत्याह **आद्य इति**। 'असंगोह्ययं पुरुष" इति श्रुत्या असङ्गे स्वयंप्रकाशे ब्रह्मणि अध्यासत्वं नोपपद्यत इत्यस्माकमलङ्कार इत्याह। **अध्यासस्येति**। द्वितीयविकल्पं निरस्यति। **न द्वितीय इति**। देहधर्मा ब्राह्मण्यकाणत्वादयो ब्रह्मण्यध्यस्ता देहैक्यतद्धर्मयोरध्यासादज्ञः कर्त्ता मनुष्योऽहमिति प्रत्यक्षमेव मानं तत्रेत्याह। **अज्ञ इति**। मनुष्यत्वादेर्देहे धर्मत्वेनात्मनि तदध्यासो देहैक्याध्यासं विना न सम्भवतीति तदैक्याध्यासस्य सिद्धिरिति भावः। तृतीयपक्षमपाकरोति। **न तृतीय इति**। उक्तार्थे स्वभाष्यं प्रमाणयति। **तथाह भाष्यकार इति**। तदर्थं विवृणोति। **मिथ्याचेति**

**उत्तरपक्षः।**

निषेधति **नेति**। तत्र हेतुमाह **आपातेति**। यत्पूर्वं शङ्कितं तद्दूषयितुमनूद्यते **तथाहीत्यादिना**। यथा जलताडनायां न किञ्चिदपि फलं सिद्ध्यति निष्फलत्वात्तद्वदध्यासस्यायुक्तत्वात्तत्र युक्त्युपन्यासो निष्फल इत्याह **तत्रेति**। अध्यास इत्यर्थः। यद्यध्यासस्यायुक्तत्वं स्यात्तदाऽद्वैतसिद्धान्तोऽपि बाध्येत तद्बाधोऽपि अध्यासस्यायुक्तत्वालङ्कारे चूडामणिस्स्यादिति भावः। अध्यासस्यायुक्तत्वादद्वैतसिद्धान्तो बाध्यते तदा तत्प्रयोज्या-

न्यध्यासस्यायुक्तत्वमस्माकमलङ्कार इति तदुक्तं तत्र युक्त्युपन्यासस्य जलताडनावद्वैयर्थ्य-प्रसङ्गात्। यदप्युक्तमज्ञः कर्त्तेत्यादि तदप्यसम्यक् उक्तप्रत्यक्षस्य देहादियुक्तात्मविषयकत्वेन प्रमात्वस्य पूर्वमेवोक्तत्वात्। ननु तथाप्यपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृततात्पर्येण तत्त्वमस्यादिवाक्येनाकर्तृ ब्रह्मबोधनादुक्तप्रत्यक्षस्य भ्रमत्वमेवेति चेन्न तत्त्वमस्यादिवाक्येन प्रतिपाद्यमानस्य "तदैक्षत बहु स्यां प्रजायेय" इतीक्षणबहुभवनसङ्कल्पवतो ब्रह्मणः 'सदेव सोम्येदमग्र आसीदि'ति सच्छब्दवाच्यस्य "एकमेवाद्वितीय"मिति अतिशयसाम्य-शून्यस्य 'ऐतदात्म्यमिदं सर्वमिति' तादात्म्योपदेशोऽस्मदिष्टतम एव न तत्राकर्तृ ब्रह्मोपदेशः केनापि पदेन लभ्यते प्रत्युतेक्षणकर्तृ बहुभवनसङ्कल्पपूर्वकं "तत्तेजोऽसृजते"ति तेजः-प्रभृतिजगत्कर्तृत्वं श्रूयते, अतो नोक्तप्रत्यक्षस्य भ्रमत्वम्। ननु सच्छब्दवाच्यस्य सार्वज्ञ्यादि-योगात्कर्तृत्वादिसत्त्वेऽपि लक्षणया निर्विशेषाऽकर्तृ ब्रह्मबोधनपरत्वस्वीकारान्नोक्तार्थसिद्धि-रितिचेन्न। लक्षणासम्भवात्। यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यः प्रवाहस्तल्लक्ष्यश्च

---

खण्डार्थत्वमपि बाध्येत इत्यपि दूषणं द्रष्टव्यम्। किञ्चाध्यासस्यायुक्तत्वं भवद्भिरलङ्कारतया स्वीकृतं सोऽध्यासा-स्यायुक्तत्वान्नातिविवक्षया स्वीकृतः। शास्त्रविरुद्धोऽपि अस्मत्कुलधर्मत्वादवश्याङ्गीकार इतिवा? आद्य इष्टापत्तिः। अध्यासो नास्तीति अस्मदीयपक्षप्रवेशात्तत्प्रयुक्तः सर्वोऽपि सिद्धान्तो दत्ततिलाञ्जलिः स्यात्। द्वितीये महाराष्ट्राणां विवाहे यथा लशुनभक्षणं शास्त्रनिषिद्धमपि कुलधर्मतया स्वीकृतं तच्छास्त्रविरुद्धोऽप्यध्यासः कुलधर्मतया भवतां श्रेयसे भूयादित्यनुसन्धेयमिति। प्रागुक्तार्थमनूद्य दूषयति **यदप्युक्तमिति**। अहमज्ञ इति प्रत्यये कोवाऽहमर्थः शुद्धं ज्ञानमात्रमहङ्कारो वा तदन्योवेति वक्तव्यम्। नाद्यः। ज्ञानमज्ञं ब्रह्माज्ञं आत्माऽज्ञ इत्युक्तं स्यात्। न द्वितीयः। अहङ्कारोऽज्ञ इति प्रत्ययः स्यात् ब्रह्माज्ञाने प्रमाणाभावात्। अहमर्थस्य शुद्धात्मस्वरूपत्वाङ्गीकारे तस्य मुक्तप्राप्यत्वापत्त्याऽस्मदिष्टापत्तेस्तव सिद्धान्तभङ्गात्। न तृतीयः। उभयेतरस्याध्यासकार्यत्वेन तदानीमभावादहमज्ञ इति प्रतीत्याश्रयो भवतां मते न कोऽपि सिद्ध्यति तदभावेऽध्यासाभाव इति सिद्धम्। शङ्कते। **नन्विति**। **उपक्रमादिलिङ्गेति**। 'एकमेवाद्वितीयमित्युपक्रमः१। तत्त्वमसीत्युपसंहारः२ तत्त्वमसीति नवकृत्वोऽभ्यासः३ जीवब्रह्मैक्यस्यान्यतोऽप्राप्तत्वादपूर्वता ४ अथ सम्पत्स्यत इति फलम् ५ येनाश्रुतं श्रुतं भवतीत्यादिरर्थवादः ६। मृत्पिण्डादिदृष्टान्तैरुपपादानादुपपत्तिरित्यर्थः। उक्तवेदान्ताः ब्रह्मण्यकर्तृत्वं निश्चिन्वानाः देहादिसंयुक्तात्म-विषयककर्त्रात्मबोधकमहमिति प्रत्यक्षमप्रमाणमिति बोधयन्तीत्यर्थः। उक्तासु श्रुतिषु कयापि श्रुत्या ब्रह्मणोऽकर्तृत्वं न बोध्यते तथासत्युक्तप्रत्ययस्य न भ्रान्तित्वमित्याशयेनोक्तशङ्कां परिहरति **नेति**। **'तदैक्षत' इति**। ईक्षणं पर्यालोचनं जगत्कारणस्य बहुभवनसङ्कल्पवत्त्वं दर्शयितुमाह। **बहु स्यामिति**। **सदेव सोम्येदमिति**। अग्रे सृष्टेरादौ इदंशब्दवाच्यस्य कार्यजातस्य जगतः सच्छब्दवाच्ये कारणेऽतिसूक्ष्मत्वेन सत्त्वेपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात् सदेवेति कारणैक्यनिर्देशः सूपपन्नः। अन्यथा सच्छब्दवा-च्यस्य कारणस्य ब्रह्मण इदमित्यङ्गुल्या निर्देशायोगात्कार्यस्य सूक्ष्मरूपेण सत्त्वानङ्गीकारे चासत्वाभ्युपगमापत्ते-रित्यर्थः। **एकमेवाद्वितीयमिति**। एकशब्दश्च कारणैकत्वं विदधाति। एवकारश्चान्ययोगाव्यवच्छेदार्थकस्तत्समं निषेधति। अद्वितीयशब्दश्च तदाधिक्यं नास्तीति बोधयति "न तत्समश्चाभ्यधिकश्च दृश्यत" इति श्रुत्यैकार्थत्वात् अन्यथैकपदेनैवाद्वैतसिद्धावन्यपदयोर्वैयर्थ्यापत्तेरित्याशयेन पर्य्यवसितार्थं दर्शयति। **अतिशयसाम्यशून्यस्येति**। "सदेवे"ति श्रुतौ शब्दसामर्थ्यादीक्षणान्वयलिङ्गात्सार्वज्ञ्यं कर्तृत्वञ्च सच्छब्दार्थौ भवतु लक्षणया सच्छब्देन निर्विशेषाकर्तृत्वबोधनपरतापि युज्यते तथासति कर्त्ताऽहं मनुष्य इति प्रत्यक्षस्य प्रमात्वं न सिद्ध्यतीति

तीरादिस्तीरपदवाच्यस्तथा सच्छब्दवाच्यः सर्वज्ञः पुरुषोत्तम ईक्षणादिकर्तृत्वाश्रयस्तेजः-प्रभृतिजगदभिन्ननिमित्तोपादानकारणरूपस्तस्य यो लक्ष्यः स पदान्तरवाच्यो नवेति विवेचनीयम् । नाद्यः । वाच्यत्वस्यापरिहार्यत्वात् वाच्यत्वे च तत्र मते मिथ्यात्वापत्तिरप्यवश्यम्भाविनी वाच्यमात्रस्य मिथ्यात्वाभ्युपगमात् । सच्छब्दलक्ष्यो मिथ्या पदान्तरवाच्यत्वात् तत्र मते तीरादिवदिति प्रयोगात् । न द्वितीयः । पदमात्रावाच्यत्वस्यावस्तुत्वापत्तेः । सच्छब्दलक्ष्यं तुच्छं पदमात्रावाच्यत्वात् खपुष्पवदित्यनुमानात् । ननु विषमोऽयं दृष्टान्तो जहल्लक्षणात्वात् । प्रकृते जहदजहल्लक्षणास्वीकारः । तत्र शक्यैकदेशस्य विशेषणमात्रस्यैव त्यागेन विशेष्यभागस्यात्यागान्नोक्तदोषावकाश इति चेन्न । शब्दैकदेशवाच्यत्वस्याकामेनापि त्वयाङ्गीकरणीयतया मिथ्यात्वयोगस्य दुःपरिहरत्वात् । तथाचात्र प्रयोगः । भागत्यागलक्षणालक्ष्यं मिथ्या शक्यैकदेशत्वात् । तत्र मते घटत्वादिवदिति । एतेन यदुक्तं कैश्चित् मास्तु लक्षणा किन्तु यथा नित्यो घट इत्यत्र घटव्यक्तिनित्यत्वयोरभेदस्य प्रत्यक्षबाधित त्वेऽपि घटत्वनित्यत्वयोः सामानाधिकरण्यस्याविरोधेन शक्यत्वमेव तथा प्रकृतेऽपि शक्यत्वमपि रुद्धं लक्षणाङ्गीकारस्य साम्प्रदायिकानामाग्रहमात्रत्वात् । तस्माच्छक्य एव शास्त्रार्थ इति तदपि निरस्तम् वाच्यैकदेशसाम्येन मिथ्यात्वस्यावश्यम्भावात् त्यक्तद्वितीयभागवदिति सङ्क्षेपः । तत्सिद्धं पूर्वोक्तपत्यक्षस्य प्रमात्वमिति । नापि मिथ्याज्ञानस्याध्यासकारणत्वं सम्भवति अज्ञानलक्षणतत्प्रमाणतदाश्रयविषयप्रयोजकनिवर्तकाद्यसिद्धेस्तथाहि तत्र किं तावदज्ञानस्य लक्षणम् अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम्वा भ्रमोपादानत्वम्वा

---

शङ्कते नन्विति । परिहरति नेति । तत्र हेतुमाह **लक्षणासम्भवादिति** । तदेवोपपादयति **यथेत्यादिना** । तल्लक्ष्यः=गङ्गापदलक्ष्यः । लक्षणावृत्त्या प्रतिपाद्यो निर्विशेषचिन्मात्रस्वरूप इत्यर्थः । विकल्पयति **स पदान्तरवाच्य इति** । आद्यपक्षं व्युदस्यति **नाद्य इति** । सच्छब्दलक्ष्यार्थस्य निर्विशेषचिन्मात्रस्य पदान्तरवाच्यत्वे मिथ्यात्वापत्तिरित्याह **वाच्यत्व इति** । तस्य मिथ्यात्वेऽनुमानं प्रमाणयति **सच्छब्दवाच्य इति** । द्वितीयपक्षं निराकरोति **न द्वितीय इति** । तत्र हेतुमुपन्यस्यति **पदमात्रावाच्यत्वस्येति** । प्रयोगं दर्शयति **सच्छब्दलक्ष्यमिति** । प्रकृते तच्छब्दस्य चिन्मात्रे जहदजहल्लक्षणा गङ्गायां घोष इत्यत्र तु जहल्लक्षणेति विषमोऽयं दृष्टान्त इत्याशङ्कते **नन्विति** । जहल्लक्षणा नाम स्वार्थं विहायान्यार्थबोधिका । तत्र=जहदजहल्लक्षणायाम् । सर्वज्ञत्वविशिष्टं चैतन्यं तच्छब्दार्थः । तत्र सर्वज्ञत्वं विशेषणं तं विहाय निर्विशेषचिन्मात्रं लक्ष्यते इत्याह **शक्यैकदेश इति** तच्छब्दशक्यं सर्वज्ञत्वविशिष्टचिन्मात्रं तस्यैकदेशः सर्वज्ञत्वमित्यर्थः । विशेष्यभागस्य=निर्विशेषचिन्मात्रस्य । शब्दैकवाच्यत्वं यदि निर्विशेषचिन्मात्रस्य ब्रह्मणोऽङ्गीक्रियते चेत्तदा तस्य मिथ्यात्वं दुर्निवार्यमित्युक्तशङ्कां परिहरति **नेति** । न्यायप्रयोगं दर्शयति **तथाचेति** । सोऽयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेऽपि न लक्षणा शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरन्वयबोध इति नवीनवेदान्तिन आचक्षते तन्मतमतिदेशेन परिहरति **एतेनेति** । अस्य निरस्तमिति परेणान्वयः । **नित्य इति** । घटस्योत्पादविनाशौ प्रत्यक्षेण प्रमाणेन गृह्येते, इति घटनित्यत्वयोरभेदान्वयोऽनुपपन्नश्शाब्दबोधप्रयोजकयोग्यताया अभावादतो नित्यत्वस्य घटत्वेन समन्वय इत्यर्थः । **तथा प्रकृतेऽपीति** । तत्त्वं पदशक्ययोश्चिन्मात्रयोरभेदान्वय इत्यर्थः । **तस्मादिति** । आग्रहमात्रत्वादित्यर्थः । निरासे हेतुमाह **वाच्यैकदेशसाम्येनेति** । अज्ञः

मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वम्वा । अनाद्युपादानत्वे सति मिथ्यात्वम्वाऽज्ञानत्वमिति । नाद्यः । सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेष्वव्याप्तिस्तेषामनादित्वाभावात् । आरोपितसर्पाद्यभावोपादानाज्ञाने घटादिविषयकज्ञानप्रागभावे च भावत्वाभावादव्याप्तिश्च । नच तस्य भावोपादानकत्वमिति वाच्यम् असत्यस्य सत्योपादानकत्वापातात् तस्याज्ञानोपादानकत्वाभावाङ्गीकारे ज्ञाननिवर्त्यत्वाभावप्रसङ्गाच्च । किञ्च शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते तदज्ञाने चरमसाक्षात्कारानन्तरभाविजीवन्मुक्त्यनुवृत्तेऽज्ञाने रक्तः स्फटिक इति सोपाधिकभ्रमोपादानाज्ञाने चाव्याप्तिश्च तेषां ज्ञाननिवर्त्यत्वासम्भवात् । सोपाधिकाज्ञानस्योपाधिनिवृत्तिनाश्यत्वनियमात् । जीवन्मुक्त्यनुवृत्ताज्ञानस्य प्रारब्धभोगनाश्यत्वनियमात् । चैतन्याविद्यासम्बन्धेऽतिव्याप्तिश्च कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्यानादित्वायोगात् । ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादित्वायोगाच्चासम्भवश्च किञ्चानादेरभावविलक्षणस्यात्मवदनिवर्त्यत्वप्रसङ्गात् अज्ञानं न ज्ञाननिवर्त्यमनादिभावरूपत्वादात्मवदित्यनुमानात् ।

---

कर्त्ता मनुष्योऽहमित्यादि प्रत्यक्षस्य प्रामाण्यमुपपादयन्निगमयति **तत्सिद्धमिति** । यदाशङ्कितं मिथ्याज्ञानस्याध्यासकारणत्वं तदप्यपाकरोति **नापीति** । **अज्ञानलक्षणेति** अज्ञानलक्षणञ्च तत्प्रमाणञ्च तदाश्रयश्चेति द्वन्द्वसमासः । प्रथममज्ञानलक्षणं दूषयितुं निर्वक्ति **तथाहीत्यादिना** । सत्यतानुपादाने प्राथमिकधारावाहिकबुद्धौ भ्रान्तिज्ञाने चातिव्याप्तिस्तत्रोत्तरज्ञाननिवर्त्यत्वस्य पूर्वज्ञाने सत्वात् । अधिष्ठानसाक्षात्कारनिवर्त्यत्वस्य भ्रमे सत्वादतस्तदुपादानम् । तदुपादाने तूभयत्रानादिभावत्वविरहान्नोक्तदोषावकाशः । अनादित्वमात्रोक्तौ प्रागभावेऽतिव्याप्तिरतो भावत्वमिति विशेषणमात्रोपादानेऽविद्यासम्बन्धजीवादिष्वतिव्याप्तिः । वाद्यभिमतान्यज्ञानस्य लक्षणान्तराणि दूषयितुं दर्शयति । **भ्रमोपादानत्वमित्यादिना** । आद्यलक्षणं परिहरति **नाद्य इति** । **सादीति** । शुक्त्यादेः सादित्वेन तदवच्छिन्नचैतन्यावरकाज्ञानमपि साद्येवेत्यनादित्वाभावादव्याप्तिरित्यर्थः । नच शुक्त्यवच्छिन्नचैतन्यावरकाज्ञानानामप्यनादित्वमेवेति वाच्यम् । तथात्वे शुक्त्यादेः सादित्वेन तदुत्पत्त्यपेक्षया पूर्वं निर्विषयावरणापत्तेः । नच तदा शुद्धचैतन्यमात्रावरकत्वमेवेति वाच्यं तथात्वे शुद्धचैतन्यावरकाज्ञानस्य मूलाज्ञानत्वापत्त्या रूप्यस्य तदुपादेयत्वे शुक्तिज्ञानेन निवृत्त्या मूलाज्ञानस्य नष्टत्वात्सद्योमोक्षापत्तिरिति भावः । अनादित्वविशेषणाप्रयुक्ताव्याप्तिमुक्त्वा भावत्वरूपविशेषणासत्वप्रयुक्ताव्याप्तिमाह **आरोपितेति** । अज्ञानस्याभावोपादानकत्वमेव नास्ति अभावस्य निरुपादानत्वादित्यत **उक्तमारोपितेति** । व्यावहारिकस्य कथञ्चित्तथात्वेऽपि यदा घटवति भूतले घटाभावारोपो भवति तदारोप्यमात्रस्याज्ञानोपादानकत्वमङ्गीकार्यमन्यथा द्वितीयलक्षणस्यासम्भवप्रसङ्गादतस्तस्मिन्नारोपिताभावोपादानाज्ञाने भावत्वाभावादव्याप्तिस्स्यादित्यर्थः । आरोपिताभावोऽपि भावरूपाज्ञानोपादानक एवेति नातिव्याप्तिरित्याशङ्क्यापाकरोति **नचेति** । तस्य=आरोपितसर्पाभावस्य । यद्यभावस्य भावोपादानकत्वं स्यात् तदाऽसत्यस्यापि सत्योपादानकत्वं स्यादित्याह **असत्यस्येति** । घटवति भूतले आरोपितस्य घटाभावस्य घटज्ञानेन निवृत्तिर्दृश्यते सा न स्यात्तस्याज्ञानोपादानकत्वविरहादित्याह **तस्येति** । आरोपितघटाभावस्य । नचेष्टापत्तिरिति वाच्यम् । तथात्वे ब्रह्मवत्सत्यत्वापत्तेः । अनादित्वभावत्वविशेषणप्रयुक्तदोषमभिधाय ज्ञाननिवर्त्यांशनिवेशप्रयुक्ताव्याप्तिमाह । **किञ्चेति** । **शुद्धमिति** अस्मन्मते पुंगतमेव तमः परमते विषयावरकतया विषयगतम् । एवञ्च ब्रह्मावरकाज्ञानस्य ज्ञाननिवर्त्यत्वं नास्ति तन्मते ब्रह्मज्ञानमेव नास्ति शुद्धब्रह्मणो वृत्तिव्याप्यत्वाभावादव्याप्तिरित्यर्थः । **जीवन्मुक्तीति** । जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञाननिवर्त्यत्वाङ्गीकारे स्वकार्यारब्धकर्मादिभिः सह पूर्वेण चरमसाक्षात्कारेण निवर्त्यापत्त्या भिक्षाटनादौ प्रवृत्तिर्न स्यादतो ज्ञाननिवर्त्यत्वाभावादव्याप्तिरित्यर्थः । **रक्तः स्फटिक इति** । रक्तस्येत्युक्त्या भ्रमोपाधिर्दर्शितः ।

न द्वितीयः ज्ञानाभावेऽव्याप्तेः । अभावस्य निरुपादानकत्वात् । सोपादानकत्वेऽपि भावरूपज्ञानोपादानकत्वायोगात्। अन्यथा स्वरूपहानिः । रज्ज्वा सूत्रद्वयमिव मायाब्रह्मणी जगदुपादाने इति पक्षे ऽतिव्याप्तेश्च तयोः भ्रमोपादानत्वात् । मायावच्छिन्नब्रह्मोपादानमिति पक्षेऽसम्भवः । किञ्चार्थाज्ञानरूपस्य भ्रमस्य भावविलक्षणत्वेन निरूपादानत्वादसम्भवश्च । न तृतीयः जीवन्मुक्तयनुवृत्ताज्ञानादावव्याप्त्यादेरत्रापि तुल्यत्वान्न चतुर्थः । द्वितीयलक्षणो-

---

इदमुपलक्षणम् तेन जलस्थवृक्षाधोग्रत्वादिसोपाधिकभ्रमस्य परिग्रहः । तेषामिति । सोपाधिकभ्रमाणाम् । ज्ञाननिवर्त्यत्वाभावादिति । अधिष्ठानतत्त्वसाक्षात्कारेणैव तन्निवृत्तिर्वक्तव्या नचासौ सम्भवति अधिष्ठानभूतो यो वृक्षस्तस्य यदूर्ध्वाग्रत्वादिमत्त्वं तत्साक्षात्कारे सत्यप्यज्ञानस्या निवर्त्यत्वात् । तन्निवृत्तौ च सोपाधिकभ्रमानुपपत्तिरेव स्यादतस्तत्राव्याप्तिरित्यर्थः । सोपाधिकाज्ञानस्य केन निवृत्तिर्भवतीत्यत आह । **सोपाधिकाज्ञानस्येति** । अव्याप्तिमुक्त्वातिव्याप्तिमाह । **चैतन्येति** । चैतन्यातिरिक्तस्य सर्वस्यापि ज्ञाननिवर्त्यत्वाङ्गीकाराच्चैतन्याविद्या-सम्बन्धस्य जगदन्तःपातितयाज्ञाननिवर्त्यत्वादनादित्वादविद्यालक्षणस्यातिव्याप्तिरित्यर्थः । क्रमेण विशेषणानाम-सम्भवमुपपादयितुमादावनादित्वविशेषणस्यासम्भवमाह । **कल्पितत्वेनेति** । प्रातिभासिकत्वेनेत्यर्थः । कथमज्ञानस्य दोषजन्यधीमात्रशरीरत्वमित्यत उक्तं **कल्पितत्वेनेति** तथाचाज्ञानं नानादि ज्ञानविलक्षणत्वे सत्यभावविलक्षणत्वात् रूपवादित्यनुमानमुक्तं भवति ब्रह्मज्ञानप्रागभावयोर्व्यभिचारवारणाय विशेषणविशेष्यभागौ । ज्ञाननिवर्त्यत्वविशेषणस्य सम्भवादाह । **किञ्चेति** । यदनुमानं फलितं तदाह **अज्ञानमिति** । उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने ज्ञाननिवर्त्ये ज्ञानप्रागभावे च व्यभिचारवारणाय विशेषणविशेष्यभागौ हेतौ निवेशितौ । अनादिभावत्वे सत्यज्ञाननिवर्त्यत्वरूपमविद्या-लक्षणं अव्याप्त्यादिना दूषयित्वा भ्रमोपादानत्वरूपं द्वितीयलक्षणमव्याप्त्यादिना दूषयति । **न द्वितीय इति** । इदं रजतमिति भ्रमानन्तरं जायमानं नेदं रजतमिति प्रमानिवर्त्यं यदज्ञानं शुक्त्यज्ञानं तत्र भ्रमोपादानत्वसत्त्वेऽपि यत्रादावेवेयं शुक्तिरिति ज्ञायमाना प्रमा तया शुक्त्यज्ञानं निवर्त्तते तस्मिन्नज्ञाने भ्रमस्यैवाभावेन भ्रमोपादानत्वा-भावादव्याप्तिः । नच भ्रमोपादानयोग्यत्वं विवक्षितम्, अभ्रमपूर्वकप्रमानिवर्त्याज्ञाने सहकारिवैकल्यप्रयुक्तकार्यानुत्पादकत्वरूपं योग्यत्वमस्त्येवेति वाच्यम्, योग्यता हि किञ्चिदवच्छेदेन ज्ञातव्या प्रकृते योग्यतावच्छेदकीभूतो धर्मो न निरूपयितुं शक्यः । नतावदज्ञानत्वं तस्येदानीं निरुच्यमानत्वात् । न चाद्यं लक्षणमेव योग्यतावच्छेदकमिति वाच्यं तस्य दूषितत्वादिति सर्वं पर्यालोच्याह । **ज्ञानाभाव इति** । घटवति भूतले आरोपितो घटाभावो घटप्रमया घटाज्ञानं निवर्त्तते तस्मिन्नज्ञाने भ्रमोपादानत्वाभावादव्याप्तिः स्यादित्यर्थः । ननु तदप्यज्ञानमारोपिताभावोपादानं भवत्विति चेत्तत्राह । **अभावस्येति** । भवदनुमानस्य भ्रमः सोपादानोऽभावविलक्षणत्वाद् घटवदिति सत्प्रतिपक्ष-त्वान्न सम्भव इत्यत आह । **सोपादानकत्वेऽपीति** । सोपादानकत्वाङ्गीकारेऽपीत्यर्थः । भावत्वमत्रोपाधिः । घटादौ साध्यव्यापकता हेतुमति पक्षे भावविलक्षणाज्ञानोपादाने भावत्वाभावेन साधनाव्यापकत्वाच्चेत्युक्तं भवति । बाधकमाह । **अन्यथेति** । अभावस्य भावरूपाज्ञानोपादानकत्वे । **स्वरूपहानेरिति** । अभावत्वात्मकस्वरूपहानेरित्यर्थः । अभावस्य भावरूपाज्ञानोपादानकत्वं स्यात्तदा तस्य भावत्वमेव स्यात् एवमसत्यस्य सत्योपादानकत्वप्रसङ्ग इति भावः । एवमव्याप्तिमुपपाद्यासम्भवातिव्याप्ती मतभेदेनोपपादयति । **मायावच्छिन्नमिति** । अत्र मतत्रयमस्ति मायैव जगदुपादानं ब्रह्म तु तदधिष्ठानमात्रमित्येकमतं, मायावच्छिन्नं ब्रह्मैव सर्वजगदुपादानं न केवलं माया नापि केवलं ब्रह्मेत्यपरमतं, रज्ज्वा सूत्रद्वयमिव मायाब्रह्मणी द्वे अपि प्रत्येकं जगदुपादानकारणमित्यन्यमतम् । तत्राद्यमते नासम्भवः । मायाशब्दवाच्याज्ञानस्यैव सर्वजगदुपादानत्वाङ्गीकारात् भ्रमस्य च जगदन्तःपातित्वेन मायायां भ्रमो-पादानत्वसम्भवात् अतो द्वितीयमतेऽसम्भवस्स्यात् मायावच्छिन्नब्रह्मण एव सर्वजगदुपादानत्वेन मायायां भ्रमोपादान-त्वासम्भवात् । विशिष्टस्य यद्भवतीति न्यायस्य च निरासात् । ब्रह्मण्यतिव्याप्तिश्च द्रष्टव्या । तृतीयमतेऽप्यसम्भवा-

क्तदोषस्याभावादाव्याप्त्यादेरत्राप्यविशेषादिति सङ्क्षेपः ।

तत्र प्रमाणतदाश्रयासिद्धिश्च पूर्वाचार्य्यैराकरे विस्तृता तत्रैव जिज्ञासुभिर्द्रष्टव्या विस्तरभियोपरम्यते । विषयवाक्यार्थस्तु अरेमूढे हेमैत्रेयि, 'आत्मा द्रष्टव्य' इति तव्यप्रत्ययोऽर्हार्थक एव "अर्हे कृत्यतृचश्चे"ति सूत्रात् । ब्रह्मसाक्षात्कारस्य "तस्मिन् दृष्टे परावरे" "निरञ्जनः परमं साम्यमुपैति" 'तन्महिमानं पश्यति वीतशोकः' 'ततो मां तत्त्वतो

---

भावेऽपि ब्रह्मण्यतिव्याप्तिः स्पष्टैवेत्यर्थः । अतिव्याप्तेर्हेतुमाह । **तयोरिति** । मायाब्रह्मणोरित्यर्थः । असम्भवं दर्शयति । **किञ्चेति** । भ्रमो निरुपादानको भावविलक्षणत्वादभाववदिति प्रयोगः । तथा च भ्रमस्य निरुपादानत्वादज्ञाने भ्रमोपादानत्वाभावादसम्भव इत्यर्थः । मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वरूपं तृतीयाज्ञानलक्षणं परिहरति । **न तृतीय इति** । जीवन्मुक्त्यनुवृत्ताज्ञाने साक्षाज्ज्ञाननिवर्त्यत्वाभावादव्याप्तिरित्यर्थः । अनाद्युपादानत्वे सति मिथ्यात्वमिति चतुर्थमविद्यालक्षणमपि निरस्यति । **न चतुर्थ इति** ।

**इत्यज्ञानलक्षणनिरासः ।**

तत्र=अज्ञाने । **प्रमाणेति** प्रमाणाभावादप्यज्ञानासिद्धिः । तथाहि भवदभिमताज्ञाने किं प्रमाणमिति वक्तव्यम्, अहमज्ञो मामन्यञ्च न जानामि त्वदुक्तमर्थं न जानामीति प्रत्यक्षमेवात्र प्रमाणमिति चेन्नान्यविषयकत्वेनाभासमात्रत्वात्तथाहि को वाऽत्राहमर्थः । शुद्धं ज्ञानमात्रं वा ज्ञानावच्छिन्नब्रह्म वा जीवो वेति । नाद्यः शुद्धत्वहानेः । शुद्धमज्ञमिति प्रतीत्यापत्तेरपसिद्धान्ताच्च । न द्वितीयस्तदवच्छेदकाज्ञानस्याद्याप्यसिद्धत्वात् । अन्योन्याश्रयाच्चाज्ञानप्रयुक्तोऽहमर्थस्तत्प्रयुक्तमज्ञानमिति । न तृतीयोऽप्यस्तत्त्वेन जीवस्याज्ञानोत्तरभावित्वात् । अस्मत्पक्षे प्रत्यगात्मपरत्वेन त्वत्पक्षेऽहङ्कारपरत्वेनाहमज्ञ इत्यहङ्कारस्याज्ञतापत्तेः । जडस्य तत्कार्यत्वेनाज्ञानरूपत्वात्तद्वैशिष्ट्यासिद्धेरित्यादिकं अध्यासगिरिवज्रे प्रथमाध्यायस्योपोद्घाते विस्तारेण निरूपितम् । अथ तन्मतेऽज्ञानस्याश्रयोऽपि दुर्निरूप्यस्तथाहि । कस्तावत्तस्याश्रयः शुद्धं चिन्मात्रं वा सर्वज्ञो वा जीवो वेति । अत्राहुः केचित् चिन्मात्रमेवाज्ञानाश्रयस्तदन्यस्याज्ञानकल्पितत्वेन तदाश्रयत्वायोगात् । तदुक्तं विवरणे "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर" इति । अत्र ब्रूमः-शुद्धस्याज्ञानाश्रयत्वे शुद्धत्वभङ्गात् । अज्ञानाश्रयत्वस्यैवाशुद्धत्वात् । अज्ञत्वमेव स्यात् किञ्चाज्ञानाश्रयत्वस्याज्ञातृत्वनियमात् । एकत्र ज्ञानभावरूपाज्ञानयोस्तमःप्रकाशयोरिव विरुद्धस्वभावत्वान्नाश्रयाश्रयित्वसम्भवः । नहि प्रचण्डमार्त्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुन्मत्तेन वक्तुं शक्यमित्यादिकं बहुतरमाकरे प्रपञ्चितम् । **अर्हार्थक एवेति** अत्रैवकारो विध्यर्थं व्यवच्छिनत्ति । कस्मादित्यत आह **अर्हे कृत्यतृचश्चेति** । **ब्रह्मसाक्षात्कारस्येति** । अस्य मोक्षोऽन्तरङ्गोपायतया सिद्धत्वेन विधेयत्वाभावादिति योजना । उक्तार्थं श्रुतिप्रमाणेन द्रढयति । **तस्मिन्निति** । दृष्ट एवात्मनीश्वर इत्युक्त्या तस्मिन् सर्वज्ञे सर्वेश्वरे पुरुषोत्तमे श्रीकृष्णे"आत्मावारे"तिश्रुतिसिद्धभगवदनुग्रहहेतुकश्रवणमनननिदिध्यासनैः दृष्टे साक्षात्कृते सति । अस्य भगवत्साक्षात्कारवतो विदुषः सर्वकर्मक्षयध्वंसपूर्विका भगवद्भावापत्तिरूपा मुक्तिर्भवतीति निर्णीतं भवति सा च मुक्तिःकीदृक्स्वरूपेति जिज्ञासायामाह । **निरञ्जन इति** । निर्गतं नष्टं पुण्यपापादिलक्षणमञ्जनं यस्मात्सः । अनेन बीजकूटादिकर्मक्षयपूर्वकमोक्षोन्तरङ्गोपायब्रह्मसाक्षात्कारो व्यञ्जितः । विवदन्तेप्यत्र बहवस्तेषां विवादनिराकरणाय भगवती श्रुतिः साक्षित्वेन मुक्तस्वरूपं दर्शयतीत्याह । **परमं साम्यमिति** । तच्च सायुज्यमित्यर्थः । मुक्तावपि तत्स्वरूपगुणमाधुर्य्यादिकं प्रत्यक्षीक्रियते तत्साम्यापन्नेनेत्याह । **तन्महिमानमिति** । वीतशोक इत्यनेन सर्वकर्मनाशपूर्वकभगवत्साक्षात्कारः स्फोरितः । भगवत्साक्षात्कारस्य मोक्षासाधारणकारणत्वं श्रुतिप्रमाणेन निर्दिशति । **ततो मां तत्वत इति** । ततः किं सिद्धमित्यत आह । **तथाचेति** । **वाक्यान्तरप्राप्तम्**=आत्मावारेतिपूर्वनिर्दिष्टमित्यर्थः । तदन्तरङ्गोपायम्=पूर्वपरामर्शिना तच्छब्देन दर्शनं परामृश्यते दर्शनान्तरङ्गोपायमित्यर्थः । निदिध्यासनस्य पर्य्यायान्तर-

ज्ञात्वा विशते तदनन्तरमित्यादिवाक्यैर्मोक्षान्तरङ्गोपायतया सिद्धत्वेन विधेयत्वाभावात् । तथाच वाक्यान्तरप्राप्तं ब्रह्मसाक्षात्कारलक्षणं मोक्षसाधारणोपायं दर्शनमुद्दिश्य तदन्तरङ्गोपायभूतं निदिध्यासनमत्र विधीयते । तदेव ध्यानज्ञानपराभक्तिध्रुवास्मृत्यपरपर्य्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान्बादरायणः । सूत्रविषयवाक्ययोरेकार्थत्वनियमात् । तत्रापि विषयवाक्यस्य मूलरूपत्वेन स्वतःप्रामाण्याद्बलीयस्त्वं तदनुसारेणैव सूत्रार्थो नेयः । अन्यथा तयोर्विषयविषयिभावानुपपत्तेः । श्रवणमननयोर्निदिध्यासनोपायत्वेन विनियोगस्तयोरपि परम्परया मोक्षसाधनत्वात् । तत्र वेदान्तवाक्यानां भगवत्स्वरूपगुणादिप्रतिपादनपरत्वं निश्चित्य तत्प्रतिपाद्यं ध्येयस्वरूपादिकं साक्षात्पश्यत आचार्य्यस्य मुखात्तदनुभूतवाक्यार्थस्य ग्रहणं श्रवणं श्रुतस्य चोपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो मननम् । मननविषयार्थस्य साक्षात्कारासाधारणसाधनमनवरतध्यानं निदिध्यासनं तथाचोक्तलक्षणश्रवणादिसाध्यनिदिध्यासनस्यात्यन्ताप्राप्तत्वादपूर्वविधिरेवायमिति बोध्यम् । द्वितीयवाक्यार्थस्तु तच्छब्दौ पूर्वोक्तवाक्यस्यात्मपरामर्शपरौ । विजिज्ञासितव्य इत्यत्रोक्तस्य ध्यानात्मकज्ञानस्य मोक्षान्तरङ्गोपायत्वाद्विधेयत्वम्, अन्वेषणस्य श्रवणाद्यात्मकस्य तत्साधनतया विनियोग इति । भूमेत्यस्य व्याख्यानं भूमेतिसूत्रव्याख्यानावसरे वक्ष्यामः ॥१॥

इतिजिज्ञासाधिकरणम्

---

माह । **तदेवेति** । निदिध्यासनमिति तदर्थः । कस्मान्निर्णीतं ज्ञानशब्देनात्र निदिध्यासनमेव सूत्रकृताभिधीयत इत्यत आह । **सूत्रविषय इति** । सूत्रविषयवाक्यत्वमेकार्थत्वव्याप्यमिति बलादेव निरुक्तार्थनिर्णीतमित्यर्थः । ननु सूत्रार्थानुसारेणैव वाक्यार्थो निर्णेतव्य इत्यतआह । **तत्रापीति** । सूत्रविषयवाक्ययोर्मध्ये । तदनुसारेण=विषयवाक्यानुसारेण । विपक्षे बाधकतर्कमाह । **अन्यथेति** । विषयवाक्यानुसारेण सूत्रार्थत्वानभ्युपगमे । निदिध्यासनस्य विधेयत्वे श्रवणमननादीनां वैयर्थ्यमापद्येत इत्यतआह । **श्रवणमननयोरिति** तयोः=श्रवणमननयोः । **परम्परयेति** । श्रवणमननाभ्यां मोक्षसाधनं निदिध्यासनं सम्पाद्य भगवन्तं पश्यति ततो मुक्तिरिति परम्परया श्रवणमननयोर्मुक्त्युपयोग इत्यर्थः । श्रवणमननयोः परम्परया मोक्षसाधननिदिध्यासनोपायत्वं प्रागभिहितं तदेव स्पष्टतयोपपाद्यते । **तत्र वेदान्तवाक्यानामिति** । तत्र=श्रवणे सति । गुणादीत्यत्रादिपदेन तच्छक्त्यादिपरिग्रहः । **निश्चित्येति** । शास्त्रानुकूलयुक्तिभिरिति शेषः । अनेन मननमभिहितं भवति । तत्प्रतिपाद्यम्=वेदान्तवाक्यप्रतिपाद्यम् । साक्षात्पश्यत इत्युक्त्या दर्शनसमानाकारं स्मृतिसन्तानरूपं निदिध्यासनमभिहितम् ।। श्रवणादिपदार्थं निर्वक्ति । **आचार्य्यस्येति** । उक्तार्थप्रतिपादनेन भवतां को लाभ इत्यत आह । **तथाचेति** । **अपूर्वविधिरेवायमिति** । अत्यन्ताप्राप्तार्थविधायकत्वमपूर्वविधित्वं यथा व्रीहीन् प्रोक्षतीति प्रोक्षणात्मकसंस्कारकर्मणो विधिमन्तरेणाप्राप्तत्वात्तत्फलकोऽयं प्रोक्षणविधिर्यथा तद्वदत्रापि निदिध्यासनस्य मानान्तरेणाप्राप्तत्वादपूर्वविधित्वमित्यर्थः । **द्वितीयवाक्यार्थस्त्विति** सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यर्थः । एतद्वाक्यघटकीभूततच्छब्दद्वयमस्ति तदर्थं निर्वक्ति । **तच्छब्दाविति** । **पूर्वोक्तेति** । "आत्मा वारे द्रष्टव्यः श्रोतव्य" इति वाक्यस्येत्यर्थः । भूमात्वेव विजिज्ञासितव्य इति तृतीयविषयवाक्यस्य कोऽर्थ इत्यत आह । **भूमेत्यस्येति** । भूमैव सुखमिति भूमाशब्दो ब्रह्मपर्य्यायः सुखशब्दश्चानन्दपर्यायो "विज्ञानमानन्दं ब्रह्म" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इतिलक्षणवाक्यात् । "यो वै भूमा तदमृतमथ यदल्पं"तन्मर्त्यमित्युपरिष्टात् तत्सूत्रव्याख्यानावसरे विवेचयिष्यत इति भावः ।

इतिजिज्ञासाधिकरणम् ।

एवं निर्वचनमुखेन जिज्ञास्यं व्युत्पादितं तस्य किं लक्षणमित्यपेक्षायामाह—

## जन्माद्यस्य यतः ।१।१।२।

अस्येति शब्दः कार्यपरः । यत इति कारणपरः । जन्मादिर्यस्य तदिदं जन्मादि सृष्टिस्थितिलयमोक्षम् । तद्गुणसम्विज्ञानो बहुव्रीहिः । लम्बकर्णमानयेतिवत् । यतो सर्वेश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणात्सर्वनियन्तुर्भगवतः श्रीपुरुषोत्तमादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृभोग्यसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयभूतस्य तर्कागोचररचनस्य जन्मस्थितिलयमोक्षाः प्रवर्त्तन्ते तदेव ब्रह्म जिज्ञास्यमिति वाक्यार्थः । यत्तदोर्नित्यसम्बन्धात् । "भृगुर्वै वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मे"त्युपक्रम्य यतो वा इमानि "भूतानि जायन्ते येन जातानि जीवन्ति

---

प्रागभिहितजिज्ञास्यब्रह्मणो लक्षणप्रमाणसापेक्षत्वात्तल्लक्षणमभिधातुं प्रागभिहितार्थमनूद्यते **एवमिति** । तस्य=ब्रह्मणः । सूत्रस्य पदार्थान् व्याचष्टे । **अस्येति** । जन्माद्यस्येत्यस्य विग्रहं दर्शयति । **जन्म आदिर्यस्येति** । इदमिति पदसान्निध्यात् जन्मादीत्यस्य नपुंसकैकवचनत्वं स्फोरितं तेन तस्य द्विवचनान्तता निरस्यते अन्यथा "ईदूदेद्द्विवचनं प्रगृह्यमि"ति प्रगृह्यसंज्ञायां प्लुतः प्रगृह्याः" इत्यनेन प्रकृतिभावापत्तेः । समासार्थमभिप्रेत्याह । **सृष्टिस्थितिलयमोक्षमिति** । सृष्टिस्थितिलयमोक्षरूपस्यान्यपदार्थस्य बहुव्रीहौ प्रधानत्वेन तदंशे जन्मनो विशेषणत्वम् । तथाच जन्मनः समासार्थैकदेशत्वेन गुणत्वात् तत्त्वेन सम्विज्ञानं यस्मिन् बहुव्रीहौ तद्गुणसंविज्ञानो यथा लम्बकर्णमानयेत्यादिकमित्याशयेनाह । **तद्गुणसम्विज्ञानो बहुव्रीहिरिति** । पदार्थोक्तिं निर्वाच्य सम्प्रति सूत्रस्य वाक्यार्थबोधं दर्शयति । **यत इत्यादिना** । यस्मात्सर्वेश्वराद्भगवतोऽस्य जन्मादयः प्रवर्त्तन्ते तद्ब्रह्मेति योजना । ईश्वरशब्दस्य लोकपालेऽपि प्रयोगात्तत्र व्यभिचारप्रसक्तिनिरासाय सर्वेति विशेषणमीश्वरस्योपन्यस्तम् । ईश्वरेश्वरादिति तदर्थः । "तमीश्वराणां परमं महेश्वरमि"ति श्रुतेः । तत्र हेतुगर्भितविशेषणद्वयम् **सर्वज्ञात्सर्वशक्तेरिति** । वक्ष्यमाणेषु कारणत्वेन प्रतीयमानेष्वभिप्रेतेष्वतिप्रसङ्गवारणाय विशेषणं **परमेति** । अभिन्ननिमित्तोपादानकारणादित्यर्थः । तच्च प्रकृतिश्चेति सूत्रव्याख्यानावसरे स्फुटीभविष्यति । तत्रापि हेतुमाह । **सर्वनियन्तुरिति** भगवच्छब्दस्यान्यत्र जीवे गौणत्वेनातिव्याप्तिरिति शङ्कां निरस्यति **पुरुषोत्तमादिति**=श्रीकृष्णादित्यर्थः । कार्यं विशिनष्टि **नामरूपाभ्यामिति** । नाम=देवदत्तादि रूपम्=आकृतिर्देवतिर्यङ्मनुष्यादिस्ताभ्याम् "नामरूपे व्याकरवाणी"ति श्रुतेः व्याकृतस्य=विकारभाजितस्य । **विविधविभक्तेति** । विविधैरनेकैर्विभक्तैरनादिकर्मतन्त्रतया स्वस्वकर्मानुरूपविभागवैचित्र्यं भजद्भिर्भोक्तृभिर्भोग्यैश्चसममभिन्नस्येत्यर्थः । अनेन जीवानामनेकत्वे विचित्रकर्मणामनादित्वे सिद्धत्वेन सत्कार्यवादस्य सुतमां सिद्धिः सूचिता तथाच श्रुतिः । 'ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातन' इति । नियतेति नियतौ संस्कारानुरूपौ देशकालौ येषां तथाभूतानां फलानां तदुपभोगानां चाश्रयस्येत्यर्थः । नियतदेशोत्पादाः यथा कृष्णमृगादयः । केचिन्नियतकालोत्पादाः यथा कोकिलारवादयः नियतफला यथा केचित्सुखिनः केचिद्दुःखिनः इति विवेकः । नह्येतद्विश्वमल्पशक्तिभिर्ज्ञातुं शक्यत इत्याह । **तर्कागोचररचनस्येति** । तर्कैर्युक्तिभिरगोचरा अविषया रचना यस्य तस्येत्यर्थः । **तद्ब्रह्मेति** । तच्छब्दाध्याहारे किं मानमित्याशङ्क्य नित्यसम्बन्धस्यैव मानत्वमाह । **यत्तदिति** । उक्तार्थेऽप्रामाण्यशङ्कानिरासाय विषयवाक्यमवतारयति । **भृगुरिति** । वरुणसुतो भृगुः पितरं वरुणमधीहि भगवो ब्रह्मेति मन्त्रपूर्वकमुपसन्नः । हे भगवन् पूजार्ह ! ब्रह्माधीहि, उपदेशाय स्मराधीष्वेतिवाध्यापयेतिवार्थः । यतो यस्माच्छ्रीपुरुषोत्तमादिमानि

यत्प्रयन्त्यभिसंविशन्ति" "तद्विजिज्ञासस्व तद्ब्रह्म" 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादि श्रुतेः। जगदभिन्ननिमित्तोपादानत्वे सति सत्यत्वादिमत्त्वं ब्रह्मणो लक्षणम्। नचोपादानाभिन्ननिमित्तस्य कारणत्वं कुत्रापि न दृश्यत इति वाच्यम्। घटेशसंयोगजीवगतज्ञानादौ ईशजीवयोस्तथात्वदर्शनात्। ब्रह्म जगदभिन्ननिमित्तोपादानं भवितुमर्हति तादृशशक्तिमत्वात्। जीवगतज्ञानादिकार्ये जीववत् घटेश्वरसंयोगादिकार्ये ईश्वरवदित्यनुमानात्। परमते तु लक्षणमसम्भवि पूर्ववद्विकल्पासहत्वात्। ननु लक्षणं द्विविधं स्वरूपतटस्थभेदात् तत्र स्वरूपाभिन्नं लक्षणं प्रथमं यथा सत्यं ज्ञानमित्यादिकम्। यावल्लक्ष्यमनवस्थितत्वे सति व्यावर्त्तकं तटस्थलक्षणं यथा "यतो वा इमानी"त्यादिश्रुत्युक्तकारणत्वस्य प्रलयेऽननुगतत्वे सतीतरव्यावर्त्तकत्वाल्लक्षणसमन्वयः। इतिचेन्नैवमसम्भवात् तथाहि न तावत्स्वरूपलक्षणोक्तिरुपपत्तिमती असाधारणधर्मस्यैव सर्वसम्मतलक्षणत्वात्। न स्वरूपमात्रस्यान्यथा स्वरूपस्यैव व्यावर्त्तकत्वे लक्षणोक्तेरेव वैयर्थ्यात्, स्वरूपस्य व्यावर्त्तकत्वादर्शनाच्च। ननु स्वरूपस्यैव धर्मधर्मिभावकल्पनया लक्षणत्वाङ्गीकारे नोक्तदोषः। "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवाभासन्ते" इत्यभियुक्तोक्तेरिति

---

महदादितृणान्तानि भूतानि जायन्ते, इति सृष्टिरुक्ता येन जातानि जीवन्तीति स्थितिरुक्ता। अभिसंविशन्तीति लयो दर्शितः। यं सर्वकर्मध्वंसानन्तरं प्राप्नुवन्तीति मोक्ष उक्तः। अभिन्ननिमित्तोपादानस्य क्वाप्यदृष्टत्वात् कथमेवं व्याख्यानमित्याशङ्क्य ईश्वरोऽपि सर्वव्यापकस्य स्वस्य सर्वैरपि घटादिभिः संयोगं स्वयमेव सृजति सर्वकार्यहेतुत्वात् तथाच तत्र कर्तृत्वेन निमित्तकारणं भवति समवायिकारणत्वमीश्वरस्येत्याशयेन परिहरति। **नचेति**। तार्किकाणां मते घटेश्वरसंयोगादिरूपे कार्ये ईश्वरस्योपादानकारणत्वं निमित्तकारणत्वञ्च सच संयोगः समवायसम्बन्धेनेश्वरे समवेतस्तं प्रतीश्वरस्य समवायिकारणत्वं कार्यमात्रं प्रति तस्य निमित्तकारणत्वेनाभिन्ननिमित्तोपादानत्वदर्शनान्नात्यन्ताप्रसिद्धिरित्यर्थः। **जीवगतेति**। स्वज्ञानचिकीर्षाप्रयत्नादिकं शास्त्राभ्यासादिभिः स्वयमेव करोति जीवस्तेन तत्र कर्तृत्वेन निमित्तकारणं भवति तथापि च स्वयमेव समवायिकारणं भवति स्वज्ञानादीन् प्रति। कार्यं यत्र समवैति तत्समवायिकारणमिति समवायिकारणलक्षणस्य स्फुटोपलम्भादित्यर्थः। **तथात्वदर्शनात्**। अभिन्ननिमित्तोपादानकारणत्वदर्शनात्। अनुमानेनाभिन्ननिमित्तोपादानकारणत्वं व्युत्पादयति। **ब्रह्मेत्यादिना**। मायावादिनां मते लक्षणस्यासम्भवं दर्शयति। **परमत इति**। पराभिमतं स्वरूपलक्षणं तटस्थलक्षणं दूषयितुमुपन्यस्यति। **नन्विति**। तत्र=तयोर्मध्य इत्यर्थः। तदुदाहरति। **यथेति**। तटस्थलक्षणस्य लक्षणमाह। **यावल्लक्ष्यमिति**। स्वरूपलक्षणेऽतिप्रसक्तिनिरासाय यावदिति सत्यन्तम्। लक्ष्यावृत्तितादृशधर्मेऽतिप्रसक्तिवारणाय व्यावर्त्तकपदम्। लक्षणसमन्वयं दर्शयति। **यथेत्यादिना**। परिहरति **नेति**। न तावत्सत्यत्वादिकं प्रत्येकं स्वरूपलक्षणं तस्य घटादिसाधारणत्वात्। नच सत्यत्वे सति ज्ञानत्वं, तस्य ज्ञानेऽपि परेणाङ्गीकारात्। नापि ज्ञानानन्दत्वं सत्यत्वं ज्ञानानन्दत्वसत्यत्वरहितस्य ज्ञानानन्दात्मकस्य शून्यवादिभिरप्यङ्गीकारात्। नापि मिलितं लक्षणं वैयर्थ्यात्। स्वरूपं न लक्षणं धर्माभावादित्याशयेनाह। **असाधारणधर्मेति**। तन्मात्रवृत्तित्वं तदर्थः। बाधकतर्कमाह। **अन्यथेति**। स्वरूपमात्रस्य लक्षणत्वे। ब्रह्मणः स्वरूपभूतसत्यत्वापेक्षया धर्मधर्मिभावकल्पनया सत्यत्वादिरूपेण ब्रह्मणो लक्षणत्वं ब्रह्मत्वेन रूपेण ब्रह्मणो लक्ष्यत्वमित्याशयेनोक्तशंकापरिहरन्नाह। **नन्वित्यादिना**। उक्तार्थं पञ्चपादिकाचार्यवचसा द्रढयति। **आनन्द इति**। नहि त्वन्मते पारमार्थिकाः सत्यत्वादयः धर्माः ब्रह्मण्यभ्युपेयन्ते तथासति निर्विशेषचिन्मात्रवादभङ्गापत्तेरपितु कल्पिताः,

चेन्न । कल्पितस्य व्यावर्त्तकत्वासम्भवादन्यथा यूपे कल्पितादित्यस्याप्यसूर्य्याद्व्यावर्त्तकत्वापत्तिः । किञ्च, सत्यादिशब्दा यौगिका रूढा वा ? आद्ये यौगिकस्य प्रकृतिप्रत्ययार्थपरत्वेन निर्विशेषत्वहानेः । द्वितीये रूढानां गुणजात्याद्यनेकधर्मवद्वस्तुपरत्वनियमेन निर्विशेषपरत्वायोगात् । ननु सत्यादिपदानां सविशेषपरत्वेऽपि लक्षणया निर्विशेषपरत्वान्नोक्तदोषावकाश इति चेन्न । लक्षणाऽसम्भवात् । तथाहि–जहत्स्वार्थापक्षे यथा गङ्गायां घोष इत्यत्र प्रवाहरूपशक्यत्यागेनाऽगङ्गादिरूपस्तीरादिर्वाक्यार्थस्तथा प्रकृतेऽपि सत्यादिपदार्थायोगेनाऽसत्यजडपरिच्छिन्नरूपो वाक्यार्थः स्यात् । अजहत्स्वार्थापक्षे शोणो धावतीत्यादिशक्यवद्विशिष्टार्थत्वापत्तिः । भागत्यागलक्षणापक्षे निर्विशेषमात्राङ्गीकारे सत्यादीनां कोवाऽर्थ इत्यत्राप्यनिश्चयात्सत्यत्वादिधर्मत्यागेऽपि सच्चिदपरिच्छिन्नं ब्रह्मेति त्रैविध्यस्यावश्यंभावान्निर्विशेषाऽद्वितीयत्वभङ्गः । सर्वेषामेकार्थत्वाङ्गीकारे पर्य्यायत्वापत्तिस्तथात्वाभ्युपगमे चैकपदेनैवार्थसिद्धौ पदान्तरवैयर्थ्यञ्च । किञ्च शब्दैकांशार्थत्वाङ्गीकारे सर्वांशवाचकता सम्बन्धाभावेऽपि तदंशवाचकतासम्बन्धस्याऽकामेनापि त्वया स्वीकार्यत्वान्निर्विशेषत्वहानिस्तथात्वे मिथ्यात्वापत्तिः निर्विशेषं वस्तु मिथ्या शक्यैकदेशत्वात्तव मते घटत्वादिवदिति प्रयोगात् । ननु सत्यत्वादिविशिष्टवाचिपदानां शुद्धे लक्षणाङ्गीकारान्न पर्य्यायत्वापत्त्यादि-

---

न ते व्यावर्तकाः लक्षणलक्षणे पारमार्थिकासाधारणधर्मस्यैव निविष्टत्वादित्याशयेन दूषयति । नेति । लक्षणलक्षणे पारमार्थिकधर्मस्य निवेशो गौरवादेव परित्याज्य इत्यतो बाधकतर्कमाह । अन्यथेति । कल्पितधर्मस्यापि व्यावर्त्तकत्वे । यदि काल्पनिकधर्मस्यापि व्यावर्त्तकत्वं भवद्भिरभ्युपेयते तदा यूपे कल्पितस्यादित्यस्यापि सूर्येतरव्यावर्त्तकत्वं स्यान्नत्वेवं तस्मात्स्वरूपे धर्मधर्मिभावकल्पना न सम्भवतीति भावः । सत्यादिपदानामवयवार्थप्रतिपादकतया यौगिकत्वं जात्यादिधर्मप्रतिपादकं रूढित्वम्वेति विकल्पयति । किञ्चेति । सत्यादिपदानामवयवार्थवाचकत्वे ब्रह्मणो वाक्यगोचरतया निर्विशेषवादो दत्ताञ्जलिः स्यादित्याशयेनाद्यं विकल्पं परिहरति । आद्य इति । गुणजात्यादिविशेषार्थप्रतिपादकत्वेन सत्यादिपदानां न निर्विशेषपरत्वं युज्यत इत्यभिप्रेत्य द्वितीयमपि पक्षं निरस्यति । द्वितीय इति । सत्यादिपदानां सविशेषार्थे योऽभिधारूपो व्यापारः स मुख्यार्थः । मुख्यार्थभिन्नो यो निर्विशेषरूपार्थो लक्षणया प्रतिपाद्यते स तेषां लक्ष्यार्थ इत्याशयेनाशङ्कते । नन्विति । लक्षणा त्रिविधा जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । यत्र शक्यमनन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्र जहल्लक्षणा । यत्र शक्यार्थमन्तर्भाव्यार्थान्तरप्रतीतिस्तत्राजहल्लक्षणा । यत्र हि विशिष्टवाचकशब्दः स्वार्थैकदेशं विहायैकदेशे वर्त्तते तत्र जहदजहल्लक्षणेति पक्षत्रयमपि दूषयति । असम्भवादिति । तदेवोपपादयति । तथाहीत्यादिना । जहत्स्वार्थापक्ष इति । जहति पदानि स्वमर्थं यस्यां सा जहत्स्वार्था इत्यर्थः । तामुदाहरति यथेति । दार्ष्टान्ते योजयति । प्रकृतेपीत्यादिना । शोण इति शोणरूपाश्रयो धावनकर्त्ता इति बोधः । तृतीयपक्षेऽपि दोषमाह । भागत्यागलक्षणापक्ष इति । सत्यादिपदानां त्रयाणामेकार्थकत्वे पर्य्यायतापत्तिरित्याह सर्वेषामिति । बहूनामपि पदानामन्यसापेक्षत्वेनैकपरत्वं घटतेऽतो न पर्य्यायतापत्तिरूपो दोषः । एकस्यापि पुंसः पितृत्वभ्रातृत्वपुत्रत्वादेः शब्दस्य तद्व्यपयोगिभूतपुत्रभ्रातृपित्रादिसापेक्षतया प्रतिपादनं दृश्यते तथैवात्राप्यसत्ववदज्ञानवदन्तवद्वस्तुसापेक्षतया सत्यादिवत्त्वेन न सत्यादीनां पर्य्यायत्वमित्यत आह । किञ्चेति । शब्दैकांशार्थेति सत्यत्वादिविशिष्टवाचकानां सत्यादिपदानां सत्यत्वधर्मांशत्यागेन शक्यैकदेशविशेष्यांशधर्मिवाचकत्वं यद्युरी-

दोषावकाश इति चेन्न अनृताऽस्वप्रकाशपरिच्छिन्नरूपे सविशेषे सत्यत्वादेरयोगात्। योगेवा तस्यैवानृतादिव्यावृत्तत्वं स्यान्नशुद्धस्य तस्मात्सत्यत्वादीनां शुद्धादन्यत्रासम्भवा द्वाक्यस्य लक्षणयाऽखण्डार्थत्वे च शुद्धे तदसिद्धेः पर्यायत्वप्रसङ्गः पदान्तरवैयर्थ्यस्य तादवस्थ्यमेव। किंच सत्यादिपदलक्ष्यं पदान्तरवाच्यं नवा। आद्ये सविशेषत्वस्यावश्यंभावः। द्वितीये लक्ष्यत्वासिद्धिः। लक्ष्यत्ववाच्यत्वयोः सामानाधिकरण्यनियमात्। यत्र वाच्यत्वं तत्र लक्ष्यत्वं यथा गङ्गापदलक्ष्यस्य तीरशब्दवाच्यत्वं यन्नैवं तन्नैवं खपुष्पादिवदित्य-न्वयव्यतिरेकाभ्यां लक्ष्यत्वासिद्धिः। ननु सत्यादयः शब्दा असत्यादिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्तीति चेन्न। ब्रह्मस्वरूपमात्रस्य श्रुतिं विनापि प्रागेवाविद्याधिष्ठानतया ज्ञातस्य पुनरपि "ब्रह्मविदाप्नोति पर"मित्यादिवाक्येन च सत्यादिशब्दैः सत्यत्वादि-विशिष्टतया व्यावृत्तिविशिष्टतया च ज्ञातत्वेन तज्ज्ञानस्य व्यावृत्तिज्ञानसाध्यत्वायोगात्। व्यावृत्तिज्ञानस्यैव धर्मिज्ञानसाध्यत्वेन विपरीतत्वापाताच्च। किञ्च, व्यावृत्तयः सत्या मिथ्या वा आद्ये व्यावर्तकानामपि सत्यत्वापत्तेः। व्यावहारिकैर्व्यावर्तकैः पारमार्थिकव्यावृत्त्यसिद्धेः। किञ्च,व्यावृत्तिविशिष्टपरयाऽद्वैतभङ्गस्सविशेषत्वापत्तिश्च। द्वितीयेऽसतस्तुच्छस्य शशशृङ्गा-देरिव व्यावृत्तित्वाऽसम्भवः। तुच्छस्य यदि स्वयं किञ्चित्पदार्थत्वं स्यात्तर्हि

---

क्रियते तदा निर्विशेषत्ववादो व्याहन्येत इत्याशयः। तथात्वे=तदंशवाचकत्वे। अनुमानप्रयोगं दर्शयति **निर्विशेषमिति**। सत्यत्वादिविशिष्टशबलब्रह्मवाचिनां सत्यादिपदानां शुद्धे ब्रह्मणि लक्षणेति न पर्यायत्वमित्या-शङ्कते **नन्वित्यादिना न पर्यायतापत्तिरूपदोषावकाश इति**। प्रवृत्तिनिमित्तभेदादितिभावः। सत्यादिपदशक्यानामनृतादिव्यावृत्तिरूपाणां सत्यत्वादीनां कुत्रान्वयप्रसिद्धः? न तावदुपहिते ब्रह्मणि तस्यानृतस्या-स्वप्रकाशपरिच्छिन्नरूपत्वादित्याशयेनोक्तां शङ्कां परिहरति। **नेति**। अनृतस्वरूपे शवले सत्यत्वादीनामन्वयस्तदा तस्यैवानृतादिव्यावृतत्वं स्यान्न शुद्धस्येत्याह। **योगेवेति**। नचात्रेष्टापत्तिः। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वेदान्तवाक्यस्य मोक्षजनकज्ञानविषयशुद्धब्रह्मपरत्वात्। सत्यादिपदानां मुख्योऽर्थः सत्यत्वं तच्च शुद्धब्रह्मनिष्ठमेव नत्वन्यत्रेति न सत्यादिपदानां लाक्षणिकत्वं युक्तमित्याह। **तस्मादिति** अनृतस्वरूपे शवले सत्यत्वायोगादेवेत्यर्थः। यदि सत्यादिवाक्यस्याखण्डार्थत्वे लक्षणाभ्युपेयते तदा शुद्धे ब्रह्मणि सत्यत्वादेरभानात् पर्यायत्वं दुर्वारमित्याह। **वाक्यस्येति**। सत्यादिवाक्यस्येत्यर्थः। **तदसिद्धेः**। सत्यत्वासिद्धेः। तथात्वाभ्युपगमे चैकेनैव पदेनेष्ट-सिद्धौ पदान्तराणां वैयर्थ्यं दुर्वारमित्याह। **पदान्तरवैयर्थ्यस्येति**। दोषान्तरमाह। **किञ्चेति**। **सत्यादिपद-लक्ष्यमिति**। तच्च ब्रह्मेतिभावः। आद्यपक्षं निरस्यति। **आद्य इति**। पदान्तरवाच्यत्वे। द्वितीयपक्षमपाकरोति। **द्वितीय इति**। पदान्तरवाच्यत्वाभावे। लक्ष्यत्वासिद्धिमेव व्याप्त्या विशदयति। **लक्ष्यत्ववाच्यत्वयोरिति**। व्यक्त्यानन्त्यादिदोषोद्भावस्य च देशकालाद्यननुगमाभावात्तदनुगतायामतद्व्यावृत्तौ पदानां सङ्केत इति सौगतमताभिप्रायेणाशङ्कते। **नन्विति**। स्वयंप्रकाशस्य चिन्मात्रस्य ब्रह्मणोऽविद्याध्यासाधिष्ठानत्वेन तत्साक्षित्वेन श्रुतिमन्तरा प्रागेव निश्चितत्वात् न व्यावृत्तिज्ञानद्वारा ब्रह्मस्वरूपावधारणं युक्तमित्यभिप्रेत्य प्रागुक्तां शङ्कां व्युदस्यति। **नेति**। निर्निमित्तं सर्ववेदान्तानां मुख्यार्थत्यागः प्रसज्येत। ब्रह्मविदाप्नोति परमिति सामान्यतो ज्ञातत्वाल्लक्षणा निष्फला सत्यत्वादिवैशिष्ट्यरूपमुख्यार्थाङ्गीकारे बाधकाभाव इति भावः। तज्ज्ञानस्य=ब्रह्मस्वरूप-ज्ञानस्य। तस्य प्रागेव सिद्धत्वान्न व्यावृत्तिज्ञानेन साधयितुं युक्ततरम्। **धर्मिज्ञानेति**। घटादिरूपधर्मिज्ञानोत्तरकाले

भेदकत्वमपि स्यात् तत्तु नास्त्येव । नच व्यावृत्तिः स्वरूपमेवेति वाच्यं स्वरूपस्य व्यावर्तकत्वाभावात् व्यावर्तकत्वे च व्यावृत्त्यङ्गीकारस्य वैयर्थ्यम् । तथात्वे सविशेषापत्तिर्दुर्वारा। अभेदे सति भेदनिर्वाहकत्वं व्यावर्तकत्वमिति लक्षणस्य समन्वयात् । किञ्च, व्यावर्त्यमसदादिशब्दवाच्यं सद्विलक्षणमसद्विलक्षणम्वा आद्ये सद्विलक्षणस्य वस्तुत्वेऽद्वैतभङ्गोऽवस्तुत्वे व्यावृत्तिवैयर्थ्यम् । द्वितीये ब्रह्मण्यतिव्याप्तिः । व्यावृत्तव्यावर्त्ययोरैक्यापत्तिश्च । किञ्च, व्यावृत्तयो ब्रह्मणो भिन्ना अभिन्ना वा आद्ये द्वैतापत्तिः । व्यावृत्तिर्ब्रह्मेति सामानाधिकरण्यापत्तिः । किञ्च व्यावृत्तिर्ब्रह्मणि कल्पिता यथार्था वा । नाद्यः कल्पिते व्यावर्त्तकत्वासम्भवस्योक्तत्वात् । द्वितीयेऽद्वैतसिद्धान्तभङ्गः । इत्यलं विस्तरेण । किंच, सत्यादेर्विशेष्यमात्रपरत्वे वाक्यस्योद्देश्यविधेयविभागाभावेन यत्किंचिदित्येव बोधनाद्बुभुत्सानुपरमापत्तिः सामान्यस्य पूर्वमेव ज्ञातत्वात् । विशेषस्यानङ्गीकाराच्च । एवं च सत्यादिवाक्यानामखण्डार्थनिष्ठत्वोक्तिर्भ्रान्तिविजृम्भितैव तस्मात्स्वरूपलक्षणं सर्वथाप्यसिद्धमेव ।

॥ इतिस्वरूपलक्षणानुपपत्तिः ॥

---

पटादिज्ञानव्यावृत्तिः सिद्ध्यतीत्यर्थः । विकल्पयति । **किञ्चेति** । व्यावर्त्तकानाम्=इतरभेदानुमापकानाम् । **सत्यत्वापत्तेः** । कार्यकारणयोरनन्यत्वादितिभावः । व्यावर्त्तकानां व्यावहारिकत्वे दोषमाह । **व्यावहारिकैरिति** । **असिद्धेरिति** । नचेष्टापत्तिरिति वाच्यम् । अनृतव्यावृत्तेस्तात्त्विकत्वाङ्गीकारादितिभावः । द्वितीये=मिथ्यात्वे । व्यावृत्तयो ब्रह्मस्वरूपान्नातिरिच्यन्त इत्याशङ्क्य निराकरोति । **नचेति** । तथात्वे=स्वरूपस्य व्यावर्त्तकत्वे । सत्यपदेनासत्यं व्यावर्त्यते व्यावर्त्यं यद्वस्त्वसदादिशब्दवाच्यं तत् सद्विलक्षणमसद्विलक्षणमिति विकल्प्य दूषयति । **किञ्चेति** । सद्विलक्षणस्य वस्तुत्वमवस्तुत्वम्वा । आद्ये दोषमाह । **अद्वैतभङ्गादिति** । द्वितीये दोषमाह । **व्यावृत्तिवैयर्थ्यम्** । नह्यवस्तु व्यावर्त्यं भवतीति तदर्थः । द्वितीये=असद्विलक्षणत्वे । **ब्रह्मण्यतिव्याप्तिरिति** तत्राप्यसद्विलक्षणत्वस्य सत्त्वादिति भावः । व्यावृत्तव्यावृत्त्ययोर्भेदव्यवहारो जायते सचानुपपन्न इति द्वितीयपक्षे दोषान्तरमाह । **व्यावृत्तव्यावर्त्ययोरिति** । व्यावर्त्यमसद्विलक्षणं व्यावृत्तं ब्रह्म तदप्यसद्विलक्षणमिति व्यावर्त्यव्यावृत्तयोरैक्यापत्तिरित्यर्थः । ब्रह्मणि सविशेषत्वापत्तिभिया सत्यादिवाक्यानां न सत्यत्वविशिष्टबोधने तात्पर्यमपितु तात्पर्यविषयस्य खण्डार्थत्वे, तथाच इदं ब्रह्मेति लक्षणलक्ष्यरूपोद्देश्यविधेयविभागाभावेन तात्पर्यतो यत्किञ्चिदित्येव बोधनात्तेन ब्रह्मबुभुत्सानिवृत्त्यभावात्किं ब्रह्मेति प्रश्नोत्तरं न स्यादित्याशयेनाह । **किञ्च सत्यादेरिति** । **उद्देश्यविधेयेति** । यत्सत्यं तद्ब्रह्मेत्यर्थः । ननूद्देश्यविधेयभावेऽसत्यपि अप्राप्तविधेयमात्रपरत्वादखण्डार्थत्वहानिरिति चेन्न । विधेयस्य ब्रह्मणः स्वरूपेण ज्ञातत्वेनोद्देश्यसंसृष्टतयैव बोधनीयतया संसर्गबोधकनीलोत्पलादिवाक्यवत्सखण्डार्थत्वापातात् । तथाच स्वरूपमात्रस्य स्वयंप्रकाशत्वेन नित्यसिद्धत्वेन विधेयत्वाभावात् । उक्तंहि "किञ्चिद्विधीयतेऽनूद्य वाक्येनेति सतां स्थितिः । सत्यज्ञानादिवाक्येन कथ्यतां किंविधीयते ॥१॥ अज्ञातं बोध्यते किञ्चित् वाक्येनेतिसतांस्थितिः । सत्यज्ञानाक्यैस्तु किमविज्ञातं प्रबोध्यते ॥२॥ इति स्वरूलक्षणानुपपत्तिं निगमयति । **तस्मादिति** ।

इतिस्वरूपलक्षणानुपपत्तिः

तटस्थलक्षणं निरस्यति । **नापिद्वितीय इति** । तस्य=यावल्लक्ष्यमनवस्थितत्वे सति व्यावर्त्तकस्वरूपस्य तटस्थलक्षणस्य तैः=मायावादिभिः । तस्य=निर्विशेषरूपस्य ब्रह्मणः । अद्वैतमते ब्रह्मणि कारणत्वासिद्धि

नापि द्वितीयलक्षणं वक्तुं शक्यं तस्यापि सविशेष एव वस्तुनि समन्वेतुमर्हत्वात् । तैश्च ब्रह्मणो निर्विशेषत्वाङ्गीकारात् । तस्य लक्ष्यत्वयोगे सुतरां सविशेषत्वापत्तिरिति सङ्क्षेपः । किञ्च कीदृग् ब्रह्म श्रीमद्भिर्जगत्कारणत्वेनाभिप्रेयते । शुद्धं चिन्मात्रं वाऽविद्योपहितं वा तदध्यासाश्रयं वा । आद्ये शुद्धशब्देन शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तत इत्युक्तो भगवान् महाविभूतिर्विवक्षितः सर्वविशेषहीनोऽखिलप्रमाणशून्यो निर्विशेषो वा । नाद्यो-ऽनङ्गीकारात् । अन्यथाऽपसिद्धान्तापत्तेरस्मत्पक्षप्रवेशाच्च । न द्वितीयः सर्वशून्यस्य श्रुत्युक्तेक्षणबहुभवनसङ्कल्पाद्यनुपपत्तेः । सर्वप्रमाणशून्यस्यावस्तुत्वात् । नाप्युपहितं ब्रह्म कारण-मसम्भवात् । तथाहि उपहितं बिम्बरूपं प्रतिबिम्बरूपमन्वा कारणत्वेनाभिमतम् । आद्ये ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिम्बरूपचेतनस्य परमेश्वरस्य जीवप्रदेशे व्याप्त्यभावा-त्सर्वान्तर्यामित्वानुपपत्तेः । द्वितीयेऽप्यविद्याकृतदोषा जीव इव जगत्कारणे परमेश्वरेऽपि स्युरु-पाधेः प्रतिबिम्बपक्षपातित्वनियमादिति सङ्क्षेपः । नापि चरमः निर्विशेषस्वप्रका-शात्मके ज्ञानस्वरूपे ब्रह्मण्यविद्याश्रयस्य सूर्ये तमस इवात्यन्तविरुद्धत्वादध्यासासिद्धेः पूर्व-मेवोक्तत्वात्तदसिद्ध्याऽध्यासस्य सुतरामसिद्धिः । किञ्च कोवा परमेश्वरः मायावच्छिन्नचेतन इति चेन्न । भ्रान्तिमत्त्वप्रसङ्गात् 'यः सर्वज्ञः सर्ववित् सत्यकामः सत्यसङ्कल्पः' इत्यादिश्रुति-

---

निरसितुं विकल्पयति किञ्चेत्यादिना । शुद्धशब्दाभिधेये ब्रह्मणि श्रीपराशरमुनिप्रणीतविष्णुपुराणवचनं प्रमाणतयोपन्य-स्यति । **शुद्धे महाविभूत्याख्य इति** । अशब्दगोचरस्येत्यादिश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तं तत्कथमित्यपेक्षायां मुक्तात्मव्यावृत्तं भगवच्छब्दप्रवृत्तिनिमित्तमाह । **शुद्ध इति** । यत्र प्रवृत्तिनिमित्तपौष्कल्यं तत्रैव मुख्यत्वं नान्यत्रेति भावः । 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र सिद्धशब्दवच्छुद्धशब्दोऽवधारणगर्भः, शुद्ध एव नित्यशुद्ध इत्यर्थः । अब्भक्षो वायुभक्ष इतिवत् । सिद्धशब्दस्यावधारणगर्भत्वात् सिद्धशब्दो नित्यपरत्वेन व्याख्यातस्तद्वत् अनेन नित्यसिद्धत्वेन सकलचेतनव्यावृत्तिः । नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वादिति भावः । प्रथमकल्पमपाकरोति **नाद्य इति** । श्रीभगवान्पुरुषोत्तमो नेत्यर्थः । बाधकतर्कमुपन्यस्यति **अन्यथेति** । शुद्धशब्दाभिधेयस्य श्रीभगवतः श्रीपुरुषोत्तमस्य स्वीकार इत्यर्थः । द्वितीयकल्पं निरस्यति । **न द्वितीय इति** । आद्यपक्षं व्युदस्य द्वितीयमपि परिहरति । **नाप्युपहितमिति** । तदेवोपपादयति । **तथाहीत्यादिना** । 'विभिन्नदेशस्थयोरुपहितोपाध्योर्बिम्बप्रतिबिम्बभावो दृश्यते, इति नियममवलम्ब्य आद्यपक्षे दोषमाह । **आद्य इति** । प्रतिबिम्बरूपं जगत्कारणमिति द्वितीयमप्यपा-करोति **द्वितीय इति** । अज्ञानाध्यासाश्रयं ब्रह्म जगत्कारणमिति चरमपक्षं निरस्यति । **नापीति** । तदसिद्ध्या= अज्ञानासिद्ध्या । परमेश्वरशब्दार्थं जिज्ञासति । **किञ्चेत्यादिना** । परिहरति । **नेति** । **भ्रान्तिमत्त्वप्रसंगादिति** । मायाविशिष्टस्य भ्रान्तत्वमावश्यकमित्यर्थः । तथात्वे श्रुतिव्याकोपमाह । **यः सर्वज्ञ इति** । शुद्धे तव मते निर्धर्मिके ब्रह्मणि सर्वज्ञत्वादिधर्माणामयोगान्न तत्पराः सार्वज्ञ्यादिश्रुतयोऽपितु मायावच्छिन्नशबलब्रह्मपराः इत्या-शङ्कां परिहरति । **न चेति** । मायावादिनमुपहसन् तन्निरस्यति । **बालेति** । उक्तार्थप्रमाणेन निरूपयन्नाशङ्कते । **मायानिवति** । मायाविनिर्मुक्तस्यैव ब्रह्मणो मायानियन्तृत्वं नतु तदवच्छिन्नस्य तथा च मायानियन्तृत्वरूपं मायित्वं श्रुत्या बोध्यत इत्याशयेन समाधत्ते । **मायित्वमिति** । **तच्चेति** । मायानियन्तृत्वञ्चेत्यर्थः । **पारिभाषिकेति** । आधुनिकसङ्केतः परिभाषा तया चार्थबोधकं पदं पारिभाषिकमिति तदर्थः । निर्विशेषब्रह्मवादिनां मते "तदैक्षत" इत्यादिश्रुतेर्बाधं स्फुटयति । **निर्विशेषस्येति** । यदि न मायावच्छिन्नस्य ब्रह्मण ईक्षणबहुभवनसङ्कल्पवत्त्व-मुपपद्यत इत्युच्यते तदाप्याह । **मायेति** । उपसंहरति । **तस्मादिति** । **अचिन्त्येति** । अचिन्त्याः चिन्तयितुमनर्हाः ।

व्याकोपाच्च । नच मायावच्छिन्नविषयकैव सार्वज्ञ्यादिश्रुतिः शुद्धे धर्मत्वायोगादिति वाच्यम् । बालभाषितत्वात् । मायावच्छिन्नस्य भ्रान्तस्य सार्वज्ञ्यादियोगमनुन्मत्तः को ब्रूयात् । नच 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति श्रुतिरेव मायित्वं वदतीति वाच्यम्, मायित्वं मायानियन्तृत्वमितिश्रुतेर्विवक्षितत्वात् । तच्च सार्वज्ञ्याद्यचिन्त्यानन्तस्वाभाविकशक्त्याश्रयस्य महाविभूत्याख्यस्य शुद्धस्यैव साधारणो धर्मो नान्यस्य पारिभाषिकशुद्धस्य मायावच्छिन्नस्य वा निर्विशेषस्येक्षणबहुभवनसङ्कल्पाद्यसम्भवात् । मायावच्छिन्नस्य भ्रान्तियोगादिति सङ्क्षेपः । तस्मादचिन्त्यानन्तस्वाभाविकासङ्ख्येयसद्गुणगणसागरो भगवांच्छ्रीपुरुषोत्तम एव जगतोऽभिन्ननिमित्तोपादानकारणं तत्रैव लक्षणस्य समन्वय इति राद्धान्तः । प्रथमविषयवाक्यार्थः सूत्रार्थेनैवोक्तः । तत्र पित्रादिष्वतिप्रसक्तेरभिसम्विशन्तीति पदसन्निवेशः । मृदादावतिव्याप्तेः येन जातानि जीवन्ति यत्प्रयन्तीति पदसन्निवेशः । प्रकर्षेण कर्मध्वंसेन यन्ति प्राप्नुवन्तीति मुक्तप्राप्यत्वम् । अभिसंविशन्तीति प्रलयकालीनप्रवेशो विवक्षितः । द्वितीयवाक्यार्थस्तु सत्यत्वज्ञानत्वानन्तत्वाद्यवच्छिन्नं ब्रह्मेति । तत्र सत्यपदमसत्यस्य ज्ञानपदमचिद्वर्गस्यानन्तपदं जीववर्गस्य व्यावृत्तिपरम् । अनन्तत्वञ्चात्र स्वरूपगुणशक्तिभिर्विवक्षितमन्यथा जीवज्ञानेऽतिप्रसङ्गः । नच सत्यादीनामेव गुणत्वान्न सत्यत्वादिपर्यन्तधावनं

---

इयत्तावच्छेदेनानन्ताः परिच्छेदशून्याः स्वाभाविकाः नत्वौपाधिकाः । असङ्ख्येयाः सङ्ख्यातुमशक्याः । सद्गुणानां गणाः परार्द्धानां समूहास्तेषां सागरः । स्वाभाविका इत्यनेनानादित्वविवक्षायां मुक्ता, अन्यानधीनत्वविवक्षायां नित्याश्च व्यावृत्ताः । एतेन गुणानामविद्याकल्पितत्वपक्षव्यावृत्तिरपि ध्वनिता । गुणाश्च ज्ञानशक्तिबलैश्वर्य्यसौशील्यवात्सल्यार्जवसौहार्दसर्वशरण्यत्वतेजोवीर्य्यत्वसौम्यकारुण्यस्थिरत्वधैर्य्यदयामाधुर्य्यसौकुमार्य्यसौन्दर्य्यलावण्यमार्दवादयः। तेषां बहूनामन्तर्भावाभिप्रायेण गणशब्दोपात्तः । भगवद्गुणानामियत्तावच्छेदेन वाङ्मनसागोचरत्वमिति सूचितम् । सागरशब्देनागाधतलास्पर्शित्वं ध्वनितम् । पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामुत्तरोत्तरगुणेभ्यः पूर्वपूर्वगुणानां माधुर्य्यलावण्यसौकुमार्य्यादीनां सागरतरङ्गवत्प्रवनवायमानत्वं मुमुक्षोस्तादृशसागरावगाहनमात्रे वाशेषदोषनिवृत्तिपूर्वकं निरतिशयानन्दप्राप्तिश्चेति सूचितम् । भगवान्=षड्विधैश्वर्य्यसम्पन्नः । **श्रीपुरुषोत्तम इति** । श्रिया युक्तः पुरुषोत्तमः श्रीमुकुन्दः श्रीकृष्ण इत्यर्थः । "अतोऽस्मिँल्लोके वेदे च प्रथितः पुरुषोत्तम" इति सर्वविदुक्तेः । तत्रैव=निरुक्तविशेषणविशिष्टे भगवति पुरुषोत्तमे । **प्रथमविषयवाक्यार्थ इति** । "यतो इमानि भूतानि जायन्त" इति सूत्रविषयवाक्यस्यार्थः । श्रुत्युक्तपदानां प्रयोजनं विवेचयति । **तत्रेति** । यतो इमानीति विषयवाक्य इत्यर्थः । जन्ममात्रस्यैव लक्षणत्वे पित्रादीनामपि पुत्रादिजन्मकारणत्वात्तत्रातिप्रसङ्गवारणायाभिसम्विशन्तीत्युक्तमित्यर्थः । उभयस्यापि लक्षणत्वे मृदादावतिव्याप्तिस्तस्यापि घटादेरुत्पत्तिप्रलययोः कारणत्वस्य प्रसिद्धत्वात्तद्व्यावृत्तयेऽसाधारणविशेषणद्वयमित्याह । **मृदादाविति** । प्रपदसन्निवेशप्रयोजनं निर्वक्ति । **प्रकर्षेणेति** । वक्ष्यते च मुक्तोपसृप्यत्वसूत्रेणेतिभावः । पौनरुक्त्यमपाकर्त्तुमाह । **अभिसम्भवतीति** । द्वितीयवाक्यार्थः=सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यस्यार्थः । सत्यादिपदानां व्यावर्त्यं दर्शयति । **तत्र सत्यपदमिति** । 'तत्र'=विषयवाक्ये सत्यादिपदानां भावप्रधाननिर्देशपरत्वमङ्गीकृत्य सत्यत्वमिति प्राग्व्याख्यातं, तत्र सत्यादीनां गुणत्वादेवोपपत्तौ तद्व्याख्यानमसङ्गतं प्रतिभातीत्याशङ्क्य परिहरति **नचेति** । यदि सत्यादिपदानां स्वरूपवाचकत्वं न स्यात्तदा ब्रह्मणोऽसत्यादिस्वरूपत्वमापद्येत इत्याह । **सत्यादिपदानामिति** । **अयम्भाव इति** । त्रैविध्यस्वरूपापत्त्या=सत्यस्वरूपं ज्ञानस्वरूपमनन्तस्वरूपमिति त्रैविध्यस्वरूपापत्त्या । सत्यादिपदत्रयेणैकं

युक्तं गौरवादिति वाच्यम् । सत्यादिपदानां स्वरूपवाचकत्वाभावेऽसत्यजडपरिच्छिन्नमेव लक्ष्यं ब्रह्मस्वरूपं सत्यादिगुणकं त्वन्मतेऽभ्युपेतं स्यात् । अयम्भावः । त्वन्मते सत्यादिपदं स्वरूपपरं गुणपरं वा ? आद्ये स्वरूपस्य त्रैविध्यापत्याऽद्वैतभङ्गः । सत्यादेरेकार्थत्वे पर्यायतापत्तिः । अन्त्ये तूक्तदोषस्तदवस्थ एव । किञ्च सत्यादेः स्वरूपवाचकत्वे ब्रह्मणो वाक्यगोचरत्वापत्तिस्तथात्वे निर्विषयत्वसिद्धान्तभङ्गः वाक्यागोचरत्वाङ्गीकारेऽप्यनिर्वचनीयत्वापत्तौ मिथ्यात्वापत्तिर्दुर्वारा तथाच प्रयोगाः-ब्रह्म मिथ्याऽनिर्वचनीयत्वात् यदेवं तदेवं तव मते मायादिवत् । ब्रह्म मिथ्या असत्यत्वस्वरूपत्वात् । तव मते रज्जुसर्पवत्, जडत्वात् परिच्छिन्नत्वाच्च तवाभिमतघटादिवदित्यादयः । तस्मात्सत्यत्वादिगुणकं सत्यादिस्वरूपं ब्रह्मेत्युक्तार्थ एव वरीयान् । कैश्चिदेतद्वाक्यमेवं व्याख्यायते । सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः । नामान्तरभजनार्हावस्थान्तरयोगेण तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह तेन कदाचित् सङ्कुचितज्ञानवत्त्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशादिपरिच्छेदशून्यस्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यं तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपगुणा नित्या व्यावृत्ता इति । तन्न

---

स्वरूपं बोध्यत इति नाद्वैतभङ्ग इत्यत्राह । **सत्यादेरिति** । **उक्तदोषइति** । यदि सत्यादिपदानां स्वरूपवाचकत्वं नोररीक्रियते तदा ब्रह्मणोऽसत्वस्वरूपत्वं स्यादित्यर्थः । दोषान्तरमाह **किञ्चेति** । ब्रह्मणो वाक्यगोचरत्वमस्ति नवेत्याशङ्क्याद्यपक्षंनिरसितुमाह । **सत्वादेरिति** । **तथात्व इति** । वाक्यगोचरत्वे । द्वितीयपक्षाभिप्रायेणाह **वाक्यागोचरत्वाङ्गीकार इति** । ततः किमित्यत आह **तथाचेति** । निगमयति **तस्मादिति** । भवदभिमतव्याख्यानस्य दोषग्रस्तत्वादित्यर्थ । "यतो वा इमानि भूतानि जायन्ते" इति कारणवाक्येन प्रतिपन्न जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते । "सत्यं ज्ञानमनन्तं ब्रह्मेति" तस्य व्याख्यानं विशिष्टाद्वैतसिद्धान्तमतरीत्या प्रदर्शयन्नाह । **कैश्चिदेतद्वाक्यमिति** । व्यावृत्तस्वस्वरूपाभिधानमाह । **सत्यपदमिति** । केनापि परिणामविशेषेण तत्तदवस्थस्य सत्ता सोपाधिकसत्ता, अतो निरुपाधिकसत्ता निर्विकारत्वम् । सत्यपदव्यावर्त्यमाह । **तेनेति** । कथमित्यत्राह । **नामान्तरेति** निरुपपदं सत्यपदमसङ्कोचात् स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीत्यचित्तत्संसृष्टजीवव्यावृत्तः । नन्वेवं परमात्मनोऽपि सत्यत्वं न स्यात् धर्मभूतचिदचितोर्विकारसत्वादिति । मैवं, स्वरूपे वा धर्मभूतज्ञाने वा विकारशून्यस्य तदर्थत्वात् । नन्वेवमपि परमात्मधर्मभूतस्य ज्ञानस्यापि सिसृक्षादिरूपेणासत्वात् परमात्मनोऽपि सत्यत्वं न स्यादिति चेन्न । धर्मकृतविकाराभावस्यैव तदर्थत्वात् । ज्ञानशब्दार्थमाह **ज्ञानपदमिति** । इदानीमस्मिन् विषय इत्याद्युपपदरहितं ज्ञानपदमसङ्कुचितत्वं नित्यत्वञ्च दर्शयति नित्यासङ्कुचितज्ञानत्वमेवाकारो यस्य स तन्नित्यासङ्कुचितज्ञानैकाकारम् । तेन ब्रह्मणः कदाचित् क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः । नित्यासङ्कुचितज्ञानत्वमद्वारकं धर्मद्वारकञ्च परमात्मन आकारो भवति "आत्मज्योतिः सम्राडिति होवाच । ब्रह्मणा विपश्चिता विज्ञातारमरे केन विजानीयादि"त्यादिभिः स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात् । ज्ञानपदेन मुक्तव्यावृत्तिसिद्धिमाह । **तेनेति** अनन्तपदस्यार्थमाह । **अनन्तेति** । इहेदम्-नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीम्-नान्यदेति-परिच्छेदायोग्यत्वं कालापरिच्छेदः नतु देशकालाभावौ । एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः किन्तु इदमिदं न भवतीति परिच्छेदानर्हत्वमेव, सर्ववस्तुसामानाधिकरण्यार्हत्वरूपं वस्त्वपरिच्छेद इति यावत् । गुणतोऽप्यानन्त्यमाह । **सगुणत्वादिति** । गुणानां देशकालापरिच्छेदौ विद्येते नतूक्तलक्षणवस्तुपरिच्छेदाभावः । सतु स्वरूपस्यैव ।

समीचीनमिति प्रतिभाति तत्पदैस्तादृगर्थस्यालाभात् । सम्भवति मुख्यार्थे लक्षणाङ्गीकारस्य गौरवावहत्वात् । चिदचितोः सत्यत्वमङ्गीकृत्य पुनः सत्यपदेन तयोः व्यावृत्त्यसम्भवाच्च । अन्यथापसिद्धान्तापत्तिः । किञ्च चिदचितोः सोपाधिकसत्यत्वाङ्गीकारे उपाधिनिवृत्तौ तयोरसत्यत्वापत्तिस्तथात्वे च 'सत्यं ह्येवेदं विश्वमसौ सृजते' 'सत्यस्य सत्यं प्राणा वै सत्यन्तेषामेष सत्यमित्यादिश्रुतिव्याकोपः । ज्ञानपदेन मुक्तव्यावृत्तिरपि न सम्भवतीति तेषामपि ज्ञानस्वरूपत्वाभ्युपगमादन्यथापसिद्धान्तापत्तिः । अनन्तपदेन नित्याः व्यावृत्ता इत्यपि रिक्तं वचः । अनन्तपदेन नित्यमुक्तबद्धानां त्रयाणामपि व्यावृत्तिसम्भवात्तेषां स्वरूपेणानन्तत्वाभावादिति सङ्क्षेपः । विस्तरस्त्वस्मत्कृततैत्तिरीयप्रकाशिकायां द्रष्टव्यः ॥२॥

इतिजन्माद्यधिकरणम् ॥ २ ॥

जगत्कारणं ब्रह्मेत्युक्तं तत्र प्रमाणमाह—

## शास्त्रयोनित्वात् । १।१।३।

शास्त्रं योनिः कारणं प्रमाणं ज्ञापकं यस्मिंस्तच्छास्त्रयोनिस्तस्य भावः शास्त्रयोनित्वं तस्मात् । 'सर्वे वेदा यत्पदमामनन्ति सर्वे वेदा यत्रैकीभवन्ति तन्त्वौपनिषदं पुरुषं पृच्छामः । नावेदविन्मनुते तं बृहन्त'मित्याद्यन्वयव्यतिरेकश्रुतिभ्यः' 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते' । "नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती त्यादिस्मृतिभ्यश्च शास्त्रैकप्रमाणगोचरत्वादिति यावत् ।

---

यद्वा प्रकारान्तरेण वस्तुपरिच्छेदाभावमाह । सगुणत्वादिति । इदमियदिति वस्तुस्वभावतः परिच्छेदाभावो वस्त्वपरिच्छेदः । ईदृशवस्त्वपरिच्छेदः स्वरूपस्य गुणानाञ्च युज्यते तेषामपि हेयप्रत्यनीकत्वादिस्वभावोत्कर्षस्य निरवधिकत्वात् समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षोऽवस्तुपरिच्छेद इत्युक्तं भवति सर्ववस्तुसामानाधिकरण्याद्दृत्वञ्चास्मिन्नन्तर्गतम् । तद्धि सर्वशरीरकत्वं तच्च नियमनधारणशेषित्वकाष्ठेति । अनन्तपदव्यवच्छेद्यमाह । तेनेति । सातिशयस्वरूपगुणा इति । स्वरूपगुण त्वात्सातिशयम्. ज्ञानव्यतिरिक्तैश्वर्यादिगुणाश्च जगद्व्यापारानर्हतया सातिशयाः । ज्ञानञ्च नित्यं सर्वगतमपि तथात्वस्य परमात्मेच्छाधीनत्वात्सातिशयम् । परिहरति । तन्न समीचीनमिति । तत्पदैः=सत्यज्ञानादिपदैः । लक्षणया तथा बोध इत्यत्राह । सम्भवति मुख्यार्थ इति दोषान्तरमाह । चिदचितोरिति । जीवप्रकृत्योः । तयोः=चिदचितोः । विपक्षे बाधकतर्कमाह । अन्यथेति । तयोः सत्यत्वानङ्गीकारे । तयोरिति । जीवप्रकृत्योरित्यर्थः । ततः किमित्यत आह । तथात्वेति । असत्यत्व इत्यर्थः । तेषाम्=मुक्तानाम् । बाधकमाह अन्यथेति । रिक्तम्=शून्यम् । तेषाम्=त्रयाणां नित्यमुक्तबद्धानामित्यर्थः ।

इतिजन्माद्यधिकरणम् ॥ २ ॥

इत्थं निर्वचनलक्षणाभ्यां ब्रह्म प्रतिपाद्य तदनुवादपूर्वकं प्रमाणमवतारयितुमारभ्यते । जगत्कारणमिति । प्रमाणम्=ब्रह्मज्ञानासाधारणं कारणमिति यावत् । व्याख्यातुकामः सूत्रं पठति शास्त्रयोनित्वादिति । योनिः कारणमिति । वेदस्य ब्रह्मकारणत्वाङ्गीकारे "स कारणं करणाधिपाधिपः" । "न तस्य कश्चिज्जनिता नचाधिपः" । "न तस्य कार्यं करणञ्च विद्यते" इत्यादिश्रुतिकदम्बविरोधात् । ब्रह्मणोऽप्यन्यकार्यत्वे पूर्वोक्तसिद्धान्तभङ्गाच्चेति चेदत आह । ज्ञापकमिति । तज्ज्ञानकारणत्वात् । तत्कारणमित्यौपचारिकोक्तिर्नतु तत्स्वरूपादिजनकत्वमित्यतो न विरोधः । विषयवाक्यान्युदाहरति । सर्वे वेदा इति । पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची ।

ननु शास्त्रैकप्रमाणगोचरत्वं ब्रह्मणो न सम्भवति तस्य प्रत्यक्षादिप्रमाणवेद्यत्वादपि, अप्राप्ते तु शास्त्रमर्थवदिति चेन्न। प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यत्वात् तस्यचातीन्द्रियत्वात्। ब्रह्म न प्रत्यक्षप्रमाणविषयोऽतीन्द्रियत्वात् जात्यादिलौकिकविशेषविरहाद्वा यन्नैवं-तन्नैवं गवादिवत्। नचा"न्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति श्रुतेस्तस्य सर्वत्र व्यापकत्वेनेन्द्रियेष्वपि सत्वाविशेषात्कथं तत्सन्निकर्षानर्हत्वमिति वाच्यम्। तस्य व्यापकतया सर्वत्र सत्वेऽपि करणानां तत्प्रकाश्यत्वेन तत्प्रकाशकत्वायोगात् नहि प्रमाणविषयीभावे पदार्थसद्भावमात्रं प्रयोजकं किन्तु प्रमाणनिष्ठा तद्ग्रहणार्हा तच्छक्ति-रेवान्यथाक्षीरादिपाने रसनेन्द्रियेण तन्माधुर्य्ये गृह्यमाणे तत्समानाधिकरणस्य रूपा-देरपि ग्रहणापत्तेस्तस्य तत्र सद्भावसाम्यात्तथा प्रकृतेऽपि। नाप्यनुमेयं ब्रह्म, अनुमानस्य हेतुदृष्टान्तसत्व एव सद्भावात्। तस्यच तद्विरहात्। "नेन्द्रियाणि नानुमानम्। नैषा-मतिस्तर्केणापनेयेति" श्रुतेः। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजये" दिति मनुवचनात्। ननु क्षित्यादीनि महाभूतानि सकर्तृकाणि कार्यत्वात् घटादिवत् व्यतिरेके कालादिवत्। परपक्षे प्रधानादिवच्चेति प्रयोगात् भूतादिकर्तृतया ब्रह्म सिद्ध्यत्येव तत्कार्यस्य भूतादेर्लिङ्गस्य घटादेर्दृष्टान्तस्य च सत्वेनानुमातुं शक्यत्वादुक्तहेतोः स्व-

---

यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया प्रतिपादयन्तीत्यर्थः। **तन्त्विति**। तं=सर्वशास्त्रप्रसिद्धम्। **औपनिषदम्**। उपनिषत्प्रतिपाद्यम्। पुरुषं पूर्णं पुरुषोत्तमम् पृच्छामीत्यनेन वेदवेद्यस्यैव जिज्ञास्यत्वं सूचितमित्यर्थः। **नावेदविन्मनुत इति**। तं प्रसिद्धं बृहन्तं स्वरूपगुणशक्तिभिर्निरतिशयबृहत्वं विद्यतेऽस्येति तत् बृहत्पदवाच्यं ब्रह्म तत्रासाधारणं प्रमाणं वेदं स्वरूपतोऽर्थतश्च सम्प्रदायमुखेन विदन्ति ये ते वेदविदस्तेभ्यो भिन्नोऽवेदविदुक्तलक्षण-हीनस्तत्र वेदं न जानातीत्यर्थः। एतदेवोपोद्बलयति श्रीभगवद्वाक्येन **वेदैश्चेत्यादि**। **अहमिति** स्वाभिन्नोक्तिः। **एवेति** सावधारणोक्तिः। आभ्यां मत्तोऽन्यो न कश्चिदपि वेदविषयोऽस्तीति व्यञ्जितम्। तथाचान्यत्र स्पष्टोक्तिः। "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय" इति। एतद्दाढर्यायान्यदपि वाक्यमाह। **वेदे रामायणेति**। स्पष्टोऽर्थः। **नमाम इति**। यत्र यस्मिन् भगवति सर्ववचसां प्रतिष्ठा प्रतिपाद्यता तं नमाम इत्यन्वयः। यः सर्ववेदवेद्यः स एव नतिविषयः सच भगवान् श्रीकृष्ण एवेत्युक्तम्। ननु वचसां स्वस्वार्थेषु प्रतिष्ठा प्रमाणसिद्धत्वात् कथमेकत्र श्रीभगवति ब्रह्मणि सर्वप्रतिष्ठाऽभ्युपगम्यते इत्याशङ्क्य समाधत्ते। **शाश्वतीति**। अयमर्थः—पदानां स्वार्थे प्रमाणत्वेऽपि सर्वस्यापि पदार्थस्य तत्कार्यत्वात् तत्रैवाव्यभिचारिणी प्रतिष्ठा अन्यत्रार्थानां व्यभिचारवत्तया तद्वाचकानामपि व्यभिचारग्रस्तत्वादिति भावः। तथाच श्रुतिः। "नामानि सर्वाणि यमाविशन्ति" इति। एतच्च देवताधिकरणे निपुणं वक्ष्यते। प्रत्यक्षप्रमाणेनापि ब्रह्म प्रतिपत्तुं शक्यते, इति कथं तस्य शास्त्रैकप्रमाण-गम्यत्वमित्याशङ्कते। **नन्विति**। प्रत्यक्षेण ब्रह्मप्राप्तत्वान्न शास्त्रमर्थवदित्याह। **अप्राप्ते त्विति**। प्रत्यक्षप्रमाणकं ब्रह्मेति केषाञ्चित्पक्षं परिहरति। **नेति**। **प्रत्यक्षस्येति**। इन्द्रियार्थसन्निकर्षजन्यज्ञानस्य प्रत्यक्षत्वमिति निर्विवादं तथाचेन्द्रियार्थत्वाभावेन तत्सन्निकर्षानर्हस्य वस्तुनः सुतरां तज्जन्यत्वाभाव इत्यर्थः। तस्य=ब्रह्मणः। अनुमानप्रयोगं दर्शयति। **ब्रह्मेत्यादिना**। **यन्नैवं तन्नैवमिति**। यत्र गवादिव्यक्तौ प्रत्यक्षप्रमाणविषयत्वाभा-वाभावस्तत्रातीन्द्रियत्वाभावः जात्यादिलौकिकविशेषाभावाभावश्चेत्यर्थः। ननु यदि ब्रह्मणि इन्द्रियसन्निकर्षानर्हत्वम-भ्युपेयते तस्येन्द्रियेष्वव्यापकत्वमभ्युपेयं स्यात्तथा सति परिच्छिन्नत्वं दुर्वारणीयम्। व्यापकत्वेचेन्द्रियेषु तस्य सत्वेन कथं सन्निकर्षाभाव इत्याशङ्क्य परिहरति। **नचेति**। तस्य ब्रह्मणः विभुपरिमाणकत्वादेव सर्वत्र

रूपासिद्धत्वम्। "किञ्च,'मन्तव्य'" इति श्रुत्या 'यस्तर्केणानुसन्धत्ते' इति स्मृत्याचानुमानस्यादरणात्कथमनुमानागोचरत्वं तस्येति चेन्न। उक्तानुमानेन सामान्यतः कर्तृमात्रे सिद्धेऽपि यत्र कर्तृत्वं तत्र दोषवत्त्वं कुलालादिवदिति प्रत्यक्षादिगृहीततया सामान्यव्याप्त्या गुणदोषवतो जीवस्यैव कर्तृत्वेन सिद्धिर्नोक्तलक्षणस्य परब्रह्मणस्तत्र व्याप्तेः पक्षधर्मतायाश्च शास्त्रमन्तरेण गृहीतुमशक्यत्वात्। तस्य स्वरूपगुणशक्त्यादीनामलौकिकत्वात्। नच शास्त्रादेव तत्स्वरूपादिकं निश्चित्य तद्वतो जगत्कारणत्वमनुमेयमिति वाच्यं शास्त्रमूलकानुमानस्येष्टत्वात्। एवं तर्कादिनिषेधशास्त्रस्य शास्त्रनिर्मूलस्वतन्त्रानुमानपरत्वेन तद्विधायकशास्त्रस्य च श्रुत्यनुकूलतन्मूलकानुमानविषयत्वेन नैराकाङ्क्ष्यात्सर्वथाप्यविरुद्धम्। किञ्च, कार्यत्वादित्यस्य हेतोराकाशभागेऽव्यापनात्स्वरूपासिद्धत्वमपि तन्मते गगनस्याकार्यत्वात् तत्पक्षत्राह्यत्वाच्च दोष इति वाच्यम्। भूतत्वावच्छिन्नस्य पक्षत्वात्। विरुद्धत्वमपि क्षित्यादिवायुपर्य्यन्तानि कार्याणि न भवन्ति महाभूतशब्दवाच्यत्वादाकाशवदिति प्रत्यनुमानादतो नानुमानविषयत्वं ब्रह्मण इति। नाप्युपमानविषयत्वं ब्रह्मसदृशपदार्थान्तराभावेन तत्सादृश्यज्ञानासिद्धेः। 'न संदृशे तिष्ठति रूपम'स्येति श्रुतेः। ननु 'निरञ्जनः परमं साम्यमुपैति' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता' इति श्रुति-

---

व्यापकत्वाविशेषतयेन्द्रियेष्वपि विद्यमानत्वेऽपि करणानामिन्द्रियाणां "तस्य भासा सर्वमिदंविभाति" इत्यादिप्रमाणात् तेन ब्रह्मणा प्रकाश्यतया स्वप्रकाशकब्रह्मप्रकाशने प्रकाश्यानां श्रवणादेः शब्दादिप्रकाशनसामर्थ्यवत् योग्यताभावादित्यर्थः। यदि प्रमाणविषयीभावे प्रमेयसत्तामात्रमसाधारणकारणं स्यत्तादोक्तापत्तिः स्यान्नत्वेवं किन्तु प्रमाणगतस्वाभाविक्याः तच्छक्तेरेव कारणत्वं वाच्यम्। अन्यथा क्षीरादिगतरूपस्य रसनेन्द्रियेण तन्माधुर्यवत् ग्रहणापत्तेः। यथा तस्य तद्ग्रहणे सामर्थ्यं नास्ति तथाऽत्रापि ब्रह्मणः सर्वत्र व्यापकत्वेनेन्द्रियेषु सत्वेऽपि तद्ग्रहणे सामर्थ्याभावान्न तद्विषयो ब्रह्मेत्याह। **नहि प्रमाणविषयीभाव इति**। विपक्षे बाधकतर्कमाह। **अन्यथेति**। पदार्थसद्भावमात्रस्य प्रयोजकत्वे। तस्य=रूपस्य। तत्र=क्षीरादौ। ब्रह्मणः प्रत्यक्षप्रमाणविषयत्वं निरस्यानुमानगम्यत्वमपि निरस्यति **नाप्यनुमेयमिति**। तत्र हेतुमाह। **अनुमानस्येति**। तस्य=ब्रह्मणः। तद्विरहात्=हेतुदृष्टान्तयोर्विरहात्। उक्तार्थं श्रुतिस्मृतिमुखेन द्रढयति। **नेन्द्रियाणीति**। उक्तप्रत्यक्षस्य प्रकृतस्यानुमानस्य च निषेधपरमिदं श्रुतिवाक्यं बोध्यम्। अनुमानस्याप्रामाण्यं श्रुत्वा तदसहिष्णुस्तार्किक उत्तिष्ठते। **नन्वित्यादि**। अनुमानाकृतिं रचयति। **क्षित्यादीनीति**। अन्वयदृष्टान्तमभिप्रेत्याह। **घटादिवदिति**। यत् कार्यत्वावच्छिन्नं तत् कर्तृजन्यताश्रयीभूतम् यथा घट इति यत्कार्यताभावाश्रयं तत् कर्तृजन्यत्वाभावाश्रयं यथा कालादि इति स्वमतानुसारिदृष्टान्तमाह। **व्यतिरेके कालादिवदिति**। आदिना परमाण्वादिसंग्रहः। अन्यसाधारणदृष्टान्तान्तरमाह। **परपक्ष इति**। तत्कार्यस्य=ब्रह्मकार्यस्य। **उक्तहेतोरिति**। ब्रह्मणि हेतुदृष्टान्तसत्वाभावरूपहेतोः स्वरूपासिद्धत्वम् पक्षे हेत्वभाववत्वं स्वरूपासिद्धत्वम्। नानुमेयं ब्रह्मेति प्रागुपदर्शितानुमाने ब्रह्म पक्षीभूतं तत्र हेतुदृष्टान्तसत्वाभावाभावस्य हेतुदृष्टान्तसत्वात्मकस्य सत्वात् स्वरूपासिद्धत्वमुक्तहेतोरिति भावः। श्रुतिस्मृतिप्रमाणमुखेनानुमानस्यादरणीयत्वं दर्शयति। **किञ्चेति**। तत्रोत्तरमाह। **नेति**। **उक्तानुमानेनेति** "यद्धर्मे व्यापकतावच्छेदकत्वज्ञान तद्धर्मावच्छिन्नविधेयकानुमितिर्जायते" इति नियमेन कर्तृत्वेन रूपेण कर्त्तुरनुमितौ जातायां सत्यामपि तन्निरूपितविषयतावच्छिन्नस्य कस्यचित् कर्तुः सिद्धावपि कर्तृत्वं दोषवत्त्वव्याप्यमिति सामान्यव्याप्त्या गुणदोषवतो क्षेत्रज्ञविशेषस्यैव तत्प्रतीतिविषयत्वं सिद्ध्यति नतु ब्रह्मण इत्यर्थः।

स्मृतिभ्यां सिद्धत्वात् । तत्सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यसाम्यसाधर्म्यपदवाच्यत्वात्कथं सदृशाभाव इति चेत् । सत्यम् । तस्य सत्वेऽपि शास्त्रैकगम्यत्वेन प्रत्यक्षप्रमाणागोचरत्वादविषयत्वं तादवस्थ्यमेव । श्रौतोपमानन्तु शास्त्रान्तःपातित्वादिष्टमेव । ननु मास्तु सादृश्यज्ञानजन्योपमितिविषयत्वं ब्रह्मणस्तरसदृशाभावात् । तथापि वैसादृश्यज्ञानजन्योपमितिविषयत्वं स्यादेव ब्रह्मणो विसदृशानां क्षेत्रज्ञादीनां सत्वात् यथा गोविसदृशोऽश्व इति चेन्नासम्भवात् । तथाहि कीदृशोऽश्व इत्यादिना तदविदुषा पृष्टे तज्ज्ञापकस्याश्वादिज्ञानाभावे गोविसदृशो द्विशफस्वल्पपुच्छविशिष्टव्यक्तिमद्भिन्नोऽश्वोऽतिदीर्घग्रीवाविशिष्टव्यक्तिमद्भिन्नो हस्ती विपविसदृशं इननासाधरणीभूतौपध्यादिभिन्नममृतमिति ज्ञापनात्मकवचनप्रयोक्तृत्वानुपपत्तेः । तथाच ज्ञापकस्य ब्रह्मज्ञानाभावेन ज्ञापकत्वाऽसिद्धेः । ज्ञातृत्वपूर्वकत्वाज्ज्ञापकत्वस्येति भावः । किञ्च वैसादृश्यज्ञानसत्वेऽपि नोक्तलक्षणब्रह्मासिद्धिः । तथाहि, यथा गोविसदृशोऽश्व इति ज्ञानाद् गोभिन्नपदार्थमात्रस्य सामान्यज्ञाने जातेऽपि अश्वत्वावच्छिन्नैकशफत्ववद्व्यक्तिज्ञानस्यासिद्धिरेवं तथा ब्रह्मविसदृशचिदचिद्वस्तुज्ञानात्तद्विसदृशं ब्रह्मेति ज्ञानोत्पत्तावपि सर्वज्ञत्वाद्यसाधारणधर्मावच्छिन्नब्रह्मज्ञानाभावेन जगत्कारणत्वज्ञानासिद्धत्वान्नोपमेयं ब्रह्मेति राद्धन्तः । नाप्यर्थापत्ति-

---

तत्र—ब्रह्मणि । तत्र हेतुः **तस्येति** । ब्रह्मण इत्यर्थः । स्वरूपगुणशक्त्यादीनामलौकिकत्वात्=प्रत्यक्षादिप्रमाणविषयतानर्हत्वात् । लौकिकस्यैव तद्गोचरत्वनियम इति भावः । वेदे तच्छक्तीनां प्रसिद्धत्वात् तत एव ज्ञात्वा तद्गतो जगत्कारणत्वमनुमेयमित्याशङ्क्य परिहरति । **नचेति** । शास्त्रसहकृतानुमानस्येष्टत्वादित्याह । **शास्त्रमूलकेति** । 'नैषा मतिस्तर्केणापनेया'' 'नेन्द्रियाणि नानुमानमि'' त्यादितर्कनिषेधपराणां शास्त्राणां श्रुतिसहायरहितानामनुमाननिषेधपरत्वमित्याह । **एवमित्यादिना** । "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः'' इत्यादितर्कप्रतिपादकवचसां श्रुतिमूलकानुमानबोधकत्वेन चारितार्थ्यमित्याह । **तद्विधायकशास्त्रस्येति** । अनुमानविधायकशास्त्रस्य । प्रागुक्तानुमानं स्वरूपासिद्ध्या निरस्यति । **किञ्चेति** । **आकाशभागेऽव्यापनादिति** । पक्षैकदेशनिष्ठाभावप्रतियोगित्वादुक्तहेतोर्भागासिद्धत्वमिति भावः । आकाशस्य पक्षबहिर्भूतत्वान्न तस्य पक्षैकदेशत्वमित्याशङ्क्य परिहरति । **नचेति** । पक्षतावच्छेदकं भूतत्वं तदवच्छिन्ने गगने कार्यत्वहेतोः स्वरूपासिद्धत्वमावश्यकमित्याशयेनाह । **भूतत्वावच्छिन्नस्येति** । कार्यत्वहेतोर्विरुद्धत्वमप्याह । **विरुद्धत्वमपीति** । तदेवानुमानेनोपपादयति । **क्षित्यादिवायुपर्यन्तानीति** । उपसंहरति **अत इति** । **अनुमानाविषयत्वमिति** । स्वतन्त्रानुमानागोचरत्वमित्यर्थः । ननु मास्तां ब्रह्मज्ञापके प्रत्यक्षानुमाने उक्तरीत्याऽनुपपन्नत्वात् । उपमानस्य तु दोषवत्वाभावात् तद्विषयत्वं भवेदिति सम्भावनायामाह । **नाप्युपमानविषयत्वमिति** । सादृश्यज्ञानमुपमानम् । तच्च सदृशज्ञानतन्त्रम् । यथा "गोसदृशो गवय'' इति वाक्यं श्रुतवतो नागरिकस्यारण्ये गोसदृशव्यक्त्यन्तरदर्शने पूर्वश्रुतवाक्यार्थस्मरणेन गोसादृश्यगवयपदार्थनिश्चय इति । तच्च नैवं ब्रह्म प्रमातुं शक्यम् । ब्रह्मसदृशवस्त्वन्तराभावेन तत्सादृश्यज्ञानासिद्धिरिति तात्पर्यं बुद्ध्यावस्थाप्योक्तार्थे हेतुमाह । **ब्रह्मसदृशपदार्थाभावेनेति** । अत्र श्रुतिं प्रमाणयति । **न संदृश इति** । अस्य ब्रह्मणो रूपं स्वसाम्ये पदार्थे न तिष्ठति तत्सर्वज्ञत्वाद्यसाधारणगुणाश्रयस्य द्वितीयस्याभावात् । वस्तुमात्रस्य ततोऽवरत्वेन विसदृशत्वात् । "न तत्समश्चाभ्यधिकश्च दृश्यते'' इति श्रुतेः "न तत्समोऽस्त्यभ्यधिकः कुतोऽन्य इत्यर्जुनोक्तस्मृतेश्चेति भावः । श्रुतिस्मृतिमुखेन प्रधानक्षेत्रज्ञयोः साम्यस्य स्वयमपि सिद्धान्तमुखेन च निरुपितत्वाच्च कथं तत्सदृशाभाव उच्यते

प्रमाणवेद्यं ब्रह्म तस्य पीनत्वादिज्ञानवदुपपाद्यज्ञानासिद्धेः। किञ्च तस्यास्तर्करूपतया तद्विषयत्वस्यानुमाननिराकरणेनैव निरासो ज्ञेयः। नाप्युपलब्धिगोचरत्वं ब्रह्मणः सम्भावनार्हं तस्या अभावकरणकत्वात्। ब्रह्मणस्तु केवलान्वयित्वेनाभावत्वावच्छिन्ना-प्रतियोगित्वात्। प्रतियोगिज्ञानसापेक्षत्वादभावस्य तथाचाभावज्ञानेऽनुपलब्धिप्रवृत्तिस्तद्-भावे प्रवृत्तेरेवासम्भवात्। कुतस्तद्विषयताप्रत्याशेतिभावः। तत्सिद्धं परिशेषात् शास्त्रैकवेद्यं ब्रह्मेति। ननु ब्रह्मणश्शास्त्रज्ञाप्यत्वे परप्रकाश्यत्वप्रसक्त्या स्वप्रकाशत्वहानिरतत्प्रतिपा-दकशास्त्रव्याकोपश्चेति चेन्न। शास्त्रगतबोधकशक्तीनां तच्छक्त्यभिन्नत्वात्। ब्रह्मशक्तीनाञ्च तत्परतन्त्रसत्ताकत्वेन तदपृथक्सिद्धत्वात्। तद्गतप्रकाशकत्वञ्च स्वप्रकाशकत्वमेव तस्मान्नोक्तदोषावकाशः। नन्वेवं ब्रह्मशक्तीनामपरिच्छिन्नत्वेन क्षेत्रज्ञकरणेष्वपि सद्भा-वात्तद्विषयत्वेऽप्युक्तन्यायेन क्षत्यभावात्स्वप्रकाशकत्वमेवाङ्गीकार्यं तथात्वे चान्यप्रमाणाविष-यत्वोपपत्तिभङ्ग इति चेत्। सत्यम्। परमेश्वरीयशक्तीनां क्षेत्रज्ञकरणेषु व्याप्तिसाम्येऽपि

---

इत्याशङ्कते। नन्विति। नहि तादृशसादृश्यं शास्त्रप्रमाणमन्तरा प्रत्यक्षप्रमाणेन ज्ञातुं शक्यते तथा च न केवलेनोपमानेन ब्रह्म प्रतिपत्तुं शक्यं शास्त्रसहकृतमुपमानन्तु वयं न निषेधयाम इत्याशयेनोक्तामाशङ्कामभ-र्धाङ्गीकारेण परिहरति। **सत्यमित्यादिना।** उक्तसिद्धान्तानुवादपूर्वकं स्वीकृत्य प्रकारान्तरेणोक्तशङ्कामुत्थापयति। **नन्वित्यादि।** स्वीयतात्पर्य्यमाह। **तथापीति।** तत्रोदाहरणमाह। **गोविसदृश इति।** तन्निराकुर्वन् समाधत्ते **नेति।** नोक्तप्रकारेण प्रमेयत्वं ब्रह्मण इत्यर्थः। तदेवोपपादयति **तथाहीत्यादिना।** **तज्ज्ञापकस्य।** वैसादृश्य-ज्ञानज्ञापकस्य पुंसः। वेदेन बिना ब्रह्मज्ञापकाभावेन ज्ञातृत्वपूर्वकत्वात् तज्ज्ञापकत्वस्य वैसादृश्यज्ञानस्याप्यसिद्ध-त्वात् तादवस्थ्यं ब्रह्मणोऽनुपमेयत्वमित्याह। **तथाचेत्यादिना।** तदभ्युपगमेऽपि न ब्रह्मज्ञानसिद्धिरित्याह। **किञ्चेति।** नैतदेव दूषणं किन्त्वन्यदपि श्रूयतामित्यर्थः। तदेव प्रतिपाद्यते। **वैसादृश्येति।** जडाजडवि-सदृशं ब्रह्मेत्युपमितौ सत्यामपि सामान्यतः किञ्चित् क्षराक्षरचेतनाचेतनपदार्थभिन्नवस्तुसिद्धेऽपि सर्वज्ञत्वसर्व-शक्तिमत्वेन जगत्कारणत्वसर्वनियन्तृत्वादिधर्माश्रयोक्तलक्षणब्रह्मज्ञानस्य न सर्वथोपमितित्वमित्याह। **यथेत्यादिना।** अर्थापत्तिवेद्यतां निराकरोति। **नापीति।** उपपाद्यज्ञानेनोपपादकज्ञानमर्थापत्तिः। यथा देवदत्तं दिवाऽभुञ्जानं पीनञ्च दृष्ट्वा तर्क्यते दिवाऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमतो रात्रिभुञ्जान एवायमिति प्रकृते तथा नास्तीत्याह। **तस्येति।** ब्रह्मण इत्यर्थः। अर्थापत्तेरपि तर्करूपतयानुमानत्वं तन्निरासेनास्या अपि निराकरणं भवतीत्याह। **किञ्चेति।** तस्याः=अर्थापत्तेः। अनुपलब्धिप्रमाणगोचरतासम्भावना वार्यते। **नापीति।** तस्याः= अनुपलब्धेः। केवलान्वयित्वं वृत्तिमदत्यन्ताभावाप्रतियोगित्वम्। **प्रतियोगिज्ञानेति।** यदि स्यात्तर्ह्युपलभ्येतेति-प्रतीतितर्कितप्रतियोगिप्रत्यक्षज्ञानपूर्वकत्वादभावज्ञानस्येति भावः। उपसंहरति। **तत्सिद्धमिति।** ब्रह्मणः स्वप्रकाशत्वं सर्वैरभ्युपेयते शास्त्रज्ञाप्यत्वे तन्न स्यादित्याशङ्कते। **नन्विति** शास्त्रे या बोधकतारूपा शक्तयस्सन्ति ताश्च ब्रह्मणः शक्त्यभिन्नाः ताभिः ब्रह्मणः प्रकाश्यत्वे शक्तिशक्तिमतोरभेदात् स्वस्यैव प्रकाशकत्वं समायात-मित्याशयेनोक्तशङ्कां परिहरति। **नेति।** **तच्छक्त्यभिन्नत्वात्।** ब्रह्मशक्त्यभिन्नत्वात्। तत्परतन्त्रसत्ताकत्वेन ब्रह्मपरतन्त्रसत्ताकत्वेन। तदपृथक्सिद्धत्वात्=ब्रह्मणोऽपृथक्सिद्धत्वात् तद्गतप्रकाशकत्वञ्च=शक्तिगतप्रकाशकत्वञ्च निग-मयति। **तस्मादिति।** शास्त्रगतशक्तीनां ब्रह्माभिन्नतया स्वप्रकाशत्वादेव। उक्तदोषः=शास्त्रज्ञाप्यत्वे परप्रकाश्यत्वरूपः उक्तन्यायस्यान्येषु प्रत्यक्षप्रमाणेष्वतिप्रसक्तिं समाशङ्कते। **नन्विति।** **एवमिति।** शब्दगतशक्तेर्ब्रह्मशक्तित्वाभ्युपगमे। **उक्तन्यायेनेति।** परप्रकाश्यत्वाभावेन स्वप्रकाशत्वहानिलक्षणेनेत्यर्थः। ब्रह्मशक्तेर्विभुत्वेन प्रत्यक्षकरणगतशक्तिषु व्याप्त्यङ्गीकारेऽपि तासां क्षेत्रज्ञबुद्ध्यादिभिर्व्यवहितत्वेन दोषवत्वान्न स्वप्रकाशत्वं तद्विषयस्येत्याशयेन समाधत्ते

तत्तद्बुद्धिव्यवधानेन दोषवत्वसम्भवात् तद्विषयस्य न स्वप्रकाशत्वयोगः। वेदे तु तद्व्यवधानाभावेन साक्षात्तद्विषयतया महद्वैषम्यमिति भावः। ननु "यतो वाचो निवर्तन्त" इत्यादिशब्दाविषयताया अपि डिण्डिमायमानत्वात्कथं शास्त्रैकवेद्यं ब्रह्मेति चेन्न। श्रुतेः कात्स्न्र्येन वाग्गोचरत्वनिषेधपरत्वादिति "प्रकृतैतावत्वं हो"ति सूत्रे वक्ष्यते ॥३॥

इतिशास्त्रयोनित्वाधिकरणम् ॥३॥

नन्वा "म्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां," "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरि"त्यादिभिर्भगवता जैमिनिना सर्वस्यापि वेदस्य क्रियापरत्वेन सूत्रितत्वात्तदन्तःपातिवेदान्तभागस्यापि कर्मण्येव समन्वयो युक्तस्तथात्वे च कथं शास्त्रैकप्रमाणगम्यं ब्रह्मैवेत्यपि सिद्धान्त-

---

। परमेश्वरशक्तीनामिति। दोषवत्वसम्भवादिति। भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषवत्वसम्भवादित्यर्थः। तथाच चत्रज्ञानां बुद्धिमान्द्यदुराग्रहविप्रलिप्सेन्द्रियापाटवत्वादीनामवर्जनीयत्वेन तद्वशवहितप्रत्यक्षादिव्यक्तीनां सत्वादुक्तन्यायावतरणस्य तत्रानवसरत्वादिति भावः। ब्रह्मणोऽन्यप्रमाणाविषयत्ववद्वेदाविषयत्वमपीत्याशङ्कते। नन्विति। श्रुत्यर्थप्रदर्शनेन परिहरति। नेति। अस्याः श्रुतेरर्थस्तु श्रीदेवाचार्य्यपादः स्वकृतजान्हव्यां विवेचितः। तथाहि। अगाधतोयाब्धौ तदवगाहनार्थं प्रवृत्ता मनुजा यथाशक्ति तमवगाह्य तद्गाधतामप्राप्य पुनरावृत्ता इव मनसा सहिता वाचस्तत्प्रतिपादने प्रवृत्ता अपि अप्राप्य तत्स्वरूपगुणादीनामियत्तामलब्ध्वा स्थगिताः सत्यो यत इति पूर्वलक्षणप्रमाणाभ्यां प्रतिपादिताज्जगत्कारणाद् ब्रह्मणो निवर्तन्त इत्यर्थः। उक्तार्थे सूत्रकारस्य सम्मतिमाह। प्रकृतैतावत्वमिति।

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

महर्षिर्जैमिनिश्चोदनासूत्रे धर्मे प्रमाणमिति प्रतिज्ञायौत्पत्तिकसूत्रे तत्प्रामाण्यमर्थवादभागस्य प्रामाण्यञ्च महता प्रयत्नेन समर्थयामास। तत्र पूर्वपक्षसूत्रम्। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते"। अ० १ पा० २। सू०। १। आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां वेदान्तवाक्यानाञ्च नास्ति कश्चिद्विवक्षितस्वार्थस्तेचार्थवादा एवमाम्नायन्ते "सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। तै० सं० २। ११। "स आत्मनो वपामुदखिदत्"। "देवा वै देवयजनमदध्व" सा यदिशो न प्रजानन्। यस्मादीदृशानां वाक्यानां विवक्षितोऽर्थः कश्चिदपि नास्ति तस्मादानर्थक्यमिति नास्त्येवार्थवादानां प्रामाण्यमिति पूर्वपक्षे सिद्धान्तं सूत्रयति "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः। अ०। १। पा०। २ सू०। ७। तुशब्दोऽर्थवादानां प्रामाण्यं वारयति "वायुर्वै क्षेपिष्ठा" इत्येवमादीनामर्थवादानां "वायव्यं श्वेतमालभेत"। तै० सं०- २। १११ इत्यादिना विधिना सहैकवाक्यत्वादस्ति धर्मे प्रामाण्यम्। नच विधिवाक्यस्यार्थवादनैरपेक्ष्येण पदान्वयपूर्तेस्तत्रार्थवादानां नास्त्युपयोग इति शङ्कनीयम्। तेह्यर्थवादाः पुरुषप्रवृत्तिमाकाङ्क्षतां विधीनां स्तुत्यर्थेनोपयुक्ताः स्युः। स्तुत्या च प्रलोभितः पुरुषस्तत्र प्रवर्त्तते। 'सोऽरोदीत्' इत्यत्रापि रजतस्य पतिताश्रुरूपत्वाद्रजतदाने गृहेऽपि रोदनप्रसङ्गात् "बर्हिषि रजतं न देय" मिति तन्निषेधेनार्थवादस्यैकवाक्यत्वं तत्र रजतदानाभावे रोदनाभावरूपो गुणोऽत्र विवक्षितस्तेन गुणेन च रजतनिवारणरूपो विधिः स्तूयते। "यः प्रजाकामः पशुकामस्स्यात्स एतं प्राजापत्यमजन्तूपरमालभेत" सं० तै०' इत्ययं विधिः प्रजापतिवपोत्खेदेन स्तूयते। यस्मात् प्रजापतिः स्ववपामुत्खिद्याग्नौ प्रहृत्य ततो जातं तूपरमजमात्मार्थमालभ्य प्रजाः पशूंश्च लब्धवान् तस्मात् प्रजादिसम्पादकोऽयं तूपर इति तूपरगुणस्य वादोऽत्र विवक्षितः।

पूर्वपक्षविवरणम्।

**सम्भवः शास्त्रस्य तद्विषयत्वाभावात् । एतदुक्तं भवति, पञ्चप्रकारकवाक्यसमुदायस्तावत्समस्तो-वेदः वाक्यानिच विधिनिषेधार्थवादमन्त्रनामधेयाख्यानि । तत्र "ज्योतिष्टोमेन यजेत स्वर्गकामः" इत्यादिविधिवाक्यम् । "ब्राह्मणो न हन्तव्य" इत्यादिनिषेधवाक्यम । 'वायुर्वै क्षेपिष्ठा देवते" इत्यादयोऽर्थवादाः, "इषेत्वा" "अग्निर्मूर्द्धा दिवः"इत्यादयो मन्त्राः, ज्योतिष्टोमाश्वमेधादीनि नामधेयानीति तेषां विवेकस्तथाचोपक्रमे "अथातो धर्मजिज्ञासेति" सूत्रे वेदस्याध्ययनविधिकर णकभावनाविधिभाव्यफलवदर्थपरत्वमुक्तम् । "चोदनालक्षणोऽर्थो धर्म्म" इति लक्षणसूत्रे धर्मे चोदनाप्रमाणमिति कार्यपरत्वव्याप्यं वेदप्रामाण्यं यत्र प्रामाण्यं तत्र कार्यपरत्वमिति व्याप्त्या निर्णीतं तत्र 'वायुर्वै क्षेपिष्ठा देवतेत्यर्थवादानां धर्मे प्रामाण्यमस्ति नवेति संशये पूर्वपक्षमाह । आम्नायस्येति । वेदस्य क्रियाएवार्थो विषयप्रतिपाद्यो यस्य सक्रियार्थस्तस्य भावस्तत्त्वं तस्मा-द्धेतोरर्थवादानां प्रामाण्यं नास्ति किंतर्हि इत्याशङ्क्याह अतदर्थानामानर्थक्यमिति नसाक्रि-**

---

फलवदनुष्ठानापेक्षितेन क्रियासाधनस्मरणेन द्वारेण मन्त्राणां कर्माङ्गत्वम् तदुक्तम् ।—"अविशिष्टस्तु वाक्यार्थः ।" पूर्व० मी० अ० १ । पा० २ । सू० । ४० । तुशब्देन मन्त्राणामदृष्टार्थमुच्चारणमात्रं वारयति क्रियाकारकसम्बन्धेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टस्तथासति यथा लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्य्यते तथा वैदिके यागप्रयोगे द्रष्टव्यम् । मन्त्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते नत्वप्रकाशितस्तस्मान्मन्त्रोच्चारणार्थप्रकाशनरूपं दृष्टमेव प्रयोजनम् । तथाचार्थवादानां स्तुतिपदार्थद्वारा पदैकवाक्यत्वं विधिभिः । मन्त्राणान्तु वाक्यार्थज्ञानद्वारा तैर्वाक्यैकवाक्यत्वमिति विवेकः । वेदान्तानां कर्मापेक्षितकर्तृदेवतादिप्राशस्त्यप्रतिपादनेन क्रिया विधिशेषत्वम् । वेदान्ताः विध्यैकवाक्यत्वेनैवार्थवन्तः सिद्धार्थाऽवेदकत्वात् मन्त्रार्थवादादिवदिति कथं शास्त्रैक-प्रमाणगम्यं ब्रह्मेति पूर्वपक्षमाह । **नन्विति** । तदन्तःपातिवेदान्तभागस्य=वेदान्तःपातिवेदान्तभागस्य । ततः किमित्यत आह । **तथात्वेति** । कर्मणि समन्वयपरत्वे । तद्विषयत्वाभावात्=ब्रह्मविषयत्वाभावात् । **एतदुक्तं भवतीति** । यदुक्तं तदेतद्भवतीत्यर्थः । पञ्चधा वेदवाक्यं विभजन्नाह । **विधिरित्यादिना** । तत्र=तेषु । विधिवाक्यमुदाहरति । **ज्योतिष्टोमेनेति** । ज्योतिष्टोमेन यागेन स्वेष्टं भावयेदिति तदर्थः । निषेधवाक्यमुदाहरति ब्राह्मण इति । अर्थवादवाक्यमुदाहरति । **वायुरिति** । क्षेपिष्ठा=शीघ्रगामी । मन्त्रान् दर्शयति । **इषेत्वेति** । नामधेयमुदाहरति । **जोतिष्टोमेति** । अथातो धर्मजिज्ञासेति तदध्ययनं यतोऽर्थज्ञानरूपदृष्टार्थकमतो हेतोर्वेदाध्ययनानन्तरं वेदार्थस्य धर्मस्य पदार्थनिर्णयहेतुः विचारः कर्त्तव्य इत्यध्ययनविधिप्रयुक्तस्यैव शास्त्रमारम्भणीयमिति सूत्रार्थः । विधिनैव वेदाध्ययनस्य तदर्थज्ञानपर्य्यवसायित्वं तदर्थनिर्णयहेतुविचारकर्त्तव्यताचाक्षिप्यते । तथाहि "स्वाऽध्यायोध्येतव्य" इत्यत्र तव्यप्रत्ययः शाब्दभावनामभिधत्ते साच स्वाभाव्यं विनाऽनुपपद्यमाना किञ्चिद्भाव्यं कल्पयति तत्र चैकप्रत्ययोपात्तत्वेनार्थभावनैव भाव्यत्वेन समन्वेति सापि स्वभाव्यमन्तरेणानुपपद्यमाना किञ्चिद्भाव्यमाक्षिपति । तत्रापि फलपदस्याश्रवणात् समभिव्याहृतः स्वाध्यायः कर्मभूत एव व्याप्यत्वेन सम्बध्यते । तस्यच फलवदर्थबोधपर्य्यन्ताभावे भाव्यतानुपपत्त्या फलवदर्थबोधपर्य्यवसायित्वमापतति अर्थनिर्णयमन्तरेण च फलवदर्थबोधस्यासम्भवेऽर्थनिर्णयहेतुविचारकर्त्तव्यतामध्ययनविधिराक्षिपतीति तस्मादर्थज्ञानरूपदृष्टप्रयोजनाय वेदाध्ययनं विधीयते नाक्षरग्रहणमात्रायेति सिद्धान्तमभिप्रेत्य सूत्रस्य फलितार्थमाह । **वेदस्येति** । तल्लक्षणन्तु वेदविहितत्वे सति प्रयोजनवदर्थत्वम् । वेदबोधितस्वर्गादिफलात्मके प्रयोजनेऽतिप्रसक्तिवारणाय प्रयोजनवदिति । स्वर्गादिफलस्य सुखादिरूपत्वेन तत्प्रयोजनान्तराभावात्तदुपादाने भवति वारणम् । तृप्त्यादिप्रयोजनवत्यर्थरूपे भोजनेऽतिव्याप्तिवारणाय वेद-विहितत्वे सतीति । भोजनस्य रागादिनैव प्राप्तत्वात्तद्वारणम् "श्येनेनाभिचरन् यजेते"त्यादिवेदप्रतिपाद्ये वैरि-

याऽर्थोयेषांतेऽनर्दथा अर्थवादादयस्तेषामानर्थक्यमर्थशून्यत्वमेवास्तु तथैव वेदान्तानामपि। नहि "स्वाध्यायोऽध्येतव्य"इत्यध्ययनविध्युपात्तानां निष्फलब्रह्मपरत्वे प्रामाण्यमिति प्राप्ते सिद्धान्तमाह 'विधिना त्वेकवाक्यत्वा" दिति अर्थवादानां विधिवाक्यैरेकवाक्यत्वात्तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थरूपेण द्वारेणार्थवादाः प्रामाण्यं स्युरिति। एवं विधिनिषेधविधुराणां वेदान्तानां सिद्धार्थवस्तुबोधकानामपि मन्त्रार्थवादादिष्वेवान्तर्भावेणाध्ययनविध्युपात्तत्वात्सर्वथानर्थक्य-निरासाय परम्परया साध्ये कर्मण्येवान्वयो युक्तः स्वातन्त्र्याभ्युपगमे निष्फलत्वापत्तेस्तेषां क्रत्वङ्गकर्तृ प्रतिपादनेन नैराकाङ्क्ष्यं बोध्यम्। तत्र तत्त्वंपदार्थपराणां वाक्यानां कर्मकर्तृदेव-तास्तावकत्वं तज्ज्ञानस्य परविद्याख्यस्य फलस्तावकत्वं वेदान्तवाक्यानि न ब्रह्मपराणि क्रत्वङ्गकर्तृ प्राशस्त्यप्रकाशनपरत्वादर्थवादवाक्यवदिति प्राप्ते उच्यते।

## तत्तु समन्वयात्। १। १। ४॥

तुशब्दः पूर्वपक्षनिरासार्थः। पूर्वोक्तरीत्या शास्त्रैकवेद्यं तत् उक्तलक्षणं ब्रह्मैव। कुतः? समन्वयात्। सर्वशास्त्रस्य तत्रैव मुमुक्षुजिज्ञास्ये जगदभिन्ननिमित्तोपादानकारणे शास्त्रयोनौ जीवप्रधानकालकर्मादिनियन्तरि ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठे निखिलदोषगन्धाघ्रातमाहात्म्ये सार्वज्ञाद्यनन्तगुणनिलये मुक्तोपसृप्ये ब्रह्मणि सम्यक् वाचकतयाऽन्वयात्। समन्वितश्च। 'स विजिज्ञासितव्यः'। 'यतो वा इमानि भूतानि जायन्ते' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।' 'सर्वे वेदा यत्पदमामनन्ति' अन्तः प्रविष्टः शास्ताजनानां यं सर्वे देवा नमन्ति 'य आत्मा अप-

---

मरणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्वरूपप्रयोजनवांत श्येनादावतिव्याप्तिवारणायाऽर्थत्वं निवेशितम् श्येन-फलस्य शत्रुवधस्य नरकजनकत्वेनानर्थत्वाच्छ्येनस्यापि तद्द्वारानर्थ एव तस्यापि शत्रुवधद्वारानरकजनकत्वाद्भवत्यर्थ-पदोपादानेन तद्वारणम्। प्रत्यक्षाद्यगोचरे धर्मे किंप्रमाणमित्यत आह। चोदनालक्षणोऽर्थो धर्मः इति। कृत्स्नस्यापि वेदस्य कार्यपरत्वं समर्थयन्ति ते पदानां कार्यान्वितेऽर्थे शक्तिरवधारणादित्याह। कार्यपरत्व-ख्यापकमिति। क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्त्तकं वाक्यं चोदना। तदुक्तं शावरभाष्ये 'दृष्टोहि तस्यार्थः कर्मावबोधनमिति" तस्य वेदस्य कोऽप्यमर्थः। जैमिनिनाप्युक्तं "तस्य ज्ञानमुपदेश" इति सूत्रम्। जै०। १। १५। पदानां कार्यान्विते शक्तिरित्यपि सूत्रकाराभिप्रायेणैवोक्तम्। 'तद्भूतानां क्रियार्थेन समन्वयः"। जै०। १। १-१५। तत्र तत्र वेदे भूतार्थानां सिद्धार्थनिष्ठानां पदानां क्रियार्थेन कार्यवाचिना लिङादिपदेन समाम्नायः सहोच्चारणं कर्त्तव्यम्। पदार्थज्ञानस्य वाक्यार्थरूपकार्याधीननिमित्तत्वादित्यर्थः। कार्यान्वितार्थे शक्तानि पदानि कार्यवाचिना सह पदार्थस्मृतिद्वारा कार्यमेव वाक्यार्थं बोधयन्तीति भावः। आम्नायस्येति सूत्रमवतारयितुं तावत्पूर्वपक्षं रचयति। तत्र वायुर्वै क्षेपिष्ठा देवतेति। 'तत्र' वैदिकवचनानां कार्यपरत्वे निर्णीते सतीत्यर्थः। सूत्रार्थं व्याचष्टे। वेदस्येत्यादिना। पूर्वपक्षपरसूत्रस्यार्धभागं निरूप्योत्तरभागं निरूपयितुं सूत्रस्योत्तरभागं पठति। विधिनेति। सूत्रार्थं विवृणोति। अर्थवादानामिति। स्तुत्यर्थरूपेणेति। स्तुत्या च प्रलोभितः पुमान् विधौ प्रवर्त्तेत इति भावः। परम्परया। विध्यङ्गकर्तृदेवतादिस्तुतिप्रतिपादनद्वारकत्वेनेत्यर्थः। तेषाम्। वेदान्तानाम्। तत्र=तेषु। तत्त्वंपदार्थपराणामिति। "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्या-नामित्यर्थः। तज्ज्ञानस्य। तादृशवाक्यजन्यज्ञानस्य। फलितार्थमाह वेदान्तवाक्यानीति। पूर्वपक्षमनूद्य सिद्धान्तयति इति प्राप्ते उच्यत इति सूत्रार्थं व्याचष्टे। तुशब्द इति। पूर्वपक्षनिरासार्थं इति। पूर्वपक्षस्य न शब्दैकवेद्यं ब्रह्मेत्यस्य

हतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः,'यः सर्वज्ञः स सर्ववित्।' 'ब्रह्मविदाप्नोति परमित्यादिवाक्यकदम्बस्तत्रैव। यदुक्तं सर्वस्यापि वेदस्य क्रियापरत्वं तत्तुच्छं ब्रह्मतस्कराणां कपोलकल्पनामात्रत्वात्। प्रत्युत समस्तधर्मजातस्य ब्रह्मविविदिषयैव मोक्षासाधारणोपायभूततयोपक्षीणत्वात्। कर्मणो मोक्षोपायभूतविद्योत्पादकत्वेन परम्परया ब्रह्मण्येव समन्वयाच्च विविदिषाश्रुतेः। एतेन यदुक्तं क्रत्वङ्गकर्तृप्रतिपादनेन वेदान्तानां नैराकाङ्क्ष्यमिति तन्निरस्तं प्रत्युत कर्मण एव जिज्ञासोर्विशेषणत्वेन तदधिकारित्वसम्पादनेनैव नैराकाङ्क्ष्यात्। 'अर्थी समर्थो विद्वानधिकारीति लक्षणे क्रियाविद एवाधिकारित्वनिरूपणात्। शास्त्रं न कर्मपरं तस्य जिज्ञासोत्पादनेनैवोपक्षीणत्वात्। रूपादिज्ञानोत्पादनेन चक्षुरादेरिवेत्यनुमानात्। ननु सर्वेषां कारकाणां कर्मसाधनत्वात् कर्त्तुरपि कारकत्वाविशेषेण क्रियाङ्गत्वोपपत्तिः न च ब्रह्मण आप्तकामतया तद्भिन्नत्वेन कर्मकर्तृत्वाभावादिष्टासिद्धेरिति वाच्यम्। ब्रह्मणस्तथात्वेऽपिजीवभिन्नत्वाभावात्। तत्त्वमस्यादिवाक्यैः क्रत्वङ्गकर्तुः क्षेत्रज्ञस्य ब्रह्मत्वविधानेन स्तूयमानत्वात् न तद्भिन्नं किमपि ब्रह्मशब्दाभिधेयमस्तीति चेत्। न। मन्दानामन्धपरम्परोपदेशमात्रत्वात्। न हि कर्मकर्त्रादिसर्वकारककलापनियन्तुः स्वतन्त्रस्य विश्वात्मनः परब्रह्मणः परा-

---

निरासो व्यावृत्तिरर्थो यस्य सः। तथाच ब्रह्म वेदवेद्यत्वाभावाभाववदित्यर्थः। तदेव विवृणोति। पूर्वोक्तेति। शास्त्रयोनित्वादिति प्रागुक्तसूत्ररीत्या सूत्रस्य द्वितीयपदार्थं विवृणोति। तदिति। उक्तलक्षणकम्। द्वितीयसूत्रेणोक्तम् लक्षणं यस्य तत्। हेतुपदस्याकाङ्क्षां दर्शयति। कुत इति। तत्रैव=ब्रह्मण्येव। 'मुमुक्षुजिज्ञास्य' इत्याद्यष्टभिर्विशेषणैर्ब्रह्म विशिनष्टि। मुमुक्षुजिज्ञास्य इति। "स विजिज्ञासितव्य" इति श्रुतिसमन्वयप्रदर्शनायाद्यं विशेषणमुपात्तम् "यतो वा इमानि भूतानि जायन्ते" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि"चे तिश्रुतिसमन्वयार्थं द्वितीयं विशेषणमुपन्यस्तम्। एवमपरविशेषणानामपि प्रयोजनं तत्तच्छ्रुत्यनुसारेण द्रष्टव्यम्। तच्चानुपदमेव व्यक्तं भविष्यति श्रुतीनामुदाहरणेनेत्याशयः। समन्वयशब्दार्थं व्याचष्टे। सम्यगिति। वाचकतयेति। अनेन वेदप्रतिपाद्यं ब्रह्म तत्प्रतिपादकश्च वेद इति नित्यसम्बन्धो दर्शितः। तथाचाह श्रीपराशरः प्रचेतसां वाक्येन "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती।" शाश्वती नित्येत्यर्थः। प्रतिष्ठा सम्बन्धः। तान्येव कानिचित् वाक्यानि पठ्यन्ते "स विजिज्ञासितव्य" इत्यादीनि। तत्रैवेति। ब्रह्मण्येव। इत्यादिवाक्यकदम्बः समन्वित इति योजना। प्रागुक्तार्थं दूषयितुमनूद्यति। यदुक्तमिति। मोक्षजनकब्रह्मविविदिषा समस्तधर्मानुष्ठानेन जायतेऽतस्सर्वस्यापि कर्मणो ब्रह्मविविदिषोत्पत्तावेवोपयोग इत्याह। प्रत्युत इति। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्यादिश्रुतौ यज्ञेतिकरणस्य विविदिषन्तीति पदोपस्थाप्यवेदनरूपधात्वर्थेन सन्प्रत्ययार्थेच्छया वा समन्वयात् कर्मणो विद्यार्थत्वद्वारा तदिच्छाव्यापारेण वा विद्याङ्गत्वाद्ब्रह्मपरत्वमित्याह। कर्मण इति। एतेनेति। उपदर्शितार्थेन कर्मतज्ज्ञानतदनुष्ठानादीनां विवेकादिसम्पादनद्वाराऽधिकारित्वसम्पादनेनैवोपयोग इत्याह प्रत्युत कर्मण एवेति। तदधिकारित्वसम्पादनेन=ब्रह्मजिज्ञासाधिकारित्वसम्पादनेन। अधिकारिलक्षणप्रदर्शनेनोक्तार्थं द्रढयति। अर्थीति। फलितार्थमनुमानेन दर्शयति। शास्त्रमिति। पुनरपि वेदान्तानां कर्तृपरत्वमाशङ्कते। नन्विति। आप्तकामस्य सत्यसङ्कल्पस्य ब्रह्मणः कारकत्वं न घटते सुतरां क्रियाङ्गत्वं नोपपद्यत इत्याशङ्क्य परिहरति। नचेति। तद्भिन्नत्वेन=कारकभिन्नत्वेन। ब्रह्मणो जीवत्वमभ्युपेत्याह। ब्रह्मण इति। तथात्वेपि। कारकभिन्नत्वेपि ब्रह्मपराणां तत्त्वमस्यादिवाक्यानां कथमुपपत्तिरित्यत आह। तत्त्वमस्यादिवाक्यैरिति।

ज्ञत्वं जीवात्पृथगसत्त्वञ्चानुन्मत्तैः कैश्चिदपि वक्तुं शक्यं नापि 'प्लवा ह्येते अदृढा यज्ञरूपा,' इत्यादि श्रुतिनिन्दिते कर्मणि वेदान्तानां समन्वयो युक्तः अनाप्तत्वापत्तेः । नहि स्वमुखेनैव निन्दां कृत्वा पुनस्तस्मिन्नेव निन्दाविषये स्वयं समन्वीयात् सर्वज्ञो वेदस्तथात्वे चोन्मत्तप्रलापवत्तस्याप्य-प्रामाण्यप्रसङ्गात् । नापि वेदान्तानां विध्यङ्गत्वमर्थवादादिवद्वक्तुं शक्यं भिन्नप्रकरणप-ठितत्वात् विधिसान्निध्याभावाच्च । नापि प्रवृत्तिनिवृत्त्यभावरूपभूतार्थबोधकतया वेदान्तानां निष्फलत्वं वक्तुं शक्यं वेदान्तवेद्यब्रह्मज्ञानस्य मोक्षरूपपरमश्रेयःफलवत्त्वात् । 'तमेव विदित्वाऽति-मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवास्तदा देवम-विज्ञाय दुःखस्यान्तो भविष्यती'त्याद्यन्वयव्यतिरेकसावधारणश्रुतिभ्यः। नन्वक्षय्यं ह वै चातुर्मा-स्ययाजिनः' इत्यादिना कर्मणोऽपि ब्रह्मवत्स्तुतिश्रवणात् तत्र समन्वयो न दोषावह इति चेत् न । वेदविषयः स एव यः सर्वत्र स्तूयते एव नतु क्वापि निन्द्यते कर्मणस्तु स्तुतिनिन्दयोरु-भयोर्विषयत्वदर्शनान्न शास्त्रसमन्वितत्वमित्यर्थः । 'तद्यथेह कर्मचितो लोकः क्षीयते' 'नास्त्य-कृतः कृतेने'त्यादिना निन्दापूर्वकश्रेयःप्रतिबन्धकत्वश्रवणात् । कर्मस्तुतिस्तु बालानां प्रवर्त्तनायैव । ननु स्यादेतदुपनिषद्भागस्य कथञ्चित् ब्रह्मपरत्वं तत्र तथात्वदर्शनात् ।

---

तद्भिन्नम्=जीवाभिन्नम् । परिहरति । **नेति** । **अन्धपरम्परयेति** । "अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितं मन्यमानाः जङ्घन्यमाना अपि यन्ति मूढा अन्धेनैव नीयमाना यथान्धा" इति श्रुत्यैवोक्तार्थस्य सिद्धत्वादिति भावः । तदेवोपपादयति । **नहीति** । 'यदासीत्तदधीनमासीत्' 'तस्य भासा सर्वमिदं विभाति, एष सर्वभूतान्तरात्मा अन्तःप्रविष्टः शास्ते'त्यादिश्रुतय उक्तार्थस्य साधिकाः । कर्मणां निन्दाश्रवणान्न तत्र वेदान्तानां समन्वय इत्याह । **नापीति** । तत्र हेतुमाह । **अनाप्तत्वापत्तेरिति** । तस्मिन्नेव=कर्मण्येव । तथात्वे=कर्मणि समन्वितत्वे । तस्य=वेदस्य । यदुक्तमर्थवादन्यायेन वेदान्तानां विध्यङ्गत्वमिति तदप्यपाकरोति । **नापीति** । तत्र हेतुद्वयमाह । **भिन्न-प्रकरणपठितत्वादिति** । अर्थवादानान्तु स्वार्थे फलाभावात् स्तावकत्वं सम्भवति नत्वेवं वेदान्तानामिति भावः । यच्चोक्तं भूतार्थप्रतिपादकत्वेन वेदान्तानां निष्फलत्वमिति तदनूद्य परिहरति । **नापीति** । उक्तार्थं श्रुतिमुखेन दर्शयति । **तमेवेति** । वेदभागे कर्मणां प्राशस्त्यश्रवणात्तत्र वेदान्तानां समन्वयो न क्षतिमावहतीत्याशङ्कते-**नन्विति** । यो हि परमपुरुषः सर्वज्ञः परमात्मा वेदेन प्रतिपाद्यते स सर्वत्र वेदभागे स्तूयते तत्रैव वेदान्तानां समन्वयः नतु कर्मणीत्याशयेनोक्तशङ्कां परिहरति । **नेति** । कर्मणो निन्दावचनमुदाहरति । **तद्यथेहेति** । अस्या अर्थः प्रागुपदर्शितः । आस्तामुपनिषद्भागस्य यथाकथञ्चिद्ब्रह्मपरत्वं पूर्वभागस्य तु न कथमपि ब्रह्मपरत्वं घटत इति शङ्कते । **नन्विति** । तत्र=उपनिषद्भागे । तथात्वदर्शनात्=ब्रह्मपरत्वदर्शनात् । नित्यकर्मविधायकं वाक्यं पठति । **यावज्जीवमिति** । काम्यकर्मबोधकं वाक्यमुदाहरति । **ज्योतिष्टोमेनेति** । तस्य=वेदस्य । तत्र=तेषु । तत्स्वरूपगुणादीनि=ब्रह्मस्वरूपगुणादिप्रतिपादनपरत्वादित्यर्थः । "एष भूतपाल एष भूताधिपतिः" "स कारणं कारणाधिपाधिपः" "न तस्य कश्चिज्जनिता नचाधिपः" । "न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते" "यः सर्वज्ञः सर्ववित्" । "संसारस्थितिबन्धमोक्षहेतुः । य आत्माऽपहतपाप्मे"त्यादयः श्रुतयोऽनुसन्धेयाः । **साक्षादेवान्वय इति** । अन्वयः=सम्बन्धः । शक्त्यैव तत्परत्वं नतु लक्षणया वृत्त्या जघन्यस्य मुख्यबाध्यत्वात् । "यत्परः शब्दः स शब्दार्थः" इति न्यायादिति भावः । नित्यकर्मपराणां "अहरहः सन्ध्यामुपासीत" "यावज्जीव-मग्निहोत्रं जुहोति" इत्यादिरूपाणामधिकारिसत्त्वशुद्धिसम्पादनेन ब्रह्मणि समन्वय इत्याह । **नित्यनैमित्तिक-कर्मपराणामिति** । "ज्योतिष्टोमेन यजेत" इत्येवमादीनां काम्यपराणां वाक्यानां ब्रह्मण्येव विविदिषोत्पा-

पूर्वभागस्य तु 'यावज्जीवमग्निहोत्रं जुहोति' 'ज्योतिष्टोमेन यजेत स्वर्गकाम' इत्यादिना नित्यकाम्यादिकर्मविधायकत्वेन नैराकाङ्क्ष्यात्कथं ब्रह्मपरत्वमितिचेन्न । कृत्स्नस्यापि वेदस्य ब्रह्मपरत्वमेव कर्मादौ तस्य केनचिद्भागेन कथञ्चिदन्वयदर्शनेऽपि समन्वयस्तु ब्रह्मण्येव । तत्रोपनिषद्भागस्य साक्षात्तत्स्वरूपगुणादिप्रतिपादनपरत्वात् साक्षादन्वयः, नित्य-नैमित्तिककर्मपराणाञ्चाधिकारिसत्त्वशुद्धिसम्पादनद्वारा ब्रह्मविषयकज्ञानाद्युपपादनेन काम्या-नामपि संयोगपृथक्त्वन्यायेन तत्रैव परम्परया समन्वय इति विवेकः । एकस्योभयत्वे संयोगपृथक्त्वमिति' जैमिन्युक्तः एकस्य कर्मण उभयत्वेऽनेकफलसम्बन्धे संयोगः वाक्यस्योभयसम्बन्धबोधकता तस्य पृथक्त्वं भेदः यथा 'खादिरैर्जुहोति खादिरैर्जुहुया-द्वीर्यकाम' इत्येकस्यैव खादिरकरणकस्य कर्मण उभयपरत्वं तथा प्रकृतेऽपि ज्योतिष्टोमादिकर्मणां स्वर्गादिफलकत्वे श्रूयमाणेऽपि विविदिषाश्रुतेर्ज्ञानार्थकत्वमित्यवग-मादित्यर्थः । तस्मात् कृत्स्नस्य वेदस्यापि साक्षात् परम्परया वा ब्रह्मण्येव समन्वयः इति सिद्धम् । विस्तरस्त्वाकरे द्रष्टव्यः । एवम्भूतस्य शास्त्रसमन्वितस्य ब्रह्मणः 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः निदिध्यासितव्यः' इत्यादिश्रुतिप्रमितेन ध्यानेन 'यमेवैष वृणुते

---

दनेन समन्वय इत्याह । काम्यानामिति । उक्तार्थं महर्षिजैमिनिवचसा प्रमाणयति । एकस्योभयत्वेति । सूत्रार्थं व्याचष्टे । एकस्येति । तदुदाहरति । यथेति । फलितार्थं निगमयन् दर्शयति । तस्मादिति । एवम्भूतस्य शास्त्रसमन्वितस्य ब्रह्मणः साक्षात्कारान्मोक्ष इति योजना । तत्र ध्यानबोधिकां श्रुतिं पठति । सोऽन्वे-ष्टव्य इत्यादिना । साक्षात्कारस्य हेतुर्ध्यानमित्याह । श्रुतिप्रमितेन ध्यानेनेति । ध्यानस्य सहकारितदनुग्रहोऽत-स्तद्वाक्यमुदाहरति । यमेवैष इति । यमुपासकमेष परमात्मा वृणुते आत्मसात्करोति तेनात्मीयेन तत्प्रियतमेन लभ्यः तस्य प्रियतमस्योपासकस्यैष आत्मा स्वां तनुं मूर्तिं वृणुते प्रकाशयति प्रत्यक्षीभवतीत्यर्थः । ब्रह्मसा-क्षात्कारप्रतिपादकं वाक्यमुदाहरति । भिद्यत इति । तस्मिन् सर्ववेदान्तसिद्धे ब्रह्मणि श्रीपुरुषोत्तमे दृष्टे साक्षात्कृते सति हृत्स्थानमयते इति हृदयो जीवस्तस्य ग्रन्थिः देहे तत्सम्बन्धिषु चाहन्ताममतात्मकोऽनादिकर्म-निरूपितमायासम्बन्धः भिद्यते ध्वंसमापद्यते स्वयमेवेति कर्मकर्तृप्रयोगः इत्यर्थः ।

इति चतुःसूत्रीविवरणम् ।

"अथातो ब्रह्मजिज्ञासेति" सूत्रेणाचिन्त्यानन्तनिरतिशयस्वाभाविकबृहत्तमस्वरूपगुणाश्रयस्य परब्रह्मणो जिज्ञास्यत्वमभिहितम् । किं तल्लक्षणमिति जिज्ञासायां "जन्माद्यस्य यत" इत्यनेन जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं तदुत्तरसूत्रद्वयेन च शास्त्रैकप्रमाणकत्वं सर्वज्ञे सर्वशक्तौ ब्रह्मणि सर्वेषां वेदान्तवाक्यानां समन्वयश्चोप-पादित इति प्रागुक्तार्थं सङ्क्षेपेणानूद्यति । एवमित्यादिना । वेदान्तार्थं सूत्रचतुष्टयेन निरूप्य वक्ष्यमाणाना-मधिकरणानां पुनरुक्तार्थतां यद्याशङ्केत तां शङ्कां निराचिकीर्षुराह । इदानीमिति । जगज्जन्मादिकारणत्वं ब्रह्मणो यल्लक्षणमुपन्यस्तं तच्च प्रधानेऽतिप्रसक्तं नातः समन्वयाधिकरणप्रतिपाद्यं ब्रह्म किन्तु प्रधानमेवेति प्रधानवादिनां साङ्ख्यानामाक्षेपः । प्रधानादीत्यत्रादिना काणादाः बौद्धादयश्च ग्राह्याः । ते हि ब्रह्मणो जगत्का-रणत्वे विप्रतिपन्नास्तेषामाक्षेपपरिहारपुरस्सरं सर्वेषां वेदान्तानां ब्रह्मणि समन्वयं दर्शयितुमुत्तरसन्दर्भारम्भ इत्यर्थः । एतेन सर्वेषां कारणवाक्यानां प्रधानविषयत्वादित्याक्षेपिकी अवान्तरसङ्गतिः सूचिता । अधिकरणं रचयन् विषयवाक्यमुदाहरति । तत्रेति । अधिकरणं नाम "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । प्रयोजनञ्च पञ्चाङ्गं शास्त्रेऽधिकरणं मतम्" । आपाततः प्रतिपन्नः सन्दिग्धार्थो विषयः । सदेवेति । अग्रे सृष्टेरादौ

तेन लभ्य' इत्यादिवाक्योक्ततदनुग्रहसहकृतेन 'भिद्यते हृदयग्रन्थि'रित्यादिमन्त्रप्रतिपादितात्साक्षात्कारान्मोक्ष इत्यग्रे स्फुटीभविष्यति ॥ ४ ॥

इतिश्रीसनत्कुमारसन्ततिप्रवर्त्तकश्रीभगवन्निम्बादित्यमतानुयायिधरामण्डलविजयिश्रीकेशवकाश्मीरिभट्टाचार्य्यविरचितायां कौस्तुभप्रभाख्यसूत्रवृत्तौ चतुःसूत्रीव्याख्यानम् ।

ईक्षत्यधिकरणम् ।

एवं चतुःसूत्र्या सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्ववेदान्तवाक्यप्रतिपाद्यमित्युक्तम् । इदानीं साङ्ख्यादिभिर्ब्रह्मणः प्रमाणान्तरगम्यत्वं मन्यमानैः प्रधानादिपरतया योजितानां वेदान्तवाक्यानां परब्रह्मण्येव समन्वयप्रकारं प्रपञ्चयति भगवान्सूत्रकार 'ईक्षतेर्नाशब्द'मित्यादिभिः । तत्र 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्यादिवाक्यस्थजगत्कारणवाचिसच्छब्दवाच्यं प्रधानं वा ब्रह्म वेति संशये प्रधानमेवेति साङ्ख्या आहुः । इदंशब्दवाच्यस्य वियदादिकार्यस्य तत्परिणामभूतत्वात् कार्यकारणयोश्चानन्यत्वेन प्रतिज्ञादृष्टान्तयोस्तत्र सम्भवात्, ज्ञानकारणस्य सत्त्वस्य तत्र भावात्सर्वज्ञत्वस्य रजोगुणस्य भावात् क्रियाशक्तिमत्त्वस्य च प्रधाने सम्भवात् । 'तदैक्षत बहुस्या'मिति च गौणमीक्षणं भवितुमर्हति

---

इदंशब्दवाच्यस्य कार्यजातस्य जगतः सच्छब्दवाच्ये कारणेऽतिसूक्ष्मत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात् सदेवेति कारणैक्यनिर्देशः सूपपन्नः । एवकारश्चान्ययोगव्यवच्छेदार्थकस्तत्समं निषेधात । अद्वितीयशब्दश्च तदाधिक्यं नास्तीति बोधयति । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्यैकार्थत्वात् । अन्यथैकपदेनैवाद्वैतसिद्धावन्ययोःपदयोर्वैयर्थ्यापत्तेः न्यायस्यावयवसमुदायरूपस्य पूर्वाङ्गं संशयः । अतः संशयाकारं दर्शयति । **सच्छब्दवाच्यमिति** । कुत्र संशय इत्याशङ्कामपनेतुं सदेवेतिवाक्यस्थमित्युक्तं सच्छब्दवाच्य एव सन्देह इति भावः । साधारणधर्मवद्धर्मिज्ञानं संशयजनकमिति सर्वेषां निर्विवादमतस्संशयसामग्रीसम्पादनाय सच्छब्दवाच्यमिति धर्मिवाचकं पदं साधारणधर्मत्वेनाभिहितम् । जगत्कारणत्वमित्यनेनाभिन्ननिमित्तोपादानत्वबोधनात् मुख्येक्षितृत्वं विमर्शहेतुकारणमभिहितम् । प्रतिवादी स्वपक्षं युक्तिमत्त्वेन प्रतिजानीते । **प्रधानमिति** । वियदादिकार्यवर्गेहीदंशब्दवाच्यता नतु चेतन इति भावः । तत्र हेतुमाह-**तदिति** । प्रधानपरिणामभूतत्वात् प्रधानस्यैव युक्त्यन्तरेण कारणत्वमुपपादयति । **कार्येति** । त्रिगुणात्मकस्य प्रधानस्य सच्छब्दवाच्यत्वे कार्यकारणयोरनन्यत्वं सिद्धयति नान्यथा सजातीययोरेवानन्यत्वं नतु विजातीययोरिति भावः । ततः किमित्यत आह । **प्रतिज्ञेति** । कार्यकारणयोरनन्यत्वे हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सिद्धयति, विजातीयब्रह्मकारणत्वपक्षे तु सा न सिद्धयेदित्याशयः । **दृष्टान्त इति** । अचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तश्चेतनकारणस्य दार्ष्टान्तिकत्वे नोपपद्यत इति भावः । ननु प्रधाने ज्ञानवत्त्वं क्रियाशक्तिमत्त्वं कथमपि नोपपद्यते नातः सच्छब्दवाच्यं प्रधानं भवितुमर्हतीत्यत आह । **ज्ञानकारणस्येति** । 'सत्त्वात् सञ्जायते ज्ञानमि'तिश्रीमुखवचनात् । तत्र=प्रधाने । सत्त्वस्य यथार्थज्ञानहेतुत्वात्सर्वज्ञत्वं प्रधानस्येत्यर्थः । तथाचोक्तं साङ्ख्यैः षष्टीतन्त्रे" "सत्त्वं लघुप्रकाशकमिष्टम् उपष्टम्भकं चलञ्च रजः गुरुवरणकमेव तमः" इति । ईक्षितृत्वविरहान्न प्रधानं जगत्कारणमित्यतस्तत्रामुख्येक्षितृत्वं व्युत्पादयति । **तदैक्षत इति** । तत्र हेतुमाह । **तत्तेज इति** । आदिना "ता आप ऐक्षन्त" हन्ताहमिमास्तिस्रो देवताः अनेन जीवात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' "इमास्तिस्रो देवता अनेन जीवेनानुप्रविश्य नामरूपे व्याकरोत्" "यथातु खलु सोम्येमास्तिस्रो देवताः" इतिपरिग्रहः । तेषु वाक्येषु तेजोऽबन्नेषु गौणेक्षणत्वमिव प्रकृतेऽपि तथात्वं बोध्यम् । अचेतनेऽपि चेतनवदुपचारो दृश्यते यथा वृष्टिप्रतीक्षाशालयः तथात्रापि चेतनरहिते प्रधाने चेतन-

'तत्तेज ऐक्षत' इत्यादिगौणेक्षणसाहचर्य्यात् । नहि चेतनस्य कारणता वाच्या, चिन्मात्रस्य निर्धर्मकस्य कूटस्थत्वादिति प्राप्ते आह ।

## ईक्षतेर्नाशब्दम् । १ । १ । ५ ॥

न शब्दः श्रुतिप्रमाणं यस्मिंस्तदशब्दमानुमानिकं प्रधानं जगत्कारणवादिवाक्यप्रतिपाद्यं न भवति कुतः ? ईक्षतेरीक्षितृत्वश्रवणात् । कारणस्य 'तदैक्षत बहु स्यां प्रजायेय' 'स ऐक्षत लोकानसृजा इति' 'स इमाँल्लोकानसृजत' 'स ईक्षांचक्रे' 'स प्राणमसृजत'इत्यादिश्रुतेः । ईक्षणं नाम पर्य्यालोचनमध्यवसाय इति यावत् । तस्य चेतनासाधारणधर्मत्वेनाचेतने प्रधानेऽसम्भवात् । नापि प्रतिज्ञादृष्टान्तौ तत्र सम्भवतः चेतनस्य तत्कार्यत्वाभावेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्तत्रासम्भवादिति वक्ष्यति । नापि सत्त्वादिमत्त्वेन ज्ञानक्रियाशक्तिमत्त्वं घटते साम्यावस्थायां तस्य गुणवत्त्वाभावात् । गुणसाम्यं प्रधानमिति निर्णीयमानत्वाच्च । नापि निर्धर्मकं ब्रह्म तस्य ज्ञानक्रियादीनां

---

वदुपचार इति भावः । जन्यधर्मानाश्रयस्य चिन्मात्रस्य चेतनस्य विश्वं प्रति कारणत्वं नोपपद्यत इति चेत् न तस्य कारणत्वमिति पक्षमाक्षेप्तुमाह । **नहीत्यादिना** । कूटस्थत्वं नाम जन्यधर्मानाश्रयत्वम् । पूर्वपक्षं निगमयति **इतीति** । इति हेतौ । सुखदुःखमोहान्वितस्य जगतः कारणं तद्रूपात्मकं प्रधानमेवेकः पूर्वपक्षस्य हेतुरपरश्च कार्यकारणयोरनन्यत्वेन सर्वविज्ञानप्रतिज्ञायाः यथा सोम्यैकेन मृत्पिण्डेन इति दृष्टान्तस्य चोपपत्तिरिति अस्मिन् पूर्वपक्षे समाधानं व्यवस्थापयितुं सूत्रमवतारयति । **प्राप्त इति** । उच्यमाना विषयसंशयपूर्वपक्षाः अस्याधिकरणस्येतिज्ञापनाय प्राक्सूत्रस्योपादानम् । सूत्राक्षराणि व्याचष्टे । **नशब्द इति** । यदि प्रधानस्य शब्दैकप्रमाणवेद्यत्वं नास्ति चेत्किमन्यत् प्रमाणमित्यत्राह । **आनुमानिकमिति** । अशब्दपदेन शब्दभिन्नं प्रमाणं बोध्यते ततोऽर्शाद्यचि आनुमानिकमित्यर्थो लभ्यत इति भावः । नेतिपदेन किं प्रधानस्य स्वरूपं प्रतिक्षिप्यते इति शङ्कां निराकुर्वन् वाक्यार्थं योजयति । **जगत्कारणेति** । इक्श्तिपौ धातुनिर्देशे इति स्मरणादीक्षतेरिति श्तिपा धातुस्वरूपकथनात्र तस्य चेतनोपादानत्वसाधनतेत्याशङ्क्याह । **ईक्षतेरिति** । धात्वर्थनिर्देशोऽभिमतः विपश्चिता विषयलक्षणात् प्रसिद्धा चेयं लक्षणा "इतिकर्त्तव्यताविधेर्यजतेः पूर्वत्वम्" । ७ । ४ । १ इति जैमिनिसूत्रे यथा यजतिपदेन लक्षणया धात्वर्थो याग उच्यते तद्वदिहापीत्यर्थः । सौर्य्यादिविकृतियागस्याङ्गानामविधानात् पूर्वत्वं दर्शादिप्रकृतस्याङ्गवत्त्वमिति सूत्रार्थः । श्रवणादित्यज्ञानासिद्धिपरिहारः । श्रूयमाणादीक्षतेरिति सूत्रविवक्षितमिति भावः । ननु 'तत्तेज ऐक्षत' ता आप ऐक्षन्त इति वाक्यद्वये ईक्षणमचिद्वृत्तितया प्रतीयते सेयं देवतैक्षत इत्यत्रापि ईक्षणमचिद्गतमुचितं तद्वत्प्रकृतेऽप्यचिद्वृत्तीक्षणमभ्युपेयमित्याकाङ्क्षायामाह । **तदैक्षत इति** । सर्वत्र वेदान्तवाक्येषु सृष्टिप्रकरणे ईक्षापूर्विकैव सृष्टिः श्रूयते अतस्तानि वचनान्युदाहरति । **सऐक्षत लोकानिति** । उदाहृतवाक्येष्वीक्षणं मुख्यमेव नतु गौणमितिभावः । नात्र क्रियाविशेषरूपमीक्षणं येन प्रधानसाधारणं भवेत् किन्तु विलक्षणमित्याह । **ईक्षणं नामेति** । अनेनाचिद्व्यावृत्तिरुक्ता । एकोऽहं बहु स्यामितीक्षणं विजातीयं सर्वज्ञे सर्वशक्तिमति श्रीपुरुषोत्तम एवोपपद्यते नत्वन्यत्र तथाच यदीक्षणं प्रत्यगात्मन्यपि न सम्भवति तत्कथमचेतने सम्भवतीति भावः । प्रधानविज्ञानेन तद्विकारज्ञानेऽपि चिदचिन्मिश्रकृत्स्नकार्यविज्ञानप्रतिज्ञा न सिद्ध्येत् चेतनस्य प्रधानकार्यत्वाभावेन तज्ज्ञानासम्भव इत्याशयेन प्रागुक्तार्थं परिहरति । **नापीति** । तत्कार्यत्वाभावेन = प्रधानकार्यत्वाभावेन । **वक्ष्यतीति** । "प्रतिज्ञाविरोधादितिसूत्रे" प्रधाने सत्त्वगुणसंसर्गाज्ज्ञानवत्त्वमङ्गीकृत्य तत्र सर्वज्ञत्वमभिहितं तदपि परिहरति । **नापीति** । प्रधाने गुणानां तुल्यतया सत्त्वकार्यस्य ज्ञानस्यैवासम्भवे सर्वज्ञत्वं

स्वाभाविकशक्तीनां शास्त्रसिद्धत्वात् 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे'त्यादिश्रुतेः । अत ईक्षणक्षमश्चेतनविशेषः सर्वज्ञः सर्वशक्तिः पुरुषोत्तम एव सच्छब्दवाच्यः । ५ ॥

ननूक्तं गौणमीक्षणं भवितुमर्हतीति प्रपतन्नासन्नं कूलमालक्ष्य कूलं पिपतीषतीति शुष्कपङ्क्तां कृषिमालक्ष्य कृषिर्वृष्टिं प्रतीक्षते इतिच लोकप्रसिद्धिवदचेतने प्रधानेऽपि चेतनवदीक्षणमौपचारिकमेवास्तु कुतो मुख्येक्षितृत्वं विहायौपचारिकं कल्प्यत इति चेत् 'तत्तेज ऐक्षत' ता आप ऐक्षन्ते,ति चाचेतनयोरप्यप्तेजसोश्चेतनवदुपचारदर्शनात् तस्मात्सत्कर्तृकमीक्षणमौपचारिकमिति गम्यते उपचारप्राये वचनादिति प्राप्ते आह ।

## गौणश्चेन्नात्मशब्दात् । १ । १ । ६ ॥

सच्छब्दवाच्यं प्रधानमीक्षणं तत्र गौणमिति चेन्न । कुत आत्मशब्दादिति 'सदेव सोम्येदमग्र आसीदित्युपक्रम्य' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति सच्छब्द-

---

दूरनिरस्तमित्यर्थः । प्रधानशब्दार्थं निर्वक्ति । **गुणसाम्यमिति** । समुदाचरद्वृत्ति तावन्न भवति सत्वं गुणवैषम्यप्रसङ्गेन साम्यानुपपत्तेः । नचाव्यक्तेन रूपेण ज्ञानमुपयुज्यते रजस्तमसोस्तत्प्रतिबन्धस्यापि सूक्ष्मेण रूपेण सद्भावादिति भावः । ब्रह्मणो निर्धर्मकत्वेनासर्वज्ञत्वात् कथं तस्य जगत्कारणत्वमिति यत् प्रागुक्तं तदपि व्युदस्यति । **नापीति** । तस्य = ब्रह्मणः । ब्रह्मणः स्वभावसिद्धज्ञानक्रियादिमत्वे मानमाह । **परास्येति** । अस्य ब्रह्मणः शक्तिः परा स्वरूपविलक्षणा विविधा अनन्ताचिन्त्यप्रकारिका श्रूयते चेत्यन्यप्रमाणनिरपेक्षेत्यर्थः । अनिर्वचनीयत्वमिथ्यात्वौपचारिकत्वादिशब्दप्रयोक्तॄणां वादिनां मुखं धूलीकरोति **स्वाभाविकीति** अनाद्यनन्तेति स्वरूपवन्नित्येत्यर्थः । न केवलं शक्तेरेव तत्वं ज्ञानक्रियागुणानामपीत्याह । **ज्ञानबलक्रियाचेति** । ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रियाचेति चकारः सर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः । ततः किमित्यत्राह **अत इति** । विचित्रशक्तिमत्वेन जगत्कारणत्वस्य सिद्धत्वात् । ईक्षणक्षम इति विजातीयेक्षणायोग्य इत्यर्थः । अनेनाचेतनस्य प्रधानस्य व्यावृत्तिरुक्ता चेतनविशेषशब्देन जीवसामान्यादपि व्यावृत्तिरुक्ता भवति । **तदैक्षतेति** । सिद्धं गुणमाह । **सर्वज्ञ इति** । बहु स्यामिति फलितमर्थमाह । **सर्वशक्तिरिति** । चिदचिद्व्यावर्तकलिङ्गबलसिद्धं सदिति सामान्यश्रुतेः पर्यवसानस्थलं दर्शयति । **पुरुषोत्तम इति** । ५ अग्रिमसूत्रमवतारयितुमीक्षणस्य गौणत्वं शङ्कते । **नन्विति** । तदेव दृष्टान्तेन व्याचष्टे । **प्रपतन्नासन्नमिति** = अनेनोपचारे हेतुः स्फोरितः नहि प्रधाने मुख्यमीक्षितृत्वमुपपद्यते तत्राह । **अचेतनेति** = मुख्यगौणयोर्मुख्यग्रहणं न्याय्यमिति शङ्कते । **कुतइति** । गौणेक्षणसाहचर्येण समाधत्ते **तत्तेज इति** । दर्शनादौपचारिकं सतोपीक्षितृत्वमितिसम्बन्धः । साहचर्यस्य फलमाह । **तस्मादिति** । तच्छब्दार्थं व्याकरोति । **उपचारेति** । गौणार्थप्रचुरप्रकरण इति यावत् । तत्तेज ऐक्षन्त । ता आप ऐक्षन्त इति छान्दोग्यश्रुतौ समाम्नादित्यर्थः । इतिशब्दः शङ्कोपक्रमस्य क्रियासम्बन्धी । पूर्वपक्षमनूद्य सूत्रमुत्तरत्वेनावतारयति । **प्राप्तेइति** । सूत्रस्य पूर्वपक्षभागं विवृणोति । **सच्छब्दवाच्यमिति** । तत्रेति प्रकरणेत्यर्थः । हेतूत्थापकाकाङ्क्षां दर्शयति । **कुत इति**=परपक्षं निराकर्त्तुं प्रकरणमनुसन्दधानो हेतुं व्याचष्टे । **सदेवेति** । आत्मशब्दादिति सौत्रेण पदेनाविशेषेण 'ऐतदात्म्यं स आत्मा'' इति वाक्यद्वयगतात्मशब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम् । **सच्छब्दवाच्यस्येति** । ''ऐतदात्म्यमि,त्यत्र एतच्छब्दस्य स आत्मेत्यत्र स इतिपदस्य च प्रकृतपरामर्शित्वादितिभावः । तत्त्वमसि श्वेतकेतो

वाच्यस्यात्मशब्देन परामर्शदर्शनात् नहि चेतनं श्वेतकेतुं प्रत्यचेतनप्रधानस्यात्मत्वोपदेशः सम्भवति कूलं पिपतिषतीत्यादौ तु संशयस्थलत्वाद्युक्तं गौणत्वम् 'विषये प्रायदर्शना' दिति जैमिनिसूत्रात् । प्रकृतेतु गौणमुख्ययोर्गौणस्य जघन्यत्वेन संशयाभावात् । तेजःप्रभृतीनामपि तदात्मकत्वावगमात्तेजःप्रभृतीक्षणमपि मुख्यमेवेत्यभिप्रायः । ६ ॥

नन्वात्मशब्दोऽपि चेतनाचेतनसाधारणो दृश्यते तत्कुत आत्मशब्दादगौणमीक्षणमिति चेत्तत्राह ।

## तन्निष्ठस्य मोक्षोपदेशात् १ । १ । ७॥

तस्मिन् कारणे निष्ठा यस्य तस्य तत्त्वमसीति तदात्मकत्वानुसन्धानमुपदिश्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति शरीरपातविलम्बो ब्रह्मभावापत्तिलक्षणमोक्ष उपदिश्यते यदि चेतनं मुमुक्षुं श्वेतकेतुं प्रत्यचेतनं कारणमुपदिश्येत तदा तदात्मकतया प्रत्यगात्मानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्येत अन्यथाऽचेतनत्वापत्तिरेव मोक्षः स्यात् साच प्रधानकारणवादिमतेऽपि नाङ्गीक्रियते अतः सदात्मशब्दवाच्यं परं ब्रह्मैव । ७ ॥

## हेयत्वावचनाच्च १ । १ । ८ ॥

यद्यचेतनं प्रधानमेवात्र सच्छब्दवाच्यतयोपदिष्टं स्यात्तर्हि तन्निष्ठावारणाय मुमुक्षुं

---

इति श्रुतश्रुतनं श्वेतकेतुं प्रत्यात्मत्वेनैवोपदिशति नत्वचेतनप्रधानत्वेन । तथासति चेतनस्य श्वेतकेतोरचेतनत्वाभिधाने महाननर्थपातःस्यादित्याशयेनाह । **नहीति**=कूलं पिपतिषतीत्यस्य संदिग्धत्वात् । अचेतने कूले चेतनधर्मोपचाराद्गौणत्वमित्याह । **कूलमिति**=उक्तार्थे मानमाह । **विषय इति** । "तदैक्षत" इत्यत्र तु गौणमुख्यन्यायस्य जागरूकत्वान्न सन्देहावकाश इत्याह । **प्रकृतेति** । यत्प्रागुक्तं गौणेक्षणसाहचर्य्यादीक्षितृत्वं सतोऽपि गौणमित्यत आह । **तेजःप्रभृतीनामिति**=तेजोवन्नानामपि तज्जत्वात् ब्रह्मात्मकत्वम् अतः "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इत्यत्रापि मुख्य एवेक्षणव्यपदेश इत्यर्थः । ६ ॥

यथैव ज्योतिरिति श्रुत्या सहस्रदक्षिणाके क्रतौ ज्योतिष्टोमे लोकप्रयोगादग्नौच ज्योतिश्शब्दो मुख्यस्तथात्राप्यात्मशब्दश्चेतनाचेतनोभयसाधारणः, भूतात्मा इन्द्रियात्मेति प्रयोगात् कथमात्मशब्दान्मुख्यमीक्षणमभिधीयत इत्यग्रिमसूत्रमवतारयितुं शङ्कते । **नन्विति** । सूत्राक्षराणि व्याकरोति । **तस्मिन्निति** । भगवत्स्वरूपगुणलीलामाधुर्य्यानुसंधानं निष्ठाशब्दार्थः । यस्य मुमुक्षोः श्वेतकेतोः । तत्त्वमसीति वाक्यवृत्तिस्तच्छब्दः प्रकृतसद्विषय इति ज्ञापनपरस्सूत्रे तच्छब्द इत्यभिप्रायेण तदात्मकत्वेत्युक्तम् । **तस्य तावदेवेति** । मुमुक्षुर्यावच्छरीरान्न विमोच्यते प्रारब्धकर्मफलभोगप्रतिबन्धात्तावदेवास्य मुमुक्षोश्चिरं भवति भुक्तेतु कर्मफले प्रतिबन्धाभावात् सम्पत्स्यत इति श्रुत्यर्थः । सूत्रस्थमोक्षशब्दं व्याचष्टे । **शरीरपात इति** । शरीरपातावधिविलम्ब इत्यर्थः । शरीरपातपूर्विका ब्रह्मभावापत्तिः सूत्रस्थमोक्षशब्दार्थः । नतु शरीरपातमात्रमिति भावः । यदि प्रधानं सच्छब्दवाच्यं स्यात्तदा श्वेतकेतुचेतनं प्रति त्वं जडोऽसीत्युपदिशन् शास्त्रं विपरीतवादि भूत्वा पुंसोऽनर्थायैव स्यादित्यनुपपत्तिं साङ्ख्यानां मते दर्शयति । **यदिति** । **तदात्मकतयेति** । अभेदे तृतीया । तस्य प्रत्यगात्मन्यन्वयस्तथाच ब्रह्मात्मकाभिन्नोऽहमिति भेदसहिष्णुरभेदानुसन्धानं मोक्षस्य साधनमित्यर्थः । विपक्षे बाधकतर्कमाह । **अन्यथेति** । प्रधानात्मकतया प्रत्यगात्मानुसन्धानस्य मोक्षसाधनत्व इत्यर्थः । **सावेति** । अचेतनत्वापत्तिरित्यर्थः । उपसंहरति । **अतइति** । चेतनस्याचेतनात्मकत्वेन मोक्षोपदेशस्यासिद्धत्वादेवेत्यर्थः । ७ ॥

श्वेतकेतुं प्रति तस्य हेयत्वमेव श्रुत्योच्येत नच तथोच्यते प्रत्युत 'तत्त्वमसि तस्य तावदेव चिर' मित्युपादेयत्वेनोपदिश्यते अतः परं ब्रह्मैव ॥ ८ ॥

## प्रतिज्ञाविरोधात् । १ । १ । ९ ॥

प्रधानकारणवादे 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इत्यादिः कारण-विज्ञानेन चिदचिन्मिश्रकृत्स्नकार्यविज्ञानप्रतिज्ञा च विरुद्ध्येत चेतनस्य प्रधानकार्यत्वाभावेन तज्ज्ञानेन तज्ज्ञानासम्भवात् ॥ ९ ॥

## स्वाप्ययात् । १ । १ । १० ॥

'स्वमपीतो भवति सता सोम्य तदा सम्पन्नो भवति' इति सुषुप्तस्य जीवस्य स्वकारणे लयः श्रूयते प्रधानस्य कारणत्वे लयश्रुतिर्विरुद्ध्येत प्रधानस्य जीवकारणत्वाभावात् ॥ १० ॥

## गतिसामान्यात् । १ । १ । ११ ॥

सर्वासूपनिषत्सु चेतनैककारणत्वस्य गतेरवगतेः समानत्वाच्चेतनं ब्रह्मैव कारणं

---

प्रधानस्य सच्छब्दावाच्यत्वे हेत्वन्तरमाह । **हेयत्वावचनादिति** । तर्कप्रदर्शनपुरस्सरं सूत्रं व्याचष्टे **यद्यचेतनमिति** । यद्यचेतनमित्यारभ्योपदिष्टं स्यादित्यन्तं तर्कस्यापादकस्वरूपं निर्दिष्टं शेषश्चापाद्यम् आपाद्या-भावेनापादकाभावसिद्धिस्तर्कफलमित्यतस्तं दर्शयति । **नच तथेति** । यतः प्रधानस्य हेयत्वं नोच्यते अतोऽचेतनं प्रधानं न सच्छब्दवाच्यमिति सिद्ध्यतीत्यभिप्रायः । प्रधानोपदेशस्य तं प्रतिहेयत्वन्तु नोक्तं किन्तु तद्विरुद्धमेवोक्त-मित्याह प्रत्युत इति । हेयत्वावचनात् परब्रह्मणः सच्छब्दवाच्यत्वेन जगत्कारणत्वमित्याह । **अत इति** । प्रातिकूल्योपदेशादिति हेयत्वानुक्तेरित्युभयं सर्वनाम्ना परामृश्यत इत्यर्थः । एतेन उपादेयत्वोक्त्या हेयत्वानुक्त्याच पूर्वोत्तरसूत्रयोरेकवाक्यताप्रतिपत्त्यर्थकश्चशब्द इति प्रतिफलितं भवति । अतएव हि प्रत्युतेत्यादिना पूर्वसूत्रार्थनिगमनं कृतमिति भावः ॥ ८ ॥

कस्मिन्नर्थे विरोध इति जिज्ञासायामाह । **प्रधानकारणवाद इति** । उपक्रमवाक्यमुदाहरति । **उततमादेशमिति** । तमुपदेशं पप्रच्छ येनोपदेशेन अश्रुतं श्रुतं भवतीत्यर्थः । तत एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तथाहि आत्मनि खल्वरे दृष्टे श्रुते विज्ञाते इदं सर्वं विज्ञात भवतीति । तथाच सर्वविज्ञानप्रतिज्ञाविरोधादपि न प्रधानं सच्छब्दवाच्यम् । नहि प्रधानज्ञानेन तत्कार्यतया तदभिन्नस्य महदादिकार्यवर्गस्य ज्ञातत्वसम्भवेऽपि चेतन-वर्गस्य ज्ञातत्वमुपपद्यत इत्यर्थः । ९ ॥

"स्वप्नान्तं मे सोम्य विजानीहि यत्रैतत्पुरुषः स्वपिति नामसता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति छान्दोग्ये उक्तम् । अस्यार्थः-स्वप्नान्तं सुषुप्तिं प्रतिपादयतो मम वाक्याद्विजानीहि 'यत्र यदा पुरुषः स्वपितीत्येतन्नाम भवति पुरुषस्वापो यदा पुरुषः स्वपिति शब्दः प्रयुज्यत इत्यर्थः । सता सोम्य सम्पन्नो भवति सदेव सोम्येति प्रकृतेन सता ब्रह्मणा सह सङ्गतो भवति तस्या एव सत्सम्पत्तेः सति लयरूपत्वं स्वपितिनामनिर्वचनानुगुणं विवृणोति स्वमपीतो भवतीति । अत्र स्वशब्दस्तावन्न जीवमात्रपरः सता सोम्य सम्पन्नो भवति स्वमपीतो भवतीति सच्छब्दस्वशब्दयोरेकविषयावश्यंभावात् सच्छब्दस्यचास्मिन् प्रकरणे परमात्मविषयत्वात् स्वशब्दोऽपि तत्पर एवेति । "अत्र जीवस्य परमात्मनि लयप्रतिपादनात्तेजोवन्नादिवज्जीवस्यापि तदुपादेयत्वात्तज्ज्ञानेन ज्ञातत्वमुप-पादितं भवति । प्रधानस्य कारणत्वपक्षे तन्नोपपद्येत लयबोधकश्रुतिः व्याकुप्येत तस्मात् स्वस्मिन् ब्रह्मणि

नहि तार्किकाणामिव वेदान्तशास्त्रस्य भिन्ना कारणावगतिर्यया प्रधानस्यापि क्वचित् कारणत्वं वक्तुं शक्येत ॥ ११ ॥

## श्रुतत्वाच्च । १ । १ । १२ ॥

अस्यामेवोपनिषदि सच्छब्दवाच्यपरमेश्वरस्यैव 'आत्मन एवेदं सर्व'मित्यात्मत्वेन सर्वकारणत्वस्य श्रुतत्वात् चशब्दादुपनिषदन्तरेऽपि 'स कारणं कारणाधिपाधिपः नचास्य कश्चिज्जनिता नचाधिपः' इत्यादिना, अतः सर्वज्ञः सर्वशक्तिर्दिव्यगुणनिधिः सर्वेश्वरः पुरुषोत्तम एव सर्वजगत्कारणमिति सिद्धम्। एतेन जिज्ञास्यस्य ब्रह्मणश्चैतन्य गुणयोगित्वपारमार्थिकमुख्येक्षितृत्वादिगुणयोगित्वादेः श्रुतिमुखेन प्रतिपादितत्वात् प्रधानवाद इव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण निरस्तः ॥ १२ ॥

एवं चेतनभोग्यभूतप्रधानशब्दोदितजडवर्गाज्जिज्ञास्यं ब्रह्म व्यतिरिक्तमित्युक्तमिदानीं चेतनवर्गादपि निरतिशयानन्दवत्वेन तस्य व्यावृत्तिः प्रतिपाद्यते ।

## आनन्दमयोऽभ्यासात् । १ । १ । १३॥

---

जीवात्मन आप्ययाल्लयान्न प्रधानं सच्छब्दवाच्यमित्यर्थः ॥१०॥

काणादानां समयभेदात् परस्परव्याहतिः नैवमुपनिषदां सिद्धान्ते परस्पराहतिः अपितु तेषु सर्वत्र जगत्कारणचैतन्यावगतिः समानेत्यर्थः ॥११॥

सूत्रार्थं व्याचष्टे **अस्यामिति**। आत्मनः सर्वजगत्कारणत्वं दर्शयति **आत्मन इति**। चशब्दार्थं विवृणोति **चशब्दादिति**। तस्य सर्वेश्वरत्वमाह **'सकारणमिति**। कारणानामधिपाः स्वामिनो जीवास्तेषामधिपः परमेश्वरस्तस्य सर्वहेतुत्वार्थं विशेषणम् **नचेति**। जीवान्प्रतीश्वरत्वं हिरण्यगर्भरुद्रयोरपीत्याशङ्क्य नियन्त्रन्तरं निरस्यति **नचाधिप इति**। आदिना "अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि" सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपास सत्यकामः सत्यसङ्कल्पः" इत्यासां परिग्रहः। फलितं ब्रह्मणो जगत्कारणत्वं निगमयति **अत इति**। सर्वज्ञत्वादिजगत्कारणत्वोपयोगिगुणवत्वादेवेत्यर्थः। सर्वज्ञत्वसर्वशक्तित्वे "तदैक्षत बहुस्याम्" इत्यादिवाक्येन दर्शिते अपहतपात्मेत्यादिवचनेन दिव्यगुणनिधित्वं प्रदर्शितम्। सकारणमितिश्रुत्या सर्वेश्वरत्वमभिहितमित्यर्थः। एषां सूत्राणां निर्विशेषचिन्मात्रवादिनामननुगुणत्वं दर्शयति **एतेनेति**। एतेनेत्युक्तं विवृणोति **जिज्ञास्यब्रह्मण इत्यादिना**। आदिमसूत्रेणौपनिषदं ब्रह्म जिज्ञास्यं प्रतिज्ञातं तच्च चेतनगुणयोगित्वम् 'ईक्षतेर्नाशब्दम्" इत्यादिभिः सूत्रैरभिहितम् "स ऐक्षत लोकाननुसृजा स इमाँल्लोकानसृजत, 'स ईक्षांचक्रे, इत्यादिश्रुतिभिः पारमार्थिकमुख्येक्षितृत्वं प्रतिपाद्य तद्द्वाराप्रधानस्य व्यावृत्तिरभिहितेत्यर्थः। निर्विशेषचिन्मात्रवादे ईक्षणगुणरहितस्य ब्रह्मणः प्रकृतिसमत्वमेवेत्याह **प्रधानवाद इवेति**। ब्रह्मणः सृष्ट्यादिजननसामर्थ्यवत्वेहि जगत्कारणत्वमुपपद्यते तादृशसामर्थ्यगुणयोगे निर्विशेषवादो दत्ततिलाञ्जलिः स्यादितिभावः ॥१२॥

इति ईक्षत्यधिकरणम्।

पूर्वोत्तराधिकरणयोः सङ्गतिं दर्शयति **एवमिति**। चेतनस्य प्रत्यगात्मनो भोग्यभूताः प्रधानशब्दोदिता जडवर्गाः सुखदुःखमोहात्मका भावास्तस्मादित्यर्थः। जगत्कारणं जिज्ञास्यं ब्रह्म चेतनत्वेक्षितृत्वादिधर्मैः 'श्रुतत्वाच्च' इतिपूर्वाधिकरणानुगुणसूत्रोदाहृतश्रुतिप्रतिपादितप्रधानासम्भावितधर्मैश्च प्रधानाद्भिन्नमिति प्रागभिहितं

तैत्तिरीयके अन्नमयादिचतुःपुरुषानुक्रमयाम्नायते 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मा आनन्दमयस्तेनैष पूर्ण' इति। तत्र किमयमानन्दशब्दवाच्यः प्रत्यगात्मा उत परमात्मेति संशये प्रत्यगात्मेति पूर्वपक्षः। कुतः' 'तस्यैष एव शारीर आत्मे'त्यानन्दमयस्य शरीरसम्बन्धित्वश्रवणात् तच्च प्रत्यगात्मन एव युक्तम् अन्नमयादिगौणार्थप्रवाहपतितत्वाच्च। किञ्चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ता' मिति श्रुत्यन्तरे आनन्दमयस्य शोध्यत्वश्रवणात् नित्यशुद्धस्य परमात्मनः शोध्यत्वासम्भवादिति प्राप्ते राद्धान्तः आनन्दमयः। परमात्मा कुतोऽभ्यासात् तत्रैवानन्दशब्दस्य बहुकृत्वोऽभ्यसमानत्वात्'यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति आनन्दो ब्रह्मेति व्यजानादि'त्यादिना अपिच 'सैषानन्दस्य मीमांसा भवती'त्यारभ्य आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने' त्यन्तस्य वाक्यस्य ब्रह्मानन्द एव निरतिशयापरिमितत्वप्रतिपादने च समाप्तिदर्शनात्। किञ्च श्रुत्यैव विज्ञानमयशब्दवाच्याज्जीवादन्यत्वेनोत्कृष्टत्वेनानन्तरत्वेनान्तर्यामित्वेन च प्रतिपादितत्वात्। नहि जीवस्य स्वस्मात्स्वस्योत्कृष्टत्वं स्वान्तर्यामित्वञ्च घटते। नच विज्ञानमयशब्दो बुद्धिपरः

---

सम्प्रति प्रत्यगात्मनो भिन्नं निरतिशयानन्दं ब्रह्मेति विविच्यत इत्यर्थः। संशायकं विषयवाक्यमुदाहरति। **तैत्तिरीयक इति। अन्नमयादिचतुःपुरुष इति।** शरीरमन्नविकारत्वादन्नमयः पुरुष इत्युच्यते तदन्यस्तद्विधारकः प्राणमयः पुरुषस्तदन्यस्तदुभयविधारकः मनोमयः तदन्यस्तत्त्रिकनियन्ता विज्ञानगुणो जीवात्मा विज्ञानमयः पुरुष इत्युच्यते। त्रयाणां पुरुषाणामचेतनानां ज्ञानस्वरूपो विज्ञानगुणो नियन्ता भवतीत्यर्थः। न्यायस्य पूर्वाङ्गं संशयं दर्शयति। **तत्र सन्देह इति।** तत्र = प्रागुदाहृतविषयवाक्ये। शारीरत्वानन्दप्राचुर्याभ्यां संशय इति भावः। सद्वियायां जीवेनात्मनेति सामानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजं बोध्यम्। प्रत्यगात्मपरिग्रहे हेतुर्नास्तीत्याह **कुत इति।** आनन्दमयपदवाच्यः प्रत्यगात्मा इत्यत्र हेतुमाह। **तस्यैष इति।** तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः। तच्च=शरीरसम्बन्धित्वश्रवणम्। उक्तार्थसाधकहेत्वन्तरमाह। **किञ्चेति।** पूर्वपक्षमनूद्य सिद्धान्तयति **इतिप्राप्त इतीति।** पक्षांशो साध्यनिर्देशः प्रतिज्ञेति सर्वेषां निर्विवादोऽतः साध्यवचकपदेन पूरयन्सूत्रार्थं विवृणोति। **आनन्दमय इति।** हेत्वोत्थापकाकाङ्क्षोत्थापकं पदं दर्शयति। **कुत इति।** तादृशाकाङ्क्षानिवर्त्तकं हेतुवाक्यमाह। **अभ्यासादिति।** अभ्यासो नामावृत्तिः। साचावृत्तिः पदस्यैव भवति तथाचानन्दशब्दावृत्तिरूपहेतोः पक्षे परमात्मन्यसत्वात्स्वरूपासिद्धत्वमाशङ्क्य कस्याभ्यास इत्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे। **तत्रैवेति।** परमात्मनीत्यर्थः। तत्रेत्युक्त्या पक्षे हेतोस्सत्वं सूचितम्, एवकारेण प्रत्यगात्मनो व्युदासः। आनन्दशब्देनाभ्यसमान आनन्दः परमात्मा तत्राभ्यसमानत्वस्य हेतोस्सत्वान्न स्वरूपासिद्धत्वम्। **अभ्यसमान इति।** अभ्यासशब्दः कर्मार्थघञन्त इति भावः। यद्वा भावार्थत्वेप्यानन्दस्याऽभ्यस्तत्वं फलितमिति तथोक्तमिति। तदभ्यासं विषयवाक्येनोदाहरति। **यदेष इति।** आसमन्तात्काशनाद्दीप्तत्वादाकाशनामा एषः भगवान् वासुदेवः यदि पूर्णानन्दो न स्यात् तदा प्रवृत्तौ कारणतया रोदनभोजनकण्टकोद्धरणादौ प्रसिद्धानां दुःखोद्रेकसुखरागदुःखद्वेषरूपाणामभावादयौ न कश्चित्प्रवर्त्तयेत्। नचेदेष प्रवर्त्तयेत् तदा कः पुमान् प्राण्यादन्याच न कोऽपि वैदिकीं लौकिकीं प्रवृत्तिं कुर्यात्। स्वातन्त्र्याभावात्। प्राणतिचानतिच सर्वो लोकोऽतस्तत्प्रवर्त्तको एष भगवान् केवलमुन्मत्तवदानन्दोद्रेकादेवेति वक्तव्यम्। कार्यानुगुणत्वाच कारणस्य महाप्रवृत्त्या महानन्दः सिद्ध्यतीत्यर्थः। आमुक्तानां ब्रह्मादिखिललोकानामानन्दकारणत्वाचायं भगवान् पूर्णानन्द इत्याह। एष-

मयटो वैयर्थ्यापत्तेः। न च प्राणमय इव स्वार्थे मयडिति वाच्यम्। प्राणमये ह्यगत्या तथाङ्गीकारः अत्र तु तद्वतो जीवस्य सत्त्वात्। 'विज्ञानं यज्ञं तनुते' इत्युत्तरश्लोकस्य विज्ञानशब्देऽपि 'कृत्यल्युटो बहुलमिति सूत्रात् नन्द्यादित्वाद्वा कर्तरि ल्युट्। यच्चूक्तं शारीरत्वश्रवणान्न परमात्मेति। नैष दोषस्तस्य सर्वेष्वन्नमयादिषु तन्नियन्तृत्वेन वर्तमानत्वात् आनन्दमयेतु 'तस्यैष एव शारीर आत्मा यः सर्वस्य' इति निर्देशस्तस्यानन्यात्मत्वं दर्शयति। आत्मान्तरानिर्देशात्। नाप्यन्नमयादिगौणार्थमत्राइपतितत्वात्तस्यापि गौणत्वं निर्णेतुं शक्यं तस्य सर्वान्तरत्वेन सर्वपरत्वेन च प्रतिपादितत्वात् शुद्धयन्तामित्यस्य च प्रसाध्यतामित्यर्थः। अत आनन्दमयशब्दनिर्दिष्ट आकाशादिजगत्कारणभूत आत्मा ब्रह्मैवेति सिद्धम्॥ १३॥

ह्यवेति। अखिलमित शेषः। हि यस्मादेष एव भगवानखिलं ब्रह्माद्यमुक्तजातम्, आनन्दयाति आनन्दयति। दीर्घस्तु छान्दसत्वात्। अतोऽयं भगवान् श्रीवासुदेव आनन्दपूर्ण इत्यर्थः। स्वस्यैव तदभावे परस्मै तद्दानानुपपत्तेरितिभावः। आनन्दस्य मीमांसा=आनन्दविषयकविचारः क्रियत इत्यर्थः। वृद्धावस्थायां च चरमजन्मनि वित्तेन पूर्णेयं पृथिवी यस्याधीना स्यात्। अतिशयेन सर्वभोगैस्सम्पन्नो निर्दोषः युवा अध्यापकः। अधितिफलसम्पूर्णः निर्विकारो बलिष्ठः तस्य मुक्तस्य पूर्वं चक्रवर्तित्वावस्थायां यावानानन्दोऽभूत् अभिव्यक्तस्तावानेवानन्दो मानुषानन्द इत्युच्यते। उत्तरशतगुणानन्दादिगणनया सम्यक् बुद्ध्यारोहायाह स एको मानुषानन्दः। सः क्षितिपानां यावानानन्दोऽस्ति मनुष्योत्तमानन्दाच्छतगुणस्तावान् सर्वोपि मिलित्वा एकः एकत्वेन विवक्षितः ते ये शतं मानुषानन्दाः मनुष्योत्तमानन्दापेक्षया शतगुणाः क्षितिपानन्दाः सन्ति तेषां सर्वेषामप्यानन्दानामैकत्वं विवक्षित्वा एतादृशा ये क्षितिपानां शतसङ्ख्यकानन्दास्तत्समानः मनुष्यगन्धर्वाणामानन्दः क्षितिपानन्दाच्छतगुणो मानुषगन्धर्वाणामानन्दा इति यावत् ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः एवं क्रमेण पितृकर्मदेवेन्द्रबृहस्पतिप्रजापतीनामुत्तरोत्तरशतगुणितानन्दाः ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इत्यभिसन्धिः। यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति पूर्वभागः आनन्दं, ब्रह्मण इति श्लोकस्य। तस्यायमर्थः वाङ्मनसे आनन्दस्येयत्तालक्षणं पारं गन्तुं प्रवृत्ते तदप्राप्यैव निवृत्ते भवतः। तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशस्यात्यन्तिकनिवृत्तिर्भवतीति। तथाचानन्दमय इति वाक्यं निरतिशयानन्दस्य प्रत्यगात्मन्यसत्वात् ब्रह्मानन्द एव समाप्यते तथात्वे चानन्दशब्दः परमात्मविषय इत्युक्तं भवति तदेवाह इत्यन्तस्य वाक्यस्येति। न च मुक्तस्य स्वतो निरतिशयानन्दत्वम्। अथ सोऽभयं गतो भवति, एषह्येवानन्दयाति, रसह्येवायं लब्ध्वाऽऽनन्दी भवतीति परमात्माधीनत्वश्रुतेः। नह्येवं ब्रह्मानन्दस्यान्याधीनत्वं श्रूयते। श्रोत्रियस्य चाकामहतस्येति मुक्तः पृथङ्नि र्दिश्यते॥ श्रोत्रियः=श्रुतवेदान्तः। अकामहतः=उपसनानिवृत्तसमस्तक्लेशः। मुक्तस्य जगद्व्यापाराभावाच्च परस्यैव भगवतः श्रीवासुदेवस्य स्वतो निरतिशयानन्द इति भावः। ब्रह्मण आनन्दो मुक्तजीवापेक्षया विजातीयोऽवगम्यते इति श्रुतिमुखेनाह। किञ्चेति। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयेति श्रुतेरर्थं व्याचष्टे विज्ञानमयशब्दवाच्यादिति। निरतिशयानन्दस्य जीवात्मनि न योग्यता घटत इत्ययोग्यतापादकस्तर्को ह्यानन्दमयशब्दवाच्यः परमात्मेति व्यवस्थापक उक्तः॥ उक्तश्रुतौ विज्ञानमयशब्दस्य बुद्धिमात्रपरत्वमाशङ्क्य परिहरति नचेति। तत्र हेतुमाह। मयट इति। प्रकरणवशात्स्वार्थकत्वमाशङ्क्य व्युदस्यति। नचेति। अगत्येति। विकारप्राचुर्यार्थान्तराभावादित्यर्थः। पक्षे तद्वैषम्यं दर्शयति। अत्रत्विति। तद्वत इति। प्राचुर्यार्थत्वं सम्भवतीत्यर्थः। विज्ञानमयशब्दस्य 'विज्ञानं यज्ञं तनुत' इतिश्रुत्युक्तविज्ञानशब्दतुल्यार्थत्वात् मयट् स्वार्थिक इत्याशङ्क्य समाधत्ते विज्ञानमिति। शब्दमर्यादया द्विधा निर्वाह उक्तः, प्रथमे कर्तृपरत्वं कल्पनीयम् द्वितीये गणान्तर्भावः कल्पनीय इत्युभयआश्रयणाशब्दप्रयोगः यज्ञादिकर्तृत्वं बोद्धुर्जीवात्मन एवोपपद्यते नत्वचेतनाया बुद्धे रित्यपि प्रायः। प्रागुक्तार्थमनूद्य समाधत्ते

## विकारशब्दान्नेतिचेन्न प्राचुर्य्यात् । १ । १ । १४ ॥

ननु नायमानन्दमयः परमात्मा विकारशब्दात् विकारार्थकमयटः श्रवणात् । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो'रिति प्रकृत्य 'नित्यं वृद्धशरादिभ्य' इति विकारार्थे मयट् स्मर्यते । अन्नमय इत्युपक्रमे तस्यैव दर्शनात्, इतिचेत्तत्राह नेति । कुतः ? प्राचुर्यात् । प्रचुरतायामपि 'तत्प्रकृतवचने मयडिति' मयट्स्मरणात् । आनन्दप्रचुरत्वञ्च मनुष्यानन्दमारभ्योत्तरोत्तरशतगुणितानन्दमुक्त्वा ब्रह्मानन्दस्य निरतिशयापरिमितत्वाभिधानात् किञ्च मयड्वैतयोरिति पूर्वसूत्रान्नित्यं वृद्धशरादिभ्य इत्यत्र भाषायामित्यनुवृत्तेर्विकारावयवयोर्मयटो भाषाविषयत्वेन प्रकृते छन्दसि विकारार्थे मयट् न सम्भवति । पर्णमयी जुहुरित्यादौतु 'द्व्यचश्छन्दसीति विधानबलादुपपद्यते प्रकृतेत्वानन्दशब्दस्य द्व्यच्त्वाभावात् जीवेऽपि 'न जायते म्रियते वा विपश्चिदिति विकारप्रतिषेधः किमुत परमात्मनि विकारशङ्का । नच प्रचुरानन्दवत्त्वेऽप्यल्पदुःखवत्त्वमवर्जनीयमितिवाच्यम्, प्रकाशमयः सूर्य इति सूर्य्यस्य प्रकाशप्रचुरत्वे कथिते तद्विरोधितमोऽल्पत्वस्य तत्राप्रतीतेः । नहि तत्र स्वगततमोऽल्पत्वापेक्षं प्रकाशप्रचुरत्वं किन्तु व्यधिकरणचन्द्रादिगतप्रकाशाल्पत्वसापेक्षम्, एवं व्यधिकरणजीव-

---

यत्नकमिति । तस्य = परमात्मनः । तन्नियन्तृत्वेन=अन्नमयादिनियन्तृत्वेन । आनन्दमयस्य परमात्मत्वमयुक्तं तस्यात्मान्तरश्रवणादित्यत्राह **आनन्दमये त्विति** । विज्ञानमयस्य यः शारीर आत्मा सएवानन्दमयस्यापि शारीरआत्मेत्युक्तेः तदभ्यासमहिम्नाऽवगतात्मभावस्य परमात्मनः स्वयमेवात्मेति 'एष एवं' इति निर्देशस्तस्यानन्यात्मत्वं निर्वक्तीत्यर्थः । तस्यानन्यात्मत्वे हेतुं निर्दिशति । **आत्मान्तरानिर्देशादिति** । पूर्वपक्षस्य बीजमनुभाष्य व्युदस्यति । **नापीति** । तस्येति= आनन्दमयस्येत्यर्थः । **सर्वान्तरत्वेनेति** । आनन्दमयादान्तरस्यान्यस्य श्रवणात्तस्यस्वन्नमयादिस्वान्तरत्वश्रुतेर्नानन्दमयस्य गौणत्वं किन्तु मुख्यत्वमेव यथाऽरुन्धतिनिदर्शने तत्समीपस्थासु बहुतारास्वमुख्यास्वरुन्धतिदर्शितासु यान्ते प्रदर्श्यते सा मुख्यैवारुन्धतिभवतीति भावः । सूत्रार्थं निगमयति । **अत इति** । १३ ॥

सूत्रस्य पूर्वभागं पूर्वपक्षात्मकं व्याचष्टे । **नन्विति** । मयटो विकारवाचित्वमुपपादयति । **मयड्वैतयोरिति** । विकारार्थत्वस्य ज्ञापनार्थं मयड्वैतयोरित्युक्तम् । एतयोः "तस्य विकारः । अवयवे च प्राण्योषधिवृक्षेभ्यः इति प्रकृतयोर्विकारावयवयोरिति तस्यार्थः । अत्रायं विवेकः । "प्राग्दीव्यतोऽण्" इत्यधिकारसूत्रम् । अस्मिन्नर्थद्वयेऽपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव नाण्प्रत्यय इत्यपवदति "नित्यं वृद्धशरादिभ्यः" इति सूत्रम् "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इत्यादिसूत्रेणानन्दशब्दस्य वृद्धसंज्ञकत्वाद्विकारार्थे मयट्प्रत्ययो विहितः । परिहरति । **नेति** । **तत्प्रकृतवचनेति** । प्रथमासमर्थाच्छब्दात्प्राचुर्य्यविशिष्टस्य प्रस्तुतस्य वचनेऽभिधाने मयट्प्रत्ययो भवतीति सूत्रार्थः । यथा अन्नमयो यज्ञ इति । अत्रान्नं प्रचुरमस्मिन्नित्यन्नशब्दः प्रथमाविभक्तियुक्तस्तस्मान्मयट्प्रत्ययः । तथा प्रकृतेऽपीति । प्रकृते विकारार्थे मयट् न सम्भवतीति द्रढयितुमाह । **किञ्चेति** । जीवस्यानन्दविकारत्वं निरसितुमाह । **नजायते इति** । कैमुत्यन्यायेन परमात्मन्यानन्दविकारत्वं निरस्यति । **किमुत इति** । आनन्दप्राचुर्य्यं प्रतियोगिसापेक्षं तस्य निरूपकं तदधिकरणवृत्तिदुःखाल्पत्वमेव नतु व्यधिकरणगतानन्दाल्पत्वमित्याशङ्क्य परिहरति । **'नचेति'** । "अपहतपाप्मा" इत्यादिप्रमाणबलेन न ब्रह्मणि दुःखगन्धस्याणुमात्रस्यापि सम्भावनापि येन स्ववृत्त्यानन्दप्राचुर्य्यं तत्समानाश्रयं दुःखाल्पत्वरूपप्रतियोगिनमपेक्षेत । अपितु प्रमाणान्तरसिद्धं प्रमाणान्तराविरुद्धं प्रतियोगिनमेव तच्च जीवगतानन्दाल्पत्वमेवेत्यभिप्रायेण दृष्टान्तप्रदर्शनपुरस्सरं समाधत्ते । **प्रकाशमयः सूर्य इति** । निगमयति । **तस्मादिति** । ब्रह्मणि श्रीवासुदेवे आनन्दप्राचुर्य्यादित्यर्थः । ग्रन्थल-

गतानन्दाल्पत्वापेक्षमेव ब्रह्मण्यानन्दप्रचुरत्वम्, तस्मात्प्राचुर्य्यार्थे मयट्। तत्र हेतुः ॥ १४ ॥

## तद्धेतुव्यपदेशाच्च ॥ १ । १ । १५ ॥

यतस्तस्य जीवानन्दस्य हेतुरयमेवेति व्यपदिशति श्रुतिः । 'एषह्येवानन्दयाती'ति दीर्घश्छान्दसः योह्यन्यानानन्दयति स प्रचुरानन्दो यथा लोके योऽन्येभ्यो विद्यां प्रयच्छति स प्रचुरविद्य इति तस्मादानन्दयितव्यानां जीवानामानन्दयताऽऽनन्दशब्दवाच्यः परमात्मैव ॥ १५ ॥

## मन्त्रवर्णिकमेव च गीयते । १ । १ । १६ ॥

मन्त्रवर्णेनोक्तं यन्मान्त्रवर्णिकं ब्रह्मैवानन्दमय इति गीयते तथाहि 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणेन यद्ब्रह्मजीवप्राप्यतयोपक्रान्तम् 'सत्यं ज्ञानमनन्तं ब्रह्मेति' मन्त्रेण च सत्यत्वादिविशिष्टं यन्निश्चितं मध्ये च 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिभि र्यद्विशदीकृतं तदेव ब्रह्मेहान्यो'ऽन्तरात्मा आनन्दमयः' इत्युच्यते मन्त्रवर्णयोश्चैकविषयत्वादत आनन्दमयः परमात्मैव ॥ १६ ॥

अत्र केचिदाहुः नहि परमेश्वरादन्यः कश्चित्प्रत्यगात्मा 'नान्योऽतोऽस्ति द्रष्टे' त्यादि-श्रुतेरुपहितेश्वरस्यैव जीवस्य सतो मुक्तावस्थं निर्विशेषचिन्मात्रैकरसं परिशुद्धस्वरूपं मान्त्रवर्णिकं प्राप्यप्राप्तृत्वव्यपदेशस्तु घटाकाशादिवदुपाधिकृतभेदाङ्गीकारेणातस्तदनतिरिक्त आनन्दमय इति प्राप्ते आह ।

## नेतरोनुपपत्तेः । १ । १ १७ ॥

ब्रह्मण इतरो भिन्नो जीवात्मा मुक्तावस्थोऽपि मान्त्रवर्णिको न भवति कुतः, अनुपपत्तेः

---

घवायात्रैवोत्तरसूत्रमवतारयति । **तत्र हेतुरिति** । तत्र=परमात्मन आनन्दप्राचुर्य्ये । १४ ॥

सूत्राक्षराणि व्याचष्टे । **यत इति** । यतः=परमात्मन्यानन्दप्राचुर्यात् । प्रत्यगात्मस्वन्यानन्दहेतुः भगवान्वासुदेव इति श्रुतिः व्यपदिशति । अतः परमात्माऽऽनंदमयो नतु जीवात्मेत्यर्थः । अस्य सूत्रस्य विषयवाक्यमाह । **एष इति** । कोह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यादित्यपि प्रागुक्तं बोध्यम् । अन्यात् प्राण्यादिति भोगापवर्गसुखहेतुत्वमुक्तम् श्रुत्यर्थस्तु आनन्दमयोऽभ्यासादित्यत्र प्रदर्शितः । फलितहेतुमाह । **तस्मादिति** । कर्मकर्त्रैक्यं न सम्भवतीति हेतुरिति भावः । १५ ॥

सूत्रार्थं विवृणोति । **मन्त्रवर्णेनेति** । शब्द एवार्थः नतु तद्विरुद्ध इति बोधयितुं वर्णशब्दोपात्त । ब्राह्मणवाक्येन यद्विहितं तदेव मन्त्रेण निश्चितं तदेव मन्त्रब्राह्मणयोर्घट्टवाक्यैर्विशदीकृतं तदेव परं ब्रह्म जीवस्वरूपाद्विलक्षणमानन्दमयशब्दवाच्यमिति तथाहीत्यादिना दर्शयति । **तथाहीति** । ब्राह्मणवाक्यमुदाहरति ब्रह्मविदाप्नोतीति । जीवप्राप्यतयेत्युक्त्या प्रत्यगात्मन उपासकत्वेन ब्रह्मणश्च प्राप्यत्वेन बोधनात्तयोरन्यत्वं सूचितम् । पूर्वस्मिन्नस्मिन्सूत्रे चशब्दो हेतुसमुच्चये । १६ ॥

उत्तरसूत्रमवतारयितुं शङ्कते । **अत्र केचिदिति** । ईश्वरात् प्रत्यगात्मनोऽनन्यत्वे मानमाह । **'नान्यत' इति** । अत ईश्वराद् द्रष्टा जीवोऽन्यो नास्तीत्यर्थः । **उपहितइत** अविद्ययेत्यर्थः । परमार्थतोऽभेदेऽप्य विद्यारोपितं भेदमुपाश्रित्य प्राप्यप्रापकभाव उपपन्न इत्याह । **जीवस्येति** । इतरशब्दस्य साकाङ्क्षत्वात् तत्ब्रह्मण इत्युक्तम् ।

विद्वत्त्वाप्यत्वनिरुपाधिकविपश्चित्त्वजगत्कारणत्वाद्यसाधारणगुणानां परमात्मेतरस्मिन्नुपपत्तेः ॥ १७ ॥

## भेदव्यपदेशाच्च । १ । १ । १८ ॥

'विज्ञानमयादन्योन्तरात्मा' 'रसो वै स' 'रसं ह्येवायं लब्ध्वा आनन्दी भवति । आनन्दं ब्रह्मणो विद्वान्' 'अस्ति ब्रह्मेति चेद्वेदे'त्यादिभिः स्वाभाविकजीवेश्वरभेदस्य व्यपदेशाच्च न मान्त्रवर्णिको विज्ञानात्मा' नान्योतोऽस्तीति वाक्यस्य तु प्रत्यगात्मस्वातन्त्र्यद्रष्टृत्वश्रोतृत्वादिनिषेधपरत्वात् नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादि' त्यादिस्वाभाविकद्रष्टृत्वादिप्रतिपादकाभ्याससहकृतशास्त्रव्याकोपात् । यत्तूक्तं घटाकाशवदुपहित ईश्वर एव जीव इति । तन्न । निष्क्रियत्वे गत्याद्यनुपपत्तेः सक्रियत्वेचेश्वराभिन्नत्वेन विभुत्वात् सुतरां गत्याद्यनुपपत्तेः ।

---

मुक्तात्मनि वक्ष्यमाणहेतोर्यदि सम्भाव्येत तन्निरासाय मुक्तात्मनोऽपि पक्षकोटावन्तर्भावयति । **मुक्तावस्थोऽपीति** । साध्यसमर्पकं वाक्यं पूर्वसूत्रादनुकृष्याह । **मान्त्रवर्णिक इति** । केषामनुपपत्तिरितिजिज्ञासायामनुपपत्तिशब्दार्थं विवृणोति । **निरुपाधिकविपश्चितत्वमिति** । अनादिकर्मात्मिकाविद्यातत्कार्यसंसर्गशून्यत्वम् । विविधसाक्षात्काराश्रयत्वे सति चेतनत्वं विपश्चितत्वमित्यर्थः । मुक्तात्मनोऽपि निरुपाधिकं विपश्चितत्वं न घटते संसारदशायां तदभावस्य सत्वात् । नहि परमेश्वरादन्यः कश्चित्प्रत्यगात्मेति यदुक्तं तन्न । यतः यथा परमेश्वराद्भिन्नो जीवात्मा द्रष्टा न भवत्येवं जीवात्मनो द्रष्टुर्नभिन्नः परमेश्वर इति जीवस्यानिर्वाच्यत्वे परमेश्वरोप्यनिर्वाच्यः स्यात् ईश्वरस्यापि मिथ्यात्वं प्रसज्येत जीवेश्वरयोर्भेदस्य सत्यत्वेऽद्वैतव्याघातापत्तेः । औपाधिकभेदाङ्गीकारे उपाधिगमनकाले तदवच्छिन्नस्य कौटस्थ्यात् गत्यभावेन पदेपदे बन्धमोक्षौ स्याताम् अनादिबद्धस्य साधनं विनैव मोक्षः कूटस्थनित्यशुद्धबुद्धस्वभावस्याकस्मात् बन्धः प्रसज्येत कृतनाशाकृताभ्यागमप्रसंगाच्च । नाप्यज्ञानाश्रयत्वं ब्रह्मणो वक्तुं शक्यते, एकत्र ज्ञानभावरूपाज्ञानयोस्तमःप्रकाशयोरिव विरुद्धस्वभावत्वादाश्रयाश्रयिभावानुपपत्तेः नहि प्रचण्डमार्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुन्मत्तेन वक्तुं शक्यमित्यन्यत्र विस्तरः ॥ १७ ॥

'एतस्माद्विज्ञानमयादन्योऽन्तरात्मा' इति । अनादिकर्मात्मिकमायावृतं प्रत्यगात्मानं परामृश्य 'अन्योन्तर आत्मा' इति बद्धावस्थायामन्तरात्मत्वेनानन्दमयस्य स्वाभाविकभेदकीर्तनादित्यर्थः । 'स भगवान् रसः' रसस्वरूपः पूर्णानन्दघनः हि यस्माद्रसं पूर्णानन्दमेनं वासुदेवं लब्ध्वैव प्राप्यैवायं मुक्तात्मा आनन्दी भवति स्वयोग्यानन्दपूर्णो भवति अन्यथा तन्न स्यात् । नहि दुःखिनं प्राप्तस्यानन्दो दृश्यते तथाचायं वासुदेवः पूर्णानन्दो न स्यात् यदि तर्हि तं प्राप्तो मुक्तोऽपि पूर्णानन्दो नस्यात् लोके दुःखिनं प्राप्तस्यानन्दादर्शनात् । भवति च मुक्तः पूर्णानन्दः । अत्र लब्धत्वेन लब्धृत्वेन जीवेशयोः निरुपाधिकभेदस्य व्यपदेशात् न मान्त्रवर्णिको विज्ञानात्मेत्यर्थः । नहि श्रुतिबोधितभेदस्य कल्पितत्वमापादयितुं शक्यं तथासति श्रुतेरप्रामाण्यं प्रसज्येत नच भेदप्रतिपादकवाक्यानां भेदानुवादपरत्वेन दौर्बल्यम्, अभेदवाक्यानां प्राबल्यम् । उभयविधवाक्यानां तुल्यबलत्वात् न तावत् प्रत्यक्षेण प्रमाणेन जीवेश्वरयोर्भेदः प्रतिपत्तुं शक्यते 'नेन्द्रियाणि नानुमानमिति श्रुतेः । नेदप्रत्यक्षेऽनुयोगिनो योगजत्वमावश्यकमिति न्यायविदां पन्थाः एवं भेदस्य प्रत्यक्षगोचरत्वासिद्ध्या तद्बोधकवेदान्तानामनुवादानर्हतया स्वार्थे एव सुप्रमाणत्वात् । किञ्च यदि जीवब्रह्मणोः स्वरूपेण भेदो नाङ्गीक्रियते तदा गुणसाङ्कर्यापत्तिर्दुर्वारा स्यात् । नच स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति तद्दोषप्रसक्तिः समानेति वाच्यम् । स्वरूपतो जीवेशयोरैक्यानभ्युगमात ब्रह्मणश्चेतनाचेतनयोश्च परस्परात्यन्तविलक्षणत्वात् स्वरूपेण तयोर्भेदं प्रतिपादयामः । अस्थूलमनण्वित्यादिश्रुतेः तत्र चेतनस्याणुत्वेन निर्देशार्हत्वम्, अचेतनस्य स्थूलत्वेन ब्रह्मणस्तयोर्वैलक्षण्येनेति विवेकः । एवमेव तस्य तयोश्च सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्वसर्वाधारत्वादियोगेन ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्वपराधेयत्वादियोगेनचाभेद इति' एष

नच स्वरूपतो निष्क्रियत्वेऽपि उपाधेः परिच्छिन्नत्वात्तत्क्रियाश्रयतनेऽध्यस्य घटगतीस्तदव-च्छिन्नाकाशेऽध्यस्य घटाकाशश्चलतीतिवत् देवत्तश्चलतीति व्यावहारिकगत्याद्युपपत्तिरिति वाच्यम् । तथात्वे क्षणे क्षणे बन्धमोक्षापत्तिरित्यादिदोषाणां पूर्वमेवोक्तत्वात् । १८ ॥

## कामाच्च नानुमानापेक्षा । १ । १ । १९ ॥

जीवस्य जगत्कारणत्वेऽविद्यापरवशतयाऽनुमानस्य प्रधानस्य कारणादिरूप-स्यापेक्षास्ति आनन्दमयस्य तु न, कुतः कामात्सङ्कल्पादेव 'सोऽकामयत बहुस्यां प्रजायेय' इत्यादिना सृष्टिकर्तृत्वश्रवणाज्जीवादन्यः परमात्मैवानन्दमयः । १९ ॥

## अस्मिन्नस्य च तद्योगं शास्ति । १ । १ । २० ॥

यतोऽस्मिन्नानन्दमये मान्त्रवर्णिके परमात्मनि अस्य जीवस्य ज्ञानिनस्तद्योगं तेन परमात्मना सम्बन्धं तद्भावापत्तिलक्षणां मुक्तिं शास्ति शास्त्रम्, 'यदा ह्येवैष एतस्मिन्नदृ-श्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती'ति श्रुत्यर्थस्तु यदा यस्मिन् भगवन्निर्हेतुककृपाकटाक्षसमये एषोऽनन्यशरणो विद्वान् एतस्मिन् भगवति अभयं यथास्यात्तथा प्रतिष्ठामव्यभिचरितनिष्ठां तत्कृपयैव विन्दते लभते अथानन्तरमेवाभयं गतो भवति भयकारणान्यनिष्ठाभावात् किम्भूते दृश्यो जडवर्गस्तद्विलक्षणे । आत्मनां समूह आत्म्यं तद्भिन्ने

---

सर्वभूतान्तरात्मा अन्तःप्रविष्टः शास्ता जनानाम् । यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपिवा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः आत्मा हि परमः स्वतन्त्रोऽधिगुणः तस्मिंल्लोकाः श्रिताः सर्वे इत्यादिश्रुतिभ्यः ॥ यद्यदात्मकं यन्नियम्यं यद्व्याप्यं यत्स्वतन्त्रसत्ताकं यदाधेयञ्च तत्तदभिन्ननिर्देशार्हं पृथिवीघटादिवत् । अग्निधूमवत् । प्राणेन्द्रियवत् भूतभौतिकवच्च । किञ्च यथा घटो द्रव्यं पृथिवी द्रव्यमित्यत्र द्रव्यत्वावच्छिन्नस्य घटत्वावच्छिन्नपृथिवीत्वावच्छिन्नयोश्च सामानाधिकरण्यमुख्यं विशेषस्य सामान्याभिन्नत्वनियमात् । तथैव सार्वज्ञाद्यनन्तगुणावच्छिन्नस्यापरिच्छिन्नशक्तिवैभवस्य ब्रह्मणः स्वात्मकचेतनाचेतनवस्त्ववच्छिन्नतदन्तरात्माभिन्नत्वमपि सुव्यक्तम् । एतदर्थकानि तत्वमस्यादिवाक्यानीति निपुणतरं व्युत्पादितं पूज्यपादैः श्रीदेवाचार्य्यैः श्रीजान्हव्याम् । प्रकृतमनुसरामः । जीवस्य स्वातन्त्र्येण द्रष्टृत्वनिषेध-परत्वेन नान्यतो द्रष्टा" इति श्रुत्यर्थं विवृणोति नान्यत इति । उक्तार्थस्य सामञ्जस्यं श्रुत्यन्तरेण दर्शयति । नह्येति । प्रागुक्तमनूद्य निरस्यति । यत्तूक्तमिति । प्रत्यगात्मनां निष्क्रियत्वं सक्रियत्वञ्चेति विकल्पाद्ये दोषमाह । निष्क्रियत्वइति । परिच्छिन्नत्वेन द्वितीयपक्षमपि निरस्यति सक्रियत्व इति । तत्रौपाधिकक्रियावत्वमारोप्य व्यावहारिकगत्याद्युपपत्तिमाह । स्वरूपत इति । तदवच्छिन्नेति । घटावच्छिन्नाकाशे घटगतीरध्यस्येति योजना । परिहरति । तथात्वेति । बुद्ध्यु-पाधिमादाय तत्र गत्युपपादन इत्यर्थः । उपाधिसंयुक्तो ब्रह्मप्रदेशः जीवः उपाधौ चलति सति ब्रह्मणः पूर्वप्रदेश उपाधिना निर्मुक्तः स्वयमेवाकस्मान्मुच्येत नित्यमुक्तप्रदेशोऽकस्माद्बध्येत इत्याह । क्षण इति । १८ ॥

यथालोके कुलालप्रभृतयः मृच्चक्रादिसामग्रीमन्तरा न घटपटादिकार्यं कर्त्तुं समर्थास्तथैव विधिशिवेन्द्र-वरुणप्रभृतयः प्रत्यगात्मानोऽपि प्रधानसंसर्गमन्तरा न कार्यं निर्मातुं शक्ताः, श्रीपुरुषोत्तमस्तु प्रकृतिसंसर्गरहितः स्वसङ्कल्पमात्रादेवेदं विचित्रसंस्थानात्मकं निखिलविश्वमसृजत अतोऽपि शारीराद् भिन्नः परमात्मैवानन्दशब्द-वाच्य इत्यर्थः ॥ १९ ॥

कस्मिन् कस्य योगं किं शास्तीति जिज्ञासायां सूत्राक्षराणि व्याचष्टे । यत इति । शासनादित्यर्थः । परमा-त्मैवानन्दमय इति पूर्वसूत्रोक्तेन समं शासनार्थकयत इत्यस्यान्वयो द्रष्टव्यः । अनेन सूत्रार्थस्य हेतुत्वमुक्तं भवतीति

क्षराक्षरविजातीये । 'अनिरुक्ते' इयत्तावच्छिन्नविषयकशब्दानुदिते 'अनिलयने' ऽनाधारे ऽनन्ताचिन्त्यशक्तिप्रतीत्यर्थः । यदा चाज्ञानकाले एष विद्वान् उदरमीषदपि साधनसम्बन्ध प्रयोजनैकृतममन्तरमन्यनिष्ठां कुरुते ऽथ तस्य भयं भवतीत्यर्थः । यद्वा तद्योगमानन्दयोगं शास्ति भगवतो श्रुतिः । 'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति' जीवस्य यल्ला-भादानन्दयोगः स तस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्मैवेति सिद्धम् ।

अत्रपूर्वपक्षः

अत्र केचित्तु नानन्दमयस्य ब्रह्मत्वम् । 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य विज्ञानमयान्ते विकारार्थे मयट् प्रवाहे सत्यानन्दमय एवाकस्मादर्द्धजरतीन्यायेन कथमिव मयटः प्राचुर्य्यार्थत्वं ब्रह्मविषयत्वञ्चाश्रीयत इति मान्त्रवर्णिकब्रह्माधिकारादिति चेदन्न-मयादीनामपि ब्रह्मत्वप्रसङ्गः । यद्यप्यन्नमयादिषु तस्मात्तस्मादान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वाद्युक्तं तेषामब्रह्मत्वमानन्दमयात्तु न कश्चिदन्योऽन्तरात्मेति श्रूयते तथापि तस्य प्रियशिरस्त्वाद्यवयवयोगविधानादानन्दमयशब्दार्थो विकृत एव, अपिचानन्दमयस्य ब्रह्मत्वे तदेव ब्रह्मानन्दमय आत्माऽवयवी तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्या-दन्यतरपरिग्रहेतु युक्तो ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मशब्दानिर्देश आश्रयितु' ब्रह्म शब्दसंयो-गान्नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति ।

किञ्च ब्रह्मपुच्छं प्रतिष्ठा।' इत्यनन्तरमुक्तम् । असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते । 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति । नचानन्दमयस्यात्मनो भावाभावशङ्का युक्ता प्रियमोदादिविशेष-

---

स्फोरितम् । किन्तत् शास्त्रमित्यपेक्षायामाह । यदाह्येवैष । इति एतच्छ्रुतिवाक्यस्यार्थं विवृणोति " श्रुत्यर्थस्त्विति । अस्य सूत्रस्य प्रकारान्तरेणार्थमाह । यद्वेति । हेतुत्वमुपपादयति । यल्लाभादिति । भगवत्पादश्रीशङ्कराचार्यैः स्वभाष्ये वृत्तिकारमतं दूषितमिदं त्विह वक्तव्यम् इत्यादिना तस्य समाधानाय तं पूर्वपक्षं मत्वा अनूद्यति । अत्रकेचि-त्वित्यादिना । पर्य्यायचतुष्टये मयटो विकारार्थत्वात् पञ्चमप्रकारे तादर्थ्यमिति प्रकरणं दर्शयति । सर्वेति । "मयड्वा' इति सूत्रान्मयट्शब्दो विकारे श्रुत इति वक्तुं विकारे मयडित्युक्तम् । विकारप्रकरणं प्रकटयितुं प्रवाह-पदम् । प्रियाद्यवयवत्वस्य विकारार्थे लिङ्गत्वात्प्राचुर्य्यार्थेच हेत्वभावान्मयटो न तदर्थतेत्याह । आनन्देति । एकस्यैव मयटोऽर्थद्वयं नेत्यत्र दृष्टान्तमाह । अर्धेति । श्रुतिलिङ्गप्रकरणविरोधेन प्राचुर्य्यार्थत्वे मयटो दृष्टान्तोऽपि नास्ती-त्याह । कथमिति । विकारार्थत्वे च निश्चिते तद्वाक्यस्य न ब्रह्मार्थतेत्याह । ब्रह्मेति । कथंशब्दस्य प्रश्नार्थतामुपेत्य प्रकरणेन शङ्कते । मन्त्रेति । प्रकरणं न नियामकमतिप्रसक्तेरित्याह । अन्नेति । तेषामब्रह्मत्वं लिङ्गादिति शङ्कते-यद्यपीति । आनन्दमयशब्दस्य ब्रह्मार्थत्वे ब्रह्मपुच्छम् इति न समञ्जसमित्याह । अपिचेति । किं प्रकृतं ब्रह्मानन्द-वाक्ये पुच्छवाक्येचोच्यते किम्वेकत्रेति विकल्प्य प्रथमं पक्षमभिप्रेत्याह । तदेवेति । द्वितीयविकल्पस्तत्राह । अन्यतरेति । अन्यतरस्मिन् वाक्ये ब्रह्मोक्तिस्वीकारे सतीत्यर्थः । वाक्यशेषादपि पुच्छवाक्य एवोच्यते स्वप्रधानं ब्रह्मेत्याह । किञ्चेति । श्लोकस्यानन्दमयार्थत्वमाशङ्क्य तात्पर्यमाह । अस्मिंश्चेति । प्रतिष्ठेत्यत्रैवेति सम्बन्धः ।

स्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात् । कथं पुनः स्वप्रधानं सद्ब्रह्मानन्दमयस्य पुच्छत्वेन निर्दिश्यते । ब्रह्मपुच्छं प्रतिष्ठति । नैष दोषः । पुच्छवत्पुच्छं प्रतिष्ठा परायणमेकनीडलौकिकस्यानान्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते ।

'पूर्वपक्षः'

नावयवत्वम्, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । इति श्रुत्यन्तरात् । अपिचानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यं निर्विशेषन्तु ब्रह्म वाक्यशेषे श्रूयते वाङ्मनसयोरगोचरत्वाभिधानात् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति । अपिचानान्दप्रचुर इत्युक्तं दुःखाल्पत्वमपि गम्यते । प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात्तथाच सति 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुद्ध्येत । प्रतिशरीरञ्च प्रियादिभेदादानन्दमयस्यापि भिन्नत्वं ब्रह्म तु न प्रतिशरीरं भिद्यते 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यानन्त्यश्रुतेः । 'एको देवः सर्वभूतेषु गूढः सर्वभूतान्तरात्मा' इति च श्रुत्यन्तरात् । नचानन्दमयाभ्यासः श्रूयते प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते । यदिचानन्दमयस्य ब्रह्मत्वं निश्चितं भवेत् तत उत्तरेष्वप्यानन्दमात्रप्रयोगेष्वप्यानन्दमयाभ्यासः कल्प्येत नत्वानन्दमयस्य ब्रह्मत्वमस्ति । प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम तस्मात् श्रुत्यन्तरे 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात् 'यदेष आकाश आनन्दो नस्यात्' इति ब्रह्मविषयप्रयोगः नत्वानन्दमयाभ्यास इत्यवगन्तव्यम् । यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यासः 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इति न तस्य ब्रह्मविषयत्वमस्ति । विकारात्मनामेवान्नमयादीनामनात्मनामुपसङ्क्रमितव्यानां प्रवाहे पठितत्वात् । नन्वानन्दमयस्योपसङ्क्रमितव्यस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिफलं निर्दिष्टं भवेत् । नैष दोषः । आनन्द-

---

आनन्दमयस्यैव ब्रह्मणो भावाभावधियोर्गुणदोषोक्तिरित्याशङ्क्याह । नचेति । पुच्छवाक्ये ब्रह्मशब्देन स्वप्रधानोक्तौ पुच्छशब्दस्य का गतिरिति पृच्छति । कथमिति । तस्य ब्रह्मणि वृत्तिमात्रं वाऽन्विष्यते किम्वा मुख्या वृत्तिः । आद्ये पूर्वं पृथिव्या दपुच्छेष्वाधारत्वोक्त्या ब्रह्मण्यपि सर्वाधारे लक्षणया पुच्छपद मित्याह । नैषदोष इति । न द्वितीयः प्रतिष्ठाशब्दविरोधादित्याह । प्रतिष्ठेति । पुच्छत्वेऽपि परायणत्वं वारयति । एकेति । नाडिस्वमाश्रितापेक्षं तदाह । लौकिकेति । पूर्वस्योत्तरेण निर्णयान्नावयवार्थतेति फलितमाह नानवयवत्वमिति । उक्तार्थे बृहदारण्यकं सम्वादयति । एतस्यैति । ननु वृत्तिकारैरपि तैत्तिरीयवाक्यं ब्रह्मण्येव समन्वितमिष्टं तत्र किमुदाहरणभेदेनेत्याशङ्क्याह । अपिचेति । नन्विह सविशेषमेव ब्रह्मेष्टं वाक्यशेषे रागादिमतोर्वाङ्मनसोरगोचरो ब्रह्मशुद्धधियोस्तु गोचर इत्यभ्युपगमादित्याशङ्क्य सविशेषस्य मृषात्वादप्राप्त नषेधापानाच्च मैवमित्याह । निर्विशेषन्त्विति । अतोऽभीष्टनिर्विशेषसिद्धये पुच्छमेवोदाहर्त्तव्यमितिभावः । मयटो विकारार्थत्वोक्त्या प्राचुर्यार्थत्वं निरस्यता पुच्छवाक्ये स्वप्रधानब्रह्मोक्तिरुक्ता सम्प्रति प्राचुर्यार्थत्वे दोषमाह । अपिचेति । स्वप्रकृत्यर्थप्रतियोग्यल्पतामनैवानपेक्ष्य स्थानान्तरस्थतत्सजातीयाल्पत्वापेक्षामात्रेण मयटोप्रयोगादित्यर्थः । अतिमधुरे रुच्यर्थं स्थानान्तरानुवेधवदानन्दे प्रोक्तुःकर्पार्थमीषद्दुःखानुक्तिरिष्टेत्याशङ्क्याह तथाचेति । प्राचुर्यार्थताभावान्मयटो नानन्दमयो ब्रह्मेत्यत्रैव हेत्वन्तरमाह प्रतिशरीरञ्चेति । प्रतिदेहं सातिशयत्वेन भिन्नानन्दमयाद् ब्रह्म सर्वानुगतमन्यदेवेत्यर्थः । यस्त्वाभ्यासादानन्दमयो ब्रह्मेति किमानन्दमयशब्दस्याभासः किम्वानन्दशब्दस्येति

मयस्योपसङ्क्रमणनिर्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात् । यात्वानन्दमयसन्निधाने 'सोऽकामयत बहुस्यां प्रजायेये'तीयं श्रुतिरुदाहृता सा 'ब्रह्म पुच्छं प्रतिष्ठे'त्यनेन सन्निहिततरेण ब्रह्मणा सम्बद्ध्यमाना नानन्दमयस्य ब्रह्मतां प्रतिबोधयति । तदपेक्षत्वाच्चोत्तरग्रन्थस्य 'रसो वै सः' इत्यादेर्नानन्दमयविषयता ।

## पूर्वपक्षः

'ननु सोऽकामयते' तिब्रह्मणि पुल्लिङ्गनिर्देशो नोपपद्यते । नायं दोषः । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः इत्यत्र पुंल्लिङ्गेनात्मशब्देन ब्रह्मणः प्रकृतत्वात् । तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते नचेह सविशेषं ब्रह्म प्रतिपिपादयिषितम् वाङ्मनसगोचरातिक्रमश्रुतेः । तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयट् विज्ञेयो न प्राचुर्यार्थः । सूत्राणि त्वेवं व्याख्येयानि–'ब्रह्म पुच्छं' प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते उत स्वप्रधानत्वेनेति । पुच्छशब्दादवयवत्वेनेति प्राप्ते उच्यते 'आनन्दमयोऽभ्यासात्' आनन्दमय आत्मेत्यत्र ब्रह्मपुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोपदिश्यते कुतः अभ्यासात् । 'असन्नेव स भवतीत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याऽऽभ्यस्यमानत्वात् 'विकारशब्दान्नेतिचेन्न प्राचुर्यात्' विकारशब्देनाऽवयवशब्दोऽभिप्रेतः पुच्छमित्यवयवशब्दान्नस्वप्रधानत्वम् ब्रह्मण इति यदुक्तं तस्य परिहारो वक्तव्यः । अत्रोच्यते नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः । प्राचुर्यं

---

विकल्प्याद्येऽसिद्धिमाह । नचेति । आनन्दमयं प्रकृत्य ब्रह्मणि प्रयुक्तपूर्वानन्दशब्दस्याभ्यासो हेतुरिति द्वितीयं निरस्यति यदिचेति । आनन्दमयस्य ब्रह्मत्वे प्रातिपदिकमात्राभ्यासोपि प्रकृतानन्दमयार्थः । ततस्तस्य ब्रह्मताधीरित्यन्योन्याश्रयतेतिभावः । आनन्दपदाभ्यासस्तर्हि किंविषयः पुच्छवाक्योक्तब्रह्मविषय इत्याह । तस्माद्विति । आनन्दाभ्यासस्यानन्दार्थत्वायोगस्तच्छब्दार्थः । मयडन्तस्याप्यभ्यासात्कथं तदभ्याससिद्धिस्तत्राह । यस्त्वपमिति । उपसङ्क्रमितव्यानां विवेकेन त्याज्यानामित्यर्थः । अन्नमयादावुपसङ्क्रमस्य विद्वत्फलार्थत्वादानन्दमयस्याब्रह्मत्वे प्राप्तेरनुक्तेः प्रक्रमभङ्ग इति नन्विति । किमिहोपसङ्क्रमणं प्राप्तिरतिक्रमो वा ? आद्येऽन्यविप्राप्त्याऽवयवप्राप्तेरार्थिकत्वात्पुच्छब्रह्मप्राप्तिरुक्तैव । द्वितीये नयनिक्रमस्य परतीराप्तिवत् कोशातिक्रमस्य ब्रह्माप्तित्वात्तत्प्राप्तिरर्थादुक्तेत्याह । नैष दोष इति । ननु सोऽकामयतेत्याद्यानन्दमयार्थं स तत्तद्ब्रह्मत्वबोधीति तत्राह । यत्त्विति । रसो वै सः इत्यादेरुत्तरस्यानन्दमयार्थत्वमुक्तं प्रत्याह । तदपेक्षित्वादिति । सोऽकामयतेत्यादि ब्रह्मण्ययुक्तं नपुंसके पुल्लिङ्गायोगादिति शङ्कते नन्विति । प्रक्रमेण समाधत्ते नायमिति । ब्रह्मणो निर्विशेषस्य नानन्दमयतेत्युपसंहरति तस्मादिति । इहापि सविशेषमेव प्रतिपाद्यमित्याशङ्क्योक्तं स्मारयति । नचेति । परमतनिरासमुपसंहरति । तस्मादिति । स्वमते सूत्राणामननुगुणत्वमाशङ्क्य तानि योजयितुमुपक्रमते । सूत्राणीति । व्याख्यामेवाख्यातुं विषयमुक्त्वा ब्रह्मपुच्छशब्दाभ्यां संशयमाह । ब्रह्मेति । पूर्वाधिकरणे मुख्येक्षितृब्रह्मनिर्णये गौणःप्रायपाठेबाधित इहस्वाधारमात्रत्वे पुच्छशब्दस्य लाक्षणिकत्वसाम्येऽवयवप्रायदृष्टेरवयवार्थेति सङ्गत्या पूर्वपक्षयति । पुच्छेति । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्तेरिति । स्वाभिमतव्याख्यामाह । आनन्दमय इति । पूर्वपक्षमनुभाष्य दूषयति । विकारेति । वाचकत्वाभावादभिप्रेत इत्युक्तम् । परिभागमवताऽर्थं व्याकरोति । अत्रेत्यादिना । ब्रह्माधिकरणमिति वाच्ये पूर्ववाक्यावयवप्रधानप्रयोगात्तस्य बुद्धिस्थत्वात्तेनाप्यधिकरणलक्षणा । पुच्छोक्तिरिति तात्पर्यमाह । अवयवेति ।

भायापत्तिः। अवयवभाय वचनमित्यर्थः। अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवे-पूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्तत्वाऽत्रयवभायापत्त्या ब्रह्मपुच्छं प्रतिष्ठेत्याह नावयवविवक्षया यत्कारणमभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम्। 'तद्धेतुव्यपदेशाच्च' सर्वस्य च विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते 'इदं सर्वमसृजत' यदिदं किञ्चेति। नच कारणं सद्ब्रह्म स्वविकारजातस्यानन्दमयस्य मुख्या वृत्त्याऽवयव उपपद्यते। अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानीत्येवं वदन्ति। उत्तरपक्षःतत्तुच्छम्। आनन्दमये एव प्रकरणस्य पर्य्यवसानात्। तथाहि तत्र तावत् यदुक्तं विकारार्थे मयट् प्रवाहे सतीत्यादि, तदसम्यक्। अन्नमये मयटो विकारार्थत्वेऽपि प्राणमयादिषु विकारार्थत्वासम्भवेन न तत्प्रवाहपातित्वमानन्दमयस्य पञ्चवृत्तेः प्राणस्यैकत्वेन प्रकृतिविका-रासम्भवात्। ततः स्वार्थे मयट् वृत्तिप्रचुरत्वविवक्षया वा। ज्ञानेन्द्रियैर्युक्तं मन एव मनोमय इत्युच्यते विज्ञानमयेऽपि जीवात्मनश्चेतनस्यान्यविकारत्वासम्भवात्। अन्यथा स्वरूपहानेः "न जायते म्रियते वे"त्यादि शास्त्रवाधः। प्राचुर्य्ये एव मयट् तद्विज्ञानधर्मस्य वद्धावस्थायां सङ्कुचितत्वेऽपि 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वा' दित्यादिशास्त्रेण स्वाभा-

---

तदेव प्रपञ्चयति। अन्नेति। तत्र गमकमाह। यदिति। इतश्च पुच्छवाक्ये पुच्छशब्देनावयवो नोच्यते किन्त्वाधारो लक्ष्यते इत्याह। तद्धेत्विति। तद्व्याचष्टे। सर्वस्येति। तथापि कस्मादानन्दमयावयवत्वं ब्रह्मणो नेष्यते तत्राह। नचेति। पूर्वपक्षं परिहरति। तत्तुच्छमिति। प्रागुक्तार्थमनूद्य निरस्यति। आनन्दमय-इति। प्रकरणस्येति। तैत्तिरीयशाखान्तर्गताऽऽनन्दवल्युपनिषदि "सत्यं ज्ञानमानन्दं ब्रह्म, यो वेदनिहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चितेति, तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आका-शाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्योऽन्नम् अन्नात्पुरुषः सवा एष पुरुषोऽन्नरसमय-स्तस्येदमेव शिरः। अयं दक्षिणपक्षः। अयमुत्तरपक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा" अत्रैव विकारार्थकमयट् पञ्चवृत्ति-प्राण एक एव तस्य विकाराऽसम्भवात् ततः स्वार्थे मयट्। अथ तस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः। तस्य प्राणः शिरः व्यानो दक्षिणपक्षान् निरूप्य प्राणमयादन्योऽन्तर आत्मा मनोमय इत्यभिहितम्। तस्य शिरः-पक्षान् निर्दिश्य ब्रह्मानन्दस्य विशुद्धमनोगोचरत्वप्रतिपादनाय 'यतो वाचो निवर्तन्ते' इति श्लोकः प्रदर्शितः यस्माद्ब्रह्मानन्दात् वाङ्मनसानीयतालक्षणं परममप्राप्य निवर्त्तन्ते तादृशं ब्रह्मानन्दं मनसा तु विशुद्धेन इति श्रुत्या शुद्धेन मनसा ज्ञात्वा कदापि न विभेतीति तदर्थः। ततः तस्माद्वा एतस्माद्वा मनोमयादन्योऽन्तर आत्मा विज्ञानमयःजीवात्मा दर्शितस्तस्य पुच्छादिपक्षानुक्त्वा "विज्ञानं यज्ञं तनुते कर्माणि तनुत" इत्यादिना कर्तृत्वमभिहितम्, अत्रापि प्राचुर्य्यार्थे मयट्प्रत्ययः नतु विकारार्थे तथासति प्रत्यगात्मनो स्वरूपहान्यापत्तेः "न जायते म्रियत इत्यादिनिर्विकारप्रतिपादकानां शतशः वचनानां वाधः प्रसज्येत। पश्चात् तस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयस्तेनैषः पूर्णस्तस्य प्रियमेव शिरः। इष्टवस्तुजन्यसुखं प्रियम्। मोदो दक्षिणः पक्षः। तल्लाभजन्यं सुखं मोदः। प्रमोद उत्तरपक्षः। लब्धस्यो-पभोगजन्यं सुखं प्रमोदः सुखातिशय आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठेत्यभिहतम्। एकस्यानन्दस्यात्मत्वेन पुच्छत्वेन निरूपणं कथं तस्य भेदाभावादिति तु नाशङ्कनीयम्। एकस्यैव ब्रह्मणो ब्रह्मरूपत्ववैषेण पुच्छत्वमानन्दत्वेन वैषेणात्मशब्दितत्वमित्युपपत्तेः। आनन्दात्मकब्रह्मणः कथं प्रचुरत्वलक्षणमानन्दमयत्वमानन्दस्यानन्दमयत्वाभावा-दित्यपि नाशङ्क्यम्। धर्मधर्मिभावेन तदुपपत्तेः। प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षरूपितधर्मभूतानन्दप्रचुरत्वेन तदुपपत्तेः। तस्मादानन्दमय एव प्रकान्त एव ब्रह्म एवाभिहितः। ततश्च। "असन्नेव स भवति। असद्ब्रह्मेति वेद

विकृतत्वविवक्षया संसारिणोऽपि जीवस्य विज्ञानप्रचुरत्वसम्भवात् । तस्माद्विकारार्थप्रवाह एव नास्ति कुतस्तत्पातशङ्का कुतस्तरामर्द्धजरतीयन्यायपातप्रसङ्गश्च । प्रत्युत प्राचुर्यार्थकविज्ञानमयपदसान्निध्यात्सुतरां प्राचुर्यार्थत्वावगमः । नचैकत्राभ्यासेन द्वित्रिकृत्वः पठितस्य सन्निहितशब्दस्यैकार्थपरत्वनियमो वक्तुं शक्यः । "पौर्णमास्यां पौर्णमास्यां यजेत" इत्यत्र पाठस्य साम्यसन्निधानत्वयोः सतोरपि सप्तम्यन्तस्य कालवाचित्वेन तृतीयान्तस्य कालयुक्तकर्मवाचित्वेन च भिन्नार्थस्य पूर्वकाण्डे निर्णयदर्शनात् । यदप्युक्तं तस्य प्रियशिरस्त्वाद्यवयवयोगविधानात्सोऽपि विकृत एवेति । तदपि न सम्यक् । प्रियमोदादिशब्दवाच्यानामपीष्टदर्शनजादिसुखानां तद्विभूतिलक्षणतदंशत्वादवयवत्वोक्तियुक्तैव सर्वस्यापि प्राणिसुखजातस्य तदानन्दांशत्वात् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्यादिश्रुतेः परार्थत्वाभावयवविधानं विरुद्धम् । यदुक्तमानन्दमयस्यैव ब्रह्मत्वे तस्यावयवावयविभावापत्तावसामञ्जस्यं स्यादिति । तदप्यसम्यक्

---

चेत्" अस्ति ब्रह्मेति चेद्वेद । संतमेनं ततो विदुरित्यादिना ब्रह्मशब्देनानन्दमयं निरुच्यते । आनन्दमयस्य सदसत्त्वज्ञानान् मोक्षसंसारौ भवत इति प्रदर्शितः । पुनः आनन्दमयस्यात्मान्तरं नास्तीति व्युत्पादनाय तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यादिनाऽनानन्दमयस्यानन्यात्मकत्वमभिहितम् । पश्चात् प्राप्तिविशदीकरणार्थं प्रश्नः । कृतः जगज्जन्मादिकर्तुर्ब्रह्मणः प्राप्यत्वज्ञापनाय सोऽकामयत बहु स्यां प्रजायेयेति, स तपो ऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत इत्यादिवचनसमुदायेन समाहितम् । ततो रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नित्यादिश्रुतिवचनं पठित्वा सैषानन्दस्य मीमांसा भवतीत्युक्तम् । इति प्रकरणम् । एतस्य प्रकरणस्यानन्दमये ब्रह्मण्येव पर्यवसानमित्यर्थः । एकप्रवाहपतितत्वादेकरूपेण भवितव्यमिति नियममङ्गीकृत्य विकारार्थकमयट्प्रवाहे पतितत्वादानन्दमयघटकीभूतमयटोऽपि विकारार्थकता इति प्रागुक्तं निरस्यति । **तदप्यसम्यगित्यादिना** । यद्यत्र विकारार्थकमयटः प्रवाहः स्यात्तदा तदन्तःपातित्वात् आनन्दमय इत्यत्रापि मयट्प्रत्ययस्य विकारार्थत्वं कल्पयितुं शक्यते तदेवात्र नास्तीत्याह **अन्नमय इति** । उक्तनियमस्य श्रुतस्मृतिमूलकत्वाभावेनाप्रामाणिकत्वाच्च भवतां मतेऽपि स नियमः सम्भवति । प्राणमय इत्यत्र स्वार्थिक एव मयट् तत्र विकारासम्भवादित्याह । **प्राणमयादिष्विति** । प्राणोऽपानो व्यान उदानः समान इति प्राणस्य वृत्तेः प्राचुर्यात् प्राणमय इत्यत्र प्राचुर्यार्थकमयट् इत्याह । **वृत्तिप्रचुरत्वेति** । मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तिप्राचुर्याद् मनोमय इत्यत्रापि मयटः प्राचुर्यार्थत्वमित्याह । **ज्ञानेन्द्रियैरिति** । जीवात्मनो विकारित्वे तस्य स्वरूपत्वमेव न सिद्ध्येत् 'न जायते म्रियते, अजो नित्यः, नित्यो नित्यानाम्' अजो ह्येक इत्यादिवेदान्तवचनानां बाधः प्रसज्येत अतो विज्ञानमय इत्यत्रापि प्राचुर्यार्थक एव मयट् नतु विकारार्थक इत्याह । **विज्ञानमयेऽपीति** । विपक्षे बाधकतर्कमाह । **अन्यथेति** । प्रत्यगात्मनो विकारित्वस्वीकार इत्यर्थः । प्रत्यगात्मनो विज्ञानधर्मः स्वाभाविक इत्यत्र श्रुतिप्रमाणं दर्शयति । **नहि विज्ञातुरिति** । तद्विज्ञानधर्मस्य बद्धावस्थायां संकुचितत्वेऽपि नहि विज्ञातुरितिशास्त्रेण स्वाभाविकत्वं विवक्षयेति योजना । प्रत्यगात्मनो विज्ञानधर्मः स्वाभाविको निरुक्तश्रुतिबोधिताविनाशित्वादित्यनुमानाकारः । यतः सः स्वाभाविकः संसारिणोऽपि जीवस्य विज्ञानप्रचुरत्वमतः सिद्ध्यति परंतु बद्धावस्थायां तस्य सङ्कुचितत्वमात्रत्वमित्यर्थः । कल्पितोक्तन्यायार्द्धजरतीयन्याययोर्नात्रावकाशत्वमिति प्रतिपादयन्नुपसंहरति । **तस्मादिति** । आनन्दमय इत्यत्र प्राचुर्यार्थक एव मयट्प्रत्ययः प्राचुर्यार्थकविज्ञानमयपदसान्निध्यादित्याह । **प्रत्यय इति** । पौनःपुन्येन पठितस्यसन्निहितशब्दस्यैकत्राभ्यसमानस्यैकार्थपरत्वमिति नियमस्य व्यभिचारं पूर्वकाण्डोक्तरीत्या दर्शयन्नुक्तनियमं परिहरति । **नचेति** । पूर्वपक्षोक्तमनूद्य निरस्यति । **यदप्युक्तमिति** । "ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मणः पुच्छमिति षष्ठ्याऽवयवावयवी-

तयोरेकार्थपरत्वस्येष्टत्वात्। कथन्तर्हि आत्मत्वेन पुच्छत्वेन च निरूपणमितिचेदेकस्यैव ब्रह्मणो ब्रह्मत्ववेषेण पुच्छत्वम्। आनन्दत्ववेषेणात्मत्वमित्युपपत्तेः। अंशांशिनोर्विभूतिविभूतिमतोश्चाभेदस्याविरुद्धत्वात्। यच्चोक्तं ;ब्रह्मपुच्छमित्यानन्दमय इत्यनयोर्वाक्ययोर्ब्रह्मशब्दसंयोगासंयोगाभ्यामपि नानन्दमयशब्दवाच्यं ब्रह्मेति। तत्तुच्छं, यथाऽऽनन्दमयवाक्ये ब्रह्मशब्दासंयोगस्तथा ब्रह्मपुच्छमिति वाक्ये आनन्दशब्दासंयोगस्य तुल्यत्वात्। अनयोर्मध्ये सूत्रितत्वेनाभ्यस्तत्वेनचानन्दपदस्यैव सूत्रकृदभिमतत्वाद्बलीयस्त्वं तद्विरोधश्च तत्र पक्ष एव महादोषमावहति। यदि ब्रह्माभ्यास एव सूत्रकृदभिप्रेतः स्यात्तर्हि ब्रह्म पुच्छं प्रतिष्ठाभ्यासादिति सूत्रितं स्यान्नतु तथा दृश्यते किन्त्वानन्दमयं प्रतिज्ञायाभ्यासश्च हेतुतयोक्तः तथात्वे च प्रतिज्ञाहेत्वोः सूत्रितयोर्हानिरसूत्रितस्य च कल्पना स्यात्। किञ्च भृगुवल्ल्यामपि प्राणाद्युपासने

---

भावसम्बन्धत्वप्रतिपत्तिसम्बन्धस्य द्विनिष्ठतया प्रतिष्ठा तद्भावेन च व्यतिरेकावगमादानन्दमयादन्यद्ब्रह्मेति शङ्कितुराशयः। परिहरति। तदपि न सम्यगिति। "अन्नमयं पुरुषविधः" इति श्रुतिवाक्यस्मरणार्थं पुरुषविधत्वेन रूपितं स्वस्मादनतिरिक्तैस्स्वावयवैः पुच्छप्रतिष्ठात्वरूपेण दर्शनादस्मिन् प्रकरणेऽत्रापि पुच्छप्रतिष्ठात्वे निरूपितञ्च ब्रह्म आनन्दमयादनतिरिक्तम्। षष्ठीनिर्देशः समुदायतदेकदेशत्वनिबन्धनतयोपपन्नः। तथाच प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षतारूपितानामिष्टवस्तुदर्शनजन्यतल्लाभजन्यलब्धभोगजन्यसुखविशेषरूपाणां भगवद्विभूतिलक्षणतदंशानामवयवत्वोक्तेर्न क्षतिमावहतीति भावः। जीवानन्दहेतुभूतं ब्रह्मण आनन्दं परार्थमित्यानन्दमयस्य ब्रह्मण अंशित्वं प्रत्यगात्मनामानन्दस्यांशत्वं तत्रावयवत्वविधानं न विरोधमापादयतीति प्रदर्शयन्नवयवत्वोक्तिं हेतुप्रदर्शनेन द्रढयति। सर्वस्यापीति। उक्तहेतोः श्रुतिसंमतत्वं दर्शयति। एतस्यैवेति। पूर्वोक्ताशङ्कां दूषयितुमनूद्यति। यदुक्तमिति। तयोरिति। अवयवावयविनोरित्यर्थः। यथा भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमत एव रक्तः पटो भवतीत्यत्रैकार्थता तथा प्रकृतेऽपि पुच्छशिरःप्रभृत्यवयवावयविब्रह्मणोरेकार्थत्वं सम्भवतीत्यर्थः। पुच्छब्रह्मणोर्भेदाभावेन तस्यैवात्मत्वेन पुच्छत्वेन निरूपणं कथमित्याक्षिप्य समाधत्ते। कथन्तर्हीति। एकरूपेण पुच्छत्वमपररूपेणात्मत्वं यदि स्वीक्रियते तदा भेदप्रसक्त्याभेदः कथं सिद्ध्यति कथंच तयोरेकार्थत्वमित्यत आह। अंशांशिनोरिति। प्रागुक्तार्थमनूद्यति। यच्चोक्तमिति। एकत्र संयोगोऽपरत्र नेति दोषः समानो भवतां मतेऽपीत्याशयेन परिहरति। तत्तुच्छमिति। अनयोरिति। ब्रह्मपुच्छमित्यत्र ब्रह्मशब्दस्य संयोगः। आनन्दमय इत्यत्रासंयोग इत्येकः पक्षः। आनन्दमयवाक्ये ब्रह्मपदस्य संयोगो न श्रूयते तथा ब्रह्मपुच्छमित्यत्रापीत्यपरपक्ष इत्यर्थः। यस्मिन् पक्षे सूत्रकारस्याभिमतता स एव पक्षो बलीयान् स एव पक्षो विद्वद्भिर्माननीयोऽन्यथा तद्विरोधः प्रसज्येत इत्यर्थः। तर्कबलेनापि स्वपक्षस्य सामञ्जस्यं परपक्षस्यासामञ्जस्यमाह। यदीति। तथात्वे=ब्रह्मविषयत्वे भृगुर्वैवारुणिः वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति तꣳहोवाच। इत्यादिना अन्नं ब्रह्म प्राणो ब्रह्मेत्यादिकं तन्मनःशोधनायोपदिश्य किं सर्वाण्यपि ब्रह्माण्युतैकं तत्रापि किम्वा ब्रह्मेति व्याकुलचेतसमालोक्य वक्ष्यमाणमुवाच। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व।" तद्ब्रह्मेति। स तपो ऽतप्यत स तपस्तप्त्वा अन्नं ब्रह्म व्यजानात्। इन्द्रियनिग्रहादिलक्षणस्य तपसः ब्रह्मविद्यायान्तरङ्गोपायत्वात्तदेव साधनमिति ज्ञात्वा तपः कृत्वा प्रथमतोऽन्नं ब्रह्मेति ज्ञातवानित्यर्थः। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससाद। "अधीहि भगवो ब्रह्मेति" अन्नस्य सर्वभूतोत्पत्तिकारणत्वात्। अन्नं ब्रह्मेति ज्ञात्वोत्पत्तिमत्वादिनाऽन्नस्य ब्रह्मत्वेऽपरितुष्यन् पुनरपि पितुः समीपमागत्याधीहि भगव इति मंत्रमुच्चारितवानित्यर्थः। "तꣳहोवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति स तपोऽतप्यत स

उत्तरोत्तरजिज्ञासायास्तदवस्थत्वादानन्दस्य ज्ञानानन्तरमुपदेशसमाप्तेश्चानन्दस्य बलिष्ठत्वं कथं तर्ह्यानन्दरूपस्य ब्रह्मण आनन्दमयत्वम्। आनन्दस्यानन्दप्रचुरत्वाभावादितिचेदानन्दस्वरूपस्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षादिधर्मभूतानन्दमयत्वस्योपपत्तेः यच्चोक्तमसन्नेव स भवतीति श्लोकेऽननुकृष्यानन्दमयब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानादित्यादि तदपि न सम्यक्। गुणिमात्रनिर्देशेऽपि गुणप्रतिपत्तिः सुकरा सर्वज्ञस्यानन्दाद्यनन्तगुणवत एव प्रस्तुतत्वात्। यदप्युक्तमानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यं निर्विशेषन्तु वाक्यशेषे श्रूयते, इत्यादि। तदतितुच्छम् 'सैषानन्दस्य मीमांसे'ति गुणभूतानन्दस्योत्तरोत्तरवाक्यैराधिक्यं निर्धार्य 'आनन्दं ब्रह्मणो विद्वा'निति गुणगुणिनोः पृथक्पाठ एव कण्ठरवेण ब्रह्मणः सविशेषत्वं ज्ञापयति। 'यतो वाचो निवर्त्तन्ते' इति वाक्यस्य तु न निर्विशेषपरत्वं किन्तु ब्रह्मानन्दस्यान्यानन्दवत्परिच्छेदवारणपरत्वं रागादिदोषदूषितवाङ्मनसागोचरत्वविधानपरत्वम्वा अन्यथा तत्रैवोत्तरार्द्धे ब्रह्मण इति षष्ठीनिर्देशो वेदनक्रियाविषयत्वनिर्देशश्च विरुद्ध्येत नहि त्वन्मते धर्मधर्मिभावाङ्गीकारः। यच्चोक्तमानन्दप्रचुरत्वे दुःखालेशत्वमपि गम्येत इत्यादि तदपि तुच्छतरम्। प्राचुर्य्यस्य प्रतियोग्यल्पत्वसापेक्षत्वेऽपि स्वात्म-

---

तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्। ततो मनो ब्रह्मेति व्यजानात्। ततो विज्ञानं ब्रह्मेति व्यजानात्। स तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति। भृगुणा वरुणात्प्राविद्याऽन्नमयादिकमतिक्रम्यान्यत्र गतेति तैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये, आनन्दस्यैव प्रधानत्वमुक्तं भवतीत्यभिप्रेत्याह। किञ्चेति। अत्रायमभिसन्धिः। ननु आनन्दो ब्रह्मे' त्यत्रानन्दस्य पदस्य वाह्यकोशपरत्वं वक्तव्यम्, "अन्नं ब्रह्म। प्राणो ब्रह्म" इत्यादिविज्ञानानन्तरमिव आनन्दो ब्रह्म" इति विज्ञानानन्तरं भृगोर्वरुणोपसत्त्यभावात्। नहि तद्विज्ञाय "पुनरेव वरुणपितरमुपससार" इति श्रूयते। एतदुक्तं भवति'अन्नं ब्रह्मेति व्यजानात्' इत्यत्र किमन्नाद्युपलक्षितब्रह्मवेदनमुक्तम्, उत अन्नमयादौ ब्रह्मबुद्ध्यवतरणम्। आद्ये, अन्नं ब्रह्मेति ज्ञानानन्तरं वरुणोपसत्तिर्न स्यात्, उपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात्। द्वितीये आनन्दबुद्धेर्यथार्थत्वं स्यात्, पुनर्वरुणोपसत्त्यभावात्। किञ्च "आनन्दो ब्रह्म"त्यत्रानन्दशब्दस्य ब्रह्मपरत्वं युष्माभिरेव व्याख्यातम्, उक्तंहि 'या तु भार्गवी वारुणी विद्या आनन्दो ब्रह्मेति व्यजानादिति तस्यां मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वमिति, अतश्च 'आनन्दो ब्रह्मे'त्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेन 'आनन्दमयमात्मान'मित्यत्रानन्दशब्दोऽपि परमात्मपर इति। आनन्दरूपब्रह्मस्वरूपस्य कथमानन्दप्रचुरत्वलक्षणमानन्दमयत्वमानन्दस्यानन्दमयत्वाभावादित्याक्षिपति। कथं तर्ह्यानन्दरूपस्येति। धर्मधर्मिभावेन तदुपपत्तिमाह। आनन्दस्वरूपस्येति। परिहरति। तदपि नेति। ब्रह्मात्मानन्दमयशब्दानामेकार्थे निश्चिते आनन्दमयशब्दनिर्देशेन तद्गुणानामानन्दादीनां बोधो जायत एवेत्यर्थः। कथं प्रतिपत्तिरिति जिज्ञासायामाह। सर्वज्ञस्येति। अपिच प्रकरणस्य पूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छमात्रप्रतिपादनपरः "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिवाक्येन ब्रह्मण आनन्दरूपस्योक्तत्वात् आनन्दस्य च प्रसिद्धत्वात्तस्य सद्भावासद्भावज्ञानशङ्का युक्तेति चोदिते तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वापरिच्छिन्नानन्दत्वादेव हि त्वयोपपादनीयम् तदत्रापि आनन्दमयस्य ब्रह्मत्वेऽपि प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षत्वधर्मेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानशङ्का युक्तैवेति। पूर्वपक्षोक्तं निर्वक्ति। यदप्युक्तमिति। प्रियाद्यवयवत्वेनेति। पुच्छत्वम् अवयवविशेषत्वम्। प्रतिष्ठात्वमप्याधारत्वम्'। ब्रह्मणोऽवयवित्वमनुपपन्नमितिचेत् अवयवत्वमप्यनुपपन्नम् नचाज्ञानकल्पि-

न्येव प्रतियोगिसत्त्वनियमस्याभावात् । व्यधिकरणचन्द्रादिगतप्रतियोगिसत्त्वामपेक्ष्यापि प्रचुरप्रकाशः सूर्य्य इत्यादेः पूर्वमुक्तत्वात्तद्वदिहापि प्रियमोदादीनि वैषयिकसुखान्यपेक्ष्य तथाप्रयोगप्रवृत्तिरविरुद्धा इतरथा स्वात्मन्येवोभयकल्पनायां तमःप्रकाशयोरिव महद्विरोधाद्वाक्यस्यानुकूलताप्रसङ्गः । किञ्च, तत्प्रचुरत्वं नाम तत्प्रभूतत्वं तच्चेतरस्य सत्तां नावगमयति अपितु स्वल्पत्वं निवर्त्तयति । इतरसद्भावाभावौच प्रमाणान्तरावसेयौ । इह चापहतपाप्मेत्यादिश्रुत्या तदभावो गम्यते । श्रुत्यर्थस्तु यत्र यस्यां ध्रुवास्मृतौ अन्यत् ब्रह्मव्यतिरिक्तं किञ्चिन्न पश्यति सर्वस्य ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात् । एवमग्रेऽपि ज्ञेयम् । यच्चोक्तं प्रतिशरीरं प्रियादिभेदादानन्दमयस्य भिन्नत्वं ब्रह्म तु न भिद्यते आनन्दाश्रुतेरिति । तदपि न । ब्रह्मण एवानन्दमयशब्दवाच्यत्वेनानन्दमयस्यैवानन्त्यश्रवणात् । यच्चोक्तं नानन्दमयाभ्यासः श्रूयते प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासादित्यादि तदप्यसाधु 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र यथा ज्योतिःशब्दस्य ज्योतिष्टोमपरत्वं पूर्वकाण्डे निर्णीतं तद्वदिहापि प्रातिपदिकस्यानन्दपदस्यानन्दमयपरत्वं युक्तमेव गुणिनं विना गुणस्य स्थित्यनुपलब्धेः । यच्चोक्तम् 'एतमानन्दमयमात्मानमुपसङ्क्रामतीत्यभ्यासस्य न ब्रह्मविषयत्वं विकारप्रवाहे पठितत्वादिति । तदपि तुच्छतरं विकारप्रवाहाभावस्य पूर्वमुक्तत्वात् तत्रोपसङ्क्रामतीत्यस्यानुभवतीत्यर्थः । किञ्च मयटो विकारार्थत्वे कोऽसावानन्दमय-

---

तमवयवत्वं रूपणामात्रम् असुखादिव्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिना रूपेण सम्भवादिति भावः । परिहरति । **तदपीति** । सैषानन्दस्येति शतगुणोत्तरक्रमेण निरतिशयानन्दं सकलेतरविलक्षणं गुणात्मकमानन्दवल्ल्यामुक्तं तस्य गुणस्याश्रयो भगवान् वासुदेवः सविशेष एवेत्यर्थः । **आनन्दमिति** । आनन्दपदेन गुणो निर्दिश्यते ब्रह्मण इति गुणिनिर्देशः उभयनिर्देशेन ब्रह्मणः सविशेषत्वमुक्तं भवतीत्यर्थः । ननु 'यतो वाचो निवर्त्तन्त' इति श्रुतिरेव ब्रह्मणो निर्विशेषत्वं बोधयतीत्यत आह । **यतो वाच इति** । यतः यस्माद्ब्रह्मानन्दाद्वाङ्मनसानीयतालक्षणं पारमप्राप्य निवर्त्तन्ते तादृशं ब्रह्मानन्दं 'दृश्यते त्वग्र्यया बुद्ध्या' मनसा तु विशुद्धेनेति श्रुत्या शुद्धेन मनसा ज्ञात्वा कदापि न बिभेतीत्यर्थः । एतद्वचनमानन्दमयस्य ब्रह्मणः परिच्छिन्नानन्दतां व्यावर्तयति । यथा विधिशिवेन्द्रादीनामानंदः परिच्छिन्नो न तथा ब्रह्मण इत्याह । **किन्त्विति** । विपक्षे बाधकतर्कमाह । **अन्यथेति** । विशुद्धमनोगोचरत्वानभिधान इत्यर्थः । **उत्तरार्द्ध इति** । "आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचने"ति भागस्य ब्रह्मसम्बन्ध्यानन्दकर्मकवेदनाश्रयीभूतः मुमुक्षुः सर्वकालाधिकरणकभयसामान्याभाववानिति बोधः । **विरुध्येत इति** । वाङ्मनोगोचरत्वतदगोचरत्वयोर्विरोध इत्यर्थः । अस्माकन्तु मते विशुद्धमनोगोचरत्वं दोषदूषितवाङ्मनसागोचरत्वयोर्न विरोध इति भावः । ब्रह्मण आनन्दो धर्म इति वयमपि स्वीकुर्म इत्यत आह । **नहीति** । **त्वन्मत इति** । निर्विशेषचिन्मात्रब्रह्मवादिमत इत्यर्थः । आनन्दप्रचुर इत्युक्ते प्रतियोग्यपेक्षिते सुखप्रतिसम्बन्धितया साहचर्य्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति प्रागुक्तमनूद्यति । **यच्चोक्तमिति** । परिहरति । **तदपि तुच्छमिति** । यत्र प्रचुरानन्दता तत्रैव प्रतियोगिनः दुःखगताल्पत्वस्यापेक्षेति नियमो नास्ति चन्द्रगताल्पप्रकाशापेक्षयाऽपि सूर्य्यप्रकाशस्य प्राचुर्य्यमिति प्रागेव निरूपितमित्याह । **प्राचुर्य्यस्येति** । दार्ष्टान्ते योजयति । **तद्वदिहापीति** । **तथाप्रयोग इति** । प्रचुरानंदप्रयोग इत्यर्थः । विपक्षे बाधकतर्कमुपन्यस्यति । **इतरथेति** । जीवगतवैषयिकसुखान्यपेक्ष्य तथा प्रयोगास्वीकार इत्यर्थः । **स्वात्मन्येवेति** । यत्र प्रचुरानन्दता तत्रैव दुःखस्याल्पत्वकल्पने ब्रह्मण आनन्दमयत्वप्रतिपादकश्रुतेः विरोधः प्रसज्येत इत्यर्थः । प्रमाणान्तरविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम् अपितु प्रमाणान्तरसिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव युक्तमिति परिहर्तुं प्रचुरशब्दस्यार्थान्तरसद्भावव्यावृत्त्यर्थमाह । **तत्प्रचु-**

पदार्थ इति विवेचनीयम्। चेतनोऽचेतनो वा। नाद्यः। तस्य निर्विकारत्वादेकरसत्वाच्च। नान्त्यः-जडत्वादितरथा घटादीनामप्यानन्दाश्रयत्वापत्तेस्तेषामपि जडत्वसाम्यात्। तस्मात्प्राचुर्यार्थ एव मयट् आनन्दमयश्च परमात्मा परब्रह्म पुरुषोत्तमः श्रीकृष्ण एवेति सिद्धमलमतिविस्तरेण॥२०॥

इत्यानन्दमयाधिकरणम्॥

एवमधिकरणद्वयेन सामान्यतः क्षेत्रक्षेत्रज्ञयोः कारणत्वं निरस्येदानीं विशेषतः प्राप्तैश्वर्याणामिन्द्रादिचेतनानां प्रकृतिकार्याणामाकाशाद्यचेतनानाञ्च तत्त्वं निराकरोत्यापादपरिसमाप्तेः।

## अन्तस्तद्धर्मोपदेशात्। १। १। २१॥

छान्दोग्यैरिदमाम्नायते 'य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष वै सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक्च साम च गेष्णावित्यधिदैवतमथाध्यात्ममथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यादि तत्र संशयः

---

त्वानामिति। ततः किमित्यत आह। तच्चेति। नहि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह। अपिचेति। यदि प्राचुर्यवाचिमयट्प्रत्ययः स्वयं नार्थान्तरसद्भावे प्रमाणं तर्हि तत्सद्भावः केनावगम्यते, इत्याह। इतरेति। ततः किमित्यपेक्षायां पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह। इहचेति। तदभाव इति दुःखाभाव इत्यर्थः। यत्र नान्यत् पश्यतीति श्रुतेरर्थमाह। श्रुत्यर्थश्चेति। पूर्वपक्षोक्तं विवृणोति। यच्चोक्तमिति। परिहरति। तदपि नेति। प्रतिशरीरं प्रियशिरःपक्षादीनां भेदादानन्दमयो भिद्यते नतु ब्रह्मेति यदाशङ्कितं तत्स्मारयति। यच्चोक्तमिति। परिहरति। तदपि नेति। आनन्दमयस्य स्वस्मादनतिरिक्तैः प्रियादिभिरानन्त्यं प्रदर्शितं भवतीत्यर्थः। पूर्वपक्षोक्तमर्थं विवृणोति। यच्चोक्तमित्यादिना। निरस्यति। न तदप्यसाधुरिति प्रागुक्तार्थं स्मारयति। यच्चोक्तमिति। उपसंहरति। तस्मादिति।

इत्यानन्दमयाधिकरणम्॥

ईक्षत्यधिकरणेनाचेतनस्य प्रधानस्यानन्दमयाधिकरणेन च प्रत्यगात्मनश्च जगत्कारणत्वे निषिद्धे सम्प्रति प्राप्तैश्वर्याणामन्येषां शारीराणां प्राकृतिकानां चेतनवर्गाणां जगत्कारणत्वं निषिध्यत इत्युत्तराधिकरणानामारम्भं समर्थयन् पूर्वोत्तराधिकरणयोः सङ्गतिमाह। एवमित्यादिना। संशयप्रयोजकं विषयवाक्यमुदाहरति। छान्दोग्यैरिति। "य एष" इति प्रसिद्धवन्निर्देशः न तस्यानुवादकत्वं शंक्यम्, अस्यार्थस्य प्रमाणान्तरैरप्राप्तत्वात्। "आदित्ये" मण्डले हिरण्मयः इतरविलक्षणसुखस्वरूपः। उक्तञ्च-हिरुक् सुखं हिरण्यं स्यात् बाह्यानन्दात् पृथग् यतः॥ आधिक्यार्थे मयट् यस्मादधिकानन्दरूपकः" इति। दृश्यते योगिभिरित्यर्थः॥ दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" रितिश्रुतेः। सुवर्णवर्णतया वासुदेवोऽपि हिरण्मय इतिच न केवलं भगवत्स्वरूपस्यैव हिरण्मयत्वं किन्तु तदवयवानामपीत्याह। हिरण्यश्मश्रुरिति। आप्रणखात् प्रणखमारभ्य। सुवर्णः सुवर्णवर्णः। सुवर्णवर्ण इत्युक्त्या चक्षुषोऽपि सुवर्णवर्णत्वप्राप्तेस्तत्र विशेषमाह। तस्येति। कप्यासमिति। कं पिबतीति कपिः सूर्यस्तेनास्यते विकास्यत इति कप्यासम्। कं पिबतीति कपिः नालम्। तस्मिन्नास्ते इति वा कप्यासम्। अपचितादपि पङ्कजात् नालस्थपुण्डरीकस्य शोभाऽतिशयोऽस्तीति सोऽत्र विवक्षितः। कं जलम्, आस उपवेशने' इतिधातुरपिपूर्वकः 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति वचनादपेकारलोपः कप्यासं सलिलस्थमित्युक्तं भवतीत्यर्थः॥ पुण्डरीकं रक्तपद्मम् तद्वदक्षिणी वर्त्तते तस्य रहस्यं नामाह। तस्येति। तस्य पुरुषस्योदितिनाम कुतः स एष आदित्यस्थः पुरुषः सर्वेभ्यः पाप्मभ्य उदेति उद्गतो भवति। ह वै प्रसिद्धम्। य एवं

आदित्यमण्डलाक्ष्णोरन्तःस्थत्वेन श्रूयमाणः पुरुषः किंजीवविशेष उत परमपुरुष इति। हिरण्यश्मश्रुर्हिरण्यकेशः अन्तरादित्ये, अन्तरक्षिणि येचामुष्मात्पराञ्चो लोका येचैतस्माद्-वाञ्चो लोकाः' इत्यादिना रूपवत्त्वपराश्रितत्वपरिच्छिन्नैश्वर्यवत्त्वश्रवणात्। परस्य तु 'अशब्द-मस्पर्शमरूपं, स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि स एष सर्वेश्वर एष भूताधिपति-रित्यादिना तद्विपरीतश्रवणादतः पुण्यवत्प्राप्तैश्वर्यः कश्चित् क्षेत्रज्ञविशेष इति पूर्वपक्षः। परमपुरुष एवेति राद्धान्तः कुतस्तद्धर्मोपदेशात्। तस्य परमेश्वरस्यैव धर्माणां सर्वपापगन्ध-सम्बन्धास्पर्शत्वस्वोपासकसर्वपापमोचयितृत्वादीनां सैवा ऋक् तत्सामेत्यादि सर्वात्मकत्वादी-नामस्मिन् वाक्ये उपदेशात्। "यदा पश्यः पश्यते रुक्मवर्णमादित्यवर्णं तमसः परस्तात्। 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्, इत्यादिशास्त्रा-त्सत्यसङ्कल्पत्वादिस्वाभाविकधर्मवत्त्व रूपवत्त्वस्याप्यविरुद्धत्वात्। अशब्दमित्यादि-वाक्यस्य च प्राकृतशब्दादिनिषेधपरत्वात्। नच पराश्रितत्वं तस्य वाच्यं सर्वाश्रयत्ववत् सर्वान्तरत्वस्यापि 'अन्तःप्रविष्टः शास्ता। सर्वभूतान्तरात्मा। यः पृथिव्यां तिष्ठन्नि'त्यादि

---

वेद'इत्युपासनाविधानार्थं तस्य कल्पितं रूपमिति तु न शङ्क्यम्। 'न सन्दृशे तिष्ठति रूपमस्य, इत्युक्त्या हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्तेभवन्ति" इति यदा पश्यः पश्यते रुक्मवर्णमितिप्रकरणे। मनसा तु विशुद्धेने' ति विशुद्धमनोग्राह्यतोक्तेः मे "ऋक्साम च गेष्णो ऋक्सामयोः गेष्णत्वरूपं पर्वत्वमुच्यते। पर्वस्वेव गेष्णशब्दप्रसिद्धेः हृद्रोगाना मित्यर्थः। "अधिदैवतम्' विभक्त्यर्थे यदव्ययमिति समासे अधिदैवतमित्यस्य देवतायामित्यर्थः। तत्रोपासनमिति फलितम्। अध्यात्मम् आत्मन्युपासनम्। अध्यात्मशब्दो देहवचनः। अथ य एष इति। य एष पुरुष उद्गीथाख्यो भगवानक्षिस्थोऽन्तः दृश्यते ज्ञानदृष्ट्या स एव ऋक्सामाद्यात्मकः। चक्षुस्थस्य भगवतः कीदृशं रूपादिकमित्यतो यादृशं सूर्यस्थस्य तादृश-मेवास्य रूपमित्यर्थः। शरीरसम्बन्धत्वमपहतपाप्मत्वयोः सन्देहकारणयोः सत्त्वात्, उक्तविषयवाक्ये संशयं दर्शयति तत्रेति। विषयवाक्य इत्यर्थः। तत्र पूर्वपक्षस्य साधकं लिङ्गमाह हिरण्यकेशइति। एतद्वाक्यमादित्यमण्डलपुरुषस्य-रूपवत्त्वसाधकम्। तस्य पराश्रितत्वगमकं वाक्यमुदाहरति। अन्तरादित्य इति। परिच्छिन्नैश्वर्यावबोधकं वाक्यं पठति। ये चामुष्मादिति। स एषोऽक्षिस्थपुरुषः ये चास्मादर्वाञ्चो लोकाः पातालाद्यास्तेषां चेष्टे तेषामधिपतिः येचामुष्मादन्तरिक्षलोकाः स्वर्गादयस्तानाप्नोति स एषोद्गाता। उद्गानेन योग्यान् प्रापयतीत्यर्थः। एतेन रूपादिसम्पन्न एवोपास्य इति फलितम्। अपास्तसमस्तरूप अप्राकृताधारश्च एष सर्वेश्वरः' इत्यादिश्रुतिभिरधि-गतनिर्मर्यादैश्वर्यश्च भगवान् शक्य उपास्यत्वेन नेह प्रतिपत्तुमिति प्रतिपादनाय तद्वाक्यान्युदाहरति। अशब्दमिति। अशब्दमित्यनेनापास्तसमस्तरूपश्च प्रदर्शितः। स्वे महिम्नि'इत्यादिना तस्यानाधारत्वं स एष सर्वेश्वर इति श्रुतिभिरधिग-तनिर्मर्यादैश्वर्यत्वं स्फोरितम्। पूर्वपक्षं निगमयति। अतइति। रूपादिमत्त्वात् अक्ष्यादित्ययोरन्तःस्थः कश्चिज्जीवविशेष एवो-पास्य न परमात्मा अपास्तसमस्तरूपत्वादनाधारत्वान्नित्यत्वात्सर्वगतत्वादिति शङ्कितुराशय इत्यर्थः। सिद्धान्तयति परमपुरुष एवेति। प्रत्यगात्मा प्राप्तैश्वर्यः कस्मान्नेतिपृष्ट्वा हेतुमाह। कुतइति। सूत्राक्षराणि व्याचष्टे। तस्येति। भगवतः श्रीपुरुषोत्तमस्य रूपत्वनिखिलजगत्कर्तृत्वविधिशिवादिनियन्तृत्वबोधिकां श्रुतिमुदाहरति। यदेति। यदा पश्यः द्रष्टा पुरुषं पश्यते तदैव पुण्यपापे विधूय निरञ्जनः पुण्यादिलक्षणाञ्जनशून्यः सन् साम्यमुपैतीत्यर्थः। पुरुषं विशिनष्टि। रुक्मवर्णमिति। प्रकाशात्मकं वर्णरूपं यस्य तम्, तत्साधकं वचनान्तरमुदाहरति। आदित्य-वर्णमिति। अनेन दलेन प्रकाशात्मकरूपवत्त्वम्। अनावरकस्वभावत्वञ्चोक्तम्। तमसःपरस्तादित्यनेन तमश्शब्दा-भिधेयप्रकृतिकालानां विलक्षणमित्यर्थः। स्वोक्तार्थं श्रीपराशरवचसा द्रढयति, समस्ता इति। अंश ५। अ०। ७।

शास्त्रसिद्धत्वात् । नापि तस्य परिच्छिन्नैश्वर्यवत्त्वमत्र विधीयते, अधिदैवादिव्यवस्थापरत्वात् परिच्छेदवाक्यस्यैकदेशकथनेन परिच्छिन्नत्वप्रतीयते । यथानन्तब्रह्माण्डनायकोऽपि श्रीकृष्णो वैकुण्ठनाथो गोकुलनाथो व्रजराजो द्वारिकाधिपतिरिति । नच रूपवत्त्वे शरीरसम्बन्धोऽप्यवश्यंभावी स च कर्मवश्यानां जीवानामेव कर्मानुगुणप्रियाप्रिययोगायैवेति वाच्यम् । सत्यसङ्कल्पस्य भगवतः स्वेच्छयैव स्वानुरूपाप्राकृतशरीरसम्बन्धस्य सम्भवेन कर्मवश्यत्वाभावात् । 'अजायमानो बहुधा व्यजायते' ति श्रुतेः । 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया । परित्राणाय साधूनां विनाशाय च दुष्कृताम्, न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इत्यादिस्मृतेश्च । तत्र प्रकृतिः स्वभावः । स्वमेव भावमास्थाय स्वस्वरूपे स्थित्वा इत्यर्थः । आत्ममाययेति स्वसङ्कल्पमात्ररूपेण ज्ञानेनेत्यर्थः । साधुशब्देन भगवदुपासकाभ्यातत्परित्राणस्यैवोद्देश्यत्वात् दुष्कृतविनाशस्त्वानुषङ्गिकः ॥२१॥

---

श्लो० सं० । ७० ॥ अथोक्तशक्तित्रयस्यास्त्रभूषणादिरूपेण नित्याश्रयभूतं जगदेककारणतयोक्तं भगवद्रूपं तस्य शुभाश्रयत्वं वक्तुमाह । शक्त्यश्चेति । तद्विश्वरूपवैरूप्यम्, उक्तविश्वरूपवैलक्षण्यं रूपं शरीरं आदित्यवर्णं तमसः परस्तात् । अमृतो हिरण्मयोः विद्युतः । पुरुषादधिमहारजतं वासः पुण्डरीकमेवाक्षिणी रुक्मवर्णं कर्त्तारमीशं रुक्माभम्, इत्यादिवचनसिद्धं 'महत्' स्थूलं गुणतोऽपि महत्त्वं विवक्षितम्, एवंविधं रूपमस्यास्तीति सिद्धमित्यर्थः । समस्तशक्त्याश्रयं तद्रूपं भगवानेव जगदुपकाराय स्वलीलया देवतिर्य्यङ्मनुष्यादिचेष्टावन्ति देवाद्यवताररूपाणि करोतीत्याह तदग्रिमश्लोकेन "समस्तशक्तिरूपाणि तत्करोति जनेश्वरः । देवतिर्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ७१ ॥ अन्तरादित्ये, ऽन्तरक्षिणि चेत्यादिनोभयोः पराश्रितत्वमुक्तं तन्निरस्यति । नचेति । नहि सर्वाश्रयत्वस्य परब्रह्मणः पराश्रयत्वं भवितुं शक्यमित्यर्थः । उक्तश्रुत्योपासनाधारत्वं बोध्यते । तस्य सर्वभूतान्तरात्मत्वे श्रुतिं प्रमाणयति । अन्तःप्रविष्ट इति । आदिना 'सर्वस्य चाहं हृदि सन्निविष्टः । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति स्मृतिः परिगृहीतव्या । ये चामुष्मात् पराञ्चो लोका इत्यादिनादित्यान्तर्वर्तिनः परिच्छिन्नैश्वर्यत्वं श्रूयते येचास्मादर्वाञ्चो लोका इत्यनेनाक्ष्यन्तर्वर्तिनः परिच्छिन्नैश्वर्यत्वञ्चेतिपूर्वपक्षोक्तं परिहरति । नापीति । अधिदैवादीति । देवतायमुपासनार्थमित्यर्थः । परिच्छिन्नवदिति । नतु परिच्छिन्ना इत्यर्थः । परिच्छिन्नवत्प्रतीतौ दृष्टान्तमाह । यथेति । श्रीवासुदेवस्य गोकुलनाथत्वमुच्यमानेऽनन्तब्रह्माण्डनायकत्वं निषिध्यति किमितिभावः । यदीश्वरस्वरूपवत्वं तदा सत्यसङ्कल्पस्य भगवत इच्छामात्रादेव स्वानुरूपदिव्यमङ्गलविग्रहसम्बन्धः स च नित्यसिद्ध एव अस्तुवा कर्म पारवश्यत्वं हि प्राकृतशरीरसम्बन्धे प्रयोजकं नत्वाप्राकृतदिव्यशरीरे । अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत् । प्रकृतिभ्यो परं यत्तदचिन्त्यस्य लक्षणमिति स्मृतिरत्रानुसन्धेया । उक्तार्थं स्मृत्यापि दर्शयति । अजोपीति । प्रकृतिसंसर्गेऽप्यनिवृत्त्यर्थं व्याचष्टे । अवताराणां रूपमप्राकृतं दर्शयितुं महाभारतवचनमुपन्यस्यति 'न भूतसंघसंस्थानो देह इति । 'अजोऽपि सन् सम्भवामी' ति विधिनिषेधयोरपि प्रागुक्तदिशाऽर्थोवसेयः । स्वभाव इति । सच निरुपाधिकधर्मस्तेनच विग्रहस्य स्वाभाविकत्वं स्फोरितम् । यदि परो वादी आत्ममायाया अपारमार्थिकत्वं ब्रूयात्तं पराक्षेप्तुं तदर्थं विवृणोति । स्वसङ्कल्पमात्ररूपेणेति । माया वयुनं ज्ञानमिति निरुक्तकारः । उपासकानुग्रहार्थत्वं कथमवगम्यत इत्यत्राह । साधुशब्देनेति । आनुषङ्गिक इति । विनाशाय च दुष्कृतामिति चशब्दोऽन्वाचयपर इति भावः । समुच्चयः समप्रधानयोः । अन्वाचयः प्रधानानुषङ्गिकयोः । दुष्कृतविनाशस्यानुषङ्गिकत्वमुपपादयति । आनुषङ्गिकत्वमिति हेत्वन्तरमाह भेदेति । आदित्याख्यक्षेत्रज्ञात्परमात्मनो भेदबोधिकां श्रुतिमुदाहरति । य आदित्य इति । "य आदित्ये

## भेदव्यपदेशाच्चान्यः । १ । १ । २२ ॥

इतश्चादित्याद्यन्तःस्थः परमेश्वर एव कुतः 'य आदित्ये तिष्ठन्नादित्यादन्तर' इत्यादि-श्रुत्याऽऽदित्यादिक्षेत्रज्ञवर्गात्परमात्मनो भेदेन व्यपदेशात् । २२ ॥

## आकाशस्तल्लिङ्गात् । १ । १ । २३ ॥

छान्दोग्ये शालावत्यजैवलीसम्वादे इदं श्रूयते अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान् परायणम्' इत्यत्राकाशशब्दनिर्दिष्टः किं प्रसिद्धाकाश उत पर-मात्मेति संशयः । भूताकाश इति पूर्वपक्षः यतः प्रसिद्धतरप्रयोगे तस्यैव झटिति बुद्ध्य-वारोहणात् ब्रह्मणि तु गौण आकाशशब्दो विभुत्वादिधर्मैर्ब्रह्मण आकाशसादृश्यात् । यत्सदा-

---

तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरञ्च य आत्मानमन्तरो यमयतीतिश्रुतयोऽत्रानुसन्धेयाः । आभिः श्रुतिभिः आसां देवतानां मुक्तावस्थायामपि परमात्मनो भेदः स्वाभाविको नियन्तृत्वव्याप्तित्वसार्वज्ञ्यैः धर्मैः प्रतिपत्तुं शक्यते इत्यर्थः । २२ ॥

इत्यन्तरधिकरणम् ।

ब्रह्मलिङ्गकानां सर्वेषां वेदान्तवाक्यानां ब्रह्मण्येव समन्वयार्थं प्रथमाध्यायारम्भस्तत्र पूर्वाधिकरणेन" अथ य एषोऽन्तरादित्ये हिरण्मय" इत्यादिश्रुतीनां समन्वयस्तत्रोक्तः सम्प्रति अस्य लोकस्य का गतिरित्यादिश्रुतयो ब्रह्म-साधारणलिङ्गकाः उक्तलक्षणब्रह्मण्येव योजयन्ति । **आकाशस्तल्लिङ्गादित्यादिना** । छान्दोग्यवाक्यमुदाहरति । **छान्दोग्य इति** । शालावत्यो ब्राह्मणो जैवालीं राजानं पृच्छति । अस्य पृथ्वीलोकस्य कागतिरयनं प्राप्यमित्यर्थः । इति शालावत्येन पृष्टः प्रवाहण आकाश इत्युक्तवान् । कथमेतस्य पृथिव्यादिलोकस्याकाशगतित्वमित्यतस्तन्माहा-त्म्यमाह । **सर्वाणीति** । सर्वाणि प्रमाणप्रसिद्धानि भूतानि स्थावरजङ्गमानि आकाशादेव समुत्पद्यन्ते हवा इत्यस्यार्थस्य' वैदिकीं सुप्रसिद्धिमाह । आकाशं प्रत्यस्तमदर्शनं यन्ति तत्र प्रलये मुक्तौ च लीनानि भवन्ति । कुतः ? हि यस्मादाकाश एव सर्वभूतेभ्यो ज्यायान् । तदपि कुतः, आकाशः उत्क्रमाश्रयः, परमप्राप्य इति यावत् । ज्यायस्त्वं नाम सर्वकल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षत्वम् । इति श्रुत्यर्थः । विचारस्य पूर्वाङ्गसंशयमाह । **इत्यत्रेति** । भूताकाशे आकाशशब्दस्य प्रसिद्धत्वं ज्यायस्त्वपरायणत्वयोरनुपपन्नत्वञ्च संशयस्य बीजं द्रष्टव्यम् । पूर्व-पक्षस्य साधकं हेतुं दर्शयति । **यतइति** । तदेवाह । **प्रसिद्धतर इति** । योगाद्रूढेर्बलीयस्त्वान्नार्थान्तरपरत्वमा-काशशब्दस्येतिभावः । यथा हर्य्यादिपदानामनेकार्थत्वं तथाऽऽकाशपदस्याप्यनेकार्थत्वं कल्पनीयमत आकाशशब्दस्य ब्रह्मणि गौणार्थत्वेन समर्थयति । **ब्रह्मणित्विति** । गौणत्वार्थं गुणयोगमाह । **विभुत्वादिधर्मैरिति** । "सदेव सोम्येदमग्र आसीत्, यतो वा इमानि भूतानि जायन्ते, तत्तेजोऽसृजत, आत्मा वा इदमेक एवासीत्—स इमाँल्लोकानसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिवाक्येषु साधारणैर्यत्तच्छब्दैः स्वाभिमतविशेषपर्य्यवसानं कर्तुं शक्यत इत्याह । **यत्सदादिशब्दैरिति** । उक्तश्रुतिवाक्येषु सदादिपदेनाकाशोऽपि ग्रहीतुं शक्यते यतो यत्त-दादिशब्दाः सर्वसाधारणाः योहि बुद्धिस्थः स एव यत्तदादिपदशक्य इत्याशयेनाह । **साधारणत्वेनेति** । छागोवा-मन्त्रवर्णादिति न्यायोऽभिप्रेत इति । साधारणशब्देन विशेषस्य कथं निर्णय इत्यत आह । **आकाशादेव समुत्पद्यन्त इति** । तादृशवाक्यशेषादेव यत्तदादिशब्दा आकाशपरा इति निर्णेतुं शक्यते यत्रोभयोरर्थयोः सन्देहस्तत्र वाक्यशेषादेवार्थविशेषस्य निश्चयो भवति यथा यवमयश्चरुर्भवतीत्यादौ ॥ किं जगत्कारणमित्यपेक्षायां

दिशब्दानामपि साधारणत्वेनाकाशादेव समुत्पद्यन्त इति वाक्यशेषे विशेषपर्यवसानात्। ईक्षणादयस्तु तत्र गौणा वर्णनीया 'आकाशाद्वायुर्वायोरग्निः' रित्यादि श्रुत्या ज्यायस्त्वपरायणत्वेऽपि भूतान्तरापेक्षया तत्रोपपद्येते, तस्मादाकाशशब्देन भूताकाश एवेति प्राप्तेराद्धान्तः आकाशोऽत्र परमात्मैव कुतः तल्लिङ्गात् लीनं स्वावच्छिन्नधर्मिविशेषं गमयति परिच्छिनत्तीति व्युत्पत्त्या तस्य परमात्मन एव सर्वकारणत्वज्यायस्त्वपरायणत्वादेर्लिङ्गादव्यभिचारिधर्मात् नह्येतेषां भूताकाशे सम्भवः तस्य वाय्वादीनां कारणत्वादिसम्भवेऽपि आकाशादेवेत्येवकारस्य सर्वाणीति सर्वपदस्य च पाठान्न सर्वकारणत्वादिलिङ्गानां तत्र सम्भवः। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यात्मकार्यत्वश्रवणाच्च। स्वस्य स्वकारणत्वे आत्माश्रयत्वापत्तेः। आसमन्तात्

सदेव सोम्येदमग्र आसीदित्यादौ साधारणशब्दैर्जगत्कारणं निर्दिष्टं ततोऽस्य लोकस्य का गतिरितिप्रश्ने समाधानं सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्युक्तं ततो निश्चिनुमः आकाशशब्दोऽत्र प्रसिद्धाकाशपर इति भावः। यद्युक्तवाक्यादाकाश एव जगत्कारणं ब्रह्म इति निश्चीयते तदा ईक्षणादीनां गौणत्वेन निर्वाह इत्याह। ईक्षणादयस्त्विति। ज्यायस्त्वपरायणत्वादीनां भूताकाशेऽसम्भवान्न वाक्यशेषेण भूताकाशो निर्णेतुं शक्य इत्यतस्तत्समर्थनोपयिकं वाक्यं तावदुदाहरति। आकाशाद्वायुरिति। तत्रोपपद्येत इति। तत्र=भूताकाशे। फलितमाह। तस्मादिति। ज्यायस्त्वपरायणत्वादिधर्मोपपत्तेन इत्यर्थः। भूताकाश इति प्राप्तमनूद्य सिद्धान्तयति। इति प्राप्तेरिति। हेतूत्थापकवाक्यमाह। कुत इति। यौगिकवृत्त्या लिङ्गशब्दार्थं विवृणोति। लीनमिति। किं लीनमित्यतस्तदर्थं व्याचष्टे। स्वावच्छिन्नेति। स्वमाकाशत्वम्। धर्मिविशेषम्=निखिलजगत्कारणं परमात्मानम्। परिच्छिनत्तीति। व्यावर्तयति। अचेतनात् भूताकाशाद् भिन्नः परमात्मेत्यर्थः। तस्य लिङ्गमिति विग्रहस्य हेतुं व्याकरोति। सर्वेत्यादिना। नहि तेषां लिङ्गानां परमात्मत्वसाध्यत्वे व्यभिचारित्वमित्युपपादनायाह। अव्यभिचारिलिङ्गादिति। उक्तलिङ्गानामाकाशे स्वरूपासिद्धत्वं व्युत्पादयति। नह्येतेषामित्यादिना। तस्य=आकाशस्य। सर्वकारणत्वेति। अनेनैककारणत्वानुपपत्तिश्चाभिमता नह्याकाशो निमित्तकारणं भवितुमर्हति हेयत्वात् पुरुषार्थविरोधित्वाच्च। कृत्स्नजगत्कारणत्वादाकाशशब्दाभिधेयः परमात्मैवेति भावः। साक्षादेवात्मकार्यत्वमाकाशस्य श्रुतौ श्रूयत इत्यतस्तां श्रुतिं पठति। तस्माद्वेति। स्वं प्रति स्वस्य कारणत्वमुपपद्यत इत्याह। स्वस्येति। आत्माश्रयत्वापत्तेरिति। यदि स्वोत्पत्तौ स्वस्य कारणत्वं स्यात् तदा स्वस्य स्वाव्यवहितपूर्ववृत्तित्वं स्यान्नस्वेवं तस्मात्तथा नेति तर्कान्तर्गतस्यात्माश्रयस्याऽऽपाद्याभावेनापादकाभावसाधकत्वमिति भावः। कथमाकाशशब्दस्य परमात्मवाचित्वमित्यत्राह। आसमन्तादिति। काशत इत्युक्त्याऽऽकाशशब्दस्य सर्वप्रकाशकत्वं प्रवृत्तिनिमित्तमभिहितम्। अवयवशक्त्याऽऽकाशशब्दस्य परमात्मपरत्वं निरुच्य रूढ्या वृत्त्यापि परमात्मपरत्वं व्यवस्थापयितुमाह। यदेष आकाशानन्दो न स्यादिति। अत्रान्यानन्दसमर्पकत्वेनाकाशशब्दो परमात्मन्येव रूढो नतु भूताकाशे तस्याचेतनत्वेनान्यानन्दाजनकत्वात्। आकाशो ह वै नामरूपयोरिति नामरूपनिर्वाहकत्वं परमात्मन एवोपपद्यते। अत्राप्याकाशशब्दस्य परमात्मन्येव रूढत्वात्। आदिना "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता कं ब्रह्म खं ब्रह्म खं पुराणमित्यादयः परिगृहीतव्याः। पूर्वतन्त्रोक्तन्यायेन लिङ्गाद् दुर्बलात् बलीयस्याश्श्रुतेर्बाधः पूर्वतन्त्रे क्वापि नोक्तः कथमत्र वैपरीत्यमित्याशङ्कते। नन्वित्यादिना। तत्र निरपेक्षरवः श्रुतिः 'व्रीहीनवहन्ति' इति। अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीयानिरपेक्षेणैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम्। यथा 'बर्हिर्देवसदनं दामी' इति अत्र लवनप्रकाशकतया बर्हिर्लवने विनियोगः। परस्पराकाङ्क्षावशात् क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्। यथा "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नये जुष्टं निर्वपामि" इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन देवस्यत्वा इत्यादिभागस्यापि तत्र

काशत इति योगवृत्त्या यद्येष आकाश आनन्दो न स्यात्, 'आकाशो वै नामरूपयोर्निर्वहिते' त्यादिश्रुतौ रूढिवृत्त्या च ब्रह्मण्येवाकाशशब्दो मुख्यः। ननु 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षा'दिति न्यायेनाकाश इतिश्रुतेर्लिङ्गापेक्षया बलीयस्त्वाद्दुर्बलीयः प्रमाणं लिङ्गं तद्दुर्बलत्वेन बाधितुमर्हमितिचेन्न श्रुतिप्रमाणस्य बलीयस्त्वेऽपि प्रमेयलिङ्गोपपत्तावेव तस्य प्रवृत्तिरनुपपत्तौ चाप्रवृत्तिरिति न्यायादत्र परस्य ब्रह्मणोऽसाधारणलिङ्गानां भूताकाशे सर्वथानुपपन्नत्वादनुपपत्तिसहकृतलिङ्गस्य प्राबल्यात्तेन श्रुतेर्बाधो घटत एव। यथा केनचिदेकेन पुरुषेण बलीयांसो जना बाधितुमनर्हा अपि राजसहायेन तेनैव सर्वेऽपि बाध्यन्ते तथा केवललिङ्गेन निर्बलत्वाद्दुर्बलीयसी श्रुतिर्बाधितुमनर्हाऽपि बलवदनुपपत्तिप्रमाणसहकृतेन तेनैव

---

विनियोगः। लब्धवाक्यानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण सम्बन्धः आकाङ्क्षापर्यवसन्नं प्रकरणम्। यथा "समिधो यजति" इत्यादौ। अस्यहि दर्शपौर्णमासकथम्भावाकाङ्क्षायां पाठवशाच्छेषत्वं स्थानं क्रमः। सचानेकस्याम्नातस्य सन्निधिविशेषाम्नानम्। यथा "दब्धिरसि" इत्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः। मन्त्रभागेऽपि क्रमेणानुमन्त्रत्रयं पठितम्। तत्राऽग्निषोमीयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः। "दब्धिरसि" इत्यत्र तु न लिङ्गादिविनियोजकम्। किन्तु यस्मिन्प्रदेशे ब्राह्मण उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। समाख्या योगबलम्, यथा हौत्रमित्यादि। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्याता न कर्माणि होत्रादिभिरनुष्ठेयानि। पूर्वतन्त्रोक्तन्यायेन प्रकृताशङ्का पूर्वतन्त्रोक्तन्यायेनैव परिहरणीयेत्यतस्तस्य न्यायस्य स्वरूपं दर्शयति। प्रमेयलिङ्गोपपत्ताविति। केवलस्य लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेऽपि प्रमाणान्तरसहकृतलिङ्गस्य प्राबल्यमित्यर्थः। न्यायार्थं स्वयं विवृणोति। अत्र परस्येति। अस्मिन्नधिकरण इत्यर्थः। उक्तार्थं दृष्टान्तेन दृढयति। यथेति। इदं पुनरिहावधेयम्। हस्तेनावद्यति "स्रुवेणावद्यति स्वधितिनावद्यति" इत्यादौ हस्तस्रुवस्वधितीनामवदानसामान्यसाधनाश्रयत्वश्रवणेऽपि हस्तादिसामर्थ्यरूपानन्यथासिद्धलिङ्गबलेन सङ्कोचसहिष्णूनामवद्यश्रुतीनां पुरोडाशादिकठिनद्रव्याज्यादिद्रवद्रव्यमांसावदानविषयतया सङ्कोचरूपबाधस्याङ्गीकृतत्वात् "कृष्णलं श्रपयेत्" इत्यत्र कृष्णलेषु विक्लेदफलकव्यापारासम्भवेनाधिश्रयणादीनामुष्णीकरणसामर्थ्यप्रदर्शनेन मुख्यार्थबाधेनोष्णीकरणलक्षणा समाश्रिता। लोकेऽपि "अग्निर्घोषः", "गङ्गायां घोषः" इत्यादौ अध्येतृत्वघोषाधिकरणत्वरूपलिङ्गेनाग्निगङ्गपदश्रुत्योर्बाध आश्रितः। तस्मादन्यथासिद्धप्रतिपिपादयिषितसंकलकारणत्वानन्तवपरायणत्वादिलिङ्गविरोधेऽभ्यस्ताया अपि श्रुतेर्बाधो युक्त एव। नचैषां धर्माणां प्रतिपिपादयिषितत्वे किं मानमिति वाच्यम्। परपक्षमन्तवत्वेन दूषितवतो जैवालेरनन्तत्वे तात्पर्यावश्यम्भावात् तदुपपादकत्वेन जगत्कारणत्वादिष्वपि तात्पर्यकल्पनस्यावश्यंभावादित्यन्यत्रोक्तम्।

इत्याकाशाधिकरणम्।

विषयमाह। तत्रैवेति। छान्दोग्ये। उद्गीथ इति। "परोवरीयांसमुद्गीथमुपास्त" इत्युक्तत्वात् उद्गीथं उच्चत्वादुत् गीतत्वाद्गीः सर्वस्थानस्थत्वात्स्थः। उच्चासौ गीश्चासौ स्थश्चेत्युद्गीथं भगवन्तमुपासीत इत्यर्थः। उद्गीथाधिकारे प्रासङ्गिकं प्रस्तावध्यानमिति वक्तुमुद्गीथ इत्युक्तम्। कश्चिदृषिश्चाक्रायणो नाम धनार्थं राज्ञो यज्ञं गत्वा ज्ञानवैभवं स्वस्य प्रकटयन् प्रस्तोतारमुवाच हे प्रस्तोतर्या देवता प्रस्तावं भक्तिविशेषमन्वायताऽनुगताः तां चेदविद्वान् मम विदुषः सन्निधौ प्रस्तोष्यसि ते मूर्द्धा निपतिष्यतीति स भीतः सन्पप्रच्छ कतमेत्यादिना। प्रतिवचनं प्राण इति मुख्यप्राणं व्यावर्त्तयति। सर्वाणीति। प्राणमभिलक्ष्य लयकाले संविशन्ति जन्मकाले तमभिलक्ष्योज्जिहते प्राणा उद्गच्छन्ति सैषा परा देवता प्रस्तावं भक्तिविशेषमुपगतेत्यर्थः। प्राणशब्दस्य ब्रह्मणि वायुविकारे च दर्शनात्संशयस्तं दर्शयति। सर्वजगत्कारणतयेति। विषयवाक्ये भूतानामुत्पत्तिस्थितिलयाभिधानात् सर्वजगत्कारणतये-

बाध्यते सापीति न विरोध इति तस्मादाकाशपदवाच्यः परमात्मैवेति सिद्धम् । २३ ॥

## अतएव प्राणः । १ । १ । २४

तत्रैवोद्गीथे 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' प्रस्तुत्य इति 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमुज्जिहते सैषा देवता-प्रस्तावमन्वायत्ता' इत्यत्र सर्वजगत्कारणतया प्राणशब्दो निर्दिष्टः किंप्रसिद्धः प्राण उत परं ब्रह्मेति संशयः । सर्वस्य जगतः प्राणाधीनस्थितिदर्शनात् वायुवृत्तिप्राण एवेतिप्राप्तेऽतिदेशमुखे-नाह । अतएव, सम्वेशनोद्गमनरूपपरमात्मलिङ्गादेव प्राणशब्दवाच्यः परमात्मैव । विशेषशङ्कातु यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः प्राणं श्रोत्रं स यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्ते' इत्यादिश्रुत्या प्राणे कार्यपूर्वेणोद्गमदर्शनात्सएवात्रोपास्यतया विधीयते, इतिचेत्तत्रेन्द्रियमात्रसम्वेशादिसम्भवेऽपि महाभूतानां चेतनानाञ्च सम्वेशनादेस्तत्रा-श्रवणात् परमात्मैव प्राणयति सर्वं प्रकर्षेण अणिति स्थितिं लभते सर्वं जगद्यस्मिन्निति वा व्युत्पत्त्या प्राणशब्देनाभिधीयते इति । २४ ॥ इति प्राणाधिकरणम् ॥

## ज्योतिश्चरणाभिधानात् । १ । १ । २५ ॥

छान्दोग्ये गायत्रीविद्यायामिदमाम्नायते । 'अथ यदतः परो दिवोज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योति' रि-

---

त्युक्तम् ॥. तृतीयार्थः प्रकारतस्य निर्देशे ज्ञानविशेषेऽन्वयः सर्वजगत्कारणत्वप्रकारनिर्देशविषयीभूतः प्राणशब्द इतिबोध्य । वायुवृत्तः प्राण इति पूर्वपक्षगमकं लिङ्गमाह । सर्वस्येति । प्रसिद्धवायुवृत्त्यात्मकप्राणे प्राणाधीन स्थितिहेतुत्वेन जगत्कारणत्वमनुमातुं शक्यत इतिभावः । सूत्रस्थ अतएव शब्दार्थं व्याचष्टे । सम्वेशनोद्गमनमिति । अतिदेशस्य विशेषप्रयोजनं हि विशेषशङ्कापरिहारः । सूत्रकाराभिमतशङ्कां दर्शयति । विशेषशङ्कात्विति । वाक्चक्षुः श्रोत्रमनसां प्राणे एव लयस्तस्मादेवोद्गमनञ्च श्रूयते तस्माद्वायुविकार एवात्र प्राणशब्दार्थ इति विशेषाऽऽशङ्का तत्र वैदेकं प्रमाणमुदाहरति । यदा वै पुरुष इति । वागित्युपलक्षणं तेनानुक्तकर्मेन्द्रियाणां बोधः । चक्षुःश्रोत्र तादृग्बुद्धीन्द्रियाणामुपलक्षके बुद्धिरपि मनसा ग्रहीतुं शक्यते । भवतु तावदुक्तवाक्यादिन्द्रियाणां प्राणे लयोदयौ तथापि "सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसम्विशन्ति प्राणमभ्युज्जिहते" इति वाक्यशेषे भूतशब्दश्च प्राणिमात्रस्य महाभूतानाञ्च वाचको नेन्द्रियमात्रस्य तस्मान्न वायुविकारः प्राणो वाक्यशेषसिद्धः किन्तु सर्वकारणकारणं ब्रह्मैव प्राणशब्दवाच्यमिति समाधत्ते तत्रेन्द्रियमात्रेति २४ ॥

इतिप्राणाधिकरणम् । ६ ॥

विषयवाक्यं दर्शयति । छान्दोग्य इति । अतो दिवो द्युलोकात् परः परस्ताद् यत् ज्योतिर्दीप्यते । कुत्र दीप्यते तत्राह । विश्वत इति । कृत्स्नभूमिप्रदेशात् । सर्वतः=सर्वस्मात् भूरादिलोकादुपरि ये लोकास्तेभ्यः पृष्ठेषु बहिर्भूतेषु इति योजना हि पूर्वपक्षस्य बीजम् । न विद्यते उत्तमो येभ्य इत्यनुत्तमेषु । तत् सर्वलोकेषु दीप्यमानं इद वाव=इदं खलु, इदं किं यदिदमस्मिन्नन्तःपुरुषे पुरुषहृदये ज्योतिरस्ति तत् इति श्रुत्यर्थः । ज्योतिश्शब्दस्य लोके तेजसि प्रसिद्धत्वं शास्त्रे आत्मनि प्रसिद्धत्वञ्च संशयोत्थानबीजम् । निरतिशयदीप्तिमत्त्वमुभयसाधारणो धर्मः । संशय-

त्यत्र किं ज्योतिःशब्देन प्रसिद्धादित्यज्योतिरभिधीयते उत परं ब्रह्मेति संशये प्रसिद्धज्योतिरिति पूर्वपक्षस्तस्य तमोनिवारकत्वप्रसिद्धेः द्युमर्यादत्वश्रवणाच्च ब्रह्मणः सर्वगतस्य तदसम्भवात्। ननु भौतिकज्योतिष्यपि द्युमर्यादत्वानुपपत्तिरर्वागपि दिवो दर्शनादिति चेत्तस्योपासनार्थं द्युमर्यादत्वविधानमविरुद्धम्, ब्रह्मणस्तु विभुत्वेन निष्प्रदेशत्वान्न तद्युक्तम् 'चक्षुष्यः श्रुतो भवति य एवं वेदे'त्यल्पफलश्रवणाच्च। किञ्चेदं वाव तद्यदिदमन्तःपुरुषे ज्योति' रिति कौक्षेयज्योतिषैक्यावगमात् स्ववाक्ये तदतिरिक्तब्रह्मासाधारणलिङ्गादर्शनाच्चेति प्राप्ते राद्धान्तः। ज्योतिश्शब्दनिर्दिष्टं निरतिशयदीप्तिमत्परं ब्रह्मैव कुतो यतोऽस्य ज्योतिषः पूर्वस्मिन् वाक्ये 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'त्यत्र सर्वभूतचरणत्वाभिधानात्। सर्वभूतपादत्वञ्च परब्रह्मण एवोपपद्यते यच्छब्दस्य सर्वनामत्वेन प्रसिद्धपरामर्शित्वात्। पूर्ववाक्ये द्युसम्बन्धितया प्रसिद्धं ब्रह्म अत्रापि द्युसम्बन्धिविशेषात्तदेव यच्छब्देन प्रत्यभिज्ञायते नच द्युमर्यादाश्रवणविरोधः। परशब्दस्योत्कृष्टवाचित्वेनाव्यापकत्वस्याविवक्षितत्वात्। 'तदेव ज्योतिषां ज्योतिरायुर्होपासते' इत्यादौ ज्योतिश्शब्दस्य ब्रह्मपरत्वेन श्रवणात् न फलश्रवणविरोधोऽपि ब्रह्मणः सर्वफलदातृत्वेन तदुपासनेऽल्पाधिक्यफलनियमाभावात्। श्रूयते च वाजसनेयिनामग्निरहस्ये 'तंयथा यथोपासते तदेव भवती' ति। अत्रच कौक्षेयज्योतिषातादा-

---

न्यायाङ्गं दर्शयति। किं ज्योतिःशब्देनेति। ज्योतिश्शब्दस्य तमोऽपसारकत्वे प्रसिद्धत्वात्तथात्वञ्च प्रसिद्धतेजसस्तदेवात्र ज्योतिरिति पूर्वपक्षमाह। प्रसिद्धज्योतिरिति। तस्य गमकं लिङ्गमाह। तमोनिवारकेति। परो दिव इति मर्यादां ब्रूते तस्मादपि प्रसिद्धज्योतिरेवेत्याह। द्युमर्यादत्वश्रवणाच्चेति। परिच्छिन्नस्य वस्तुनः द्युमर्यादत्वमुपपद्यते नत्वपरिच्छिन्नस्य ब्रह्मण इत्याह। ब्रह्मण इति। प्रसिद्धज्योतिषः सर्वत्र गमनत्वं श्रूयते द्युमर्यादत्वमनुपपन्नमित्याशङ्कते। नन्विति। ज्योतिषः परो दिव इत्यभिधानमुपासनार्थमिति समधत्त इति। तस्योपासनार्थमिति। तस्य=प्रदेशविशेषस्य। सर्वगतस्य ब्रह्मणः प्रदेशविषयत्वकल्पनमप्रामाणिकमित्याह। ब्रह्मणस्त्विति। प्रसिद्धज्योतिषोऽब्रह्मत्वे हेत्वन्तरमाह। चक्षुष्य इति। दर्शनीय इति तदर्थः। श्रुतः=विश्रुतः। अल्पफलेति। ब्रह्मोपास्तिर्नाल्पफला युक्ता किन्तु भगवद्भावापत्तिरूपामुक्तिफलेति भावः। उपास्यज्योतिषो ब्रह्मत्वाभावे हेतुमाह। किञ्चेदमिति। बहून्यब्रह्मलिङ्गानि स्ववाक्यान्युक्त्वा ब्रह्मलिङ्गं किमपि तत्र नास्तीत्याह। स्ववाक्ये। "अथ यदतःपर" इति वाक्ये। तदतिरिक्त इति। ज्योतिश्शब्दादतिरिक्त इत्यर्थः। पूर्वपक्षमनूद्य समाधत्ते। प्राप्तेरिति। प्रतिज्ञावाक्यं दर्शयति। ज्योतिश्शब्दनिर्दिष्टमिति। निश्चितब्रह्मलिङ्गं विना नास्य ब्रह्मतेति शङ्कित्वा हेतुमाह। कुत इति। चरणत्वेन सर्वभूताभिधानं जीववैलक्षण्यनिश्चायकं जीवमात्रस्य सर्वभूतपादकत्वानुपपत्तेः। तत एव पुरुषसूक्तप्रत्यभिज्ञापकतया परमात्मनिश्चयः तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्ट्वे हेतुतापरिहारश्च भवतीति भावः। 'यदतःपरः' इति श्रुतौ यच्छब्दस्य सर्वनामतया प्रक्रान्तवाचित्वात् पूर्ववाक्यप्रसिद्धं ब्रह्म यच्छब्देनात्रापि ग्राह्यमित्याह। यच्छब्दस्येति। पूर्ववाक्ये द्युमर्यादाश्रवणात् कथमस्य वाक्यस्य परमात्मपरत्वमित्याशङ्क्य परिहरति। नचेति। अथ यदतःपरो=दिवो ज्योतिरित्यत्र परशब्दो न परिच्छिन्नत्वं वक्ति येनोक्तविरोधः प्रसज्येत किन्तूत्कृष्टत्वमित्याह। परशब्दस्येति। स्वोक्तार्थे श्रुतिं प्रमाणयति। तदेवेति। तत् परं ब्रह्म सूर्यादिज्योतिषां ज्योतिः परब्रह्म प्रकाशकम्। आयुरमृतमितिच देवा उपासत इत्यर्थः। प्रागुक्तार्थमनूद्य समादधाति। न फलेति। उक्तार्थे मानमाह। श्रूयत इति। "अन्नादो वसुदानः" चतुर्विधा भजन्ते माम्, सकलफलप्रदो विष्णुः।

स्योपासने तात्पर्यम् । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति भगवदुक्ते रितिभावः ॥ २५ ॥

**छन्दोऽभिधानान्नेतिचेन्न तथाचेतोऽर्पणान्निगमात्तथाहि दर्शनम् ।**

**१ । १ । २६ ॥**

पूर्ववाक्ये 'गायत्री वा इदं सर्वमिति' गायत्र्याख्यच्छन्दस एव प्रकरणात्सर्वभूतपादत्वेन तस्याभिधानान्न ब्रह्मेति चेन्न तथाचेतोऽर्पणनिगमात् वर्णसन्निवेशमात्रायास्तस्याः सर्वात्मकत्वासम्भवात् तद्द्वारेण ब्रह्मणि चेतोऽर्पणं चित्तसमाधानं निगम्यते. गायत्रीसादृश्यानुसन्धानं फलार्थमात्रोपदिश्यते । तत्र दृष्टान्तः तथाहि दर्शनं यथा गायत्रीषडक्षरैः पादैश्चतुष्पदा तथा ब्रह्मापि चतुष्पादिति चतुष्पादत्वयोगात्सा दृश्यते चान्यत्रापि

---

इत्यादिवचनेभ्यः सकलफलदातृत्वं श्रीभगवतः पुरुषोत्तमस्यैवेतिभावः । कौक्षेयज्योतिषः ब्रह्माभिन्नत्वं श्रीमुखेनैवोदाहृतमित्याह । अत्रेति । २५ ॥

पूर्ववाक्यस्य गायत्र्याख्यच्छन्दःप्रतिपादकत्वान्न परमात्मा प्रकृत इत्यनूद्य निराकरोति । छन्दोऽभिधानादिति । सूत्रस्य शङ्कोत्थानपरं पूर्वभागं व्याचष्टे । **पूर्ववाक्य इति** । 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी''ति वाक्य इत्यर्थः । तस्य=गायत्र्याख्यच्छन्दसः । सूत्रस्यापरभागं समाधानपरमनूद्य व्याकरोति । **तथाचेत इति** । छन्दोमात्रपरत्वेऽनुपपत्तिं दर्शयति । **वर्णसन्निवेशमात्राया इति** । एवं छन्दःपरत्वेऽनुपपन्ने सति पूर्वोदाहृतवचनस्य कोऽर्थ इत्यत्राह । **तद्द्वारेणेति** । गायत्र्याख्यछन्दोद्वारेणेत्यर्थः । निगम्यते=उपदिश्यते । 'ग्रहवृदनिश्चिगमश्चे''ति गमेः कर्त्तरि कारके भावे चापो विहितत्वेन भावसाधनाप्प्रत्ययान्तस्योपदेशार्थकत्वं नानुपपन्नम् एतेन निगमशब्दः करणाधिकरणयोः घञन्ततया निपातितः तस्य करणार्थत्वं वेदे रूढम् । स्थानीयं निगम इति स्थानीये रूढत्वात् कथं निगमशब्दस्योपदेशार्थकत्वमिति निरस्तम् । रूढ्यर्थस्यात्र बाधितत्वेन योगार्थोपस्थितेस्सम्भवात् । स्वतोऽपरिच्छिन्नमपि ब्रह्म तस्योपासनार्थमेव परिच्छिन्नैः पदार्थैः चतुष्पात्त्वस्योपदेशो युज्यत एव गायत्रीसादृश्यरूपस्य चतुष्पात्वस्यानुसन्धेयता प्रतीयते तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पादत्वेऽभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्यर्थं पूर्णत्वमचलत्वस्थिरत्वगुणकृतयैव चतुष्पादब्रह्मण उपासनं विधीयत इत्यभिप्रायेणाह । **गायत्रीसादृश्यानुसन्धानमिति** । सङ्ख्यासाम्यं साधयति । **यथेति** । **तेवा एत इति** । अस्याश्श्रुतेरयमर्थः । संवर्गविद्यायामधिदैवतम् अग्निसूर्यचन्द्रसलिलानि वायौ लीयन्ते । अध्यात्मञ्च वाक्चक्षुःश्रोत्रमनांसि प्राणे संश्रियन्ते, इत्युक्तं 'यदावाग्निरुद्वायती'त्यादिना । तत्राधिदैवतं वायुना सह पञ्चान्ये अध्यात्मं तेभ्योऽन्ये प्राणेन सह पञ्चदशसन्तस्तत्क्रमम् मिलितानां दशसङ्ख्याश्रयत्वात् कृतं भवति, कृतनामा कश्चिदयोद्यूतशास्त्रे प्रसिद्धः । सच चतुरङ्को दशात्मकः । कथं चतुरङ्कस्य दशात्मकत्वम् ? इत्थम्, चतुरङ्के अये त्रिद्व्येकाङ्कानां त्रयाणामप्यन्तर्भावात् । ततश्च शतं सहस्रेषु सम्भवतीति न्यायेन एकस्मिन्नेव चतुरङ्का ये चतुरङ्कत्र्यङ्कद्व्यङ्कैकाङ्कानामन्तर्भावादङ्कानां दशत्वसङ्ख्या सम्पद्यते ततश्च संवर्गविद्यान्तर्गतपदार्थानां दशसङ्ख्याश्रयत्वेन कृतनामकायसादृश्यात्तत्कृतमित्युच्यते तस्मात्सर्वासु दिक्षु चान्नमेव दशकृतम् उक्ताद्धेतोस्सर्वासु दिक्षु वर्त्तमानमग्निन्यायवादिदशकं कृतनाम स्थानीयकं भवति तस्यान्नत्वे हेतुमाह । **सैषा विराडिति** । दशाक्षरा विराट् "विराडन्न" मिति श्रुतेः । दशसङ्ख्यया विराटत्वं विराट्त्वादन्नमित्यर्थः । विधेयाभिप्रायः स्त्रीलिङ्गनिर्देशः । विराट्त्वेनान्नभूतानामेवेषां कृतनामकायत्वेनान्नादिकमप्यस्ति । कृतसंज्ञके ह्यये दशत्वसङ्ख्याया अन्तर्भूतत्वात् दशसङ्ख्याया विराट्त्वेनान्नत्वादन्नं कृतेऽन्तर्भूतम् अत उपचारात्

छन्दोभिधायिशब्दस्य सादृश्यात्प्रयोगः । 'तेवा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृत'मित्युपक्रम्याह 'सैषा विराडन्नादी' ति सम्वर्गविद्यायाम् ॥ २६ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् । १ । १ । २७ ॥

इतश्च गायत्रीशब्दोदितं ब्रह्मैवाभ्युपगन्तव्यं चकारोऽवधारणे यतो ब्रह्मण एव गायत्रीशब्दार्थत्वाभ्युपगमेनैव भूतपृथिवीशरीरहृदयानां पादत्वव्यपदेशोपपत्तेर्न केवलस्य छन्दसो भूतादयः पादा भवितुमर्हन्ति ॥ २७ ॥

## उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् । १ । १ । २८ ॥

पूर्ववाक्ये दिवीत्याधारत्वेन द्यौर्निर्दिश्यते इह च दिवःपञ्चम्या मर्यादात्वेन द्यौर्निर्दिश्यत इत्युपदेशभेदाज्ज्योतिर्वाक्ये न ब्रह्म प्रत्यभिज्ञायत इतिचेन्नोभयस्मिन्नप्युपदेशे तात्पर्य्यैक्येनाविरोधात् । यथा वृक्षाग्रे वृक्षाग्रात्परतो वा श्येन इति तस्माज्ज्योतिशब्दाभिधेयं निरतिशयदीप्तिमत्परं ब्रह्मैवेति सिद्धम् । २८ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्याऽऽम्नायते 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेणचेत्यारभ्य तत्र वरन्ते ददामीतीन्द्रेणोक्तः प्रतर्दनस्तंप्रति त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति तं वरं त्वमेवालोच्य मे मह्यं वृणीष्व देहीत्यर्थः । एवं प्रतर्दनेनोक्त इन्द्र इदमाह, प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति ।

---

कृतमन्नादीत्युच्यते । ततश्च गायत्रीपदप्रतिपन्नसादृश्यसिद्ध्यर्थतया सैषा चतुष्पदेति ब्रह्मणः प्रतिपाद्यचतुष्पात्त्वं विवक्षितमिति । २६ ॥

चशब्दमेवशब्दञ्च व्याकरोति । इतश्चेति । तदेव स्फुटयति । यत इति । सूत्रस्यादिपदार्थं विवृणोति । भूतपृथिवीति । पूर्वस्मिन्सूत्रे पादोऽस्येतिमन्त्रोक्तसर्वात्मकत्वानुपपत्तिरभिहिता अत्रतु सैषा चतुष्पदा षड्विधा गायत्री इत्यत्र गायत्रीशब्दाभिहितं ब्रह्म नाभ्युपेयते किन्तु गायत्रीछन्दोमात्रं छन्दसश्चतुष्पात्त्वानुपपत्तिरुच्यत इत्यर्थः । २७ ॥

सूत्रस्य पूर्वपक्षपरपूर्वभागं विवृणोति । पूर्ववाक्य इति 'त्रिपादस्यामृतं दिवीति वाक्ये 'दिवि' इति सप्तमीविभक्तिः । इह च 'अथ यदतःपरो दिव' इत्यत्र पञ्चमी । इत्युभयत्र विभक्तिभेदादुपदेशो भिद्यत इत्यर्थः । उपदेशभेदो दोषो नेति नञर्थमुक्त्वा हेतुमाह । उभयस्मिन्निति । यथा वृक्षाग्रे श्येन इति । यदाधारत्वं मुख्यं दिवस्तदा कथञ्चिन्मर्यादा व्याख्येया । सोहि श्येनो वृक्षाग्रे वस्तुतोऽस्ति सच ततः परोऽस्त्येव । अर्वाग्भागातिरिक्तमध्यपरभागस्थस्य तस्यैव वृक्षात्परतोऽवस्थानात् एवञ्च द्युभागातिरिक्तत्रिपादभूमिस्थस्य ब्रह्मणो द्युभागात् परतोऽवस्थानमुपपन्नं यदा तु मर्यादैव मुख्यतया प्राधान्येन विवक्षिता तदा लक्षणया सामीप्याधारत्वं व्याख्येयमितिभावः । अधिकरणार्थं निगमयति । तस्मादिति । इति ज्योतिरधिकरणम् । २८ ॥

विषयं वक्तुमुपक्रमवाक्यमुदाहरति । कौषीतकिब्राह्मण इति । दिवोदासस्यापत्यं दैवोदासिः । मुख्यं प्राणं निरसितुं प्रज्ञात्मत्वमुक्तम् । त मामिति । इदं प्राणस्येन्द्रदेवतात्वे लिङ्गम् । मुख्यप्राणत्वे लिङ्गमाह । अथेति । वागादीनां न देहधारणे शक्तिरिति निश्चयानन्तरमित्यर्थः । प्राणस्य देहधारकत्वमुत्थापकत्वञ्च प्रसिद्धमिति खलित्व-

उत्तरत्रापि 'अथ खलु प्राण एव प्रज्ञात्मा, इदं शरीरं परिगृह्योत्थापयतीति न वाचं विजिज्ञासीत । वक्तारं विद्यादिति च उपसंहारे च 'स एष प्राण एव प्रज्ञात्मा 'आनन्दोऽजरोऽमृत' इति श्रूयते, तत्रेन्द्रः प्राणशब्दवाच्यः किं जीव उत परब्रह्मेति संशये जीव इति पूर्वपक्षः । इन्द्रशब्दस्य तत्रैव प्रसिद्धेः । इन्द्रशब्दसहचरितप्राणशब्दस्यापि स एवार्थ इति तं मामायुरमृतमित्युपास्स्वेति तस्यैवोपास्यत्वोपदेशादितिप्राप्त आह ॥

## प्राणस्तथानुगमात् । १ । १ । २९ ॥

प्राणोऽस्मीत्यादीन्द्रप्राणशब्दनिर्दिष्टः परमात्मैव कुतः तथानुगमात् । हिततमत्वप्रज्ञात्मत्वानन्दत्वाजरत्वादीनांहि परमात्मपरिग्रहे सत्येवानुगन्तुं शक्यत्वात् ॥ २९ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् १।१।३०

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति तन्नोपपद्यते'मामेव विजानीहि मामुपास्स्वेति वक्तुरिन्द्रस्य त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छमित्येवमादिभिः प्रज्ञातजीवभावस्यैव स्वात्मन उपास्यत्वोपदेशात् । उपक्रमे जीवभावे निश्चिते 'सत्यानन्दोऽजरोऽमृत' इत्युपसंहारस्यापि तदनुगुणतया नेतव्यत्वादितिचेत्तत्र समाधत्ते—अध्यात्मसम्बन्धभूमा ह्यस्मिन् । आत्मनि सम्बन्धोऽध्यात्मसम्बन्धस्तस्य भूमा बहुत्वम्, आत्मन्याधेयतया सम्बध्यमानानां तदसाधारणधर्माणां तथा चिदचितोश्च बहुत्वेन सम्बन्धबहुत्वस्य वक्तुः परमात्मत्वे

---

त्युक्तम् । प्राणस्य जीवत्वे वक्तृत्वलिङ्गमाह । **न वाचमिति** । तत्र विचाराङ्गं संशयं दर्शयति । **तत्रेति** । विषयवाक्य इत्यर्थः । इन्द्रस्य प्रियं धाम, इत्युपक्रमे इन्द्रशब्दाभिनात् । प्राणोऽऽस्मि प्रज्ञात्मा स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोमृतः, इति प्राणशब्देन निर्दिष्टत्वाच्चेन्द्रः प्राणशब्दवाच्य इत्युक्तम् । प्राणशब्दो हि ब्रह्मलिङ्गबोधकवाक्यस्थः सिद्धान्तं द्योतयति । अतः सूत्रे प्राणशब्देन धर्मी विहितः नत्विन्द्रशब्देन । इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थमिति सूत्रकाराभिप्राय इतिभावः । तत्रैव=जीवे । सएवार्थः=जीव एवार्थः ।तस्यैव=इन्द्रस्यैव। पूर्वपक्षमनूद्यति । **इतिप्राप्त इति** । **सिद्धान्तयति** । **आह इति** । सूत्रार्थं व्याचष्टे । **प्राणोस्मीति** । इन्द्रस्य प्राणशब्देन परिग्रहे हिततमत्वप्रज्ञात्मत्वादिधर्माणामनुपपत्तिः तच्छब्देन परामात्मपरिग्रहे तु न काप्यनुपपत्तिरितिभावः । २९ ॥

नञ्पदस्य प्रतियोगिसापेक्षत्वात् तमध्याऽहृत्य नञर्थं व्याकरोति । **यदुक्तमिति** । जीवभावापन्नस्येन्द्रस्य लिङ्गं दर्शयन् सूत्रनिर्दिष्टहेतुं व्याचष्टे । **मामेवेति** । **त्रिशीर्षाणमिति** । त्रीणि शीर्षाणि शिरांसि यस्य स त्रिशीर्षा विश्वरूपस्तं त्वाष्ट्रं त्वष्टुरपत्यं तमहनं हतवानस्मि । रौतीति रुत् वेदान्तवाक्यं तत् मुखं येषान्ते रुन्मुखास्ततोऽन्ये अरुन्मुखास्तान् यतीन् शालावृकेभ्यः वनश्वभ्यः प्रायच्छम् । "बह्वीः सन्धा अतिक्रम्य दिवि प्रह्लादीनतृणहमन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् तस्य मे तत्र न लोम च मीयते'इत्यादिरादिशब्दार्थः । अस्यार्थः—बह्वीः सन्धाः प्रतिज्ञा अतिक्रम्य दिवि स्थितान् प्रह्लादपुत्रान् अतृणहम् हिंसितवानस्मि । पौलोमान् पुलोमपुत्रान् कालकञ्जान् कालकञ्जाख्यानसुरान् अतृणहमिति पूर्वेण सम्बन्धः । तस्य एवं हिंसितवतो मे 'तत्र' तादृशे घोरे दुष्कर्मणि अप्यपि लोमापि न मीयते हिंस्यत इति । **उपक्रम इति** । उपक्रमो बलवानित्यर्थः । **तदनुगुणतयेति** । उपक्रमानुगुणतयेत्यर्थः । सूत्रस्य सिद्धान्तभागे निषेधवाचकं पदं न श्रूयते, अतस्सूत्रस्यापरभागस्य सिद्धान्तपरत्वद्योतनाय समाधत्त इत्यभिहितम् । सूत्राक्षराणि विवृणोति । **अध्यात्मसम्बन्ध इति** । बहुशब्दात् पृथ्वादित्वादिमनिच् ।

सत्येव सम्भवात्। तथाहि यं तं मनुष्याय हिततमं मन्यसे' इत्युपक्रमे हिततमोपासनं परमात्मोपासनमेव तस्यैव हिततमत्वात्। 'तमेव विदित्वाऽतिमृत्युमेती'त्यादि श्रुत्यन्तरात्। तथा 'एष एव साधुकर्म्म कारयती'त्यादि साध्वसाधुकर्मकारयितृत्वं परमात्मन एव धर्मः। तद्यथा 'रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्रा प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे ऽर्पिता' इति भूतमात्राप्रज्ञामात्राशब्दोदिताचेतनचेतनात्मककृत्स्नवस्त्वाधारत्वम्। 'एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत' इत्यानन्दादयश्च हि यस्मात्परमात्मन एव धर्माः, अतोऽस्मिन् प्रकरणे इन्द्रप्राणशब्दनिर्दिष्टः परमात्मैवोपास्य इत्यर्थः ॥ ३० ॥

एवञ्चेत्तर्हि कथमिन्द्रो मामुपास्स्वेत्युपदिष्टवानित्यत आह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत्। १। १। ३१

'ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा, तत्त्वमसि, अयमात्मा, सर्वं खल्विदं ब्रह्म तज्जलानीति, अभयं जनक प्राप्तोऽसि यदात्मानं वेदाहं ब्रह्मास्मीति।' अन्तःप्रविष्टः शास्ता जनानां सर्वात्मासतेऽन्तर्याम्यमृतः,एष सर्वभूतान्तरात्मा, एष ते आत्मान्तर्याम्यमृतः' इत्यादि-

---

"वहोर्लोपो भू च वहोः" इतिनिष्पन्नस्य भूमशब्दस्यार्थं वहुत्वरूपं विवृणोति। **भूमा वहुत्वमिति**। वहुत्वं सावधिकं तदपेक्षायां जीवलिङ्गानां सन्निहितत्वात्ततो वहुत्वं सिद्ध्यतीति भावः। सम्बन्धस्य वहुत्वप्रदर्शनायाह। **सम्बध्यमानानामिति**। सम्बन्धः कीदृश इत्यत्राह। **आधेयतयेति**। स्वनिष्ठाधेयतानिरूपिताधारतासंसर्गस्तेन- स्वपदेन तदसाधारणधर्मा गृहीतव्या इत्यर्थः। तदसाधारणानामिति परमात्मासाधारणधर्माणामित्यर्थः। वहुत्वमापेक्षिकं, किमपेक्षया भूयस्त्वमिति जिज्ञासायामाह। **तथा चिदचितोश्चेति**। 'तथा' असाधारणधर्मास्तच्छब्देन परामृश्यन्ते। तथाच चिदचितोश्चासाधारणधर्माणां परमात्मासाधारणधर्माणाञ्च वहुत्वेन सम्बन्धवहुत्वस्येति योजना। सम्बन्धवहुत्वस्य सम्भवादित्यनेनान्वयः। **वक्तुरिति**। वक्तुरनुप्रविष्टपरमात्मन इत्यर्थः। परमात्मधर्माणां भूयस्त्वं दर्शयति। **तथाहीत्यादिना**। तस्यैव = परमात्मन उपासनस्य। उपासनस्य हिततमत्वे श्रुतिं प्रमाणयति। **तमेवेति**। अत्र वेदनमुपासनात्मकमेव तस्य मोक्षोपयोगित्वेन हिततमत्वं वोध्यम्। तथा=हिततमत्वम्। परमात्मनो निखिलाधारत्वसंसर्गे श्रुतिं प्रमाणयति। **तद्यथेति**। यथा दृष्टान्तः लोकसिद्धस्य रथस्यारेषु नेमिनाभ्योर्मध्यशलाकासु चक्रोपात्तरूपा नेमिरर्पिता नाभौ चक्रपिण्डकायामराः अर्पिताः। भूतमात्राः अचेतना पृथिव्यादयः प्रज्ञामात्रासु जीवेषु अर्पिताः प्रज्ञामात्राः प्राणे ब्रह्मणि अर्पिता इत्यर्थः। प्रज्ञाशब्दश्च इन्द्रियेष्वमुख्यः जीवेषु तु मुख्यस्तेषां ज्ञानस्वरूपत्वात्। भूतमात्राप्रज्ञामात्राशब्दयोरर्थं व्याकरोति। **भूतमात्रेति**। तस्य परमात्मत्वं कथमित्यत आह। **स एष इति**। प्राकरणिकशब्दानुकूलश्रुतिवाक्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति। **हि यस्मादिति** ॥ ३० ॥

उत्तरसूत्रमवतारयितुं पृच्छति। **एवञ्चेत्तर्हीति**। तच्च शास्त्रं किं कीदृश उपदेश इत्यतश्शास्त्रं दर्शयति। **ऐतदात्म्यमिति**। एतदात्मनो भाव ऐतदात्म्यं सर्वस्यापि चेतनाचेतनात्मकस्य जगतो ब्रह्मात्मकत्व-तदायत्तत्व-स्थितिप्रवृत्तिकत्व-तद्व्याप्यत्व-तत्तन्त्रसत्व-पराधेयत्वादियोगेन ब्रह्माभिन्नत्वं स्वरूपेण भिन्नत्वञ्चोक्तश्रुतिभिः प्रतिपाद्यम्। **तत्त्वमसीति**। तत्पदार्थवृत्तिस्वतन्त्रसत्ताश्रयाभिन्नब्रह्मात्मकपरतन्त्रसत्वाश्रयाभिन्नः त्वं पदार्थ इति. वाक्यार्थः। तत्पदार्थो विश्वात्मा त्वम्पदार्थः क्षेत्रज्ञान्तरात्मा, तयोरभेदो घटो द्रव्यं पृथिवी द्रव्यमित्यादिवत् मुख्य एव। औपनिषदानां सिद्धान्ते सर्वेषामपि ब्रह्मरुद्रादिचेतनाचेतनवस्तुमात्रपराणां शब्दानां तत्तत्पदार्थवाचकत्वे तत्त-

शास्त्रदृष्ट्या परब्रह्मणः सर्वान्तर्यामित्वेन सर्वात्मत्वमवगम्य । 'मामेव विजानीहि मामुपास्स्वे'-तीन्द्रस्य जीवस्यैव स्वात्मत्वेन परमात्मोपदेशोऽयं यथा वामदेवः शास्त्रदृष्ट्या स्वान्तर्यामिणं परमात्मानं पश्यन् 'अहं मनुरभवं सूर्यश्च कक्षीवानृषिरस्मि विप्र' इति तमवोचत ॥ ३१ ॥

## जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् १ । १ । ३२

'न वाचं विजिज्ञासीत,वक्तारं विद्यात्, त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छमि'त्यादिजीवलिङ्गात् । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति यावदस्मिन् शरीरे प्राणो वसति तावदायुरिति मुख्यप्राणलिङ्गाच्च नेदं वाक्यं ब्रह्मपरमितिचेन्न । उपासात्रैविध्यात् उपसनायास्त्रिविधत्वमुपदेष्टुं ब्रह्मण एव तत्तच्छब्देनाभिधानं यथान्यत्र त्रिविधोपासनं ब्रह्मण आश्रीयते तत्र 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपेण ब्रह्मण उपास्यत्वं । 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिषु जीववर्गान्तर्यामितया प्राणाद्यन्तर्यामितयाच तस्योपास्यत्वमेवमिह प्रतर्दनविद्यायामपि तद्योगात् तस्य त्रैविध्यस्य योगासम्भवात् अतः परं ब्रह्मपरमेवेदं वाक्यजातमितीन्द्रप्राणशब्दनिर्दिष्टः परमात्मैवेति सिद्धम् ॥ ३२ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाद्याचार्यश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणपद्म मकरन्दभृङ्गेण श्रीकेशवकाश्मीरिभट्टेन संगृहीतायां वेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ प्रथमाध्याये प्रथमपादविवरणं समाप्तिगतम् ।

---

दात्मभूतब्रह्मपरत्वमविरुद्धं ब्रह्मणः सर्वात्मकत्वात् । यथा चतुर्मुखादिपिण्डाश्चतुर्मुखादिशब्दानां शक्यास्तदवच्छिन्नास्तत्र चेतयितारश्च उभयेऽपि चतुर्मुखादिशब्दैर्विधातुं सुशक्यास्तथा तेषां चतुर्मुखादिपिण्डतत्तदवच्छिन्नचेतनज्ञाभिधानपरत्वे तेषामन्तरात्मत्वाद् ब्रह्माभिन्नत्वाभिधानपरत्वं तथा प्रकृतेऽपि इन्द्रशब्दस्य जीवपरत्वे विवादाभावात् तदन्तःप्रविष्टपरमात्मानमवगम्य स्वात्मत्वेन परमात्मानमेवोपास्यत्वेनोपदिदेश मां विजानीहि मामुपास्स्वेत्यादिनेत्यर्थः । परमात्मोपदेश इत्यन्तेन शास्त्रदृष्ट्यातूपदेश' इति भागो व्याख्यात: । वामदेवादिवदित्यंशं विवृणोति । यथा वामदेव इति ॥ ३१ ॥

न वाचमिति । न केवलं मद्वचनमेव विजानीहि वक्तारं माञ्च विजानीहीत्यर्थः । जीवगमकं लिङ्गमाह त्रिशीर्षाणमिति । मुख्यप्राणलिङ्गमाह । अथ खल्विति । शरीरधारणं मुख्यप्राणस्य धर्मः प्राणसम्वादे च सर्वे वागादयः प्राणा अहमहं श्रेष्ठ इति विवदमानाः प्रजापतिमुपाजग्मुः । स च तानुवाच 'यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरं पतिष्यति स वः श्रेष्ठ' इति । तथा क्रमेण वागादिषूत्क्रान्तेष्वपि मूकादिभावेन शरीरं स्वस्थमस्थात् । मुख्यप्राणस्य तु उच्चिक्रमिषायां सर्वेषां व्याकुलत्वात्तौ तान् वागादीन् वरिष्ठः प्राण उवाच यूयं मा मोहमापद्यथ यतः अहमेवैतत् करोमि । किंतत् ? पञ्चधा प्राणापानव्यानादिभावेनात्मानं विभज्य वाणम् अस्थिरं शरीरम् अवष्टभ्य धारयामीत्युक्तम् । सूत्रस्य पूर्वभागं पूर्वपक्षात्मकं व्याख्याय परिहारवाक्यमवतार्य्य व्याचष्टे । नेदं वाक्यमिति । हेतुत्वं विवृणोति । उपासनाया इति । तिस्रो विधाः निरूपयति । तत्रेति । सत्यं ज्ञानमितिश्रुत्यर्थः प्रागुपदर्शितरीत्यावसेयः ॥ ३२ ॥

इति श्रीसनकसम्प्रदायानुगताशेषरसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाश्रिताश्रितामोलेकरामशास्त्रि संगृहीतायां वेदान्तकौस्तुभप्रभाव्याख्यायां भावदीपिकायां प्रथमाध्यायस्य प्रथमपादः समाप्तः ।

# अथ प्रथमाध्यायस्य द्वितीयः पादः

## १—सर्वत्र प्रसिद्ध्यधिकरणम्

प्रथमपादे श्रद्धोपपत्तिपूर्वकगुरूपसत्त्यादिना जातसंसारमोक्षेच्छावत्तया ब्रह्मजिज्ञासायां प्रवृत्तं प्रति लक्षणप्रमाणे निरूप्य प्रधानपुरुषावेव जगत्कारणतया वेदान्तप्रतिपाद्याविति आशङ्क्य सर्वज्ञसत्यसङ्कल्पस्वभावत्वतोऽपास्तसमस्तदोषदिव्यानन्तकल्याणगुणाकरस्य परब्रह्मणः श्रीकृष्णस्यैव जगत्कारणतया वेदान्तप्रतिपाद्यत्वमुक्तम्। अथ कानिचिदस्पष्टजीवादिलिङ्गकानि कानिचित्स्पष्टजीवलिङ्गकानि च यानि वाक्यानि तान्यपि ब्रह्मपराण्येवेति निर्णेतुं द्वितीयतृतीयपादावारभ्येते ॥

### सर्वत्र प्रसिद्धोपदेशात् १ । २ । १ ।

इदमाम्नायते छान्दोग्यैः 'सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीताथ खलु क्रतुमयोऽयं पुरुषो यथा क्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप' इत्यादि। अत्रमनोमयत्वादिगुणकः क्षेत्रज्ञ उपास्यत्वेनोपदिश्यते

---

भावदीपिका

श्रीनिकुञ्जविहारिणेनमः।

आत्मारामान् विहितमतयो निर्विकल्पे समाधौ,
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्वनिष्ठाः।
संवीक्षन्ते कमपि तमसा ज्योतिषां ये पुरस्तात्,
वन्दे तानप्रतिहतगतीन् श्रीकुमारादिसिद्धान् ॥ १ ॥

द्वितीयपादोत्थानोपयिकतया सङ्गतिं प्रदर्शयन् पूर्वपादाधिकरणार्थं स्मारयति। **प्रथमपाद इति।** शारीरकमीमांसाया आदिमसूत्रस्य शास्त्रारम्भसमर्पकत्वेन शास्त्रोपोद्घातरूपत्वात् तस्यार्थं संक्षेपतो व्याकरोति। **श्रद्धोपसत्तिरिति।** गुरुशास्त्रोक्तवाक्यार्थे एवमेवायमित्यास्तिक्यबुद्धिः श्रद्धा। न चैतावत्वमपितु तया उपपत्तिः उपपन्नस्तत्परः शास्त्राभ्यासे तद्विरोधिनिरासे च सदोद्युक्त इति यावत्। तदुक्तं श्रीमद्भगवद्गीतायाम् 'श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रिय' इति। उपसत्तिः गुरुसमीपे गमनम्। आदिना विवेकनिर्वेदादीनां परिग्रहः। ब्रह्मजिज्ञासायां प्रवृत्तौ साधनमाह। **जातसंसारमोक्षेच्छावत्त्वेति।** प्रवृत्तं=वेदान्तशास्त्राधिकारिणम्। एतेनादिमसूत्रस्यार्थः संक्षिप्तः। मुमुक्षुं प्रति ब्रह्मणो लक्षणं द्वितीयसूत्रेण निरूपितं तदग्रिमेण सूत्रद्वयेन तत्र प्रमाणं वेदान्तानां समन्वयश्चोक्त इत्याह। **लक्षणप्रमाणे इति।** प्रधानस्य जगत्कारणत्वनिरसनमुखेनेक्षत्यधिकरणेनाचिद्भिन्नत्वं ब्रह्मणः साधितम्, आनन्दमयाधिकरणेन चिद्भिन्नत्वञ्च अन्तराधिकरणेनचापहतपाप्मत्वस्वोपासकपापमोचयितृत्व-दिव्यमङ्गलविग्रहवत्व-सर्वभूतान्तरात्मत्वं-धर्मप्रदर्शनपरेण जीवब्रह्मणो भेदो व्यपदिश्यते। आकाशादिसूत्रैस्सर्वभूतोत्पादकत्व-जायस्त्व-

उत परब्रह्मेति संशयः किन्तावत्प्राप्तं क्षेत्रज्ञ इति । कुतः ? तस्यैव मनःप्राणोपकरणकत्वात् न ब्रह्मणः 'अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतेः । 'ननु सर्वं खल्विदं ब्रह्मेति पूर्वत्र श्रवणात्, श्रुतिश्च लिङ्गाद्वलीयसीति पूर्वोक्तं ब्रह्मैवात्रोपास्यतया सम्बध्यतामिति चेन्न । तद्वाक्यस्य शान्त उपासीतेति शांतिसिद्ध्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वान्न ब्रह्मोपासनविधिपरत्वम् । किञ्च 'एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वेति हृदयायतनत्वाणीयस्त्वयोः परिच्छिन्ने जीव एव रूढत्वादिति प्राप्ते ब्रूमः । मनोमयत्वादिगुणकः परमात्मैवात्रोपास्यः कुतः सर्वत्र वेदान्तेषु परब्रह्मणि प्रसिद्धानां मनोमयत्वादीनामुपदेशात् 'मनोमयः प्राणशरीरनेता स एषोन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः' इत्यादिषु तत्र मनोमयत्वं विशुद्धमनोग्राह्यत्वं प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियंतृत्वञ्च । अप्राणःप्राणानधीनस्थितिः। अमनाः मनोऽनधीनज्ञान इत्यर्थः। अथवा 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेत्युपासनं विधीयते । स क्रतुं कुर्वीतेति पूर्वस्यैव मनोमयत्वादिगुणोपादानायानुवादः सर्वात्मकं

---

परायणत्व-सर्वमहाभूतसम्वेशनोद्गमत्वं तस्य प्रतिपाद्यते । ज्योतिरधिकरणमुखेन निरतिशयदीप्तिमत्व-यथाधिकारिफलदातृत्व-गायत्रीशब्दप्रतिपाद्यत्वमभिहितम् । इन्द्रप्राणाधिकरणेन हिततमत्वप्रज्ञात्मत्वानन्दत्वाजरत्वादीनां कल्याणगुणानां ब्रह्मण्येव समर्थनम् । स्वरूपेण चिद चेदन्तरात्मतया सर्वात्मतया च त्रिविधोपासनं ब्रह्मण उक्तमित्येतदर्थं क्रोडीकृत्याह प्रधानपुरुषावेति । एतेन परमात्मनो विशेषगुणाभिधानमपरेषु पादेषु क्रियते इति प्रथमपादद्विपाद्योर्विभाग उक्तो भवति । पादत्रयस्यावान्तरभेदप्रदर्शनायाह । अथेति । द्वितीयपादेऽस्पष्टलिङ्गकवाक्यानां विचारः । तृतीयपादे स्पष्टलिङ्गकवेदान्तानां विचार इत्यर्थः । अस्पष्ट स्पष्ट-स्पष्टतरपूर्वपक्षोत्थितिभेदेन भिन्नास्त्रयः पादा पारम्पर्य्या इति भावः । छान्दोग्यं वाक्यं पठति । इदमिति । तस्माज्जातमतस्तज्जं, तथा तस्मिन्नेव लीयतेऽतस्तल्लं, तथा तस्मिन्नेव कालेऽनति प्राणिति चेष्टतेऽतोऽनित्येवं सर्वं समस्तमिदं जगत् ब्रह्मात्मकतया ब्रह्माभिन्नमिति शान्तो भगवत्प्रष्टबुद्धिस्सन् उपासीत । उपास्यान्तरमपि सहेतुकमाह । अथ खल्वित्यादिना । खल्विति हेत्वर्थे पुरुषोऽधिकारी । क्रतुमयः उपासनाप्रधानः । यथाक्रतुमयः यथा यादृशः क्रतुर्यस्य स यथाक्रतुस्तथा तदनुरूपफलवान् । इतः अस्माल्लोकाद्देहाद्वा प्रेत्य मृत्वा भवति मुक्तौ स्वयोग्य उपासनानुसारिफलवान् भवति, तस्मात् स क्रतुं कुर्वीत उपासकः क्रतुं ब्रह्मण उपासनं कुर्वीत । एवं विहितोपासनायामुपसंह्रियमाणगुणान् दर्शयति । मनोमय इत्यादिना । मनोमयः परिशुद्धमनोगयमात्रग्राह्यः । प्राणशरीरः जगति सर्वेषां प्राणानां धारकः प्राणो यस्य शरीरमाधेयं विधेयञ्च स प्राणशरीरः । भारूपो दीप्तिरूपः । सत्यकामः अवितथेच्छः । सत्यसङ्कल्पः सफलसङ्कल्पः । सङ्कल्पो नाम कर्मारम्भकालीनमनोवृत्तिविशेष इत्यर्थः । विचाराङ्गं संशयं दर्शयति । अत्रेति । अस्मिन्नुदाहृते वाक्य इत्यर्थः पूर्वपक्षमुपपादयति । कुत इति । तस्य क्षेत्रज्ञस्य । "सर्वं खल्विद"मिति वाक्ये प्रकृतं ब्रह्मैव 'स क्रतुं कुर्वीत' इत्यत्रोपास्यतया सम्बध्य मनोमयत्वादिगुणानां विशेष्यं स्यादित्याशङ्कते । नन्विति । परिहरति । नेति । तद्वाक्यस्येति । 'सर्वं खल्विदं ब्रह्मे'ति वाक्यस्य । न तद्वाक्यं ब्रह्मोपासनविधानपरं किन्तु शमविध्युपायं सर्वस्य वस्तुनो ब्रह्मात्मकत्वानुसन्धानं तमुद्दिश्यैवात्रोक्तमित्यर्थः । आराग्रमात्रस्य प्रत्यगात्मन एव हृदयायतनत्वमणीयस्त्वादयो धर्मास्सन्ति नतु ब्रह्मण अपरिच्छिन्नत्वादित्याह । किञ्चेति । पूर्वपक्षमनूद्य सिद्धान्तयन्सूत्राद्बहिरेव प्रतिजानीते । इति प्राप्त इति । प्रतिज्ञावाक्यं पूरयित्वा व्याचष्टे । मनोमयत्वादिगुणक इति । सत्यसङ्कल्पत्वादिविशेषितप्राकरणिकात्मशब्दानुरोधेन परमात्मेत्युक्तम् । सर्वत्रेति व्याख्येयं पदम् तद्व्याचष्टे वेदान्तेष्विति सामान्यशब्दवत्सु विशेषशब्दवत्सुचेति भावः । मनस्सामान्येन सम्बन्धसामान्यपरं वाक्यमाह । मनोमयः प्राणशरीरनेति । मनोमयशब्दं व्या-

ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थस्तत्र सर्वात्मत्वेन निर्दिष्टं ब्रह्म किं क्षेत्रज्ञ उत परमात्मेति किं तावद्युक्तं, क्षेत्रज्ञ इति। कुतः तस्यैवानाद्यविद्यामूलकर्मनिमित्तकब्रह्मादिसर्वभावोपपत्तेः। परब्रह्मणस्तु सर्वज्ञत्वसर्वशक्तित्वापहतपाप्मत्वस्वभावतोऽपास्तसमस्तदोषत्वादियोगात् न हेयाकारसर्वतादात्म्यमुपपद्यते। ब्रह्मशब्दोऽपि बृहत्वगुणयोगेन तत्रैव वर्त्तते जगज्जन्मादेश्च कर्मनिमित्तत्वात्तद्धेतुत्वनिर्देशोऽपि तत्रोपपद्यत इति प्राप्ते तत्राह, 'सर्वत्र प्रसिद्धोपदेशात्' सर्वात्मकत्वेन जगज्जन्मादिहेतुत्वेन च निर्दिष्टब्रह्मशब्दवाच्यः परमात्मैव तस्मादेव सर्वत्र वेदान्तेषु जगज्जन्मादीनां प्रसिद्धतयोपदेशात् 'सोऽकामयत बहु स्यां प्रजायेयेति' 'इदं सर्वमसृजत' इत्यादिषु सर्वान्तर्यामितया सर्वात्मत्वमपि परब्रह्मण्येवोपपद्यते न प्रतिशरीरं भिन्नानां जीवानाम्। जगज्जन्मादेर्जीवकर्मनिमित्तत्वात्स एव हेतुरित्यपि न परमेश्वरस्यैव जगद्धेतुत्वप्रसिद्धेरतः परमात्मैवात्र ब्रह्मशब्दवाच्यः॥१॥

---

ख्यातुकामः श्रुतिमुदाहरति। **स एष इति**। प्राणशरीरशब्दार्थमाह। **प्राणेति**। स्वाभिमतार्थयोजनां कर्त्तुमारभते। **अथवेति**। पूर्वस्यां योजनायां सूत्रे प्रतिज्ञावाक्यस्याध्याहार्यत्वादुपक्रमोपसंहारगतब्रह्मशब्दैकविषयत्वप्रतीतिस्वारस्येन भिन्नविषयत्वप्रतीतिपूर्वकपूर्वपक्षानुदयेनाधिकरणानारम्भात् श्रवणमननाभ्यामेव निष्पाद्यायाश्शान्तेरुपासनानिष्पादकत्वस्य "एवं विच्छान्तः" इति श्रुतिसिद्धत्वादन्यत्रापि शान्त्युपायत्वेनोपासनाविधानादर्शनाच्छान्तशब्दस्य शान्तिकामपरत्वास्वारस्यात् वृत्त्यनुरोधाच्च इयमेव योजना समुचितेतिभावः। **अत्रैवोपासनं विधीयत इति**। अत्र शान्त्युपासनम्, उत्तरत्र मोक्षोपासनमिति नायमर्थः। अपितु अत्रैव मोक्षार्थोपासनं विधीयत इत्यर्थः। शान्तशब्दार्थं स्वरसतो वदन् वाक्यार्थमाह। **सर्वात्मकमिति**। तर्हि स क्रतुं कुर्वीतेति किमुच्यत इत्यत्राह। **स क्रतुमिति**। **अनुवाद इति**। यथा 'अग्निहोत्रं जुहोति' इति होमे विहिते 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वमात्रं विधेयम्। **जुहोतीत्यनुवादस्तद्वदिति**। वाक्यार्थमाह। **सर्वात्मकमिति**। एवमेकविषयत्वमङ्गीकृत्यैव पूर्वपक्षसिद्धान्तौ दर्शयितुं संशयमाह। **तत्रेति**। तत्र एकविषयत्वे सिद्धे। किमत्रोपास्यतया निर्दिष्टो जीव उत परमात्मेति विशयः तदर्थं किं ब्रह्मशब्दो जीवपरः उत परमात्मपरः। मनोमयत्वादिधर्मैः प्रत्यगात्मोपास्य इति पूर्वपक्षयति। **किन्तावद्युक्तमिति**। हेतुं विवृणोति। **तस्यैवेत्यादिना**। तस्य क्षेत्रज्ञस्य। **अनादीति**। अहितकर्मोत्पादनहेतुरविद्या तद्धेतुकर्मेति बीजाङ्कुरादिन्यायवदनादिः। तस्यैवेत्यवधारणसूचितां परस्य सर्वभावानुपपत्तिं विवृणोति। **परब्रह्मणस्त्विति**। सर्वज्ञत्वाद्धेयं जानाति सर्वशक्तिमत्वान्निवारयितुं शक्नोति न च ज्ञानशक्त्योः सङ्कोचः अविद्यामूलकर्मविरहात्। अतो न सर्वभावस्सम्भवतीतिभावः। ब्रह्मशब्दः कथं प्रत्यगात्मन्युपपद्यत इत्यत आह। **ब्रह्मशब्दोऽपीति**। प्रत्यगात्मनोऽपि अनादिकर्मात्मिकाविद्यानिर्मोकदशायां बृहत्त्वञ्च विद्य। एवेत्यर्थः। 'सचानन्त्याय कल्प्यते' इति श्रुतेः। तत्रैव प्रत्यगात्मन्येव कथं जगज्जन्मादिहेतुतयोच्यत इत्यत्राह। **जगज्जन्मादेश्चेति** कर्मात्मिकानादिमायया संकुचितज्ञानः प्रत्यगात्मा स्वतोऽपरिच्छिन्नस्वरूपः ब्रह्मभूतस्सन् देवतिर्यङ्मनुष्यस्थावरात्मनावतिष्ठते विचित्रकर्मवशेनेत्यर्थः। पूर्वपक्षमनूद्य सिद्धान्तयति। **इतिप्राप्ते तत्राह इति**। यथा अन्तस्तद्धर्मोपदेशात् इत्यन्तश्शब्दः प्रतिज्ञापरः एवं सर्वत्रेति सूत्रपदं प्रतिज्ञापरमित्याह। **एवत्रेति**। तदेव पदं व्याचष्टे। **तदात्मकत्वेनेति**। यतः जगज्जन्मस्थितिलयानां हेतुर्ब्रह्मशब्दवाच्यः परमात्मा नतु प्रत्यगात्मा तस्मादेवेत्यर्थः। प्रतिज्ञावाक्यस्थं सर्वत्रेतिपदमावृत्य तन्त्रेण वा हेतुवाक्येऽपि योजयित्वा प्रसिद्धशब्दस्य अधिकरणसापेक्षत्वात्। हेतुपदं व्याचष्टे। **सर्वत्रेति**। वेदान्तवाक्यान्युदाहरति। **सोऽकामयत इति**। यच्च पूर्वपक्षोक्तं तमनूद्य परिहरति। **नहीति**। **जीवकर्मनिमित्तत्वादिति**। नहि कर्म जगतः कर्तृरूपनिमित्तमुपादानञ्च उभयमीश्वर एव कर्म तु कैवल्यं

## विवक्षितगुणोपपत्तेश्च । १ । २ । २ ।

'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर' इत्यादिश्रुत्या वक्तुमिष्टानां मनोमयत्वादिगुणानां परमात्मन्येवोपपत्तेश्च । श्रुत्यर्थस्तु मनोमयः शमदमादिसाधनसहकृतपरमात्मोपासननिर्मलीकृतेन मनसा ग्राह्यः । प्राणशरीरः सर्वप्राणिधारकः प्राणो यस्य शरीरमाधेयं नियम्यभूतश्च स भारूपो भास्वररूपो दिव्याप्राकृतकल्याणरूपवत्तया निरतिशयौज्वल्ययुक्तः । सत्यसङ्कल्पः, अप्रतिहतसङ्कल्पः । आकाशात्मा आकाशवत्स्वच्छरूपः सर्वप्रकाशको वा । सर्वं विश्वं कर्म यस्य सर्वा क्रिया वा यस्य स सर्वकर्मा । सर्वे कामा भोग्यादयः सर्वविधा यस्य सन्ति स सर्वकामः । दिव्याप्राकृतस्वभोग्यभूतसर्वविधगन्धरसयुक्तः सर्वमिदं रसपर्यन्तमङ्गीकृतवानित्यभ्यात्तः। भुक्ता ब्राह्मणा इतिवत् कर्तरि क्तः । यतोऽनादरः प्राप्तसमस्तकामत्वेनादरणीयाभावादादररहितः अतो वाक् उक्तिर्यस्य नास्तीत्यवाकी परिपूर्णैश्वर्यवत्वात्सर्वं तुच्छीकृत्य तूष्णीमासीन इत्यर्थः ॥२॥

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

पूर्वोक्तमनोमयत्वादीनां शारीरे शरीरसम्बन्धिनि जीवेऽनुपपत्तेश्च परमेव ब्रह्म तद्गुणकमुपास्यम् ॥३॥

## कर्मकर्तृव्यपदेशाच्च । १ । । २ । ४ ॥

इतश्च मनोमयत्वादिगुणकः परमात्मैव न शारीरः । यतः 'एतमितः प्रेत्याभिसम्भ-

---

वैषम्यहेतुः यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि भोक्तृकर्मणां न कर्तृत्वमुपादानत्वं वा कुलालपिण्डयोरेव तदुभयम् । नच तज्जलानित्यत्र तच्छब्दस्य कर्मवाचित्वमतो न जीवस्य जगज्जन्मादिकारणत्वकृतं तादात्म्यमस्ति । व्यक्तं भविष्यति चेदमुपरिष्टाज्जगद्व्यापारवर्जमिति सूत्रावसरे । सूत्रार्थमुपसंहरति । अत इति । ॥ १ ॥

कया विवक्षया इत्याकाङ्क्षायां श्रुतिं पठति । **मनोमयइत्यादिना** । सूत्रं व्याचष्टे । **वक्तुमिष्टाना-मिति** । 'न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन' इति श्रुत्यनुसारिणं मनोमय इत्यस्यार्थं विवृणोति । **मनोमय इति** । शमो बाह्येन्द्रियसंयमः । दमो मनोइन्द्रियनियमनम् । आदिना तपश्शौचक्षान्तिरार्जवादयः ग्राह्याः। प्राणशरीरशब्दं व्याकरोति । **प्राणशरीर इति** । भास्वररूपार्थं विवृणोति । **दिव्येत्यादिना** **स्वच्छरूप इति** । स्वच्छत्वं निर्मलत्वम् । अक्षरमम्बरान्तधृतेरित्यधिकरणन्यायादाकाशशब्दः प्रकृतिवाचीति भावः । अभ्यात्त इत्यत्र नादिकर्मणि क्तः गुणगणादानस्य नित्यत्वात् । नचाभ्याददातिः गत्यर्थः स्वीकरणार्थत्वात् । नाप्यकर्मकः सर्वमिदमिति श्रवणात् । नच शिष्टादिष्वन्यतमः अपठितत्वात् तत्कथं कर्तरि क्तः "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोरेव हि तत्स्मरणमित्यत्राह । भुक्ता इति प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य यथाप्रयोगमनुशासनं कार्यं नतु यथानुशासनं प्रयोगान्यथाकरणमिति भावः ॥ २ ॥

यथा सत्यसङ्कल्पत्वादयो गुणाः शारीरेऽपि शङ्कनीयाः कथं परमात्मन्येवेत्यवधारणसिद्धिरिति जिज्ञासायां व्यतिरेकमुखेनाह । **अनुपपत्तेरिति** । सूत्रं व्याकरोति । **पूर्वोक्तेरिति** ॥ ३ ॥

वितास्मी'त्यादि श्रुतौ एतमिति उपास्यस्य परमात्मनः प्राप्यतया कर्मत्वेन अभिसम्भवितास्मीति उपासकस्य जीवस्य प्राप्तृतया कर्तृत्वेन च व्यपदेशात् ॥४॥

## शब्दविशेषात् । १ । २ । ५ ॥

इतश्च मनोमयत्वादिगुणकः शारीरादन्यः 'एष म आत्मान्तर्हृदये' इति जीवपरयोः षष्ठीप्रथमान्तरूपविशेषात् ॥५॥

## स्मृतेश्च । १ । २ । ६ ॥

'सर्वस्यचाहं हृदि सन्निविष्टः' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । तमेव शरणं गच्छे'त्यादिस्मृतिश्चोपास्योपासकयोर्भेदं दर्शयति । अत्र केचित् पर एव ह्यात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते तद्वत् तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुद्ध्यते प्राक् तत्त्वमसीत्यात्मैकत्वोपदेशग्रहणात् । गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारसमाप्तिरेव स्यादिति वदन्ति । तदयुक्तम् । सर्वज्ञसर्वशक्तेः स्वतन्त्रस्य परब्रह्मणो निरतिशयानन्दवत्त्वेन स्वभावसिद्धविद्यारूपत्वेन चाविद्यायोगासम्भवात् । तत्कल्पितोपाधियोगस्य सुतरामसम्भवः । अयं भावः । सर्वगताद्वितीयवादे उपाधीनां विभुत्वं वा अणुत्वम्वा मध्यमपरिमाणत्व

---

परमात्मत्वसाधकहेतुमाह । इतश्चेति । प्राप्यप्राप्तृभेदस्सूत्रकाराभिमतः । एतं मनोमयत्वादिगुणकमुपास्यम् ब्रह्माऽहं मुमुक्षुरितश्शरीरपातादूर्ध्वं प्रारब्धकर्मध्वंसानन्तरं भवितास्मि प्राप्तोऽस्मि एवं व्यवसायवानुपासको ब्रह्म प्राप्नोतीति श्रुत्यर्थः ॥ ४ ॥

तत्रैव हेत्वन्तरमाह । शब्देति ।

सूत्रे हेत्वन्तरद्योतकाभावमाशङ्क्य पूर्वसूत्रस्थचकारमाकृष्य व्याकरोति । इतश्चेति । वाक्यमुदाहरति । एष म इति । उदाहृतवाक्ये शब्दविशेषं दर्शयति । षष्ठीति । मे इति षष्ठ्यन्तं आत्मेति प्रथमान्तमित्यर्थः । यद्वा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम् इति अत्र सप्तम्यन्तेन प्रत्यगात्माभिधीयते प्रथमान्तेनोपास्यपरमात्मा च ॥ ५ ॥

'एष म आत्मान्तर्हृदये' इति श्रुत्यनुगुणां स्मृतिमुदाहरति । सर्वस्यचाहमिति । हृदि स्थितस्य परमात्मनः सकाशात् सर्वशब्दोदितप्रत्यगात्मनः पराधीनस्मृत्याश्रयस्य भेदो निरुपाधिक इत्यर्थः । सर्वेषां प्रत्यगात्मनां परमेश्वराधीनत्वमाह । ईश्वरः सर्वनियन्ता वासुदेवः सर्वेषां प्राणिनां हृद्देशे तिष्ठतीत्यर्थः । तमेव शरणं गच्छ इत्यभिधानं हृदयस्थस्य भजनप्रदर्शनार्थम् । अस्मिन् सूत्रे शाङ्करभाष्ये यद्व्याख्यानं कृतं तद्दूषयितुमनूद्यति । अत्र केचिदित्यादिना कः पुनरयं शारीरो नाम परमात्मनोऽन्यो यः प्रतिषिद्ध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना । नान्यतोऽस्ति द्रष्टा नान्यतोऽस्ति श्रोता इत्येवंजातीयकापरमात्मनोऽन्यं वारयति । तथा स्मृतिरपि क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत इत्येवञ्जातीयका । अत्रोच्यते पर एवात्मेति । अपरिच्छिन्नस्योपाधिना परिच्छिन्नवद्भिम् । दृष्टान्तेन स्पष्टयति । नभ इति । श्रुतौ स्मृतौ च कर्मकर्तृत्वादिव्यवहारात् पारमार्थिक एव भेद इत्याशङ्क्याह । तदपेक्षयेति । तन्निराकरोति । तदसदिति । प्रचण्डमार्तण्डमण्डलेऽन्धकार इव स्वयंप्रकाशे ब्रह्मण्यविद्यावच्छेदमनुन्मत्तः को ब्रूयादित्याह । सर्वज्ञसर्वशक्तेरिति । अविद्यायोगासंभवादिति । अविद्या-

म्वेति । नाद्यः । सर्वस्याप्यावृतत्वेन जगदान्ध्यप्रसङ्गः प्रकाशकाभावात् । मुक्तोपसृप्याभाव-प्रसङ्गाच्च । न द्वितीयः । उपाधिगमने तदवच्छिन्नाद्वितीयचिन्मात्रस्य सर्वगतत्वात् घटगमने तदवच्छिन्नाकाशस्य गत्यनुपपत्तिवदुपाधिना सह गमनानुपपत्तेः पदे पदे बन्धमोक्षौ स्याताम् । अनाद्युपाध्यवच्छिन्नस्याकस्मात् शास्त्रोक्तसाधनकदम्बं विनैव मुक्तिप्रसङ्गात्, नित्यमुक्तस्य शुद्धबुद्धाद्वितीयनिर्विशेषचिन्मात्रस्याकस्माद्बन्धप्रसङ्गाच्च, तद्विषयकजिज्ञासाशास्त्रारम्भवैयर्थ्याच्च, मुक्तस्यापि पुनर्बन्धावश्यंभावाच्च । पादादिवेदनादेः शिरसि गतसुखस्य च युगपदनुभवानुपपत्तेः । नापि तृतीयः, उपाध्यणुत्वनिरूपितजीवाणुत्वसिद्धान्तविरोधात् चाक्षुषत्वापत्तेश्च । किञ्च परिच्छेदकस्योपाधेः सत्यत्वं मिथ्यात्वं वेति । नाद्यः । द्वैतापत्त्या सिद्धान्तभङ्गप्रसङ्गात्

---

सम्बन्धः सहेतुको निर्हेतुको वा । नाद्यः । अप्रसिद्धत्वात् अविद्याब्रह्मेतरस्य तृतीयस्य तत्कार्यत्वेन तदानीमभावात् निर्हेतुकाविद्या स्वयमेव सम्बध्यते चेत्तर्हि एकस्यैवोपाधिवेश्यत्वे निवर्तकत्वेकारणान्तराभावात् कदापि तन्निवृत्तिर्न स्यात् । अनिर्मोक्षश्च स्यात् । न च स्वसामर्थ्येनैवाविद्यां निवर्तयति नेतरापेक्षेति वाच्यम् । एवं चेत्स्वयंप्रकाशस्य स्वतन्त्रस्य समर्थस्याविद्यासम्बन्धस्यैवानर्हत्वात् । तथाहि अविद्यायाःस्वरूपं जानाति नवा ? जानाति चेत् को वा सर्वज्ञः स्वतन्त्रः सन् श्वशूकरतिर्यक्कीटनारक्यादियोनितज्जन्यदुःखहेतुभूताऽविद्यास्वरूपं जानन् तया युज्येत । न जानाति चेदज्ञत्वादेव ब्रह्मत्वहानिरतः सर्वथा ब्रह्मण्यविद्यायोगो वक्तुमनुपपन्नः । नन्वविद्यातत्कार्यश्च मिथ्याज्ञानं न परमार्थवस्तु दूषयितुं समर्थः, नह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोतीतिचेन्न । यदि तस्य दोषकारित्वमेव नास्ति तर्हि तन्निवृत्त्यर्थमुपायस्य वैयर्थ्यात् । बन्धमोक्षव्यवस्थायास्तद्विषयकशास्त्रस्यचानर्थक्यप्रसङ्गाच्च । एवं ब्रह्मण्य-विद्यासम्बन्धस्य वक्तुमशक्यत्वात्तत्कृतं जीवेश्वरविभागं मन्यमाना भ्रान्ता जगद्व्यामोहकाः श्रेयोर्थिभिरुपेक्षणीया इत्यभिप्रायः । मायावादिनां मतनिरासाय त्रिधा विकल्पयति । **उपाधीनामिति** । ब्रह्मवदुपाधेरपि विभुत्वेन सर्वस्यापि चेतनस्यावृततैता शुद्धस्य मुक्तप्राप्यस्याभावः प्रसज्येत प्रकाशकाभावेन जगदान्ध्यापत्तिश्च, व्याकुप्येरंश्च मुक्तप्रतिपादिकाः श्रुतय इत्याशयेनाद्यपक्षं निरस्यति । **नाद्य इति** । उपाधौ गच्छति सति ब्रह्मणो विभोर्गमनानर्हत्वेन पूर्वदेशावच्छिन्नचेतनस्य क्षेत्रज्ञस्याकस्मान्निर्हेतुको मोक्षः, तथैव शुद्धस्य नित्यमुक्तस्य चेतनप्रदेशविशेषस्याकस्माद्बन्धश्चेति क्षणे क्षणे बन्धमोक्षौ स्यातां कृतनाशाकृताभ्यागमप्रसङ्गश्च स्यादित्यत उपाधेः परिच्छिन्नत्वपक्षमपाकरोति । **न द्वितीय इति** । उपाधेरणुत्वपक्षे दोषान्तरमाह । **पादादिवेदनादेरिति** । यत उपाधेरणुत्वेनैकदेशस्थत्वाद्युगपदुभयोरनुभवोऽनुपपन्न इत्यर्थः । उपाधेर्मध्यमपरिमाणत्वरूपं तृतीयकल्पं निरस्यति । **नापि तृतीय इति** । उपाधिगुणसारत्वाज्जीवस्याणुत्वव्यपदेश इति भवतां राद्धान्त उपाधीनां मध्यमपरिमाणत्वे विरुद्ध्येत इत्याह । **उपाध्यणुत्वेति** । मध्यमपरिमाणत्वं चाक्षुषत्वनियतं दृष्टञ्चतद्घटादौ तथाचोपाधीनां मध्यमपरिमाणत्वे चाक्षुषत्वं प्रसज्येत इत्याह । **चाक्षुषत्वापत्तेरिति** । परिच्छेदवादं दूषयितुं विकल्पयति । **किञ्चेति** । उपाधेः सत्यत्वपक्षमपाकरोति । **नाद्य इति** । यदि सत्यस्य ज्ञाननिवर्त्यत्वं स्यात्तदा तस्य सत्यत्वमेव न स्यादिति भावः । **परमतप्रवेशादिति** । दृश्यते च सेतुदर्शनात्सत्यस्य पापस्य निवृत्तिरित्यस्माकं सिद्धान्तः । यदि सत्यरूपस्योपाधेर्ज्ञाननाश्यत्वमभ्युपैति तदा तत्र प्रवेशः स्यादित्यर्थः । उपाधेर्मिथ्यात्वपक्षं निरस्यति । **न द्वितीय इति** । बाधकतर्कमुपन्यस्यति । **अन्यथेति** । यदि मिथ्याभूतस्याप्युपाधेः कार्यकारित्वं तदा स्वप्ननिगडेन जाग्रत्समये बन्धनं स्यान्नत्वेवमित्यर्थः । उपसंहरति । **तस्मादिति** । इदमत्राकूतम् जीवेश्वरयोः प्राप्यप्रापकमकर्तृभावादिकं जीवेश्वरभेदभ्रममूलकमित्याचक्षते मायावादिनः भ्रान्तिसिद्धस्यार्थस्य व्यपदेशको जीवः, आहोस्विदीश्वरः किं वेदो वा । नाद्यः, अनधीतशास्त्रस्य प्रत्यगात्मनोऽज्ञत्वात् न तद्भ्रान्तिमूलकः कर्मकर्तृव्यपदेशः सर्वज्ञादिगुणकस्य परमेश्वरस्य ज्ञानाभावात् । यश्च वेदशास्त्रविज्ञः प्रत्यगात्मा तस्य भ्रान्तत्वायोगात् । यदि तस्यापि भ्रमो भवेत् तदा तद्भ्रान्तौ श्रुतेरेव

सत्यस्य ज्ञाननाश्यत्वाभावेनानिर्मोक्षप्रसङ्गाच्च परमतप्रवेशापत्तेश्च । न द्वितीय अनुपपन्नत्वात् । अन्यथा स्वाप्ननिगडेन जाग्रदवस्थायां बन्धनापत्तिर्दुर्वारा एतस्य दृष्टश्रुतागोचरत्वात् प्रमाण-शून्यत्वात् श्रुतियुक्तिविरुद्धत्वाच्चेतिसङ्क्षेपः । विस्तरस्त्वाकरे द्रष्टव्यः । तस्मात्तच्छक्तिभूतस्य जीवस्यैवाविद्याकर्मादियोगाद्बन्धमोक्षभाक्त्वं न परस्येति ॥ ६॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्न निचाय्यत्वादे-वं व्योमवच्च । १ । २ । ७ ॥

अर्भकमल्पमोको नीडमायतनं यस्य तस्य भावस्तत्त्वं तस्मात् 'एष मे आत्माऽन्तर्हृदय' इत्यल्पायतनत्वात् 'अणीयान् व्रीहेर्वा यवाद्व'ेति स्वरूपेणाल्पव्यपदेशाच्चाणुपरिमाणको जीव एवात्रोपास्यतयोपदिश्यते न परमात्मेति चेन्नैतत्, निचाय्यत्वादेवम् । एवं द्रष्टव्यत्वादुपास्यत्वात् परिच्छिन्नायतनत्वाणीयस्त्वव्यपदेशो न स्वरूपाल्पत्वेन 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षा-दि'त्यादिना स्वाभाविकमहत्वस्यापि व्यपदेशात् । व्योमवच्च चशब्दो नियोगे यथा महतोऽपि व्योम्नः सूच्याद्यवल्पत्वानुसन्धानं तद्वदेवेत्यर्थः । ७ ॥

---

मूलत्वं वाच्यं तथासति कस्यापि वेदान्तविचारे प्रवृत्तिर्न घटेत यतश्शास्त्राणां भ्रममूलत्वात् । न द्वितीयोयतः कर्म-कर्तृभावव्यपदेशस्य परमेश्वरभ्रान्तिमूलत्वे 'एतमितः प्रेत्याभिसम्भवितास्मि इत्यनुपदिश्य इतःप्रेतैरभिसम्भाव्योऽह-मित्येव सुपदिशेन्नत्वेवम् । यस्य पुंसो भ्रमस्तं प्रत्येव तन्निवृत्तये शास्त्रस्योपदेशो घटते नत्वन्यं प्रति, ईश्वरस्य भ्रमनिवृत्तये तं प्रत्येवोपदेष्टव्यं नतु श्वेतकेतुं प्रति तत्वमसीत्युपदेशो घटते तस्मात् श्रुतिषु कर्मकर्तृव्यपदेशो नेश्वरभ्रम-निबन्धनः । नहि प्रचण्डमार्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुनमत्तेन वक्तुं न शक्यम् । वेदैकवेद्ये स्वयंप्रकाशे ब्रह्मणि भ्रान्तिकल्पनागन्धोऽपि कालत्रयेऽपि सम्भवयितुं न शक्यते येतु सर्वज्ञे ब्रह्मणि भ्रान्तिं कल्पयन्ति त एवोलूकस्थानीयाः । नापि तृतीयः । वेदस्य भ्रान्तत्वापत्तेस्तथासति तस्य तत्वोपदेष्टृत्वाभावः प्रसज्येत । पश्चात् प्रतिबुद्ध उपदिशतीति चेत् प्रतिबुद्धस्य वेदस्य भ्रमनिवृत्तिरास्ताम्, अन्येषां जीवेश्वरविषयेऽभ्रा-न्तानामुपदेशोऽनतिप्रयोजनकता वेदोपदेशस्य प्रसज्येत । कर्मकर्तृव्यपदेशोऽपि उपास्योपासकभावनिबन्धनः तत्फलविशेषार्थिनां कर्मकर्तृसापेक्षोपासनार्थं जीवेश्वरयोर्भेदं श्रुतिः कल्पयतीति चेत् तथासति तत्वनिरूपणदशायां "अत्ता चराचरग्रहणात्, अनुपपत्तेस्तु न शारीरः ।' इति जीवलक्षणवस्तुप्रतिज्ञाय कर्मकर्तृव्यपदेशस्य हेतुतयो-पन्यासायोगात् । कथमुपासनार्थमपारमार्थभेदव्यपदेशं विजानन् सूत्रकारस्तत्वार्थहेतुतया तं ब्रूयात् । नह्यतात्विकभेदः प्रतिज्ञातः । ब्रह्मजिज्ञासेत्युपक्रमविरोधात् । जीवेश्वरभेदापारमार्थ्यविषयप्रतिज्ञाभावाच्च । अतः श्रुतिसूत्राणां कालनिक भेदविषयकत्वमनुपपन्नमिति ॥ ६ ॥

सूत्रं व्याचष्टे । **अर्भकइति** । ओकः शब्दस्याप्रसिद्धार्थतां व्यवच्छिनत्ति । **नीडमिति** । अल्पहृदयाय-तनत्वबोधिकां श्रुतिमुदाहरति । **एष म इति** । प्रतिज्ञां पूरयति । **अणुपरिमाणक इति** । निषेधस्य प्रतियो-गिसापेक्षत्वेन प्रतियोगिवाचकपदं पूरयित्वा विवृणोति । **नैतदिति** । निचाय्यशब्दार्थमाह । **द्रष्टव्यत्वादिति** । 'चायृ दर्शने' इति हि धातुः फलरूपदर्शनव्यावृत्त्यर्थमाह । **उपास्यत्वादिति** । **ज्यायानिति** । वृद्धशब्दस्य ज्यादेशे ज्यायशब्दनिष्पत्तिः 'ज्य च वृद्धस्य च'इति सूत्रम् । वृद्धिश्च परिमाणाधिक्यमिह विवक्षितम् नतु कालाधिक्यम् । अणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वाज्ज्याशब्दस्य । महत्तयावगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तपरिमाणमौपाधिकम्, अस-म्भावितोपाधिकं परिमाणं स्वाभाविकमिति न्याय इह शिक्षित इत्याह । **स्वाभाविकमहत्वस्येति** । अणीयस्त्वञ्च सूक्ष्मत्वेनोपासनाविशेषविवक्षया व्यपदिश्यते उपासनाप्रकरणाविच्छेदात् ॥ ७ ॥

## सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् । १ । २ । ८॥

जीवेन सहैकस्थानस्थितस्य परमात्मनोऽपि जीववत्सुखदुःखादिसम्भोगप्राप्तिरितिचेन्न, वैशेष्यात् हेतोरिति शेषः । नह्येकत्र स्थितिरेव सुखाद्युपभोगहेतुः अपितु पुण्यादिकर्मपरवशत्वम् । तस्य त्वपहतपाप्मत्वादिगुणवति परमात्मन्यसम्भवात् । अन्यथाग्निदेशस्थितदिगाकाशयोरपि दाहप्रसङ्गः । ८ ॥

इति सर्वत्र प्रसिद्ध्यधिकरणम् ।

अत्त्रधिकरणम्

## अत्ता चराचरग्रहणात् । १ । २ । ९ ॥

"यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति कठवल्यामाम्नातस्यौदनोपसेचनशब्दसूचितस्यादनीयस्यात्ता किं क्षेत्रज्ञः परमात्मा वेति संशयः । तत्र भोक्तृत्वस्य कर्मनिमित्तत्वेन 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति श्रुत्या जीवस्यैव तत्सम्भव इति प्राप्ते ब्रूमः । अत्तात्र परमात्मैव कुतश्चराचरग्रहणात् मृत्यूपसेचनौदनस्य ब्रह्मक्षत्रोपलक्षितचराचरात्मकस्य कृत्स्नस्य जगतो ग्रहणात् विश्वसृष्टिस्थितिलयलीलस्य परमात्मनो जगदुपसंहारित्वरूपभोक्तृत्वस्य कर्मनिमित्तत्वाभावात् जीवस्य सर्वजगदुपसंहारित्वासम्भवात् । अनश्नन्निति श्रुतिश्च कर्मफलोपभोगनिषेधविषया । ९ ॥

---

सूत्रस्य पूर्वपक्षपरभागं विवृणोति । जीवेनेति । वैशेष्यम् विशेषः ।सुखाद्युपभोगहेतुरिति । नहि सांसारिकसुखस्य सदा दुःखमिश्रितस्य पुरुषार्थत्वं सम्भवत्येतत्सूचनायैव तदुक्तिः । एकस्थानस्थितयोरपि जीवेश्वरयोरेकस्य फलसम्बन्धस्त्वमपरस्य तु तदभाव इति श्रुतिरेव निर्वक्ति "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" ॥ ८ ॥

इति सर्वत्र प्रसिद्ध्यधिकरणम् ।

यदि ब्रह्मणो भोक्तृत्वं नास्ति तदात्तृत्वमपि न स्यादिति पूर्वाधिकरणसङ्गत्याह अत्तेति । विषयवाक्यमुदाहरति यस्यचेति । ब्रह्मच क्षत्रञ्च ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगद्यस्योदनो यस्य विनाश्यो भवति यस्य मृत्युः । स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुर्भवति स निखिलचराचरसंहर्ता परमात्मा यत्र यस्मिन् प्रकारे स्थितः तं प्रकारमित्थमिति को वेदेत्यर्थः । विचारमूलं संशयमाह ओदनोपसेचनशब्दसूचितस्येत्यादिना विशेषानवधारणमेव संशयबीजम् । तत्रेति विशेषानवधारणोत्थसंशये सतीत्यर्थः । जीवस्य लिङ्गमाह भोक्तृत्वस्येति । ओदनोपसेचनसामर्थ्यावगतस्येति भावः । तत्र श्रुतिं प्रमाणयति तयोरन्य इति । सर्वभूतान्तरात्माऽपहतपाप्मा न कर्मणा वर्द्धते नो कनीयान् । अनश्नन्नन्य इति परस्य भोक्तृत्वनिषेधात् जीवस्यैव कर्मफलभोक्तृत्वसम्भव इत्याह जीवस्यैवेति । तत्सम्भवः कर्मफलभोक्तृत्वसम्भवः । राद्धान्तमाह ब्रूम इति । चराचरग्रहणादिति हेतुं विवृणोति । मृत्यूपसेचनौदनस्येति । नेदमत्तृत्वं कर्मफलभोक्तृत्वरूपं किन्तु विष्णुकर्तृकचराचरसंहर्तृत्वरूपमित्याह । विश्वसृष्टीति कृत्स्नचराचरसंहर्तृत्वरूपमत्तृत्वं जीवस्यानुपपन्नमित्याह जीवस्येति । अतेरसङ्गतिमाह । अनश्नन्निति-श्रुतिश्चेति ॥ ९ ॥

## प्रकरणाच्च । १ । २ । १० ॥

इतश्च परमात्मा एवात्ता 'महान्तं विभुमात्मानं मत्वा 'यमेवैष वृणुते तेन लभ्य' इत्यादिना तस्यैव पूर्वपक्रतत्वात । १० ॥

तत्रैवानन्तरं 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता' इति ऋतपानकर्मतया निर्दिष्टौ जीवपर-मात्मनौ बुद्धिजीवौ वेति संशये द्वयोः कर्मफलभोक्तृत्वश्रवणात् परस्य तदसम्भवात् सुकृत-साध्यलोकवर्तित्वगुहावच्छिन्नत्वयोः सर्वगते ब्रह्मण्यसम्भवात । छायातपनिर्दिष्टतमःप्रका-शत्वयोरपि जीवपरमात्मपरत्वेऽसम्भवाच्च तौ बुद्धिजीवावेवात्र मन्त्रे प्रतिपाद्येते न जीवपरमा-त्मानौ बुद्धेर्भोक्तृजीवोपकरणतया यथाकथञ्चित्पानेऽन्वयसम्भवादिति प्राप्ते आह ।

---

मानान्तरेणाप्यत्तृत्वं परमात्मनः सिद्ध्यतीत्याह **प्रकरणाच्चेति** । सूत्रं व्याचष्टे । **इतश्चेति** । महान्तं प्रसिद्धवैभवशालिनं विभुं सर्वगतं धीरः साधनसम्पन्नः मत्वा मननं कृत्वा न शोचति । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनुं स्वामि'त्येतत्पूर्वं परमा-त्मनः प्रकरणं तस्मान्निश्चीयते परमात्मैवात्ता न जीव इत्यर्थः । यमुपासकमेष परमात्मा वृणुते आत्मसात्करोति तेनात्मनीयेन तत्प्रियतमेन लभ्यस्तस्य प्रियतमस्योपासकस्यैष आत्मा स्वां तनुं मूर्तिं वृणुते प्रकाशयति प्रत्य-क्षीभवतीत्यर्थः ॥१०॥

**तत्रैवेति** । काठकोपनिषदि परमात्मप्रकरणे । **अनन्तरमिति** । 'यस्य ब्रह्म च क्षत्रञ्चे'ति मन्त्रा-नन्तरमित्यर्थः । एतस्य वाक्यस्याविच्छेदबोधनायानन्तरपदोपादानम् । **ऋतमिति** । सत्यपदवाच्यावश्यंभाविकर्म-फलमनुभवन्तौ सुकृतसाध्ये लोके वर्तमानौ हृदयकुहरं प्रविष्टौ तत्रापि परमाकाशे परार्ध्ये परार्धे । परार्धं सङ्ख्याया उत्तरावधिस्तदर्हतीति परार्ध्य उत्कृष्टस्तादृशे हार्दाकाशे वर्तमानौ । छायातपशब्दाभ्यां ज्ञाज्ञौ लभ्येते । पञ्चाग्निशुश्रूषाशुद्धान्तःकरणास्त्रिणाचिकेताः ब्रह्मविदो वदन्ति । केवलपञ्चाग्नित्रिणाचिकेतानामीदृशपरमात्मप्रति-पादनसामर्थ्याद्ब्रह्मविदामेव पञ्चाग्नित्वत्रिणाचिकेतत्वे विशेषणे इत्यर्थः । जीवेश्वरयोः प्रकृतत्वात् संशयं दर्शयति। **ऋतपानकर्मतयेति** । लिङ्गाद्धि प्रकरणं दुर्वलं ऋतपानलिङ्गबलात् प्रकरणं विच्छिद्यते तथाच कर्मफलभोक्तृत्वा-त्मकऋतपानात्मकलिङ्गस्य ब्रह्मणि बाधाद्बुद्धिजीवयोरबाधात् तावेव ग्राह्याविति पूर्वपक्षयति । **द्वयोरिति** । जीवेश्वरयोरित्यर्थः । परस्यपरमात्मनः । **तदसम्भवात्** फलकर्मभोक्तृत्वासम्भवात् । सर्वत्र व्यापके ब्रह्मणि सुकृत-साध्यलोकवर्त्तित्वं गुहावच्छिन्नत्वञ्च कथमपि न घटत इत्याह । **सुकृतेति** । जीवेश्वरयोः छायातपनिर्दिष्टतमः-प्रकाशत्वस्यापि न सम्भावनेत्याह । **छायातपेति** । प्रागुक्तार्थं निगमयति । **अत इति** । बुद्धौ कर्मफलभोक्तृत्वा-भावात्कथं तस्याः पानेऽन्वय इत्यत्राह **बुद्धेरिति** । जीवो हि भोक्ता बुद्धिश्च तदीयभोगस्य साधनं करणरूपायां बुद्धौ-कर्तृत्वोपचारः ऋतपाने कथंचिदन्वय इत्यर्थः । समाधत्ते **इतिप्राप्ते आह इति** । सूत्रं विवृणोति । **हृदयगुहा यामिति** । जीवस्य द्वितीयः परमात्मा कथं गृह्यत इत्यतः हीत्युक्तं हेतुमाह **हि यत इति** । हेत्वर्थं व्याचष्टे **तयोरित्यादिना** । जीवपरमात्मनोरित्यर्थः । समानस्वभावस्य परमात्मनो द्वितीयत्वेनादानं युक्तमित्यर्थः । तत्र किं नियामकमिति जिज्ञासायामाह । **सङ्ख्याश्रवणा इति** । ऋतं पिबन्तौ गुहां प्रविष्टावित्यत्र च द्विवचनोपस्था-पितद्वित्वसङ्ख्या श्रूयत इत्यर्थः । ऋतपानेन लिंगेन प्रत्यगात्मा निश्चितस्तत्सजातीयेनैव द्वितीयेन भवितव्यं सच द्वितीयश्चेतनत्वजात्याश्रयत्वेन प्राक्सिद्धाज्जीवात्परमात्मैव ग्रहीतव्यः नतु विजातीया बुद्धिः । चेतनत्वन्तु जीव-ग्रहणेन प्रागेव गृहीतं सम्प्रति परमात्मव्यक्तिमात्रस्य ग्रहणे लाघवं विजातीयबुद्ध्युपादाने च तत्र जात्यन्तरस्य ।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । १ । २ । ११ ॥

हृदयगुहां प्रविष्टौ जीवपरावेव हि यतस्तयोश्चेतनत्वेनैकस्वभावत्वात् सङ्ख्याश्रवणे सति एकस्मिन् सम्प्रतिपन्ने द्वितीयाकांक्षायां प्रतिपन्नजातिमुपजीव्य व्यक्तिविशेषपरिग्रहे बुद्धिलाघवाद्विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षायागौरवात् प्रतिपन्नजातीयपरिग्रहो युक्तः । "अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेवान्विष्यते नाश्वो न गदर्भ" इति महाभाष्यकारोक्तेः । तथाच ऋतपानलिङ्गावगतजीवस्य द्वितीयश्चेतनत्वेन तत्सजातीयः परमात्मैव ग्राह्यस्तस्य प्रयोजककर्तृतयाच्छत्रिन्यायेन वा पिबन्ताविति निर्देशस्यापि सम्भवात् ।

बुद्धौ स्वतन्त्रकर्तृत्वस्यासम्भवात् । "गुहां प्रविष्टा"विति गुहाप्रवेशस्यापि 'गुहाहितं गह्वरेष्ठं यो वेद निहितं गुहायां परमे व्योमन्नात्मानमन्विच्छ, गुहांप्रविष्ट'मित्यादिश्रुतिस्मृतिषु प्रदर्शनादुपपत्तेः । छायातपशब्दाभ्याञ्च किञ्चिज्ज्ञसर्वज्ञयोः प्रतिपादनसम्भवात् । सुकृतसाध्यलोकवर्तित्वस्यापि च्छत्रित्ववत्सम्भवात् । जीवद्वितीयः परमात्मेति कथं प्राप्यते तद्दर्शनात्, तयोरेवास्मिन् प्रकरणे गुहाप्रवेशव्यपदेशदर्शनात् ! 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहित'मिति परस्य । 'या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती सा भूतेभिर्व्यजायते'ति

---

व्यक्तेश्च ग्रहकल्पनायां गौरवस्य जागरूकत्वात् । तथाच लाघवानुरोधेनप्रथमं परमात्मनो द्वितीयत्वे निश्चिते सति गुहाश्रयत्वं चरमं व्याख्येयमनेकशास्त्रसिद्धत्वात् । पिबन्ताविति द्विवचनं च्छत्रिन्यायेन प्रयोजककर्तृत्वेनवा समर्थन्नीयमित्यभिप्रेत्याह । **एकस्मिन्नित्यादिना** । सम्प्रतिपन्ने ऋतपानकर्तृत्वेन सम्प्रतिपन्ने जीवात्मनि । **द्वितीयेति** । पिबन्ताविति द्विवचनोपस्थापितद्वित्वान्वयिऋतपानकर्तृत्वाश्रयद्वितीयः क इत्याकाङ्क्षायां सत्यामित्यर्थः **प्रतिपन्नजातिमिति** । जीवात्मनि ऋतपानकर्तरि प्रतिपन्नाऽऽत्मत्वजातिः चेतनत्वरूपा वा तामुपजीव्य आश्रयीकृत्येत्यर्थः । **व्यक्तिविशेषपरिग्रह इति** । व्यक्तिविशेषः परमात्मा तस्य ग्रह इत्यर्थः । एतेनात्मत्वजाते. प्रतिपत्तिः प्रागेवास्ति सम्प्रति व्यक्तिविशेषग्रहेण लाघवं सूचितं भवति तदेवाह । **बुद्धिलाघवादिति** । विजातीयबुद्धिग्रहणे जातिव्यक्त्युभयग्रहकल्पने गौरवं दर्शयति । **विजातीयेति** । उक्तार्थं महाभाष्यकारसम्मत्या द्रढयति । **अस्येति** । प्रागुक्तार्थं स्पष्टयति । **ऋतपानेति** । कथं परमात्मनो ऋतपानकर्तृत्वमित्यत्राह । **तस्य प्रयोजककर्तृतयेति** । जीवस्तावत् पिबति ईश्वरस्तु पाययति पाययन्नपि बतीत्युच्यते यः कारयति स करोत्येवेत्यर्थः । **छत्रिन्यायेति** । छत्रिणो यान्तीत्येकेनापि छत्रिणा तदितराणामच्छत्रिणां छत्रित्वोपचारदर्शनादेवात्राप्येकस्य पानेप्यन्यत्रोपचारेण पिबन्तावित्युच्यत इत्यर्थः । द्वितीयबुद्धिग्रहणे तु पिबन्ताविति निर्देशो नोपपद्यत इत्यत्र आह । **बुद्धाविति** । परमात्मनो गुहाहितत्वं श्रुतिप्रमाणेन समर्थयति । **गुहांप्रविष्टाविति** । गुहाहितं हृदयाख्यगुहायां स्थितं गह्वरेष्ठमन्तर्यामिणं गुहायां हृदयगुहायां परमे व्योमन् व्योम्नि दहराकाशे निहितं सत्यत्वादिविशिष्टं परं ब्रह्म वेद स ब्रह्मविदधिकारी स्वयोग्यानन्दादीन् विपश्चिता ब्रह्मणा सह तद्वश्यः सन् । अश्नुते भुङ्क्त इत्यर्थः । अनेन हृदि गुहाहितत्वं परमात्मनस्समर्थितम् । छायातपशब्दयोरुपपत्तिमाह । **छायातपशब्दाभ्यामिति** । जीवस्य "पराभिध्यानात्तु तिरोहितम्" ब्र० सू० ३ । २ ९ ॥ इति सूत्रेण परमात्मसङ्कल्पमूलकर्मरूपानाद्यविद्यावेष्टिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयोरर्थित्वरूपितशरीरान्तर्यामित्व-गुहावर्तित्वकथनेनानुपपत्तिरितिभावः । परमात्मनो न सुकृतलोकवर्तित्वं तत्राह । **सुकृतसाध्येति** । सूत्रस्थहेतुभागमुत्थापयितुं पृच्छति । **जीवद्वितीय इति** । हेत्वर्थं विवृणोति । **तयोरेवेति** । जीवेश्वरयोरित्यर्थः । परमात्मनो गुहाहितत्वं श्रुतिप्रमाणेन व्यवस्थापयति । **तं दुर्दर्शमिति** । द्रष्टुमशक्यं कुतः गूढं तिरोधायककर्मरूपाविद्यया तिरोहितत्वात् । गुहाहितं हृदयवर्तिनमित्यर्थः । जीवस्य गुहावर्तित्वे श्रुतिमुदाहरति । **प्राणेनेति** । अदितिशब्दस्य

जीवस्य तत्र कर्मफलान्यत्तीत्यदितिः प्राणेन सह वर्त्तते देवतामयी इन्द्रियाधीनभोगा भूतेभिर्भूतैः पृथिव्यादिभिः सहिता देवतादिरूपेण विविधा जायत इत्यर्थः । ११ ॥

## विशेषणाच्च १।२।१२

अत्र प्रकरणे जीवपरयोरेव 'ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति, यः सेतुरीजानानाम्, आत्मानं रथिनं विद्धि, विज्ञानसारथिर्यस्तु' इत्यादिषु उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वगन्तव्यत्वगन्तृत्वादिभिर्विशेषत्वेन प्रतिपादनात् ।१२।

गुहाप्रविष्टाधिकरणम् ।२।

## अन्तर उपपत्तेः १।२।१३

छान्दोग्ये इदं श्रूयते 'य एषोऽक्षिणि पुरुषो दृश्यते (छां० ।४।१५।१।) एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति ।' तत्र सन्दिह्यते किमयमक्ष्यन्तरः पुरुषः प्रतिविम्बात्मेति उत जीव उतेन्द्रियाधिष्ठातृदेवविशेषः अथवा परमात्मेति । किं तावत्प्राप्तं प्रतिविम्बात्मेति, कुतः दृश्यते इत्यपरोक्षतया प्रसिद्धवन्निर्देशात् जीवो वा तस्यापि चक्षुषि रूपद्रष्टृत्वा सन्निहितत्वा

---

देवमातरि भूमौ च वेदप्रसिद्धेस्तद्व्यावृत्त्यर्थमवयवशक्त्या जीववाचित्वं दर्शयति । **कर्मफलानीति** ॥ ११ ॥

सूत्रं विवृणोति । **अत्र प्रकरण इति** । सोपास्यत्वप्रकरणे जीवपरयोरेवेत्यस्य उपास्यत्वोपासकत्वादिना समन्वयः । ब्रह्मयज्ञं प्रत्यगात्मानं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्य निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्येमां त्रिकर्मकृत्तरतीति पूर्वमन्त्रनिर्दिष्टां संसाररूपमनर्थशान्तिमेतीत्यर्थः । **यः सेतुरीजानानामिति** । यज्वनां सेतुः प्रतिष्ठापक इत्यर्थः । **आत्मानं रथिनमित्यादीति** । शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः । १२ ॥

इतिगुहाप्रविष्टाधिकरणम् । ३

ऋतं पिबन्ताविति द्विवचनानुरोधात् प्रत्यगात्मपरमात्मानौ प्रागवगतौच्छाया तदनुसारेण गुहाप्रवेशादयः व्याख्याताः, तथात्रापि एषोऽक्षिणि पुरुषो दृश्यत इत्यत्र दृश्यत इति प्रत्यक्षाभिधानात् पुरुषे प्राक् निश्चिते तदनुरोधादेवामृतत्वाभयत्वादयो धर्माः कथञ्चिन्नेतव्या इत्यत आह । **आन्तर इति** । विषयवाक्यमुदाहरति । **छान्दोग्य इति** । य एषोऽक्षण्यन्तःपुरुषो दृश्यते दिव्यदृष्ट्यैष आत्मा परमात्मेतिहोवाच एतदमृतं स्वतो नित्यमुक्तम् अभयं स्वतोभयशून्यमेतद्ब्रह्म गुणपूर्णमेतस्मिन् भगवति कमपि न श्लिष्यति असङ्गोऽसौ यत्स्थानाच्चक्षुषोऽप्यसङ्गत्वं किं तस्येति भावेन चक्षुषोऽसङ्गत्वमाह । **तद्यद्यीति** । यद्यस्मादेवासङ्गः पुरुषोऽक्षिणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित्सिञ्चति तर्हि वर्त्मनी प्रत्येव वर्त्मनीपक्ष्यस्थाने गच्छति न चक्षुः स्पृशतीति श्रुत्यर्थः । संशयमाह । **सन्दिह्यत इति** । पूर्वपक्षमाह । **किन्तावदिति** । अमृतत्वादिधर्माणामसम्भवान्न प्रतिबिम्वात्मेति शङ्कते । **कुत इति** । **प्रसिद्धवन्निर्देशादिति** । य एष इति पदाभ्यां प्रसिद्धनिर्देशः दृश्यत इत्यपरोक्षाभिधानमित्यर्थः । तस्यापि जीवस्यापि । जीवस्य गमकं लिङ्गमाह । **चक्षुषीति सन्निहितत्वादिति** । जीवस्य देहसम्बन्धाच्चक्षुषि सन्निधानमवगम्यत इति भावः । सम्भावितं पक्षान्तरमाह । **आदित्योवेति** । आदित्यस्य चक्षुषि सन्निधिं दर्शयति । **चक्षुष इति** । तस्य तस्मिन्ननुग्राहकत्वेन सन्निधौ श्रुतिं प्रमाणयति । **रश्मिभिरिति** । सिद्धान्तयति । **ब्रूम इति** । **आत्मत्वामृतत्वेति** । एष आत्मेहोवाचेतदमृतमेतभयमेतद् ब्रह्म एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसयान्ति । एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति ।

दात्मशब्दवाच्यत्वाच्च। आदित्यो वा चक्षुरनुग्राहकः 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठित' इति श्रुतेः। एवं प्राप्ते ब्रूमः अक्ष्याधारपुरुषः परमात्मैव। कुत उपपत्तेः। आत्मत्वामृतत्वाभयत्वापहतपाप्मत्व-संयद्वामत्वादिगुणजातस्य तत्रैवोपपत्तेः ।१३।

## स्थानादिव्यपदेशाच्च ।१।२।१४।

चक्षुषि स्थितिनियमनादीनां यश्चक्षुषि तिष्ठन्नित्यादि श्रुत्या परमात्मन्येव व्यपदेशात् स-एवाक्ष्याधारः दृश्यत इत्यपरोक्षव्यपदेशो योगिदृष्ट्योपपद्यते ॥१४॥

## सुखविशिष्टाभिधानादेव च ।१।२।१५।

इतश्चाक्ष्यन्तरः पुरुषः परमात्मा "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राक्ष्याधारतया संयद्वामत्वादिगुणवत्तयाचोपास्यत्वाभिधानात् एवकारो हेतुनैरपेक्ष्यद्योतकः। नन्व" थहैनं गार्हपत्योऽनुशशासेत्यादिना मध्येऽग्निविद्योपदेशात् कथम-च्छिस्थानकं प्रकृतं ब्रह्मेति फलचैलक्षण्योपदेशोच्चेति चेदुच्यते "तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति। य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे-त्युपक्रमोपसंहारयोः श्रूयमाणो ब्रह्मशब्दो मध्योपदिष्टाग्निविद्याया ब्रह्मविद्याङ्गत्वमवगमयति। एवञ्च 'अपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयंतं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च" इतिफलान्तराभिधानस्य मोक्षविरोधित्वादर्थवादत्व-मेवेति। तत्र पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरः लोकशब्दो ब्रह्मलोकप्राप्तिमार्गभूताग्नि-

---

इत्यादिश्रुतिभ्य उक्तधर्माणां ब्रह्मण्येवोपपत्तेरित्यर्थः। अस्यार्थः—संयद्वामः संयन्ति वामानि कर्मफलानि यस्मादिति संयद्वामः सर्वकर्मफलोदयहेतु एतदेवाह हि यतः एतमक्षिगतं पुरुषं हेतुमाश्रित्य वामान्यभिसंयन्ति उत्पद्यन्ते। एष उ एव वामानि कल्याणानि श्रेयांसि नयति जनं प्रापय तीति वामानि नयतीति एष उ एव भामनीः भामानिनयतीति सर्वप्रकाशकः एतदेवाह। **एषहि सर्वेषु लोकेषु भातीति**। १३ ॥

चक्षुषि तिष्ठन्निति श्रुत्यनुसारेण सूत्रस्थस्थानशब्दस्य स्थित्यर्थकतामाह। **चक्षुषि स्थितिरिति**। ननु तस्य प्रदेशपरत्वमितिभावः। सूत्रस्थादिशब्दार्थं विवृणोति। **नियमादीनामिति**। एतेन नामरूपपरत्वेनादिशब्दस्य व्या-ख्यानं यत्परैः कृतं तदपास्तम्। नामरूपादीनां प्रत्यगात्मन्यपि सम्भवान्न तस्य परमात्मसाधकत्वं कथमप्युपपद्येतेति सएव=परमात्मैव। **योगिदृष्ट्येति**। शास्त्रप्रतिपाद्यं ब्रह्म योगिभिर्दृश्यत उपास्यते च "यत्तदद्रेश्यमित्युक्त्वा परिपश्यन्ति धीरा" इत्युक्तेः। गूढआत्मा न प्रकाशतेदृश्यतेत्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति श्रुतेः इत्यभिप्रायः। १४ ॥

**इतश्चेति**। सुखविशिष्टाभिधानादेवेत्यर्थः। **प्राणो ब्रह्मेति**, सकलजगत्प्राणयितृत्वात् प्राणो ब्रह्मेत्युक्तं 'कं' सुखं 'खं' ब्रह्म, इत्यर्थः। सूत्रस्थैवकारस्य प्रयोजनं दर्शयति। **एवकार इति** पूर्वसूत्रद्वयोक्तं हेतुद्वय व्यतिरेकोक्तिसापेक्षम्। "अनवस्थितेरसम्भवात्", इति हि वक्ष्यते। अयन्तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इति भावः। प्रकरणविच्छेदं दर्शयन् शङ्कते। **नन्विति** अग्निविद्याव्यवधानमेव दर्शयति। **अथ हैनमिति**। प्रकरणाविच्छेदेन समाधत्ते। **उच्यत इति**। उपक्रम उपसंहारेचोभयत्रैव ब्रह्मशब्दप्रयोगः। अग्निविद्यायाः प्राक् ब्रह्मविद्याया आसमाप्तिः ब्रह्मविद्यामधिकृतस्याग्निविद्योपदेशः। आध्यात्मिकादिसन्तापसन्तप्तस्य पुंसस्तच्छान्त्यर्थमुभयोः समुच्चित्योपदेशश्चेत्याह। **तस्मैहोचुरिति**। तस्मै=उपकोशलाय कामलायनाय कारुण्यविशिष्टा अग्नय

लोकपरः। सर्वम् ब्रह्मोपासनसमाप्त्यन्तम् ।ज्योग्। व्याध्यादिरहितः। यावद्ब्रह्मप्राप्ति अवरपुरुषाः पुत्रपौत्रादयः शिष्यप्रशिष्यादयश्च वयमग्नयः तमेनमुपभुञ्जामो यावद्ब्रह्मप्राप्तिविघ्नेभ्यो रक्षाम इत्यर्थः। 'आचार्य्यस्तु ते गतिं वक्ता' इति वदतामग्नीनां त्वयमभिप्रायः हे उपकोशल ब्रह्मविद्या मनुपदिश्य प्रोषुषि गुरौ तदलाभदानाश्वासं त्वामुज्जीवयितुं ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्नि-विद्याञ्चोपदिशामः। आचार्य्याद्धयेव विदिताविद्या साधिष्ठं प्रापत्, इति श्रुतेः आचार्य्य एव ते तुभ्यं संयद्वामत्वादिगुणकं ब्रह्म अचिरूपं तदुपासनरथानमर्चिरादिकञ्च गतिं वक्ता वक्ष्यतीति, आचार्य्योऽप्यग्रे तथैवोपदिदेशेत्यतः। "कं ब्रह्म खं ब्रह्मे"ति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणो ऽत्राभिधानादक्ष्यन्तरः परमपुरुष एवेति। १५ ॥

ननु नाम ब्रह्म मनोब्रह्मेत्यादिवत् कंखंशब्दयोरपि लौकिकसुखभूताकाशयोः प्रसिद्धेः। प्रतीकोपासनमेवेदमिति तत्राहुः—

## अतएव च तद्ब्रह्म। १। २। १६।

यतस्तत्र 'यद्वाव कं तदेव खं यदेव खं तदेव क"मिति सुखविशिष्टाकाशस्यापरिच्छिन्न-सुखस्यचाभिधानमतः स्वशब्दवाच्यं तदाकाशं परं ब्रह्मेति। १६ ॥

---

ऊचुरित्यर्थः। "प्राणो ब्रह्म कं खं ब्रह्मेति सहोवाच विजानाम्यहं यत्प्राणो ब्रह्म कञ्च खञ्च न विजानामीतिहोचुर्यदेव कं तदेव खं यदेव खं तदेव कमिति प्राणञ्चाहास्मै तदाकाशञ्चोचुः कं खं शब्दस्यार्थे पृष्टे तदभिप्रायज्ञा अग्नयः कं खमित्यनेन तयोरन्योन्यविशेष्यविशेषणभावोऽभिप्रेत इति तस्याभिप्रायमुक्तवन्त इत्यर्थः। अथैनं गार्हपत्योनुशशास, उपदिष्टब्रह्मविद्यैनमुपकौशलं गार्हपत्योऽग्निः स्वां विद्यां वक्ष्यमाणामुपदिदेशेत्यर्थः। अथशब्दश्च प्रकृतविषयत्वद्योतनार्थः। अत्र चाथेतमिति शब्दाभ्यां वक्ष्यमाणाग्निविद्यायाः प्रकृतविद्याङ्गत्वमुच्यते। अनुशासनप्रकारमेवाह 'पृथिव्यग्निरन्नमादित्य" इति एताश्चतस्रस्ते भव इत्यर्थः। "य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति" उ०म्०। पृथिव्यग्न्यन्नादित्यलक्षणानां चतुर्णां मध्ये अग्न्यादित्यरूपयोः पक्तृत्वप्रकाशकत्वरूपधर्मसम्बन्धादैक्यम्। अग्नेरादित्येन यादृशमैक्यं पृथिव्यन्नाभ्यां तस्मादादित्य एवाहमस्मीत्यग्निरुवाचेत्यर्थः। उ०स एतमेवं विद्वानुपास्तेऽपहते पापकृत्यामिति प्राक्तनोपनिषद्ग्रन्थार्थः। फलाविरोधम-भ्युपगम्य परिहरति। **एवञ्चेति**। **फलान्तराभिधानस्येति**। 'द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थ-वादस्स्यात्, इति कर्ममीमांसासूत्रम्। अथ फलविरोध एव नास्तीत भावः। श्रुत्यर्थं विवृणोति। **तत्रेति**। अपहते पापकृत्यामिति श्रुतावित्यर्थः। उत्तरसूत्रमवतारयितुं शङ्कते। **नन्विति**। यथा नाम ब्रह्मेत्यत्र प्रतीकोपासनायां विशेषणीभूतस्य ब्रह्मणः पश्चादभिधानं विशेष्यस्य नाम्नः प्रागभिधानम् तथा प्रकृतेऽपि कंखंशब्दयोः प्रागुपादानं ब्रह्मणश्च पश्चादभिधानमिति तुल्यत्वाभिधानं सम्यगेव। कंशब्दस्य वैषयिकसुखे खंशब्दस्य भूताकाशे च रूढत्वान्नात्र सुखविशिष्टस्य ब्रह्मणः प्रतिपत्तिरिति पूर्वपक्षः। **समाधत्त इति**। **आह इति**। अतएवेत्यस्यार्थं व्याकरोति। **यतस्तत्रेति**। प्राणो ब्रह्म कंखंब्रह्मेत्यभिधाने उपकौशल उवाच विजानाम्यहं यत्प्राणो ब्रह्म कञ्च खञ्च न विजानामीति पृष्टे, अग्नय ऊचुः, यद्वाव कं तदेव खमिति कंसामानाधिकरण्यात् खं ब्रह्मैव प्रतिपत्तुं शक्यते नभूताकाशादिरित्यर्थः। श्रुतेरर्थं विवृणोति। **सुखविशिष्टेति**। प्राथमिककंपदेन सुखमुपस्थाप्यते खंशब्देनाकाशशब्दाभिधेयपरात्माऽभिधीयते। तयोर्विशेष्यविशेषणभावेन सुखविशिष्टाकाश इत्यर्थः पर्य्यवसन्नः। द्वितीयखमित्यनेनाकाशवाचिनाऽपरिच्छिन्नत्वमभिधीयते तदुत्तरवर्तिना कंशब्देन सुखं प्रत्याय्यते। कंखमित्येतयोरन्योन्यविशेष्यविशेषणभावेऽनवच्छिन्नसुखं ब्रह्मेत्यस्य लाभो भवति। एतदेवाह। **अपरिच्छिन्नेति**।

## श्रुतोपनिषत्कगत्यभिधानाच्च । १ । २ । १७ ॥

उपनिषीदति उपास्योपासकस्वरूपविषयकसन्देहं संसारग्रन्थिं वा सादयति नाशयतीति। उप समीपस्थं नि निश्चितं परमात्मानं प्रापयतीति वा उपनिषद्विद्या तत्सम्पर्काद्ग्रन्थोऽपि । श्रुता उपनिषदो यैस्तैरधिगतब्रह्मयाथात्म्यैः परमात्मप्राप्तये या गतिरर्चिरादिकाऽधिगन्तव्यतया ऽवगता श्रुत्यन्तरे तस्या एवेह "ते ऽर्चिषमेवाभिसम्भवन्ती" त्यारभ्य "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त" इत्यन्तेनाक्षिपुरुषं श्रुतवत उपकोशलस्याधिगन्तव्यतयाऽभिधाना-दक्ष्यन्तरः पुरुषः परमात्मैव ॥ १७ ॥

## सू० अनवस्थितेरसम्भवाच्च नेतरः । १ । २ । १८ ॥

यच्चोक्तं प्रतिबिम्बात्मा जीवो वेन्द्रियाधिष्ठातृदेवो वाऽक्ष्यन्तरस्तत्रोच्यते इतरः प्रतिबिम्बादिर्नेह गृह्यते तस्य चक्षुषि नियमेनानवस्थितेरमृतत्वसंयद्वामत्वादीनां चासम्भवात् । तत्र प्रतिबिम्बात्मनः पुरुषान्तरसन्निधानाधीनत्वात् जीवस्य च कृत्स्नेन्द्रियसम्बन्धवत्त्वात्

---

कं ब्रह्म खं ब्रह्मेति वाक्यप्रतिपाद्यं न दुःखविशिष्टं ब्रह्मेति शङ्कापरिहारार्थं हि अतएव च 'स ब्रह्मेति'सूत्रस्योत्थानम्, तस्याशङ्काया अनेन परिहृतत्वं दर्शयति । अतः स्वशब्दवाच्यमिति खंशब्दवाच्यमित्यर्थः ॥ १६ ॥

उपनिषच्छब्दार्थं विवृणोति । उपास्य इति । सन्ति चोपनिषदि प्रतीकोपासनादयस्तेचार्चिरादिगतिरहिता इत्याशङ्कामपनेतुमाह । अधिगतब्रह्मयाथात्म्यैरिति । अर्चिरादिगतेः फलं किमित्यत आह । परमात्मप्राप्तय इति । 'श्रुतब्रह्मण' इत्येव सूत्रमुपन्यस्यतां किं गुरुतरारम्भेण इत्यत आह । श्रुत्यन्तर इति । छान्दोग्य एव प्रदेशान्तरे 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इति वाजसनेयके 'य एवमेतद्विदुर्येचामी अरण्ये श्रद्धासत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्ति, इत्यादिः, कौषीतकीनां पर्यङ्कविद्यायां 'सोऽग्निलोकमागच्छति' इत्यादिः गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कव्यपदेश इत्यभिप्रायः। अक्षिपुरुषस्याब्रह्मत्वे तत्क्रतुनयविरोध इत्यभिप्रायेणाह । तस्या एवाहेत्यादिना । तस्या अर्चिरादिगतेः। इह=उपकोशलविद्याप्रकरणे । अस्यान्वयः प्रतिपाद्यमानेत्यनेन । याऽर्चिरादिका गतिः श्रुत्यन्तरे अवगता इह उपकोशलविद्याप्रकरणे प्रतिपाद्यमानेति योजना । तत्प्रघट्टकार्थस्तु अथ यदुचैवाभिन्च्छव्यं कुर्वन्तीत्यारभ्य तत्फलितार्थ इत्यन्तेन ग्रन्थेन पूज्यपादश्रीश्रीनिवासाचार्येण भाष्यकारेण वेदान्तकौस्तुभे सम्यक्तया विवृतस्तत्र द्रष्टव्यः ॥ १७ ॥

प्रागुक्तमनूद्यति । यच्चोक्तमिति । सूत्रमुत्तरत्वेन योजयति तत्रोच्यत इति । तत्र=पूर्वपक्षे । सूत्राक्षराणि विवृणोति । इतर इति । व्याख्येयपदं तस्य व्याख्यानं प्रतिबिम्बादिरिति । सूत्रस्थनकारपदं व्याचष्टे नेह गृह्यत इति । इहेति । स्थानं वाक्यश्चोक्तम अनवस्थितिपदं व्याकरोति । तस्येत्यादिना । तस्य=प्रतिबिम्बादेः । असम्भवादि तिपदं व्याचष्टे । अमृतत्वसंयद्वामत्वादीनामिति । अनवस्थानासम्भवौ प्रतिबिम्बादिषु दर्शयति तत्र प्रतिबिम्बा-त्मन इति । तत्र=चक्षुषि । जीवस्य चक्षुषि नियमेनावस्थितिर्नोपपद्यत इति प्रदर्शयन् प्रतिबिम्बपक्षं निरस्य जीवात्मनो वेतिकल्पं व्युदस्यति । जीवस्य चेति । चकारोऽप्यर्थे किम्वा जीवो वेति कल्पान्तरस्फोरणाय तृतीयकल्पमपि निरस्यति। देवतायाश्चेति। चकारार्थ: पूर्ववत् । रश्मिद्वारेणेति । खट्वादिद्वारकप्रासादशयनवद्रश्मिद्वारकं चक्षुष्यवस्थानमित्यर्थः । अधिकरणार्थं निगमयति । तस्मादिति । 'अन्तर उपपत्तेः' इत्यनेन एतत्सूत्रस्थस्यासम्भवादित्यस्य हेतोरुपपत्तिः कृता अमृतत्वाभयत्वसंयद्वामत्वधर्माणामुपपत्तिमुखेन, यश्चक्षुषि तिष्ठन्निति श्रुतिप्रदर्शमुखेन । एतत्सूत्रस्थ-स्थितिनियमादीनां शङ्कापरिहारः 'स्थानादिव्यपदेशादि'ति द्वितीयसूत्रेण समर्थितः तादृशशङ्कां परिहृत्य कं ब्रह्म

न नियमेन चक्षुष्यवस्थितिसम्भवः। देवतायाश्च रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थित-स्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुषि नियमेनावस्थामितिभावः। तस्मादक्ष्यन्तरः पुरुषः परमात्मेति सिद्धम् ॥ १८ ॥ अथ अन्तर्याम्यधिकरणम्।

**सू० अन्तर्याम्यधिदेवादिलोकादिषु तद्धर्मव्यपदेशात् ।१।२।१९॥**

बृहदारण्यके "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तर" इत्यारभ्य "एष ते आत्मान्तर्या-म्यमृत" इत्यादिना पृथिव्यग्न्यन्तरिक्षाकाशवायुदिवादित्य दिक्ष्वधिदेवादिपर्वपर्यायेषूच्यमानो-ऽन्तर्यामी किं देवता विशेषः उत जीव उत परमात्मेति विषयः देवतात्मनो नियमयितृत्वस्य

---

खंब्रह्मेतिप्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं सुखविशिष्टाभिधानमिति तृतीयसूत्रम्। कंखंब्रह्मेति पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं 'अतएव तद्ब्रह्मे''ति सूत्रम् तूर्य्यम् ततः पाश्चात्यवाक्येन साधकं "श्रुतोपनित्कगत्यभिधानाच्चे"ति-सूत्रं पञ्चमम् षष्ठन्तु साध्यदार्ढम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्राणां सङ्गतिः ॥ १८ ॥

इत्यन्तराधिकरणम्

अथ अन्तर्याम्यधिकरणम्

'एषोऽक्ष्णएयन्तर' इत्यादिश्रुतीनां ब्रह्मणि समन्वयः प्रदर्शितः सम्प्रति अन्तर्यामिब्रह्मणः ब्रह्मपरत्वेन समन्वयं दर्शयति। **अन्तर्यामिति**। विषयवाक्यमुदाहरति। **बृहदारण्यक इति**। पृथिव्यां स्थितस्पदन्तगतच्चञ्चरीकः सन्योन्तःप्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति एषोऽन्तर्यामी तेऽमृत आत्मा निरुपाधिकामृतत्वशाली आत्मे-त्यर्थः। अत्र 'त आत्मेति व्यतिरेकनिर्देशादन्तर्यामिणो जीवस्याव्यतिरेक सिद्धोऽमृतत्वविशेषणाच्च, तद्धि विशेषणं जीवव्यावृत्यर्थम्। अन्तर्यामी त आत्मेत्युक्तात्मशब्दस्य स्वरूपवचनत्वशङ्कया जीवव्यावृत्ति प्राप्नोतीति "हि अमृत" इत्युक्तम्। निरुपाधिकामृतत्वशाल्यात्मा परमात्मैवेति सिद्धान्तानुगुणश्रुत्यर्थः। **अबिति**। योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो नविदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष आत्मान्तर्याम्यमृतः। **अग्निरिति**। योऽग्नौतिष्ठन्नग्नेरन्तरइत्यादि। **अन्तरिक्षेति**। योऽन्तरीक्षे तिष्ठन्निति एवमाकाशादिष्वपिबोध्यम्। संशयमाह। **अन्तर्यामी किंदेवताविशेष इति**। स एवेति देवताविशेष एवेत्यर्थः। जीवस्यान्तर्यामित्वे गमकमाह। **वाक्यशेष इति**। दृष्टो द्रष्टाश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञातेति वाक्यशेषः। **द्रष्टन्तरनिषेधाच्चेति**। नान्यतोऽस्ति श्रोता नान्यतोऽस्ति मन्ता नान्यतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोन्यदार्त्तं ततो होद्दालक आरुणिरुपरराम" इति द्रष्ट्रन्तरनिषेधवाक्यम्। सिद्धान्तयति। **इदमुच्यत इति**। प्रत्यगात्मनोऽन्तर्यामित्वेनाभिधानात्कथं परात्मनोऽन्तर्यामित्वमिति प्रश्नपूर्वकं हेतुमुत्थापयति। **कुत इति**। **सर्वदेवलोकवेदयज्ञभूतादीति**। यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्योऽन्तरः यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः। सर्वभूतान्तर्गतत्वसर्वभू-ताऽवेद्यत्व-सर्वात्मत्वसर्वभूताधेयत्व-सर्वनियन्तृत्वादिधर्माः प्रागुदाहृतश्रुतिनिरूप्याः परमात्मन्येवोपपद्यन्ते नतु प्रत्यगात्मनि देवताविशेषेवेत्यर्थः। **देवेति**। 'स ब्रह्मवित् लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्ववित् य इमञ्च लोकञ्च परञ्च लोकञ्च सर्वाणि भूतानि चान्तरो यमयती'ति वचनेषु परमात्मधर्माणामेव व्यपदेश इत्यर्थः। देवतापरिग्रहपक्षम-पाकरोति। **देवतापरिग्रह इति**। **अविज्ञेयत्वोक्तिरिति**। पृथिवी देवता स्वात्मानं जानातीति न वेदेत्यविज्ञेयोक्ति-रसङ्गता स्यात् अतस्तदुक्तिर्देवताभिन्नमविज्ञेयमन्तर्यामिणं परमात्मानं निर्धारयतीत्यर्थः। जीवपक्षेऽपि दोषमाह **जीवपरिग्रह इति**। **त इति**। ते आत्मान्तर्यामीत्यत्र भेदनिबन्धनया षष्ठिविभक्त्या प्रत्यागात्म भिन्नोऽन्तर्यामी परमात्मे-ति निश्चीयत इत्यर्थः। कारणाधीनद्रष्टृत्वं प्रत्यगात्मन एव नतु परमात्मनः कथं तस्यान्तर्यामित्वमित्यत आह। **द्रष्टृत्वादंरपीति**। तत्र श्रुतिं प्रमाणयति। **पश्यत्यचक्षुरिति**। द्रष्टृपदशक्यतावच्छेदकं नेन्द्रियाधीनज्ञानत्वमपितु रूपादिविषयकप्रत्यक्षत्वं तच्च जीवेश्वरोभयसाधारणम् जीवस्य बद्धावस्थायां करणायत्तज्ञानं परमात्मनस्तु करणानायत्तं

युक्तत्वात्स एवेति जीवो वा वाक्यशेषे द्रष्टृत्वादिश्रवणात्। द्रष्ट्रन्तरनिषेधाच्चेति प्राप्ते, इदमुच्यते—अन्तर्यामी परमात्मैव। कुतः ? तद्धर्मव्यपदेशात्। सर्वदेवलोकवेदयज्ञभूतादिनियमनस्यात्मत्वामृतत्वादेश्च परमात्मधर्मस्यैवात्र व्यपदेशात्। देवतापरिग्रहे "यं पृथिवी न वेदे"ति पृथ्वीदेवतयाऽविज्ञेयत्वोक्त्यनुपपत्तेः। जीवपरिग्रहे ते इति षष्ठ्यनुपपत्तेः। "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादि श्रुतेर्द्रष्टृत्वादेरपि तत्र सम्भवात् द्रष्ट्रन्तरनिषेधस्तु पूर्ववाक्योक्तद्रष्टुर्नियन्तुर्द्रष्ट्रन्तरनिषेधपरः जीवेनाद्रष्टान्तर्यामिदृष्टवत् अन्तर्यामिणाप्यद्रष्टुरभावात् पृथिव्याद्यात्मपर्यन्तैस्तन्नियम्यभूतैरदृश्यमानस्यैव नियमयतीत्यादिपूर्वोक्तस्य नियन्तुरेवादृष्टो द्रष्टाऽश्रुतः श्रोते"त्यादिना सूचितत्वाच्च ॥ १९ ॥

अदृष्टत्वादिधर्मस्य प्रधानेऽपि सम्भवात् ईक्षतेर्नेत्यत्र निरस्तमपि पुनराशङ्क्य निषिध्यते—

## न च स्मार्तमतद्धर्माभिलापात् ॥ २० ॥

स्मार्त्तं स्मृतिप्रतिपन्नं प्रधानं च नान्तर्यामिशब्दवाच्यं, कुतः। अतद्धर्माणां स्वभावत एव सर्वात्मत्व—सर्वनियन्तृत्व—सर्वद्रष्टृत्वामृतत्वादीनामचेतनेऽसम्भावितानामत्राभिलापात् कथनात् ॥ २० ॥

जीवस्य चेतनत्वात्सएवास्त्विति चेत्तत्राह—

## शारीरश्चोभयेऽपिहिभेदेनैनमधीयते ॥ २१ ॥

---

ज्ञानं करणानामपि प्रकाशकत्वात्। एष स्वयं ज्योतिरिति श्रुतेः। एतावानेव विशेषः तत्र=परमात्मनि। ननु नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योतोऽस्ति मन्ता' इति श्रुतौ द्रष्ट्रन्तरनिषेधात्कथं परमात्मनोऽन्तर्यामित्वमित्यत आह। **द्रष्ट्रन्तरनिषेधस्त्विति। पूर्ववाक्येति।** यं पृथिवी न वेद दृष्टोऽद्रष्टा श्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता एवमादिवाक्येष्वित्यर्थः। नान्योऽतोऽस्तीति वाक्ये अन्यशब्दादेरसर्वनाम्नः। पूर्वनिर्दिष्टसदृशान्यपरत्वस्य 'समाने पूर्ववत्त्वात्' जै० सू० ।७।१।१३ ॥ इति समाप्तिकाधिकरणे व्यवस्थितत्वादत्राप्यन्यशब्देन पूर्वनिर्दिष्टादृष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारादिमतोन्यस्तत्सदृशो द्रष्टा नास्तीत्यर्थः। अस्यां परिषदि यज्ञदत्त एव विद्वान्नान्य इत्युक्ते न विद्वन्मात्रं निषिद्ध्यते किन्तु तत्सजातीयद्वितीयो नास्ति तथा प्रकृतेऽपि द्रष्ट्रन्तरं तत्सजातीयं निषिद्ध्यत इति भावः। **प्रागुक्तार्थं विवृणोति। जीवेनेति।** यथा प्रत्यगात्मा स्वभिन्नं स्वान्तर्यामिणमदृश्यं पश्यति तथा सर्वेषामन्तर्यामी परमात्मा स्वव्यतिरिक्तं द्रष्ट्रन्तरं न पश्यति अतः द्रष्ट्रन्तरस्य निषेधः सूपपन्न इत्यर्थः। यं पृथिवी न वेद यमात्मा न वेद यमक्त्येष ते आत्माऽन्तर्याम्यमृतइत्याद्युपक्रमवचनैः पृथिव्याद्यन्तर्गतस्तन्नियम्यभूतपृथिव्यादिभिरदृश्यस्तच्छरीरकस्सन् योऽन्तःप्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति तेषां पृथिव्यादीनामन्तर्यामिपरमात्मा तं प्रागुदाहृतादृष्ट इतिवचनेनोदाहृत्य नान्योऽतोऽस्ति द्रष्टा इत्युपसंहारवाक्येन द्रष्टन्तरं निषिध्यत इत्यभिप्रेत्याह। **पृथिव्याद्यात्मपर्यन्तैरिति** ॥ १९ ॥

सूत्रमवतारयितुमाशङ्कते। **अदृष्टत्वादिधर्मस्येति।** यद्याशङ्कितादृष्टत्वादयो धर्माः प्रधानेऽपि सन्ति तस्यैवान्तर्यामित्वं सिद्ध्येतेति तदपि निरस्यतीत्यर्थः। सूत्राक्षराणि व्याचष्टे। **स्मार्त्तमिति।** नहि चेतनवृत्तिधर्माः सर्वात्मत्वनियन्तृत्वादय आनुमानिके प्रधाने सम्भावयितुमभिशक्या इत्यर्थः। २० ॥

प्रत्यगात्मनश्चेतनत्वात् तत्र दृष्टत्व-श्रोतृत्व-मन्तृत्व-विज्ञातृत्वादिधर्माणां सत्त्वात्सएवान्तर्यामी भवत्वित्या-

शारीरश्चेति। चकारः समुच्चयार्थः। शारीरोजीवोऽपि नान्तर्यामी सर्वात्मत्वसर्वनियन्तृत्वसर्वज्ञत्वादीनामतद्धर्मत्वात्। हि यत उभयेपि काण्वा माध्यन्दिनाश्च एनं शारीरं जीवमन्तर्यामितो भेदेन पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते "यो विज्ञाने तिष्ठ" न्निति काण्वाः। विज्ञाने प्रत्यगात्मनि। "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्यम्यमृत" इति माध्यन्दिनाः। तस्मात्पृथिव्यादिवन्नियम्यत्वमेव जीवस्य न नियन्तृत्वमतोऽधिदेवाधिष्वन्तर्यामी परमात्मैवेति सिद्धम् ॥२१॥

इत्यन्तर्याम्यधिकरणम्।

## अथ अदृश्यत्वाधिकरणम्

इदमाथर्वणिकैराम्नायते "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः, अप्राणोह्यमनाः शुभ्रो ह्यक्षरात्परतः पर" इत्यादि। तत्र संशय्यते किमिहादृश्यत्वादिगुणकं भूतयोन्यक्षरं अक्षरात्परतः परश्च प्रधानपुरुषौ उतोभयत्र परमेश्वर इति किं तावत्प्राप्तं, प्रकृतिपुरुषाविति। कुतः! अस्य भूतयोन्यक्षरस्य द्रष्टृत्वादिचेतनधर्माणामश्रूयमाणत्वात् पृथिव्याद्यचेतनगतदृश्यत्वादिनिषेधस्य तत्सजातीयेऽचेतन एव युक्तत्वात्। किञ्चादृश्यत्वादिविशिष्टस्याक्षरस्य परमात्मत्वे "अक्षरात्परतः पर" इति ततोपि परस्य पुरुषस्य श्रवणं नोपपद्यते अतः पुरुषगतपरत्वाद्यवधितयाऽक्षरादितिनिर्दिष्टस्य भूतयोन्यक्षरस्य

---

शङ्कते। जीवस्येति। चकारः प्रागुपदर्शितसूत्रस्थातद्धर्मत्वादितिहेतुसमुच्चायक इत्याह। चकार इति। अपेक्षितं पूरयित्वा सूत्रार्थं व्याचष्टे। शारीर इति। श्रुतिस्थविज्ञानपदं व्याचष्टे। विज्ञाने इति। समानप्रकरणे माध्यन्दिनशाखायां विज्ञानशब्दस्थाने आत्मनि तिष्ठन्नित्यात्मशब्देन निर्देशदर्शनात् विज्ञानपदस्य प्रत्यगात्मपरत्वोपपादनं सम्यगेव प्रतीमः य आत्मन्यन्तर्गतस्तदवेद्यस्तच्छारीरकः सन् योन्तःप्रविश्य नियमनं करोति एष अन्तर्यामी तेऽमृत आत्मा, ते आत्मेति भेदव्यपदेशादन्तर्यामिणो जीवस्य भेदः सिद्ध्यति। अमृतत्वविशेषणमपि तयोर्भेदसाधकमिति श्रुत्यर्थः। अन्तर्यामिब्राह्मणप्रकरणं स्मारयन्नधिकरणार्थं निगमयति। तस्मादिति। अधिदेवादीति। य आदित्ये तिष्ठन्नित्यारभ्य यस्तेजसि तिष्ठन्नित्यन्तं ब्राह्मणमधिदैवतमित्यर्थः ॥ २१ ॥

इत्यन्तर्याम्यधिकरणम्

अथ अदृश्यत्वधिकरणम्

विषयवाक्यमुदाहरति। इदमिति। यदा यया ऋगादिरूपया विद्यया तत् प्रसिद्धमक्षरं ब्रह्माधिगम्यते अथ तदा सैव परा विद्या यत् यस्मात् तदक्षरम्। अद्रेश्यमदृश्यं प्रत्यक्षावेद्यम् अक्षरस्यातीन्द्रियत्वात्। अग्राह्यम्-अनुमानापौरुषेयागमावेद्यम् अक्षरस्याग्राह्यत्वात्। अगोत्रम् यमधिकृत्य प्रवराध्याये प्रवरा उच्यन्ते तद्गोत्रमित्युच्यते तद्रहितम्। अवर्णम् ब्राह्मणादिवर्णरहितं प्राकृतभौतिकशुक्लाशुक्लादिवर्णरहितमिति वा। अचक्षुरश्रोत्रम् जडज्ञानेन्द्रियरहितम्। अपाणिपादम् जडकर्मेन्द्रियरहितम्। तत् प्रसिद्धम् यद्यस्माच्च धीराः धैर्यवन्तः तत् अक्षरं नित्यमाद्यन्तशून्यम् विभुं सर्वेश्वरं सर्वगतं सर्वव्याप्तं सुसूक्ष्ममत्यन्ताणुरूपम्। अतएव सर्वान्तःप्रविश्यम्। अव्ययम् व्येति विविधविकारं प्राप्नोतीति व्ययं तस्मादन्यदव्ययम्। जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति वार्ष्यायणिवाक्योक्तषड्भावविकाररहितम्। सर्वभूतोत्पत्तिस्थितिलयकारणम् परिपश्यन्ति साक्षात्कुर्वन्तीत्यर्थः। अदृश्यत्वादि-

परमात्मत्वासम्भवात् अक्षरशब्दस्य प्रधाने प्रसिद्धेश्च अदृश्यत्वादिगुणकं भूतयोन्यक्षरं प्रधानमेव तत्परतया निर्दिश्यमानपुरुषोऽपि पञ्चविंशक एव नतु परमात्मा तस्याक्षरपरभूताज्जीवादपि परत्वेनाव्यवहितपरत्वाभावात् । नचाक्षरात्परतः पर इति द्वयोर्वैयधिकरण्याश्रयणेन परमात्मनः परत्वमेवाक्षरादपि परभूताज्जीवात्प्रतिपाद्यत इति वाच्यम् स्वकार्यवर्गापेक्षया परभूतेऽक्षरे सामानाधिकरण्येन वृत्तिसम्भवे तयोर्वैयधिकरण्ये प्रमाणाभावादिति प्राप्तेऽभिधीयते । अदृश्यात्वादिगुणकः परमात्मैव "यः सर्वज्ञः सर्वविदि"त्यादिवाक्येन प्रकरणे तद्धर्माणामेव

---

साधारणधर्मादिज्ञानं संशयबीजम् । अतः संशयमाह । तत्र **संशय्यत इति** । तत्र = विषयवाक्ये । उभयत्र वाक्यद्वयेऽपि किमदृश्यत्वादिगुणकमक्षरात्परतः परश्च प्रधानपुरुषौ उत परमात्मा इति विचारः यथा अन्तर्यामिविद्यायाम् 'अदृष्टो द्रष्टा' इति वाक्ये द्रष्टत्वादयश्चेतनधर्मविशेषाश्श्रूयन्ते तथाऽथर्वणिके वचने तेषां धर्मविशेषाणामश्रवणात् प्रकृतिपुरुषावेव भूतयोन्यक्षरशब्देन प्रतिपत्तव्यावित्याह **प्रकृतिपुरुषाविति** । यद्यप्यत्र चेतने वर्तमाना धर्मविशेषा न श्रूयन्ते तथाप्यदृश्यत्वादयो धर्मा उभयसाधारणा न निर्णायका अतोनुकूलयुक्तिः प्रदर्शनीयेत्यत्राह । **पृथिव्याद्यचेतनेति** । अत्राह्मणमानयेत्युक्तौ ब्राह्मणादिप्रत्यासन्नसजातीयानां क्षत्रियादीनामेवानयनं भवितुमर्हति नतु तद्विजातीयाश्वादीनां तद्वत्प्रकृतेप्यदृश्यत्वादिधर्माः पृथिव्याद्यचेतने वर्तमानाः सन्ति ते धर्मा निषिध्यमानास्तत्सजातीयेऽचेतने प्रतिपन्ने तस्यैवादृश्यत्वादयो धर्माः वक्तव्याः विजातीयधर्म्यन्तरकल्पने गौरवप्रसक्तेः संनिकृष्टबोधनस्य न्याय्यत्वात् न युक्तं विजातीयपरत्वाश्रयणमित्यर्थः । नायमक्षरशब्दः परमात्मानं परामृशति अक्षरात्परतः पर इति श्रुत्याऽक्षरशब्देन परमात्मानं प्रतिपत्त्या तत्परतः पर इत्यभिधानस्यासङ्गतत्वापत्तेः नहि भूतयोनेरक्षरात्परमात्मनः परतः परत्वं कश्चिदस्ति येन तदभिधानमुपपद्येत इत्याह **किञ्चेति** अक्षरात्परतः पर इति श्रुतावक्षरावधिकपरत्वं समष्टिपुरुषे प्रतिपन्नं पुरुषाव्यवहितपूर्वत्वेन निर्दिष्टं यदक्षरं तत्प्रधानमेव भवितुमर्हति नतु परमात्मा इत्याह । **अत पुरुषगतपरत्वादीति** प्रधानमेवाक्षरशब्दनिर्दिष्टं भूतयोनिशब्दप्रतिपाद्यमिति निश्चेतुमक्षरशब्दप्रयोगस्य प्रधाने प्रसिद्धत्वेन समर्थयन्नाह । **अक्षरशब्दस्येति** ॥ अक्षरात् प्रधानात् परत्वेन निर्दिष्टश्शारीर एव नतु परमात्मा तस्य जीवपरत्वेनाभिधानादव्यवहितपरत्वाभावादित्याह । **तत्परतयेति** अक्षरपरतयेत्यर्थः । **पञ्चविंशक इति** । "पञ्चविंशोयं पुरुषो विज्ञानात्मा" इति श्रुतेः । वर्णानां मध्ये पञ्चविंशो मकारः क्षेत्रज्ञवाचकस्तद्वाच्यश्चायं पुरुष इति श्रुत्यर्थः । "भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि षट् । टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ॥ मनः पकारेणैवोक्तं फकारेण त्वहं कृतिः । बकारेण भकारेण महान् प्रकृतिरुच्यते । आत्मा तु मकारेण पञ्चविंशः प्रकीर्तित इतितन्त्रान्तरप्रसिद्धत्वात् । पञ्चविंशकः पुरुष इति सम्यगेवाभिहितम् । अक्षरात्परतः पर इत्यत्र पर इत्यस्य वैयधिकरण्येनाक्षरादित्यनेन समन्वयः । तथाचोक्तवाक्ये पर इत्यस्य प्रथमान्तत्वम् अक्षरादित्यस्य पञ्चम्यन्तत्वमतस्तयोः सामानाधिकरण्यं न घटते वैयधिकरण्येनैव तयोरन्वयः सम्पादनीयः । "परोऽक्षराज्जीवात् परतः परमात्मा" इति बोधस्तथा च कथमत्राक्षरशब्देन प्रधानं ग्रहीतुं शक्यते, इत्याशङ्क्य परिहरति **नचेति**, **द्वयोरिति** परत इत्येकः परश्चापरः इत्यर्थः । वैयधिकरण्यं नाम समानविभक्तिकत्वे सत्येकार्थनिष्ठत्वं शाब्दिकाभिमतं सामानाधिकरण्यं तद्भिन्नं वैयधिकरण्यम् । श्रुतेर्वाक्यार्थं दर्शयति **परमात्मन इति** । परमात्मनः परत्वं प्रतिपाद्यत इति योजना । सामानाधिकरण्येनान्वयसम्भवे वैयधिकरण्येनान्वयस्यान्याय्यत्वादिति नियममनुसृत्य समादधाति **स्वकार्यवर्गापेक्षयेति** । परतोऽक्षरात् पर इति सामानाधिकरण्येनान्वयमाह **भूतपरइति** । अक्षरपदवाच्यप्रधानस्य स्वकार्यमहदाद्यपेक्षया परत्वं जीवात्मन त्वक्षरशब्द-

सार्वज्ञादीनामुक्तत्वात् प्रधानजीवयोरचेतनाल्पज्ञत्वेन सर्वज्ञत्वाद्यसम्भवात् । नचाक्षरात्परस्य पुरुषस्य परमात्मत्वे भूतयोन्यक्षरस्य परमात्मत्वं कथं सिध्येदिति वाच्यम् 'अक्षरात्परतःपर' इति निर्दिष्टस्या "थ परा यया तदक्षरमधिगम्यते, तथाक्षरात्सम्भवतीह विश्वं, तथाक्षरात् विविधाः सोम्य भावाः, येनाक्षरं पुरुषं वेद सत्य"मित्यादिवाक्यनिर्दिष्टभूतयोन्यक्षरापेक्षया भिन्नत्वात् । न क्षरति न च्यवत इत्यक्षरं भूतयोनिः अश्नुते व्याप्नोति स्वविकारजातमित्यक्षरं भूतसूक्ष्मरूपाचेतनं प्रधानमितिव्युत्पत्तेः ॥ २२ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ । १ । २ । २३ ॥

इतश्चेतरौ प्रधानं जीवश्च न भूतयोन्यक्षरनिर्दिष्टौ किन्तु परमात्मैव । कुतः ? विशेषणभेदव्यपदेशाभ्याँ विशिनष्टि व्यावर्त्तयति हि प्रकरणं प्रधानपुरुषाभ्यां भूतयोन्यक्षरं

---

वाच्यं भूतयोनिप्रधानमेवात्र ग्राह्यमिति पूर्वपक्षमनूद्यति, इतिप्राप्तेरिति । सिद्धान्तयति । अभिधीयत इति । सूत्रार्थं व्याचष्टे अदृश्यत्वादिगुणक इति । नहि प्रधानस्यानादिकर्मावृतस्य तापत्रयसंतप्तस्य प्रत्यगात्मनोऽल्पज्ञस्य सर्वज्ञत्वं सर्वविदं श्रुतिसिद्धं सम्भवतीत्याह ॥ प्रधानजीवयोरिति । यद्यक्षरशब्देन सर्वजगत्कारणं परमात्मोच्यते तदा, अक्षरात्परतः पर इति श्रुत्या ब्रह्मणः परत्वाभिधानं नोपपद्येत परमात्मनः परतः तत्वान्तराभावात् "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय"। इति श्रीभगवद्वचनात् । "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेश्च । नहि स्वावधिकं परत्वं स्वस्मिन् घटते तस्मान्नाक्षरपदवाच्यः परमात्मा किन्तु प्रधानं तस्मात्परो जीवात्मा तत्परत्वं परमात्मन इति शंकां परिहरति नचेति । यया तदक्षरमधिगम्यत इत्युपक्रमवाक्यादेव निश्चीयते अक्षरपदवाच्यं परं ब्रह्मैव नहि पराख्यया विद्यया ब्रह्मभिन्नमधिगन्तुं शक्यते, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तत्वतो ब्रह्मविद्यां, यथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वं, यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपाः तथाक्षराद्विविधाः सोम्य भावा" इत्यादिश्रुतिषु अक्षरशब्दस्य परमात्मनि प्रसिद्धत्वात् भूतयोन्यक्षरमेव सर्वज्ञमिति न सर्वज्ञस्तदपेक्षया परः सर्वस्मात् परत्वेन तस्मादन्यस्य परत्वासम्भवात् भूतयोन्यक्षराभिधानानन्तरमेव "यस्मात्परं नापरमस्ति किंञ्चित्" इतिसमाभ्यधिकनिषेधस्योपक्रमवाक्यादवगतत्वात् भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य ततः परत्वासम्भवः । उपक्रमवाक्येनाक्षरं परमात्मानमभिधाय पुनस्तद्गुणस्वरूपप्रतिपादनायाक्षरात्स्वांशभूताज्जीवात्परतः स्वशक्तेः प्रधानाच्च परस्तयोर्नियन्ता इत्याशयेन समादधाति अथ 'अक्षरात्परत पर' इत्यादिना । "अक्षरात्परतः पर" इति निर्दिष्टस्येत्यस्य भूतयोन्यक्षरापेक्षयाऽभिन्नत्वादित्यनेनान्वयः तयोरेकवाक्यत्वात् उभयत्राक्षरशब्देन परमात्मा गृह्यत इत्यर्थः । यच्चोक्तमक्षरात्परः इति पदयोः समानविभक्तिकत्वात् सामानाधिकरण्यं तन्न परशब्दस्य पञ्चम्यन्तसापेक्षत्वात् तत्स्वारस्यार्थं न सामानाधिकरण्यं यद्यक्षरात् परत इतिपदयोः सामानाधिकरण्यपरत्वञ्चेत्तदा परतोऽक्षरादित्येव किंन निर्दिष्टं तादृशपाठक्रमनिर्देशादपि तयोः न सामानाधिकरण्यम् ॥ २२ ॥

अग्रिमसूत्रमवतारयितुमक्षरशब्दस्य व्युत्पत्तिमुखेन जीवप्रधानपरत्वमाह न क्षरतीति । अक्षरशब्दस्य प्रधानपरत्वमाशङ्क्य समाधत्ते इतश्चेति । सूत्राक्षराणि विवृणोति इतराविति सूत्रस्थविशेषणपदं व्याकरोति विशिनष्टीति । काभ्यामित्यत आह । प्रधानेति" ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्यावरीष्ठामथर्वाय ज्येष्ठपुत्राय प्राह । १ अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्यां स भारद्वाजाय प्राह । भारद्वाजोऽङ्गिरसे परावराम् ॥ २ शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नुभगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति यथा मृत्पिण्डे विज्ञाते सर्वं मृण्मयं विज्ञातं भवति ब्रह्मविद्यया उपदेशेन निर्धारितं

एकविज्ञानेन सर्वविज्ञानोपपादनादिना तथा "अक्षरात्परतः पर" इत्यादिना भूतयोन्यक्षरस्य ताभ्यां भेदश्च व्यपदिश्यते ॥ २३ ॥

## रूपोपन्यासाच्च । १ । २ । २४ ॥

अक्षरात्परतः परस्यैव भूतयोन्यक्षरस्यान्तरयामितया सर्वचिदचिदात्मकप्रपञ्चो रूपत्वेनोपन्यस्यते "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे" त्यादिना प्रधानसजीवस्य च सर्वभूतान्तरात्मत्वासम्भवान्नैवं रूपोपन्यासः सम्भवति । अतोऽदृश्यत्वादिगुणकः परमात्मैवेति सिद्धम् ॥ २४ ॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥

अथ वैश्वानराधिकरणम् ।

## वैश्वानरः साधारणशब्दविशेषात् । १ । २ । २५ ॥

इदमाम्नायते छन्दोगैः "को न आत्मा किं ब्रह्मे" ति आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति च प्रक्रम्य "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इत्यादि तत्र विशयः किमिह वैश्वानरशब्दितः जाठराग्निरुत भूताग्निरुत देवताविशेषः अथ परमात्मेति । तत्र तावज्जाठराग्निरिति "अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यत" इति । तत्र वैश्वानरशब्दप्रसिद्धेः । भूताग्निर्वा "विश्वस्मा अग्निं भुवनाय देवाः वैश्वानरं केतुमह्नामकृण्वन्नि" ति तत्रापि प्रयोगदर्शनात् । देवतायां च "वैश्वानरस्य सुमतौ स्याम राजाहिकं भुवनानामभिश्री" रिति । परमात्मनि च "तदात्मन्येव हृदयगे वैश्वानरे प्रास्यात् सएष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत" इति । एवं वैश्वानरशब्दस्य सर्वत्र वैदिकप्रयोगदर्शनादत्र च प्रकरणे सर्वेषां लिङ्गोपलब्धेर्वैश्वानरशब्दवाच्यः

---

भवति ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीत्यभिधानाज्जीवप्रधानाभ्यां भिन्नो भूतयोन्यक्षरः परमात्माऽभिहित इत्याह एकविज्ञानेनेति ॥ २३ ॥

भूतयोन्यक्षरः सर्वान्तरात्मा मुमुक्षुभिर्ध्येय इति दर्शयितुं विश्वं भगवद्रूपमित्याह रूपेति । सूत्रं विवृणोति अक्षरादिति । अक्षरात् प्रधानात् परतः जीवात्मनस्तस्मात्परस्येत्यर्थः । अग्निर्मूर्द्धेति द्यां मूर्धानं यस्य विश्व वदन्ति खं वै नाभिश्च चन्द्रसूर्यौ च नेत्रे दिशः श्रोत्रे विद्धि पादौ क्षितिश्च सोऽचिन्त्यात्मा सर्वभूतप्रणेता । इतिस्मृतिरुक्तश्रुतेरर्थः । वाग्विवृता वागिन्द्रियव्यापारा एव वेदाः वायुः प्राणः महावायुरेव देहधारकः प्राणः पद्भ्यां पृथिवी पादावेव पृथिवीत्यर्थः प्रकृत्यादिभ्य उपसंख्यामिति तृतीया इत्यर्थः । अधिकरणार्थमुपसंहरन्नाह अतइति ॥ २४ ॥

चराचरात्मकत्वेन भगवानुपास्य इत्यभिप्राय सम्प्रति वैश्वानरत्वेनापि स एवोपास्यः वैश्वानरसाधारणशब्दादित्याह । वैश्वानर इति । विषयवाक्यमुदाहरति । इदमिति । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकवुडिलाः समेत्य मीमांसांचक्रुः को न आत्मा किं ब्रह्मेति ते च मीमांसमाना निश्चयमनधिगच्छन्तः कैकेयराजानं वैश्वानरविद्याविदमुपसेदुः उपसद्य चोचुः आत्मानमिति । अध्येषि स्मरसि तमेव नो ब्रूहि इत्युपक्रम्य । सम्प्रति समग्रात्मोपासकस्य फलमाह । यस्त्वेतमिति । यस्त्वधिकारी एतमात्मानं वैश्वानरं भगवन्तमन्तःप्रादेशमात्रं तावन्मात्रपरिमाणकं तथाचोक्तं हृद्यपेक्षया मनुष्याधिकारत्वादिति अभिविमानम् अभितो विगतं मानं मर्यादा यस्य तमभिविमानं सर्वगतम्

परमात्मेति न निर्णेतुं शक्य इति प्राप्ते। उच्यते वैश्वानरः परमात्मा। कुतः? साधारणशब्दविशेषात् वैश्वानरशब्दस्य नानार्थसाधारणत्वेऽप्यत्र प्रकरणे परमात्मासाधारणैः सर्वात्मत्वादिविशेषणैर्विशेष्यते इति विशेषस्तस्माद्विशेष्यमाणत्वादित्यर्थः। उपक्रमे "को न आत्मा किं ब्रह्मे"ति सर्वजीवात्मभूतब्रह्मजिज्ञासायां प्रवर्तमानैरौपमन्यवादिमहर्षिभिर्वैश्वानरात्मज्ञमश्वपतिं केकयं प्राप्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति निश्चीयते किं ब्रह्मेति प्रक्रान्तस्य ब्रह्मशब्दस्यैव स्थाने उत्तरत्र सर्वत्र वैश्वानरशब्दप्रयोगात्सोऽपि ब्रह्मैवाभिदधातीति "स सर्वेषु लोकेषु इत्यारभ्य "एवं हास्य सर्वे पाप्मानः प्रदूयन्त इत्यादि "श्रूयमाणस्य वैश्वानरात्मविज्ञान फलस्य च वैश्वानरशब्दस्य परमात्मपरत्व एव सम्भवादिति ॥ २५ ॥

## स्मर्यमाणमनुमानं स्यात् इति । १ । २६ ॥

इतश्च वैश्वानरः परमात्मैव यतः "अग्निर्मूर्द्धेत्यादिश्रुतिषु "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः सूर्य्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः। द्यां मूर्द्धानं यस्य विप्रा वदन्ति खं वै नाभिश्चन्द्रसूर्यौ च नेत्रे दिशश्श्रोत्रं विद्धि पादौ महीश्च सोऽचिन्त्यात्मा सर्वभूतप्रणेते" त्यादिस्मृतिषु च परमात्मरूपतया प्रसिद्धमेवेह तदेवेदमिति स्मर्यमाणं प्रत्य-

---

एवं वक्ष्यमाणरीत्या वैश्वानरमुपास्ते स सर्वेषु लोकेषु भूतेषु तदन्तर्गतसर्वात्मसु अन्नमत्तीत्यर्थः। एकस्मिन्नेव प्रकरणे अग्निवैश्वानरपदयोः प्रयोगाद्भवति विचिकित्सेत्यभिप्रेत्याह तत्र विशय इति। विशयः संशयः। विमृश्य पूर्वपक्षमाह तत्र तावदिति। तस्य गमकं लिङ्गं दर्शयति। अत्राग्नीति। यदद्यते तदन्नं येन पच्यते सोऽयं पुरुषशरीरेऽन्तर-स्तीत्यर्थः। कल्पान्तरमाह। भूताग्निर्वेति। तत्र मानमाह। विश्वस्मा इति। विश्वस्मै भुवनाय 'वैश्वानरम्' अग्निम् अन्हा केतुं दिन्हं सूर्यं देवा अकृण्वन् कृण्वन्तः। तत्रापि भूताग्नावपि। देवतापक्षमाह। देवताया इति। तत्र हेतुमाह वैश्वानरस्येति। हि यस्मात् कं सुखप्रदो भुवनानां राजा वैश्वानरोऽभिमुखाश्रीर्यस्येति अभिश्रीः सर्वेश्वरो भगवान् तस्मात्तस्य वैश्वानरस्य सुमतौ वयं स्याम तस्यास्मद्विषया शुभमतिर्भवत्वित्यर्थः॥

परमात्मनि वैश्वानरप्रयोगं दर्शयति श्रुतिमुखेन परमात्मनि चेति जाठराग्निभूताग्निदेवताविशेषपरामात्मनां लिङ्गा उपलभ्यन्ते। कस्योपादानं न्याय्यं कस्य हानमिति निश्चयं नाधिगन्तुमर्हन्ति भवत्यत्र विमर्श इत्याह एवमिति। सिद्धान्तयति। उच्यत इति। साधारणशब्दविशेषादित्येतद्व्याचष्टे वैश्वानरशब्दस्येति। कैर्धर्मैर्विशेष्यत इत्यत्राह। परमात्मसाधारणैरिति। फलितार्थमाह। विशेष्यमाणत्वादिति॥ के पुनरसाधारणधर्मा इत्यत्राह। उपक्रम इति। आत्मब्रह्मशब्दवाच्यधर्म्यैकत्वानैकत्वजिज्ञासया किं शब्दद्वयप्रयोगः॥ मुमुक्षुभिरौपमन्यादिमहर्षिभि ब्रह्मत्वमात्मतत्त्वं जिज्ञासितं तत्र ब्रह्मशब्दस्थाने वैश्वानरप्रयोगः केकयराज्ञा कृतेः फलनिर्देशश्चेत्याह ब्रह्मजिज्ञासायामिति। यतो वैश्वानरोपासकस्य सर्वलोकाश्रयफलं श्रूयते सर्वपापदाहश्चातो वैश्वानरस्येश्वरत्वमित्याह। स सर्वेष्विति एवं हास्यसर्वेपाप्मान इति यथाग्नौक्षिप्तमिषीकातूलं दह्यते एवमस्यविदुषः सर्वाणिकर्माण्यनर्थहेतवोदह्यन्त इत्यर्थः॥ २५॥

हेतुनिर्देशपुरस्सरं प्रतिज्ञावाक्यंपूरयति। इतश्चेति अग्निद्युप्रभृतिपरमात्मरूपतयाप्रसिद्धत्वादितिवक्ष्यमाणलिङ्गादित्यर्थः। विष्णुपुराणवचनमुदाहरति। यस्याग्निरिति। तदनुगुणस्मृतिवचनंपठति। द्यांमूर्द्धानमिति "अनुमानमिति व्याख्येयपदम्" लिङ्गमितितुतस्यव्याख्यानम्। अनुमानशब्देनहेतुत्वेसिद्धेरितिशब्दोपादानंसूत्रेऽनतिप्रयोजनकमित्यत्राह

भिज्ञायमानं वैश्वानरस्य परमात्मत्वे अनुमानं लिङ्गं स्यात्, इतिशब्दः प्रकारे एवंभूतं द्युमूर्द्धत्वादित्रिशिष्टं परमात्मन एव रूपमिति वैश्वानरस्य परमात्मत्वे लिङ्गं स्यादित्यर्थः ॥२६॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमभिधीयते । १ । २ । २७ ॥

वैश्वानरो न परमात्मा कुतः शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च शब्दस्तावदग्निशब्दो वाजसनेयिनां वैश्वानरविद्याप्रकरणे 'सएषोग्निर्वैश्वानर' इति अत्र प्रकरणे च 'हृदयं गार्हपत्य' इत्यादौ हृदयादिस्थितस्य वैश्वानरस्याग्नित्रयकल्पनं तद्य'दभक्तं प्रथममागच्छेत्तद्धोमीय' "मित्यादौ प्राणाहुत्याधारत्वसङ्कीर्त्तनं च तथा "सयोहैतमेनमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदे' तिवाजसनेयिनामेव प्रकरणेऽन्तःप्रतिष्ठितत्वं एभ्योहेतुभ्योऽग्निशब्दसामानाधिकरण्यादिभ्यो वैश्वानरो जाठराग्निर्न परमात्मेति चेन्न । तथा दृष्ट्युपदेशात् पूर्वोक्तस्य परब्रह्मणो वैश्वानरस्य सर्वात्मतया जाठराग्न्यादिषु तादात्म्यत्वेनोपासनोपदेशात् असम्भवात् केवलजाठराग्नेस्त्रैलोक्यात्मत्वाद्यसम्भवात् पुरुषमपि चैनमधीयते वाजसनेयिनः सएषोग्निर्वैश्वानरो यत्पुरुष 'इत्यादौ चशब्दः प्रसिद्धिपरः प्रसिद्धं च आत्मत्वात् परमात्मन एव पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च 'सहस्रशीर्षा पुरुषः । पुरुषस्येएवेदं । पुरुषान्न परं किञ्चि' दित्यादौ ॥ २७ ॥

## अतएव न देवता भूतं च । १ । २ । २८ ॥

---

इति शब्द इति । इतिशब्दार्थघटितं बोधं दर्शयति । एवम्भूतमिति लिङ्गमितिज्ञापकमित्यर्थः । तच्चसूत्रस्थानुमानपदस्य करणार्थकल्युडन्तत्वमाश्रित्यव्याख्यातम् ॥ २६ ॥

पुनराक्षिपति । शब्दादिभ्य इति । सूत्रस्यशङ्काभागं विवृण्वन्नर्थमाह (वैश्वानर इति) तत्प्रकरणस्थ शब्दं दर्शयति । सएषोऽग्निरिति । (शत० ब्रा० वचनम्) अत्रेति छान्दोग्ये वैश्वानरविद्यायामित्यर्थः । हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः, आस्यमावहनीय इति होमशेषमेववक्ति । तद्यद्भक्तमिति । तत्तदाभोजनवेलायां यद्भक्तमन्नं प्रथममागच्छेदास्यं प्रतितद्धोमीयं होमद्रव्यं स भुक्तायामाहुतिं प्रथमां जुहुयात् प्राणायस्वाहेति अनेन मन्त्रेण आहुतिः तृप्यन्नाह । प्राणस्तृप्यति" इत्यर्थः ।

उक्तहेत्वनुक्रमेण पूर्वपक्षत्वेनशङ्कितमर्थमुपसंहरति । एभ्योहेतुभ्य इति उक्त शङ्कां परिहरति । नेति । हेतुजिज्ञासायां सूत्रस्थहेतुबोधकपदमुपादत्ते तथादृष्ट्युपदेशादिति । तदर्थं विवृणोति । पूर्वोक्तस्येति । सौत्रदृष्टिपदस्यव्याख्यानमुपासनेति । आत्माद्रष्टव्यः तस्मिन्दृष्टेपरावरे । वैश्वानरमुपास्त इति श्रौतप्रयोगानुरोधात् तद्व्याख्यानम् । असम्भवादिति व्याख्येयं पदम् । केवलेत्यादितद्व्याख्या । पुरुषशब्दवाच्यतयाप्येनमधीयत इत्यभिप्रायेणाह । पुरुषमिति । यद्यपिद्वाविमौपुरुषौलोकेप्रधानपुरुषौ" इत्यादौ प्रत्यगात्मनोऽपि पुरुषशब्दाभिधेयत्वमुक्तं तथापि प्रधानादिपदान्तरसमभिव्याहारादक्षरत्वाद्युपाधिनात्तथात्वंव्यपदिश्यते ननु स्वतः निरुपाधिकं पुरुषशब्दवाच्यत्वं पुरुषोत्तमस्यैवोपपद्यते, किमुतजाठराग्नेः पुरुषत्वं वक्तुं शक्यते सएषोऽग्निर्वैश्वानरोयत्पुरुषइतिप्रसिद्धवन्निर्देशात् तस्य प्रागुक्तप्रमाणसापेक्षत्वात् परमात्मन एव निरुपाधिकपुरुषत्वविषयां प्रमाणतः प्रसिद्धिं दर्शयति । सहस्रशीर्षेति ॥ २७ ॥

उक्तहेतुभ्य एव देवता महाभूताग्निश्च न वैश्वानरशब्दवाच्यः ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः । १ । २ । २९ ॥

वैश्वानरस्य परमात्मन उपासनार्थमग्न्यन्तर्यामितयाऽग्निशब्दसामानाधिकरण्यनिर्देश उक्तः "नरतीति नरः प्रोक्तः परमात्मा सनातन" स्तस्य च सर्वात्मतया सर्वाभेदव्यपदेशार्हत्वात् विश्वश्चासौ नरश्च सर्वकारणत्वे विश्वेषां नरो नेता सर्वनियन्तृत्वात् विश्वे वा नरा नियम्या यस्यासौ विश्वानरः "नरे संज्ञाया" मिति दीर्घः, स एव वैश्वानरः स्वार्थे तद्धितः । जैमिनिराचार्योहि वैश्वानरशब्दो यथा साधारणोऽपि परमात्माऽसाधारणगुणयोगेन साक्षात्परमात्मनि वर्त्तते तथाऽग्निशब्दस्याप्यग्रनेतृत्वादियोगेन साक्षात्परमात्मनि वृत्तावविरोधं मन्यते ॥ २९ ॥

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानम् वैश्वानरमुपास्त" इति द्युसूर्यादिप्रदेशसंबन्धिमात्रतया परिच्छिन्नत्वमपरिच्छिन्नस्य ब्रह्मणः कथमिति चेदत्राह—

## अभिव्यक्तेरित्याश्मरथ्यः । १ । २ ३० ॥

उपासकानुग्रहार्थमभितो विगतमानतयाऽपरिच्छिन्नस्यैव सर्वेश्वरस्य द्युसूर्यादिप्रदेशसम्बन्धितया परिच्छिन्नत्वमभिव्यक्तिनिमित्तं स्यादित्याश्मरथ्य आचार्यो मन्यते ॥ ३० ॥

उपासकानुग्रहायाभिव्यक्तस्यापि द्युसूर्यादीनां मूर्द्धाद्यवयवकल्पने किं प्रयोजनमिति चेत्तत्राह—

## अनुस्मृतेर्बादरिः । १ । २ । ३१ ॥

---

जाठराग्निशङ्कापूर्वसूत्रेण परिहृता सम्प्रति तद्व्यतिरिक्ताग्निद्वयस्यशङ्कामेतत्सूत्रेणपरिह्रियते । उक्तहेतुभ्य इति आत्मत्वपुरुशब्दवाच्यत्व सर्वात्मत्वसर्वपापनाशकत्वेष्ट फलप्रद वादयस्सर्वे हेतवः भूताग्नौदेवताविशेषेचानुपपन्नाः इत्याशयः ॥ २८ ॥

पूर्वोत्तरसूत्रयोः सङ्गतिप्रदर्शनाय प्रागुक्तार्थमनूद्यते वैश्वानरस्येति । वैश्वानरशब्दस्य यौगिकवृत्त्यासर्वात्मैकत्वेन विश्वाभिन्नत्वं समर्थयति । नरतीति नर इति वैश्वनरशब्दस्य विग्रहं दर्शयति । विश्वश्चासाविति विश्वाभिन्नः परमात्मेति बोधः । सर्वकारणत्वेन यौगिकवृत्तिमाह । सर्वकारणेति । नियन्तृनियम्यभावमाश्रित्य योगवृत्तिमाह ( सर्वनियन्तृत्वादिति ) स एवेति विश्वानर इत्यर्थः रक्ष एव राक्षसः वय एव हिं वायसं स्वार्थे तद्धित इत्यर्थः वैश्वानरशब्दस्य यौगिकवृत्त्या परमात्मपरत्वमुपपाद्य सम्प्रति पर्य्यवसितसूत्रार्थं विवृणोति । जैमिनिराचार्य्य इति तुल्ययुक्त्याग्निशब्दस्य वियोगवृत्त्याऽऽत्मपरत्वं व्युत्पादयति तथाग्निशब्दस्येति । तदुक्तं वेदान्तकौस्तुभे अङ्गति हृत्पुण्डरीके ध्येयत्वेन गच्छत्याविर्भवतीत्यग्निः । "अङ्गेर्नलोपश्चे" तिनिर्नलोपश्च । यद्वा अङ्गयति गमयति विश्वस्याग्रं एवञ्च जन्मप्रापयतीत्यग्निरिति अग्निवैश्वानरशब्दयोस्सामानाधिकरण्यमुपपन्नं भवति ॥ २९ ॥

उत्तरसूत्रमवतारयितुमाशङ्कते । यस्त्वेतमिति । प्रसिद्धाग्निदेवतयोरेव परिछिन्नत्वं सम्भवतीतिशङ्काव्युदासायेदं सूत्रम् । अभिविमानशब्दार्थं व्याचष्टे अभित इत्यादिना ॥ ० ॥

मूर्द्धादिपादान्तदेहकल्पनं परमात्मप्राप्तयेऽनुस्मृतेरनुस्मरणार्थं तथोपासनार्थमिति बादरिराचार्यो मन्यते ॥ ३१ ॥

एवं त्रैलोक्यशरीरस्य परमेश्वरस्य वैश्वानरवाच्यत्वे "उर एव वेदिर्लोमानि बर्हिः"रित्यादिनोपासकोर आदीनां वेद्यादित्वकल्पने किं प्रयोजनमिति तत्राह—

## सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ।१।२।३२॥

वैश्वानरोपासकैः क्रियमाणाया वैश्वानरविद्याङ्गभूतप्राणाहुतेरग्निहोत्रत्वसम्पत्त्यर्थं तेषां वेद्यादित्वकल्पनमिति जैमिनिराचार्यो मन्यते तथाहि दर्शयतीयं श्रुतिः प्राणाहुत्या अग्निहोत्रसम्पत्तिमेव "अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मसु हुतं भवती"ति ॥ ३२ ॥

## आमनन्ति चैनमस्मिन् ।१।२।६३॥

एनं परमात्मानं द्युमूर्द्धत्वादिमन्तं वैश्वानरमस्मिन्नुपासकदेहे प्राणाहुत्यधिकरणत्वार्थमामनन्ति च "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा" इत्यादिना एतस्यात्मन उपासकस्यात्मनः मूर्द्धैव यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्य मूर्द्धा त्वेष आत्मन इति वैश्वानरात्ममूर्द्धत्वे निर्दिष्टः सुतेजा इत्यर्थः। एवमग्रेऽपि श्रुत्यर्थो ज्ञेयः। तथा च उपासकः स्वमूर्द्धादिनेव वैश्वानरस्य भगवतो द्युप्रभृतीन्मूर्द्धादीन्प्राणाग्निहोत्रसमयेऽनुसन्दधत् स्वस्योरःप्रभृतीनेव प्राणाहुत्यधिकरणस्य भगवतो वैश्वानरस्य वेद्यादीनग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य तेन तमाराधयेदित्युपदिशति उर एव वेदिरित्यादिनेति भावः ॥ ३३ ॥

इति कौस्तुभप्रभायां प्रथमाध्याये द्वितीयपादविवरणं समाप्तिमगात् ॥

---

अग्रिमसूत्रस्यावतारार्थं पृच्छति। उपासकानुग्रहायेति। प्राकृतमूर्द्धादिद्रव्यावयवत्वमप्राकृतरूपस्य परमात्मनो न सम्भवति। अपितु देवताया एव सम्भवतीत्यभिप्रायः प्रष्टुः ॥ ३१ ॥

उपासकस्योर एव वेदिः वेदिसारूप्यात् लोमानि बर्हिः आस्तर्ण बर्हिसारूप्यात्। हृदयं गार्हपत्यः हृदयानन्तरं मनोऽन्वाहार्यपचनः। आस्यमाहवनीयस्तत्रहि तदन्नं हूयते एतेषां प्रयोजनविषयकप्रश्नः।

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत् स्यात्। अथ य एतदेवमिति। इदम्, उरःप्रभृतीनामग्निहोत्रोपकरणतां जानन् यः अग्निहोत्रं प्राणाहुतिम्—जुहोति—अनुतिष्ठतीत्यर्थः स सर्वेष्वात्मसुहुतं भवतीति सर्वात्मकभगवदाराधनेन सर्वं राधितं भवतीति हुतप्रकर्षोक्तिः अस्याग्निहोत्रस्य परमात्माराधकज्ञापनार्थत्वम् ॥ ३२ ॥

सूत्रार्थं विवृणोति। एनं परमात्मानमिति। श्रुत्यर्थं विवृणोति एतस्येति शेषं स्पष्टम् ॥ ३३ ॥

नतोऽस्मि हंसं परमादिदेवं जगन्निवासं जगदेकबन्धुम्।
सनन्दनाद्यैर्मुनिभिःस्तुतं तं स्मृतार्तिनिघ्नं शरणं प्रपद्ये ॥ १ ॥

इति श्रीकौस्तुभप्रभाभावदीपिकाटीकायां प्रथमाध्यायस्य द्वितीयपादः समाप्तः।

# प्रथमाध्याये तृतीयपादः

## द्युभ्वाद्यायतनं स्वशब्दात् । १ । ३ । १ ॥

### अथ द्युभ्वाधिकरणम् ।

"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु" रिति मुण्डकवाक्ये यस्मिन्निति दिवाद्याधारत्वेन श्रूयमाणः किं प्रधानं वा जीवो, वोत परं ब्रह्मेति संदेहे प्रधानमिति पूर्वःपक्षः तस्य सर्वविकारजातहेतुत्वे नायतनत्वोपपत्तेः सेतुरिति सावधित्वश्रवणात् आत्मशब्दस्तु प्रधानस्य सत्त्वद्वारा पुरुषप्रीतिहेतुत्वात्तत्रोपचरितः जीवो वा मनआदीन्द्रियाधिकरणत्वश्रवणात् "अरा इव रथनाभौ संहिता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान" इति परत्र नाडीसम्बन्धात् जायमानत्वश्रवणाच्च भोक्तृत्वेन भोग्यप्रपञ्चायतनत्वोपपत्तेरिति प्राप्ते । ब्रूमः द्युभुवादी यस्य प्राणान्तस्य तस्यायतनमाश्रयः परमात्मैव । कुतः ? स्वशब्दात् स्वस्य परमात्मनोऽसाधारणयोः आत्मामृतसेतुशब्दयोः श्रवणात् आप्नोतीत्यात्मा सर्वनियन्तृत्वेन तस्य सर्वव्यापकत्वात् मोक्षप्रापकतया

---

श्रीनिम्बार्कसुवंशमौक्तिकमणिर्यः सूरीरत्नाग्रणीः ।
प्रोद्यत्स्वप्रभया सुदुर्मततमः पुञ्जप्रणाशप्रणी ॥
सत्सूत्रप्रवणः सतां हृदिमुदं तन्वन्ननर्घश्रिया ।
आचार्य्यः करुणानिधिर्विजयतां श्रीश्रीनिवासः प्रभुः ॥

### अथ द्युभ्वाधिकरणम ।

अस्पष्टजीवलिङ्गकानां वाक्यानां ब्रह्मणि समन्वयः द्वितीयपादे उक्तः तृतीयपादे स्पष्टजीवलिङ्गकवाक्यानां समन्वयो मीमांसते इति द्वितीयपादावसरे ग्रन्थकारैर्विवेचितोऽतोऽत्रपादे सङ्गतिर्न प्रदर्शिता यद्वा द्युमूर्द्धत्वाद्यवयविनः परमात्मत्वमभिहितं पूर्वस्मिन्नधिकरणे परमात्मभिन्नस्य द्युभ्वाद्यायतनत्वमाशङ्क्य द्युभ्वाद्यधिकरणस्यारम्भः कृत इत्यपि सङ्गतिर्द्रष्टव्या । अथवा यो हि परमात्मा द्युमूर्द्धत्वाद्यवयवी पूर्वाधिकरणे विवेचितः तस्मिन् त्रैलोक्यायतनत्वमपि सम्भवतीति त्रैलोक्यायनत्वप्रदर्शनायानन्तराधिकरणारम्भः । विषयवाक्यमुदाहरति । यस्मिन्निति । यस्मिन् पुरुषे द्यौः पृथिवी अन्तरीक्षञ्च । ओतं प्रविष्टम् । अनेन भगवतः सर्वलोकस्थितिकर्तृत्वमुक्तम् । सर्वलोकाधारत्वमुक्त्वा सर्वेन्द्रियाधारत्वमाह "मनश्च सप्त प्राणास्त्ववगतेः पञ्च प्राणास्तु कर्मणा" इति स्मृतेः प्राणशब्द इन्द्रियवाची । ततश्च सर्वैः प्राणैरिन्द्रियैस्सह यस्मिन्नोतमित्यन्वयः । तमात्मानं परमात्मानं जानथ । छान्दसोयं प्रयोगः, जानीत इत्यर्थः श्रवणमननध्यानरूपं ब्रह्मोपासनं कुरुत इति

सेतुश्च स एव सेतुरिव वा नद्यादिसेतोः कूलोपलम्भकत्ववदस्य संसारपारभूतमोक्षोपलम्भकत्वात् नाडीसम्बन्धस्य परमात्मन्यपि संभवात् "सन्ततं च शिराभिस्तु लम्बन्त्या कोशसन्निभ"मित्यादिश्रुतेः अजायमानो "बहुधा व्यजायत, अजोऽपि सन्नव्ययात्मे"ति। श्रुतिस्मृतिभ्यां बहुधा जायमानत्वमपि स्वस्वभावमजहत एव भक्तानुग्रहाय तस्य संभवति तस्य सर्वाधारत्वान्मनआदिजीवोपकरणाधारत्वस्यापि तत्रैवोपपत्तेः ॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् । १ । ३ । २॥

---

यावत्। अत्र सर्वप्रजजनानां सम्बोध्यत्वात् जानथेति बहुवचनं युक्तम्। एकमेवेत्येवकारव्यावर्त्यमाह। अन्या इति। भगवद्व्यतिरिक्तविषया वाचो विमुञ्चथ कस्य हेतोः? अमृतस्यैष सेतुः। संसारार्णवपारभूतस्यामृतस्य ः प्रतिलम्भकः यद्वा अमृतस्य मुक्तस्य सेतुः तस्यैव मुक्ताश्रयत्वेन मोक्षप्रदत्वम् अन्येषां मुक्ताश्रयत्वाभावेन मोक्षप्रदत्वं न घटते। अतो भगवदुपासनं कार्यं नान्यस्येत्यर्थः। वक्ष्यत्यनन्तरसूत्र एव "मुक्तोपसृप्यत्वव्यपदेश दिति।" महाभा ते च 'मुक्तानां परमा गतिरिति" मुक्ताश्रयत्वं भगवतो निष्प्रत्यूहम्। आयतनत्वसाधारणधर्मदर्शनात् विचाराङ्गं संशयमाह यस्मिन्निति। भवति हि साङ्ख्याभिमतं प्रधानं द्युभ्वाद्यायतनं विकाराणां प्रकृत्यायतनत्वात् तत्र सावधित्वेन सेतुत्वव्यपदेशोपपत्तेरित्याह प्रधानमिति। पूर्वपक्ष इति। श्रुतावात्मशब्दप्रयोगात्र प्रधानं द्युभ्वाद्यायतनमित्यत आह आत्मशब्दस्त्विति। प्रधानगतसत्वगुणयोगाधीनपुरुषवृत्तिप्रीतिजनकत्वेन प्रधानेऽप्यात्मत्वस्योपचारो घटत इत्यर्थः।

प्रत्यगात्मनो भोक्तृत्वाद्भोग्यायतनता मनःप्रभृतिकरणाधारतयाऽऽक्षमत्वात् द्युभ्वाद्यायतनमित्याशयेनाह जीवोवेति। जीवलिङ्गान् दर्शयति। आरा इव रथनाभाविति। यत्र हृदये रथनाभौ समर्पिता आरा इव नाड्यः संहताः संगताः स एष प्रकृतात्मा अजायमानो देवमनुष्यपश्वादिरूपेण बहुधा जायमानश्चेत्यर्थः। समाधत्ते ब्रूम इति। विग्रहप्रदर्शनमुखेन सूत्रार्थं व्याचष्टे द्युभ्वादीति। द्यौश्च भूश्च द्युभुवौ तावादीति स्फोरितं द्विवचनप्रयोगेन। अन्यपदार्थं विवृणोति। यस्य प्राणान्तस्येति। द्युभ्वाद्यायतनत्वं ब्रह्मव्यतिरिक्तेऽप्युपपादयितुं शक्यं विशेषावधारणं न युक्तमित्याह कुत इति। तत्र हेतुमादाय योजयति। स्वशब्दादिति। हेत्वर्थं व्याकरोति स्वस्येति। "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इति श्रुत्यनुसारेणात्मपदं विवृणोति आप्नोतीति। नहि सर्वनियन्तृत्वं सर्वव्यापकत्वं प्रत्यगात्मनस्सम्भवति तस्मादात्मशब्दप्रयोगः परस्मिन् परमात्मन्येवोपपद्यत इत्याशयः।

सेतुशब्दः सलिलनिरोध एव प्रसिद्धस्तस्य प्रकृतेऽसम्भवी रुढ्यर्थानुपपत्तौ सत्यां पारसाम्यात्तमुभयथा व्याकरोति मोक्षप्रापकतयेति रुढ्यर्थगतगुणयोगेन सादृश्यमुपपादयति। नद्यादिसेतुरिति। यथा श्येनसादृश्याद्यागे श्येनशब्दप्रयोगस्तथा सेतुसादृश्यात्पुरुषोत्तमे सेतुशब्दप्रयोग इत्यर्थः। नाड्याधारत्वं परमात्मन्युपपादयति नाडीसम्बन्धस्येति।

श्रुत्यर्थवैशद्याय स्मृतिमुदाहरति। अजोपीति। अजोऽपि सन् जीववत्कर्मनिमित्तजन्माऽपूर्वदेहग्रहणं तद्रहितः सन् अव्ययात्मा पूर्वदेहवियोगरहितोऽपि सन् भूतानामीश्वरो नियन्ताऽपि सन् स्वां प्रकृतिं स्वभावमसङ्गत्वाजेयत्वानतिक्रमणवीर्यत्वादि स्वं स्वभावमधिष्ठाय आत्ममायया मीयते कार्यमनयेति माया ज्ञानं सङ्कल्पो वा 'माया वयुनं ज्ञानं' निघण्टुकोशात् तथाच प्रकृतिं स्व स्वभावमपरित्यज्यात्मसङ्कल्पेन सम्भवामि सम्यक्लोकं कुर्वन्नाविर्भवामीत्यर्थः। स्वस्वभावमजहत एव बहुधा जायमानत्वमिति योजना। स्वस्य स्वभावमसङ्गत्वाजेयत्वादिकमनतिक्रम्यैवानेकरूपेणाविर्भावत्वमित्यर्थः। स्वस्याविर्भावे हेतुद्वयं स्वेच्छाः स्वोपासकानुग्रहरूपत्वफलविशेषश्च तदेवाह भक्तानुग्रहायेति। परमात्मनस्सर्वाधारत्वाज्जीवोपकरणमनःप्रभृतीनामप्याधारत्वमित्याह तस्येति। परमात्मनः तत्रैव = परमात्मन्येव ॥१॥

"निरञ्जनः परमं साम्यमुपैति" "परात्परं पुरुषमुपैतीति" संसारबन्धान्मुक्तानां प्राप्यत्वेन व्यपदेशाच्च परमात्मैव तत् ॥ २ ॥

## नानुमानमतच्छब्दात् । १ । ३ । ३ ॥

अनुमीयते इत्यनुमानं प्रधानमिह द्युभ्वाद्यायतनतया न ग्राह्यं कुतः अतच्छब्दात् प्रधानप्रतिपादकशब्दाभावात् अर्थाभावेऽव्ययीभावः ॥ ३ ॥

## प्राणभृच्च । १ । ३ । ४ ॥

नेति अतच्छब्दादिति चानुवर्त्तते । प्राणभृज्जीवोऽपि न द्युभ्वाद्यायतनं जीवप्रतिपादक शब्दाभावात् आत्मशब्दस्य तु सर्वव्यापके परमात्मन्येव मुख्यत्वात् ॥ ४ ॥

## भेदव्यपदेशाच्च । १ । ३ । ५ ॥

परमात्मनः सकाशाज्जीवस्य भेदोक्तेश्चापि न तद्ग्रहणम् ॥ ५ ॥

## प्रकरणात् । ३ । ६ ॥

---

परमात्मनो द्युभ्वाद्यायतनत्वसाधकं हेत्वन्तरमाह इतश्चेति । तत्र मानमाह निरञ्जन इति । प्रकृतिसंसर्गशून्यः परमसाधारणं साम्यं साधर्म्यमुपैतीत्यर्थः मम साधर्म्यमागता इति भगवदुक्तेः परात्परं पराज्जीवात्प्रकृतेर्वा परं पुरुषं पूर्णमित्यर्थः । कस्मान्मुक्त मित्यतआह । संसारबन्धान्मुक्तानामिति । 'तत्' द्युभ्वाद्यायतनम् ॥ २ ॥

परब्रह्मैव मुक्तप्राप्यं नतु प्रधानादीत्याह तदेवेति । अनुमीयत इति । कृत्यल्युटो बहुलमिति बहुलग्रहणात् कर्मणि ल्युडिति भावः । अनुमानमिति । अर्थाभावे यदव्ययमिति न सूत्रोपादानम् अपितु 'अव्ययंविभक्तीति' सूत्रस्यार्थोपादानम् । अतच्छब्दादित्यत्र बहुव्रीहिसमासेन तच्छब्दरहितादित्यर्थः स्यात्तदा तस्य विशेष्यान्तरमन्वेषणीयं तच्चेहानुपलब्धत्वादसामञ्जस्यम् तत्पुरुषत्वे नञस्तत्पदेन शब्दपदेन समासस्स्यात् तत्र प्रथमे अयः कः इत्यपेक्षायां प्रकृतात्परमात्मनोन्यत्प्रधानं जीवो वा यद्यतच्छब्दार्थस्तदा प्रधानपुरुषवाचि शब्दादित्युक्तं स्यात् ततश्चासिद्धिः प्रतिज्ञातार्थविरोधश्च स्यात् । असः प्रधानव्यतिरिक्तपरमात्मा चेत् तद्वाचिशब्दादित्युक्ते स्वशब्दादित्यनधिकार्थः स्यात् तथाच सति नानुमानमत एव प्राणभृच्चेत्यावर्जनेन शक्ये सूत्रप्रणयने कुटलोक्तिर्विफला स्यात् नञस्तच्छब्दपदेन समासपक्षेऽपि तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं स्यात्तदा तच्छब्दः प्रधानजीवपरश्चेत्तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं भवति तदा स्वशब्दानधिकार्थम् ।

तच्छब्दः परमात्मपरश्चेत् तद्वाचिशब्दव्यतिरिक्तादिति हेतुः प्रतिज्ञातार्थविरुद्धार्थः स्यात् । अतः पारिशेष्यादर्थाभावेऽव्ययीभाव इति साधूक्तमित्यन्यत्र प्रपञ्चितम् ॥ ३ ॥

सूत्रे चकारः पूर्वसूत्रस्थनञो अतच्छब्दादित्यस्यानुषङ्गार्थं इत्याह नेति । अतच्छब्दादितिचानुवर्तत इति सूत्रार्थ-व्याचष्टे प्राणभृज्जीव इति प्रागुपदर्शित आत्मशब्दव्युत्पत्त्यनुरोधनात्मशब्दः परमात्मन्येव मुख्य इत्यर्थः ॥ ४ ॥

तमेवेकं जानाथ आत्मानमिति ज्ञेयज्ञातृभावेन भेदव्यपदेशो भवति । "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इत्यादयः शतशः सहस्रशः श्रुतयः उपलभ्यन्ते ताभिः प्रत्यगात्मपरमात्मनो भेदो व्यपदिश्यते इत्याशयः ॥ ५ ॥

"अथ परा यया तदक्षरमधिगम्यते" इत्यादिना परस्यैव प्रकृतत्वात् ॥ ६ ॥

## स्थित्यदनाभ्यां च । १ । ३ । ७ ॥

"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीत्यत्रैकस्य" सुपर्णस्य कर्मफलमनश्नत एव देदीप्यमानतयादेहरूपवृक्षे स्थितेः इतरस्य कर्माधीनतया कर्मफलादनाच्च ताभ्यां जीवपरमात्मनोर्भेदावगमात् स्वतन्त्रः सर्वज्ञः परमात्मैवामृतसेतुर्द्युभ्वाद्यायतनं भवितुमर्हो न जीव इति "अदृश्यत्वादिगुणको धर्मोक्तेरित्यनेन" सिद्धेऽपि परमात्मत्वे मध्यवाक्ये प्रधानादिशङ्कानिराकरणार्थमिदमधिकरणमुक्तम् ॥ ७ ॥

इति द्युभ्वादिप्रथमाधिकरणम् ।

## भूमासम्प्रसादादध्युपदेशात् । १ । ३ । ८ ॥

इदमाम्नायते छन्दोगैः "भूमात्वेव विजिज्ञासितव्य" इति "भूमानं भगवो विजिज्ञास" इति" "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति ।" तत्र भूमशब्दो हि बहुत्ववाची बहुशब्दात् पृथ्वादित्वादिमनिचि "बहोर्लोपो भू च बहोरिति" सूत्रेण प्रकृतिप्रत्य-

---

सर्वात्मके ब्रह्मणि विज्ञाते सर्वमिदं विज्ञातं भवति न जीवात्मनि कस्मिन्नु भगवो विज्ञाते इति प्रकरणं परमात्मपरं नान्यपरमित्यर्थः ॥ ६ ॥

विषयवाक्यं पठति । तयोरन्यइति । जीवेश्वरयोर्मध्येऽन्यतरो जीवः स्वादु परिपक्वं पिप्पलं कर्मफलं भुङ्क्ते । अन्यस्तु परमात्माऽभुञ्जान एव प्रकाशते इत्यर्थः । श्रुतिक्रमेण व्याख्यानमाह एकस्येति । अस्मिन् वचने जीवस्याऽप्यभिहितत्वात् "यस्मिन्द्यौरिति" मन्त्रोऽऽपि तत्प्रतिपादकः स्यात् । अत्रादनशब्दवाच्यभोगोपकरण मनःप्राणसम्बन्धदर्शनादित्यत्राह कर्मफलमिति । जीवस्य भेदकधर्मानाह इतरस्येति । जीवस्येत्यर्थः । ताभ्यां = कर्मफलमनश्नत्वदेदीप्यमानत्वकर्माधीनत्व तत्फलादनत्वाभ्याम् । उभयोः प्रस्तुतत्वेऽपि कर्मफलमनश्नत्वदेदीप्यमानत्वभेदकधर्मैः सर्वज्ञोऽमृतसेतुरिति प्रकरणोक्तविशेषणैश्च परमात्मन एव द्युभ्वाद्यायतनत्वं धर्म इति निश्चीयत इत्याह । स्वतन्त्रः सर्वज्ञ इति । नहि प्रत्यगात्मनि सार्वज्ञ्यामृतसेतुत्वस्वतन्त्रत्वदेदीप्यमानत्वादयो धर्माः कथमपि भवितुमर्हन्तीत्याह न जीव इति । अदृश्यत्वाद्यधिकरण एव परमात्मत्वं द्युभ्वाद्यायतनत्वं साधितं किमेतदधिकरणारम्भेण इत्यत आह अदृश्यत्वादिगुणक इति । मध्यवाक्य इति । भूतयोनिवाक्यस्य मध्ये इदं वाक्यं पठितं "यस्मिन् द्यौः पृथिवी चान्तरिक्षमिति ।" तत्र प्रधानप्रत्यगात्मनोः द्युभ्वाद्यायतनत्वं स्यादिति याशङ्का तत्परिहारायेनस्याधिकरणस्योत्थानमित्यर्थः ॥ ७ ॥

इति द्युभ्वाद्यधिकरणम् ।

विषयवाक्यमुदाहरति । इदमिति । नाल्पे सुखं विद्यते किन्तु भूमैव सुखं तस्मात् भूमात्वेव विजिज्ञासितव्यस्तन्निरतिशय वैपुल्यविशिष्टसुखप्राप्तिकामेन मुमुक्षुणा भूमैव निरतिशयवैपुल्यविशिष्टसुखरूपः परमात्मैव विजिज्ञासितव्य एवं श्रीसनत्कुमारेणोक्ते भगवान् श्रीनारद आह "भूमानं भगवो विजिज्ञासे" इति । भगवः हे भगवन् गुरोः भूमानमेव विशेषेण ज्ञातुमिच्छामीत्यन्वयव्यतिरेकाभ्यां भूम्नो लक्षणमाह । यत्रेत्यादिनेति । विचाराङ्ग विशेषविषयसंशयस्य सम्भावनां प्रदर्शयितुं भूमशब्दार्थं निर्वक्ति तत्रेति । विषयवाक्ये इत्यर्थः । बहुशब्दात्परस्य प्रत्ययस्यादेरचो लोपः "आदेः परस्य" इति सूत्रवशात् बहुशब्दस्य भूशब्दादेशश्चेत्येवं प्रकृतिप्रत्यययोर्विकार इत्यर्थः संख्या-

यथोर्विकारे भूमेति निष्पन्नं बहुत्वं चात्र वैपुल्यं न सङ्ख्याविशेषः बहुशब्दस्य "बहुषु बहुवचन"मित्यादिसङ्ख्यायामिव "अल्पं वा बहु वा यस्य श्रुतस्योपकरोति" य इत्यत्राल्पत्वप्रतिद्वन्द्वितयैव भूमशब्दप्रयोगाच्च विपुलत्वमेवार्थः। विपुलत्वं च गुणोत्कर्षरूपं न तु परिमाणरूपं सुखशब्दस्य सामानाधिकरण्यात्। नहि सुखे उत्कृष्टपरिमाणं प्रसिद्धमस्ति। अत्र पुनर्न वैपुल्यरूपधर्मपरो भूमशब्दः सुखस्य वैपुल्यरूपत्वाभावात् अल्पप्रतियोगितया निर्देशाच्च। यहात्र चोत्तरत्र चाऽल्पत्वं भूमप्रतियोगितया निर्दिश्यते अपि त्वल्पमेव अतोऽल्पशब्दप्रतियोगितया प्रयुज्यमानो भूमशब्दो वैपुल्याश्रयधर्मिपर एवेति। तत्र संशयः—किमिह भूमशब्दनिर्दिष्टो निरतिशयवैपुल्यविशिष्टसुखरूपः प्राणः, उत परमात्मेति। किं तावत्प्राप्तं प्राण इति पूर्वः पक्षः। "प्राणो वा आशाया भूयानिति" तस्यैव समीपस्थत्वात्पुनः प्रश्नोत्तराभावाच्च। प्राणशब्देन च प्राणसंहचरितो जीवात्मा न वायुविशेषमात्रं "प्राणो ह पिता प्राणो माते" त्यादिना चेतनत्वावगमात्। "तरति शोकमात्मवित्" "आत्मत एवेदं सर्वं" मित्युपक्रमोपसंहारयोरात्मशब्दप्रयोगात्। यत्र "नान्यत् पश्यती" त्यादिकमपि सुषुप्तौ प्राणेन्द्रियलयात्तत्रदर्शनादिनिवर्तते जीवे संगच्छत "यो वै भूमा तत्सुख" मित्यपि सुखमहमस्वाप्समिति सुखश्रवणात् तत्रैव संगच्छेत "प्राणो वा अमृत" मितिश्रुतेरमृतशब्दोऽपि तत्रैव।

---

व्यावृत्त्यर्थं बहुत्वार्थं व्याकरोति—बहुत्वञ्चेति। बहुशब्दस्य सङ्ख्यार्थकत्वे पाणिनीयसूत्रं प्रमाणयति बहुष्विति। सङ्ख्यायां बहुशब्दस्य प्रयोगं प्रदर्श्य वैपुल्येऽपि तत्प्रयोगं दर्शयति अल्पम्वेति। बहुशब्दस्य संख्यायां वैपुल्ये च प्रयोगोऽस्ति। संख्यां व्यावर्त्तयितुमाह—इहापीति। कथं वैपुल्यपरत्वमित्यत्राह—अल्पत्वप्रतिद्वन्द्वितयेति। अल्पत्वविरोधितयेत्यर्थः।

बहुशब्दस्य संख्याविपुलत्वयोः प्रयोगदर्शनेऽपि 'यत्रान्यत् पश्यति तदल्पमिति' श्रुत्यनुरोधात् संख्यां व्यावर्त्य विपुलत्वार्थकत्वं समर्थितं सम्प्रति धर्मपरत्वपक्षे बाधकमुपन्यस्य धर्मिपरत्वं भूमशब्दस्योपपादयति। विपुलत्वञ्चेति। भूमैव सुखमिति सामानाधिकरण्यानुरोधेन सुखे वैपुल्यरूपाभावान्न धर्मपरो भूमशब्द इत्याह—नहि सुख इति। हेत्वन्तरमाह—अल्पप्रतियोगितयेति। धर्मवाचिभूमशब्दप्रतियोगित्वादल्पशब्दोऽपि धर्मपरः स्यादिति-चेन्न। तत्रापि धर्मिवाचिषष्ठ्यन्तशब्दान्तराभावात् 'यत्र नान्यत् पश्यतीति' श्रुतेश्च। नहि धर्ममात्रे ज्ञाते धर्मिस्वरूपं ज्ञातं भवतीति सिद्धमर्थं निगमयति-अत इति। संशयं दर्शयति-तत्र संशय इति। तत्र=भूम शब्दे। भूमशब्दः प्राणे पर्यवसित इति भूमा प्राण इति पूर्वपक्षमाह। किं तावदिति। प्राणस्य लिङ्गमाह प्राणोवेति। आशायाः फलेच्छा, फलाशायत्ततयैव हि परलोकवांच्छा जायते। प्राणस्योपासनेन सर्वे कामाः समृद्धाः भवन्तीत्यर्थः। तस्यैव=प्राणस्यैव। 'अस्ति भगवो नाम्नो भूयः' 'अस्ति भगवो वाचा भूय' इत्यादयः प्रश्नाः। 'वाग्वा नाम्नो भूयसी' 'मनो वा वाचो भूय' इत्यादीन्युत्तरवाक्यानि। प्राणात् पूर्वेषु प्रतिवचनं दृश्यते तदग्रे प्रतिवचनं नास्ति अतः प्राणपर्यन्त एवायमात्मोपदेश इत्याह—पुनः प्रश्नान्तराभावाच्चेति। प्राणशब्दः कथमात्मनि वर्तत इत्यत्राह—प्राणसहचारीति। पञ्चवृत्तिप्राणः प्राणशब्दवाच्य इति पूर्वपक्षयित्वा तत्प्रकरणविच्छेदेन भूमा प्रत्यगात्मेति समाहितं तं पक्षं निरस्य परमात्मा भूमेति सिद्धान्तितम्। तमाशङ्कयाह। न वायुविशेषमात्रमिति। सिद्ध्यति च प्राणस्यात्मत्वं आत्मोपदेशस्य तत्र समाप्तिदर्शनादिति भावः। हेत्वन्तरमाह प्राणइति। 'तरति शोकमात्मवित्' 'आत्मत एवेदं सर्वं' इत्युपक्रमोपसंहारवाक्य आत्मशब्दोपादानादपि निश्चीयते भूमा प्रत्यगात्मेत्याह। तरतीत्यादिना। यदि प्रत्यगात्मनो भूमात्वं व्यवस्थाप्यते

एवं भूमगुणविशिष्टस्य प्रत्यगात्मत्वे निश्चिते वाक्यशेषोऽपि तदनुगुणतया नेय इत्येवं प्राप्ते–इदमाह। भूमेति। भूमशब्दनिर्दिष्टः परमात्मैव न प्राणसहचरितो जीवः। कुतः? संप्रसादादध्युपदेशादिति। सम्यक् प्रसादो यस्मिन्स संप्रसादो जीवात्मा "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिश्रुतिप्रसिद्धस्तस्मात् "एष तु वा अतिवदति यः सत्येनातिवदतीति" तुशब्देन प्राणोपासकात्सत्योपासकस्याधिकतयोपदेशात् भूमगुणविशिष्टः सत्यशब्दाभिधेयः परमात्मैव। अयं भावः–श्रीनारदपृष्टेन श्रीसनत्कुमारेण नामादिप्राणावधिकपञ्चदशपदार्थेषु पूर्वपूर्वत उत्तरोत्तरस्याधिक्याभिधानवत् प्राणशब्दनिर्दिष्टाज्जीवादधिकतया निर्दिष्टः सत्यशब्दाभिधेय एव भूमेति। कथमधिकतया सत्यस्योपदेशोऽवगम्यते इति चेत् "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवतीति" प्राणवेदिनोऽतिवादित्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदतीति" तुशब्द एव प्राणोपासकात्सत्योपासकं व्यावर्त्य पूर्वातिवादित्वनिमित्तात्प्राणादस्यातिवादित्वनिमित्तं सत्यमधिकतयोपदिशति। सत्येनेतीत्थम्भूतलक्षणे तृतीया। सत्येन परब्रह्मउपास्येनोपलक्षितो योऽतिवदतीत्यर्थः। सत्यशब्दश्च ब्रह्मणि प्रसिद्धः "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यं" "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादिषु। अतिवादित्वं च स्वोपास्याधिक्यवादित्वं तच्चोपास्यदेवताऽतिशये पर्यवस्यति। एवं पश्यन्नित्यादौ "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे शतृप्रत्ययः। ततश्च स्वोपास्यदेवतासाक्षात्कारोऽतिवादित्वहेतुरित्यर्थः। साक्षात्कार-

---

तदा यत्र नान्यत् पश्यतीत्यादि भूम्नो लक्षणं कथं तत्रोपपद्यत इत्यत्राह। यत्र नान्यदिति। सुषुप्तौ सर्वकरणव्यापाराणां लयात् न शृणोति प्रत्यगात्मा। तथाच यत्र भूम्नो नान्यदित्यादिलक्षणं जीवे सङ्गच्छेत इति। प्रत्यगात्मनो भूमपदवाच्यत्वे तत्र सुखरूपत्वममृतत्वं भूमलक्षणनिविष्टमुपपन्नतरं भवतीत्याह यो वै भूमेति वाक्यशेष इति। 'अहमेवाधस्तादहमुपरिष्टात् 'अहमेवेदं सर्वमित्यादीनि।' तदनुगुणेति। स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यानीत्यर्थः। राद्धान्तयति। इदमाहेति। सूत्रार्थं विवृणोति भूमेति।' सम्प्रसादशब्दस्य प्रत्यगात्मपरत्वं कथमित्यत्राह—एष इति। श्रुत्यर्थस्तु परं चिदचिद्भ्यां विलक्षणं ज्योतिः सर्वावभासकमंशिस्वरूपं जीवः उप समीपे प्राप्य देहेन्द्रियादिविलक्षणेन स्वानन्दसम्पन्नेन ज्ञानस्वरूपेण निष्पद्यते इति। प्राणोपासकस्यातिवादित्वमुक्त्वा 'एष तु वा अतिवदति यः सत्येनातिवदति इति' तुशब्देन सत्यवेन वादिन आधिक्यं प्राणोपासकादिति निश्चीयत इत्याह। एष तु वेति। सत्यशब्दश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परमात्मनि पुरुषोत्तमे प्रयुक्तः इत्याह—भूमगुणविशिष्ट इत्यर्थः। पञ्चदशपदार्थ इति। १ नाम, २ वाग्, ३ मनः, ४ सङ्कल्पः, ५ चित्तं, ६ विज्ञानम्, ७ ध्यानं, ८ बलम्, ९ अन्नम्, १० आपः, ११ तेजः १२ आकाशः, १३ स्मरः, १४ आशा, १५ प्राणाः इति पञ्चदशपदार्था उपास्यत्वेनाभिहिता इत्यर्थः। उत्तरोत्तरस्येति पूर्वनिर्दिष्टादूर्ध्वाभिधानं हि पूर्वनिर्दिष्टप्रतियोगितयोत्तरोत्तरेषामधिकतयाऽर्थान्तरत्वे हेतुरित्यर्थः। प्राणशब्दवाच्यात्प्रत्यगात्मनः सकाशात् सत्योपदेशस्याधिक्यं कस्मान्निर्णीतमिति पृच्छति कथमधिकतयेति। तुशब्देन प्रकरणविच्छेदान्नाङ्गविधिरिति प्रतिवदति। स वा एष इति। व्यावर्त्य इति। पूर्वनिर्दिष्टादुत्तरनिर्दिष्टस्याधिकत्वोपदेशपरप्रकरणत्वादिति भावः। तु शब्द इति। उपासाधिक्यात्तन्निमितोपास्याधिक्यं वक्तुं तुशब्दस्तात्पर्येणोपासकवैलक्षण्यमुक्तम्। तु शब्दो ह्यसंकुचितवृत्तिधर्मधर्मिणोर्विशेषेण भेदक इत्यर्थः। प्राणातिवादिनोऽतिवदननिमित्तात्तदुपास्यात् प्राणादपि तदुत्तरवर्तिनिर्दिष्टस्य सत्यवातिवादिनोऽतिवदननिमित्तं तदुपास्यमधिकमितिभावः। श्रुत्यर्थं व्याचष्टे।

प्रीतस्तत्रोपास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीति भावः । किञ्च "सोऽहं भगवः सत्येनातिवदतीति" प्राणातिवादित्वपरित्यागेन सत्यवदनोनुज्ञैव प्राणप्रकरणविच्छेदं बोधयतीति ॥ ८ ॥

## धर्मोपपत्तेश्च । १ । ३ । ९ ॥

अत्र भूम्नि ये धर्माः श्रूयन्ते ते परमात्मन्येवोपपद्यन्ते "यो वै भूमा तदमृतं स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि स एवाधस्ता" दित्यादौ "आत्मतः प्राण" इत्यादौ च श्रुतानां स्वाभाविकामृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मकत्वसर्वोत्पादकत्वादीनां परस्मिन्नेवोपपत्तेः । "अहमेवाधस्तादहमुपरिष्टा" दित्यादिना सर्वात्मत्वोपदेशस्तु भूमगुणाश्रयस्य परमात्मनः "अथातोऽहङ्कारोपदेश इत्यहंग्रहेणोपदेशोपक्रमात् अहंग्रहेणोपासनार्थः । नन्वहंबुद्धिशब्दयोर्जीवात्मविषययोः कथं भूमपर्यन्तत्वमनहमर्थ च परमात्मन्यहंग्रहोपासनस्यायथार्थत्वमेवेति चेन्न, "एष त आत्मान्तर्यामीति" श्रुत्यन्तरात् भूम्नः सर्वान्तर्यामितया सर्वात्मत्वात् जीवात्मानं प्रत्यपि आत्मत्वेन तद्विषयाहंबुद्धिशब्दानां परमात्मपर्यन्तत्वस्योपपन्नत्वात् । एतदेव

---

सत्येनेति । सत्यमुपांस्य चेत् "स वा एष एवं पश्यन्निति वत्" सत्यं पश्यन्नतिवदतीति वक्तव्यं ननु सत्येनेति शङ्कायां तृतीयार्थमाह सत्येनेति । सत्यवदनेपक्ष एव तृतीयानुपपत्तिः उपसर्गवैयर्थ्यश्चेति भावः । एवं पश्यन्नित्यत्र हेत्वर्थकशतृप्रत्ययेन निष्पन्नमर्थं दर्शयति । ततश्चेति । 'सोऽहं भगवस्सत्येनातिवदानि' इति शिष्यः प्रार्थयते ननु प्राणेन तिवदानीत्याह किञ्चेति ॥ ८ ॥

कस्य धर्मा इत्याकाङ्क्षायां पूरयन् व्याचष्टे अत्रेति । भूम्नः प्रकरणे । जानन्नपि श्रीनारदो विशेषार्थज्ञानाय स्थापनाय वा भूमाश्रयं पृच्छति स भगव इति । हे भगवन् ! स भूमा । उत्तरमाह । स्व इति । अनन्याधारत्वमुक्तं भवति । स एवाधस्तादित्यादिना सर्वात्मकत्वम् । आदिना 'स एवेदं सर्वमित्यादीनां' परिग्रहः । आत्मनः प्राण इत्यनेन प्राणप्रभृतिसर्वस्योत्पादकत्वमभिहितम् । परमात्मधर्मानाह । स्वाभाविकेति । अहमधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमेवेदं सर्वमित्यथातोऽहङ्कारादेश एवाहमधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमिति सामानाधिकरण्यनिर्देशात् स इति निर्दिष्टस्य भूम्न इदं सर्वमिति निर्दिष्टस्य चेतनाचेतनात्मकस्य ब्रह्मात्मकत्वभावः फलितो भवति । ततश्च अथातोऽहङ्कारादेश इति । अथशब्दः प्रकृतविषयस्वद्योतनार्थः । अहङ्कारो बुद्धिरहंग्रहेण भूम्न उपासनाप्रकारोऽतःपरमुपदिश्यते ननु जीवस्वरूपोपदेशस्तथासत्यहमादेश इत्यनेनैवोपपत्तौ-कारपदस्य वैयर्थ्यं प्रसज्येत परमात्मनोऽहंग्रहेणोपासनप्रकारं दर्शयति अहमेवाधस्तादित्यादिना । एतत्सर्वं मनसि निधायाह । अहमधस्तादिति । सर्वात्मत्वोपदेशस्तु अहंग्रहेणोपासनार्थ इति योजना । भूमगुणाश्रयस्य परमात्मन इत्यत्र हेतुमाह अथात इत्यादिना । तादृशोपक्रमसामर्थ्यात्परमात्मनः ब्रह्मणः सर्वात्मकत्वज्ञानप्रतिष्ठार्थमहंग्रहेणोपासनं कर्त्तव्यमित्यर्थः । अथातोऽहङ्कार इत्यत्राहंकारशब्दो बुद्धिवाची । बुद्धिश्च विषयरूपा । अहमेवाधस्तादित्यत्र अहंपदवाच्यः प्रत्यगात्मा तयोः कथं भूमपर्य्यन्तत्वम् । अहमर्थाभाववति परमात्मन्यहन्त्वप्रकारकं भ्रमात्मकज्ञानमित्यहंग्रहोपासनस्या यथार्थत्वमेवोपपद्यत इत्याशङ्कते नन्विति । भूम्नः प्रत्यगात्मानं प्रत्यात्मत्वे तद्विषयबुद्धिशब्दानां परमात्मपर्य्यन्तत्वमुपपद्यत इति दर्शयन् 'तरति शोकमात्मविदिति' प्रक्रान्तमात्मनउपदेशं भूम्नि समापयति अथात आत्मादेश इति । आत्मादेश आत्मत्वोपदेशः क्रियते इति शेषः । तथाहि "आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा दक्षिणत आत्मा उत्तरत आत्मा वेद सर्वमिति" सर्वात्मतयोपदिश्यमानो भूमोपासकस्यैवात्मैवेत्यर्थः । ततश्च तत्राहंबुद्धि-

"अथात आत्मादेश" इत्यादिना "आत्मैवेदं सर्वमित्यन्तेनोच्यते ।" अतोहमर्थस्य जीवात्मनोऽप्यात्मा परमात्मेति ज्ञानदार्ढ्यार्थमहंग्रहेण परमात्मोपासनं कर्त्तव्यमित्यतो भूमा परमात्मैवेति सिद्धम् ॥ ६ ॥ इति भूमाधिकरणम् ।

---

अथ अक्षराधिकरणम् ३ ।

## अक्षरमम्वरान्तधृतेः । १ । ३ । १० ॥

वाजसनेयिभिर्गार्गीयप्रश्न इदमाम्नायते "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । सहोवाच–एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छाय" मित्यादि । तत्र संशय्यते–किमेतदक्षरं प्रधानं, जीवो, वोत परमात्मेति, तत्राक्षरशब्दस्य प्रधानजीवयोरेव प्रायः प्रयोगदर्शनात् प्रधानं जीवो वा न परमात्मेति पूर्वः पक्षः । प्रधानस्य सर्वविकारकारणतया तदास्पदत्वात् रूपादिहीनत्वाभ्युपगमेन चास्थूलादीनामपि तत्रोपपत्तेः । जीवस्य च स्वभोग्यभूतसर्वाचिद्वस्त्वाधारत्वात् । केचिदत्राक्षरशब्दस्य वर्णे प्रसिद्धत्वादक्षरं वर्णरूपमोङ्कार इति पूर्वपक्षयन्ति तदेतदधिकरणेनासम्बद्धं "मलोहितमस्नेहमच्छाय" मित्यादिप्रतिषेधानुपपत्तेः । ननु "यया तदक्षरमधिगम्यते" इत्यादौ परमात्मन्य-

---

शब्दयोर्याथार्थ्यमेव । ननु कथं ज्ञायते अथात आत्मादेश आत्मत्वोपदेशः प्रकृतभूमविषय इति । मैवं भिन्नयोर्द्वयोः सर्वात्मत्वायोगेन एकविषयत्वं स्वत एव सिध्येदित्याशयेन परिहरति नेति । 'एष त आत्मेति' 'एष त आत्मान्तर्यामीति' श्रुतिनिर्दिष्टात्मशब्दस्य परमात्मपरत्वं ते इति षष्ठ्यन्तनिर्देशादेव निश्चीयते । स च भूमैव तस्य सर्वान्तर्यामित्वेन सर्वात्मकत्वे जीवात्मनोप्यात्मा परमात्मैवेत्यर्थः । एतेन न केवलमन्तर्यामिब्राह्मणादिषु अस्मिन् प्रकरणेऽपि सर्वात्मत्वमिति सूचितं भवति ॥ ६ ॥ इति भूमाधिकरणम् ।

---

अथ अक्षराधिकरणम् ।

विषयवाक्यमुदाहरति । वाजसनेयिभिरिति । सोऽव्याकृत आकाशः किमाश्रित इत्यर्थः । हे गार्गि ! तदेतत्सर्वासूपनिषत्सु प्रसिद्धम् । अश्नुत इति वा न क्षरतीति वाऽक्षरं ब्रह्म ब्राह्मणा ब्रह्मविदोऽभिवदन्ति । अत्र ब्राह्मणाभिवदनकथनेन नाहं किञ्चिद्विप्रतिपन्नं वक्ष्यामीति भावः । अस्थूलम्=स्थूलाद्भिन्नम् । तर्हि किमण्वित्यत्राह अनण्विति । तर्हि ह्रस्वमित्यत आह अह्रस्वमिति । किं तर्हि दीर्घमित्यत्राह अदीर्घमिति । एवमुत्तरत्रापि । संशयमाह तत्रेति । विषयवाक्य इत्यर्थः, । संशयस्य बीजं दर्शयति तत्राक्षरशब्दस्येति । "अक्षरात्परतः परः" इत्यत्राक्षरशब्दस्य प्रधाने प्रयोगः । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्याकाशाधारत्वप्रश्नस्याकाशोपादनतया तदाधारभूतप्रधानविषयत्वौचित्यात् स्थूलादिनिषेधानाञ्चोपपत्तेश्च अक्षरशब्दितं प्रधानमिति पूर्वपक्षमाह । प्रधानमिति । तदास्पदत्वात्=विकाराधारत्वात् । एतेनाकाशाधारतया प्रधानस्याक्षरत्वमुपपन्नमिति सूचितम् । जीवस्याप्यचेतनवस्त्वाधारत्वसम्भवाज्जीवोऽप्यक्षरः 'कूटस्थोऽक्षर उच्यत' इत्यादिदर्शनादित्याह जीवस्येति । केषाञ्चित् मतसिद्धं सूत्रस्यावतरणमपाकर्त्तुमनूदति केचिदित्यादिना । वर्णानामह्रस्वत्वमदीर्घत्वाद्यनुपपत्तेः स्नेहलौहित्यच्छायादि-

प्यक्षरशब्दो दृश्यते इति चेन्न । प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोराद्यस्य प्रथमं प्रतीतेः प्रतीतपरिग्रहविरोधाभावात्, इति प्राप्ते ब्रूमः–अक्षरं परं ब्रह्मैव । कुतः ? अम्बरस्य वायुमत आकाशस्यान्तःपारभूतं कारणमव्याकृतं प्रधानं तस्य धृतेरस्याक्षरस्य तदाधारकत्वेनोपदेशात् । यत्तूक्तम्–श्रुतिप्रसिद्धात्प्रमाणान्तरप्रसिद्धस्य प्रथमं प्रतीतेरिति । तन्न । अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात् । सम्बन्धग्रहणदशायामर्थस्वरूपं येन प्रमाणेनावगम्यते न तत्प्रतिपादनदशायामपेक्षणीयम् । एतेन "यदूर्ध्वं गार्गि दिव" इत्यारभ्य

---

धर्मप्रसङ्गाच्च नोक्तावतरणं युक्तमित्याशयेनाह । तदेतदिति । पार्श्वस्थशङ्का । नन्विति । परिहरति नेति । प्रमाणान्तरेति । अनुमानं प्रत्यक्षपूर्वं भवतीति तन्मात्रमपेक्षते श्रुतेश्शक्तिग्रहाद्या तु प्रत्यक्षानुमानयोरपेक्षाऽस्ति अत आनुमानिकादक्षराच्छ्रुतिप्रतिपन्नस्याक्षरस्य परमात्मनो विलम्बेनोपस्थितिः । लौकिकालौकिकयोः लौकिकस्य प्रसिद्धिप्राथम्यात् प्राबल्यम् । श्रुतिलिङ्गादिष्वपि शीघ्रधीहेतुत्वात् प्राबल्यमिति भावः । ननु "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्राकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्येऽपि ब्रह्मविषयत्वं दर्शितम् । अत्राप्यक्षरशब्दे तथा किं न स्यादित्यत्राह । प्रतीतेरिति । अक्षरशब्दस्य प्रधाने प्रयोगदर्शनात् अस्थूलत्वाद्यन्वयात् परब्रह्मणि प्रसिद्धत्वे सत्यपि प्रमाणान्तरप्रसिद्धया प्रथमप्रतीतस्य परिग्रहे विरोधाभावादाकाशकारणप्रश्नस्योत्तरत्वेनोच्यमानत्वाच्च प्रधानपरत्वमित्यर्थः । सिद्धान्तयति । ब्रूम इति । सूत्रार्थं विवृणोति अक्षरमिति । प्रागुक्तार्थमनूद्यति यत्तूक्तमिति । व्युदस्यति तन्नेति । रूढिशक्त्या अवयवशक्त्या वा शब्देन स्वार्थप्रतिपादनं स्यात् तत्र वक्ष्यमाणपरिहारस्य पक्षद्वयसाधारण्येपि प्रोक्षणीष्वर्थ संयोगादिति न्यायेन अवयवशक्त्या अर्थप्रतिपादनसम्भवे समुदायशक्तिकल्पनाऽयोगात् । अयमक्षरशब्दो न रूढ्या वर्त्तत इत्यभिप्रेत्य यौगिकत्वपक्षे परिहार उच्यते । तत्र व्युत्पन्नानां पदावयवानां संहत्य स्वार्थप्रतिपादने किं प्रमाणान्तरापेक्षा उत तत्तत्पदावयवव्युत्पत्तिवेलायामिति विकल्पं हृदि निधाय प्रथमे कल्पे परिहारमाह अक्षरशब्दस्येति । अवयवशक्तिरेवार्थप्रतीतिकारणमिति न प्रमाणान्तरमपेक्षितम् नहि दण्डिशब्दः स्वार्थप्रतिपादने दण्डदेवदत्तग्राहिप्रत्यक्षापेक्षः । द्वितीयं परिहरति । सम्बन्धेति । पदावयवानां व्युत्पत्तौ प्रमाणान्तरापेक्षाऽस्त्येव प्रतिपादनदशायान्तु न तदपेक्षा यथा चक्षुरादीनां तिमिरादिदोषापनयस्यौषधाद्यपेक्षत्वेऽपि घटादिपरिच्छित्तौ न भेषजग्राहिप्रमाणापेक्षा । यथाहुः—'अर्थबोधेऽनपेक्षत्वान्मानान्तरमनादृतम्' व्युत्पत्त्युपायभूतं यत्तच्च न तन्मात्रवर्त्तिनु" मिति । व्युत्पन्नानां पदावयवानां प्रतिपादनकालेऽपि व्युत्पत्त्यपेक्षितमानान्तराकाङ्क्षाऽस्ति चेत् दण्डिनमाहूय, गामानयेत्यादिवाक्यानामसन्निकृष्टार्थविषयाणां प्रत्यक्षसाचिव्याभावेन स्वार्थाप्रतिपादकतया गवानयनादिप्रवृत्त्युच्छेदप्रसङ्गः । अलौकिककार्यप्रतिपत्त्यनुपपत्त्या शास्त्रवैयर्थ्यप्रसङ्गाच्चातो मानान्तरापेक्षाभावात्तन्निबन्धनमर्थप्रतिपत्तौ प्राथम्यानन्तरभाविरूपवैषम्यं नास्तीत्यर्थः । किञ्च यौगिकानां शब्दानामवयवार्थयोगिवस्तुसामान्यप्रतिपादने किं मानान्तरापेक्षा उत विशेषपर्यवसान इति विकल्पे प्रथमे शिरसि परिहारोऽक्षरशब्दस्येति ग्रन्थेन फलितः । द्वितीये तु विशेषार्थपर्यवसानस्य प्राकरणिकलिङ्गाधीनत्वान्न मानान्तरापेक्षेति सम्बन्धेत्यादिग्रन्थेऽर्थसिद्धम्, न तत्प्रतिपादनदशायामपेक्षणीयमित्युक्तम् । विशेषपर्यवसाने सति प्रतिपादनं निराकाङ्क्षं भवति । अत्र परमात्मलिङ्गं दर्शितम् । अपिचावयवार्थपौष्कल्यं यत्र भवति तदेव यौगिकशब्देन स्वरसतः प्रतीयते यथेश्वरशब्दो लौकिकपार्थिवादिषु सत्स्वप्यलौकिकेश्वरं शीघ्रं प्रत्याययति अतश्च न क्षरतीत्यवयवशक्तिः परमात्मानमेव शीघ्रमुपस्थापयति । एतदुक्तं भवति प्रतिपाद्यस्य लौकिकालौकिकप्रमाणागोचरत्वं शब्दप्रतीतिविलम्बयोरप्रयोजकम् । धर्माधर्मेश्वरादिशब्दैः शौक्ल्यादिभ्यः पार्थिवादिभ्योऽलौकिकार्थे प्रतिपत्तिशैघ्र्यस्य दर्शनात् । धर्मशब्देन लौकिकशौक्ल्यलौहित्यादिलक्षणघटादिधर्मापेक्षया अलौकिकादृष्टरूपस्य धर्मस्य प्रतिपत्तेश्शैघ्र्यदर्शनात् । एवमधर्मशब्देनापि घटत्वादिधर्मभिन्नघटादिस्वरूपलौकिकार्थापेक्षया अलौकिकस्यादृष्टरूपार्थस्य प्रतिपत्तेश्शैघ्र्यदर्शनात् । ईश्वरशब्देनापि लौकिकपार्थिवापेक्षया अलौकिकेऽर्थे प्रतीति-

कालत्रयवर्त्तिकृत्स्नवस्त्वाधारतया निर्दिष्टस्याकाशशब्दवाच्यस्याव्याकृतभूतसूक्ष्मप्रधानादि-नामधेयस्याधारतयोच्यमानमेतदक्षरं न प्रधानं किन्तु परमात्मैवेत्युक्तम् ॥ १० ॥

## सा च प्रशासनात् । १ । ३ । ११ ॥

तर्हि जीवोऽस्तु तस्यापि प्रधानधृत्युपपत्तेरस्थूलत्वादिधर्मवत्त्वोपपत्तेरक्षरशब्दवाच्यत्वा-च्चेत्याशङ्क्याह–सा चाम्बरान्तधृतिः परमात्मन एव कर्म। कुतः ? "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिश्रूयमाणात्, प्रशासनात् प्रशासनं प्रकृष्टं शासनमप्रतिहताज्ञा । नचेदृशं स्वप्रशासनायत्तं सर्वाधारकत्वं जीवे सम्भवति ॥ ११ ॥

## अन्यभावव्यावृत्तेश्च । १ । ३ । १२ ॥

अन्यस्य प्रधानादेर्भावोऽन्यभावः तस्य व्यावृत्तेर्हेतोः परमात्मैवाक्षरशब्दवाच्यः "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ श्रुतं श्रोत्रमतं मन्तृविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्या-

---

श्शैघ्र्यं दृश्यते । अतएव प्रयोगप्राचुर्य्याधीनं प्रसिद्धितारतम्यमेव तयोः प्रयोजकं यौगिकशब्दानाञ्चासंकुचित[illegible]र्थ-गोचरत्वेन स्वतो वासितत्वात् तद्वत्यैव प्रसिद्ध्यतिशयात् प्रतीतिशैघ्र्यमिति । नन्वयवशक्त्यार्थप्रतिपादनेऽपि प्रधानस्या-नेकप्रमाणगम्यतया अभ्यस्तत्वादस्ति प्रथमावगतिः यथा गोशब्दस्य सामान्यनिमित्तत्वेऽपि गोशब्दोच्चारणात् स्वाभ्यस्ततयां गवि प्रथममेव प्रतीतिः । तदसत् । प्रधानस्यानेकप्रमाणगम्यत्वानभ्युपगमात् । नहि प्रत्यक्षेण जगत्कारणभूतं सूक्ष्मं वस्तु निरीक्ष्यते नापि श्रुतिविरोधिनोऽनुमानस्य तत्र प्रामाण्यं सम्भवतीति वक्ष्यते । ततश्च तत्रापि श्रुतिरेव प्रमाणं वक्तव्यं तथाच श्रुतिप्रसिद्धात् परमात्मनः प्रमाणान्तरप्रसिद्धस्य प्रधानस्य प्रथमप्रतिपत्तिरित्यसिद्धम् । किञ्च प्रथमप्रतीतस्यापि प्रधानस्य विरोधेन वक्तव्यतैव । विरोधश्चात्र स्पष्टः, एकस्यैवाधाराधेयभावानुपपत्तेरित्याकरे स्पष्टम् ॥ १० ॥

तर्हि जीवात्मनोऽक्षरत्वमत्र वक्तव्यं श्रीमद्भगवद्गीतायां श्रीमुखेनाक्षरशब्दस्य निर्दिष्टत्वात् भूतसूक्ष्मादिवस्त्वा-धारत्वस्योपपन्नत्वात् अस्थूलत्वादिधर्माणां तत्र सत्वाच्चेति शङ्कते । तर्हि जीवोऽस्त्विति । एतस्याक्षरस्य प्रशासन इति । प्रशासने आज्ञापक्षे सत्वे सूर्याचन्द्रमसौ 'देवताद्वन्द्वे' चानङ् । विधृतौ विशेषेण धृतौ विधृतः । प्रकृष्टं शासनं क्वचिदप्यप्रतिहतत्वमेव प्रशानस्य प्रकर्षः तच्च सर्वविषयकं प्रशासनं फलति । 'प्रशासितारं सर्वेषा'मिति प्रमाणानुसारात् । ततश्च सर्वविषयकप्रशासनाधीनद्यावापृथिव्यादिधारणवत्त्वमर्थः पर्य्यवस्यति । यद्यपि दृश्यते प्रत्यगात्मन्यपि यत्कि-ञ्चित् प्रशासयितृत्वं तथापि सर्वविषयकप्रतिहतरूपप्रकृष्टशासनस्य जीवेऽसत्वात्यत्किञ्चित्प्रशासयितृत्वमपि परमात्म-प्रशासनायत्तं नतु स्वतन्त्रमिति न तस्याक्षरशब्दवाच्यत्वमित्याह । प्रशासनमिति ॥ ११ ॥

प्रागुक्तसूत्रद्वयेन प्रधानप्रत्यगात्मनोरक्षरव्यतिरिक्तत्वं पृथगुपपादितं सम्प्रति अन्यभावव्यावृत्तेश्चैतत्सू-त्रेणोभयोर्व्यावृत्तिमाह । अन्यभावेति । सूत्रार्थं व्याचष्टे । अन्यस्येति । वाक्यशेषं पठति । एतद्वेति । अयोगिभिरदृश्यं । द्रष्टृ रूपादिसाक्षात्कर्तृ,श्रोतृ शब्दसाक्षात्कर्तृ,मन्तृ मन्तव्यसाक्षात्कर्तृ, विज्ञातृ अध्यवसेयसाक्षात्कर्तृ । नान्यतोऽस्तीति । अन्तर्यामिब्राह्मणव्याख्यानोक्तरीत्या अन्यशब्दस्य तत्सदृशपरत्वमेव यथा 'चोल एव भूपतिर्नान्य' इत्युक्तेस्तत्सदृशभूपतिनिषेधपरत्वमेवमिहाप्यद्रष्टृत्वादिविशेषितनिरुपाधिकद्रष्टृत्वाश्रयस्य परमात्मनः सदृशं किमपि नास्तीत्यर्थः । व्यावर्त्तयति निवर्त्तयति निवर्त्तकधर्मं प्रतिपादयति तेन सूत्रस्थव्यावृत्तिशब्दो भावप्रधाननिर्देशपर इति सूचितम् । तेन विषयवाक्येऽन्यनिवर्त्तकधर्मां द्रष्टृत्वादिधर्मबोधात् सूत्रस्य विषयवाक्यानुगुण्यं भवतीति भावः ।

काश ओतश्च प्रोतश्चेति" वाक्यशेषोऽस्याक्षरस्य ब्रह्मणोऽन्यत्वं व्यावर्त्तयति। तत्र द्रष्टृत्वादिचेतनधर्मेण प्रधानभावः सर्वैरदृष्टस्यैव सतः सर्वद्रष्टृत्वाद्युपदेशाच्च जीवभावो व्यावर्त्यते। यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत्स्वातिरिक्तस्य सर्वस्याधारभूतमेवमनेनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन्नान्यदतोऽस्ति द्रष्ट्रित्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावजीवात्मभावौ प्रतिषेधति तस्मादत्राक्षरशब्दवाच्यः परमात्मैवेति सिद्धम् ॥ १२ ॥

## ईक्षतिकर्म व्यपदेशात्सः । १ । ३ । १३ ॥

आथर्वणिकैः प्रश्नोपनिषद्येवं पठ्यते "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति। तत्र संशयः ध्यायतीक्षतिविषयः किं समष्टिजीवश्चतुर्मुखः, उत परमात्मेति, अपरब्रह्मशब्दवाच्यश्चतुर्मुख एव तयोर्विषय इति पूर्वः पक्षः। पूर्वस्मिन्नेकमात्रद्विमात्रप्रणवोपासकस्य मनुष्यलोकान्तरिक्षलोकाप्तिफलमुक्त्वा त्रिमात्रोपासकस्य फलत्वेन कथ्यमानोऽन्तरिक्षात्परः समष्टिजीवस्य हिरण्यगर्भस्य लोकः प्रत्येतव्यस्तल्लोकगतपुरुषेक्षणविषयस्तल्लोकाधिपतिः

---

उदाहृतवाक्ये प्रधानव्यावृत्तिसिद्धिं दर्शयति। सर्वैरिति। योगिभिः। सर्वैरदृष्टत्वादिमात्रप्रधानादीनामपि सम्भवतीति तद्व्यावृत्यर्थमदृष्टस्यैव सतस्सर्वस्याद्रष्टृत्वाद्युपदेशाच्चेत्युक्तम्। नान्यदित्यादिवाक्यस्य सूत्रविषयत्वं हृदि निधाय तस्यार्थमाह। यथैतदिति। देवदत्त एव पुरुषो नान्य इत्युक्ते न पुरुषमात्रनिषेधोऽपितु प्रस्तुततत्तुल्यपुरुषान्तरनिषेधस्स्यात् पुरुषान्तराणां प्रमाणसिद्धतया निषेद्धुमशक्यत्वात्। एवमिहापि द्रष्ट्राद्यन्तराणां प्रामाणिकत्वात् प्रकृततुल्यद्रष्ट्रादिनिषेधपरमिदं वाक्यमित्यर्थः। आधारभूतमिति। समस्तस्य प्रशासनेनाधारभूतमित्यर्थः। निषेधविषयं दर्शयति। एवमिति। एवं परमात्मनो नियन्तृतया आधारभूतद्रव्यान्तराभावात् अधिकनिषेधपरमिदं वाक्यं व्याख्यातम्। एवं वा एतस्येति पदं व्यतिरिक्तस्य, समस्तस्येतिपदं प्रकृतजगत्परम्। अक्षरादन्यत् समस्तजगतः प्रशासनेन धारकं तेनादृष्टं द्रष्टृ नास्तीत्यर्थः। अन्यस्य सद्भावं व्यावर्त्तयन्निति। सूत्रस्थैरन्याभावव्यावृत्तिशब्दैः श्रुतिवाक्यस्था अन्यदस्तिनेतिशब्दाः प्रत्यभिज्ञाप्यन्त इति भावः। अधिकरणार्थं निगमयति। तस्मादिति ॥ १२ ॥

विषयं दर्शयति। आथर्वणिकैरिति। य उपासक एकमात्रं ह्रस्वं दीर्घं त्रिमात्रं प्लुतमक्षरं प्रणवं तेन वाक्षरेण परमात्मानमभिध्यायति आभिमुख्येन ध्यायति स उपासकस्तेजोमण्डले सूर्ये ध्यानतः पादोदरः सर्पो यथा जीर्णया त्वचा विनिर्मुक्तो भवत्येवं पाप्मना विनिर्मुक्तः सन् भगवल्लोकं वैकुण्ठं सामभिर्गीतिप्रधानैर्मन्त्रैरुन्नीयते। यस्य कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते जीवघनशब्देन संसारमण्डलमुच्यते "मूर्तौ घन" इति काठिन्यशब्दितमूर्त्तौ घनशब्दस्य निपातितत्वात्। देहद्वारत्वादात्मनि काठिन्यस्य घनशब्दो देहिपर एव तस्मात्परः परिशुद्धात्मा तस्मादपि परभूतं पुरिशयं प्राणिनः सर्वगुहाशयस्येति सर्वेषु प्राणिष्वन्तरात्मतया शयानं "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधौच वर्तेते वासुदेवे सनातने" इति निरुपाधिकशब्दवाच्यं भगवन्तं वासुदेवमीक्षत इत्यर्थः। विचाराङ्गसंशयमाह। तत्रेति। विषयवाक्य इत्यर्थः। तयोः=श्रुत्योः। भूमान्तरिक्षक्रमप्राप्तश्चतुर्मुखलोक इत्याह। पूर्वस्मिन्निति। ततः किमित्यत आह। तल्लोकगतपुरुषेक्षणविषय इति जीवघनात्परात्पर इति निर्देशः कथमुपपद्यत इत्यत्राह। देहेन्द्रियादिभ्य इति। जीवघनशब्दयोः सामानाधिकरण्येनोपपद्यत इत्यर्थः।

स एवेति देहेन्द्रियादिभ्यः पराद् देहादिभिः सह घनीभूताद् व्यष्टिजीवाच्चल्लोकवासिसमष्टि-पुरुषस्य परत्वमप्युपपन्नम्, अतश्चतुर्मुख इति प्राप्ते—ब्रूमः । परमात्मैवेक्षतिकर्म । कुतः व्यपदेशात् "तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं परायणं चेति" परमात्मधर्माणामत्र व्यपदेशात् । यस्य हि कर्मकृतदेहादिसंयोगः स जीवघनः सच "यो ब्रह्माणं विदधाति पूर्वं"मित्यादिषु चतुर्मुखस्यापि श्रूयते नह्यन्तरिक्षात्परश्चतुर्मुखलोकः स्वर्गादीनां मध्ये सत्त्वात् । एवं च ब्रह्मैव लोक इति ब्रह्मलोकशब्दोऽपि निषादस्थपति-न्यायेन परमात्मलोकवाचकः ॥ १३ ॥

इतीक्षतिकर्माधिकरणम् ४ ।

## दहरउत्तरेभ्यः । १ । ३ । १४ ॥

इदमाम्नायते छन्दोगैः "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य"मिति । तत्र संशय्यते-किमिह दहरे हृत्पुण्डरीके श्रूयमाणो दहराकाशः भूताकाशः, उत जीवः, अथवा परमात्मेति कि तावत्प्राप्तं भूताकाश इति आकाशशब्दस्य तत्रैव प्रसिद्धेः । एकस्यैव "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्युपमानोपमेयभावस्तु बाह्याभ्यन्तरकल्पितभेद-कृतः । जीवो वा "अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थायेति" तस्याप्यत्र प्रतीतेः

---

सिद्धान्तयति । ब्रूम इति । हेत्वर्थं व्याचष्टे । तमोङ्कारेणेति । ऋग्भिरेतं यजुभिरन्तरिक्षं सामभिर्यत्कवयो वदन्तीति तमोङ्कारेणेत्यस्य पूर्वभागः । कवय उपासकास्तं "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्युक्तरीत्या सूरयो यं लोकं पश्यन्ति तमोङ्कारेणैवान्वेति गत्वाच शान्तमूर्मिषट्करहितं जरामरणशून्यमकुतोभयं सर्वकारणत्वेन सर्वोत्कृष्टं ब्रह्म च प्राप्नोतीति श्रुत्यर्थः । परमात्मपरत्वमेवास्य प्रकरणस्य नतु चतुर्मुखपरत्वमित्याशयः । कथं तस्य जीवघनशब्द-गृहीतत्वमित्यत्राह । यस्यहीति । कर्मकृतदेहं दर्शयति । सचेति । जीवघन इत्यर्थः । लोकक्रमप्रत्यभिज्ञानभङ्ग-स्यास्वरसत्वमाशङ्क्याह । नह्यन्तरिक्षादिति । निषादानां स्थपतिरिति तत्पुरुषसमासे पूर्वपदस्य तत्सम्बन्धिनि लक्षणाकल्पनामपेक्ष्य कर्मधारयपक्षस्य लघीयस्त्वं तथात्रापि ब्रह्मैव लोक इति कर्मधारयपक्षो युक्त इत्याह । एवञ्चेति । चतुर्मुखलोकस्य निराकृतत्वेचेत्यर्थः ॥ १३ ॥

इतीक्षतिकर्माधिकरणम् ।

अथ दहराधिकरणम् ।

विषयवाक्यमुदाहरति । इदमिति । अथेत्यारम्भे । अस्मिन् पुरे ब्रह्मणः पुरे शरीरे यत् दहरमल्पं पुण्डरीकं ह पुण्डरीकरूपं वेश्म, अस्मिन्नन्तः दहरः आकाशः भूताकाशोऽस्ति । किन्तत इत्यत आह । तस्मिन्निति । न घटादिवदस्यान्वेषणमप्रत्यक्षत्वादित्यतस्तदेव विवृणोति । तद्वावेति । वावेत्यवधारणे तदेव । विजिज्ञासितव्यं मीमांसितव्यमिति गुरुणोक्त इतिशेषः । तं गुरुं प्रति यदि शिष्या 'ब्रूयुः पृच्छेयुः यदिदमित्याद्युक्तानुवादः । यद्वाव विजिज्ञासितव्यं तदत्र हृत्पद्मगताकाशे किं विद्यते ब्रह्म च न सम्भवति तस्य व्याप्तस्य दहराकाशस्थत्वायोगादिति श्रुत्यर्थः । पूर्वाधिकरणे परात्परं पुरिशयं पुरुषमित्युपक्रम्य परात्मत्वं सिद्धान्तितम् । अत्र पुरिशयस्याकाशशब्दवा-च्यपरमात्मत्वं समर्थ्यते इतिपूर्वोत्तराधिकरणयोः सङ्गतिः । संशयं दर्शयति । तत्रेति । विषयवाक्य इत्यर्थः । पूर्व-पक्षमाह । भूताकाश इति । 'तत्रैव'भूताकाश एव । यदि दहरपदेन भूताकाश उच्यते तदा यावान्वाकाशस्तावानेव-

पुरस्वामित्वान्मितत्वप्रत्ययाच्च । प्रजापतिवाक्ये ऽपहतपाप्मत्वादिगुणकत्वावगमेश्चेति प्राप्ते-प्रचक्ष्महे । दहराकाशः परमात्मा । कुतः ? उत्तरेभ्य आत्मत्वापहतपाप्मत्वादिसत्यकामत्वसत्य-सङ्कल्पत्वादिहेतुभ्यः दहराकाशस्य सत्यसङ्कल्पत्वादिप्राप्तिश्रवणाच्च दहराकाशस्य भूता-काशत्वे हृदयावच्छेदनिबन्धेनापि नोपमानोपमेयभावः सम्भवति । हृदयावच्छिन्नस्य द्यावा-पृथिव्यादिसर्वाश्रयत्वानुपपत्तेः । नच दहराकाशस्य परमात्मपरत्वेऽपि बाह्याकाशोपमेयत्वा-संभवस्तस्य सर्वस्माज्ज्यायस्त्वश्रवणादितिवाच्यम् । बाह्याकाशोपमानस्य सर्वज्यायस्त्वप्रति-पादकवाक्यस्य च हृत्पुडरीकमध्यवर्त्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वात् । 'इषुवद्गच्छति सूर्य' इति वाक्यस्य गतिमान्द्यनिवृत्तिपरत्ववत् । ननु च "दहरोस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्त-दन्वेष्टव्य"मिति दहराकाशान्तर्वर्त्तिनस्तदन्यस्यान्वेष्टव्यतया प्रक्रान्तत्वान्न दहराकाशोऽप-हतपाप्मेत्यादिना वक्तुं शक्य इति चेत् । श्रुत्यैव तदन्वेष्टव्यमिति तच्छब्देन दहराकाशं

---

योऽन्तर्हृदय आकाश इत्युपमानोपमेयभावः कथमुपपद्यते विभन्ने वस्तुन्युपमानोपमेयभावस्य सर्वतन्त्रसिद्धत्वादित्यत्राह । एकस्यैवेति । आकाशस्यैकत्वेपि बाह्यत्वाभ्यन्तरत्वेनोपमानोपमेयतावच्छेदकेन रूपेण उपमा सम्भवत्येवेत्यर्थः । प्रत्यगात्मा वा दहराकाशइति पूर्वपक्षमाह । जीवोवेति । तत्र हेतुमाह । सम्प्रसादोजीवात्मा । तस्य=जीवस्य । अत्र=दहरवाक्ये । प्रतीतेरिति जीवस्य हीदं पुरं शरीरमिति तल्लिङ्गात्प्रतीयते जीवो दहर इत्यर्थः । ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावस्तस्मात् पुरस्वामित्वात् जीवस्य दहरत्वमाकाशोपमितत्वाच्चेत्याह । पुरस्वामित्वादिति । तस्य स्वकर्मणोपार्जितत्वात्तत्स्वामित्वमव्याहतमेवेत्यर्थः । स्वस्वरूपाविर्भावसमये प्रत्यगात्मन्यप्यपहतपाप्मत्वादिगुणानां योगश्च भवतीत्याह—प्रजापतिवाक्य इति । सिद्धान्तयति । प्रचक्ष्मह इति । उत्तरेभ्य इत्युक्ते चतुर्थ्यन्तत्वशङ्का माभूदिति पञ्चमीस्फुटीकरणाय हेतुभ्य इत्युक्तम् । उपमानोपमेयभावस्य हृदयावच्छेदनिबन्धनत्वमाशङ्क्य परिहरति । हृदयेत्या-दिना । तत्र हेतुमाह । हृदयावच्छिन्नस्येति । नह्यल्पस्य वस्तुनो निखिलप्रपञ्चाश्रयत्वं घटत इत्यर्थः । न्यूनपरि-माणस्येवाधिकपरिमाणस्यापि न मध्यमपरिमाणेन साधर्म्यं वक्तुं शक्यमित्याशङ्क्य परिहरति । नचेति । अन्यूनपरिमाणत्वमात्रं साधर्म्यमादायोपमानोपमेयभावः सम्भवति ज्यायस्त्वप्रतिपादकवाक्ये हृत्पुण्डरीकमध्य-वर्तित्वेन प्राप्तं यदल्पत्वं तन्निवर्त्तते इत्याह । बाह्याकाशोपमानस्येति । उक्तार्थं दृष्टान्तेन द्रढयति । इषुवद्गच्छ-तीति । अधिकवेगवति गभस्तिमिति तद्वचनं गतिमान्द्यनिवृत्तिपरमित्यर्थः । "दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्त-स्तदन्वेष्टव्यमि"त्युपक्रमवाक्यं ततो यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशं किं तदत्र वर्त्तते यदन्वेष्टव्य"मिति द्वितीयवाक्यं पुनः स ब्रूयात् "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति मध्यगतं वाक्यम् । "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोक"इत्यादिकमन्तिमवाक्यम् । अन्तिमवाक्ये दहराकाशो न निर्दिष्टः । "यावान्वा अयमाकाश"इति मध्यगतवाक्यस्थादाकाश एव प्रथमनिर्दिष्टत्वात् सन्निहितत्वाच्च अन्तिम-वाक्यगतेन एष इतिपदेन परामृश्यते तथाप्युपक्रमवाक्ये तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यन्वेष्टव्यतया प्राधान्येनावगमात् "आत्मा वारे द्रष्टव्यः सोऽन्वेष्टव्यः" इत्यात्मनोऽन्वेष्टव्यत्वनिश्चयादिहाप्यन्वेष्टव्यस्य तदन्तर्वर्तिनः, आत्मत्वावगमात् एष आत्मा" इति तदन्तर्वर्तिनोऽन्वेष्टव्यस्यात्मनः परामर्शः । अत आत्माधिकरणतयाऽवगतत्वेन तद्व्यतिरिक्तत्वाद्युपपत्त्य-नुरोधेन भूताकाश एवायं दहराकाश इत्याशङ्कते । नन्विति । समाधत्ते । श्रुत्यैव तदन्वेष्टव्यमिति । इदमत्राकूतम् । तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यत्रैव दहराकाशातिरिक्तमन्वेष्टव्यम् तच्च श्रुत्यन्तरपर्य्यालोचनया आत्मरूपमित्यवगतं तथापि किन्तत्र विद्यते इति तदात्मवस्तु किं प्रकारकमितिप्रश्नः यावानायमाकाशस्तावानेषोऽन्तर्हृदयाकाश इति । अस्य चायमर्थः । यावानयमाकाशोऽतिविपुलो वर्त्तते एष आकाशस्सर्वोऽप्यन्तर्हृदये । हृदयशब्दः परमात्मपरः । "सवा एष आत्मा हृदि" तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयमित्यत्रैव श्रवणात् । ततश्च हृदये ब्रह्मणि अन्तःसर्वो-

तदन्तर्वर्त्तिगुणगणं च परामृश्य तदुभयस्यान्वेष्टव्यत्वेनोपदिश्यमानत्वात्। तथाहि—उपास्यतया समीपस्थस्य ब्रह्मणः पुरत्वेनोपासकशरीरं तन्मध्ये तदवयवभूतं पुण्डरीकाकारमणुपरिमाणं हृदयं च ब्रह्मणो वेश्मत्वेन निर्दिश्य तत्स्थं परमात्मानं सूक्ष्मतया ध्येयं दहराकाशशब्देनोक्त्वा तदन्तर्वर्त्तिचापहतपाप्मत्वादिकल्याणगुणगणं ध्येयतयोपदिशति श्रुतिः। कथमेतदवगम्यते इति चेत् "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति दहराकाशस्य वियदुपमेयत्वमुक्त्वा "उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते" इत्यादिना सर्वजगदाधारतया निर्दिष्टस्य तस्यैव यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहित" मिति अस्मिन्नित्यनेन परामर्शात् तस्यैव "नास्य जरयैतज्जीर्यती" त्यादिना देहधर्मैरलिप्तत्वं "एतत्सत्यं ब्रह्मपुर"मित्यनेन निखिलविश्वाधारत्वं "अस्मिन्कामाः समाहिता" इति कामशब्देन कल्याणगुणाधारत्वं चाभिधाय "एष आत्माऽपहतपाप्मे" त्यादिना दहराकाशस्यैवात्मत्वकाम्यभूतकल्याणगुणवत्त्वादिस्फुटीकृत्य तं तद्गुणांश्चाविदुषामन्तवत्फलप्राप्तिमसत्यसङ्कल्पत्वं चोक्त्वा "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानिति" वाक्यशेषस्त-

---

प्याकांशो वर्त्तते द्यावापृथिव्यादिकश्च एतत्सत्यं ब्रह्मपुरमिति पूर्ववाक्ये अन्तर्वर्त्तिब्रह्मैव प्राधान्येन प्रथमनिर्दिष्टत्वात् सन्निहितत्वाच्च। एष आत्मेत्यत्रैतच्छब्देन तस्यैव परामर्शसम्भवादिति। ब्रह्मपुरशब्दार्थमाह। उपास्यतयेति। न केवलं ब्रह्मणः सर्वव्यापित्वाच्छरीरेण साधारणं सम्बन्धमात्रम् अपीतूपासनास्थानहृदयाधारत्वात् सम्बन्धविशेषश्च विद्यते ब्रह्मशब्दश्च परस्मिन् मुख्यः अतो ब्रह्मपुरं शरीरमित्यर्थः। सत्यकामत्वापहतपाप्मत्वसत्यसङ्कल्पत्वादिकान् स्वाभाविकगुणानाह। तदन्तर्वर्तिचापहतपाप्मत्वादिति। तदन्तवर्ति=ब्रह्मान्तर्वर्ति। श्रुतिरिति। "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्यादिका। तदन्वेष्टव्यमिति तच्छब्देनात्मनः परामर्शस्तस्यैवान्वेष्टव्यत्वेन प्रतिपत्तिः नतु तदन्तर्वर्तिगुणानां, तस्मात्तच्छब्देनोभयोरन्वेष्टव्यतया विधाने प्रमाणं वक्तव्यमिति पृच्छति। कथमेतदिति। समादधाति यावानिति। हृदयपुण्डरीकमध्यवर्त्याकाशशब्दनिर्दिष्टः परमात्मा भूताकाशवद्विपुल इत्युपमानोपमेय इत्यर्थः। उभयेति। द्यावापृथिव्यादिशब्दोपलक्षितं भोग्यभोगस्थानभोगोपकरणमग्निसूर्यादिशब्दोपलक्षितो भोक्तृवर्गश्च समाश्रित इत्यर्थः। तस्यैव=दहराकाशात्मकपरमात्मनः। यच्चेहास्ति यच्च नास्तीति अस्योपासकस्येहलोके यद्भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद्भोग्यजातमस्मिन् दहराकाशे समाहितमित्यर्थः। तस्यैव=परमात्मनः। नास्येति। अस्य शरीरस्य। जरत् तद्ब्रह्म न जीर्यति अस्य वधेन न हन्यते एतद्ब्रह्म सत्यं नित्यमचिन्त्यशक्त्याश्रयं यत इत्यर्थः। ब्रह्मपूरमिति। भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्त्तमानमेतद्दहराकाशाख्यं ब्रह्म नतु घटाकाशादिवत्केवलमवकाश आत्मन उपकारकः यथा पुरं भोग्यभोगस्थानादीनां स्वतएवाधारभूतमित्यर्थः। मध्ये प्रसक्तमाक्षेपं परिहृत्य किन्तत्र विद्यत इत्यन्तर्वर्तिविशेषजिज्ञासां शमयति। अस्मिन्निति। काम्यन्त इति कामाः कल्याणगुणाः अस्मिन् दहराकाशे परमात्मनि समाहिता इत्यर्थः। को दहराकाशः स च कैः कामैर्युक्त इत्यत आह। एष इति। य उपक्रमवाक्ये निर्दिष्टो मध्यवाक्ये च स एव एतच्छब्देन परमात्मा परामृश्यत इत्यर्थः। स च स्वतोऽपहतपाप्मा अतएव तत्तत्कार्यंजरादिकं नास्त्येत्याह। विजर इति। विगता जिघित्सा जग्धुमिच्छा यस्य सोयं विजिघित्सः प्राकृतबुभुक्षाशून्यः। तत्रापि हेतुमाह। सत्यकाम इति। यदिष्टं तस्य तत्स्वतोभवेदित्यर्थः। अप्रतिहतसङ्कल्प इति यावत्। 'यथा ह्येवेह प्रजा अन्वाविशन्ति' यथानुशासनं यं यमन्तकामा भवन्ति यं जनपदं यं क्षेत्रभोगं तमेवोपजीवन्ति तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति' इति श्रुत्यर्थं संक्षिपति। तद्गुणानामिति। अथ ये इहात्मानमिति। ये मुमुक्षव आत्मानमपहतपाप्मत्वादींश्च काम्य-

मेव दहराकाशशब्दनिर्दिष्टमात्मानं यद्गुणांश्च विदुषां तत्प्रसादात्सर्वकामप्राप्तिं सत्यसङ्कल्पतां च दर्शयतीति ॥ १४ ॥

इतश्च दहराकाशः परमात्मा—

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च । १ । ३ । १५ ॥

"तद्यथा हिरण्यनिधिं क्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इत्यत्रैतमिति प्रकृतं दहरं निर्दिश्य तत्राहरहः सर्वक्षेत्रज्ञानां गत्या गन्तव्यस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशेन च दहराकाशं ब्रह्मैवेत्यवगम्यते। तथाहि दृष्टं तथैवान्यत्र "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति, स त आगम्य न विदुः सत आगच्छामह" इति। परमात्मन्येव सर्वप्राणिनामहरहः सुषुप्तिकाले गमनं दृष्टं तथैव "एष ब्रह्मलोकः सम्राडिति होवाचे"ति ब्रह्मलोकशब्दोऽपि परमात्मनि दृष्टः। एतदेव च तत्र सर्वप्रजानामहरहर्गमनं ब्रह्मैव लोक इति समासेन सदहरसमानाधिकरणतया निर्दिष्टो ब्रह्मलोकशब्दश्च दहराकाशस्य परमब्रह्मत्वे लिङ्गं गमकम् ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । १ । ३ । १६ ॥

---

मानान् कल्याणगुणानुपास्य परलोकं व्रजन्ति ते सर्वेषु लोकेषु कामचारा भवन्तीत्यर्थः ॥ १४ ॥

हृत्पुण्डरीके यदि दहराकाशः परमात्मा तिष्ठति चेत्प्रतिदिनं तत्र गच्छद्भिरस्माभिः कुतो नोपलभ्यतेऽतः स तत्र नास्तीत्याशङ्क्यां सदृष्टान्तं परिहरति। तद्यथेति। तत् निदर्शनं यथा हिरण्यनिधिं निहितमक्षेत्रज्ञाः निधानक्षेत्रमजानन्तः उपर्युपरि सञ्चरन्तो न विदुर्न जानीयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं ब्रह्मैव लोकं सर्वाश्रयत्वाल्लोकं दहराकाशं परमात्मानं न विदन्ति। अनुपलम्भे निमित्तमाह। अनृतेनेति। अनृतेनाज्ञानेन हि यस्मात् प्रत्यूढाः आच्छादिता इति श्रुत्यर्थः। अहरहर्गच्छन्त्य इति सुषुप्तौ गमनं विवक्षितम्। तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थितिः। निर्गमनं पृथक्प्रतिपत्त्यर्हतापत्तिः। परं ब्रह्मैवेत्यवगम्यत इति श्रुतिषु परमात्मधर्माणां सत्कामत्वादीनां ब्रह्मण्यन्वयदर्शनात् प्रत्यगात्मबोधकवाक्येष्वदर्शनात् तत्रासम्भावितत्वाद्वा गतिशब्दयोः परमात्मसाधकयोस्सत्त्वाच्च दहराकाशः परमात्मेत्यर्थः। 'तथाहि दृष्टमि'ति सूत्रभागं परमात्मपरसच्छब्दभूतवाक्येष्वन्वयदर्शनभूतपरं व्याचष्टे। तथाहीति। गतेः श्रुत्यन्तरप्रसिद्धिं दर्शयति। एवमेवेति। हेसोम्य इमाः सर्वाः प्रजाः सुषुप्तिकाले सति ब्रह्मणि सम्पद्य प्राप्य न विदुर्न जानन्ति सति सम्पद्यामह इति सतः ब्रह्मण आगम्य पृथक्स्थित्यर्हतां प्राप्य सतः ब्रह्मणः आगच्छामह इति न विदुः न जानन्तीत्यर्थः। श्रुत्यर्थं संक्षिप्य दर्शयति। परमात्मन्येवेति। शब्दस्यान्यत्र प्रसिद्धिं दर्शयति। तथेति। नच चतुर्मुखलोकपरतया प्रसिद्धे ब्रह्मलोकशब्दे नरपतिराजकुमारादिशब्देष्विव निषादस्थपतिन्यायानवतारात् तद्व्यावृत्तिसिद्ध्यर्थं परारीतिरेवाश्रयणीयेति वाच्यम्। "एष ब्रह्मलोकः सम्राट्" इति ब्रह्मलोकशब्दस्य ब्रह्मण्यपि प्रसिद्धतया तन्न्यायानवतारशङ्काया अनवतारादित्याह। एष ब्रह्मलोक इति। निषादस्थपतिरित्यत्र षष्ठीसमासपक्षे निषादसम्बन्धविशिष्टोऽभिधेयः। कर्मधारयपक्षे निषादत्वविशिष्टः। तत्र षष्ठ्या अश्रवणात् निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। नचेदं युक्तम्। श्रौतार्थपरिग्रहे विरोधाभावात्। नचाग्निविद्याराहित्यं दोषः। द्रव्यवदेतदुपयोग्यग्निविद्ययोरपि कथञ्चिदार्जनस्य विध्यनुमितिसम्भवात्। तस्मात्कर्मधारयपक्ष एव न्याय्यस्तथा प्रकृतेऽपि ब्रह्मैव लोक इति कर्मधारयपक्ष आदरणीयः ॥ १५ ॥

"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"ति प्रकृतस्य दहरस्यैव जगद्विधरणश्रवणाच्च धृतिर्हि जगद्विधरणं सा च परस्य महिमरूपा अस्य धृत्याख्यस्य महिम्नोऽस्मिन्दहराकाशे "एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एष सेतुर्विधरण एषां लोकानामसम्भेदाये"त्यादिश्रुतिषु उपलब्धेरयं दहराकाशः परमात्मा ॥ १६ ॥

## प्रसिद्धेश्च । १ । ३ । १७ ॥

"आकाशो ह वै नामरूपयोर्निर्वहिता, यद्येष आकाश आनन्दो न स्यात्, आकाशादेव समुत्पद्यन्ते" इत्यादौ परमात्मन्येवाकाशशब्दस्य प्रसिद्धेश्च परमेश्वरधर्मविशेषितेनाकाशशब्देनैव भूताकाशशङ्का निराकृता ॥ १७ ॥

## इतरपरामर्शात्स इति चेन्नासम्भवात् । १ । ३ । १८ ॥

ननु यथा वाक्यशेषबलेन दहराकाशस्य परमात्मपरत्वमुक्तं तथा "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मे"ति दहरवाक्यमध्य इतरस्य जीवस्यापि परामर्शात् आकाश शब्दस्यापि योगेन जीवे वृत्तिसम्भवाज्जीव एव दहरः स्यादिति चेन्न, कुतः ? असम्भवात् पूर्वोक्ताऽपहतपाप्मत्वादिगुणानां जीवेऽसम्भवात् ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु । १ । ३ । १९ ॥

दहरविद्यात उत्तरस्माज्जीवपरात्प्रजापतिवाक्याज्जीवेऽप्यपहतपाप्मत्वादिगुणाष्टकमवगम्यते । अतः स एव दहराकाश इति निश्चीयते इति चेदिति तत्राह । आविर्भूतस्वरूपस्त्विति । तुशब्दः शङ्कानिरासार्थः । नेत्यनुवर्त्तते । नोत्तरस्मादपि वाक्यादिह जीवाशङ्का कार्या यतस्तत्र प्रजापतिवाक्येऽनादिकालप्रवृत्तपुण्यपापकर्ममूलजाग्रदाद्यवस्थाभिस्तिरोहितगुणाष्टकस्य पर-

---

अथ य आत्मेति । उक्तलक्षण आत्मा सेतुरिव धारकः । किमर्थं ससेतुर्विधृतिरित्यत्राह । एषां लोकानामसंभेदायेति । असम्भेदोऽसङ्करः । सूत्रार्थं विवृणोति । प्रकृतस्येति । एतस्य वेति श्रुत्यर्थः प्रागुपदर्शितः ॥ १६ ॥

प्रसिद्धिप्राचुर्य्यं हि भूताकाश इत्यत्राह । यद्येष इति । परमेश्वरधर्मविशेषितेनेति । परमेश्वरस्य धर्मा अपहतपाप्मत्वसत्यकामत्वसत्यसङ्कल्पत्वादयः तेन विशेषितेन ॥ १७ ॥

सूत्रस्य शङ्कापरभागं विवृणोति । नन्वित्यादिना । "दहरोऽस्मिन्नन्तर आकाश" इति वाक्यान्तरं "यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदयाकाश उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहृते" इति वाक्यशेषान्निश्चीयते दहराकाशस्य ब्रह्मपरत्वं नतु भूताकाशपरत्वं खस्मिन्नुपमानोपमेयभावासम्भवात् तथा प्रकृतेऽपि 'अथ य एष' इति वाक्यशेषात् प्रत्यगात्मनो दहराकाशत्वं वक्तुं शक्यम् । उक्तवाक्यशेषे परब्रह्मणो भिन्नस्य प्रत्यगात्मनः परामर्शादिति शङ्कितुराशयः । परिहरति । नेति । १८ ॥

प्रजापतिवाक्यमिदम् । "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पस्सोऽन्वेष्टव्यः स विजिज्ञासितव्यः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच । तद्धोभये देवा अनुबुबुधिरे कर्णाकर्णिकतया श्रुतवन्तः । ते होचुः हन्त तमात्मानमन्विष्य सर्वांश्च

मात्मोपासाजन्यतदुपसम्पत्त्याविर्भूतस्वरूपस्य जीवस्यापहतपाप्मत्वादिगुणवत्तयोपदेशो दहरवाक्ये तु नित्याविर्भूतस्वरूपगुणकस्य दहराकाशशब्दितपरमात्मनोऽपहतपाप्मत्वादिगुणवत्तयोपदेश इति। किञ्चाविर्भूतस्वरूस्यापि जीवस्य सेतुत्वसर्वजगद्विधरणत्वचेतनाचेतननियन्तृत्वासम्भवादपि न दहराकाशो जीवः शङ्क्यः ॥ १९ ॥

यद्येवं तर्हि किमर्थं दहरवाक्ये जीवपरामर्श इति चेत्तत्राह—

## अन्यार्थश्च परामर्शः। १। ३। २०॥

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इतिश्रुतेः पूर्वमविद्यातिरोहितापहतपाप्मत्वादिगुणस्वरूपस्य जीवस्य परंज्योतिःशब्दितदहराकाशं प्राप्य स्वस्वरूपाविर्भावोभवतीति दहराकाशस्य जीवस्वरूपाविर्भावहेतुत्वप्रदर्शनार्थः प्रजापतिवाक्योक्तजीवपरामर्शः ॥२०॥

## अल्पश्रुतेरिति चेत्तदुक्तम्। १। ३। २१॥

दहरोऽस्मिन्नित्यल्पत्वश्रुतेरणुपरिमाणकजीव एव दहरवाक्य उक्त इति चेत्तत्र यद्वक्तव्यं तत् "निचाय्यत्वादेवं व्योमवदि" त्यनेनैवोक्तम् ॥ २१ ॥

इतश्च जीवो न दहराकाश इत्याह—

## अनुकृतेस्तस्य च। १। ३। २२॥

चो नियोगे अनुकृतिस्तदनुकरणं तत्साम्यापत्तिरिति यावत्। तस्य दहराकाशस्य

---

लोकानाप्नोति सर्वांश्च कामानिति। समाधत्ते इतिचेत्तत्राह इति सूत्रं व्याचष्टे। आविर्भूतस्वरूपस्त्विति। आविर्भूतस्वरूपस्य प्रजापतिवाक्योक्तत्वात् दहराकाशस्य स्वतएवापहतपाप्मत्वादिप्रतिपादनात्तच्छरीरान्तःस्थितस्यैवापहतपाप्मत्वादिगुणाष्टकप्रतिपादनान्मुक्तेष्वसम्भवादिति सर्वलोकविधारणादिश्रुतेश्च दहराकाशः परं ब्रह्मैवेत्यर्थः ॥ १९ ॥

उत्तरसूत्रमवतारयितुमाह यद्येवमिति। किमर्थमिति। दहरविद्यायाम् 'अथ एष सम्प्रसाद'इति प्रत्यगात्मप्रस्तावो न पृथग्रूपेण जिज्ञासितः तथा श्रवणाभावात् नहि दहरविद्यायामुपासनाविध्यन्तरमस्ति येन तदुपासनाङ्गता तस्य भवेत् अतस्तत्प्रतिपादकवाक्यस्यान्यथानुपपत्त्या दहरोपासनाविषयत्वेनैव जीवपरामर्शस्तथासति दहराकाशो जीव इति प्रष्टुराशयः। परमात्मोपासने परस्य परमात्मनस्स्वरूपं वेद्यं तच्च स्वस्वरूपमज्ञाय कथं ज्ञातुं शक्यते। ब्रह्मणः प्रेप्सितव्यत्वे उपासकेन प्रत्यगात्मना स्वस्वरूपमवश्यं ज्ञातव्यं तच्च ज्ञानं ज्योतिश्शब्दोदितं दहराकाशं परमात्मानं प्राप्य भवितुमर्हति तस्यानुग्रहादेवापहतपाप्मत्वादिगुणाष्टकयोगिनः प्रागनादिकर्मात्मकानाद्यविद्यापटलतिरोहितस्वस्वरूपस्याविर्भावो भवतीति बोधनायैव जीवात्मज्ञानोपयोग इत्यर्थः ॥ २० ॥

पूर्वसूत्रेणोपसंहारगतहेतुः प्रत्युक्तः। अथोपक्रमगतं हेतुं प्रतिवक्ति अल्पश्रुतेरितिचेत्तदुक्तम्। अर्भकौकस्त्वात्तद्व्यपदेशाच्चेत्यादिसूत्रस्य विषयवाक्ये सर्वं खल्विदमित्यादौ "अणीयान्, व्रीहेर्यवाद्वेति"वाक्यं नोपक्रमस्थम्। उपक्रमे हि तत्र सर्वात्मत्वमवगतमाकाशात्मत्वञ्च उपसंहारे ज्यायोऽवगतम्। अतोऽल्पत्वपरिमाणश्रुतिस्तदनुरोधेन वर्णितेतियुक्तम्। दहरविद्यायान्तूपक्रम एवाल्पत्वं श्रुतं तदनुरोधेन "यावान्वा अयमि'त्यादिकं नेयम्। उपसंहारे च जीवपरामर्शस्तद्युत्तम्भक इत्यधिका शङ्का। आकाशोपमानत्वसर्वाधारत्वनिरतिशयभोग्यत्वनिरुपाधिकगुणाष्टकगतिशब्दविधारणत्वफल-

परमात्मनोऽनुकरणाज्जीवोऽपहतपाप्मत्वादिगुणकः, दहराकाशस्तु नित्याविर्भूततद्गुणाष्टकः अतः प्रजापतिनिगदितोऽनुकर्त्ता जीवो न दहरशब्दोदितानुकार्यब्रह्म भवितुमर्हतीति ॥ २२ ॥

## अपि तु स्मर्यते । १ । ३ । २३ ॥

जीवस्य मुक्तदशायां परमात्मसाम्यापत्तिः स्मर्यते । "मम साधर्म्यमागता" इति । केचित्तु "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति वाक्ये "यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति" स किन्तेजो ? धातुः कश्चिदुत परमेश्वर ? इति सन्दिह्य तेजःस्वभावानामेव सूर्यादीनां भानप्रतिषेधात्तत्सजातीयः कश्चित्तेजोधातुरिति पूर्वपक्षयित्वा प्राज्ञमात्मानं भान्तं सर्वेषां सूर्यादीनामनुभानात् । प्राज्ञ एव स इति सिद्धान्तेन सूत्रद्वयमिदमधिकरणान्तरम्प्रवृत्तमिति मन्यन्ते तत्तु "ज्योतिश्चरणाभिधानादि" त्यादिष्वेव परमात्मनो भारूपत्वावगतेः "अदृश्यत्वादिगुणको धर्मोक्तेः" "द्युभ्वाद्यायतनमि" त्यधिकरणद्वयेन तत्प्रकरणस्य परमात्मपरत्वप्रतिपादनाच्च पूर्वपक्षानुत्थानात्सूत्राक्षरवैरूप्याचायुक्तमित्यन्ये वदन्ति ॥ २३ ॥

अथ प्रमिताधिकरणम् ।

## शब्दादेव प्रमितः । १ । ३ । २४ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः, अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ट" इति कठवल्लीपाठे अंगुष्ठप्रमि-

---

विशेषपरमहावाक्यस्वारस्य बाध्यमित्यधिकपरिहारः । उपसंहारे जीवपरामर्शात् परमात्मनिर्देशमिश्रिततया परिहाराच्च प्राणस्थानुपगमादित्यधिकरणाद्वैषम्यम् । एवमुपक्रमोपसंहारगतहेतुनिरसनानन्तरं वक्ष्यमाणयोः सूत्रयोः परमप्रकृतार्थेन सङ्गतिः । नन्वत्रान्तरार्थविशेषेण परमप्रकृतदहराकाशस्यार्थाविरोधेन जीवादन्यत्वं स्फुटमिति भावः ॥ २१ । २२ ॥

"अनुकृतेस्तस्यच, अपितु स्मर्यते"इति सूत्रद्वयेनानुकृत्यधिकरणं पृथक्तया व्यवस्थापितं परैस्तमनूद्य दूषयति । केचिदित्यादिना । मुण्डकवाक्यमुदाहरति । तमेव भान्तमिति । सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकमित्यर्थः । मुख्यसम्भवे विवक्षानुपपत्तेर्मुख्यानुमानलिङ्गात् सर्वभासकः परमात्मा स्वप्रकाशोऽत्र ग्राह्य इति सिद्धान्तमाह । प्राज्ञमात्मानमिति । प्राज्ञत्वं स्वप्रकाशकत्वं भारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वशङ्कानिवृत्त्यर्थमधिकरणारम्भो युक्तो इत्यत्राह ज्योतिश्चरणाभिधानादिदिष्वपीति । एकप्रकरणस्यानेकाधिकरणनिरूप्यत्वमधिकशङ्कायां सत्यामुचितम् अत्र तदभावादयुक्तत्वमित्यभिप्रायः । हेत्वन्तरमाह । सूत्राक्षरेति । अनुकृतिरनुमानमितिपरैरुक्तं, तदयुक्तम्, करोतिमात्योरेकार्थत्वासम्भवात् । तस्यचेति श्रुतिप्रतीकोपादनमित्युक्तं तदप्ययुक्तं, यदैव विद्ययेतिहीतिवदति करणाभावात् ! तस्यानुकृतेरित्यन्वयस्वारसिकेऽपि तत्प्रहाणेनार्थवर्णनञ्च क्लिष्टम् ॥ २३ ॥

अथ प्रमिताधिकरणम् ।

कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुषः उपासकशरीरेऽङ्गुष्ठपरिमाणस्सन्नास्त इत्यर्थः । ज्योतिरिवाधूमक इति । शुष्केन्धनानलवत् प्रकाशमान इत्यर्थः । परमात्मनोऽङ्गुष्ठपरिमितत्वानुपपत्तेः जीवस्य सर्वेशानत्वानुपपत्तेश्चेति संशयमाह । अङ्गुष्ठपरिमित इति । प्राणाधिपस्य कर्मवश्यत्वस्याङ्गुष्ठमात्रत्वंमुख्यं श्रुतं ननु परमात्मनः अतो जीवस्य बुद्धिस्थात् शरीरेन्द्रियभोग्योपकरणानामीशानत्वाच्च प्रत्यगात्मा अङ्गुष्ठपरिमित इति पूर्वपक्षमाह ।

तो जीवः ? उत परमात्मेति सन्देहे "प्राणाधिपः सञ्चरति स्वकर्मभिरंगुष्ठमात्रो रवितुल्यरूप-इति। "श्वेताश्वतरश्रवणात् अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमोबला" दिति वनपर्वस्मरणाच्च जीव-स्यैवांगुष्ठमात्रत्वसम्भवात्सएवेति प्राप्ते राद्धान्तः। अंगुष्ठप्रमितः परमात्मैव। कुतः ? "शब्दा-देव। "ईशानो भूतभव्यस्ये"ति तद्वाचिशब्दादेव। नचेदृशमैश्वर्य्यं कर्मतन्त्रे जीवे सम्भवति॥२४॥

कथं तर्ह्यनवच्छिन्ने परमात्मनि प्रमितत्वश्रुतिरित्यत्राह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात्। १। ३। २५॥

तुर्नियोगे। अपरिच्छिन्नस्यापि तस्योपासनार्थमुपासकहृदि गतस्य तद्धृदयापेक्षयं वेद-मंगुष्ठपरिमाणत्वम्। ननु प्राणिभेदेन हृदयमानभेदात्तदपेक्षयापि कथमङ्गुष्ठमात्रत्वमिति चेत्तत्राह मनुष्येति सामान्यतः प्रवृत्तमपि शास्त्रं मनुष्याणामेवोपासकत्वार्थित्वादिसम्भवात् तानेवाधिकरोति तद्धृदयापेक्षयेदमुक्तम्। तेनगजादिहृदयानामनङ्गुष्ठमात्रत्वेऽप्यविरोधः जीवस्याप्यंगुष्ठमात्रत्वं तावद्धृदयान्तर्वर्तित्वात्तदपेक्षमेव न स्वरूपेण तस्याणुत्वश्रवणादिति स्थितम्॥ २५॥

## तदुपर्यपि बादरायणः सम्भवात्। १। ३। २६॥

शास्त्रस्य मनुष्याधिकारित्वात्तेषां ब्रह्मोपासनसम्भवेन तद्धृदयापेक्षयांगुष्ठमात्रश्रुतिर्ब्रह्मणि सङ्गतार्थेत्युक्तं तत्प्रसंगेन देवानामपि ब्रह्मोपासनेऽधिकारोऽस्ति नवेति संशये तत्रेन्द्रादीनां मन्त्रमूर्त्तित्वेन देहादिमत्त्वाभावे सामर्थ्याद्यभावान्न देवादिषु ब्रह्मोपासनं सम्भव-

---

प्राणाधिप इत्यादिना। स्मृतावप्यङ्गुष्ठमात्रत्वेन प्रतिपादितजीवस्यैव ग्रहणमित्याह। अङ्गुष्ठमात्रं पुरुषमिति। समाधत्ते—राद्धान्त इति। श्रूयते च श्वेताश्वतरे भगवतोऽङ्गुष्ठपरिमितत्वम्। 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्त" इति। तैत्तिरीयेच 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि"ति। अन्तरात्मत्वं मोक्षप्रदत्वं सर्वस्य जगत ईशत्वमपि श्रुतम्। नह्येते धर्माः कर्माधीने प्रत्यगात्मनि कथमपि सम्भवन्ति अतोऽङ्गुष्ठपरिमितः परमात्मैवेति सिद्धमित्यर्थः॥ २४॥

उत्तरसूत्रमवतारयितुं शङ्कते। कथमिति। सूत्रार्थं विवृणोति। तुर्नियोग इति। तस्य=परमात्मनः। सूत्रावयवव्यावर्त्त्यांशङ्कामाह। नन्विति। तदुत्तरांशेन तामपाकरोति। तत्राह इति। स्वर्गकामादिवाक्ये स्वर्गादि-कामिन एवाविशेषेणाधिकारित्वं नतु मनुष्यस्येत्याशङ्क्याह। शास्त्रमिति। अंगुष्ठमात्रस्यास्वारस्यमुभयत्र तुल्यम् को भेदः परमात्मपरिग्रहे इत्यत्राह जीवस्येति। अङ्गुष्ठमात्रपरिमितस्य जीवत्वपक्षेऽङ्गुष्ठप्रमितेशानशब्दयोरुभयोरस्वारस्यम् परमात्मपक्षेऽङ्गुष्ठपरिमितशब्दस्यैकस्यैवास्वारस्यमिति भावः॥ २५॥

स्मृतस्योपेक्षानर्हत्वं प्रसङ्गस्तत्सङ्गतिं प्रदर्शयन्नाह। शास्त्रस्येति। मनुष्याधिकारादित्यत्र मनुष्यपदेन तिर्यङ्मात्रं व्यावर्तितम्। उत देवादिरपीति बुभुत्सया सङ्गतिरित्यर्थः। संशयं दर्शयति। देवादीनामिति। यदि मन्त्रार्थवादेषु देवादीनां विग्रहवत्त्वं प्रतिपादितं स्यात्तदा सामर्थ्याद्देवादीनां ब्रह्मोपासनायामधिकारो भवेन्नत्वेवमिति पूर्व-पक्षमाह। तत्रेन्द्रादीनामिति। तथाच देवानां विग्रहस्यासत्वात्सामर्थ्याभावेन तदनधिकार इत्यर्थः। समादधाति। अभिधीयत इति। सूत्राक्षराणि व्याकरोति। तदित्यादिना। अर्थित्वमुपपादयति। स्वर्गादिभोगानामिति।

तीति प्राप्ते तत् ब्रह्मोपासनं मनुष्योपरिवर्तमानेषु देवादिष्वपि सम्भवतीति भगवान् बादरायणो मन्यते कुतः सम्भावात् स्वर्गादिभोगानामनित्यत्वसातिशयत्वादिपर्यालोचनया मोक्षस्य च निरतिशयत्वपरमानन्दत्वशाश्वतत्वश्रवणेन तेष्वर्थित्वसम्भवः "यथेह कर्म्मचितो लोकः क्षीयते तन्महिमानमिति वीतशोकः" नारायणे सायुज्यमाप्नोतीत्या" दिश्रुतेः "न केवलं द्विजश्रेष्ठ नरकं दुःखपद्धतिः। स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" रितिस्मृतेः। किञ्च नामरूपव्याकरणश्रुतेर्मन्त्रार्थवादेतिहासपुराणादिभ्यश्च तेषां विग्रहादिमत्वसम्भवः अन्तर्धानादिशक्तिमत्वाच्च न तत्प्रत्यक्षं नच मन्त्रादिजन्यज्ञानस्य मिथ्यात्वं वक्तुं शक्यम्? बाधकप्रत्यक्षादिप्रमाणान्तराभावात्। किञ्च "विश्वानि देव वयुनानि विद्वानि" त्यादिमन्त्रैस्तेषु विग्रहवत्त्वसम्भवः प्रजापतिविद्यायामिन्द्रविरोचनयोर्जिज्ञासुत्वश्रवणादपि "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेमृत" मित्याद्यधिकारविधायकप्रमाणसद्भावाच्च तत्राप्यंगुष्ठमात्रश्रवणं स्वांगुष्ठापेक्षया न विरुद्धमिति ॥ २६ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् । १ । ३ । २७ ॥

देवादीनां विग्रहवत्त्वे कर्म्मणि यागादावेकस्य युगपदनेकयागेषु सन्निधानानुपपत्तेर्विरोधः स्यादिति चेन्न, कुतः अनेकप्रतिपत्तेर्दर्शनात् शक्तिमत्सु सौभर्य्यादिषु युगपदनेकशरीरप्रतिपत्तिदर्शनात्। योगशास्त्रे च "आत्मनो वै शरीराणि बहूनि भरतर्षभ! योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत्। संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिवे"ति ॥ २७ ॥

---

प्रमाणाकाङ्क्षायामाह। यथेहेति। स्मृतिं प्रमाणयति। नकेवलमिति। देवतानामर्थित्वे विग्रहवत्त्वं प्रमाणेन समर्थयति। किञ्चेत्यादिना। "सदेव सोम्येदमग्र आसीत्, तदैक्षत बहुस्यां प्रजायेय, तत्तेजोऽसृजत, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः, नारायणाद्ब्रह्मा जायते इत्यादयः शतशः श्रुतयस्सन्ति ताभिश्चतुर्विधं भूतजातं तत्तत्कर्मानुकूलं शरीरं सिद्धयतीत्यर्थः। देवादीनां विग्रहवत्त्वे कुतो न तेषामध्यक्षतेत्यत आह। अन्तर्धानादिशक्तिमत्वाच्चेति। यदि बाधकं प्रत्यक्षादिप्रमाणं स्यात्तदा वाक्यजन्यज्ञानस्य विपर्ययत्वं शङ्क्येत नच प्रकृते तथात्वमस्तीत्याशङ्क्य परिहरति। नचेति। देवतानां विग्रहवत्त्वे श्रुतिं प्रमाणयति। किञ्चेति। तद्यो देवानामिति। देवानां मध्ये यो ब्रह्म प्रत्यबुद्ध्यत स एव तदभवत् सर्वमभवत्सर्वशब्दवाच्यपरमात्मसंदर्शनाविर्भाववानभवति सर्वभूतपरमात्मकोऽभवत् सर्वैरैकात्म्यं प्राप्तवानितियावत्। ऐकात्म्यस्य नित्यप्राप्तस्य प्राप्यत्वासम्भवात्तत्साक्षात्कारफलमिति फलतीति श्रुत्यर्थः ॥ २६ ॥

यदि देवतानां विग्रहवत्त्वमभ्युपेयते तदैकस्य विग्रहस्य युगपदनेककर्मसु सन्निधानाभावेन कर्माङ्गत्वं नोपपद्यते। देवानामिति सूत्रस्य पूर्वपक्षपरभागं व्याचष्टे। देवादीनामिति। विरोध इति। "कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवता पूर्वं परिगृह्णाति स एव नश्वोभूते यजत" इत्यादिवाक्यैर्देवतानां यज्ञे आगमनं प्रामाणिकं तद्यौगपद्ये विरुद्ध्येत शरीराधीनत्वादागमनस्येत्यर्थः। परिहरति। नेति। अनेकशरीरप्रतिपत्त्या देवानां युगपत्सन्निधानान्न कर्मणि विरोध इत्यर्थः। उक्तार्थं भारतवचसा प्रमाणयति। आत्मनोवैति। योग्यानुपलम्भस्तु मन्त्रौषधादिभिर्मनुष्याणामिव शक्तिविशेषैर्देवादीनामपि सम्भवतीति न विरोध इति भावः ॥ २७ ॥

विरोध इत्यनुवर्त्तते। देवादीनां विग्रहवत्त्वेऽप्युक्तहेतोर्न कर्म्मणि विरोधः वैदिकशब्दे तु स स्यादेव, विग्रहयोगे हि सावयवत्वेनास्मदादिवत्तेषामपि जननमरणयोगादनित्यत्वम् दुर्वारं ततश्चेन्द्राद्यर्थोत्पत्तेः पूर्वत्र तद्विनाशात्परत्रचेन्द्रादिवाचकवैदिकशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यात्। तथात्वे च नित्यः शब्दो नित्येनार्थेन नित्यसम्बन्धवत्तया प्रतीयते इति वैदिके शब्दे यन्नित्यत्वं पूर्वतन्त्र उक्तं तद्विरुद्धं स्यादिति चेन्न, "कुतोऽतः प्रभवात्" अतोवैदिकादेव नित्यतत्तदाकृतिवाचकादिन्द्रादिशब्दादिन्द्राद्यर्थस्य प्रभवात्। प्रजापतिर्हि पूर्वदेवादिव्यक्तौ विनष्टायां वैदिकाद्वाच्याकृतिविशेषवाचकाच्छब्दाद्वाच्याकृतिविशेषं मनसिकृत्य तत्तदाकारसपरं देवादिकं कुलालादिरिव घटादिकं सृजतीति वैदिकशब्दस्य न कश्चिद्विरोधः। नहि चैत्रदेवदत्तडित्थादिशब्दवत्केवलव्यक्तिवचनाः अर्थानन्तरभाविनः साङ्केतिकाः देवादिशब्दाः प्रवृत्ता अपितु गवादिशब्दवद्व्यक्तिप्रभवहेतुत्वेन प्रागेव विद्यमानाः स्थूलसूक्ष्मभावेनानुस्यूतव्यक्त्यविनाभूताकृतिवाचकाः। जातिमतां हि व्यक्तय उत्पद्यन्ते न जातयो जातिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिर्व्यक्तीनामानन्त्यात्सम्बन्धग्रहणानुपपत्तेः। एवं च देवादिव्यक्तिषूत्पद्यमानास्वपि गवादिशब्देष्विवाकृतीनां नित्यत्वान्नित्य एव तेषां वाचकभावः। इन्द्रादिव्यक्तेरेकत्वेऽप्यतीतानागतव्यक्तिभेदेन जात्युपपत्तेः। वैदिकात्तत्तच्छब्दात्तत्तदर्थविशेषं स्मृत्वा सृजतीति कुतोऽवगम्यते? "प्रत्यक्षानुमानाभ्यां" प्रत्यक्षं श्रुतिर्निरपेक्षत्वात्। अनुमीयमानश्रुतिसापेक्षत्वादनुमानं स्मृतिः। श्रुतिस्तावत् "वेदेन नामरूपे व्याकरोत् सता सती प्रजापतिः" तथा "स भूरितिव्याहरत् स भूमिमसृजत स भुव इतिव्याहरत् सोऽन्तरिक्षमसृजत" इत्यादिः। स्मृतिरपि "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥ नामरूपं च भूतानां कर्मणां च प्रवर्तनं। वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥ सर्वेषां तु

---

सूत्रस्थशब्दपदं विशिनष्टि। वैदिकशब्द इति। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इतिजैमिनीये सूत्रे औत्पत्तिकशब्देन सर्वेषां शब्दानां तदर्थानां तदुभयसम्बन्धानां नित्यत्वमभिहितम्। वेदस्य प्रामाण्यमन्यानपेक्षितं व्यवस्थापितं तच्च देवतानां विग्रहवत्त्वे व्याहन्येत देवशरीराणां सावयवत्वेनानित्यत्वात्ततः पूर्वमिन्द्रादिशब्दो न स्वार्थेन सम्बद्ध आसीत् स्वार्थस्यैवाभावात् ततश्चोत्पन्ने वस्विन्द्रादिशरीरे वस्वादिसम्बन्धः प्रादुर्भवन् देवदत्तादिशब्दसम्बन्धवत्पुरुषबुद्धिप्रभव इति तत्पूर्वको वाक्यार्थप्रत्ययोऽपि पुरुषबुद्ध्यधीनः स्यात् पुरुषबुद्धिश्च मानान्तरधीजन्मेति मानान्तरापेक्षत्वे वेदस्य स्वतःप्रामाण्यं व्याहन्येतेति शङ्काग्रन्थार्थः। परिहरति नेति। हेतुःथापिकामाकाङ्क्षां दर्शयति। कुतइति। हेत्वर्थं विवृणोति। प्रभवादिति। तदेव दृष्टान्तेन द्रढयति। कुलालादिरिवघटादिकमिति। यदीन्द्रादिशब्दानां व्यक्तिरर्थः स्यात्तदा तस्यामुत्पन्नायां सत्यामिन्द्रादिशब्दानां समयग्रहः कर्त्तुं शक्यते नतु प्राक् स्वार्थस्यैवाभावादिन्द्रादिशब्दानामर्थशून्यत्वरूपमनित्यत्वं प्रसज्येत नत्वेवमस्माभिरङ्गीक्रियते किन्तु बुद्धिस्था वैदिका इन्द्रादिशब्दास्तत्तत्तदाकृतिस्मारकतया तत्तदाकारभिन्नदेवादिव्यक्तिं प्रति कारणीभूताः, ते च शब्दाः व्यक्त्यविनाभूतजातौ सङ्केतिताः नतु व्यक्तौ तेषामानन्त्याच्च व्यभिचाराच्च तत्र सङ्केतः कर्त्तुं न युज्यत इत्याह। नहीति। व्यक्तिप्रभवत्वेनेत्यस्यार्थं विवृणोति। जातिमतां हि व्यक्तय उत्पद्यन्त इति। सर्वासु व्यक्तिषु सङ्केतग्रहो व्यवहाराङ्गम् उत यस्यां कस्याञ्चिद्व्यक्ताविति विकल्प्य आद्यपक्षमपाकरोति। व्यक्तीनामिति। तथा तत्र शक्तिग्रहासम्भवः सामान्यलक्षणा तु निरस्ता एव तन्त्रान्तर-

स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे" इत्यादिकां वाचकशब्दपूर्विकां सृष्टिं दर्शयति ॥ २८ ॥

## अतएव नित्यत्वम् । १ । ३ । २९ ॥

अत एव प्रजापतिसृष्टेः शब्दपूर्वकत्वादेव शब्दमयस्य वेदस्य नित्यत्वम्। विश्वामित्रेण प्रोक्तं वैश्वामित्रं सूक्तम्। कठेन प्रोक्तं काठकमित्यादिनिर्वचनं तु तत्तदुच्चारितमात्रविषयम् प्रजापतिर्हि प्रलयानन्तरं "मन्त्रकृतो वृणीते विश्वामित्रस्य सूक्तं भवती"त्यादिवेदस्थविश्वामित्रादिशब्दैस्तत्तदाकृतिशक्त्यादिकं विचिन्त्य तत्तदाकारांस्तत्तच्छक्तियुक्तांस्तान् निर्माय तत्तन्मन्त्रादिप्रकाशने विनियुङ्क्ते। तेऽपि तदाहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्वविश्वामित्रादिप्रकाशितान्वेदैकदेशभूतमन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान्पठन्तीति तेषां मन्त्रादिकृत्वेऽपि वेदनित्यत्वमुपपन्नम् ॥ २९ ॥

स्यादेवं नैमित्तिकप्रलये प्राकृतप्रलये तु प्रजापत्याद्यव्याकृतान्तसर्वतत्त्वस्याव्याकृतपरिणामरूपशब्दमयवेदस्य च विनाशोक्ते रव्याकृतसृष्ट्यावृत्तौ कथं वेदस्य नित्यत्व ! मिति चेत्तत्राह—

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ।१।३।३०॥

---

इति भावः। नापिद्वितीय इति। व्यभिचारप्रसङ्गादितिस्फुटत्वाद्ग्रन्थाद्बहिरेव दूषितः। फलितार्थमाह। एवञ्चेति। इन्द्रादिव्यक्तीनामैक्यात्कथमिन्द्रत्वं जातिरित्यत्राह। इन्द्रादिव्यक्तेरिति। सूत्रस्याग्रिमभागमवतारयितुं शङ्कते। वैदिकेति। सूत्रार्थं विवृणोति। प्रत्यक्षमिति। श्रुतिमुदाहरति। श्रुतिरिति। सतासती=चिदचितीरूपे व्याकरोत् विविधमकरोदित्यर्थः। स्मृतिमुदाहरति। स्मृतिरपीति ॥ २८ ॥

सूत्रार्थं विवृणोति। अतएवेति। वैदिकविश्वामित्रादिशब्दानां तदुच्चारितमात्रेऽर्थे तात्पर्यमित्याह। विश्वामित्रेणेति। यद्यर्थवादानां प्रतीयमानेऽर्थे तात्पर्यमस्तीतिचेत् तदा "मन्त्रकृते"त्यादिवाक्येऽपि मन्त्रकृत्वे तात्पर्यसम्भवादनित्यत्वमित्यत्राह। प्रजापतीति। इन्द्रादिशब्दानामाकृतिवाचित्वात्तच्छब्देन तत्तदर्थस्मृतिपूर्वकं तत्तदर्थसृष्ट्यादिकं निर्मिमत इत्यर्थः। एतेनोक्तशङ्का परिहृता भवति। मन्त्रकृतत्वं नामानधीत्यैव मन्त्राणामस्खलितक्रमस्वरवर्णतया दर्शनम् तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वसृष्टैस्तत्तन्नामरूपभागिभिः प्रवाहपरम्परया आगतैर्वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकृतत्वाविरोध इतिभावः। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्राणामनुष्ठानं दर्शयति "यो ह वा अविदितार्षेयच्छन्दादैवतेन मन्त्रेण यजति याजयति वा ध्यायति वा स्थाणुं वर्च्छति गर्त्तं वा प्रपद्यते प्रवामीयते पापीयान् भवति यातयामान्यस्य च्छन्दांसि भवन्ति तस्मादेतानि मन्त्रे विद्यादिति"। शौनकादिभ्यश्च स्मर्य्यते "दशत्रय्योमधुच्छन्दःप्रभृतिर्दृष्टा" इति। उक्तञ्च भगवता व्यासेन युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा इति। एवमादिचात्र प्रमाणं द्रष्टव्यम् ॥ २९ ॥

'शब्द इति चेन्नातः प्रभवादि"तिसूत्राभिहितं शब्दनित्यत्वमाक्षिपन्नुत्तरसूत्रमवतारयति। स्यादेवमिति। उपपद्यतां नैमित्तिकप्रलये वेदशब्दात्प्राक्तनेन्द्रादिस्मरणेन देवादीनां सृष्टिः महाप्रलये तु तत्तदर्थस्मृतिपूर्वकजगत्कर्त्तुश्चतु-

---

१—यतोऽगृहीतसङ्केतगोपिण्ड इव घटादेरपि गोपदात् प्रतीतिः प्रसक्ता अगृहीतसङ्केतस्य तुल्यत्वात् नच तद्विषयकबुद्धौ सामान्यतो गृहीतसङ्केतपदज्ञानं कारणमित्यङ्गीकारान्नोक्तदोषपदमादधातीति वाच्यम्। यत्र न सङ्केतग्रहस्तस्यापि प्रतीतिरिति व्यभिचारात् व्यक्तौ सङ्केतस्यानुपपत्तेः।

चशब्दः शङ्कानिरासार्थः। आवृत्तावपि महाप्रलयावसाने प्रथमसृष्टावपि न विरोधः। कुतः? समाननामरूपत्वात् कल्पादौ सृज्यमानपदार्थानां कल्पान्तरगतीतैः पदार्थैस्तुल्याह्वासंस्थानादिमत्त्वात्। अयम्भावः—प्राकृतप्रलये भगवान् श्रीपुरुषोत्तमः भोक्तृभोग्यजातं सर्वं विश्वं संहृत्य सूक्ष्मतया स्वस्मिन् संस्थाप्य सशक्तिकस्तूष्णीं भूत्वास्ते स्म। तदा वेदास्तद्वाच्यास्तत्तदाकृतयश्च नित्यास्तस्मिन्नेकीभूय तिष्ठन्ति। प्रलयावसाने च सर्वज्ञो भगवान् पूर्वसंस्थानं विश्वं विचिन्तयन् बहुस्यामिति सङ्कल्पपूर्वकं स्वस्मिन्सूक्ष्मशक्त्यात्मना प्रलीनं भोक्तृभोग्यजातं विभज्य महदादिचतुर्मुखपर्यन्तमण्डं पूर्ववत्सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थायुक्तान्प्रकटीकृत्य ब्रह्मणे तान्मनसोपदिश्य पूर्ववद्वाद्याकारविश्वसृष्टौ तं नियुज्य स्वयं च तदन्तरात्मतयाऽवतिष्ठते। ब्रह्मापि तदनुग्रहलब्धवीर्यस्तैर्वेदशब्दैस्तत्तदाकृतीर्विमृश्य कुलालः पूर्वतुल्यान्घटादीनिव देवादीन्सृजतीति। एतदेव हि वेदस्यापौरुषेयत्वं नित्यत्वं च। यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वमिति। कुत इदमवगम्यत इति चेत्तत्राह "दर्शनात्स्मृतेश्च" दर्शनं श्रुतिस्तावत्। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय" दित्यादिका। स्मृतिरपि "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत। तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः॥ ब्रह्मोत्पन्नः स.. तेनोक्तः प्रजाः सृज महामते। यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये दृश्यन्ते तानितान्येव तथा भावायुगादिषु। ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः॥ शर्वर्यन्ते प्रसूतानां तान्येवैभ्योददात्यजः। तथाभिमानिनोऽती-

---

मुखस्य तत्प्रवर्त्यस्य वेदात्मकशब्दस्य च विनष्टत्वान्न शब्दस्य नित्यत्वमुपपादयितुं शक्यते तस्माच्चाश्रयणीयं प्रपञ्चप्रवाहस्यानादित्वमिति शङ्काव्युदासार्थमिदं सूत्रमित्यर्थः। सूत्राक्षराणि व्याकरोति। तुशब्द इति। आह्वा=नाम। संस्थानं=रूपम्। महाप्रलयावसाने नोपपद्यते समाननामरूपत्वं जगतः तत्तच्छब्दस्मृतिपूर्वकतत्तदर्थस्रष्टुरभावादित्यत्राह। अयंभाव इति। भगवान्=विचित्रज्ञानैश्वर्यादिसम्पन्नः। भगवत्पुरुषोत्तमशब्दाभ्यां "सर्वव्यापी च भगवान् महान् प्रभुर्वै पुरुषः" इत्यादिश्वेताश्वतरवाक्यं स्मारितम्। चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासायाह। स्वयमपीति। "तवान्तरात्मा मम च येचान्ये देहिसंज्ञिनाः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्" इति चतुर्मुखवचनम्। "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इतिभगवद्वचनम्। 'तदनु प्रविश्य' इतिसामान्यविषयां श्रुतिञ्च प्रमाणमभिप्रेत्याह। तदन्तरात्मतयेति। शब्दस्योत्पत्तिविनाशाभ्युपगमेऽपि कथं वेदस्य नित्यत्वं सिद्ध्यतीत्यत्राह। एतदेवहीति। पूर्वपूर्वोच्चारणक्रमविशेषो यादृशस्तादृशेनैव क्रमेणोत्तरोत्तरमुच्चार्यत्वं नित्यत्वं वाच्यमेतद्‌द्व्यातिरिक्तनित्यत्वस्य दुर्वचत्वात्। पदवर्णयोर्नित्यत्वेन यदि वेदस्य नित्यत्वं तदाऽऽधुनिककविरचितानां वाक्यानां नित्यत्वमापद्येत। नच वर्णानुपूर्व्या नित्यत्वं वाच्यम्, येषां मते सर्गप्रलयौ नस्तस्तेषां मते वर्णानां विभुत्वाभ्युपगमात् न देशतः कालतश्चानुपूर्वीच सम्भवति नित्यत्वाभ्युपगमाच्च नाप्युच्चारणगतक्रमस्य नित्यत्वाद्वेदस्य नित्यत्वम्, उच्चारणस्योत्पत्तिविनाशस्य प्रत्यक्षसिद्धत्वात्। क्रमस्य नित्यत्वं सुतरामसिद्धं तस्मादस्मदुक्तप्रकार एव साधीयान्। एतदभिप्रायेणैवैतदेत्युक्तम्। सूत्रस्य शेषभागं व्याख्यातुकामः जिज्ञासते. कुत इति। तस्य व्याख्यानं श्रुतिरिति। दर्शनमिति व्याख्येयपदम्। युगपत्सृष्टौ भगवतो यथापूर्ववेदसम्प्रदायप्रवर्त्तकत्वे च श्रुतिस्मृती दर्शयति। यो ब्रह्माणमित्यादिना। उदाहृतश्रुतिवाक्येषु सर्वेषु चतुर्मुखस्य भगवता स्रष्टृत्वं दृश्यते वेदोपदेशस्तु केषुचिन्न दृश्यते

तास्तुल्यास्ते साम्प्रतैरिह ॥ देवा देवैरतीतैर्हि रूपैर्नामभिरेव चे"त्येवमादिका । अतो देवादीनामप्यर्थित्वादिसम्भवात् ब्रह्मविद्याधिकारे न कश्चिद्विरोधः ॥३०॥ इति देवताधिकरणम् ॥

अथ मध्वधिकरणम् । ८ ।

## मध्वादिष्वसम्भवादनाधिकारं जैमिनिः ॥ १ । ३ । ३१ ॥

देवादीनामपि ब्रह्मविद्यायामधिकारः प्रसाधितः । इदानीं "असौ वा आदित्यो देवमधु"त्यादिना छान्दोग्योक्तमध्वादिषु विद्यासु देवा एवोपास्यास्तासु तेषामधिकारोऽस्ति नवेति ? संशये जैमिनिराचार्यस्त्वनधिकारं मन्यते । कुतः "असम्भवात्" आदित्यवस्वादीनामुपास्यान्तर्गतानामुपासकत्वासम्भवात् प्राप्तृत्वादेव वसुत्वादेः प्राप्यत्वासम्भवाच्च । नहि वस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति । मधुविद्याफलस्य वसुत्वादिप्राप्तेः सिद्धत्वेनोर्थित्वासम्भवाच ॥ ३१ ॥

## ज्योतिषि भावाच्च । १ । ३ । ३२ ॥

"तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति श्रुतेर्ज्योतिषि परस्मिन्ब्रह्मणि देवानामुपासकत्वेन भावाच्च न मधुविद्यास्वधिकारः । ब्रह्मोपासनस्य देवमनुष्योभयसाधारणत्वेऽपि ज्योतिषां ज्योतिः परं ब्रह्म देवा उपासते इति विशिष्य कथनं वस्वादिदेवानां ब्रह्मेतरोपासननिवृत्तिं द्योतयति ॥ ३२ ॥

---

तत्र अनुक्रमन्यतो ग्राह्यमिति न्यायात् वेदोपदेशोऽपि सृष्ट्युपयोगित्वात्सिद्ध्यतीतिभावः । अधिकरणार्थमुपसंहरति । अत इति ॥ ३० ॥ इति देवताधिकरणम् ॥

अथ मध्वधिकरणम्

उपासनासामान्ये देवानामधिकारः पूर्वाधिकरणे समर्थितः सम्प्रति उपासनाविशेषे तेषामधिकारोऽस्ति नवेति विवेचयितुमधिकरणान्तरमारभ्यते । इममर्थमाह । देवादीनामिति । असौ वा "आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः । तस्य ये प्राञ्चो रश्मयस्ता एव स्वमधुना प्रांच ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः" इत्यादिकमुदाहृतं छान्दोग्ये तृतीयाध्याये । अस्यार्थः--देवमधु देवानां मोदनात् मध्विव मधु । नन्वादित्यस्य कथं मधुत्वमित्यत आह । द्यौरिवेति । तस्य मधुनो द्यौरेव द्युलोक एव तिरश्चीनवंशः । अन्तरीक्षं मध्वपूपम् । मध्वाश्रयापूपोहि तिरश्चीनवंशलग्नस्सन् लम्बते एवमन्तरीक्षमपि द्युलोकलग्नं लम्बत इव भात्यतो मध्वपूपत्वमिति । अर्थित्वाद्यसम्भवब्रह्मोपनिषदत्वश्रवणाभ्यां संशयोत्थानमित्यतः संशयं दर्शयति । देवा एवोपास्या इति । मधुविद्यायां वस्वादिदेवतामात्रमुपास्यम्, उत तदवश्यं ब्रह्म इति किं वसुत्वमात्रं ब्रह्मविद्याफलम्, उत ब्रह्मप्राप्तिपर्यन्तवसुत्वमित्यभिप्रायः । नहि वस्वादीनामेवोपास्यत्वं वस्वादिन्यस्यैव प्राप्यत्वञ्च कुत्रापि श्रूयते एकस्मिन् धर्मिणि कर्मकर्तृत्वयोर्विरोधात्, नच कर्मकर्तृविरोधात् अर्थित्वसामर्थ्ययोरभावाच्च देवादीनां मधुविद्यायामधिकारत्वं सिद्ध्यतीतिभावः ॥ ३१ ॥

विषयवाक्यमुदाहरति । ते देवा इति । 'ज्योतिषां' प्रकाशानां मध्ये ज्योतिः स्वप्रकाशरूपम् तं परं ब्रह्म देवा उपासत इत्यर्थः । सूत्रार्थं व्याकरोति । 'ज्योतिषीति । ततः किमित्यत्राह 'देवमनुष्येति' । देवा एव ज्योतिरुपासते देवा ज्योतिरेवोपासत इति वा । तत्र नाद्यः मनुष्याणामनधिकारप्रसंगात् । द्वितीयपक्ष एव साधुः ज्योतिरेवोपास्य इति । अन्यथा विशेषवचनं व्यर्थं स्यादितिभावः । ३२ ॥

## भावं तु बादरायणोऽस्ति हि । १ । ३ ३३ ॥

तुः पूर्वपक्षव्यावर्त्तकः । मध्वाद्युपासनास्वपि वस्वादीनां भावमधिकारसद्भावं भगवान् बादरायणो मन्यते । हि यत आदित्यादीनामपि सतामिह स्वान्तर्यामिब्रह्मोपासनेन कल्पान्तरेऽप्यादित्यवसुत्वादिप्राप्तिपूर्वकब्रह्मलिप्सासम्भवोऽस्ति । तथाचात्र कार्यकारणोभयावस्थब्रह्मोपासनस्य विधीयमानत्वाद्वस्वादित्यादिशब्दानां स्वान्तर्यामिब्रह्मपर्यन्तत्वेन वस्वादीनामेवोपास्यत्वं, प्राप्यत्वं, च सम्भवतीति । "य एतां ब्रह्मोपनिषदं वेदे"त्युपसंहारस्य वस्वादिशब्दानां ब्रह्मपर्यन्तत्वे मानत्वात् । एवं च मध्वाद्युपासनास्वपि ब्रह्मण एवोपास्यत्वात् । "यदेवज्योतिषां ज्योतिरि"तिश्रुतिरपि सङ्गता । नच मधुविद्याफलस्य वसुत्वादिप्राप्तेः सिद्धत्वेनार्थित्वासम्भवः । लोके धनिनामेव सतां जन्मान्तरे धनादिप्रेप्सादर्शनात् ॥३३॥ इति मध्वधिकरणम् ॥

अथ अपशूद्राधिकरणम्

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । १ । ३ । ३४ ॥

श्रुतौ देवशब्दोक्त्या देवानामप्यधिकारो यथोक्तस्तथा "अहहहारेत्वा शूद्र ! आजहारेमाः शूद्र"इत्यादौ शूद्रशब्दोक्त्या शूद्रस्याप्यधिकारः सम्भाव्यते, अर्थित्वसामर्थ्ययोः सम्भवात् । तस्य ब्रह्मस्वरूपतदुपासनप्रकारज्ञानं चेतिहासपुराणादितः स्यात् । "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः"इति तस्यापि तच्छ्रवणानुज्ञानात् । अनग्नित्वं तु तस्याग्निसाध्ययज्ञादिकर्मानधिकारमात्रे हेतुर्नविद्याधिकारनिषेधपरम् । विदुरादिषु ब्रह्मविद्यादर्शनाच्चेति प्राप्ते, उच्यते ।

---

एवं जैमिनेर्मतमनूद्य तन्निराचिकीर्षुर्भगवान् बादरायणः स्वमतमाह । एवमिति । सूत्राक्षराणि व्याकरोति । तुशब्दः पूर्वपक्षव्यावर्तक इति । अर्थित्वसामर्थ्याभावं दर्शयति । आदित्यादीनामपीति । स्वान्तर्यामिब्रह्मोपासनेन कर्मकर्तृविरोधः परिहृतः । उपासनाफलस्यैकविषयत्वे सति कर्मकर्तृविरोधाभावः प्राप्तफलत्वाभावश्चेति कथन्तानिवृत्तये आह । तथाचेति । असौ आदित्यो देवमध्वित्यादिना आदित्यादिविग्रहावच्छिन्नचैतन्यान्तर्यामि ब्रह्म कार्यावस्थं तदुपासनं विहितम् । अथ तत उर्ध्व उदेत्येत्यादिवचसा सृष्ट्युत्पत्तेः प्रागादित्यादिनामरूपरहितप्रत्यगात्मनोऽन्तर्यामि ब्रह्मकारणावस्थं तदुपासनं विधीयत इत्यर्थः । कथं वस्वादिशब्दानां ब्रह्मपर्यन्तत्वमित्यत्राह । य एनामिति । ब्रह्मोपनिषदं वेद=ब्रह्मविद्यां वेद ब्रह्मोपासनं करोतीत्यर्थः । ओदनपाकं पचतीतिवत् । वस्वादित्वस्य प्राप्तत्वान्नार्थित्वसम्भव इत्याशङ्क्य परिहरति । नचेति ॥ ३३ ॥ इतिमध्वधिकरणम् ॥

अथ अपशूद्राधिकरणम्

"तद्यो यो देवानां प्रत्यबुध्यते"ति श्रुतौ देवशब्दप्रयोगेण देवानामर्थित्वसामर्थ्यसम्भवाद् ब्रह्मविद्यायामधिकारो पूर्वाधिकरणे समर्थितस्तथा छान्दोग्ये मुमुक्षौ जानश्रुतौ शूद्रशब्दश्रवणात् ब्रह्मविद्यायां शूद्रस्याप्यधिकारः प्रसज्येत तस्याप्यर्थित्वसामर्थ्ययोः सत्त्वादितिसङ्गत्योत्तरसूत्रमवतारयति । श्रुतौ देवशब्दोक्त्येति । वेदाध्ययनसाध्यवेदजन्यज्ञानाभावात् ब्रह्मस्वरूपमविदुषश्शूद्रस्य कथं ब्रह्मजिज्ञासायामधिकारस्सम्भवतीत्यत्राह । तस्येति । शूद्रस्येत्यर्थः । "यथा अन्नाद्यकामं याजये"दित्यत्र याजनस्य रागप्राप्तत्वान्न विधेयता किन्तु यजनस्यैव तथा श्रावयेदित्यत्रापि श्रावणस्य रागप्राप्तत्वात् श्रवण एव विधिः अतो न श्रवणस्यार्थसिद्धत्वं तस्य सिद्धत्वे सामर्थ्याद्विचारोऽपि सिद्ध इतिभावः । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इतिवचसा शूद्रस्य वैदिककर्मण्यनधिकारोऽभिहितः तत्कथं ब्रह्मविद्यायां

न शूद्रस्तस्यामधिक्रियते ब्रह्मस्वरूपतदुपासनोपायज्ञानाभावेनासमर्थत्वात् ब्रह्मोपासनस्य मनोवृत्तिमात्रनिर्वर्त्यत्वेऽपि ब्रह्मस्वरूपादिज्ञानस्योपनयनपूर्वकवेदाध्ययनजन्यत्वात् शूद्रस्योपनयनविध्यविषयत्वात् सामर्थ्याभावेऽर्थित्वस्याकिञ्चित्करत्वात्। कर्मविधेरिवोपासनविधीनामपि त्रैवर्णिकविषयत्वात् कर्मस्विव विद्यास्वपि निषेधस्य तुल्यत्वम्। इतिहासादीनामपि स्वाध्यायसिद्धज्ञानोपबृंहकत्वान्न ततोऽप्यस्य ज्ञानलाभः। श्रवणानुज्ञानं तु पापनाशादिफलार्थं नोपासनार्थम्। विदुरादीनां तु जन्मान्तरप्राप्तज्ञानाप्रमोषाद्ज्ञानवत्त्वं प्रारब्धवशाच्चेदृशजन्मेति। यत्तु सम्वर्गविद्यायां शूद्रशब्दोक्त्या शूद्राधिकारः सम्भाव्यते, इति तन्नेत्याह, शुगिति। हि यतोऽस्य जानश्रुतेः पौत्रायणस्याब्रह्मयज्ञतया "कम्वरएनमेतत्सन्तं सयुग्वान-

---

तस्याधिकारः सम्भाव्येतेत्यत्राह। अनर्थित्वत्वान्त्विति। हेत्वन्तरमाह। विदुरादिष्विति। सिद्धान्तयति इति प्राप्त इति। पश्चात् सूत्रं व्याख्यातुकामः पूर्वं पूर्वपक्षहेतूनपाकरोति। न शूद्रइति। तस्य सामर्थ्याभावमुपपादयति। ब्रह्मस्वरूपेति। तथाचाध्ययनविधिबलादध्ययनलब्धानुष्ठेयार्थज्ञानवतां पुंसां वैदिककर्मानुष्ठाने यथाऽधिकारस्तथा अधीतसाङ्गवेदस्त्रैवर्णिकः विदितवेदार्थः जिज्ञासितधर्मस्वरूपस्तदनुष्ठानसम्पन्नः ब्रह्मस्वरूपतदुपासनायामधिक्रियते शूद्रस्यालौकिकसामर्थ्याभावान्न तस्य तत्राधिकारित्वमित्यर्थः। "वर्षासु रथकारोऽग्नीनादधीत" इति विधिबलेन यथा रथकारादीनां तत्तत्कर्माधिकारस्सिद्धस्तथा ब्रह्मोपासनविधिना शूद्रस्याप्यधिकारः कल्पनीय इत्यत्राह। कर्मविधेरिवेति। "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्" इत्युपनयनविधौ त्रैवर्णिकाधिकारित्वश्रवणात् त्रयाणां वर्णानामुपनयनं सिद्धयति तथाध्ययनविधाविवोपासनाविधावपि त्रैवर्णिकानामधिकारः अतो न शूद्रस्य वेदाध्ययनमस्ति तस्योपनयनपूर्वकत्वात् शूद्रस्योपनयनसंस्कारो वेदे निषिद्ध अतो न तस्योपासनाविधिविषयत्वं यथा रथकारादीनां विधिश्रवणात्तदपेक्षितमन्त्रभागाध्ययनाधिकारमात्रं कल्प्यम्। इह तु विशेषतः न शूद्रमुद्दिश्योपसना विधीयते येन तदधिकारः कल्पनीयः। तस्मान्नास्योपासनायामधिकार इतिभावः। सम्भवत्येव शूद्रस्यापीतिहासपुराणद्वारकं ज्ञानमिति प्रागुक्तं तदप्यपाकरोति। इतिहासादीनामिति। "इतिहासपुराणाभ्यां वेदं समुपबृंहये"दिति वेदार्थविशदीकारहेतुतयैव तदवगमविधानादङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादिलब्धवेदार्थज्ञानस्य शास्त्रविरोधाद्दृष्टसामर्थ्यवैकल्यञ्च अतस्तद्विरोधस्य न्याय्यत्वाच्छ्रावणविध्यैवयर्थ्याच्च शूद्रस्य श्रवणानुज्ञानं पुण्यकथावगतिद्वारेण पापक्षयफलार्थं नतूपासनार्थमित्यर्थः। यदि वेदवचनार्थज्ञानमुपासनां प्रत्यङ्गं कथं तर्हि विदुरादीनां सम्भव इत्यत आह। विदुरादीनामिति। नहि शूद्रजन्मन्येव विदुरादीनां ब्रह्मोपासने प्रवृत्तिः किन्तु प्राक्तनजन्मसिद्धैव। प्राक्तनजन्मसिद्ध तेषां ज्ञानं पश्चादिह जन्मनि न प्रभ्रष्टसत्ताकमिति तदनुवृत्तिर्निरावाधवेत्यर्थः। अथ प्रधानयुक्तिपरिहारपरं सूत्रमवतारयितुमाह। यत्त्विति। सूत्रार्थं विवृणोति। हि यत इति। जानश्रुतिर्नाम राज्यपालकः श्रद्धया बहुप्रदः सर्वासु दिक्षु ग्रामनगरमार्गारण्यतीर्थादिषु पान्थानामन्नोदकशयनाच्छादनादिभोग्यजातसम्पूर्णानावसथान् माययांचक्रे तस्य धार्मिकप्रवरस्य कर्मभिः क्षीणदुरितस्य ब्रह्म विविदिषामुत्पादयितुं केचन महर्षयो हंसरूपमास्थाय निशायां हर्म्ये शयानस्य तस्योपरि पङ्क्तिमावध्याजग्मुः। तेषामग्रसर हंसं भोभो भल्लाक्ष भल्लाक्षेतिविपरीतलक्षणया मन्दलोचनेति सम्भ्रमेण द्विवारं सम्बोध्य कश्चिद्धंस उवाच "जानश्रुतेरन्नदानादिप्रभावजनितं ज्योतिः द्युलोकपर्य्यन्तं व्याप्तं वर्त्तते। तत्र त्वं लग्नः प्रदग्धो माभूरि"ति। एवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच। "एतं वराकं जानश्रुतिं शकटसहितं रैक्वमिव कीदृशमाहात्म्यशालिनमात्थेति"। एतदाकर्ण्य तेन पृष्ठगामिना हंसेन कोऽसौ रैक्व इति पुनः पृष्टस्स एव प्रत्युवाच "सर्वेषामपि सर्वं सत्कर्मविज्ञानजातं यदीयसत्कर्म विज्ञानान्तर्भूतं स रैक्व" इति। तदेतद्धंसवाक्यं जानश्रुतिः स्वनिन्दारैक्वप्रशंसागर्भमाकर्ण्य कथमपि निशामतिवाह्य तल्पं त्यजन्नेव क्षत्तारमाहूय शकटचिह्नसहितं रैक्वमुक्त्वा तदन्वेषणाय प्रेषयित्वा क्वचिद्देशे शकटस्याधस्तात् पामानं कण्डूयमानं रैक्वं दृष्ट्वा प्रत्यागत्य तस्मिन्निवेदितवति स्वयं रैक्वमुपसम्पद्य गवां षट्शतानि निष्कमश्वतरीयुक्तं रथञ्चोपहृत्य त्वदुपास्यां देवतामुपदिदेशेति प्रार्थयामास। ततस्त-

मिव रैक्कमात्थे''ति हंसोक्तानादरवाक्यश्रवणात्तदैव ब्रह्मज्ञं रैक्कं प्रत्याद्रवणात् शुकसञ्जातेति सूच्यते। अतोऽशूद्रेपि शूद्रेति सम्बोधनं स्वस्य सर्वज्ञत्वज्ञापनार्थम्। न चतुर्थवर्णत्वेन शोचतीति शूद्रः। "शुचेर्दश्चे''ति रक्प्रत्यये धातोश्च दीर्घे चकारस्य दकारइतिविद्योपदेशाऽयोग्यत्वख्यापनार्थं शोकएवास्य रैक्केण सूचितो न जातियोगइत्यर्थः ॥ ३४ ॥

## क्षत्रियत्वावगतेश्चोत्तरत्रचैत्ररथेन लिङ्गात्। १। ३। ३५॥

इतश्च जानश्रुतौ न शूद्रत्वजातियोगः। उपक्रमे "बहुदायी बहुपाक्य" इत्यादिना दानपतित्वबहुतरपक्वान्नदायित्वप्रतीतेः। "क्षत्तारमुवाचे''ति क्षत्तृप्रेषणात् रैक्काय गोनिष्करथकन्यादिदानाच्चास्य क्षत्रियत्वावगमाच्च। उत्तरत्रच सम्वर्गविद्यावाक्यशेषे चैत्ररथेनाभिप्रतारिनाम्ना क्षत्रियेण सह समुच्चारणाल्लिङ्गादस्य क्षत्रियत्वमवगम्यते। "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्ष''इति हि वाक्यशेषः। कापेयसहचारिणश्चैत्ररथस्य क्षत्रियत्वं चावगम्यते। "एतेन वै चैत्ररथं कापेयाअयाजयन्नि''ति। "तस्माच्चैत्ररथोनामैकः क्षत्रपतिरजायत" इत्यन्यत्र श्रवणात्। एवं चास्यां ब्रह्मविद्यायां ब्राह्मणक्षत्रिययोरेवान्वयदर्शनाद्रैक्कादन्योजानश्रुतिरपि क्षत्रियएव न चतुर्थवर्ण इति ॥ ३५ ॥

ब्राह्मण साहचर्येण जानश्रुतेः क्षत्रियत्वावगतेर्नशूद्रोऽधिकारीति युक्त्या साधितं श्रुत्यादिभिरनुगृह्य दर्शयति—

---

मुवाच रैक्वः। 'अह हारेत्वाशूद्र तवैव सह गोभिरस्त्वि''ति। अहेति निपातः। हारसहितः इत्वा रथः गोभिस्सह तवैवास्त्वित्यर्थः। पुनर्जानश्रुतौ रैक्वस्यैतावता न सन्तोष इति मत्वा गवां सहस्रं पूर्वानीतं हारादिकं रैक्वस्य विवाहार्थं स्वकन्यांचोपहृत्य विद्योपदेशं प्रार्थयमाने रैक्वस्येदं वाक्यम्। "आजहारेमाः शूद्रेत्यादि" इमा दक्षिणाः आहृतवानसि अनेनैव मुखेन विद्याग्रहणोपायेन मा मालापयसि विद्योपदेष्टारं करिष्यसीत्यर्थः। यद्यपि अहहारेत्वाशूद्रेति पूर्ववाक्येऽपि शूद्रेत्यामन्त्रणमस्ति तथापि शूद्रवत् ब्रह्मविद्यागौरवमजानानस्त्वल्पां दक्षिणामाहरसीति कोपेन क्षत्रिय एवेत्यभिसन्धिः। कम्वरएनमेतदिति हंसवचनमिदम्। एनं वराकं विद्याहीनं सन्तमरं सयुग्वानं युग्वा शकटी तया सह स्थितं रैक्वमेतद्वचनमात्थ इत्यर्थः। अनादरवाक्यं शोककारणम्। आद्रवणं तत्कार्यम्। शूद्रशब्दस्य शोचितृत्ववाचकं कथमित्यत्राह। शुचेर्दश्चेति। अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यतें न जातियोग इत्यर्थः ॥ ३४ ॥

जानश्रुतेः क्षत्रियत्वावगमादपि तद्विषयश्शूद्रशब्दो यौगिको नतु रूढः। उपाख्यानोपक्रमे "जानश्रुतिः पौत्रायणः श्रद्धादयो वहुदायी वहुपाक्य" इत्यादिवाक्येन जानश्रुतेः दानपतित्वं सर्वेभ्यः पक्वान्नदायित्वञ्चोक्तम्। सञ्जिहानः एवं क्षत्तारमुवाचेति क्षत्तृप्रेषणम्। सञ्जिहानः—आसनमुज्झन् उत्तिष्ठन्नेवेत्यर्थः। 'इयं जाया अयं ग्रामो यस्मिन्नास' इति-रैक्वाय कन्यादान रैक्वस्तदा यत्र ग्रामे स्थितस्तद्ग्रामस्य दानञ्चोक्तम् एतैर्लिङ्गैः जानश्रुतेःक्षत्रियत्वमवगतमित्याह इतश्चेति लिङ्गान्तरमाह।उत्तरत्रेति। वाक्यशेषान्निश्चीयते शौनकस्य ब्राह्मणस्य द्वितीयोऽभिप्रतारी क्षत्रिय इति तत्प्रायपाठात् रैक्वस्य ब्राह्मणस्य द्वितीयो जानश्रुतिरपि क्षत्रिय इत्येव गम्यते। स्यादेतत्। जानश्रुतेः क्षत्रियत्वनिर्धारणमिह प्रायपाठस्वाधीनं तत् अभिप्रतारिणः क्षत्रियत्वनिर्धारणाधीनं तदपि तस्य चैत्ररथत्वनिर्धारणाधीनं तच्च तस्य कापेययाज्यत्वनिर्धारणाधीनमित्यतस्तदेव निर्धारयन्नाह। एतेनेति। कापेयस्तावत् श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायत इति तावन्निर्विवादम्। तत्सहोपविष्टोऽभिप्रतारी कापेययाज्यः चित्ररथवंश्यश्चेति बुद्धिरौत्सर्गिकी बाधकाभावादित्यर्थः। निगमयति। तस्मादिति ॥ ३५ ॥

उत्तरसूत्रस्य सङ्गतिं प्रदर्शयन्नाह। ब्राह्मणसाहचर्येणेति। शद्रस्यानधिकारः श्रुतिस्मृतिभ्यामुच्यत

## संस्कारपरामर्शात्तदभावाभिलापाच्च । १ । ३ । ३६ ॥

विद्योपदेशप्रदेशेषु "अष्टवर्षं ब्राह्मणमुपनयीत एकादशे क्षत्रियं द्वादशे वैश्य"मिति "उपत्वा नेष्ये तं ह्योपनिन्ये" इत्यादिषूपनयनसंस्कारपरामर्शात् शूद्रस्य च "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति । शूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हती"-त्यादिषु "तदभावाभिलापाच्च" न शूद्रस्याधिकारः ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः । १ । ३ । ३७ ॥

"नाहमेतद्वेद भो ! यद्गोत्रोऽहमस्मी"त्यादिना जाबालेनोक्ते सति "नैतदब्राह्मणो-विवेक्तुमर्हती"ति जाबालेशूद्रत्वाभावस्य निर्धारणे निर्णये सति तमुपनेतुमनुशासितुं च गौतमस्य प्रवृत्तेश्च नाधिकारः शूद्रस्य ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात् । १ । ३ । ३८ ॥

"पद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यं तस्माच्छूद्रो बहुपशुरय-ज्ञीयः"इत्यादिना शूद्रस्य श्रवणादिप्रतिषेधात् नास्याधिकारः । अनुपश्रण्वतोऽध्ययनतदर्थज्ञान-तदर्थानुष्ठानानामसम्भवात्तान्यपि प्रतिसिद्धान्येव ॥ ३८ ॥

## स्मृतेश्च । १ । ३ । ३९ ॥

"नचास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् । न शूद्राय मतिं दद्यादि"तिच "अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रपरिपूरणमुच्चारणे जिह्वाछेदोधारणे शरीरभेद इति च शूद्रस्य श्रवणादिनिषेधस्मरणाच्च । ३९ ।

## कम्पनात् । १ । ३ । ४० ॥

---

ईत्यर्थः । न शूद्रे पातकं किञ्चित् सन्ध्यावन्दनाद्यभावनिमित्तं पापं नास्तीत्यर्थः । चतुर्थवर्ण एकजातिः नतु द्विजाति-रित्यर्थः ॥ ३६ ॥

छान्दोग्ये ह्येवमुपाख्यायते शैशवे प्रमीतपितृकस्सत्यकामो विद्यार्थमाचार्य्यं "ब्रह्मचर्य्यं चरिष्यामि किं गोत्रोऽह-मि"ति मातरं पृष्ट्वा तया त्वज्जनकपरिचरणं कृत्वैव स्थितास्मि नाहं गोत्रं वेदेत्युक्तः गौतममासाद्य "ब्रह्मचर्य्यं भवति वत्स्याभ्युपेयां भगवन्त" मित्युक्त्वा किं गोत्रस्त्वमिति पृष्टो नाहं गोत्रं वेद माताऽपि नावेदीत् माता मे जबाला सत्य-कामोऽहमित्युवाच अथ गौतमस्सत्यवचनेन नायमब्राह्मण इति निर्धार्य "समिधं सोम्याहरोपत्वानेष्य" इत्युक्तवानिति तथाचोपक्रमगतप्रश्नानुसारादध्ययनाङ्गमिदमुपनयनम् । उपनयनन्तु 'उपनीये' इत्यनेनैव गृहीतं तस्याध्ययनपर्यन्तोपन-यनपरत्वादतस्तद्रहितस्य न विद्यायामधिकार इति समुदितार्थः ॥ ३७ ॥

शूद्रस्य वेदवाक्यश्रवणतदध्ययनतदर्थविचारज्ञानानुष्ठानानि प्रतिषिध्यन्ते शूद्रसमीपे अध्ययनप्रतिषेधेन तस्य वेदश्रवणादिषु दण्डविधानेन च शूद्रस्य न विद्याधिकार इत्याह । पद्युहवेत्यादिना । पद्यु=जङ्गमम् । समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्रतिषेधोऽर्थसिद्धः । अर्थानुष्ठानप्रतिषेधं दर्शयति । तस्माच्छूद्र इति । बहुपशु पशुसदृश इत्यर्थः ॥ ३८ ॥

अध्ययनादौ प्रायश्चित्तस्मरणमुपदेशनिषेधस्मरणञ्चानाधिकारज्ञापकन्तदुभयमपि स्मृतिशब्दविवक्षित-मिति भावः । इत्यपशूद्राधिकरणम् ॥

अथप्रमिताधिकरणशेषः

"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति कठवल्ल्यामंगुष्ठमात्रप्रकरणे स्वस्मान्निःसृतस्य कृत्स्नस्य जगतो महाभयानकोद्यतवज्रवत् कम्पनात्कम्पकत्वाद्धेतोः प्राणशब्दितः अंगुष्ठमात्रः परमात्मैवेति निश्चीयते। पूर्वोत्तरवाक्ययोस्तस्यैव निर्दिश्यमानत्वात् तज्ज्ञानेन मोक्षश्रवणाच्च ॥ ४० ॥

## ज्योतिर्दर्शनात् । १ । ३ । ४१ ॥

तत्रैवांगुष्ठप्रमितप्रकरणे एतद्वाक्यात्प्राक् "न तत्र सूर्यो भाती"त्यादिवाक्ये भासाशब्दवाच्यस्य परमात्मासाधारणस्य ज्योतिषो दर्शनादप्यंगुष्ठप्रमितः परमात्मैवेति सिद्धम् ॥४१॥

इति प्रमिताधिकरणम् ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् । १ । ३ । ४२ ॥

"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति छान्दोग्यैः पठ्यते। तत्र सन्देहः। किमिहाकाशशब्देन संसारबन्धविनिर्मुक्तो जीवः? उत परमात्मेति। "अश्वइव रोमाणि विधूये"त्यादिना मुक्तस्यैव पूर्वं प्रकृतत्वान्मुक्तजीव इति पूर्वः पक्षः। "ते यदन्तरे"ति च नामरूपविमुक्तस्योक्तेः नामरूपनिर्वोढृत्वस्य च तत्र भूतपूर्वगत्या सम्भवात् मुक्तात्मनोऽसंकुचितज्ञानप्रकाशवत्तयाऽऽकाशशब्दस्यापि तत्रोपपन्नत्वात्। "तद्ब्रह्म तदमृतमि"

---

अथप्रमिताधिकरणशेषः।

एवं प्रासङ्गिकेऽधिकरणत्रये वृत्ते प्रमिताधिकरणे अङ्गुष्ठप्रमितः परमात्मेत्युक्तं तत्सूत्रद्वयेन समापयतीत्याह। एवमिति। यदिदमितिश्रुतेरर्थं विवृणोति। स्वस्मन्निति। अस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितं ततो निःसृतमिदं सर्वं जगदुद्यतवज्रतुल्यादेतस्माद्यन्महतो भयं तस्माद्धेतोः एजति=कम्पते। तच्छासनातिवृत्तौ प्रत्यवायो भविष्यतीति भयात् स्वस्वकार्येषु प्रवर्त्तन्ते "भयादस्याग्निस्तपति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम" इत्याशयः। पूर्वोत्तरवाक्ययोरिति। 'अङ्गुष्ठमात्रः पुरुषो मध्ये आत्मनी"तिपूर्ववाक्यम्। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मेति"त्युत्तरवाक्यम्। अनयोर्मध्ये। यदिदमिति मन्त्रः पठितः। तस्य अङ्गुष्ठपरिमितस्य परमात्मनः ॥४०॥

एतद्वाक्यादिति। यदिदं किंच जगत्सर्वं प्राण एजति निःसृतं महद्भयवज्रमुद्यतम् इत्यर्थः। कठवल्यामेषपाठक्रमः। "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः।" एतद्वाक्यं प्रथमवल्लीस्थं ततो द्वितीयवल्लीकतिपयवाक्यानन्तरम् "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति। उर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिंल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन। एतद्वैतत्। यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतम्।" इति। तमेव भान्तमनुभाति सर्वमित्यनेन तद्भानानुभानरूपैर्वीरयोंक्त्या सर्वतेजःकारणत्वमुक्तम्। पूर्वार्द्धेन सर्वतेजश्छादकत्वमुक्तम्। चतुर्थपादेन सर्वतेजोऽनुग्राहकत्वमुक्तम्। इदं परमात्मसाधारणम्। तदेव ज्योतिषां ज्योतिः यस्यादित्यो भामुपजीव्य भातीत्यादिश्रुत्यन्तरदर्शनात्। आथर्वणस्य न तत्र सूर्य्य इति मन्त्रपाठाच्च। एवम्भूतज्योतिर्दर्शनादपि अङ्गुष्ठमात्रपुरुषः परमात्मेति सिद्धमित्यर्थः ॥ ४१ ॥

पूर्वं दहराकाशस्य परब्रह्मत्वसमर्थनायाल्पश्रुतिपरिहारे कृते तत्प्रसङ्गादङ्गुष्ठमात्रस्य परमात्मत्वं साधितं तत्प्रसङ्गागतन्तु अधिकरणत्रयम्। अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरश्रुतस्याकाशवाक्यस्य परमात्मपरत्वं निरूप्यत इति सङ्गतिः। विषयवाक्यमुदाहरति। 'आकाशोहवैति। श्रुतिष्वाकाश इतिप्रसिद्धः नामरूपयोर्निर्वहिता

तिर्मुक्तावस्थोच्यते इतिप्राप्ते, उच्यते । आकाशशब्दितः परमात्मा । कुतः ? "ते यदन्तरे"ति नामरूपास्पृष्टस्यैव नामरूपनिर्वोढृत्वोक्तिर्बद्धमुक्तजीवादर्थान्तरमन्यमाकाशशब्दवाच्यं परमात्मानं व्यपदिशति । बद्धस्य कर्माधीनतया नामरूपे भजतः स्वयं ते निर्वोढुं व्याकर्तुमशक्यत्वात् । मुक्तस्य तु जगद्व्यापारासम्भवस्य वक्ष्यमाणत्वात् नितरां तन्निर्वोढृत्वम् । परमात्मनस्तु निखिलविश्वनिर्मितिप्रवीणस्य "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तस्मादेतन्नामरूपमन्नं च जायते, सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते"-इत्यादिश्रुत्यैव तन्निर्वोढृत्वं सुप्रतिपन्नम् । आदिना निरुपाधिकबृहत्वामृतत्वात्मत्वादिव्यपदेशो गृह्यते । नापि पूर्वं मुक्तः प्रकृतः "ब्रह्मलोकमभिसम्भवानी"ति ब्रह्मलोकशब्दितपरमात्मन एव पूर्वं प्रकृतत्वात् । आकाशशब्दस्यापि व्यापकत्वेनासङ्गत्वेन च परमात्मन्येव प्रसिद्धत्वात् । अत आकाशः परमात्मैवेति ॥ ४२ ॥

ननु स्यादेतत् । प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मैव नास्ति "अयमात्मा ब्रह्म, ब्रह्मैव सन् ब्रह्माप्येति, तत्त्वमसी"त्यादिनैक्योपदेशात् । "नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति द्वैतप्रतिषेधाच्चातः प्रकृतान्मुक्तादपि जीवादभिसम्भवितुरभिसम्भाव्यो ब्रह्मलोको नार्थान्तरभूतः । भेदव्यपदेशस्तु घटाकाशादिवदुपाधिकृत इति चेत्तत्राह—

## सुषुप्त्युत्क्रान्त्योर्भेदेन । ३ । ४३ ॥

व्यपदेशादित्यनुवर्त्तते । "प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद, नान्तरमि"

---

व्याकर्त्ता ते नामरूपे अन्तरा मध्ये वर्त्तमानस्ताभ्यामस्पृष्ट इत्यर्थः । संशयं दर्शयति । तत्र सन्देह इति तत्र=विषयवाक्ये । मुक्तजीवस्य लिङ्गान्याह । अश्व इवेति । अश्वरोमाणीव स्वयं विधूयेत्यनेन पापान्मुच्यते राहुमुखप्रमुक्तश्चन्द्र इव शरीराद्विमुक्तः । अकृतं नित्यं ब्रह्मलोकं कृतात्मा कृतार्थात्मा सन् । अभिसम्भवामि प्राप्नुवानीत्यर्थः इति पूर्वमन्त्रप्रकृतो मुक्तात्मा स एवात्राकाशशब्देन ग्राह्यः । ते यदन्तरेति नामरूपमध्यस्थितोक्त्या नामरूपास्पृष्टत्ववर्णनात् नामरूपनिर्वोढृत्वस्य मुक्तात्मनि मुक्तावस्थाभिप्रायेण उपपद्यते स हि बद्धावस्थायां नामरूपयोर्नितरां वोढा देवमनुष्यादिजन्मपर्यायेण वहुविधनामरूपवोढा स्थित इत्यर्थः । सिद्धान्तयति । उच्यत इति । साध्यांशपूरणेन प्रतिज्ञावाक्यं निर्दिशति । प्रकाशशब्दित इति । ते यदन्तरेति श्रुत्यर्थं विवृण्वन् हेत्वर्थं व्याचष्टे । ते यदन्तरेति । मुक्तात्मभेदोपपादकं नामरूपवोढृत्वं तच्च रूढ्या नामरूपकर्तृत्वं न तु योगेन नितरां वोढृत्वम्, रूढेः प्रबलत्वात् । नामरूपकर्तृत्वन्तु जीवस्य न बद्धमुक्तावस्थयोस्सम्भवति जगद्व्यापारनिषेधात् । तत्तु परमात्मधर्म एव नामरूपे व्याकरवाणि तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इत्यादिश्रुतेः इत्यर्थः । सूत्रस्थादिपदं व्याचष्टे । आदिनेति । पूर्वमन्त्रे अभिसम्भवितृत्वेन मुक्तात्मा प्रकृत इति यदुक्तं तदप्यपाकरोति । नापीति । ब्रह्मलोकशब्देन परमात्माऽपि प्रकृतस्तद्विषय एवायमाकाशशब्दः । आकाशशब्देन प्रकृतस्य दहराकाशस्य प्रत्यभिज्ञानादपि तद्विषयोऽयम् । नच प्रजापतिवाक्येन व्यवधानात् न तत्प्रत्यभिज्ञानमस्तीति शङ्कनीयम् तस्याप्युपासकस्वरूपयाथात्म्यकथनद्वारा दहरवाक्यशेषत्वात् । दहरवाक्ये हराकाश उपास्यतयोपक्रान्त इह प्राप्यतयोपसंह्रियते इतिविशेषः । निगमयति । अत इति ॥ ४२ ॥

जीवात्मनो व्यतिरिक्तमात्मान्तरमेव नास्ति बृहदारण्यके 'योऽयं विज्ञानमयः प्राणेष्वि"ति प्रकृतस्य जीवस्य एष ब्रह्मलोकस्सम्राडिति निर्दिष्टपरमात्मैक्योपदेशात् "नेह नानास्ति किञ्चने"तिभेदनिषेधाच्च । एवञ्च नामरूपकर्तृत्वमपि

तिसुषुप्तौ "प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याती"त्युत्क्रान्तौ चाज्ञाज्जीवात् भेदेन सर्वज्ञतया परमात्मनोऽव्यपदेशात् । अन्वारूढोऽधिष्ठितः उत्सर्जन् घोरान् शब्दान् हिक्कशब्दान् वा कुर्वन् नहि स्वपत उत्क्रामतो वाऽज्ञस्य तदैव प्राज्ञेन स्वेनैव सता परिष्वङ्गान्वारोहौ सम्भवतः, नच जीवान्तरेण तस्यापि सार्वज्ञ्यासम्भवात् ॥ ४३ ॥

इतश्च जीवादन्यपरमात्मेत्याह—

## पत्यादिशब्देभ्यः । १ । ३ । ४४ ॥

"सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति यदिदं किञ्च स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपालः, एष सेतुर्विधरण एषां लोकानामसम्भेदाये"त्यादिनोत्तरत्रापि पत्यादिशब्दाः परिष्वञ्जकं परमात्मानमेव व्यपदिशन्ति । तैश्च मुक्तजीवादप्यन्यः परमात्मेति निश्चीयते । नहि सर्वाधिपतित्वसर्वेशितृत्वसर्वप्रशास्तृत्वसर्वेश्वरत्वजगद्विधरणादिकं मुक्तावस्थेऽपि जीवे वक्तुं शक्यते तस्य जगद्व्यापारप्रतिषेधात् । औपाधिकभेदस्तु पूर्वं प्रत्युक्तः । एकत्वोपदेशस्तु परमात्मनः सर्वव्यापकत्वसर्वनियन्तृत्वसर्वाधारत्वसर्वकारणत्वादिमत्तया चिदचिदात्मकस्य सर्वस्य जगतस्तु तद्व्याप्यत्वतन्नियम्यत्वतदाधेयत्वतत्कार्यत्वादिमत्तया सर्वदा सर्वत्र तदपृथक्स्वरूपस्थितिप्रवृत्तिमत्तया

---

मुक्तात्मनि घटते तस्यैव परमात्मत्वात् । अतोऽयमाकाशो न मुक्तात्मा किन्तु तद्भिन्नः परमात्मेति निर्णयो न युक्त इति शङ्कमानउत्तरसूत्रमवतारयति । नन्वित्यादिना । राद्धान्तमाह । तत्राह इति । सूत्रस्याकाङ्क्षां पूरयन् व्याचष्टे । व्यपदेशादित्यनुवर्त्तत इति । प्राज्ञेनेति । कस्मात्कस्य भेद इत्यत्राह । अज्ञाज्जीवादिति । श्रुत्यर्थं विवृणोति । अन्वारूढ इति । उत्सर्जन् शरीरमिति शेषः । क्षेत्रज्ञान्तरेण परिष्वङ्गान्वारोहौ आशङ्क्याह । नचेति । बृहदारण्यके प्राणेष्विति जीवं प्रकृत्य "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति सुषुप्तौ प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्यातीत्युत्क्रान्तौ चाज्ञात् जीवात्सर्वज्ञात्परमात्मनो भेदेन व्यपदेशान्नास्माकं प्रागुक्तार्थान्तरत्वव्यपदेशरूपहेत्वसिद्धिशङ्कापीत्याशयः ॥ ४३ ॥

इतश्चेति पत्यादिशब्देभ्य इत्यर्थः । सूत्रक्रमानुसारेण श्रुतिपाठक्रममनादृत्य सर्वस्याधिपतिरिति वाक्यमुदाहृतम् । क्रमसम्बन्धप्रतिषेधमुखेन सर्वेश्वरगुणानां निरुपाधिकत्वप्रदर्शनाय सूत्रे तथा निर्देश इतिभावः । सर्वस्याधिपतिरित्यंशिलक्षणमात्मत्वमुक्तमिति द्रष्टव्यं सर्वस्य ब्रह्मरुद्रादेर्वशी सर्वो ह्यस्य वशे वर्त्तते सर्वस्येशान इत्यनेन नियन्तृत्वलक्षणमात्मत्वम् । सर्वस्य प्रशासनेन धारकत्वलक्षणमात्मत्वमुक्तं भवति । स न साधुनेति । साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्य इत्यर्थः । सर्वेश्वरः=सर्वनियन्ता अधिपतिरंशी भूतपालो रक्षकः । एषां सर्वेषां लोकानामसाङ्कर्य्याय धारकः सेतुरप्ययमेव । अनेनेश्वरेण सेतुनाऽनिर्धार्य्यमाणा हि लोका निर्मर्यादा भवेयुरितिभावः । अधिपत्यादिशब्दोक्तानां धर्माणामुक्तव्यावर्त्तकत्वं दर्शयति नहीति । ब्रह्मणश्चेतनाचेतनयोस्स्वरूपेण भेदोऽतोभेदकधर्मान् दर्शयति सर्वव्यापकत्वेत्यादिना । जगद्ब्रह्माभिन्नं तदात्मकत्वात् यो यदात्मकः स तदभिन्नो दृष्टो यथा मृदात्मकघटो मृदभिन्ननिर्देशार्हस्तद्वत् । तद्व्याप्यत्वमिति । यो यद्व्याप्यः स तदभिन्ननिर्देशार्हः यथा वह्निव्याप्यो धूमस्तदभिन्नस्तद्वत् । तन्नियम्यत्वं यो यन्नियम्यः स तदभिन्ननिर्देशार्हः यथा जीवनियम्यं शरीरं जीवाभिन्नं प्रतीयते तद्वत् । तदाधेयत्वं यो यदाधेयः स तदभिन्ननिर्देशार्हः यथा भौतिकं स्वकारणरूपाधिकरणमहाभूताभिन्ननिर्देशार्हस्तद्वदिति । यद्यदधीनं तत्तदभिन्ननिर्देशार्हं यथा प्राणायत्त इन्द्रियगणस्तदभिन्ननिर्देशार्हस्तद्वदित्यादिकं द्रष्टव्यम् । तस्माच्चेतनाचेतनात्मकजगद्भिन्नाभिन्न-

सङ्गच्छते इत्युपरिष्टाद्वक्ष्याम इति ॥ ४४ ॥

इतिश्रीभगवदवतारश्रीसदन्दनादिप्रवर्तितसुदर्शनचक्रावतार श्री १०८ भगवन्निम्बार्क
मुनीन्द्रोपबृंहितानादिवैदिकसम्प्रदायानुगतनिखिलशास्त्रपारावारीण
श्रीकेशवकाश्मीरिभट्टविरिचितायां वेदान्तकौस्तुभप्रभावृत्तौ
ब्रह्मसूत्रवृत्तायां प्रथमाध्यायस्य तृतीयपादः ।

---

स्वभावं ब्रह्म सर्ववेदान्तवेद्यमित्यर्थ ॥ ४४ ॥

इत्यर्थान्तराधिकरणम् ।

निकुञ्जे श्रीराधापदनलिनशोभारतमनाः,
व्रजस्थानां स्वामी रसिकहरिदासो रसिकजः ।
कदा वृन्दारण्ये नवघनसमो जातकरुणः,
सुराणां दुर्लभ्यस्स्फुरतु सरसे नो हृदि सदा ॥

श्री १०८ स्वामिरसिकहरिदासपदाश्रिताश्रितानुगेनामोलकरामेण संगृहीतायां वेदान्त-
कौस्तुभप्रभाटीकायां भावदीपिकायां प्रथमाध्यायस्य तृतीयपादः ।



# प्रथमाध्याये चतुर्थपादः

अथ आनुमानिकाधिकरणम् ।

एवं तावत्प्रथमे पादे मुमुक्षुभिर्मुक्त्युपायतया जिज्ञास्यस्य परस्य ब्रह्मणः श्रीपुरुषोत्तमस्य जगज्जन्मादिकारणत्वमुक्त्वा तत्प्रधानपुरुषयोरपि वेदान्तवाक्यैः प्रतिपाद्यत इत्याशङ्क्य तानि सर्वज्ञं सर्वशक्तिं स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिं तमेव प्रतिपादयन्तीत्युक्तम् । द्वितीये तृतीये च कानिचित्स्पष्टजीवादिलिङ्गकानि कानिचिदस्पष्टलिङ्गकानि च यानि वाक्यानि तान्यपि सत्यसङ्कल्पसर्वान्तरात्मभूतपरब्रह्मपराणीत्युक्तम् । इदानीं चतुर्थे तु पादे कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनच्छायानुसारिणां कासुचिच्छाखासु श्रूयमाणानां वाक्यानां परब्रह्मण्येव समन्वयः समर्थ्यते । कठवल्लीष्विदं श्रूयते । "महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रिति । तत्राव्यक्तशब्देन कपिलोक्तमब्रह्मात्मकं प्रधानमिहाभिप्रेतं शरीरं १ वेति विचिकित्सायां प्रधानमेवेति पूर्वपक्षः । महदादिपुरुषान्तस्य स्मृतिक्रमप्रसिद्धस्यैवेह प्रत्यभिज्ञानात् पंचविंशकपुरुषातिरिक्ततत्त्वप्रतिषेधाच्च । शब्दादिहीनत्वेन न व्यक्तमव्यक्तमिति व्युत्पत्तेश्चेति प्राप्त आह—

**आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ । ४ । १ ॥**

एकेषां कठानां शाखायामानुमानिकमनुमाने भवं प्रधानमपि जगत्कारणत्वेन श्रूयत

---

वन्दे वृन्दावनासीनं राधिकानन्दमन्दिरम् ।
श्रीहरिं सान्द्रकारुण्यं परानन्दं परात्परम् ॥१॥
वृन्दारण्यं तदखिलधरापुण्यरूपं श्रयन्मे स्वान्तं ध्वान्तं जगदिदमधः कृत्य वर्वर्त्ति शश्वत् ।
राधानाथः प्रतिपदमपि प्रेमसङ्क्लिन्नचेता नीचं वोच्चं न गणयति प्रोद्धरत्येव भक्तान् ॥२॥

अथ आनुमानिकाधिकरणम् ।

पूर्वोत्तरग्रन्थयोरेकवाक्यताप्रतिपत्तये पादत्रयाणामर्थस्फुटीकरणमुखेन सङ्गतिं प्रदर्शयन् पूर्ववृत्तमनुवदति । एवमित्यादिना । प्रतिज्ञाय च ब्रह्मजिज्ञासमादिमसूत्रेण तल्लक्षणं द्वितीयसूत्रेणाभिहितं तल्लक्षणस्यान्यत्र प्रसक्तिनिरासाय ईक्षत्याद्यधिकरणानि प्रतिपादितानि । ब्रह्मकारणवाद एव वेदान्तवाक्यानां गतिसामान्यं घटते न तु प्रधानकारणवादे । प्रधानकारणवादनिरासमुखेनाचिद्वर्गात्स्वरूपतो भिन्नं ब्रह्म चेतनवर्गादपिनिरतिशयानन्दवत्त्वेन भिन्नमित्यानन्दमयाधिकरणेन प्रपञ्चितं सर्वभूतोत्पादकत्वज्यायस्त्वपरायणत्वादयः परमात्मासाधारणधर्माः प्रतिपादिताः, इतिप्रथमाध्यायार्थं संक्षिप्य द्वितीयतृतीयपादयोरर्थं निर्वक्ति । द्वितीयतृतीय इति चतुर्थपादार्थमाह । इदानीमिति । इहपादे साङ्ख्यतन्त्रप्रतिपादनच्छायापन्नानां वाक्यानां साङ्ख्याभिमतार्थनिरासेन ब्रह्मणि समन्वयः प्रतिपाद्यतइत्यर्थः । विषयवाक्यमुदाहरति । कठवल्लीति । तन्त्रसिद्धक्रमतद्विपर्य्ययप्रतीतिभ्यां संशयोत्थानात्संशयं दर्शयति । तत्रेति । विषयवाक्य इत्यर्थः ।

साङ्ख्याभिमतं प्रधानमिदमव्यक्तम् । महतः परमव्यक्तमव्यक्तात्पुरुषः पर"इति तत्प्रक्रियाप्रत्यभिज्ञानादितिपूर्व-

इति चेत् नेति। कुतः ? शरीरेति । अव्यक्तशब्देनात्र शरीरस्यैव रूपकेण रथसादृश्येन विन्यस्तस्य ग्रहीतेर्ग्रहणात् . केनचित्सादृश्येन वस्त्वन्तरेण वस्त्वन्तरकल्पनं हि रूपकम् । अयम्भावः । पूर्वत्रात्मानं रथिनं विद्धीत्यारभ्य "तद्विष्णोः परमं पदमि" त्यन्तग्रन्थेन संसारमार्गस्य पारभूतं विष्णुपदं प्राप्तुमिच्छुमुपासकं रथित्वेन तच्छरीरादिकं रथरथांगत्वेन रूपयित्वा "यस्यैते रथादयो वश्याः सन्ति स एवाध्वनः पारं विष्णुपदं प्राप्नोती" त्युक्त्वानन्तरं रथादिरूपितशरीरादिषु येभ्यो येषां वशीकार्यतायां प्राधान्यं तान्युच्यन्ते । "इन्द्रियेभ्यः परा" इत्यादिना । अत्रेन्द्रियादयः पूर्वं रथरूपकल्पनायां हयादिभावेन रूपिताः स्वस्वशब्दैरेव गृह्यन्ते । रथरूपितं शरीरं तु परिशेषादव्यक्तशब्देनोच्यते। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे परा उत्कृष्टाः । वश्येन्द्रियस्यापि विषयसन्निधाने इन्द्रियाणां दुर्निग्रहत्वात् तेभ्योपि प्रग्रहरूपितं मनः परम् । मनसि विषयाप्रवणे विषयसन्निधानस्याप्यकिञ्चित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिःपरा अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात् । तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः सर्वस्यास्यात्मेच्छायत्तत्वा-

---

पत्तमाह । प्रधानमेवेति । पंचविंशक इति ज्ञानकर्मेन्द्रियाणि दशेन्द्रियशब्दगृहीतानि भूततन्मात्रा दशार्थशब्दोदिताः, मनोऽन्तःकरणं बुद्धिरहङ्कारः महानात्मा महत्तत्वमव्यक्तं प्रधानमिति साङ्ख्याभिमतानि चतुर्विंशतिस्तत्वानि प्राङ्निर्दिष्टानि अतः पुरुषः पञ्चविंश इत्यर्थः । प्रतिषेधाच्चेति । "पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिरि"तिवाक्येन पञ्चविंशपुरुषातिरिक्तत्वं निषिद्धयत इत्यर्थः । न तु शरीरमव्यक्तं व्यक्ते तस्मिन्नव्यक्तशब्दस्य शक्त्यभावादित्याशयेनाह । शब्दादिहीनत्वेनेति । सिद्धान्तमाह । इतिप्राप्ते आह इति । सूत्राक्षराणि विवृणोति । एकेषामिति । पूर्वत्ररथिरथादिरूपेण रूपितानां मध्ये यच्छरीरं रथरूपकेण विन्यस्तं तदात्मना रूपितं तदव्यक्तशब्देन परिशेषात् गृह्यत इतियुक्तमित्यर्थः । रूपकशब्दार्थं विवृणोति केनचिदिति । पूर्वत्रेति । "आत्मानं रथिनं विद्धि शरीरं रथमेवतु । बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेवच । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः । यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छति । यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मित्यादिवचनानि कठवल्यां निर्दिष्टानि तेषामर्थं संक्षेपेण विवृणोति । संसारमार्गस्येत्यादिना । रूप्यतेऽनेनेति रूपकं दृष्टान्तः । रूपकत्वेन विन्यस्तं रूपितम् । शरीरं हि रथत्वेन रूपितं "शरीरं रथमेवतु" इत्यादिनेत्यर्थः । तत्र ह्यात्मा शरीरं बुद्धिर्मन इन्द्रियाणि तद्विषया इति षडर्था रथरथिसारथितद्गृह्यमाणतुरगरज्जुतुरगतन्मार्गात्मना यद्रूपिताः तन्मुक्त्यर्थोपासनोपकरणत्वाद्वशीकार्यत्वार्थत्वायेति तावन्निर्विवादम् । यस्त्वविज्ञानवान् भवतीत्यादिवाक्यश्रवणात् इत्यभिप्रायेण रूपणस्य प्रयोजनमाह । यस्यैतइति वशीकार्यत्वज्ञापनाय रथिरथादिभावेन रूपणमित्यर्थः । रूपकरूपितानां ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थमित्याह । येभ्यो येषामिति । आत्मन इत्यादिकं रूपकाभिधायिवाक्यं तेषामत्रग्रहणमत्र वशीकार्यतायां प्राधान्यज्ञापनार्थं स्वशब्दैरेव प्रत्यभिज्ञानाद्रथिरथादिभावेन रूपितानामत्रग्रहणमिति ज्ञापितं पारिशेष्यादव्यक्तशब्देन शरीरग्रहणमित्यभिप्रेत्याह । अत्रेन्द्रियादयइति । तत्रार्थादीनामिन्द्रियादिभ्यःपरत्वमुपपादयति तत्र हयत्वेनेति । स्वसन्निधाविन्द्रियाणां दुर्निग्रहत्वापादनमेवार्थानां वशीकार्यत्वे परत्वं तद्वशीकरणञ्चासन्निधापनं हेयतया ज्ञापनञ्चेतिभावः । तेभ्योऽपीति । स्वावधानाभावे विषयासन्निधेरकिञ्चित्करत्वहेतुकं मनसः प्राधान्यम् । तस्य वशीकरणं नाम तस्य मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्तनसंशीलनम् । "अभ्यासेन च कौन्तेय वैराग्येण च गृह्यत" इत्युक्तम् । तस्मादपीति । बुद्धिशब्दोऽध्यवसाय

त् स एव महानिति च विशिष्यते। ततोऽपि रथरूपितं शरीरं परं जीवस्य सर्वसाधनप्रवृत्तीनां शरीरायत्तत्वात्। ततोपि सर्वान्तरात्मभूतः संसाराध्वनः पारभूतः सर्वान्तर्यामितयोपासनसिद्ध्युपायभूतः प्राप्यश्च परमात्मा परः। सर्वस्य पूर्वोक्तात्मपर्यन्तस्य तत्सङ्कल्पाधीनप्रवृत्तित्वान्नतु पञ्चविंशकः। तदिदमुच्यते 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति" रिति "दैवं चैवात्र पञ्चममि"ति भगवद्गानाच्च। दैवमत्र पुरुषोत्तम एव "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं चे"ति वचनात्। तस्य च वशीकरणं तच्छरणागतिरेवेति। अतोऽत्र न कापिलतंत्रसिद्धप्रधानप्रसङ्गः। नच तन्त्रसिद्धप्रक्रिया प्रत्यभिज्ञा इन्द्रियेभ्योऽर्थानामर्थेभ्यो मनसश्च परत्वकीर्त्तनस्य तद्धेतुतया सांख्यैरस्वीकारात्। बुद्धिशब्देन च महत्तत्त्वाभिधानं तैरभ्युपगम्यते। तथात्वे महतो महत्परत्वासम्भवात् महत आत्मशब्दविशेषणासङ्गतेश्चातो रूपकविन्यस्ता एव गृह्यन्ते दर्शयति च रूपकपरिकल्पितग्रहणमेव वाक्यशेषः। इन्द्रियादीनां वशीकरणप्रकारं प्रतिपादयन् "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञानआत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनी"ति ॥ १ ॥

ननु व्यक्तशब्दार्हं शरीरं कथमव्यक्तशब्दवाच्यं भवतीत्याशङ्क्याह—

## सूक्ष्मं तु तदर्हत्वात् ॥ १ । ४ । २ ॥

ज्ञानविशेषपरः नत्वन्तःकरणपर इत्यर्थः। बुद्धेर्वशीकरणं नाम विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम्। आत्माकर्तृत्वेनेति। कर्तृत्वेन—अध्यवसायाश्रयत्वेन। अणोरात्मनः कथं महच्छब्दविशेष्यत्वमित्यत्राह। सर्वस्येति। अस्य सर्वस्य इन्द्रियादेरध्यवसायपर्यन्तस्य। इन्द्रियाणि जेतव्यानि सम्यगर्थविषयाध्यवसायं सम्पाद्य इत्येवंरूपेच्छायत्तत्वादित्यर्थः। अनेनात्मनो वशीकरणं नामात्मरूपयाथात्म्याध्यवसायप्रावण्येच्छापादनमेवेतिच फलितम्। ततोऽपि रथरूपितं शरीरंपरमिति। शरीरस्य परत्वंनाम स्वगतगुणोन्मेषानुगुणात्मगतापादकत्वम्। रजस्तमोऽनुदयसत्त्वप्राचुर्य्यकरपरिशुद्धाहारेण सत्त्वोद्रेकतापादनं शरीरस्य वशीकरणमित्यर्थः। पुरुषान्नपरं किञ्चित्। इत्युपायकोटिकाष्ठाभूतमस्मात्परं न विद्यत इति व्यतिरेक उक्तः। सा काष्ठेत्यनेन अयमेवोपायकाष्ठाभूत इत्यन्वय उक्तः। इन्द्रियादीनामप्युपायभूतमात्रत्वमस्तीतितद्व्यावृत्त्यर्थं परागतिरितिप्राप्यत्वमुच्यत इत्यर्थः। यस्मात्परं नापरमस्तीत्यादिश्रुत्यैकार्थत्वात्। तस्मात्परान्तररहितस्य परमात्मत्वमर्थसिद्धमितिचाभिप्रायः। अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्। विविधा च पृथक्चेष्टा दैवञ्चैवात्र पञ्चममिति भगवद्गीतावाक्यं च पठति दैवञ्चात्रेति। दैवशब्दार्थं व्याचष्टे दैवमिति। उक्तार्थं प्रमाणेन द्रढयति। सर्वस्येति। निगमयति। अतइति। वशीकार्यतया परत्वमुपपादितम्। कारणत्वेन परत्वस्यानुपपत्तिमाह। न च तत्रेति। प्रत्यभिज्ञानाभावमुपपादयति। इन्द्रियेभ्य इति। अहङ्कारद्वारा बुद्धेर्मनःकारणत्वसम्भवात्। 'मनसस्तु पराबुद्धिः' इत्येतत् क्लिष्टगत्या निर्वोढुं शक्यमिति तदनादरेण बुद्धेरात्मा इत्यत्रानुपपत्तिमाहबुद्धिशब्देनेतिबुद्धेरात्मा महान् पर इत्यपि तन्मतेऽसङ्गतं प्रतिभातीत्यर्थः। बुद्धिशब्देन महत्तत्वमभिधीयतां ततः किमित्यत्राह। तथात्वइति। अनुपपत्यन्तरमाह। महतआत्मशब्देनेति। "दर्शयति च"ति सूत्रखण्डोपादानम्। वागादीनि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि मनसि नियच्छ। मनसीति सप्तम्यन्तम् छान्दसत्वाद्दीर्घः। तद्यच्छेत्ज्ञानमात्मनि। तन्मनो बुद्धौ नियच्छेत्। ज्ञानशब्देनबुद्धिरुक्ता। ज्ञाने आत्मनि इति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेत्। ज्ञानमात्मनि महति नियच्छेत् बुद्धिकर्तरि महत्यात्मनि नियच्छेत् तद्यच्छेच्छान्त आत्मनि। तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेदित्यर्थः ॥ १ ॥

अव्यक्तशब्दशरीरशब्दयोः कथं सामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तकत्वात्। पारिशेष्यादव्यक्तं शरीरमित्य-

तुरवधारणे। सूक्ष्मं भूतसूक्ष्ममव्यक्तमेवावस्थान्तरापन्नं शरीरं भवति। कुतः? तदर्हत्वात्। तदवस्थस्यैवाव्याकृतस्य कार्यतार्हत्वात्। कारणात्मना शरीरमव्यक्तशब्दवाच्यं कार्यकारणयोरभेदादित्यर्थः ॥ २ ॥

ननु यद्भूतसूक्ष्ममव्याकृतमभ्युपगम्यते तदेव भूतकारणं सांख्यैः प्रधानमित्युच्यते। एवञ्च तन्मतात्को विशेष इत्यत्राह—

## तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥

परमकारणभूतपरमात्माधीनत्वात्प्रधानमर्थवत् स्वकार्योत्पत्तिफलवत्। अयंभावः—न वयं प्रधानं तत्कार्याणि च स्वरूपेण नांगीकुर्मः। अपितु परब्रह्मणः सर्वात्मत्वेन तदात्मकतयैव प्रधानं स्वकार्ये प्रवर्त्तते, तदिहाव्यक्तशब्देन गृह्यते। नाब्रह्मात्मकं स्वतन्त्रन्तन्त्रसिद्धमिति। श्रुतिस्मृतिषु सर्वस्य चिदचिद्वस्तुनः परब्रह्मात्मकतादर्शनात्। यद्वा "यदीन्द्रियेभ्यः परा" इत्यादिना रूपकविन्यस्तस्यात्मादेर्वशीकार्यत्वे परत्वमुच्यते, तर्हि "अव्यक्तात्पुरुषः परः, पुरुषान्न परमि"ति पुरुषः किमर्थं गृह्यते? इति। तत्राह "तदधीनत्वादर्थवत्"। रथित्वादिरूपितमात्मादिकं सर्वं परमात्माधीनत्वादर्थवत्प्रयोजनवत्। अतः सएवेह वशीकार्य्यकाष्ठात्वेन "पुरुषान्न परं किंचिदि"त्युच्यते। तदर्थमिह रूपकविन्यस्तेषु गृह्यमाणेषु परत्वेन तस्यापि ग्रहणम् ॥ ३॥

## ज्ञेयत्वावचनाच्च ॥ १ । ४ । ४ ॥

सांख्यैर्हि गुणपुरुषविवेकज्ञानान्मुक्तिं वदद्भिः प्रधानं ज्ञेयत्वेन स्मर्यते। इह च न तथाऽतो न तन्त्रसिद्धप्रधानस्याव्यक्तशब्देन ग्रहणम् ॥ ४ ॥

## वदतीति चेन्न प्राज्ञोहि प्रकरणात् ॥ १ । ४ । ५ ॥

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं

---

भिधानं कथमुपपद्यत इत्याशंक्य उतरसूत्रमवतारयति। व्यक्तशब्दार्हमिति। सूत्राक्षराणि व्याकरोति। तुरवधारणइति सूक्ष्ममव्याकृतमव्यक्तशब्दार्हं तदवस्थान्तररूपं शरीरं द्रव्यैकलक्षणसम्बन्धात्कार्य्ये कारणशब्दोपचारादव्यक्तत्वं निर्दिष्टमित्यर्थः ॥ २ ॥

यदि सूक्ष्ममव्याकृतमभ्युपगम्यते तर्हि तदेव साङ्ख्यमतमापन्नं कथं तन्निरसनमित्याशङ्क्य सूत्रान्तरमवतारयति। नन्विति। स्वतन्त्रमेवाव्याकृतं कार्याणि साधयतीति साङ्ख्यमतन्निरसनीयम्। परमपुरुषाधीनत्वात्। तेन प्रेर्यमाणमेवाकृतम्महदादिकार्यजातं साधयतीतित्वस्माकमभ्युपगम इतिविशेष इत्यभिप्रेत्य समाधत्ते। इत्यत्राह इति। सूत्रार्थं व्याचष्टे। परमकारणभूतइति। तदात्मकतयैव=ब्रह्मात्मकतयैव। स्वकार्ये=प्रकृतेः कार्यं महानेव। रथित्वा रूपितप्रत्यगात्मनो वशीकार्य्यत्वेनेन्द्रियेभ्यः पराह्यर्था इत्याद्रिप्रणाल्या परत्वं वक्तव्यम्। अव्यक्तात्पुरुषः पर इत्यभिधानस्य किं प्रयोजनमिति प्रकारान्तरेण सूत्रनवतारयति। यद्वेति। सएव=परमात्मैव। तस्यापि=परमात्मनोपि ॥ ३ ॥

यदि साङ्ख्यतन्त्रसिद्धमव्यक्तं श्रुत्यभिप्रेतं स्यात्तदा तस्य तत्कार्य्यस्य व्यक्तजातस्य ज्ञेयत्वमभिदध्यात् 'व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष"इतिसाङ्ख्यानामुद्घोषस्तस्मान्नात्राव्यक्तशब्देन साङ्ख्याभिमतप्रधानस्य ग्रहणमित्यर्थः ॥ ४ ॥

सूत्रस्य शङ्काविभागं विवृणोति अशब्दमित्यादिना अनन्तरमेवोक्ता अनाद्यनन्तश्रुतिरव्याकृतं वदति व्यक्तधर्म-

ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्वं वदतीयं श्रुतिरिति चेदत्राह । नेति । प्राज्ञः परमात्मैवात्र निचाय्यत्वेन निर्दिश्यते, न प्रधानम् । कुतः ? प्रकरणात् "तद्विष्णोः परमं पदम्, एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि" त्यादि परमात्मन एव हि प्रकरणम् । तस्य चाशब्दत्वादिधर्मवत्त्वं "यत्तदद्रेश्यमग्राह्यमि" त्यादिश्रुतिसिद्धम् "महतः परमि"ति च "बुद्धेरात्मा महान्परः" इति पूर्वमन्त्रनिर्दिष्टाज्जीवात्परत्वमेवोच्यते ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १ । ४ । ६ ॥

इतश्च नाव्यक्तशब्दवाच्यं प्रधानम् । यतोऽत्र प्रकरणे त्रयाणामेव परमात्मतदुपासनोपासकानामेवमुपन्यासो वक्तव्यतया प्रश्नश्च ज्ञेयतया कठवल्लीषु दृश्यते । नतु सांख्यतन्त्रसिद्धस्य प्रधानादेरपि । तथा हि नचिकेतसे मृत्युना वरत्रये प्रतिज्ञाते प्रथमेन स स्वस्मिन् पितुः सौमनस्यं प्रतिलभ्य द्वितीयेन मुक्त्युपायभूतां नाचिकेताग्निविद्यां वृतवान् "सत्वमग्निं स्वर्ग्यमध्येषी"त्यादिना स्वर्गशब्दोऽत्र मोक्षसाधारणः । तस्यां हि "हिरण्मयः कोशः स्वर्गो लोको ज्योतिरावृतः धीरा अपयन्ति ब्रह्मविदः स्वर्गं लोकमि"ति "अपहत्य पाप्मानमनन्ते स्वर्गे लोकेज्येये प्रतितिष्ठती"ति तैत्तिरीयबृहदारण्यतलवकारादिषु मोक्षशास्त्रेषु तथादर्शनात् ।

---

भूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य न्याय्यत्वात् महतः परत्वोक्तेश्च यत्तदिति सामान्यतोऽपि निर्देशस्याव्याकृतपरत्वौचित्यादित्यर्थः । प्रधानस्य ज्ञेयत्वं वदतीत्यनेन ज्ञेयत्वावचनादितिहेतोः स्वरूपासिद्धत्वमभिहितम् । सूत्रस्य पूर्वपक्षभागं व्याख्याय समाधानभागं विवृणोति नेतीत्यादिना । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति परमपुरुषप्रकरणात् सएवात्रोपास्यत्वेन प्रतिपाद्यते । अतएव पुरुषान्नपरं किञ्चिदिति पञ्चविंशपुरुषातिरिक्तनिषेध इति शङ्का निरस्ता प्रकरणेन तत्र पुरुषशब्दस्य परमपुरुषपरत्वात् । अशब्दमस्पर्शमित्यादितु यत्तदद्रेश्यमग्राह्यमित्यादिवत् तस्मिन्नप्युपपद्यते । महतःपरमिति । बुद्धेरात्मा महान् पर इति । प्रस्तुतजीवात्परत्वमुच्यते । इत्यर्थः ॥ ५ ॥

प्रधानस्याव्यक्तशब्दावाच्यत्वे हेत्वन्तरमाह इतश्चेति । एतेन सूत्रस्थचशब्दार्थो हेतुसमुच्चयार्थक इति स्फोरितः द्वितीयश्चशब्दः प्रश्नोपन्यासयोः समुच्चये प्रधानस्याप्रक्रान्तत्वनितरशब्दार्थं स्फुटयति । यतइति । अस्मिन् प्रकरणे प्राप्यस्य परमपुरुषस्य प्राप्त्युपायस्योपासनस्य प्राप्तुरुपासकस्य चेति त्रयाणामेव ज्ञेयत्वेनोपन्यासः प्रश्नश्च दृश्यते "सहोवाच पितरं ततः कस्मै मां दास्यसीति द्वितीयं तृतीयं तं हो वाच मृत्यवे त्वां ददामी"ति इतिकठवल्यामुक्तम् । एवं निर्बिध्यमानः पिता कुपितस्तं पुत्रं मृत्यवे ददामीत्युक्तवान् । एवमुक्त्वा प्रेषितः प्रेषितस्य मृत्योर्द्वारि तिस्रोरात्रीरनश्नन्नुवास ततः प्रोष्यागतं यमं द्वाःस्था वृद्धा ऊचुः । "वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतां शान्तिं कुर्वन्ति हरवैवस्वतोदकम् । एवं वृद्धैरुक्तो मृत्युर्नचिकेतसमुवाच । "तिस्रोरात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन्स्वस्तिमेऽस्तु । तस्मात्त्रीन् वरान् वृणीष्व ।" एवं प्रार्थितो नचिकेतास्त्वाह । इत्याख्यायिकां संक्षिपन्नाह तथाहीत्यादिना । प्रथमेनेति । वरेणेत्यर्थः । सः नचिकेता । "सान्तः सुमना यथा स्याद्वीतमन्युर्गौतमामिमृत्यो" हे मृत्यो मत्पुत्रं यमं प्राप्य किं करिष्यतीति मद्विषयचिन्तारहितः सन् प्रसन्नमना मां प्रति मम पिता गोतमो वीतरोषश्च यथा स्यादित्यर्थः । एतत्त्रयाणां प्रथमं वरं वृणे इत्याह स्वस्मिन् पितुः सौमन्यस्यमिति । द्वितीयेनेति । नचिकेता द्वितीयं प्रार्थयते स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेसि । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके स त्वमग्निं स्वर्गमध्येपि मृत्योरित्यादिना स त्वमिति । पुराणादिप्रसिद्धः सर्वज्ञस्त्वं स्वर्गप्रयोजन-

अमृतत्वं भजन्तइति तत्रस्थानां जन्ममृत्योरभावश्रवणाच्च। तत्रैवोत्तरत्र क्षयफलकर्मनिन्दा-दर्शनाच्च। "ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश। स्वर्गलोकः सोऽत्र कथितो लोकसंस्थानचिन्तकैरिति"ति। सूर्यध्रुवान्तर्वर्त्तिलोकविशेषे। पौराणिकपरिकल्पितस्वर्गशब्दरूढिस्तु सांख्यपरिकल्पिताव्यक्तशब्दरूढिवदिहानादरणीया। तृतीयवरेण च परमपुरुषार्थरूपपरमात्मप्राप्तिलक्षणमोक्षयाथात्म्यस्वरूपप्रश्नमुखेन प्राप्यस्वरूपं प्राप्तृस्वरूपमुपायभूतोपासनस्वरूपं च पृष्टम्। "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः"इति। एवं मोक्षस्वरूपे पृष्टे तदुपदेशयोग्यतापरीक्षापूर्वकं प्रतिवचनमपि "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"इति तदेवं सामान्यत उपदिष्टे देवमितिनिर्दिष्टस्य प्राप्यस्य स्वरूपं मत्वेति प्रतिपन्नस्य ज्ञानरूपोपायस्य स्वरूपं धीरइति प्रतिपन्नस्य प्राप्तुश्च स्वरूपं

---

कमर्मि जानासि इत्यर्थः। "प्रब्रूहि तं श्रद्दधानाय मह्यमि"ति तत्रस्थस्वर्गशब्दार्थं विवृणोति। स्वर्गशब्दइति। लोकवेदप्रसिद्धस्य स्वर्गशब्दस्य कथं मोक्षवाचित्वमित्यतस्तत्र प्रमाणं दर्शयति। तस्यांहीति। तेन धीरा अपयन्ति ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वं विमुक्ता इति धीराः प्रज्ञाशालिनो ब्रह्म वेद इतोऽस्माद्देहाद्विमुक्ताः सर्वेभ्यो लोकेभ्य ऊर्ध्वं स्वर्गं भगवल्लोकमत्र स्वर्गशब्दः प्रकरणात् भगवल्लोकारः। अपयन्ति प्राप्नुवन्तीत्यर्थः। "यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठतीति। 'योऽधिकार्येतामुपनिषदं वेद स पाप्मानमपहत्यानन्ते त्रिविधतापपरिच्छेदरहिते स्वर्गे सुखरूपे लोके प्रकाशे ज्येये श्रेष्ठे ब्रह्मणि प्रतितिष्ठतीत्यर्थः। स्वर्गलोकेन तव किं सिद्ध्यतीत्याह। अमृतत्वमिति। स्वर्गलोका अमृतत्वं भजन्ते एतद् द्वितीयेन वृणे वरेण" स्वर्गलोको येषान्ते परं पदं प्राप्ताइत्यर्थः। अमृतत्वशब्दार्थं विवृणोति। तत्रस्थानामिति। हेत्वन्तरमाह। तत्रैवोत्तरत्रेति। तत्रैव=कठवल्याम्। उत्तरत्र="नह्यध्रुवैः प्राप्यते ध्रुवं तत्" इतिवाक्ये। आत्मतत्त्वमध्रुवैरनित्यफलसाधनभूतैरनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः। उपदर्शितहेतुत्रयेण स्वर्गशब्दस्य मोक्षवाचित्वं समर्थितम्। सूर्यध्रुवान्तर्वर्त्तिलोकविशेषस्यैव स्वर्गशब्दवाच्यत्वं पुराणे प्रसिद्धं ननु मुक्तावित्याशङ्कां पुराणवचसा द्रढयति। ध्रुवसूर्यान्तरमिति। तृतीयप्रश्नं विवृणोति। तृतीयवरेणेति। "येयं प्रेत" इतिमन्त्रस्य देहातिरिक्तजीवस्वरूपमात्रप्रश्नपरत्वव्युदासायाह। मोक्षेति। "येयंप्रेत" इति नशरीरमात्रवियोगाभिप्रायम् अपितु सर्वबन्धविनिमुक्तमोक्षाभिप्रायम्। मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्तिस्ततस्वरूपविषयवादिविप्रतिपत्तिनिमित्ताऽस्त्यात्मिका नास्त्यात्मिका येयं विचिकित्सा तदपनोदाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयामित्यर्थः। विविदन्तेऽप्यत्रबहवः। ज्ञानमात्रस्यात्मनः स्वरूपनाशं मुक्तिं केचन मन्यते वित्तिमात्रस्यैव सतोऽविद्यास्तमयं मोक्षमाचक्षतेपरे। तुएकविंशतिदुःखध्वंसलक्षणम्। अत्यन्तसरण्यनुसारिणस्तु भगद्भावापत्तिरूपं मोक्षं वदन्ति। "देवैरत्रापि विचिकित्सितं पुरा" इत्यारभ्य 'धृम्वाधारो नचततोऽन्यसाक्षी इत्यन्तेनोच्यमानं दुरवगमत्वविविधलोभनप्रश्नप्रतिषेधादिकमभिप्रत्याह। तदुपदेशयोग्यतापरीक्षापूर्वकमिति। दुर्दर्शम्—द्रष्टुमशक्यम्। कुतः? गूढम्—गुणत्रयतिरोहितत्वात्। अनुप्रविष्टम्—शरीरानुप्रविष्टम्। तत्रापि गुहाहितम्—हृदयगुहागतम्। गह्वरेष्ठम्—तदन्तर्गतवस्तुनिस्थितम् जीवान्तःस्थितम्। पुराणमनादिम् अध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिगृहीतचेतस आत्मनि समवधानमध्यात्मयोगः। तेन योऽधिगमो-जीवात्मनो ज्ञानं तेन हेतुना देवं परमात्मानं मत्वा जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादितियावत्। हर्षशोकौ विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः। अस्मिन् वाक्ये स्वोक्तमर्थत्रितयमपि विशदयति। तदेवमिति। देवं मत्वा धीर इति क्रमेणोपास्योपासनोपासकानामुपन्यास इत्याह। देवमतिनिर्दिष्टस्येति। स्वरूपविशोधनाय पुनः पृष्टवानित्याह। स्वरूपमिति। अन्यत्रधर्मादिति। धर्म उपायः धर्मादन्यत्र प्रसिद्धोपायविलक्षणइत्यर्थः। अधर्मो धर्मेतर उपेयः। अधर्मादन्यत्र प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः। अस्मादिति बुद्धिस्थतत्साधको विवक्षितः। स एवोपेता सहिप्रसिद्धो-

शोधयितुं पुनरप्य"न्यत्र धर्मादन्यत्राधर्मादि"त्यनेन पुण्यापुण्यरूपसाधनविलक्षणस्योपासनस्य "अन्यत्रास्मात् कृताकृतात् अन्यत्र भूताच्चभव्याच्च यदि" त्यनेन कालापरिच्छिन्नस्योपेयस्य च प्रश्ने कृते प्राप्तुरपि चेतनस्य नित्यत्वात्प्राप्यान्तर्गतत्वाच्च ततएव तस्यापि तन्त्रेण प्रश्नः कृतः। अथवोपेयप्रश्नपरमेवेदं वाक्यं "अन्यत्र धर्मादन्यत्राधर्मादि"ति प्रक्रमस्थाऽन्यत्रशब्दद्वयसामानाधिकरण्यवत्। "अन्यत्रास्मात् कृताकृतादन्यत्र भूतादि"त्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यप्रतीतेरेवमभ्युपेयप्रश्ने उपेतुरन्तर्भावादुपायस्याप्यन्तर्भूतत्वात्त्रयमेव पृष्टम्। ततो ब्रह्मप्रतिपादकतया प्रणवं प्रशस्य तद्वाच्यप्राप्यप्राप्तृस्वरूपम्वाचकरूपमुपायञ्च कथयन्प्रणवमुद्दिश्य "न जायते" इत्यादिना प्राप्तृस्वरूपं "अणोरणीयानि"त्यारभ्य, क "इत्था वेदे" त्यन्तेन प्राप्यस्वरूपं "नायमात्मा प्रवचनेन लभ्य" इत्यादिना मध्ये उपासनस्य भक्तिरूपतां चोपदिष्टवान्। तत उपास्योपासकयोरेकगुहाप्रवेशेन परमात्मनः सूपास्यत्वम् "आत्मानं रथिनमि"त्यादि "तत्कवयो वदन्ती" त्यन्तेनोपासानप्रकारमुपासकस्य

---

तृविलक्षणः साधकात्रस्थापितरफलविरक्तत्वात् फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। कृताकृतादिति धर्मादीनां विशेषणं कृताकृताद्धर्मादेर्विलक्षणम्। अन्यत्र भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः। इत्येकां व्याख्यां कृत्वानस्मिन् पक्षे तु कृताकृताद् भूताद्भव्याच्च धर्मादन्यत्र तादृशादधर्मादन्यत्र तादृशादस्माच्चान्यत्रेत्यन्यत्रशब्दत्रयेणोपपत्तावन्यत्रभूताद्भव्याच्चान्यत्रशब्दद्वयवैयर्थ्यम्। उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयवैलक्षण्यानन्वयश्चेति पर्यालोच्यापरा व्याख्या कृता पुण्यापुण्येत्यादिना। धर्मादधर्माच्चान्यत्रेत्युपासनप्रश्नः। पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य कृताकृताद् भूताद्भव्याच्चान्यत्रकालादिति यदिति कालापरिच्छिन्नमुपेयं पृष्टं प्रश्नान्तर्गतश्च प्राप्तुः स्वरूपमितिवदयने। तत्र यत्तच्छब्दौ त्रितयपरावितिभावयति इत्यर्थः। नच तस्मिन्नपि पक्षे प्रष्टव्यद्वयपरत्वाश्रयणमपिक्लिष्टमेव धर्मादन्यत्राधर्मादिति प्रक्रमस्थान्यत्रशब्दद्वयसामानाधिकरण्यवत्। अन्यत्रास्मात्कृताकृतादन्यत्र भूतादित्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यस्यैव प्रतीतेः। यदि तत्र धर्माधर्मविलक्षणं कालत्रयविलक्षणञ्च यच्चेति चशब्दद्वयमध्येष्यत तदान्यत्र शब्दयुग्द्वयस्य स्वरसतः प्रतीतं सामानाधिकरण्यं पर्य्यस्यत्क्षत। अतः प्रक्रमरीत्यनुसारिप्रतीतसामानाधिकरण्यभङ्गे कारणाभावादन्यत्र धर्मादन्यत्र। धर्मादित्ययमप्यंशः प्राप्यब्रह्मपर एवास्त्वित्यभिप्रायेणाह। अथवेति उपेयप्रश्नइति। यदिति कालापरिच्छिन्नमुपेयं पृष्टम्। उपेतुरपिचेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च ततएव तस्यापि तन्त्रेप्रश्न इत्यर्थः। प्रणवंप्रशस्येति सर्वे वेदा इत्यादिपदत्रयोक्तपरब्रह्मप्रतिपादकतयाप्रशस्येत्यर्थः। 'तत्ते पदं संग्रहेण ब्रवीम्योमि"ति प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यते। न जायते म्रियते वा विपश्चित्" इत्यादिमन्त्रद्वयस्य परमात्मपरत्वानुपपत्ति" मन्वानआह। न जायतइति। प्राप्तृस्वरूपम् प्राप्तुः प्रत्यगात्मनः स्वरूपमुपदिष्टवानित्यर्थः। इदं मन्त्रद्वयं तावदेकविषयम्। "न हन्यते हन्यमानेशरीरे" इत्येतद्विवरणरूपत्वादितिभावः। "तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति। तत्ते पदं संग्रहेण प्रब्रवीमि। ओमित्येतदिति। एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरंपरम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्। एतदालम्बनं श्रेष्ठम्। एतदालम्बनं परम्। न जायते म्रियते वा विपश्चित्। नायं कुतश्चिन्न बभूव कश्चित्। अजोनित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे। हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते।" इत्यादिश्रुतयोऽनुसन्धेयाः। एवं मन्त्रद्वयेन प्रत्यगात्मस्वरूपं विशोध्य तदात्मभूतपरमात्मस्वरूपमुच्यत इत्याह। अणोरणीयानित्यादिना। अणोः सर्वचेतनापेक्षया सूक्ष्माच्चेतनादणुतरस्ततोऽपि सूक्ष्मस्तदन्तः प्रवेशयोग्य इत्यर्थः। ततः "तमक्रतुः पश्यति वीतशोकोधातुः प्रसादान्महिमानमात्मनः।" इत्यादिना भगवदनुग्रहस्यैव परमात्मदर्शनं प्रति हेतुत्वमभिहितम्। भगवदनुग्रहशून्यस्य परमात्मतत्त्वं दुरधिगममिति "आसीनो दूरं व्रजति शयानोयति सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती"त्यादिना दर्शितम्।

विष्णुपदप्राप्तिं चोक्त्वा अशब्दमित्यादिनोपसंहृतवानिति त्रयाणामेवात्र ज्ञेयतयोपन्यासः प्रश्नश्च। न तंत्रसिद्धप्रधानस्येह ग्रहणम् ॥ ६ ॥

## महद्वच्च । १ । ४ । ७ ॥

यथा च सांख्यैर्महच्छब्दो बुद्धौ प्रयुक्तोऽपि "वेदाहमेतं पुरुषं महान्तम्, बुद्धेरात्मा महान्परः, महान्तं विभुमात्मानमि"त्यादिवैदिकप्रयोगेषु पुरुषात्मशब्दसामानाधिकरण्यान्न महत्तत्त्वमभिधत्ते । तथाऽव्यक्तशब्दोऽपि वैदिकप्रयोगे न तान्त्रिकप्रधानमभिधातुं योग्यः ॥ ७ ॥ इत्यानुमानिकाधिकरणम् ।

### अथ चमसाधिकरणम्

## चमसवदविशेषात् ॥ १ । ४ । ८ ॥

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्वेताश्वतरोपनिषन्मन्त्रेऽजाशब्देन किं स्मृतिसिद्धा प्रकृतिः प्रत्यभिज्ञायते ? उत वैदिकी ब्रह्मात्मिकेति संशयः । स्मृतिसिद्धेति पूर्वपक्षः, अजामित्यकार्यत्वश्रवणात् । सृजमानामिति कर्त्रर्थशानचा स्वातन्त्र्येण स्वसमानप्रजास्रष्टृत्वस्रवणाच्चेत्येवं प्राप्ते, आह नानेन मन्त्रेण सांख्यतन्त्रसिद्धा प्रकृतिर्निर्दिश्यते । कुतः ?

---

"नायमत्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनूं स्वाम् ।" इत्यनेन ईदृशपरमात्मप्राप्त्युपायभक्तिरूपमभिहितमित्याह । नायमित्यादिना । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातापौ ब्रह्मविदो वदन्ति इत्यस्य मन्त्रस्यार्थं निर्वक्ति । ततइत्यादिना । ऋतं पिबन्तौ इतिमन्त्रेण तयोः प्रतिपादनवैयर्थ्यशङ्कापरिहारायाह । सूपास्यत्वमिति । उपसंहृतवानिति प्रकृतोपसंहारस्यापेक्षितत्वादर्थान्तरपरत्वस्यासङ्गतत्वाच्चेति भावः । सूत्रार्थं निगमयति । इतित्रयाणामिति ॥ ६ ॥

बुद्धेरात्मा महान् पर इत्यत्र महतत्वं न ग्राह्यं चेतनरूढात्मशब्दसामानाधिकरण्यात् "तद्यच्छेज्ज्ञानमात्मनी" त्यत्रसप्तम्यौ तु वैय्यधिकरण्येन प्राग्व्याख्यातौ । अतोऽपिजीवात्मपरत्वेनोच्यमानमव्यक्तं न साङ्ख्यतन्त्रसिद्धप्रधानमितियुक्तं । महत्परत्वानभिधानात् । इत्यर्थः ॥ ७ ॥ इत्यनुमानिकाधिकरणम् ।

अथ चमसाधिकरणम् ।

पूर्वत्र रूपकवाक्ये शरीरश्रवणादव्यक्तं शरीरं नतन्त्रसिद्धा प्रकृतिरित्युक्तं तर्हि तच्छ्रवणादजा तन्त्रसिद्धा प्रकृतिस्स्यादितिप्रत्यवस्थानात्सङ्गतिः । विषयादिकं दर्शयति । अजामेकामिति । नजायत इत्यजां नित्यां, नित्यत्वाभिधानन्तुसर्वकारणत्वसम्पत्त्यर्थम् अनवस्थाप्रसक्तिवारणाय तार्किकमतसिद्धपरमाणुकारणवादनिरसनाय च तां विशिनष्टि । एकामिति । स्वसमानरहितामित्यर्थः । कथं घटते एकस्या अजाया विचित्रजगदुत्पादकत्वमित्यत्राह । लोहितेत्यादि । रजःसत्वतमोगुणात्मिकाः । गुणभेदात्तदुपपत्तिरितिभावः । तदेवाह बह्वीः प्रजाः सृजमानाइति । ये पुरुषाः भुक्तभोगां सम्पादितभोगां तां जहति तान् तुम इत्यर्थः । अचेतनत्वसृज्यमानपदस्वारस्याभ्यां संशयस्तं दर्शयति । अजाशब्देनेति । यादृशं प्रधानं सांख्यतन्त्रसिद्धं तादृशमेवास्मिन्तन्त्रे प्रतीयते । सा प्रकृतिर्नजायत इत्यजा च एका च लोहितशुक्लकृष्णा च सृजमानामिति कर्तरि शानचा स्वतन्त्रजगत्कर्त्री च नब्रह्मपरतन्त्रा इतिपूर्वपक्षमुपन्यस्यति । पूर्वपक्षइत्यादिना । तस्या लिङ्गानि दर्शयति । अजामित्यकार्यत्वश्रवणादिति । सिद्धान्तयति । इयेवंप्राप्तइति । अजाप्रतिपादनइति अजाशब्दयौगिकार्थस्य जन्मराहित्यस्य साधारणत्वात् न तेन तन्त्रसि तिविशेषः प्रतीयते इतिभावः । चमसवदिति ।

अविशेषात् , ब्रह्मात्मिकाऽज्ञाप्रतिपादनेऽप्यजात्वाविशेषात् चमसवत् । यथा "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इतिबृहदारण्यकमन्त्रे चम्यतेऽनेनेति व्युत्पत्तेर्भक्षणसाधनत्वमात्रप्रतीतेः न स्वातन्त्र्येणायं नामासौ चमसोऽभिप्रेत इतिविशेषो निर्णेतुं शक्यते । अर्थप्रकरणादिभिर्विशेषव्यवस्थापकैर्विना यौगिकशब्देष्वर्थविशेषानिश्चयात् । नचात्र सांख्यतन्त्रसिद्धाजाग्राहका अर्थप्रकरणादयो दृश्यन्ते । नाप्यस्याः स्वातन्त्र्येण स्रष्टृत्वं स्रष्टृत्वमात्रप्रतीतेर्ब्रह्मात्मिकाया अपि साऽविरुद्धा परनियुक्तेऽपि तक्षादौ तक्षति काष्ठमिति कर्त्रर्थप्रत्ययदर्शनात् । तावन्मात्रेण स्वतन्त्रप्रकृतित्वनिश्चयासम्भवात् । अतो नास्मिन्मन्त्रेऽजाशब्देन सांख्यतन्त्रसिद्धप्रधानगन्धोऽपि । श्रुत्यर्थस्त्वस्मत्कृतश्वेताश्वतरप्रकाशिकायां द्रष्टव्यः । यथाच चमसमन्त्रस्य वाक्यशेषे 'यथेदं तच्छिरः एष ह्यर्वाग्बिलश्चमस' इति शिरोरूपश्चमसविशेषो निश्चितस्तथा न तन्त्रसिद्धप्रधानग्रहणे विशेषोऽस्ति ॥ ८ ॥

अस्ति तु ब्रह्मात्मिकाया अजाया ग्रहणे विशेष इत्याह—

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १ । ४ । ९ ॥

तुनिश्चये "तद्देवाज्योतिषां ज्योतिः, अथ यदतः परो दिवो ज्योतिः" इत्यादिश्रुतिप्रसिद्धं ज्योतिर्ब्रह्म उपक्रमः कारणं यस्याः सा ज्योतिरुपक्रमा ब्रह्मकारणा । अस्यामेवोपनिषदि "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामि"त्युपक्रमवाक्यात् । उत्तरत्रापि "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः, मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् , यो योनिं योनिमधितिष्ठत्येकः" इत्यादिना ब्रह्मात्मिकाया एव

---

अवयवशक्त्याऽजात्वप्रतिपादनेन विशेषाप्रतीतेश्चमसवद्भवति वाक्यान्तरमन्तरेण विशेषतो निर्णेतुमशक्या भवतीत्याह । यथेत्यादिना । 'अर्वाग्बिलश्चमस उर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्याः सप्त ऋषयस्सप्त तीर"इति अस्यार्थः इतिमन्त्रेणोच्यमानमिदं तदेव शिरः प्रसिद्धमेव कण्ठादुपरिभाग इतियावत् । किं तदित्याशङ्क्याह एषह्यर्वाग्बिलश्चमसउर्ध्वबुध्नः। चम्यतेऽननेति चमसो भक्षणसाधनम् एव मुखरूपश्चमसः आस्यस्य बिलरूपत्वादर्वाग्बिलत्वं शिरस उर्ध्वस्थूलमूलभागरूपबुध्नाकारत्वादूर्ध्वबुध्नत्वं, लोके हि प्रसिद्धश्चमस उर्ध्वबिलस्तिर्यग्बुध्नः । अयन्तु विलक्षणइति भावः। अर्थप्रकरणादिभिरिति । अर्थः=वस्तुसामर्थ्यम् । आदिशब्दः स्ववाक्यस्थविशेषशब्दादिपरः । यथा 'यथेदं तच्छिरएषह्यर्वाग्बिलश्चमस उर्ध्वबुध्नः, इतिवाक्यशेषेण शिरसश्चमसत्वनिश्चयस्तद्वदजाविशेषोऽपि हेत्वन्तरेण निश्चेतुं शक्यते इतिशङ्कायां परपक्षे तथानिश्चायका अर्थप्रकरणादयो न सन्तीत्याह । साङ्ख्यतन्त्रसिद्धेति । सृजमानामिति स्वातन्त्र्येण स्रष्टृत्वप्रतीतिर्विशेषनिश्चायिकेत्यत्राह । नाप्यस्याइति । स्वातन्त्र्येणेति—ईश्वराधिष्ठितत्वमन्तरेणेत्यर्थः । स्रष्टृत्वमात्रप्रतीतेरिति । स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव प्रत्ययवाच्यम् । नत्वपरप्रेर्यस्वरूपमिति मात्रशब्दाभिप्रायः । निगमयति । तस्मादिति ॥ ८ ॥

अग्रिमसूत्रमवतारयितुमाह । अस्तीति । सूत्राक्षराणि व्याचष्टे । तुनिश्चयइति । प्रधानव्यावृत्त्यर्थं श्रुतिप्रसिद्ध्यनुरोधेन विवृणोति-तद्देवज्योतिषामिति । प्रकाशकानामपीन्द्रियाणां प्रकाशकम् । ज्योतिःशब्दितदीप्तियोगो विग्रहद्वारको द्रष्टव्यः। अस्यामेवोपनिषदि=श्वेताश्वतरोपनिषदि । ते मुमुक्षवः ध्यानयोगेन परमात्मानं प्राप्ताः देवस्य परब्रह्मणः शक्तिरूपामजां स्वगुणैर्निगूढां स्वस्वगुणैः तिरोहिताम् अपश्यन् साक्षात्कारं कुर्वन्नित्यर्थः । योनिम् । जगद्योनिभूतां

प्रतिपादितत्वात् । "तथाह्यधीयत एके" हि यस्मात्तथा ब्रह्मकारणकत्वमस्या अजाया एके शाखिन आथर्वणिका मुण्डकोपनिषदि अधीयते "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" इति ब्रह्मशब्दोदितं त्रिगुणात्मकं प्रधानमिहाभिप्रेतम्, "मम योनिर्महद्ब्रह्मे"ति भगवद्वचनाच्च । तैत्तिरीयके च "अणोरणीयानि"त्यादिना ब्रह्म प्रस्तुत्य "सप्त प्राणाः प्रभवन्ति तस्मादि"त्यादिना प्राणोपलक्षितसकलप्रपञ्चोत्पत्तिं ततोऽभिधाय तदनन्तरं पठितस्य "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति मन्त्रस्य ब्रह्मात्मकप्रकृतिपरतया वक्तव्यत्वादिहापि तथात्वस्यावश्यम्भावाच्च ब्रह्मात्मिकैव प्रकृतिरजा मन्त्रप्रतिपाद्या ॥ ६ ॥

नन्वाकाशादनां ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्ववत् प्रकृतेरपि ब्रह्मोपादानकत्वेनैव ब्रह्मात्मकत्वस्य वक्तव्यतयाऽनुत्पन्नायाश्च तस्या ब्रह्मोपादानकत्वासम्भवेन ब्रह्मात्मकत्वासम्भव इत्याशङ्क्याह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १ । ४ । १० ॥

चशब्दः शङ्कानिरासार्थः । अस्याः प्रकृतेर्ब्रह्मोपादानकत्वमजात्वं च द्वयं सम्भवति । कुतः ? कल्पनोपदेशात्, कल्पनायाः क्लृप्तेर्विश्वसृष्टेरुपदेशात् "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि"ति प्रयोगदर्शनात् । उपदिश्यते हि सूक्ष्मशक्तिकाद्ब्रह्मणो विश्वसृष्टिरिहापि "अस्मान्मायी सृजते विश्वमेतदि"ति । अयंभावः । यदा प्रलयसमयेऽतिसूक्ष्मतया नामरूपविभागानर्हा कारणावस्थान्वयिनी परब्रह्माश्रिता तच्छक्त्यात्मनावतिष्ठते तदैषाजेत्युच्यते । यदा तु सृष्टिसमये उद्भूतसत्त्वादिगुणत्वेन विभक्तनामरूपा व्यक्तादिशब्दिता तेजोबन्नादि-

---

प्रकृतिमित्यर्थः । श्वेताश्वेततरे आत्मशक्तिमिति विशेषणश्रवणाद्ब्रह्मात्मकप्रकृतिप्रतिपादनेऽपि अन्यत्र तथाप्रतिपादनादर्शनात् कथं तत्र ब्रह्मात्मकप्रतिपादनपरमित्याशङ्क्याह । तथाह्यधीयतइति । तत्रापि ब्रह्मात्मिकैव प्रकृतिः प्रतिपाद्यत इत्यर्थः । तस्मादेतद्ब्रह्मेति । तस्मात्सर्वज्ञाद् ब्रह्मणस्तत् ब्रह्म त्रिगुणात्मकमव्याकृतापरपर्य्यायं प्रधानं नामरूपयुक्तम् । अन्नं "ततोऽन्नमभिजायते" इत्यन्नशब्दनिर्दिष्टं भोग्यरूपमचिल्लक्षणं जायत इत्यर्थः । उक्तार्थं भगवद्वचसा द्रढयति । ममयोनिरिति । मम परमेश्वरस्य नियम्यभूता त्रिगुणात्मिका प्रकृतिः योनिः सर्वभूतोत्पत्तिस्थानं देशकालानवच्छिन्नत्वात्सर्वकार्येभ्यो महत्त्वात्सर्वस्य बृंहणहेतुत्वाच्च महद्ब्रह्म तस्मिन् प्रकृतिरूपे महद्ब्रह्मणि योनौ गर्भं सर्वभूतादेर्हिरण्यगर्भस्यापि जन्मनो बीजं क्षेत्रज्ञसमष्टिं दधामि योजयामि अहं सर्वज्ञः चेतनाचेतनशक्त्यधीश्वर इत्यर्थः ॥ ६ ॥

प्रकृतेर्ब्रह्मात्मकत्वं तत्कार्यत्वेनैवाभिधातुं शक्यते नित्यायाः प्रकृतेः तत्कार्यत्वाभावात् कथं ब्रह्मात्मकत्वं वियदादिवत्तस्याः सम्भवतीत्याशङ्क्योत्तरसूत्रमवतारयति । नन्वित्यादिना । सूत्रं व्याचष्टे । चशब्दइति । अविरोधशब्दार्थमाह । अस्याइति । अतस्मिन् तद्धर्मस्यारोपः कल्पनाशब्दार्थस्तमर्थमपाकर्तुं कल्पनाशब्दार्थं विशदयति । कल्पनायाइति । कल्पनाशब्दस्य सृष्टिवाचित्वे श्रौतप्रयोगं प्रमाणयति । सूर्याचन्द्रमसाविति । इहापि=श्वेताश्वतरोपनिषदि । अजात्वब्रह्मात्मकत्वयोरविरोधसिद्धिं दर्शयति । अयंभावइत्यादिना । प्रकृतेरवस्थाद्वयं विवृणोति । अतिसूक्ष्मतयेति । सूत्रस्यावशिष्टभागं विवृणोति । मध्विति । अथतदूर्ध्वमिति । अस्यार्थः । अथ = उदयास्तप्रचारा-

रूपेण च परिणता लोहितशुक्लाद्याकाराऽवतिष्ठते तदा ब्रह्मोत्पन्नेत्युच्यते, इति न विरोधः मध्वादिवत्। यथा मधुविद्यायाम् "असौ वा आदित्यो देवमधि" त्युपक्रम्य 'अथ तत ऊर्द्ध्वम् उदेत्य नैवोदेता नास्तमेतैकल एव मध्येस्थाता' इत्यन्तमन्त्र आदित्यस्यैकस्यैव कारणावस्थायां मधुत्वव्यपदेशानर्हसूक्ष्मात्मना स्थितस्य कार्य्यावस्थायां वस्वादिदेवभोग्यमधुत्वेनोदयास्तमयत्वेन च कल्पनमविरुद्धं तद्वत् ॥ १० ॥ इतिचमसाधिकरणम्।

अथ सङ्ख्योपसंग्रहाधिकरणम्।

"अथ यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमि" ति बृहदारण्यकश्रुतौ साङ्ख्याभिमतानि पञ्चविंशतितत्त्वानि प्रतिपाद्यन्ते उत न ? इति विषये तान्येव प्रतिपाद्यन्त इति पूर्वपक्षः। एवं च श्रुतिनिर्णीततत्त्वविशदीकरणपरा या "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इतिस्मृतेः श्रुतिमूलकत्वेन तत्सङ्गृहीतानां तत्त्वानामपि श्रौतत्वात् पञ्चविंशतिसङ्ख्याकानि साङ्ख्यांगीकृततत्त्वानि श्रुतिसिद्धान्येवेति। पञ्चपञ्चजना इति पञ्चकृत्व आवृत्ताः पञ्चपञ्चपञ्चाः पञ्चविंशतिरित्यर्थः। "सङ्ख्ययाव्ययासन्न" ति समासः। "बहुव्रीहौ सङ्ख्येये डजि" ति डच्। पञ्चपञ्चाश्च ते जनास्तत्त्वानि चेति कर्मधारयः। यद्वा पञ्चजन इति समाहारे समासः। लिङ्गव्यत्ययश्छान्दसः। ते कतीत्यपेक्षायां पञ्चशब्दविशेषिताः पञ्चजनसमूहा इति पञ्चविंशतितत्त्वावगतौ ते के इत्यपेक्षायां मोक्षाधिकारान्मुमुक्षुज्ञेयाः स्मृति-

---

नन्तरम्। 'प्रलये आदित्यानामभावात्। ततो=मण्डलादूर्ध्वः ऊर्ध्वं वैकुण्ठलोकं गच्छतीतिशेषः। उदेत्य इत् ऊर्ध्वं वैकुण्ठं प्राप्य नैवोदेता नास्तमेता तत्र तादृशोदयादिकं न करोति। किन्तु एकलः=एकप्रकार एव। मध्ये=सृष्टिस्थितिकालमध्ये स्थाता। इति यथाऽऽदित्यस्य कार्यावस्थामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयत्वमुदयाद्यस्तमयत्वं कारणावस्थायां तदभावश्चोपपद्यते तथा प्रकृतौ ब्रह्मात्मकत्वाजत्वेऽवस्थाभेदेनोपपद्येते इति नात्र विरोधदोषावकाश इत्याह। आदित्यस्यैकस्यैवेति ॥ १० ॥ इतिचमसाधिकरणम्।

अथ सङ्ख्योपसङ्गृहाधिकरणम्

न हि वाक्यशेषोऽस्त येनाजाशब्दः स्वतन्त्रां प्रकृतिं गमयेत् किन्तु "देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिवाक्यानुरोधेन प्रकृतेर्ब्रह्मात्मकत्वं समर्थितं तत्रानुपपत्तिमाशङ्कमानः साङ्ख्यः प्रत्यवष्ठिते यदि प्रकृतेर्ब्रह्मात्मकत्वं स्यात्तदा तत्त्वानामाधिक्यं प्रसज्येत नत्वेवं तस्मात्प्रकृतिर्न संख्यया ब्रह्मात्मिकेति निश्चेतुं शक्यत इति सङ्गतिः। विषयवाक्यमुदाहरति अथयस्मिन्निति। पञ्चजनसंज्ञाः पञ्चप्राणा आकाशश्च यस्मिन् ब्रह्मणि प्रतिष्ठितः। अत्राकाशशब्दो भूतान्तरस्याप्युपलक्षकः। पूर्वस्मिन् मन्त्रे ज्योतिषां ज्योतिरिति षष्ठ्यन्तज्योतिश्शब्दस्यार्थनिर्णायकसापेक्षत्वात् पञ्चजनशब्दस्यार्थनिर्णयान्तरसापेक्षत्वात्पञ्चसङ्ख्यान्वययोग्यानि ज्योतींषीन्द्रियाण्येवेत्यवसीयते। उक्तञ्च श्रीव्यासार्यैः-'श्रुतपञ्चसङ्ख्याविशेषितत्वात् पञ्चसङ्ख्याज्योतिरन्तरप्रसिद्ध्यभावाच्च परिशेषेणेन्द्रियावगम इति। तदेवमन्यइति। तादृशमात्मानममृतं ब्रह्मेत्येवं विद्वानन्योऽप्यमृतो भवतीति सिद्धान्तानुसारी श्रुत्यर्थः। तत्र संशय्य पूर्वपक्षयति। सांख्याभिमतानीत्यादिना। उक्तार्थं स्मृतिप्रमाणेन समर्थयति। एवञ्चेति। उक्तवाक्येन पञ्चविंशतितत्त्वान्येवात्र प्राह्याणीति निश्चितमित्यर्थः। मूलप्रकृतिरिति सर्वस्य कार्यसङ्घातस्य मूलभूता प्रकृतिः। प्रधानम्=सत्वादिगुणानां साम्यावस्था सा अविकृतिरेव प्रकृतिरेवेत्यर्थः। प्रकृतिविकृतयः सप्तमहत्तत्त्वाहन्तत्वे पञ्चतन्मात्राणीतिसप्त। षोडशकः=महाभूतान्येकादशेन्द्रियाणिचेति षोडशको

प्रसिद्धाः प्रकृत्यादय एवेति । एवं सति "तमेव मन्य आत्मानं विद्वानि" त्यस्य पंचविंशक-मात्मानं ब्रह्मभूतं विद्वानमृतो भवतीत्यर्थ इति प्राप्त आह—

## न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च । १ । ४ । ११

अपि सम्भावनायाम् । पञ्चपञ्चजना इत्यत्र पञ्चविंशतिसङ्ख्योपसङ्ग्रहणादपि न तन्त्रसिद्धप्रधानादयोऽत्र प्रतयन्ते । कुतः ? नानाभावात्, श्रुतिस्थपञ्चजनशब्दितानां यस्मिन्निति निर्दिष्टब्रह्माधारतया ब्रह्मात्मकत्वप्रतत्या तान्त्रिकेभ्यः पृथक्त्वात् । अतिरेकाच्च । यस्मिन्निति पञ्चपञ्चजनस्याकाशस्य चाधारतया निर्दिष्टस्य परमात्मन आकाशस्य चातिरेकात्पञ्चपञ्चजना इत्यत्र पञ्चविंशतिसङ्ख्याप्रततेरेवासम्भवः । अतो न बहुव्रीहिगर्भितकर्मधारयः न वा समाहारः । किन्तु पञ्चजना इति सङ्ख्याशब्दः संज्ञापरः । यथा सप्तर्षयः सप्तेत्यत्रैकैकोऽपि सप्तर्षिपदवाच्यस्तथा पञ्चजनशब्दोऽपि बोध्यः । "दिक्सङ्ख्ये संज्ञायामि" ति स्मरणात् । "पुमांसः पञ्चजनाः" इत्यमरकोशाच्च । तथाचावयवार्थमनपेक्ष्य पुरुषाभिधानपरोऽयं पञ्चजनशब्द इति सिद्धम् ॥ ११ ॥

पुरुषस्यात्रानुपपत्त्या के पुनस्ते पञ्चजना नामेत्यपेक्षायां लक्षणया पुरुषसम्बन्धिनः प्राणादयः पञ्चशब्दवाच्या इत्याह—

---

गणो विकार एव न प्रकृतिः । पुरुषस्तु न प्रकृतिः न विकृतिः न कस्यापि कारणं कार्यञ्चेत्यर्थः । उक्तार्थं व्याकरणस्मृत्या समर्थयति । पञ्चकृत्वआवृत्ताइति । समासविधायकमनुशासनं पठति । सङ्ख्येति । समाहारेसमासइति । पञ्चजनानामित्यत्र पञ्चजनशब्दस्य समस्तस्यैकपद्यदर्शनादिहाप्यौचित्यतस्तत्प्रतिपत्तेः । द्वितीयपञ्चशब्दसमभिव्याहारबलेन इतरपञ्चशब्दस्य सङ्ख्यापरत्वप्रतीतेः समाहारसमासत्वं स्वीक्रियत इतिभावः । "अकारान्तोत्तरपदोद्विगुः स्त्रियां भाष्यत" इतिस्त्रीत्वस्य "पात्रादिषु प्रतिषेधोवक्तव्य" इति त्रिभुवनादिष्वपवादववत् इहतदभावा दित्यत्राह । लिङ्गव्यत्ययइति । पञ्चतया विशेषणोपपत्तिमाह । तेकतीत्यपेक्षायामिति । एवञ्चपञ्चविंशतिसंख्यासिद्धावस्यमन्त्रस्यमोक्षाधिकारारपांख्यतत्त्वारत्वसिद्धिमाह । तेक इति । पञ्चपञ्चजनाइतिश्रुतिखण्डं व्याख्याय पूर्वपक्षशेषभागं विवृणोति । एवंसतीत्यादिना । स्वमतरीत्या सिद्धान्तयति । इतिप्राप्तआहइति । सूत्रार्थं व्याचष्टे । अपिसम्भावनायामिति । यस्मिन् पञ्चजना इति यच्छब्दनिर्दिष्टब्रह्मात्मकताप्रतीतेः । आत्माकाशाभ्यां संख्यातिरेकाच्च न पञ्चविंशतिसंख्यान्वयानुरोधेन पूर्वपक्षावसानोक्ता क्लिष्टगतिः कल्पनीया । कठवल्लीषु 'इन्द्रियेभ्यः पराह्यर्था' इत्यादिना पुरुषाधारत्वेन वर्णितानां ज्ञानेन्द्रियभूततन्मात्रामनोबुद्धिभोक्तृस्थूलसूक्ष्मशरीराणाम् 'तच्चाकाशं सनातनमित्या'दिष्वाकाशशब्देन प्रसिद्धस्याप्राकृतभगवल्लोकस्य च ग्रहणसम्भवात् तत्रैवाव्यक्तशब्दस्य स्थूलसूक्ष्मशरीरद्वयपरत्वोपपत्तेः । अन्तरङ्गशाखान्तरदृष्टसंख्येयसंग्रहसम्भवे क्लिष्टगत्या बहिरङ्गाप्रमाणिकसांख्यतत्त्वोपसंग्रहायोगादित्याह नानाभावादित्यादिना । तान्त्रिकेभ्यइति । यस्मिन्निति सप्तम्यन्तत्वेन निर्दिष्टं ब्रह्म आत्मानं विद्वानित्यत्रचिच्छब्देनोक्तः प्रत्यगात्मा आकाशश्च प्रतिष्ठित इत्याकाशश्चैतत्त्रिकमित्यर्थः । हेत्वर्थं विवृणोति । पृथक्त्वादिति । नानाभावः पृथक्त्वम्, विनानानाहिपृथगिति नैघण्टुकाः । पृथक्त्वशब्देनान्यत्वं विवक्षितं नतु बहुत्वमितिभावः । पञ्चविंशतिजनाः परमात्माकाशौ चेतिसप्तविंशतिसंख्या स्यादित्याह यस्मिन्निति । पञ्चजनस्येत्यादिना । एतेन सांख्यमते स्वतन्त्रस्य प्रधानस्यानाधारत्वात् यस्मिन् तत्त्वानां प्रतिष्ठोक्तिविरोधः प्रसज्येत, आकाशस्य पृथगुक्तिवैयर्थ्यञ्चेतिसूचितम् अतः अर्थान्तरपरिग्रहे उक्तदूषणात् अत्रपञ्चविंशतिसंख्याप्रतीतिरेव नास्ति समाहारसमासे स्त्रीप्रत्ययाभावपुल्लिङ्गयो छान्दसत्वेन समर्थनीयत्वात्

## प्राणादयो वाक्यशेषात् । १ । ४ । १२ ॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि'ति वाक्यशेषात्प्राणादयः पञ्चजनाः । ते कतीत्यपेक्षायां पञ्चेति पञ्चत्वसङ्ख्यान्वयात्, पञ्च प्राणादय एव पञ्चजनशब्दवाच्याः श्रुतावभिप्रेता न स्मृत्युक्तप्रकृत्यादय इति सिद्धम् ॥१२॥

ननु काण्वमाध्यन्दिनशाखयो'र्यस्मिन्पञ्चजना' इति मन्त्रस्य समानत्वेऽपि काण्ववाक्यशेषस्यान्नशब्दहीनत्वात्कथं पञ्चत्वपूर्तिरित्याशङ्क्याह—

## ज्योतिषैकेषामसत्यन्ने । १ । ४ । १३ ॥

एकेषां काण्वानां पाठे अन्ने असति 'तद् वा ज्योतिषां ज्योतिरि'ति पूर्वमन्त्रपठितज्योतिषा पञ्चत्वसङ्ख्या पूर्यते । ननु ज्योतिःशब्द उभयपाठे समानः कथमेकेषामेव तद्ग्रहो नान्येषामिति वैषम्यं नियामकाभावादिति चेन्न । अपेक्षाभेदस्यैवात्र नियामकत्वात् । माध्यन्दिनानां समानमन्त्रपठितप्राणादिपञ्चकस्य लाभात् । अन्यमन्त्रपठितज्योतिःशब्दापेक्षाभावः । काण्वानां तु पञ्चमस्यालाभात् भवत्यन्यस्यापेक्षेति भावः । यथा समानेऽप्यतिरात्रे वचनभेदात् षोडशिनो ग्रहणाग्रहणे तद्वत् ॥ १३ ॥ इति संख्योपसंग्रहाधिकरणम्

### अथ कारणत्वाधिकरणम् ।

ननु यदुक्तं ब्रह्मैकहेतुकं विश्वमिति तन्न शक्यते वक्तुम्, वेदान्तवाक्येषु सृष्टेरनेककारणकत्वदर्शनात् । तथाहि क्वचित् "सदेव सोम्येदमग्र आसीदि" ति सद्धेतुका सृष्टिराम्नायते । क्वचित्तु "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यात्महेतुका, क्वचित्तु "असद्वा इदमग्र आसीत्ततो वै सदजायत" तथा 'असदेवेदमग्र आसीत्तत्सदासीदि' त्यसद्धेतुका, क्वचिच्च "अस्य लोकस्य का गतिरित्याकाश इति होवाच" इत्याकाशहेतुका, "सर्वाणि

---

पञ्चजनशब्दस्य संज्ञाशब्दत्वमभ्युपगम्यदृष्टान्तेन परंबुद्धयारूढं करोति किन्त्विति । नबहुव्रीहिगर्भितकर्मधारयइति॥११

"दिक्संख्ये संज्ञायामि"तिसमासविधानात् पञ्चजनशब्दः किं मनुष्येषु निरुढ इत्यत्राह । पुरुषस्येति । तथासति पञ्चपुरुषा इति स्यात् । एतत्पञ्चमनुजानां ब्रह्मणि प्रतिष्ठानाभिधानं निष्प्रयोजनकं सर्वस्यैव प्रतिष्ठानात् । अतः पृच्छति–के ते पञ्चजनसंज्ञका इति ॥ १२ ॥

उत्तरसूत्रमवतारयितुं शङ्कते । काण्वमाध्यन्दिनशाखयोरिति । अत्र पञ्चपञ्चजनाः प्राणादय इति नाभिधातुं शक्यते काण्वानामन्नपाठवैकल्येन प्राणादिषु पञ्चसंख्यानिवेशानुपपत्तेः पञ्चजनत्वमयुक्तमितिभावः । सूत्रार्थं विवृणोति । एकेषामिति । केषाञ्चित्पञ्चसंख्यापूरकं ज्योतिरन्येषां नेति विकल्पोन युक्तइतिशङ्कते । नन्विति । ग्राहकसामर्थ्यभेदात् तदविरोधमाह । अपेक्षाभेदस्येति । उक्तं दृष्टान्तेन स्पष्टयति । यथेति । विरोधेऽपि तुल्यबलत्वाज्ज्योतिर्विहाय वाक्यशेषस्थानामेव प्राणादीनां साम्नानां क्वचिद्ग्रहणमन्यत्र सज्योतिषामेव ग्रहणं क्रियायामिव वस्तुन्यपि दृष्टिक्रियायां विकल्पसिद्धेरिति मत्वाह । तद्वदिति ॥ १३ ॥ इतिसंख्योपसंग्रहाधिकरणम् ।

अथ कारणत्वाधिकरणम्

निखिलस्य विश्वस्य यस्मिन्निति वाक्येन ब्रह्माश्रयत्वं प्रतीयते तत्कथं प्रधानस्य स्वातन्त्र्येण कारणत्वमिति निरस्तं=सम्भवति प्रधानस्य स्वातंत्र्येण कारणत्वं ब्रह्माश्रयत्वाप्रतिपत्तेरितिशङ्कया सङ्गतिस्तामाह । नन्वित्यादिना । नहि

ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" इति क्वचित्प्राणहेतुका, 'आत्मैवेदमग्र आसीत्, ब्रह्म वा इदमग्र आसीदि" त्यादिना बृहदारण्यके आत्मब्रह्महेतुकाच सृष्टिः प्रोच्यते। अतोऽनेकहेतुकत्वाज्जगतो ब्रह्मैव कारणमिति न निश्चेतुं शक्यते। किन्तु प्रधानैककारणकं तदिति निश्चीयते। 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति श्रवणात्। अस्य च परिणामितया चासत्सच्छब्दयोः स्रोतपन्नतत्त्वपूरकतया प्राणशब्दस्य आकाशब्रह्मात्मशब्दानां विभुत्वेन तत्रैव सम्भवात्। एवं निश्चिते ईक्षणादयस्तत्र गौणा भवितुमर्हन्ति। अतः स्मृतिन्यायप्रसिद्धत्वात् प्रधानमेव जगद्धेतुतया वेदान्तवाक्यैः प्रतिपाद्यत इत्याशङ्क्याह—

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १।४।१४॥

चशब्दः शङ्कानिरासे, तुशब्दार्थे वा। यथाशब्दः प्रकारवचने। सर्वज्ञः सर्वेश्वरः परमात्मैव जगदेकहेतुरिति निश्चेतुं शक्यते। कुतः? आकाशादिपदचिन्हितेषु सर्वेषु सृष्टिवाक्येषु यथाव्यपदिष्टस्योक्तेः। लक्षणसूत्रादिषु सार्वज्ञ्यादियुक्ततयाऽस्माभिर्यथाव्यपदिष्टं प्रतिपादितं ब्रह्म तस्यैकस्यैवाकाशादिकारणत्वेन सर्ववेदान्तैः प्रतिपाद्यमानत्वात्। तथाहि "सत्यं ज्ञानमनन्तं ब्रह्म" इतिपूर्वप्रकृतमेव ब्रह्म "तस्माद्वा एतस्मादि" त्यादिना कारणत्वेन व्यपदिश्यते। तथा "सदेव सोम्येदमि" त्यादिषु "तदैक्षत बहुस्यामि" ति निर्दिष्टमेव ब्रह्म "तत्तेजोऽसृजत" इत्यादिना व्यपदिश्यते। एवमन्योपनिषद्वाक्येष्वपीयमेव रीतिर्द्रष्टव्या। सृष्टिवैचित्र्यं च न कर्तृभेदमापादयति, यथा कुलालो मृण्मयपात्रजातं निर्मिमाणः कदाचित् घटपूर्विकां सृष्टिं कदाचिच्छरावपूर्विकां च करोति, स्वयं तु न भिद्यते। तथा परमा-

---

वेदान्तेषु कारणवाक्यानामेकोक्त्यैककारणकत्वमभिहितं, येन ब्रह्मणो जगत्कारणत्वं भवितुमर्हति कथं वा सृष्टिविरुद्धार्थप्रतिपादकानां ब्रह्मणि जगद्योनौ समन्वयश्चेति शंकितुरभिप्रायः। जगत्कारणप्रतिपादकैर्वाक्यैः किं ब्रह्म प्रतिपाद्यते उत प्रधानमिति संशयः। असद्वा इदमग्र आसीदिति तद्धेदन्तर्ह्यव्याकृतमासीदित्यत्रासदव्याकृतशब्दौ व्याकृतनामरूपत्वरथब्रह्मपरौ, उताव्यक्तपरौ वेति। प्रधानकारणवादे सामञ्जस्यमाह। किन्त्विति। परस्परप्रतिक्षेपकार्थविषययोः सदसच्छब्दयोः कथं प्रधानविषयत्वोपपत्तिरित्यत्राह। अस्यचेति। तत्रैव=प्रधान एव। सृष्टिप्रकरण एव पश्यन् चक्षुः शृण्वन् श्रोत्रमित्यव्याकृतशब्दवाच्यस्य चेतनत्वववगम्यते, असच्छब्दस्याप्यव्याकृतशब्दसमानयोगक्षेमत्व च्चेतनविषयत्वमापतति प्रकरणान्तरेषु चेक्षणं श्रूयते। परब्रह्मशब्दस्य चेतनविषयत्वं श्रुतिप्रसिद्धम्, आत्मशब्दस्य चेतनैकान्ता इतिशङ्कायामीक्षणधर्मयोगं प्रतिवक्ति। एवमिति। अनेन ईक्षत्यधिकरणाक्षेपः फलितः। अधिकं युक्त्यन्तरमाह। स्मृतिन्यायेति। सूत्र:चराणि व्याचष्टे। च शब्दइति। स्वर्थेन चशब्देन च फलितां प्रतिज्ञामाह। सर्वज्ञइति। परमात्मैवेत्येवकारेण नेतिपदानुषङ्गफलितप्रधानप्रतिक्षेपः सूचितः। 'तस्माद्वा एतस्मादिति, तत्तेजोऽसृजत, इत्यादिवाक्येषु धर्मिंदाचिनोऽव्याकृतादिपदस्य प्रथमश्रुतत्वाच्चरमावगतमीक्षणादिकं तदानुगुण्येन नेयमित्युक्तमिति शङ्कायां तेषु प्रकरणेषु सर्वज्ञत्वादिगुणकस्यैव कारणत्वप्रतिपादितत्वमुपपादयति। तथाहीति। कारणत्वप्रतिपादनात् प्रागेव कारणत्वधर्मिणः प्रथमत एव चेतनत्वप्रतिपादनं दर्शयति। सत्यज्ञानमिति। तत्तेजोऽसृजतेति कारणत्वप्रतिपादनात्पूर्वमेव तदैक्षतेति ईक्षितृत्वप्रतिपादनादीक्षणानुगुण्यकारणत्वं नेयम् न तु कारणत्वानुगुणमीक्षितृत्वं नेयमित्यर्थः। ततः पूर्वनिर्दिष्टं सदितिपदं तत्साधारणत्वात् न प्रधानपरतया स्वतः प्रतीयते ईक्षणदर्शनाच्च प्रधानविलक्षणं कारणं निश्चीयत इति नोपक्रमविरोधः सच्छब्दस्येदंशब्दसामानाधिकरण्यन्तु संभव-

ह्माऽपि कदाचिदाकाशादिकां कदाचित्तेजआदिकां सृष्टिं कुर्वन्स्वयं न भिद्यते ॥ १४ ॥

तथासत्यसदव्याकृतशब्दयोः का गतिरितिचेत्तत्राह—

## समाकर्षात् १।४।१५॥

"सोऽकामयत" इति प्रकृतस्यैव बहुभवनसङ्कल्पपूर्वकं विश्वं सृजतः सर्वज्ञस्य ब्रह्मणः "असद्वा इदमि"त्यत्र समाकर्षात् सृष्टेः पूर्वं नामरूपाविभागात् तत्सम्बन्धितयाऽस्तित्वाभावेन ब्रह्मैवासच्छब्देनोक्तम्। एवम् "आदित्यो ब्रह्मे"ति पूर्वप्रकृतस्य ब्रह्मण एवासदेवेदमित्यत्र समाकर्षो बोध्यः। "तद्धेदं तर्ह्यव्याकृतमि"त्यत्राप्यव्याकृतशब्देन तदन्तरात्मा परमात्मैवोच्यते। "स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मन आत्मेत्युपासीत" इत्युत्तरवाक्ये स इति सर्वनाम्नाऽव्याकृतशब्दोदितस्य ब्रह्मण एव समाकर्षात्। प्रधानपरत्वे तु तस्याचेतनस्यान्तःप्रविश्य प्रशासितृत्वाद्यसम्भवात्। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, अन्तःप्रविष्टः शास्ता जनानामि"त्यादौ ब्रह्मण एव तत्प्रसिद्धेः। व्याक्रियत इति कर्मकर्त्तरि लकारः। अतो ब्रह्मैवैकं जगद्धेतुरिति सिद्धम् ॥१५॥

इति कारणत्वाधिकरणम्। ४।

### अथ जगद्वाचित्वाधिकरणम्

पुनरपि साङ्ख्यो निरस्यते। तथाहि कौशीतकीब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिना "ब्रह्म ते ब्रवाणी"ति प्रतिज्ञाय "य एष आदित्ये पुरुषश्चन्द्रमसि पुरुषः" इत्यादिना ब्रह्मत्वेन निर्दिष्टान्पुरुषान् निरस्याजातशत्रुणा 'यो वै बालाके! एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म स वै वेदितव्यः" इति तस्मा उपदिश्यते। किमत्र वेदितव्यतया निर्दिष्टः

---

तीत्ययमर्थः 'ईक्षतेर्नाशब्द,मित्यत्र समर्थित इतिभावः। नहि सृष्टेः वैचित्र्यं कर्तृभेदनिबन्धनं येन प्रागुक्तदोषः प्रसज्येत इत्याह। सृष्टिवैचित्र्यञ्चेति ॥ १४ ॥

अग्रिमं सूत्रमवतारयितुं शङ्कते। तथासतीति। असद्वेतिवाक्ये असत एव कारणत्वाभिधानात्तथातर्ह्यव्याकृतमासीदित्यव्याकृतशब्दश्रवणाच्च न ब्रह्मकारणवादो युक्त इत्यर्थः। सूत्रार्थं विवृणोति। सोऽकामयतइत्यादिना। 'सोऽकामयत, इत्यत्र सच्छब्देन कारणविषयेण निर्दिष्टस्य ब्रह्मणः असद्वा इदमित्यत्रासच्छब्देन नामरूपविभागानर्हस्य सत्यसङ्कल्पादिगुणकस्य ब्रह्मणस्समाकर्ष उपपादितो भवतीत्यर्थः। असच्छब्दार्थमाह। सृष्टेः पूर्वमिति। अव्याकृतं प्रधानमेव जगत्कारणमिति शङ्कां समाधत्त इति। तद्धेदमित्यादिना। 'पश्यन् चक्षुः श्रृण्वन् श्रोत्रमि'तिवाक्यात् व्याकरवाणीति सङ्कल्पश्रवणाच्च प्रधानव्यावृत्तिरित्यर्थः। वेदान्तवाक्यविशेषविवक्षितोऽनुप्रवेशविषयो न सम्भवति प्रधान इत्याह। प्रधानपरत्वेति। प्रधानेऽपि स्वकार्यानुप्रवेशो युक्त इत्यत्राह। अन्तःप्रविष्ट इति। असदव्याकृतशब्दा ईक्षणादयश्च ब्रह्मणयुपपन्नाः प्रधानेत्वीक्षणादयोऽनुपपन्ना इति वैषम्यं दर्शित भवतीतिभावः। अधिकरणार्थमुपसंहरति। अतइति ॥ १५ ॥ इतिकारणत्वाधिकरणम्।

अथ जगद्वाचित्वाधिकरणम्

'तथाहीत्यारभ्य वेदितव्य'इत्यन्तं विषयवाक्यं दर्शितम्। तस्यायमर्थः—अजातशत्रुर्नाम काशीराजः स्वसमीपमागत्य 'ब्रह्म ते ब्रुवाणी'त्युक्तवन्तं बालाकिं गार्ग्यं 'सहस्रं दद्म एतस्यां वाचि जनको जनक इति वै जना धावन्ती'ति प्रयस्य

साङ्ख्यतन्त्रसिद्धः प्रकृत्यध्यक्षो भोक्ता पुरुषः उत परमात्मा ? इति संशये, तन्त्रसिद्धः प्रकृतिवियुक्तः पुरुष एवेति । "यस्य चैतत्कर्म" इति कर्मसम्बन्धोक्तेः । कर्मणश्च पुण्यापुण्यरूपस्य क्षेत्रज्ञ एव तत्परवशे सम्भवात्, परमात्मनि तत्सम्बन्धानभ्युपगमात्, जगदुत्पत्तेश्च तत्तद्भोक्तृकर्मनिमित्तत्वात् । उत्तरत्रापि "तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना भोक्ता जीव एवाजातशत्रुणा बालाकिं प्रति प्रतिपादितः । तथा परस्तादपि । "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति, एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते, एवमेवैते आत्मान एनं भुञ्जन्ति" इति भोक्तुर्जीवस्यैव लिङ्गं दृश्यते । "अथास्मिन्प्राण एवैकधा भवती" ति प्राणशब्दोऽपि जीवस्य प्राणभृत्त्वात्तत्रैवोपपद्यते । यद्वाऽस्मिन्नात्मनि वर्त्तमाने प्राण इति व्यधिकरणे सप्तम्यौ प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि स्वतस्तस्य जीवोपकरणत्वात् जीव एवात्र प्रतिपाद्यः । ततश्चायमर्थः । य एतेषामादित्यमण्डलादिस्थानां जीवभोगोपकरणभूतानां पुरुषाणां कर्त्ता कारणभूतः, यस्य चैतत्कारणत्वहेतुभूतं पुण्यापुण्यलक्षणं कर्म स प्रकृतिवियुक्ततया ज्ञातव्य इति । ततश्च "ब्रह्म ते ब्रुवाणी" ति वक्तव्यत्वेनोपक्रान्तं ब्रह्म स एव तदतिरिक्तेश्वरासिद्धेः । ईक्षादीनां च कारणगतानां चेतनधर्मत्वात्तत्रैवोपपत्तेः भोक्तृपुरुषाधिष्ठिता प्रकृतिरेव जगद्धेतुरिति प्राप्त आह—

## जगद्वाचित्वात् । १ । ४ । १६ ॥

परमात्मैवात्र वेदितव्यतयोपदिश्यते । न तन्त्रोक्तः कर्मपरवशः क्षेत्रज्ञः । कुतः ? "यस्य चैतत्कर्म" इति एतच्छब्दान्वितस्य कर्मशब्दस्य क्रियत इति व्युत्पत्त्या चेतनाचेतना-

---

बालाकिना 'य एवैष आदित्ये पुरुषस्तमेवाहमुपास' इत्यादिभिर्वाक्यैर्ब्रह्मत्वेनोपदिष्टानादित्यचन्द्रविद्युत्स्तनयित्न्वादिगतान् पुरुषानब्रह्मत्वेन तत्तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय ततस्तूष्णींभूते तस्मिन् किमेतावदेव परिज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिहिते 'मृषा वै किल मासम्वादयिष्ठा ब्रह्म ते ब्रुवाणी' त्युक्त्वा तमपोद्य यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य वैतत्कर्म स वै वेदितव्य" इति स्वयमुपदिदेश इति । संशयं दर्शयति । किमत्रवेदितव्यतयेति । अत्र=विषयवाक्ये । प्रकृत्यधिष्ठाता पुरुष इति पूर्वपक्षमाह तन्त्रसिद्धइति । जीवस्य लिङ्गमाह । यस्यचेति । तत्परवशे=कर्मपरवशे । परमात्मनो लिङ्ग निरस्यति । परमात्मनीति । तत्सम्बन्धानभ्युपगमात्=कर्मसम्बन्धानभ्युपगमात् । जगदुत्पत्तेरिति । आलोकदानादिना तद्भोगोपयोगिनां तेषां तददृष्टजन्यत्वेन अदृष्टद्वारा पुरुषस्य कर्तृत्वमुपपद्यत इत्यर्थः । कर्मनिमित्तभोक्तृत्वात् जीवत्वमुक्तम् । तदेव यष्टिघातोत्थापनाच्छ्रेष्ठिदृष्टान्तात् सुषुप्त्यवाधादियोगाच्चोपपादयति । उत्तरत्रापीति । 'तौ ह सुप्तं जग्मतुरि' ति बालाक्यजातशत्रू राजभवने सुप्तं पुरुषं प्राप्तवन्तौ तं यष्टिना चिक्षेपेति प्राप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृप्रतिपादन एव लिङ्गानीतिभावः । श्रेष्ठी=प्रधानः । स्वैः=भृत्यैर्ज्ञातिभिरुपाहृतं भुङ्क्ते । यथा च ते भोगसाधनान्युपाहरन्तः प्रधानपुरुषं पालयन्ति तथा वेदितव्यत्वेनोपदिष्ट आत्मा प्राक्तनैरादित्यादिपुरुषैर्भुङ्क्ते तेन च तं पालयन्तीत्युक्तम् । अथास्मिन्निति । जीवात्मनीत्यर्थः । प्राणइति । प्राणशब्दः पञ्चवृत्तिप्राणपरः । प्राणस्य स्वाधीनेन्द्रियस्थितिप्रवृत्तिस्वरूपं प्राधान्यं विवक्षितमितिचेत् तत्तु सर्वथा भवतीति स्वापदशायां तत्तत्प्रतिपादनमसङ्गतं स्यात् अतः सप्तम्यन्तमङ्गीकृत्य जीवपरत्वमुपपादितम् । अस्यां योजनायां सप्तम्यन्तपदयोः सामानाधिकरण्यस्वारस्येऽपि

त्मकजगद्वाचित्वात् । नच कर्मशब्देनात्र पुण्यापुण्यलक्षणं कर्मैव वाच्यम् । "ब्रह्म ते ब्रुवाणी" ति प्रतिज्ञाय बालाकिना ब्रह्मत्वेन निर्दिष्टषोडशपुरुषाणामब्रह्मतयाऽजातशत्रु स्तमब्रह्मवादिनं "मृषा वै खलु मासंवदिष्ठाः" इत्यपोद्य तदविदितं तन्निर्दिष्टपुरुषकर्तृ परमात्मानं वेद्यत्वेन "यो वै बालाके !" इत्यादिनोपदिष्टवान् । अन्यथा पुण्यपापकर्मसम्बन्धिपुरुषाणां बालाकिनैव ज्ञातत्वेन वेदितव्यतया तदुपदेशस्य नैष्फल्यात् । अतश्चिदचिदात्मकप्रपञ्चकार्यत्ववाच्येव कर्मशब्दो, न पुण्यापुण्यमात्रवाची, क्रियामात्रवाची वा । एवं सत्येतच्छब्दोपि सार्थकः, तस्य प्रत्यक्षादिप्रमाणोपस्थापितनिखिलचिदचिन्मिश्रजगद्विषयकत्वेन पुरुषमात्रकर्तृत्वशङ्कानिवृत्त्यर्थत्वात् । तथा चैष वाक्यार्थः । हे बालाके ! ये त्वया ब्रह्मत्वेन पुरुषा उक्ता एतेषां यः कर्त्ता ते यत्कार्यभूताः यस्य एतच्चिदचिदात्मकं कृत्स्नं जगच्च कर्म कार्यभूतं स सर्वेश्वरः परमात्मा वेदितव्य इति ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् । १ । ४ । १७ ॥

"एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते" इत्यादिभोक्तृत्वरूपजीवलिङ्गात् । "अथास्मि-

---

प्राणशब्दस्य लाक्षणिकत्वं तद्व्यावृत्त्यर्थं योजनान्तरमाह । यद्वेति । व्यधिकरणस्यास्मिन्निति पदस्य परमात्मपरत्वमाशङ्क्याह । प्राणशब्दस्येति । कुतइत्यत्राह । स्वतइति । एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्य इतिश्रुतेरर्थं व्याचष्टे । ततश्चायमर्थइत्यादिना । धर्मान्तराणामपिजीवे सम्भवं दर्शयन् पूर्वपक्षमुपसंहरति । ततश्चेति । जीवविषयं पूर्वपक्षमुपन्यस्य सिद्धान्तयति इतिप्राप्त इति । प्रतिज्ञां पूरयित्वा विवृणोति । परमात्मैवेति । यादृशस्य कर्मशब्दस्य जगद्वाचित्वं युक्तं तादृशत्वं सूत्रकाराभिप्रेतमितिमन्वानः कर्मशब्दं विशिनष्टि । एतच्छब्दान्वितत्वेति । योगाद्रूढेर्बलीयस्त्वमेतच्छब्दस्वारस्यञ्च तुल्यं तत्कस्यानुरूपोऽर्थनिश्चय इत्यपेक्षायामाह । न च कर्मशब्देनेति । तुल्यत्वनिवारकबलीयस्त्वसिद्धये हेत्वन्तरमाह । ब्रह्म ते ब्रवाणीति प्रतिज्ञायेति । तदविदितम्=बालाक्याविदितम् । "सहोवाच यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म स वेदितव्य" इति श्रुतिक्रमः । तदर्थमेव संक्षेपेणोपपादयति । तन्निर्दिष्टमिति । तन्निर्दिष्टा ये आदित्यचन्द्रविद्युत्स्तनयित्न्वाकाशवाय्वग्निजलादर्शादिपुरुषास्तेषां कर्ता परमात्मेत्यर्थः । विपक्षे बाधकतर्कमाह । अन्यथेति । पुरुषकर्तृपरमात्मनोऽवेद्यत्व इत्यर्थः । तदुपदेशस्य=पुरुषकर्तृपरमात्मोपदेशस्य । कर्मशब्दार्थमुपसंहरति । अतइति । पुण्यापुण्येति क्रियामात्रवाची चेति दृष्टान्ततयोक्तम् । यथा वेदितव्यतया प्रकृतस्य प्राणनामाभिरामन्त्रणाश्रवणादिना प्राणवैलक्षण्यस्य स्फुटत्वात्प्रकरणस्य बालाक्यविदितपुरुषविशेषविज्ञापनप्रवृत्तत्वाच्च मुख्यप्राणस्य लोकविदितत्वाच्च कर्मशब्दो न मुख्यप्राणव्यापारक्रियामात्रवाची, एवमेव पुण्यापुण्यमात्रवाची न भवतीत्यर्थः । नन्वेतच्छब्दः प्रकृतपरामर्शी तत्कथमप्रकृतजगत्परामर्शी इत्यत्राह । एवं सत्येतच्छब्दोऽपीति । तर्ह्यप्रकृतं जगत् कथमुपस्थाप्यत इत्यत्राह । प्रत्यक्षादिति । एतच्छब्दस्सन्निहितपरामर्शकः सन्निधिश्च बुद्धिस्थितिः स च प्रकरणतो वा प्रकृतार्थान्तरसम्बन्धित्वेन वा प्रसिद्धितो वा भवति प्रकरणादिनासङ्कोचानुपपत्तेः परिशेषात् प्रसिद्धार्थपरामर्शित्वे सति तत्रापि सङ्कोचाभावात् निखिलचिदचिन्मिश्रजगद्विषयक इत्यर्थः । जगदेकदेशभूतस्यादित्यादेः प्रकृतत्वादेकदेशि च जगत्तद्द्वारा बुद्धिस्थम् । अतश्च जगत्परामर्शो युक्त इतिभावः । सिद्धान्तानुसारेणोक्तश्रुत्यर्थं विवृणुते । तथा चेत्यादिना ॥ १६ ॥

सूत्रस्य पूर्वपक्षांशभागं व्याकुर्वन् जीवस्य लिङ्गं निर्दिशति । एवमेवैष इत्यादिना । समासान्तर्गता जीवमुख्यप्राणयोरिति षष्ठी सम्बन्धसामान्यविषया । ततश्च जीवस्य मुख्यप्राणस्य च लिङ्गत्वेन सम्बन्ध इत्यभिप्रेत्य

न्प्राण एवैकधा भवती"ति मुख्यप्राणलिङ्गाच्च तदन्यतरो ग्राह्यो न परमात्मेति चेत्। तस्य परिहारः प्रतर्द्दनविद्यायां "प्राणस्तथानुगमादि"त्यधिकरणेन व्याख्यातः। तत्र खलूपक्रमोपसंहाराभ्यां वाक्यस्य ब्रह्मविषयत्वे निश्चिते अन्यलिङ्गान्यपि तत्परत्वेन नेतव्यानीति वर्णितम्। इहाप्युपक्रमे "ब्रह्म ते ब्रुवाणी"ति विषयत्वेन ब्रह्मोक्तम्। मध्येऽपि "यस्य चैतत्कर्म"इति निखिलजगदात्मककर्मकर्तृत्वेन ब्रह्मैवोक्तम्। उपसंहारश्च "सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद" इति तदुपासकस्य निरतिशयफलश्रवणाद्ब्रह्मपर एवेति। एवमस्य वाक्यस्य ब्रह्मपरत्वे निश्चिते जीवादिलिङ्गान्यपि तत्परत्वेन नेयानीति। नच प्रतर्द्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीतार्थमिति शङ्क्यम्। "यस्य चैतत्कर्म" इति कर्मपदस्य तत्राविचारात्॥ १७॥

नन्वस्तु तावत्प्राणशब्दस्य ब्रह्मणि प्रसिद्धत्वात्तल्लिङ्गानां ब्रह्मपरत्वम्। कथं पुनर्जीवलिङ्गानां ब्रह्मपरत्वम्। "तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिवाक्यं हि प्रबुद्धप्राणस्य सुप्तस्य यष्टिघातोत्थापनादिना शरीरेन्द्रियप्राणातिरिक्तजीवात्मसद्भावप्रतिपादनपरमिति प्रतीयत इत्याशङ्कायामाह—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके।१।४।१८॥

तुशब्दः शङ्कानिरासार्थः। अत्र प्रकरणे जीवग्रहणमन्यार्थं, जीवव्यतिरिक्तब्रह्मबोधनार्थमिति जैमिनिराचार्यो मेने। कुतः? प्रश्नेति। प्रश्नस्तावत्"क्वैष एतद्बालाके! पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदगादि"ति जीवप्रतिबोधानन्तरं परमात्मविषयो दृश्यते

---

जीवलिङ्गात् मुख्यप्राणलिङ्गाच्चेत्युक्तम्। अथवा लिङ्गं ज्ञापकं उभयोरपि विज्ञाप्यतया ज्ञापकेन सम्बन्ध इतिभावः। प्रतर्दनविद्यायां कथं परिहृतम्। तत्रातिदेष्टव्यांशः कः स चात्र कथं घटत इत्यत्राह। तत्रखलूपक्रमोपसंहाराभ्यामिति। तत्परत्वेन नेतव्यानीत्यन्तेनातिदेष्टव्यांश उक्तः नतूपासनार्थत्वमप्यतिदेष्टव्यमितिभावः। तस्यात्र सङ्घटितत्वं दर्शयति। इहाप्युपक्रम इति। ब्रह्मोक्तमिति ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्तत्परत्वं स्वतः प्राप्तमुपक्रमावगतत्वात्प्रबलञ्चेतिभावः। ब्रह्मैवोक्तमिति। मध्यगतवाक्यस्य परमात्मपरत्वस्योपपादितत्वान्मध्येऽपि परमात्मपरत्वमुपपन्नमित्यर्थः। स्वाराज्यम्=स्वाधीनत्वम्। अनः सत्यकामत्वं सत्यसङ्कल्पत्वञ्चोक्तं भवति तत्स्वाराज्यं संसारिभ्योऽस्य श्रेष्ठ्यरूपमाधिपत्यम्। अनेन ग्रन्थेन फलविशेषकीर्तनस्य परमात्मपरत्वे हेतुतोपन्यासो ब्रह्माज्ञानवादिनामनुपपन्न इत्यर्थाद्दर्शितो भवति। अविद्यानिवृत्यतिरेकेण स्वाराज्यशब्दवाच्यत्वाभावात्। दुःखाभावाभिप्रायत्वे लक्षणा सगुणप्राप्तिविषयं वाक्यमिति चेत्सत्यं निर्गुणप्राप्तेरप्रामाणिकत्वाद्विशेषणवैयर्थ्यमेव। न हि ततः परं प्राप्यान्तरमुक्तम्। उपनिषदः समाप्तत्वात्। स्वाराज्यं फले श्रूयते ततः किमित्यत्राह। एवमस्य वाक्यस्येति। निर्वाहप्रकारं दर्शयितुमाह। जीवादिलिङ्गान्यपीति। प्रतर्दनविद्यानिरूपणेनास्य गतार्थता तत्र कर्मविचारस्यानिरूपणादित्यधिकशङ्कानिरासार्थमेतत्सूत्रारम्भ इति नर्तोतुमाशङ्कते नच प्रतर्दनवाक्यनिर्णयेनैवेति॥ १७॥

प्रत्यगात्मलिङ्गानां प्रकारान्तरेण निर्वाहप्रतिपादकमनन्तरसूत्रमवतारयितुं जीवलिङ्गानिर्वहणाकाङ्क्षां दर्शयति। नन्वित्यादिना पूर्वपक्षव्यावृत्त्यर्थं तुशब्द इत्याह। तु शब्दइति। व्याख्येयपदं सविशेष्यमाह। अन्यार्थमिति। अन्यः कस्तदर्थत्वं कथमित्यत्राह। जीवातिरिक्तेति। प्रश्नस्तावत् राज्ञा गार्ग्यं प्रति कृतः देहेन्द्रि-

व्याख्यानम्। प्रतिवचनमपि "यदा सुप्तः स्वप्नं न कश्चन पश्यति, अथास्मिन्प्राणएवैकधा भवति, एतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति जीवव्यतिरिक्तं परमात्मानमेव गमयति। सुषुप्तिसमयेऽयं जीवो मनसेन्द्रियग्रामं सङ्गृह्य परमात्मानमनुप्रविश्य सम्प्रसन्नः स्वस्थतामेति। पुनस्तस्मादेव भोगाय निष्क्रामति। सोऽयं सुषुप्त्याद्याधारतया प्रसिद्धः प्राणशब्दवाच्यः परमात्मैवात्र वेद्य इति। जैमिनिग्रहणमुक्तार्थस्य पूज्यत्वद्योतनार्थम्। अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे विज्ञानमयशब्दवाच्यजीवव्यतिरिक्तं परमात्मानं स्पष्टमामनन्ति। "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदगादि"ति प्रश्नः।"यएषोऽन्तर्हृदय आकाशस्तस्मिन् शेते"इति प्रतिवचनमप्येवमेव। आकाशः परमात्मा "दहरोऽस्मिन्नन्तराकाशः"इत्यत्रोक्तः। तस्मात्परमात्मैवात्र वेदितव्यतयोपदिश्यते, सएव समस्तविश्वकारणं न तन्त्रसिद्धः पुरुषस्तदधिष्ठितं प्रधानं वेति स्थितम् ॥ १८ ॥ इति जगद्वाचित्वाधिकरणम्।

## अथ वाक्यान्वयाधिकरणम्।

"न वा अरे! पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" इत्युपक्रम्य "आत्मा वा अरे! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिना बृहदारण्यके मैत्रेयीं प्रति याज्ञवल्क्येन द्रष्टव्यतयोपदिष्टः आत्मा किं तन्त्रसिद्धः पञ्चविंशकः उत परमात्मा? इति संशये तत्रोपक्रमे पतिजायापुत्रवित्तमित्रपश्वादिप्रियत्व-

---

यमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽप्यन्यं परमात्मानं प्रदर्शयितुम् "सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदगादि"ति बृहदारण्यवाक्यस्य भागमुदाहरति। क्वैषइति। एष विज्ञानमयः पुरुषः यस्तु प्रबुद्ध्यमान एव सर्वेन्द्रियार्थविज्ञानायतयोत्तिष्ठति स एष पुरुषः यष्टिघातोत्थापनात् प्राक् स्वापदशायां क्व स्थितः। एतस्मिन् काले कुत आगात्कुत उद्गत इत्यर्थः। क्वैष इति स्वप्रस्थानप्रश्नः। प्राणादिव्यतिरिक्तस्य जीवस्य यष्टिघातोत्थापनादिनाऽवगमत्वात् प्रश्नस्य जीवातिरिक्तपरमात्मविषयत्वमित्याह। एतत्वालाकइत्यादिना। अतएव प्रतिवचनस्यापि जीवातिरिक्तविषयत्वसिद्धिः। व्याख्यानमिति व्याख्येयपदम् तस्यार्थमाह। प्रतिवचनमिति। तदेवविवृणोति। यदासुप्त इत्यादिना। प्राणाः=जीवाः। देवाः=इन्द्रियाणि। लोकाः=लोकनानि ज्ञानानि। जीवादर्थान्तरपरमात्मपरत्वं दर्शयति। सुषुप्तिसमय इत्यादिना। सूत्रस्यावशिष्टभागं विवृणोति। अपि चैवमेक इति। "य एषोऽन्तर्हृदय आकाश", इत्यत्राकाशशब्दस्य भूताकाशव्यावृत्तिस्समानप्रकरणस्थप्राणशब्दश्रवणासिद्धमुख्यप्राणव्यावृत्तिराकाशशब्देन नसाध्येति नान्योन्याश्रयणम्। जीवाद्भिन्नस्य परस्य परमात्मनः प्रतिबोधनार्थमत्र जीवस्याभिधानमितिभावः। परमात्मनः परत्वसिद्धिमुपपादयन्नधिकरणार्थमुपसंहरति। तस्मादिति ॥ इतिजगद्वाचित्वाधिकरणम्।

### अथ वाक्यान्वयाधिकरणम्

मैत्रेयीब्राह्मणोपक्रमे याज्ञवल्क्येन गार्हस्थ्याश्रमाद्वैराग्यं यियासता मैत्रेय्या भार्यया कात्यायिन्या सहार्थविभागकरणे उक्ते मैत्रेयी याज्ञवल्क्यं प्रति ममृतत्वार्थिनी पप्रच्छ यन्नुमे भगोः सर्वा पृथ्वी वित्तेन पूर्णा स्यात् किमहं तेनामृता स्यामुत नेति। तत्र नेति होवाच याज्ञवल्क्यः यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेन एवं वित्तेनामृतत्वाशा भवेद्यदि वित्तसाध्यानि कर्माण्यमृतत्वे उपयुज्येरन् तदेव तु नास्ति उपासनात्मकज्ञानसाध्यत्वादमृतत्वस्य कर्मणाञ्च ज्ञानविरोधिनां तत्सहभावित्वानुपपत्तेः। सा होवाच मैत्रेयी "येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव

सम्बन्धस्य मध्ये च "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इत्युत्पत्तिविनाशसम्बन्धितया सांसारिकस्वभावप्रतीतेश्च। अन्ते च "विज्ञातारमरे! केन विजानीयादि"ति विज्ञातृत्ववचनस्य च तन्त्रसिद्धे पुरुष एव सम्भवात्स एवेति। नच "अमृतत्वस्य तु नाशास्ति वित्तेन" इत्यादिना अमृतत्वप्राप्त्युपायोपदेशान्नैतद्वाक्यं जीवपरमिति वाच्यम्, मोक्षस्य प्रकृतिवियुक्तात्मस्वरूपयाथात्म्यज्ञानेनैव सम्भवात्,। सर्वात्मनां प्रकृतिवियुक्तस्वरूपस्य ज्ञानैकाकारत्वेन सर्वत्रैकरूपत्वात्। तज्ज्ञानेन सर्वात्मविज्ञानमैकात्म्योपदेशश्चोपपद्यते। "सर्वं तं परादादि"त्यादिना तदन्यत्वनिषेधश्च देवाद्याकाराणामनात्माकारत्वादुपपद्यते। "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः" इत्यादिना कारणत्वं च तस्यैव प्रतिपाद्यते जगदुत्पत्तेः प्रकृत्यधिष्ठातृपुरुषनिमित्तत्वात्। यत्र हि "द्वैतमिव भवती"ति चैकरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं वदन्तन्निषेधति। तस्मात्तन्त्रसिद्धः पुरुष उपदिश्यते तदधिष्ठिता प्रकृतिरेव जगत्कारणमिति प्राप्त आह—

## वाक्यान्वयात्। १। ४। १९॥

परमात्मैवात्र द्रष्टव्यत्वादिना निर्दिश्यते। कुतः? वाक्यान्वयात्। वाक्यं नामैका-

---

भगवान्वेद तदेव मे ब्रूहि। तत्रामृतत्वसाधनदर्शनविषयतयाऽऽत्मैव द्रष्टव्य इत्युपदेशस्य वैराग्यपूर्वकत्वात् तस्य रागविषयेषु तेषु तेषु पतिजायादिषु वैराग्यमुत्पादयितुं याज्ञवल्क्यो "न वा अरे पत्युः कामाय" इत्यादिवाक्यसंदर्भमुवाच। अहमस्याः प्रियः स्यामिति पतिसङ्कल्पायत्तं न पतिप्रियत्वमपि स्वात्मनः परमात्मनः कामाय संकल्पः प्रियो भवतीत्यर्थः। सांसारिकपदार्थानां पत्यादिसङ्कल्पायत्तत्वान्न प्रियत्वं तस्मादेतेभ्यो विरम्य यत्र साक्षात्प्रेम स एव परमात्मा द्रष्टव्यः श्रोतव्य इति सिद्धान्तमतरीत्याऽर्थो द्रष्टव्यः। विचाराङ्गं संशयं दर्शयति। याज्ञवल्क्येनेत्यादिना। पतिजायादिप्रियसम्बन्धेनामसम्बन्धस्य पुरुषपरत्वावगमात् द्रष्टव्यतयोक्तः पञ्चविंशकः पुरुष इतिपूर्वपक्षमाह। तत्रोपक्रमइति। कारणवाक्यानां पञ्चविंशपरत्वं न घटतेऽतोपञ्चविंशातिरिक्तपरमात्मैव द्रष्टव्यत्वेनोक्त इत्यत्राह—अन्तेचेति। आदिमध्यगतजीवहेत्वनुग्रहीता विज्ञातृशब्दस्तत्पर इतिभावः। पतिजायादिविषयसम्बन्धप्रतिपादकवाक्यात् पूर्वमेवामृतत्वप्राप्त्युपायपरत्वमवगम्यते। नातोऽस्य वाक्यस्य जीवपरत्वं घटत इत्याशङ्क्य परिहरति। नचेति। यदि द्रष्टव्यत्वेन मैत्रेयीब्राह्मणे प्रत्यगात्माभिधीयते तदैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपपद्येत जीवानां बहुत्वात् नच तेषां परस्परकार्यकारणभावोस्तीत्याशङ्क्याह। सर्वात्मनामिति। भवतु तावत्प्रत्यगात्मनामनात्माकाराणां बहुत्वं ज्ञानाकारत्वेन सर्वेषां शारीराणामेकरूपत्वादुपपद्यते चैकविज्ञानप्रतिज्ञा ऐक्यादेशश्चेत्यर्थः। कथमात्मनि विज्ञाते सर्वमिदं विज्ञातं स्यात् जगतस्तद्भिन्नत्वादित्याशङ्क्याह। सर्वं तमिति। परादात्=पराकुर्यादभिभवेत्। ऐक्यविधिशेषभूतभेदनिषेधं प्रतिविवक्षन्भेददर्शनेनानर्थप्रतिपादकवाक्यस्यार्थमाह। देवाद्याकाराणामिति। देवाद्याकारस्यानात्माकारत्वात् तस्य तदनन्यत्वमुक्तम्। तस्मादात्मनोऽन्यत्वदर्शनं नाम निष्कृष्टस्वरूपातिरिक्तदेवाद्याकारदर्शनमिति तस्यानर्थहेतुत्वमुच्यत इत्यर्थः। कारणत्वं कथमित्याह। अस्य महत इति। जीवाधिष्ठितप्रधानादाकाशगुणशब्दोत्पत्तिरिति ऋग्वेदादिकारणत्वमुपपद्यत इत्यर्थः। तस्यैव=प्रधानस्य। प्रबुद्धस्य भेदनिषेधप्रतिपादिकां श्रुतिमुदाहरति। यत्र हि द्वैतमिवेति। पूर्वपक्षमुपसंहरति। तस्मादिति। राद्धान्तमाह। एवं प्राप्ते इति। प्रतिज्ञाप्रदर्शनपूर्वकसूत्रं व्याचष्टे। परमात्मैवात्रेति। अमृतत्वार्थिन्यै मैत्रेय्या अमृतत्वसाधनदर्शनविषयतयाऽऽत्मैव द्रष्टव्य इत्युपदिश्यमान आत्मा परमात्मैवावश्यमभ्युपेयः तमेव विद्वानमृत इह

र्थप्रतिपादनपरत्वे सत्याकाङ्क्षादिमत्पदसमुदायस्तस्य सर्वस्य पूर्वापरपर्यालोचने तत्रैवान्वयात् तथाहि "अमृतत्त्वस्य तु नाशास्ति वित्तेन" इति याज्ञवल्क्याद्धनादेर्मोक्षानुपायत्त्वं श्रुत्वा "तदेव मे ब्रूही"त्यमृतत्वमाशासानया मैत्रेय्या प्रार्थितेन याज्ञवल्क्येन द्रष्टव्यत्वादिनोपदिष्टोऽयमात्मा परमात्मैव । तमेव विदित्वाऽतिमृत्युमेति, तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति" इत्याद्यन्वयव्यतिरेकवाक्यैर्मोक्षस्य तदेकज्ञानोपायकत्वमवगम्यते । प्रकृतिवियुक्तात्मस्वरूपज्ञानं तु न स्वातन्त्र्येण मोक्षोपायः । किन्तु परमात्मज्ञानोपयोगित्वेनैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि परमात्मन्येव सम्भवति, तस्य सर्वात्मत्वात् । अन्यथा सर्वत्र ज्ञानस्वरूपतया सर्वात्मविज्ञाने जातेऽप्यचिद्वर्गज्ञानाभावेन सर्वविज्ञानप्रतिज्ञाभङ्गापत्तेः 'इदं सर्वं यदयमात्मा' इत्यैकात्म्योपदेशोऽपि तत्रैवोपपद्यते । इदंशब्देन चिदचिन्मिश्रप्रपञ्चनिर्देशात् । अतएव परमात्मनोऽत्यन्तभिन्नतया सर्वविदो निन्दोच्यते । "सर्वं तं परादादि"ति सर्वविश्वकारणत्वमपि कर्मपरवशानां जीवानां न सम्भवति, मुक्तानां तु जगद्व्यापाररहित्यं वक्ष्यते । यत्तूपक्रमे "आत्मनस्तु कामाय पतिः प्रियो भवती"त्यादिना पत्यादिप्रियसम्बन्धितया मध्ये चोत्पत्तिविनाशसम्बंधितया सांसा-

---

भवति नान्यः पन्था विद्यतेऽयनायेति तस्यैव मोक्ष साधनत्वावगमात् । "ब्रह्म तं परादादित्या"दिना सार्वात्म्यकथनात् । आत्मनो वाऽरे दर्शनेन इत्यादिना । तज्ज्ञानेन = सर्वज्ञानवेदनेन । सर्वोपादानत्वप्रतिपादनाच्चास्मिन् प्रकरणे द्रष्टव्यतयोपदिश्यमान आत्मा परमात्मैव सिद्ध्यतीत्यर्थः । तदुपपादकस्यास्य संदर्भस्य यथा परमात्मपरत्वं तथा दर्शयति । तथाहीत्यादिना । सा होवाच मैत्रेयी यन्नु ग इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता स्यामिति । नेति सहोवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतस्य तु नाशास्ति वित्तेनेति । सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति । सहोवाच याज्ञवल्क्यः प्रियावतारे नः सती प्रिय माषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति । सहोवाच नवा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । एवं जायापुत्रब्रह्मक्षत्रलोकदेवभूतसर्वपरवाक्यान्यनुसन्धेयानि । ततःकिमित्यत आह । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।"तस्य किं फलमित्यत्राह । "मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवति । ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मै वेद । इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा । एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्रण्यनुव्याख्यानानि व्याख्यानान्यस्यैव निःश्वसितानि । इत्यादिकोऽनुसन्धेयः । कारणत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि रद्धान्तोपपादकमित्याह । एकविज्ञानेति एकरूपरूपत्वादात्मनामेकात्मविज्ञानेन सर्वात्मविज्ञानमितिपरोक्तं निरस्यति । अन्यथेत्यादिना । सिद्धान्तपक्षानङ्गीकार इत्यर्थः । नहि ज्ञानाकारत्वेनाचेतनस्य प्रपञ्चस्य ज्ञानं भवितुमर्हतीति सर्वविज्ञानं नोपपद्यत इत्यर्थः । ऐकात्म्योपदेशानुपपत्तिमाह । इदं सर्वमिति । तत्रैव = परमात्मन्येव । अतएवेति । सर्वस्य परमात्मकत्वादेवात्यन्तभिन्नतयानुसन्धानस्य निषेध इत्यर्थः । अस्य महतो निःश्वसितमिति वाक्येनाभिहितं निखिलविश्वस्य कारणत्वं सर्वेश्वरस्य परमात्मन एव सम्भवति नतु कर्मपरतन्त्रस्य प्रत्यगात्मनो जगद्व्यापाररहितस्य मुक्तस्य वेत्याह । सर्वविश्वकारणत्वमिति । परोक्तमर्थं दूषयितुमनूद्यति । यत्तूपक्रम इति । परिहरति । तन्नयुक्तिमिति । "आत्मनस्तु कामाये"त्यत्र यदि जीवात्मनो ग्रहणं स्यात्तदा "आत्मा द्रष्टव्य" इत्यनेन समन्वयो न स्यात् आत्मन

रिक्तस्वभावप्रतीतेर्जीवात्मनोऽन्वेष्टव्यत्वमाशङ्कितं, तन्न युक्तम्, तत्र जीवात्मशब्देन परमात्मन एवाभिधानात्। तस्य सर्वकारणतया सर्वात्मतया च सर्वशब्दावाच्यत्वात् ॥ १९ ॥

तदेव मुन्यन्तरसम्मत्या दृढयति—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । १ । ४ । २० ॥

आत्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाप्रसिद्धेरिदं लिङ्गं गमकम्। यज्जीवस्य परमात्मकार्यतया परमात्मानन्यत्वात् जीवात्मशब्देन परमात्मनोऽभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । १ । ४ । २१ ॥

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय, परं ज्योतिरुपसम्पद्य, स्वेन रूपेणाभिनिष्पद्यते"। "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि"ति शरीरादुत्क्रमिष्यतो जीवस्य एवंभावात्परमात्मना सह तादात्म्यभावात् जीवशब्देन परमात्माऽभिधीयते। नतु परमात्मकार्यतया "न जायते म्रियते वाविपश्चित्, ज्ञाज्ञौ द्वावजौ, अजो नित्यः शाश्वतोऽयमि"त्यादिश्रुतिस्मृतिभिस्तस्योत्पत्तिप्रतिषेधादित्यौडुलोमिराचार्यो मन्यते स्म ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः । १ । ४ । २२ ॥

"य आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मा न वेद, यस्यात्मा शरीरम् य आत्मानमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः, अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" इत्या-

---

इष्टसम्पत्यर्थमेवात्मनः कामाय इत्यादिवाक्यकदम्बोपादानात्। जीवपरत्वे तु तेषामेवमन्वेष्टव्यता प्रसज्येत प्रियस्यैव पुरुषार्थत्वात्। सकलेतरत्यागपूर्वकपरमात्मनो द्रष्टव्यत्वविधानस्य विरोध एव स्यादितिभावः ॥ १९ ॥

सूत्रमवतारयितुमाह। तदेवमिति। एवं जीवात्मशब्देन परमात्मनोऽभिधानम्। सूत्राक्षराणि व्याचष्टे। आत्मविज्ञानेनेति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्यकारणभावकृतैक्यस्य लिङ्गं जीवात्मवाचकशब्देन परमात्माभिधानमित्यर्थः। हेत्वनुरोधेन प्रतिज्ञावाक्यं विवृणोति। जीवात्मशब्देनेति। कार्यात्मना कारणात्मना च वर्तमानयोर्जीवब्रह्मणोः कार्यत्वकारणत्वात्मना भेदः तज्जत्वतदायत्तस्वरूपस्थितिप्रवृत्तिकत्वादिना तदनन्यत्वादभेदोऽपि मुख्यस्तथा च भेदप्रतिपादकवाक्यानामभेदप्रतिपादकवाक्यानाञ्च स्वार्थे प्रामाण्याज्जीवब्रह्मणोर्भेदाभेदसम्बन्धः स्वाभाविक इति भावः ॥ २० ॥

एष इति श्रुत्यर्थस्तु प्राग्दर्शितरीत्यावसेयः। सर्वदा जीवब्रह्मणोर्भेदाभेदश्शास्त्रसम्मतः बद्धावस्थायां व्यापकात्सर्वज्ञाद्ब्रह्मणः अणुपरिमाणकाऽल्पज्ञो जीवात्मा भिन्नोऽपि वृक्षात्पत्रमिव प्रदीपादेः प्रभेव गुणिनो गुण इव प्राणादिन्द्रियमिव पृथक्स्थितिप्रवृत्यभावाद्ब्रह्मांशभूतः शारीरः ब्रह्मपदार्थादभिन्नः तथा मुक्तावपि पृथक्स्थित्यभावेन तदभिन्न इत्यौडुलौमिराचार्यो मन्यते स्म इत्यर्थः ॥ २१ ॥

सूत्रस्वारस्यानुगुणं वाक्यमुदाहरति। य आत्मनीति। अनेन जीवात्मपरमात्मनोश्शरीरशरीरीभावस्तयोर्नियम्यनियन्तृभावश्च दर्शितः। अन्तःस्थितिनियमनयोरनुप्रवेशशासनशब्दाभ्यां प्रत्यभिज्ञातस्तयैकार्थत्वात् सर्वा-

दिश्रुतेः स्वनियम्यभूते जीवात्मन्यात्मतया परमात्मनोऽवस्थितेर्हेतोर्जीवशब्देन परमात्माऽभिधीयते इति काशकृत्स्न आचार्यो मन्यते स्म। ततश्चायं मैत्रेयीब्राह्मणनिष्कर्षार्थः—वित्तादिकमनादृत्य मोक्षोपायं पृच्छन्त्याःस्वपत्न्या मैत्रेय्या "यदेव भगवान् वेत्थ तदेव मे ब्रूहि" इति प्रार्थितेन याज्ञवल्क्येन "न वा अरे! पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय" इत्यारभ्य "आत्मा वा अरे! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यन्तेन परमात्मोपासनं मोक्षोपायत्वेन कथितम्। "आत्मनस्तु कामाय" इत्यत्रात्मशब्दस्य जीवात्मपरत्वे "आत्मा वा" इति परवाक्येनानन्वयापत्तिः, तस्यां च सत्यां वाक्यभेदः, तस्मिंश्च सति पूर्ववाक्यस्य नकिञ्चित्प्रयोजनं दृश्यते। "आत्मा वा अरे! द्रष्टव्यः" इत्यात्मनो द्रष्टव्यत्वौपयिकत्वेन तदुपदेशात्। उभयत्र जीवात्मपरत्वे तु परमात्मैकान्तधर्मश्रुतिर्व्याकुप्येत। अतोऽरे हे मैत्रेयि! पत्यादेः कामाय कामोऽभिलाषो मत्प्रयोजनायाहमस्य प्रियः स्यामित्येवंरूपस्तन्निवृत्तये पत्यादयः प्रिया न भवन्ति, अपि त्वात्मनः परमात्मनः कामाय स्वाराधकप्रियप्रतिलम्भनरूपाभिलाषसिद्ध्य इत्यर्थः। परमात्मा हि कर्मभिराराधितः स्वाराधकानां सर्ववस्तुगतं प्रियत्वमापादयति। "एषह्येवानन्दयाती"ति श्रुतेः। "योगक्षेमं वहाम्यहमि"तिस्मृतेश्च। ततश्च "आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणं ब्रह्म "तं परादादि"त्यादिना च ब्रह्मणोऽत्यन्तभिन्नचिदचित्सर्वपदार्थज्ञातृनिन्दापूर्वकं सर्वस्य ब्रह्मात्मकत्वेन तदभिन्नत्वात् "इदꣳ सर्वं यदयमात्मे"ति चिदचिद्वस्तुनोब्रह्मणाऽभेदमुपदिश्य, दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतकरणनियमनं च सामान्यतोऽभिधाय "सयथार्द्रेन्धनाग्नेरि"त्यादिना स यथा सर्वा-

---

त्मत्वविवरणरूपत्वाच्चोपादत्ते अन्तःप्रविष्ट इति सूत्रं व्याचष्टे। स्वनियम्यभूते जीवात्मनीत्यादिना। इह जीववाचिशब्दः कः तस्य परमात्मपरत्वे किं कारणं तस्मिन् सति हि तत्पर्यन्तत्वनिर्वाहप्रकारापेक्षा तत्पर्यन्तत्वे च किं फलमित्यपेक्षायामाह। ततश्चायमिति। पत्युःकामायइति। कामः = सङ्कल्पः। कामाय सङ्कल्पाय, सङ्कल्पं सफलीकर्त्तुमित्यर्थः। "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इतिचतुर्थी। पत्युः प्रियत्वमहमस्याः प्रियः स्यामितिपतिसङ्कल्पसाफल्याय न भवति पतिसङ्कल्पायत्तं न पतिप्रियत्वमपितु परमात्मनः कामायसङ्कल्पात् प्रियो भवतीत्यर्थः। वाक्यभेद इति। महावाक्यभेद इत्यर्थः। एकवाक्यत्वेन निर्वाहे सुशके वाक्यभेदोऽनुपपन्नः। "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत" इति न्यायादित्यर्थः। वाक्यभेदाभ्युपगमेऽपि प्रयोजनाभावादन्वयोऽनुपपन्न इत्याह। तस्मिंश्चसतीति। "आत्मा द्रष्टव्य" इत्यत्र द्रष्टव्यत्वेनोपदिश्यमान आत्मा परमात्मेत्यवश्यमभ्युपेयः तस्यैव मोक्षसाधनत्वावगमादित्याह। आत्मावारे द्रष्टव्य इति। यद्यात्मा द्रष्टव्य इत्यत्र परमात्मनो ग्रहणं न स्यात्तदा कथं मैत्रेय्यात्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवति। ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेद। एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतत्' इत्यादिश्रुतयः अत्र प्रकरणे सन्ति ताभिः सर्वोपादानत्वसर्वात्म्यसर्वगतत्वसर्वाधारत्वसर्वनियन्तृत्वादयो धर्माः प्रतिपाद्यमानाः परमात्मासाधारणधर्माः परमात्मव्यतिरिक्तेऽन्यत्रोपपद्येरन् इत्याह। उभयत्र जीवात्मपरत्व इति। श्रुत्यर्थं दर्शयति। अतोहे मैत्रेयीति। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। एष ह्येवेति। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वंविदितं भवतीति षष्ठपाठो मूले उदाहृतः। ब्रह्म तं परादादिति। यः चिदचिदात्मकं निखिलं वस्तु ब्रह्मणोऽत्यन्तभिन्नं वेद तं सर्वं परादात् अभिभवेत् संसारयतीत्यर्थः। तत्रहेतुमाह। सर्वस्येति। तदभिन्नत्वात् = ब्रह्माभिन्नत्वात्। दुन्दुभ्यादिदृष्टान्तैश्चेति। स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य

सामपाम्" इत्यादिना च, पुनरुपास्यलक्षणं सर्वविश्वकारणत्वरूपं करणनिवहनियमनं च विस्तरत उक्त्वा, "स यथा सैन्धवखिल्यउदके प्रास्तः" इत्यादिना मोक्षोपायप्रवृत्तिप्रोत्साहनाय स्वनियम्यभूतजीवात्मतयाऽवस्थितस्य परमात्मनो व्यापकत्वं, उत्तरमैत्रेयीब्राह्मणे च "स यथा सैन्धवघनः" इत्यादिना जीवात्मतया तदभेदेनावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकस्वरूपत्वमुपपाद्य, "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यनेन च तमनुपासीनस्य जीवस्य संसारं "न प्रेत्य संज्ञास्ती" त्यनेन च तमुपासीनस्य मोक्षं चाभिधाय, पुनरपि "यत्र हि द्वैतमिव भवती" त्यादिना च विनष्टसर्वाज्ञानस्य ध्रुवास्मृतिमतो विश्वस्य ब्रह्मात्मकतया ब्रह्माभिन्नं सर्वं वस्तु पश्यतो ब्रह्मभिन्नवस्त्वन्तराभावेन भेद दर्शनं निखिलं निराकृत्य, "येनेदं सर्वं विजानाति तं केन विजानीयात्" इत्यनेन च जीवो येन स्वस्मिन्नात्मतयावस्थितेन परमात्मना बोधितः सन्निदं सर्वं विजानाति तं केन विजानीयान्न केनापीति तस्य दुर्ज्ञेयतामापाद्य, "विज्ञातारमरे! केन विजानीयात्" इति सर्वविज्ञातारं सर्वजगदेककारणभूतं पुरुषोत्तममुपक्रमोक्तात्तदुपासनादृते केन विजानीयान्न केनापीति तदु-

---

वा शब्दो गृहीतः। इति श्रुतिवाक्यम्। अस्यार्थः—दुन्दुभौ हन्यमाने ततो निःसरतः शब्दान्न निरोद्धुं शक्नुयात्, कथं तर्हि निरुणद्धीत्यत्राह। दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वाशब्दो गृहीतः। दुन्दुभिनिरोधेन तदाहन्तृपुरुषनिरोधेन वा शब्दो निरुध्यते एवमिन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम्। अतो विषयापसरणेन वेन्द्रियनिरोधेन वा परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुध्यते। तथा चोपासनाकरणभूतमनःप्रभृतिकरणनियमनमुक्तं भवतीति। स यथार्द्रेन्धनाग्नेरिति। स यथार्द्रेन्धनाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्ति एवशब्दोऽकारान्त इन्धनवाची आर्द्रेन्धनानाग्निग्रहणं निमित्तोपादानयोर्ग्रहणार्थम। अग्निर्हि धूमोत्पत्तौ निमित्तम्। इन्धनन्तूपादानम्। अभ्याहितात्=ध्यानवीजादिना प्रवर्तितात्, पृथग्विधा धूमा निर्गच्छन्तीत्यर्थः। स यथा सर्वासामपां समुद्र एकायतनमेवं सर्वेषां स्पर्शानां त्वगेकायनम्। समुद्रस्यापामायतनत्वं नाम तदुपादातृत्वमेवं त्वचःस्पर्शायतनत्वं नाम तदुपादातृत्वम। यथा समुद्रो भूयसीरपो गृह्णाति एवं त्वगिन्द्रियसमसङ्ख्याकान् स्पर्शविशेषान् गृह्णाति। ततश्च त्वगिन्द्रियविषयकव्यापारा अनन्ता इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम। एवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनम्। एवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थएकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वानां पादावेकायनम्। एवं सर्वेषां वेदानां वागेकायनम्॥ इतिश्रुतीनां क्रमः। ततश्चात्मसाक्षात्कारार्थिनैतेवृत्तिविशेषात्मनिवोद्धव्याः। ब्रह्मोपासनोपयोगीकरणग्रामनियमनं विवृतं भवतीत्यर्थः। सर्वावस्थास्वपि जीवस्य परमात्मनिष्ठतया स्वातन्त्र्याभावज्ञापनाय जीववाचिशब्देन परमात्मानं निर्दिशन्नमृतत्वोपायप्रवृत्तिप्रोत्साहनाय भूतसङ्घात्मकशरीरजन्ममरणानुविधायिनः संसरतो जीवस्यापरिच्छिन्न परमात्मनोरेकस्वरूपत्वमापादयति सयथेति स यथा सैन्धवखिल्यउदके प्रस्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायैव स्यात् यतो यतस्वाददीत लवणमेव। अस्यार्थः सैन्धवखिल्यो लवणपिण्डः खिल एव खिल्यः स्वार्थेयत् यथासैन्धवसकलमुदके प्रक्षिप्तमुदकमनुप्रविश्य विलीयत एव। अस्य विलीनस्य लवणस्योद्ग्रहणायोदकात् पृथक्कृत्य ग्रहीतुं यथा नैव कोऽपि शक्तः स्यात् तच्चोदकं यथा यतो यतो यस्माद्यस्माद्देशान्मध्यतः पार्श्वतो वाऽऽददीत तत्तोयं लवणमेव भवतीति श्रुत्यर्थंसंक्षिप्य दर्शयति मोक्षोपायइति। एतेभ्य इति। "एवंवा अरे महद्भूतमनन्तमपारं विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति॥ एवमेवेदं महद्भूतममनन्तमपरिच्छेद्यमपारं गुणतोऽप्यरिच्छेद्यं ब्रह्म. विज्ञानघनएव

पासनमेवामृतत्वोपायः परमात्मप्राप्तिरेवामृतत्वमित्युपसंहृतम्। अतः परमात्मैवात्र प्रकरणे निर्दिश्यते। सएव निखिलविश्वकारणं, न तन्त्रसिद्धः पुरुषस्तदधिष्ठिता प्रकृतिर्वेति स्थितम्॥ २२॥ इति वाक्यान्वयाधिकरणम्।

इत्थं निरीश्वरसाङ्ख्यमतं निराकृत्य सेश्वरं तन्निराकुर्वता जगत्कारणत्वप्रतिपादकवाक्यजातं सर्वज्ञे परब्रह्मणि श्रीपुरुषोत्तमे समन्वेतुकामेनेदमारभ्यते। ननु ब्रह्मैव जगत्करणम्, न प्रधानमित्युक्तेऽपि तत् किं जगतो निमित्तकारणमात्रमुतोपादानकारणमपीति संशये, निमित्तमात्रमेवेति। कुतः? "स ईक्षाञ्चक्रे, तदैक्षत, स ऐक्षत" त्यादिश्रुत्युक्तेक्षापूर्वककर्तृत्वस्य लोके निमित्तकारणेषु कुलालसुवर्णकारादिष्विव निमित्तमात्र एव सम्भवात्, कार्यकारणयोश्च सारूप्यदर्शनात्। ब्रह्मणोऽपरिणामितया तदधिष्ठितेनाचेतनेन कार्यसधर्मेण परिणामिना प्रधानेनोपादानेन भाव्यम्। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्। ध्यायते ध्यासिता तेन तन्यते प्रेरिता पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती जनित्री भूतभाविनी" त्यादिश्रुतेः "अस्मान्मायी सृजते विश्वमेतत्, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति। "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। "निमित्तमात्रमेवासौ सृष्टानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः" इत्यादिश्रुतिस्मृतिभिर्निमित्तोपादानयोर्मृत्कुलालादिवद्भेदे प्रतिपादनाच्च, कार्यसिद्धेश्च लोकेऽनेककारकसापेक्षत्वदर्शनाच्च, अतोनिमित्तमात्रमेव ब्रह्म, त दधिष्ठितं प्रधानमेवोपादानमिति प्राप्ते राद्धान्तः—

---

जीवशरीरकतयैतेभ्यो भूतेभ्यउत्थाय तान्येवानुविनश्यति भूतेषूत्पद्यमानेषु स्वयमुत्पद्यमानस्तेषुनश्यत्स्वनुपश्चात्स्वयंनश्यतीत्यर्थः। विनाशोनामात्यन्तज्ञानसंकोचः उत्पत्तिर्नामविकाशप्रादुर्भावइति विवेकः। न प्रेत्य संज्ञाऽस्तीति प्रेत्य चरमदेहवियोगं प्राप्य मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसंकोचाभावे न संज्ञाऽस्ति। समीत्येकीकारे ज्ञाधातोर्ज्ञानमर्थः ततश्च भूतसङ्घातेनैकीकृत्यज्ञानं संज्ञाशब्दार्थः। यत्र द्वैतमिव भवतीति अस्यार्थं विवृणोति विनष्टेत्यादिना। येनेदंसर्वमिति। अस्यार्थंव्याचष्टे जीवइत्यादिदा। अधिकरणार्थंनिगमयति अतइति॥ २२॥ इतिवाक्यन्वयाधिकरणम्॥

अथ प्रकृत्यधिकरणम्।

पूर्वोत्तरयोरधिकरणयोः सङ्गतिं दर्शयति। इत्थमित्यादिना। मैत्रेयीब्राह्मणे परब्रह्मणः सर्वविधकारणत्वमुक्तम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिभिः। तदयुक्तम्। परब्रह्मणो निमित्तमात्रत्वात् उपादानन्तु प्रधानमितिशङ्कते नन्विति। किं ब्रह्म निमित्तमात्रम् उत उपादानमपीति संशयं दर्शयति। तत्किमित्यादिना। तत्र पूर्वपक्षमाह। निमित्तकारणमिति। हेतूत्थापकाकाङ्क्षामाह। कुतइति। कारणत्वश्रुतेरन्यथानुपपत्त्युपयोगिनीं व्याप्तिं शिक्षयति। स ईक्षाञ्चक्रइति। ईश्वरस्य चेतनत्वादपरिणामित्वेनाधिष्ठातृत्वेन च प्रधानस्याचेतनतया परिणामित्वेनाधिष्ठेयत्वेन च वेदान्तप्रतिपादितत्वमित्याह। ब्रह्मणइति। ब्रह्मणोऽपरिणामित्वबोधिकां श्रुतिमुदाहरति। निष्कलमिति। विकारजननीमिति। प्रकृतेर्विकारित्वाधिष्ठेयविषयत्वम्। गौरनाद्यन्तवती इति। गौः प्रधानम् आद्यन्तरहिता नित्या इत्यर्थः। जनित्री=समष्टिसृष्टिकरी। भूतभाविनी=व्यष्टिसृष्टिकरी। अस्मानिति विश्वस्योपादानकारणभूतां प्रकृतिमधिष्ठाय भगवान् पुरुषोत्तमः विश्वं जगत् सृजतीत्यर्थः। प्रधानप्रतिपादके वाक्ये तद्विशेषणतयेश्वरस्याधिष्ठातृत्वं

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १ । ४ । २३ ॥

चकारो निमित्तसमुच्चयार्थः । प्रकृतिरुपादानं निमित्तं च ब्रह्मैव । कुतः ? प्रतिज्ञेति प्रतिज्ञा च दृष्टांतश्च तयोरनुपरोधात्सामञ्जस्यात् । प्रतिज्ञा च "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्युपादानकारणविज्ञानेन सर्वकार्य-विज्ञानविषया, कार्यस्य तदनतिरिक्तत्वात् । दृष्टान्तोऽपि "यथा सोम्य ! एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि"त्यादिरूपः । उपादानकारणविज्ञानेन सर्वकार्यविज्ञानगोचर एव ब्रह्मणो निमित्तमात्रत्वे तु कुलालादिज्ञानेन मृन्मयाज्ञानवत्तज्ज्ञानेन सर्वकार्यविज्ञानं न स्यादे-वेति, तयोर्बाध एव स्यात् । यत्पुनरुक्तमीक्षापूर्वककर्तृत्वस्य लोके कुलालादाविव निमित्तमात्रे एव सम्भवादिति, तत्रोच्यते । न लोकवदिह भाव्यम् "सदेव सोम्येदमग्र आसीदेकमेवे" ति सृष्टेः प्रागेकत्वावधारणादद्वितीयपदेनाधिष्ठात्रन्तराभावज्ञापनाच्च । "उत तमादेशमप्राक्ष्यः" इत्यत्रापि निमित्तोपादानयोरैक्यस्य प्रतीयमानत्वाच्च । तथाहि "आदिशती"त्यादेशः । वाहुलकात्कर्तरि घञ्, यद्वा भावार्थघञन्तादादेशशब्दात् "अर्शआद्यच्" उभयत्रापि प्रशासि-तृत्वाधिकरणत्वमेवादेशशब्दस्य युक्तम् । तथा च "अन्तःप्रविष्टः शास्ता जनानां, एतस्य वा अक्षरस्य प्रशासने गार्गि ! प्रशासितारं सर्वेषाम्" इत्यादिश्रुतिस्मृतिभ्यामादेशशब्देन प्रशासनरूपव्यापाराश्रयः कर्त्ता विवक्षितः । तमादेशमादेष्टारमधिष्ठातारमप्राक्ष्यः येनादेष्ट्रा-धिष्ठात्रा श्रुतेनाश्रुतं सर्वं श्रुतं भवतीति । किञ्च ब्रह्मणो जगदुपादानत्वे "यतो वा इमानि

---

दर्शितम् । ईश्वरप्रतिपादके वाक्ये तस्य प्रधानाधिष्ठातृतयोपादानभूतात्तस्माद् भेदंदर्शयति । मायान्त्विति । महेश्वरशब्देन मायिशब्दनिर्दिष्टस्य निमित्तकारणस्य मायां प्रति प्रेरकत्वं विवक्षितमितिभावः । श्रुतेरुक्तार्थपरत्वं स्मृतिसम्वादेन द्रढयति । मयाध्यक्षेणेति । ननु यत्र निमित्तोपादनयोरुभयोरप्यपेक्षा तत्र भवतु तयोर्भेदो यथा वृश्चिको वृश्चिकोपादान-गोमयानपेक्षः, यथा च स्वर्गे साध्ये ज्योतिष्टोमो दर्शपूर्णमासनिरपेक्षः । एवं निमित्तमात्रेण कार्यं सिध्यतीति चेत् किं प्रधानकारणाश्रयेणेत्यत्राह । कार्यसिद्धिश्चेति । निगमयति 'अतइति । परिणामित्वापरिणामित्वयोश्चेतनत्वाचेतनत्वयोः प्रेर्यत्वप्रेरकत्वयोश्चैकस्मिन् व्याहतत्वाच्चायोग्यं निमित्तोपादानैक्यं न वेदान्ताः प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः । पूर्वपक्षमनूद्य समाधत्ते । एवं प्राप्तइति । सूत्रं व्याचष्टे । चकारइति । स्वभावमूलप्रकृतिव्यावृत्त्यर्थं प्रकृतिशब्दं व्याकरोति उपादानमिति । प्रागुपदर्शितचकारार्थं विवृण्वन् वाक्यार्थं दर्शयति । निमित्तञ्चेति । का प्रतिज्ञा को दृष्टान्तः तयोरनु-परोधः कथमित्यत्राह । प्रतिज्ञाचेति । श्रुत्यर्थः स्वयं दर्शयिष्यते । अनुपरोधं विवृणोति । ब्रह्मणोन्निमित्तमात्रेत्विति । तज्ज्ञानेन=निमित्तकारणब्रह्मज्ञानेन । प्रागुक्तार्थं दूषयितुमनूद्यति । यत्पुनरुक्तमिति । समाधत्ते । तत्रोच्यत इति । प्राक्सृष्टेरेकत्वावधारणन्तु निमित्तोपादानभेदे न घटते, अतः एकत्वावधारणञ्च हेतुः अधिष्ठात्रितरनिवारणञ्चहेतु-रित्यर्थः । निमित्तोपादानभेदसिद्धिं निराचिकीर्षुः निमित्तोपादनयोरैक्यं श्रुतिप्रमाणेन समर्थयति । उततमादेशमप्राक्ष्य-इति । तदुपपादयति । तथाहीत्यादिना । आङ्पूर्वकदिशधातोः वाहुलकात् कर्त्तरि घञिकृते आदेशइतिनिष्पद्यते । प्रशासितृत्व-मिहादेशशब्दार्थ इत्याशयेनाह । आदिशतीत्यादेशइति । अकर्तरिचकारके संज्ञायामिति घञः कर्तृव्यतिरिक्तविषयत्वात् कथमादिशतीत्यादेश इत्यत आह । यद्वेति । घञन्ताद्भाववाचिन आदेशशब्दादर्शादजन्तादपि प्रशासितृत्वाधिकरणत्वमेवा-देशशब्दार्थ इत्याह । भावार्थघञन्तादिति । उक्तार्थे श्रुतिं प्रमाणयति । अन्तःप्रविष्टइति । प्रशासितृत्वे ब्रह्मणः सिद्धे एवं

भूतानि जायन्ते, जन्माद्यस्य यतः, यतः सर्वाणि भूतानि भवन्ति" इत्यादिश्रुतिस्मृतिसूत्रेषु "जनिकर्तुः प्रकृतिरि"ति सूत्रेण प्रकृत्यर्थविहितपञ्चम्याः प्रामाण्यात्। ननु च वृत्तौ "पुत्रात्प्रमोदो जायते" इत्यनुपादानेऽपि पञ्चमीदर्शनात्प्रकृतिपदं हेतुपरमित्युपादानपरत्व-निषेधात्। न्यासेऽपीदमेवाश्रित्यासति प्रकृतिग्रहणे उपादानस्यैवापादानसंज्ञा स्यात्, प्रत्या-सन्नत्वान्नेतरस्य, प्रकृतिग्रहणात्कारणमात्रस्य भवतीति प्रकृतिपदमनुपादानेऽप्यपादानसंज्ञा-सिद्ध्यर्थमित्युक्तत्वात्। महाभाष्यकृद्भिरपि "अयमपि प्रयोगः शक्योऽवक्तुम्, गोलोमाविलो-मभ्यो दूर्वा जायन्ते अपक्रामन्ति ताभ्यः" इत्यादिना दूर्वादिप्रत्ययवर्णितत्वात्, "ध्रुवमपाये" इत्यनेनैवापादानसंज्ञासिद्धेरिदं सूत्रमनारभ्यमिति प्रत्याख्यातत्वात्। कैयटेऽपि "अपक्रमणा-वधित्वे लोमादिषु कार्यप्रतीतिर्नसम्भवती"त्याशङ्क्य बिलान्निष्क्रामतो दीर्घभोगस्य भोगि-

---

वर्णनीयमित्यत्राह। एतस्य वा इति नचाकर्त्रर्थप्रत्ययान्तस्य कथं शासितृवाचकत्वम् विवक्षातः कारकाणि भवन्तीति भावः। श्रुत्यर्थं व्याचष्टे। तमादेशमिति। ब्रह्मणो जगदुपादानत्वे श्रुतिं प्रमाणयति। किञ्चेति। जनिकर्त्तुः प्रकृतिरिति सूत्रं ब्रह्मणो जगदुपादानत्वे गमकतयाऽवोचत् प्रकृतिपदमत्रोपादानकारणपरम्। जननं जनिरुत्पत्तिः,इणजादिभ्य इतिजनेर्भावे इण् प्रत्ययः। जनिवध्योरिति न वृद्धिः। तस्याः कर्त्तेति शेषषष्ठ्या समासो न तु कारकषष्ठ्या तृजकाभ्यामिति निषेधात्। एवञ्चोत्पत्त्याश्रयस्य यो हेतुरुपादानकारणं तदपादानसंज्ञं स्यादिति सूत्रार्थः। तत्र विवदन्ते केचित्। स्यादेवं यद्यु-क्तसूत्रेणोपादानत्वविरहिणः पञ्चमी नोपलभ्येत। नत्वेवम्; पुत्रात् प्रमोदो जायते इत्यादावुपादानत्वाभाववतः पुत्रशब्दात् पञ्चमीदर्शनादितिप्रकृतिपदस्य कारणमात्रपरतावसेया नोपादानपरतेत्याक्षिपन्ति। नन्विति। वृत्तौ=अष्टाध्यायी-व्याख्यायां काशिकायाम्। इत्थं हि काशिकाग्रन्थः। जनिकर्त्तुः प्रकृतिः। जनेः कर्ता जन्यर्थस्य जन्मनः कर्ता जायमानः तस्य या प्रकृतिः कारणं हेतुःतत् कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते गोमयाद् वृश्चिको जायते। इति प्रकृति-पदेन हेतुमात्रं वृत्तिकाराभिप्रेतम्। न्यासेऽपीति। वृत्तिग्रन्थस्य व्याख्यानं न्यासग्रन्थःसचेत्थम्। जनिशब्दोऽत्रसाहचर्या-ज्जन्यर्थे वर्त्तते। अतएवाह। जन्यर्थस्येति। जन्मनइति। एतेन जन्यर्थं दर्शयति तथाहि जनीप्रादुर्भावे पठ्यते प्रादुर्भावो जन्म एव। कः पुनस्तस्य कर्तेत्यत आह जायमान इति "ज्ञाजनोर्जा" इति जादेशः। अथ प्रकृतिग्रहणं किमर्थम्। यावता ध्रुवमित्यनुवर्त्तते ध्रुवश्चावधिभूतमित्युक्तम्। जनिकर्त्तुश्चावधिः कारणमेव भवति तत्रान्तरेणापि प्रकृतिग्रहणं प्रकृतेरेव भविष्यति। नैतदस्ति। पुत्रात्प्रमोदो जायते, इत्यादौ पुत्रादेरपि अपादानसंज्ञा यथा स्यादित्येवमर्थं प्रकृति-ग्रहणम्। द्विविधं हि कारणमुपादानकारणं सहकारिकारणञ्च। तत्र यत्कार्येणाभिन्नदेशं तदुपादानकारणं यथा घटस्य मृत्पिण्डः। सहकारिकारणं यत्कार्येण भिन्नदेशं यथा तस्यैव दण्डचक्रादि। तत्रासति प्रकृतिग्रहणे प्रत्यासत्तेरुपादान-कारणस्यैव स्यान्नेतरस्य प्रकृतिग्रहणेतु सर्वस्यैव कारणमात्रस्य भवति। भाष्यकृद्भिरपीति। इत्थं हि तत्र भाष्यम्–अयमपि योगः शक्योऽवक्तुम्। कथम्? गोमयाद् वृश्चिको जायते। गोलोमाविलोमभ्यो दूर्वा जायन्त इति अपक्रामन्ति तास्तेभ्यः। यद्यपक्रामन्ति किंनात्यन्तायापक्रामन्ति सन्ततत्वात् अथवान्यश्चान्याश्च प्रादुर्भवन्ति इति। कैयटेऽपीति। इत्थंहि तदीयः प्रदीपग्रन्थः। अपक्रामन्ति ता इति। लोकप्रसिद्ध्याश्रयेणैतदुच्यते। लोके यद्यस्माज्जायते तत्तस्मान्निर्गच्छ-तीत्युच्यते। तर्काश्रयास्तु प्रक्रिया भिद्यन्ते वैशेषिकदर्शने परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशे कार्यमुत्पद्यते इति नास्ति कार्यस्यापक्रमः। साङ्ख्यदर्शनेऽपि आविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाभ्युपगमान्नास्त्यपक्रमः। यदीति। अवि-यद्यतोऽपक्रामति तत्पुनस्तत्र न दृश्यते इति प्रसिद्धम्। इह तु तत्रास्ति दर्शनमिति प्रश्नः। सन्ततत्वादिति। अवि-च्छेदादित्यर्थः। यथा विलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थः। अथवेति। क्षणिकपक्षं द्रव्यान्तरारम्भपक्षं वा परिणामपक्षं वाश्रित्यै तदुक्तमित्याहुः। ननु सतो जन्मायोगादसतश्च कर्तृत्वासम्भवात

नोऽविच्छिन्नतया तत्रोपलब्धिवत्कार्यस्यापि दूर्वादेस्तत्रोपलब्धिरित्यवधित्वस्यैव तत्रोपपादितत्वात्, अत उपादान एव, "जनिकर्तु रि"त्यनेन पञ्चमीति न नियमोऽन्यत्रापि सम्भवादिति चेन्न, कारणमात्रार्थकत्वेऽप्युपादानपरत्वाभ्युपगमात्, छागपशुन्यायेन यथा "पशुना यजेदि"त्यत्र पशुपदस्य पशुमात्रवाचकत्वेऽपि छागवपाया इति शेषात्पशुविशेषपरत्वम्। तद्वत्प्रकृतेऽप्यनुसन्धेयम्। न चोक्तन्यायविरोधोऽत्र निश्चयौपयिकवाक्यशेषाभावादिति शङ्क्यम्, "आत्मन आकाशः सम्भूतः" इत्यादावुपादाने पञ्चम्यां "सच्च त्यच्चाभवदि"ति वाक्यशेषेण "सोऽकामयत बहुस्यामि" त्येतच्छाखान्तरस्थवाक्येन प्रतीतसामानाधिकरण्यस्य नियामकत्वात्। अपि च ब्रह्मण उपादानत्वाभावे कार्ये व्याप्यभावात्तस्य परिच्छिन्नत्वापत्तिरप्यावश्यकी। एतदुक्तं भवति, कारणत्वं नाम कार्योत्पत्तिप्राक्कालीननियतसम्बन्धाश्रयत्वम्। तद्द्विविधं निमित्तोपादानभेदात् तत्र निमित्तत्वं नाम कार्योत्पत्त्यनुकूलज्ञानचिकीर्षाकृतिमत्त्वे सति तद्व्यापाराश्रयत्वं, व्यापाराश्रयत्वंच स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसङ्कुचितभोगानर्हज्ञानशक्तिधर्मकाणां चेतनानां कर्मफलभोगार्हज्ञानप्रकाशेन तत्तत्कर्मफलतत्तद्भोगकरणैः सह संयोजयितृत्वम्। परमते तु तत्त्वं दुर्घटं, कार्यस्य कल्पितत्वाङ्गीकारेण कुलालवदुपादानगोचरप्रयत्नचिकीर्षादिमत्त्वासम्भवात्। नहि कल्पितशुक्तिरूप्यादिकं प्रति भ्रान्तस्यान्यस्य वा कर्त्तृत्वं प्रामाणिकम्। नच रूप्यादौ साक्ष्येव कर्त्ता, नह्यदर्शनमात्रेण

---

पक्षान्तराभावाच्च कथमङ्कुरो जायत इति प्रयोगः। नैष दोषः। बुद्धिव्यवस्थापितस्यार्थस्य क्रियायां कारकरूपोपगमात्। अत्रेदमवधेयम्। न्यासमतमाश्रित्य प्रकृतिपदस्य हेतुमात्रपरत्वोपवर्णनम्। भाष्यकैयटयोस्तु उपादानपरत्वमभिमतम्। पुत्रात्प्रमोदोजायते इत्यस्य प्रामाणिकत्वे द्वेधा निर्वाहः। वाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगात्। उणादौ पठितानां प्रकृतीनामल्पत्वदर्शनात् वाहुलकमाश्रितमिति तदर्थः। 'विभाषा गुणेऽस्त्रियामि'त्यत्र गुणेऽस्त्रियामित्यस्य प्रायिकत्वेन पुत्रादित्यादौ पञ्चम्येकः। स्वरूपसतः पुत्रस्य प्रमोदहेतुत्वे मूर्खपतितादिपुत्रतोऽपि प्रमोदोत्पत्त्यापत्तिस्तस्मादत्र पुत्रपदं पुत्रनिष्ठसौशील्यादिसद्गुणज्ञानपरमेवेति पितृनिष्ठं पुत्रवृत्तिसौशील्यादिसद्गुणविषयकज्ञानमेव प्रमोदरूपत्वेन परिणमत इत्यङ्गीकारेणात्राप्युपादानकारणत्वेनैवापादानसंज्ञेति द्वितीयः। ज्ञाने प्रमोदस्य समवायिकारणत्वाभावेप्यसमवायिकारणसत्त्वे नोपादानकारणत्वाच्चतेः। क्वचित्समवायिकारणनाशेनेव क्वचिदसमवायिकारणनाशेनापि कार्यनाशान्न कोपि दोष इति। किञ्च हेतौ, जनिकर्त्तुः पञ्चमी, अकर्तर्यृणे, विभाषा गुणेऽस्त्रियाम्। इत्येवं पाठेन सकलेष्टसिद्धौ 'जनिकर्त्तुः प्रकृतिः' इतिप्रकृतिपदोपादानेनापादानकरणसामर्थ्यात् जायमानस्य प्रकृतिवाचकस्य प्रकृतिरपादानमित्येवार्थः कल्पनीय इति। ब्रह्मणः प्रजाः प्रजायन्ते, पितुः पुत्रो जायते' इत्यादौ तु तदैक्षत एकोऽहं वहु स्यां प्रजायेय इति, आत्मा वै जायते पुत्र इति श्रुतिस्मृतिभ्यां स्फुटः प्रकृतिविकृतिभावपर्य्यायपरिणामः। इत्थलं पल्लवितेन। जनिकर्त्तुः प्रकृतिरित्यत्र प्रकृतिपदस्योपादानकारणत्वपरत्वाभिप्रायेण परिहरति नेति। छागपशुन्यायं स्वयं विवृणोति। यथेत्यादिना। पशुना यजेत इत्यत्र छागवपाया इतिशेषवचनेन पशुशब्दस्य विशेषपशुपरत्वं निश्चेतुं शक्यते प्रकृते ब्रह्मणो विश्वं प्रत्युपादानकारणत्वनिश्चायकवाक्यशेषाभावात्कथं हेतुपदस्य विशेषहेतुपरत्वमित्याशङ्क्य परिहरति नचेति। सच्च त्यच्चाभवदिति। सन्=निर्विकारतया सततैकरूपश्चेतनः। त्यत्=पूर्वावस्थापरित्यागिविकारास्पदमचेतनम्। ब्रह्मैव चेतनाचेतननामरूपभाग्भवतीत्यर्थः। सोऽकामयत इति। स आनन्दमयः आत्मा देवमनुष्यादिरूपेण बहु स्यां तदर्थमा:

कर्त्रपलापो वक्तुं शक्यः। त्वन्मते सर्वज्ञस्य कर्तृत्वापलापापत्तेरिति वाच्यम्, इदमर्थावच्छिन्नस्येदमाकारवृत्त्यवच्छिन्नस्य वा त्वदभिमतस्य साक्षिणः इच्छाद्यभावे कर्तृत्वासम्भवात्। सर्वज्ञे कर्त्तरि श्रुत्यादेरिव शुक्तिरूप्यादिकर्तरि प्रमाणस्याभावात्। नहि "नामरूपे व्याकरवाणी"ति श्रुत्युक्तेश्वरस्येव शुक्तिरूप्यं करवाणीति कस्याप्यनुभवो दृश्यते। नच भ्रान्तवदध्यासद्रष्टृत्वं भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वाभावात्। नच मायाविवद्व्यामोहकत्वं, व्यामोहनीयानामपि कल्पितत्वेन तद्दर्शने परेशस्य भ्रान्तत्वापत्तेः। नह्यैन्द्रजालिकः कल्पितान् मोहयति। किञ्च, जन्मादिसूत्रेऽर्थलब्धसार्वज्ञ्यस्य स्फुरणार्थं शास्त्रयोनित्वादिति सूत्रमिति त्वन्मतस्य भङ्गापत्तेः। अध्यस्तद्रष्टृव्यामोहकस्य सार्वज्ञासम्भवात्। नच "करवाणी"ति सङ्कल्पपूर्वकं कर्तृत्वं मायिन्यप्यस्तीति वाच्यम्। कल्पितपदार्थकर्तृत्वाभावेऽपि प्रतारकस्य मायिनः "करवाणि" "करोमि"इत्युक्तिसम्भवेऽपि परमाप्तस्य परमेश्वरस्य वास्तवकर्तृत्वं विना तथोक्त्यसम्भवादित्यलं कुतर्कोच्छेदैः। अथ किमुपादानस्य लक्षणमित्यपेक्षायामाहुरेके। भ्रमाधिष्ठानत्वं तत्त्वमिति चेन्न, उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादावुपादानत्वस्य च

---

काशादिभूतरूपेण प्रजायेयेति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसङ्कल्पं कृतवानित्यर्थः। स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च,तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुतिक्रमः। इत्यात्मनः वहुत्वकरणात्तस्यैव निमित्तत्वमुपादानत्वञ्च प्रतीयत इतिभावः। ब्रह्मणो निमित्तकारणत्वे सर्वत्र व्याप्तेरसम्भवात्तस्य परिच्छिन्नत्वमापद्येत इति दोषं निमित्तकारणत्वपक्षे उद्भावयति। अपिचेति। फलितार्थमाह। एतदुक्तं भवतीति। यत् उक्तं तदेतद् भवतीत्यर्थः। कारणत्वं लक्षयति। कारणत्वं नामेति। कारणत्वं विभजते। तद्द्विविधमिति। तत्र=तयोः। स्वस्वानादीति। स्वस्य स्वस्य नियतविभक्तानादिविचित्रकर्मसंस्कारस्य परतन्त्राणामत्यन्तसङ्कुचितोऽतएव भोगस्मरणानर्हो ज्ञानलक्षणो धर्मो येषां तेषां क्षेत्रज्ञानां कर्मानुरूप्यभवनतत्फलभोगार्हधर्मभूतज्ञानप्रकाशेन तत्तत्कर्मफलैस्तेषां फलानां भोगयोग्यशरीरेन्द्रियादिकरणैः सह सम्बन्धकारयितृत्वमित्यर्थः। मायावादिनां मतं दूषयितुमाह। परमतेत्विति। तत्त्वम्=कारणत्वम्। निमित्तकारणलक्षणस्यासम्भवं दर्शयति कार्यस्येति। तदेवोपपादयति। नहीति। कल्पितरूप्यं प्रति साक्षिणः कर्तृत्वमाशङ्क्य परिहरति नचेति। नहि योग्यत्वं कर्तृत्वे तन्त्रं तथासति भवतां नयेऽपि सर्वज्ञस्य ब्रह्मण अस्मत्प्राकृतेन्द्रियागोचरत्वात् विश्वं प्रति कारणत्वं न स्यादित्याह। नह्यदर्शनमात्रेणेति। त्वदभिमतसाक्षिणि ज्ञानेच्छाकृत्यभावेन कर्तृत्वं कथमपि न सम्भवतीत्याह। इदमर्थावच्छिन्नस्येति। तथा सन्ति चास्माकं राद्धान्ते शतशः श्रुतयः सर्वज्ञस्य सर्वनियन्तुर्ब्रह्मणो जगज्जन्मादिकारणत्वप्रतिपादिकास्तथा नोपलभ्यन्ते भवतां मते कल्पितशुक्तिरूप्यं प्रति कर्तृत्वबोधकाः वेदान्ता इत्याह। सर्वज्ञ इति। उक्तार्थमेव विवृणोति। नहि नामरूप इति। प्रकारान्तरेण कर्तृत्वमाशङ्क्य निषेधति। नचेति। मायाविवद्व्यामोहकत्वरूपकर्तृत्वमाशङ्क्य निरस्यति नचेति। व्यामोहजीवादर्शने व्यामोहकत्वं न सम्भवति दर्शने च भ्रान्तत्वापत्तिरित्याह। व्यामोहनीयानामिति। तद्दर्शने=कल्पितत्वदर्शने। व्यामोहकत्वस्याप्यारोपितत्वेनान्योन्याश्रयापत्तिश्चेतिभावः। मायाविवद्व्यामोहकत्वरूपकर्तृत्वपक्षे तन्मतग्रन्थस्य विरोधोद्भावनरूपदोषान्तरं दर्शयति। किञ्चेति। तत्र हेतुमाह। अध्यस्तद्रष्टृव्यामोहकस्येति। प्रतारके मायिन्यपि सङ्कल्पपूर्वकं कर्तृत्वमाशङ्क्य व्युदस्यति। नचेति। निषेधे हेतुमाह। कल्पितपदार्थ इति। उपादानस्य लक्षणं पृच्छति। अथेति। तत्त्वम्=उपादानत्वम्। मृदादौ भ्रमाधिष्ठानत्वरूपमुपादानत्वं कोऽपि व्यवहरति किमित्याशयेन परिहरति। नेति। नहि मृज्ज्ञानेन घटादीनां बाधो दृश्यते येन भ्रमाधिष्ठानत्वरूपमुपादानत्वं मृदादीनां सिध्येदित्याह। मृज्ज्ञानेनेति। पारिभाषिकेति। आधुनिक-

व्यवहारादर्शनात्, मृज्ज्ञानेन घटादिबाधाऽदर्शनात्, पारिभाषिकोपादानत्वस्य चानुपादा-
नत्वे पर्यवसानात्। नन्वसत्यरूपान्तरापत्तिर्विवर्त्तः, सत्यरूपान्तरापत्तिस्तु परिणामः। रूपा-
न्तरापत्तिमात्रमुपादानत्वं तच्च ब्रह्मणो विवर्त्तरूपविशेषेणापि सूपपन्नम्। निर्विकारश्रुतिस्तु
तात्त्विकविकाराभावाभिप्रायिका। ब्रह्म चाज्ञातप्रपञ्चरूपेण विवर्त्तत इत्यज्ञानमपि परिणामि-
तयोपादानान्तर्गतं रूप्यमपि शुक्तिविवर्तत्वात् अज्ञानपरिणामत्वाच्चोभयोपादानकमिति चेन्न।
त्वयाऽपि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयम्, सत्यत्वे कार्यस्यापि कारणस्व-
भावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्यासत्यरूपतापत्तेर्निषेधात् स्वभावत्यागप्रसङ्गाच्च।
किञ्च–सत्यस्यासत्यरूपतापत्तौ तदापत्तियोग्यतारूपधर्मोऽप्यवश्यं स्वीकार्यः, सर्वसामर्थ्यशू-
न्यस्य तथात्वासम्भवादतिप्रसङ्गाच्च। तथात्वे च निर्विशेषप्रतिज्ञाभङ्गात्। नापि रूपान्तराभेद-
धीविषयत्वमुपादानत्वमिति लक्षणं सम्भाव्यं, तत्त्वम्पदार्थयोः क्षीरनीरयोः खण्डगोत्वयो-
श्चोपादानोपादेयभावप्रसङ्गात्। नच कार्याभेदधीविषयत्वमुपादानत्वमिति वक्तुं योग्यम्।
सदृशे वस्तुनि सन्निहिते निमित्तेऽपि कार्याभेदभ्रमसम्भवेनातिव्याप्तेः। ननु मायोपादानमी-
श्वरो निमित्तं शुद्धं ब्रह्माधिष्ठानमिति चेन्न। अभिन्ननिमित्तोपादानासिद्ध्या त्वन्मते तदर्थ-
स्यैतदधिकरणस्यैव बाधापत्तेरिति। किञ्च तन्मते ब्रह्मण उपादानत्वप्रतिपादनं भ्रामादिकमेव।
भ्रमाधिष्ठाने शुक्त्यादावभवदिति प्रयोगाभावात्, तत्प्रयोगविषयब्रह्मभवनरूपोपादानताया ब्रह्म-
णस्तैरनभ्युपगमात्। नच शुक्ते रूप्यस्यानुपादानत्वाच्छुक्तिरूप्यमभवदिति व्यवहाराभावो युक्त
इति वाच्यम्। इदं रूप्यमित्यत्र रूप्याभिन्नतया प्रतीतस्येदमंशस्य रूप्योपादानतया त्वदभिमत-

---

सङ्केतः परिभाषा तया बोधितश्चार्थः पारिभाषिक इत्यर्थः। भ्रमपरिणामोपादानानां परमतरीत्या लक्षणान्याह।
नन्वित्यादिना। विवर्त्तः=भ्रमः। तच्च = उपादानत्वञ्च। तर्हि निर्विकारश्रुतिविरोध इत्यत्राह। निर्विकारश्रुतिस्त्विति।
ब्रह्मणोऽसत्यरूपान्तरापत्तिर्विवर्तत्वं रूपान्तरापत्तिरूपमुपादानत्वमज्ञानस्य च घटत इत्याह। ब्रह्मचेति। परिणामित्व-
रूपमुपादानत्वं न निरवयवस्य ब्रह्मण उपपद्यते तथाच प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति परेषां सिद्धान्त इति
भावः। उभयोपादानम् = भ्रमोपादानत्वमज्ञानोपादानत्वञ्चेत्यर्थः। उपादानस्य कारणस्य सत्यत्वे उपादेयस्य कार्य-
स्यापि सत्यत्वापत्तिः। कार्यस्य मिथ्यात्वे कारणस्यापि तत्प्रसक्तिः कार्यकारणयोरनन्यत्वादित्यभिप्रायेण परिहरति।
नेति। नहि सत्यस्वरूपस्य ब्रह्मणोऽसत्यरूपता घटते। सदेव सोम्येदमग्र आसीत्, तत्सत्यम्, नासतो विद्यते भावो नाभावो
विद्यते सतः, इत्यादिश्रुतिस्मृतिभ्य इत्याह। सत्यस्येति। सत्यस्यापि ब्रह्मणोऽसत्यरूपत्वस्वीकारे ब्रह्मणः सत्यत्व-
स्वभावस्य त्यागः प्रसज्येत इत्याह स्वभावेति। दूषणान्तरमाह। किञ्चेति। तदापत्तियोग्यतारूपधर्मोऽपीति।
असत्यतापत्तियोग्यतारूपधर्म इत्यर्थः। तथात्वासम्भवात् = असत्यतापत्तियोग्यतारूपधर्माऽसम्भवात्। अतिप्रसङ्गाच्चेति।
गगनकुसुमादीनामप्यसत्यतापत्तियोग्यतारूपधर्मत्वं स्यात् स्याच्च षण्डादपि प्रजोत्पत्तिरित्यर्थः। इष्टापत्तौ दोषमाह
तथात्वेति। तदापत्तिरूपयोग्यतारूपधर्मवत्त्व इत्यर्थः। उपादानस्य लक्षणान्तरमाशङ्क्य निराकरोति। नचेति।
तत्त्वंपदार्थयोः = ब्रह्मप्रत्यगात्मनोः। तयोरपि रूपान्तरनिरपेक्षाभेदधीविषयत्वस्य सत्त्वादुपादानोपादेयत्वापत्तिरित्यर्थः।
खण्डो गौः, मुण्डो गौरित्यत्राप्युक्तलक्षणस्य विद्यमानत्वात्तयोरप्युपादानोपादेयभावः प्रसज्येत इत्यर्थः। उपादानत्व-
मन्यथा निरुच्य निराचष्टे नचेति। उपादानं माया, ईश्वरो निमित्तं शुद्धस्य ब्रह्मणो भ्रमाधिष्ठानत्वमिति शङ्कते
नन्विति। मायाया उपादानत्वे, ईश्वरस्य निमित्तकारणत्वे स्वीकृते ब्रह्मणो विश्वं प्रत्यभिन्ननिमित्तोपादानकारणत्वं

स्येदं रूप्यमभवदिति व्यवहारविषयत्वात्। किञ्च सृष्टेः प्रागहमर्थाभावेनोत्तमपुरुषप्रयोगानुपपत्तेः। न चाविद्यापरिणामविशिष्टेऽहमिति प्रयोगसम्भवेनोत्तमपुरुषोपपत्तिः सूपपन्नेति वाच्यम्। उक्तसङ्कल्पात्प्रागविद्यापरिणामाभावात्। अयम्भावः—सङ्कल्पात्प्रागविद्यापरिणामोऽस्ति न वेति? वक्तव्यम्। नाद्यः 'एकमेवाद्वितीयमि'ति श्रुतिविरोधात्। नान्त्यः, उक्तोत्तमपुरुषप्रयोगासम्भवात्। किञ्च, 'तदात्मानं स्वयमकुरुते'ति श्रुतिविरोधात्। अन्यथा 'कुरुते'ति तत्त्वोक्त्ययोगात्, विवर्ताधिष्ठाने इदमर्थे आत्मानं रूप्यात्मना कुरुतेति व्यवहारादर्शनाच्च। किञ्च "तद्भूतयोनिमि"ति श्रुतिविरोधः, इदमर्थे रूप्याद्यधिष्ठाने योनिशब्दाप्रयोगात्, "सर्वं खल्विदं ब्रह्म तज्जलानि' ति सहेतुकसामानाधिकरण्यश्रुतिबाधश्च। "नच स्थाणुरेव चौरः" इतिवद्बाधितसमानाधिकरणत्वाङ्गीकारान्न बाध इति वाच्यम्। स्थाणुपुरुषयोरुपादानोपादेयत्वाभावेन दृष्टान्तासम्भवादिति संक्षेपः। केचित्तु चिदचिद्विशिष्टं ब्रह्मोपादानम्, तथा चोपादानश्रुतीनां स्वार्थे प्रामाण्यान्न कोऽपि दोषः। नच विशिष्टस्योपादानत्वे परिणामोऽप्यवश्यम्भावी। तथात्वे च निर्विकारश्रुत्याकोपादसामञ्जस्यमिति वाच्यम्, विकारस्य विशेषणगतत्वात्। निर्विकारश्रुतीनां विशेष्यपरत्वान्नोक्तदोषलेशसम्बन्धावकाश इत्याहुस्तन्नासम्भवात्। तथाहि,

---

प्रतिपादयतः प्रकृत्यधिकरणस्य बाधः प्रसज्येत इत्याशयेन परिहरति। नेति त्वन्मते = केवलाद्वैतवादिमते। तदर्थस्य अभिन्ननिमित्तोपादानार्थस्य एतदधिकरणस्यैव = प्रकृत्यधिकरणस्य। भ्रमाधिष्ठानत्वपक्षे रूपान्तरापत्तिरूपमुपादानं केवलाद्वैतवादिमते न घटत इत्याह। किञ्चेति। भ्रमाधिष्ठानभूतायां शुक्तौ रूप्यमभवदितिप्रयोगो न दृश्यते, यस्मिन् यदभवत्तत्तस्योपादानं यथा मृदि घटो जायते तं प्रति तस्योपादानत्वं प्रकृते तथात्वाभावान्नोपादानं घटत इत्यर्थः। यदि रूप्यं प्रति शुक्तेरुपादानत्वं स्यात्तद शुक्तिरूप्यमभवदिति व्यवहारः स्यात्त्वेवमित्याह। शुक्तेरिति। रूप्यं प्रति रूप्याभिन्नतया प्रतीतस्येदमर्थस्योपादानत्वात्तथा व्यवहारो दुर्वार इत्याह। इदं रूप्यमिति। बहु स्यां प्रजायेये त्युत्तमप्रयोगानुपपत्तिं दर्शयति। किञ्चेति। अविद्यापरिणामेन तदुपपत्तिमाशङ्क्य परिहरति नचेति। बहु स्यां प्रजायेयेति सङ्कल्पात्पूर्वमविद्यापरिणामरूपस्याहमर्थस्याभावान्नोत्तमपुरुषस्योपपत्तिः सुकरेत्याह। उक्तसङ्कल्पादिति। उक्तार्थमेवोपपादयति अयम्भाव इत्यादिना। आद्यपक्षं निरस्यति नाद्य इति यद्यविद्यापरिणामस्य सङ्कल्पात् पूर्वं सत्ता चेत् तदा द्वितीयत्वनिषेधिका एकमेवाद्वितीयं ब्रह्मेति श्रुतिर्विरुध्येत इत्यर्थः। अविद्यापरिणामो नास्ति चेत्तदोत्तमपुरुषप्रयोगो नोपपद्येत इत्याशयेन द्वितीयपक्षं निरस्यति। नान्त्य इति। ईश्वरस्य निमित्तकारणत्वं मायाया उपादानत्वं शुद्धब्रह्मण अधिष्ठानत्वमिति दोषान्तरमाह। किञ्चेति। तदात्मानं स्वयमकुरुत इति सृष्टेः कर्मत्वं कर्तृत्वञ्चात्मनः प्रतीयते तच्चाभिन्ननिमित्तोपादानपक्ष एवोपपद्यते नतु निमित्तमात्रपक्ष इत्यर्थः। विपक्षे बाधकतर्कमुपन्यस्यति अन्यथेति विवर्तोपादानमधिष्ठानमिति पक्षे दोषान्तरमाह तद्भूतयोनिमिति। यथोर्णनाभिः सृजते गृह्णते चेति वाक्यशेषान्निश्चीयते योनिशब्दश्चोपादानवाचकस्सच प्रकृते न घटते, इत्याह इदमर्थ इति। तत्पक्षे दोषान्तरमुपन्यस्यति सर्वमिति। तज्जत्वात्तल्लत्वात्तदभिन्नमिदं सर्वमिति सहेतुकसामानाधिकरण्यं नोपपद्येत अतोऽभिन्ननिमित्तोपादानत्वं वाच्यम्। बाधायां सामानाधिकरण्यमिति पक्षं समाश्रित्य प्रागुक्तदोषं निरस्यति। स्थाणुरेव चौर इति। स्थाणौ चौरत्वस्य बाध इति बाधायां सामानाधिकरण्यं तथा प्रकृतेऽपि स्यादित्यर्थः। दृष्टान्तासिद्धिमाह। स्थाणुपुरुषयोरिति। विशिष्टाद्वैतमतं दर्शयति केचित्त्विति। तथात्वे = विशिष्टपक्षेऽपि सविकारत्वं निर्विकारत्वञ्च ईश्वरस्य कथं तर्ह्युपपद्यत इत्याशङ्क्य परिहरति नचेति। विशिष्टस्य परिणामित्वे। ब्रह्मणि विशेषणीभूतायाः प्रकृतेर्विकारान्वयित्वं विशेष्यांशस्य निर्विकारत्वमित्याशयेन समाधत्ते

विशिष्टस्य ब्रह्मत्वं भवतामभिप्रेतं न वेति ? आद्ये, भवता "अंशोनाने"ति वक्ष्यमाणसूत्रभाष्ये विशेषणस्यांशत्वाङ्गीकारेणांशतः परिणामापत्तेर्दुर्वारत्वात्, निर्विकारश्रुतिबाधस्य तादवस्थ्याच्चासम्भवः। द्वितीये, ब्रह्मोपादानत्वप्रतिज्ञाया भङ्गात्, शुद्धविशिष्टयोर्भेदापत्त्या परमतप्रवेशाच्च। विशिष्टाभ्युपगमबाधाच्चासम्भव एव। किञ्च विशिष्टब्रह्मणो मुक्तगम्यत्वं भवतामभिप्रेतं न वा ? नाद्यः, विकारिणो मुक्तोपसृप्यत्वे मुक्तावपि सविकारत्वापत्तेर्महानिष्टः। द्वितीये, किम्वा मुक्तगम्यं ब्रह्मेति वक्तव्यं, न तावद्विशेषशून्यं, मायावादमतप्रवेशात् अनभ्युपगमाच्च, गत्यन्तराभावाच्चासम्भव एव तस्माद्विशिष्टब्रह्मोपादानवादो महादोषवत्त्वादसम्भव एवेति संक्षेपः। अन्ये तु ब्रह्म जगतो निमित्तकारणमेव, नोपादानकारणमित्याहुस्तत्सूत्रकारेणैव खण्डितं, श्रुतिस्मृतिविरोधादित्युपरम्यते। वस्तुतस्तु कार्याकारभजनार्हशक्तिमत्त्वे सति तदवस्थापत्तियोग्यत्वमुपादानत्वमिति क्षेत्रक्षेत्रज्ञचराचरादिपदार्थभूतस्वाभाविकसूक्ष्मावस्थापन्नानां शक्तीनां तत्तद्गतसूक्ष्मसद्रूपकार्याणां च स्वाभाविकानां स्वान्वितानां स्थूलतया प्रकाशकत्वमित्यर्थः। प्रकृतमनुसरामः। एवं ब्रह्मण एव जगतो निमित्तोपादानत्वे निश्चिते "विकारजननीं गौरनाद्यन्तवती" इत्यादिश्रुतिभिः सूक्ष्माचिच्छक्तिकं ब्रह्मैव तत्तच्छब्दैरभिधीयते, ब्रह्मणः सर्वात्मतया सर्वशब्दवाच्यत्वात् स्थूलसूक्ष्मावस्थस्य सर्वस्य चिदचिद्वस्तुनश्च तदात्मकत्वेन तदभिन्नत्वात्। "सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं

---

विकारस्येति। तन्मतं निरस्यति तन्नासम्भवादिति। असम्भवमेव विवृणोति तथाहीत्यादिना। विशिष्टस्य=चिदचिद्भ्यां विशिष्टस्य। विशेषणांशे यदि विकारत्वमभ्युपेयते तस्य तदंशत्वादंशतः परिणामित्वं दुर्वारं तथात्वे च निर्विकारश्रुतयो व्याकुप्येरन् इत्यर्थः। नच यदि शरीरभूतप्रकृतिद्वारको विकारान्वयस्तर्ह्युपादानत्वममुख्यं स्यात् देवादिनामरूपाभिमानानुगुणज्ञानप्रसरस्य महदाद्यवस्थायाश्चेश्वरगतत्वाभावात्। भाव्यवस्थाविशेषतः प्रागवस्थायोगोह्युपादानम् अवस्थाविशेषशब्दः स्थूलावस्थापरः तेनाप्रालीनजगतः प्रलयावस्थामपेक्ष्य उपादानत्वव्युदास इति वाच्यम्। मुख्योपादानत्वस्य सिद्धत्वात्। तथाहि=चिदचिच्छरीरकं ब्रह्म महदादिकार्यं प्रति मुख्योपादानम्। उपादानत्वलक्षणयोगित्वात् मुकुटं प्रति कनकवत्। नच स्वरूपासिद्धोऽयं हेतुः महदाद्यवस्थानां ब्रह्मगतत्वाभावादिति वाच्यम्। ब्रह्मणः चिदचिच्छरीरकतया प्रकृते ब्रह्मस्वरूपान्तर्गतत्वात्। यदि विशेषणमपि स्वरूपान्तर्गतं तदा तस्य तदंशत्वात् अंशतः परिणामित्वं दुर्वारं तथा सति निर्विकारश्रुतिबाधस्तदवस्थ एवेति भावः। यदि चिदचिद्विशिष्टस्य ब्रह्मत्वं नाभ्युपेयते तदा ब्रह्मोपादानत्वप्रतिज्ञाया भङ्गः स्यादित्याशयेन द्वितीयविकल्पं निरस्यति। द्वितीय इति। विशिष्टं ब्रह्म मुक्तोपसृप्यं तच्छून्यं वेति विकल्प्याद्यपक्षमपाकरोति। नाद्य इति। द्वितीयपक्षं निरसितुं पृच्छति। द्वितीय इति उपसंहरति। तस्मादिति। केवलभेदवादिनां मतं दर्शयति। अन्येत्विति। खण्डितमिति। ब्रह्मणो निमित्तकारणत्वस्य निराकरणार्थमेतत्सूत्रस्योत्थानात्। तच्च प्राग्दर्शितरीत्याऽवसेयम्। श्रुतिरिति। यतो इमानि भूतानि जायन्ते, तदात्मानं स्वयमकुरुत, जन्माद्यस्य यतः, यतः सर्वाणि भूतानि भवन्तीति श्रुतिसूत्रस्मृतिविरुद्धत्वान्न निमित्तकारणत्वं ब्रह्मणो विश्वं प्रति। स्वकीयसिद्धान्तमाह। वस्तुतस्त्विति। उपादानत्वं निर्वक्ति। कार्येति। तदवस्थापत्तियोग्यत्वम्=कार्यावस्थापत्तियोग्यत्वम्। लक्षणार्थमेव विवृणोति। क्षेत्रक्षेत्रज्ञेति। क्षेत्रम्=शरीरम्। क्षेत्रज्ञः=आत्मयाथात्म्यज्ञो जीवः अन्नमयः पुरुषश्चेतनाधिष्ठितो देहः क्षरशब्दार्थः। परिणामनाशरहितो नित्यः कूटस्थः पुरुषोऽक्षरशब्दवाच्यः। तत्तद्गतसूक्ष्मसद्रूपकार्याणाम् = स्वस्य कारणगतसूक्ष्मसद्रूपकार्याणाम्। प्रसङ्गात्तदितरमतनिराकरणपूर्वकं स्वसिद्धान्तं प्रदर्श्य सम्प्रति

सर्वमि"त्यादिश्रुतेः। यच्चूक्तं लोके कार्यस्यानेककारकसाध्यत्वदर्शनादिति, तदपि न, सर्वाचिन्त्यानन्तशक्तेर्ब्रह्मणो जगन्निर्माणे कारकान्तरनिरपेक्षत्वात् ॥ २३ ॥

इतश्च ब्रह्मैव निमित्तमुपादानञ्च—

## अभिध्योपदेशात् ॥ १ । ४ । २४ ॥

अभिध्या सङ्कल्पः "सोऽकामयत बहु स्यां प्रजायेय, तदैक्षत बहु स्यामि"ति विश्वस्रष्टुर्ब्रह्मणः स्वस्यैवाभिव्यक्तनामरूपजगदात्मना बहुभवनसङ्कल्पोपदेशात्। "तदैक्षते"ति स्रष्टृत्वम्। "बहु स्यामि"त्युपादानत्वमिति विवेकः ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ १ । ४ । २५ ॥

चशब्दोऽवधारणे। "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुर्मनीषिणो मनसा पृच्छथेत एतद्यदध्यतिष्ठत् भुवनानि धारयन्नि"ति जगदुपादाननिमित्तादिप्रश्ने "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुर्मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्नि"ति साक्षादुभयं निमित्तत्वमुपादानत्वं च ब्रह्मण आम्नायतेऽतस्तदेवोभयरूपम् ॥ २५ ॥

इतश्चोभयरूपं ब्रह्म—

## आत्मकृतेः परिणामात् ॥ १ । ४ । २६ ॥

लोके हि कृतिमान् कर्ता कृतिविषयो मृदादिरुपादानमिति व्यवस्था। प्रकृते चात्मनः कृतिमत्वं कृतिविषयत्वञ्चोभयं श्रूयते "तदात्मानं स्वयमकुरुतेति"। आत्मानमिति द्वितीयया कृतिविषयत्वं स्वयमिति कृतिमत्वम्। एवञ्च ब्रह्मैव निमित्तमुपादानञ्च। कुतः? आत्म-

---

सूत्रस्यावशिष्टं व्याख्यानमाह । प्रकृतमनुसराम इति। तत्तच्छब्दैरिति प्रकृत्यादिशब्दैः। तदात्मकत्वेनब्रह्मात्मकत्वेन। तदभिन्नत्वात् = ब्रह्माभिन्नत्वात्। प्रागुक्तार्थं दूषयितुमनूद्यति। यत्तूक्तमिति ॥ २३ ॥

प्रागुदाहृतसूत्रस्थप्रतिज्ञावाक्येन सममस्य हेतोरन्वय इति बोधयितुमाह । इतश्चेति। अभिध्योपदेशादित्यर्थः। सूत्रं व्याचष्टे अभिध्येति। "तत्तेजोऽसृजत" इति तेजःप्रभृतिसृष्टेरनन्तरोक्तत्वात् जगद्रूपेण बहुत्वस्य विवक्षितत्वादित्यर्थः। स्वस्यैव बहुभवनादुपादानत्वं बहुभवनस्य सङ्कल्पसामानाधिकरण्यान्निमित्तत्वमितिभावः ॥२४॥

किंस्विद्वनम्=पूर्वं कुत्र स्थित इति भावः। क उ स वृक्ष आसीत् किमुपादानमित्यर्थः। यदध्यतिष्ठद्भुवनानि धारयन् = भुवनानि धारयता ईश्वरेणाधिष्ठेयमुपकरणादिकं किमित्यर्थः। प्रतिवचनेऽपि ब्रह्मवनम् अधिकरणम्। ब्रह्म स वृक्षः उपादानम् निष्टतक्षुरितिबहुत्वमविवक्षितम्। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चेति द्यावापृथिव्यादीनामेककर्तृकत्वश्रवणेन बहुकर्तृत्वासम्भवात्। सूत्रार्थं विवृणोति साक्षादुभयमिति ॥ २५ ॥

हेत्वन्तरेणाप्यात्मनो निमित्तकारणत्वमुपादानकारणत्वं च प्रदर्शयन्नाह। इतश्चेति। आत्मकृतेः परिणामादित्यर्थः। आत्मन उभयरूपत्वं दर्शयति। लोकइत्यादिना। उक्तार्थं श्रुतिप्रमाणेन द्रढयति तदात्मानमिति। तदेवोपपादयति। आत्मानमिति। आत्मानं प्रति स्वस्यैव कर्तृत्वमनुपपन्नं कार्यं हि साध्यं कर्ता हि सिद्ध इति एकस्य सिद्धत्वम-

कृतेः आत्मसम्बन्धिनी कृतिरात्मकृतिः। सम्बन्धो विषयविषयिभावः। कृतिः कारणं तस्मादित्यर्थः। तत्राव्यक्तरूपेण कर्तृत्वं व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात्। नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं पुनः कृतिकर्मत्वमत आह परिणामादिति। परिणामो द्विविधः स्वरूपपरिणामः शक्तिविक्षेपलक्षणपरिणामश्च। तत्राद्यो ब्रह्मानधिष्ठितस्वतन्त्रप्रकृतिस्वरूपपरिणामवादोऽयं साङ्ख्यानां सिद्धान्तः। द्वितीयश्चोपनिषदाम्। तथाच सर्वज्ञत्वसर्वाचिन्त्यानन्तशक्त्यादिनिलयः परब्रह्मभूतः श्रीपुरुषोत्तमः स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणामयति। यथाप्रच्युतस्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्यः शब्दवाय्वोस्तत्त्वादेश्च जन्मादिकम्। यथावाऽप्रच्युतस्वरूपान्मनसः कामक्रोधलोभमोहादीनां परस्परविलक्षणानां समुद्रादूर्मीणाश्चोद्भवनं प्रत्यक्षागमादिमानसिद्धम् तेषां तादृशपरिमितशक्तियोगादेव एवमचिन्त्यानन्तस्वाभाविकशक्तियोगाद्ब्रह्मणोऽपि निर्विकारादप्रच्युतस्वरूपाज्जगज्जन्मादिकं बोध्यम्। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, विचित्रशक्तिपुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्युरि"त्यादिश्रुतेः। शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। शतशो ब्रह्मणस्तोस्तु सर्गाद्या भावशक्तयः। भवति तपतां श्रेष्ठः पावकस्य यथोष्णता"इत्यादिस्मृतेः। नच शक्तिविक्षेपोपसंहारवादे किं प्रमाणमितिवाच्यम् "यथोर्णनाभिरि"त्यादुपपत्तिसहकृतश्रुतेः। "प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरिः। क्षोभयामासेति-विक्षेपपर्य्यायक्षोभशब्दप्रयोगस्मृतेश्च मानत्वात्। किञ्च प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः। तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनरि"ति भारते दृष्टान्तोपपत्तिपूर्वकभीष्म-

---

सिद्धत्वं च विरुद्धमित्यत्राह। अव्यक्तरूपेणेति। कर्तृतावच्छेदककर्मतावच्छेदकरूपभेदात् सिद्धासिद्धयोरविरोध इत्यर्थः। परिणामादिति भागमवतारयितुं शङ्कते नन्विति। परिणामस्य द्वैविध्यं दर्शयति परिणाम इति। तत्राद्यमुदाहरति। तत्राद्य इति। द्वितीयमुदाहरति द्वितीयइति तदेवोपपादयति तथाचेत्यादिना। उक्तार्थं दृष्टान्तेन द्रढयति यथेति। दृष्टान्तं निरूप्य दार्ष्टान्ते योजयति। एवमित्यादिना। उक्तार्थे प्रमाणं दर्शयति। परास्य शक्तिरिति। अस्य ब्रह्मणः शक्तिः परा स्वरूपविलक्षणा विविधा अनन्ताऽचिन्त्यप्रकारिका श्रूयतेचेतयन्यप्रमाणनिरपेक्षेत्यर्थः। अनिर्वचनीयत्वौपाधिकत्वादिशब्दप्रयोक्तॄणां मुखं धूलीकरोति स्वाभाविकीति। अनाद्यनन्तेति स्वरूपवन्नित्येत्यर्थः। न केवलं शक्तेरेव तत्त्वं ज्ञानक्रियागुणानामपीत्याह। ज्ञानबलक्रियाचेति। ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रियाचेति चकारः सर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः इति श्रुत्यर्थः। उक्तार्थं श्रीपराशरवचसापि प्रमाणयति। शक्तय इति। भावशक्तय इति स्वाभाविकीति श्रुतिगतपदस्यार्थः। शतशइति। विविधाः पदार्थाः। ब्रह्मण इत्यस्य पदस्यार्थः। अचिन्त्यज्ञानगोचरेति। अचिन्त्यस्य असङ्कुचितस्य। मुक्तानां ज्ञानस्य विषया इति पराशब्दार्थः। तपतां श्रेष्ठेति। श्रोतुः कुतर्कनिष्ठतां निवारयति स्वाभाविकत्वानाद्यनन्तत्वनित्यसहचारित्वादिषु दृष्टान्तः। पावकस्य यथोष्णतेति श्रुतौ जात्यभिप्रायेणैकवचनम्। स्मृतेव्यक्तिपारूपत्वादेकत्वभ्रान्तिवारणार्थं बहुवचनमिति। उक्तार्थे प्रमाणं जिज्ञासते शक्तिविक्षेप इति। अयंभावः—पदार्थभावानां शक्तयो न केनापि प्राकृतबुद्धिनापच्छेत्तुं शक्याः। तर्काणामप्रतिष्ठितत्वेनास्माकमौपनिषदानां श्रौतस्यैव सिद्धान्तस्याश्रयणीयत्वादिति भावख्यापनाय दृष्टान्तगर्भितप्रमाणवाक्यमाह यथोर्णनाभिरिति। यथोर्णनाभिः सृजते गृह्णते च, यथा सतः पुरुषात् केशलोमानि। यथा पृथिव्या औषधयः सम्भवन्ति तथा-

वाक्याच्च। शक्तिविक्षेपरूपपरिणामानङ्गीकारे ब्रह्मणः सर्वज्ञत्वनिरतिशयानन्दत्वादिकं विरुद्ध्येत। अज्ञत्वासुखित्वकर्मवश्यत्वादिकं प्रसज्येत। विवर्तवादे च प्रतिज्ञादृष्टान्तयोरसम्भव एव सर्वस्य कार्यस्य भ्रान्तिमात्राङ्गीकारात् कस्य ज्ञानं स्यात्। किञ्च भ्रान्तिविषयकं ज्ञानं भ्रान्तिरूपमेव स्यात् तथाच भ्रान्तजल्पितमेव श्रुतिवाक्यं स्यात् बौद्धमतापत्तेश्च। अपिच यथा परिणामदृष्टान्तानां मृद्विज्ञानेन घटशरावादिकार्याणां सुवर्णज्ञानेन कटककुण्डलादीनां श्रुत्युपात्तानां ज्ञानसम्भवः न तथाविवर्तदृष्टान्तानां शुक्तिरजतरज्जुसर्पादीनां शुक्तिरजतसर्पादीनां श्रुत्युपात्तत्वं शुक्तिज्ञानेन रजतज्ञानस्य रज्जुज्ञानेन सर्पजातस्य वा ज्ञानं दृष्टं श्रुतमुपपन्नं वा कार्यस्य सत्यत्वाङ्गीकारे चाद्वैतसिद्धान्तो दत्ततिलाञ्जलिः स्यात्। तस्माद्विवर्तवादो हि श्रुतिप्रतिज्ञादृष्टान्तविरुद्धत्वादुपेक्षणीयो विवेकिभिः॥ २६॥

## योनिश्च हि गीयते॥ १। ४। २७॥

इतश्चोपादानं ब्रह्म। हि हेतौ यस्मात्सर्वस्य कार्यस्य परमात्मा योनित्वेन गीयते "यद्भूतयोनिं परिपश्यन्ति धीराः" इति। "कर्तारमीशं पुरुषं ब्रह्मयोनिमिति च" एषयोनिः सर्वस्येति च योनिशब्दस्य चोपादाने शक्तिः सुप्रसिद्धा पृथिवीयोनिरौषधिवनस्पतीनामित्यादौ॥ २७॥ इतिप्रकृत्यधिकरणम्॥

## एतेन सर्वे वेदान्ता व्याख्याता व्याख्याताः। १।४।२८॥

---

क्षरात् सम्भवतीह विश्वमितिश्रुतिः। उक्तार्थे स्मृतिं प्रमाणयति प्रधानं चेति। नहि तत्र विक्षेपशब्दस्य कण्ठरवेण पाठः इत्यत आह। चित्तक्षेपपर्य्याय इति। देवदत्तस्य चेतसि क्षोभः यज्ञदत्तस्य चेतसि विक्षेप इतिपर्य्यायत्वप्रसिद्धे सुव्यक्तम्। पर्यायमुखेनोदाहृत्य तत्कल्पनानिरासाय साक्षात्प्रतिपादकं श्रीभीष्मवाक्यमाह किञ्चेति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा विवर्त्तवादे नोपपद्यते इत्याह। विवर्त्तवादेचेति। कार्यजातस्य परमते भ्रमरूपत्वात्कारणविज्ञानेन तज्ज्ञानं भ्रमात्मकमेव स्यात् तथासति श्रुतिवाक्यानामतत्त्वावेदकत्वं प्रसज्येत इत्याह किञ्चेति। यथैकेन मृत्पिण्डेन मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं विज्ञातं भवति न तथा शुक्तिकाज्ञानेन रज्जुज्ञानेन रजतस्य सर्पस्य च ज्ञानं भवितुमर्हति। न ते विवर्त्तदृष्टान्ताः श्रुत्युपात्ता इत्याह। अपिचेति। विवर्त्तवादस्योपेक्षणीयत्वं वदन्नुपसंहरति तस्मादिति॥ २६॥

सूत्रं व्याचष्टे इतश्चेति। ब्रह्मयोनिशब्दस्य कारणमात्रपरत्वव्यावृत्त्यर्थं तं व्याचष्टे। योनिशब्दस्यचेति। इयं सूत्रसङ्गतिः प्रतिज्ञादृष्टान्ताभ्यां निमित्तोपादानैकत्वमुपपादितमाद्यसूत्रे तत उपरितनवाक्यस्थहेतुपरं द्वितीयसूत्रम् एवं। श्रुत्यर्थापत्तिद्वयमुक्तम् अथ श्रुतिप्रदर्शकं तृतीयम् ब्रह्मवनमित्यादिवाक्यस्यास्फुटत्वात् स्फुटार्थवाक्योपस्थापकं चतुर्थम्। आत्मकृतिप्रतिपादकवाक्यस्य स्फुटार्थतया वाक्यान्तरनिरपेक्षाभिप्रायश्चशब्दप्रयोगः तत्प्रकरणस्य पूर्वापरवाक्याविरोधः पञ्चमेन परिहृतः। 'कर्तारमीशं ब्रह्मयोनिम्। इतिवाक्यं जगत्कारणोपासनफलपरम्। भूतयोनीति वाक्यन्तूपादानमात्रप्रतिपादकं तस्यैवनिमित्तत्वम् यः सर्वज्ञ इत्याद्युपरितनवाक्यपर्य्यालोचनयाविलम्बेनावगम्यते। एवमन्यपरत्वविलम्बान्वितवाक्यद्वयविशिष्टविषयत्वात् योनिश्चहि गीयते इतिसूत्रमुभयप्रतिपादकविषयमपि "साक्षाच्चोभयाम्ननात्" इति सूत्रानन्तरं निवेशितम् अनन्यपरस्पष्टार्थवाक्ये लब्धे तदेकार्थतया निश्चितवाक्यद्वयविषयत्वात् योनिश्च हि गीयतइति सूत्रं चरममभूदिति॥२७॥ इति प्रकृत्यधिकरणम्।

एतेन समन्वयाध्यायोक्ताधिकरणसमुदायेन सर्वेऽप्युक्तानुक्तकारणप्रतिपादनपराः वेदान्ता व्याख्याताः भवन्तीतिशेषः। पदाभ्यासोऽध्यायसमाप्तिं द्योतयति। तस्मात्सर्वज्ञानशक्तिबलैश्वर्य्याद्यनन्तगुणादिनिलये निःशेषदोषगन्धाघ्रातसीम्नि परब्रह्मणि श्रीपुरुषोत्तमे वेदान्तानां समन्वय इति सिद्धम्। यदि सर्वज्ञानशक्त्याद्याश्रयः परब्रह्मभूतो मुकुन्दाख्यो जगद्धेतुर्नस्यात्तर्हि प्रतिनियतदेशकालादिक्रिया तत्फलादिसिद्धिर्न स्यात् प्रतिनियतकालकोकिलाद्युत्पत्तिः प्रतिनियतकालमम्बुदादिगर्जनादिः प्रतिनियतब्राह्मणादिवर्णाश्रमक्रियादिः प्रतिनियतस्वर्गादिसुखंनरकादिदुःखञ्च न स्यात्। किञ्च मनसाप्यतर्क्यरचनस्य जगतस्तदल्पैकदेशवृत्तिविविधनाडीजालादिसन्निवेशविशिष्टशरीरस्यचोत्पत्तिर्न स्यादित्यादिकाः शास्त्रैकमूलानूकूलतर्काश्चात्रानुसन्धेयाः ॥ २८ ॥

गुणैकनिलयो देवः सर्ववेदसमन्वितः
पायाच्छ्रीमन्मुकुन्दो नः श्रीनिम्बार्कपदाश्रितान् ॥ १ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाद्याचार्यश्रीनिम्बार्कमतानुयायि श्रीमन्मुकुन्दः
चरणारुणपद्ममकरन्दभृङ्गेण श्रीश्रीकेशवकाश्मीरिभट्टेन
विरचितायां वेदान्तकौस्तुभप्रभायां ब्रह्मसूत्रवृत्तौ
प्रथमाध्यायचतुर्थपादविवृतिः समाप्ता।
समाप्तश्चायं समन्वयाख्यः
प्रथमोऽध्यायः।

---

अथ सर्वव्याख्यानाधिकरणम्

कृत्स्नाधिकरणन्यायातिदेशरूपत्वात्सङ्गतिः। सूत्रार्थं विवृणोति एतेनेत्यादिना। अध्यायार्थमुपसंहरति तस्मादिति। शास्त्रसम्मतान् परमात्मनः श्रीपुरुषोत्तमस्य जगज्जन्मादिहेतुत्वे अनुकूलतर्कान् दर्शयति इदीत्यादिना ॥२८॥

ज्ञानभक्तिप्रदं विज्ञं सनन्दनपदाश्रितम्। देवर्षिनारदं नौमि वीणापाणिं जगद्गुरुम् ॥ १ ॥
श्रीराधाभावसम्पन्नं माधुर्यगुणवारिधिम्। इन्दीवरदलश्यामं वन्दे कुञ्जविहारिणम् ॥ २ ॥
हृत्तमोनाशकं भानुं प्रेमभक्तिप्रकाशकम्। हरिदासमहं वन्दे रसिकानां शिरोमणिम् ॥ ३ ॥

इतिश्रीरसिकानन्यशिरोरत्नश्रीस्वामिहरिदासपदाश्रिताश्रितानुयायिना पंडितामोलकरामेण संगृहीतायां
वेदान्तकौस्तुभप्रभाव्याख्यायां भावदीपिकाटीकायां प्रथमाध्यायस्य चतुर्थपादः।



# अथ द्वितीयाध्यायः

## प्रथमः पादः

### स्मृत्यधिकरणम्

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् । २ । १ । १ ॥**

पूर्वत्र ब्रह्मणोऽन्यप्रमाणागोचरतया वेदैकवेद्यत्वं निर्णीतम् अतीन्द्रियत्वात् । "नेन्द्रियाणि नानुमानमितिश्रुतेः । एवं श्रुत्यर्थस्याप्तप्रणीततदुपबृंहणौपयिकस्मृतिं विना दुर्ज्ञेयत्वादल्पश्रुतानां मन्दमतीनां तन्निश्चयानुपपत्तेश्च स्मृतयोऽप्यवश्यमपेक्षिताः । तत्र च श्रुत्युपबृंहणाय सांख्यादिस्मृतिर्ग्राह्या, मन्वादिस्मृतिर्वेति विषये पूर्वपक्षमाह । स्मृत्यनवकाशदोषप्रसङ्ग इतिचेदिति मन्वादिस्मृतीनां स्वर्गाद्यभ्युदयफलकाग्निहोत्रज्योतिष्टोमादिनित्यनैमित्तिकादिधर्मप्रतिपादने सावकाशतया कृतार्थत्वात् 'ऋषिं प्रसूतम् कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येदिति शास्त्रसंस्तुत्यमहर्षिप्रणीतायाः 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' । १ ॥ विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य । २ । १ । अचेतनत्वेऽपि क्षीरवच्चेष्टितम् प्रधानस्य । ३ । ५८, इत्यादिसांख्यस्मृतेः । केवलपरतत्त्वप्रतिपादनपरत्वात्तदनुसारेणैव वेदान्तशास्त्रमपि व्याख्येयम् । अन्यथा तस्या अन्यत्र निरवकाशतया बाधरूपदोषापत्तेः । "सावकाशनिरवका-

---

यो लोकं निखिलं पुनाति पूवणः प्रेमोल्लसन्मानसः,
कारुण्येन जनार्दनो गुणनिधिः स्वस्वप्रसादार्थिनाम् ।
भक्तानाञ्च परिप्लुतः सुहृदये विज्ञः सुभावप्रदः,
तस्याहं शरणं व्रजामि चरणावाचार्यचूडामणेः ॥१॥

पूर्वस्मिन्नध्याये सर्वज्ञं सत्यसङ्कल्पमौपनिषदं ब्रह्मैव जगतो निमित्तमुपादानकारणञ्चेति श्रुतयः प्रतिपादयन्तीत्युक्तम्, तत्र सम्भावितसर्वविधविरोधसमाधानेन तदेव स्थिरीकर्त्तुं द्वितीयाध्याय आरभ्यते । तत्र प्रथमाधिकरणे साङ्ख्यस्मृतिविरोधेन वेदान्तानामन्यपरत्वशङ्का निराक्रियते, अतिगहनानां वेदान्तानां नानाप्रकाराणामर्थस्याति दुरूहत्वात्तदुपबृंहणजनकस्मृतिमन्तरा तदर्थस्सहसा सर्वेषां निर्णेतुमशक्यः अतः स्मृत्या उपबृंहणं न्याय्यं तत्र साङ्ख्यस्मृत्यैवोपबृंहणं कार्यं मन्वादिस्मृत्यावेति विचिकित्सा जायते तत्र "स्मृत्यनवकाशदोषप्रसङ्ग" इतिसूत्रखण्डेन पूर्वपक्षमवतारयन्नाह । पूर्वत्रेति । कुतो नान्यप्रमाणगोचरत्वमित्यत्राह । अतीन्द्रियत्वादिति । प्राकृतेन्द्रियैरग्राह्यत्वात् । उक्तार्थे श्रुतिं प्रमाणयति । नेन्द्रियाणीति विषये सन्देहे । धर्मार्थफलसमर्पकत्वेन मन्वादिस्मृतीनां सावकाशत्वं दर्शयति । मन्वादिस्मृतीनामिति । ऋषिं प्रसूतमिति हिरण्यगर्भस्यैव कपिलस्यापि जायमानावस्थाप्रसृतभगवत्कटाक्षलब्धप्रतिपाद्यज्ञानातिशयशा-

शयोर्निरवकाशं बलीय" इति न्यायादित्येवं प्राप्ते राद्धान्तः। "नान्यस्मृत्यनवकाशदोषप्रसङ्गादि"ति। नेति पूर्वपक्षनिषेधपरः। पूर्वपक्षोक्तिनिर्युक्ता, कुतः। अन्यासां मन्वादिस्मृतीनां ब्रह्मैककारणकत्वप्रतिपादकानां श्रुतिमूलकानामनवकाशत्वरूपदोषापत्तेर्बाधप्रसङ्गात्। तथाचाह भगवान्मनुः "महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः। सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमवासृजदि"ति। आपस्तम्बश्च "पूः" प्राणिनः सर्वगुहाशयस्य ह्यहन्यमानस्य विकल्मषस्य। तस्मात्कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकः स नित्यः" इत्यादि। भारते च "नारायणो जगन्मूर्त्तिरनन्तात्मा सनातनः। तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" तत्रैव राजधर्मे युधिष्ठिरः। "योनिस्त्वमस्य प्रलयश्च कृष्ण! त्वमेवेदं सृजसि विश्वमग्रे। विश्वं चेदं त्वद्वशे विश्वयोने। नमोस्तुते शार्ङ्गचक्रासिपाणे" इत्यादि। भगवद्गीतायाश्च "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" पराशरश्च "विष्णोः सकाशादुद्भूतं जगत्तत्रैव संस्थितम्। स्थितिसंयमकर्त्तासौ जगतोऽस्य जगच्च सः।" इति। एतासां बाधः स्यादित्यर्थः। ननु तासां धर्मप्रतिपादनेन नैराकाङ्क्ष्यमिति, चेन्न। शास्त्रप्रतिपाद्यश्रीपुरुषोत्तमज्ञानसाधनीभूतधर्ममात्रप्रतिपादनेऽपि धर्मसाध्यज्ञानविषयप्रतिपादनभागे बाध्यमाने दोषतादवस्थ्यात्। नच कपिलस्मृतिबाधोऽप्ययोग्यः स्मृतित्वाविशेषादिति वाच्यम्। श्रुतिविरुद्धायास्तस्या अप्रामाण्यस्येष्टत्वात्। तथा सूत्रितं भगवता जैमिनिना "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि"ति। अस्यार्थः। श्रुतिस्मृतीनां विरोधे कस्या बाध इति निर्णयार्थमिद-

---

लित्वप्रतिपादनादितिभावः। तन्मतसिद्धात्यन्तिकदुःखनिवृत्तिमो क्षपुरुषार्थ इति साङ्ख्यदर्शनसूत्रेण दर्शयति। अथेति। त्रिविधदुःखम् आध्यात्मिकाधिभौतिकाधिदैविकभेदात् दुःखं त्रिविधम् तस्य याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः सोऽत्यन्तः परमः पुरुषार्थः। पुरुषाणां बुद्धेरिष्ट इत्यवान्तरवाक्यार्थः। तत्र स्थूलं दुःखं वर्तमानावस्थम्। तच्च द्वितीयक्षणादुपरि स्वयमेव नङ्क्ष्यति अतो न तत्र ज्ञानापेक्षा। अतीतन्तु प्रागेव नष्टमिति न तत्र साधनापेक्षेति परिशेषादनागतावस्थसूक्ष्मदुःखनिवृत्तिरेव पुरुषार्थतया प्रकृते पर्य्यवस्यति। तथाच योगसूत्रम् "हेयं दुःखमनागतमि"ति निवृत्तिश्च न नाशः—अपि तु ध्वंसप्रागभावयोरतीतानागतावस्थारूपत्वात्। सत्कार्यवादिभिरभावानङ्गीकारादिति प्रथमसूत्रार्थः। न दृष्टान्तस्सिद्धिरिति लौकिकादुपायाद्धनादेरत्यन्तदुःखनिवृत्तिसिद्धिर्नास्ति। कुतः धनादिना दुःखे निवृत्तेऽपि पश्चाद् धनादिक्षये पुनरपि दुःखानिवृत्तिदर्शनादित्यर्थः। तथाच श्रुतिः'—अमृतत्वस्य तु नाशास्ति वित्तेने'त्यादिः। विमुक्तमोक्षार्थमिति। कर्तृत्वमिति पूर्वाध्यायसूत्रादनुषज्यते। स्वभावतो दुःखबन्धाद्विमुक्तस्य पुरुषस्यैव प्रतिबिम्बदुःखमोक्षार्थं प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वम् अथवा स्वार्थम् स्वस्य पारमार्थिकदुःखमोक्षार्थमित्यर्थः। यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनम् तथापि मुख्यत्वात्मोक्ष एवोक्तः। ननु प्रधानस्याचेतनस्य स्वतः स्रष्टृत्वमेव नोपपद्यते रथादेः परप्रयत्नं नैव प्रवृत्तिदर्शनादिति तत्राह। अचेतनत्वेऽपीति। यथाऽज्ञस्याचेतनस्यापि क्षीरस्य वत्सवृद्धिरूपप्रयोजनवती प्रवृत्तिर्जायतमाना लोके दृश्यते तथा पुरुषविमोक्षोपयोगिनी प्रधानस्य प्रवृत्तिः कल्प्यत इति सूत्रार्थः।

"वेदार्थोऽयंस्वयं ज्ञातस्तत्राज्ञानं भवेदपि। ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्महात्मभि" रित्युक्तरीत्या वेदान्तानामुपबृंहणस्यनिश्चेयार्थत्वे साङ्ख्यस्मृत्यैवोपबृंहणं कार्यं तथाहि। 'सदेव सोम्येदमग्र आसीत्. तद्धेदं तर्ह्यव्याकृतमासीत्। असद्वा इदमग्र आसादि'त्येवंरूपाणां श्रुतीनां परस्परविरुद्धतया प्रतीयमानानां स्वतोऽर्थनिश्चयासमर्थानां तस्य प्रतिपादकसर्वज्ञकपिलस्मृत्यनुसारेणार्थनिश्चयो वाच्यः। इतरथा साङ्ख्यस्मृतेर्मन्वादिस्मृतिवत् कर्मस्व-

मधिकरणम्। तत्र "औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिः" 'औदुम्बरीं सर्वा वेष्टयितव्ये'ति स्मृतिः। यदि स्पर्शाङ्गीकारस्तदा स्मृतिबाधः। यदि सर्ववेष्टनं तदा श्रुतिबाध इति प्राप्ते राद्धान्तः। विरोध इत्यादि। स्मृतीनां श्रुतिविरोधे सति स्मृतीनामनपेक्षं निरपेक्षतया प्रामाण्यं स्यात्। स्मृतिविरोधोऽत्र न विचारणीय इत्यर्थः। श्रुत्यविरोधे तु अनुमीयते श्रुत्यर्थो येन तदनुमानं स्मृतिरपि प्रमाणं नतु श्रुतिविरोधे श्रुतीनां निरपेक्षतया स्वार्थे प्रामाण्यं स्वतएव रवेरिव रूपविषये। स्मृतीनां तु तन्मूलत्वाच्छ्रुतिसापेक्षत्वात्तदविरोधे सत्येवेत्यर्थः। किञ्च "यद्वै किञ्चन मनुरवदत्तद्भेषजमि"ति श्लाघ्यस्य भगवतो मनोरपि निर्णयरूपं वचनम्, 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इति। तस्माद्वेदविरुद्धानां साङ्ख्यादिस्मृतीनां बाधो न दोषावहः। औपनिषदानां श्रुतिस्थकपिलशब्देन च हिरण्यगर्भो ग्राह्यः, कनककपिलवर्णत्वात्। 'यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै, हिरण्यगर्भं पश्यति जायमानमि'त्यनेन समानार्थकत्वाच्च। श्रुतिविरुद्धस्मृतिप्रवर्त्तकस्त्वग्निवंशजो जीवविशेष एव, न कर्दमात्मजः। "कपिलो वासुदेवाख्यः साङ्ख्यं

---

रूपेऽवकाशाभावेनानवकाशरूपो दोषः प्रसज्येत इत्याह। साङ्ख्यस्मृतेरिति। अन्यथा तदनुसारेण वेदान्तार्थनिश्चये। पूर्वपक्षमनूद्य सिद्धान्तयति इत्येवं प्राप्त इति। सूत्रस्योत्तरभागं व्याख्यातुकामः तद्भागं पठति "नान्यस्मृत्यनवकाशदोषप्रसङ्गादि"ति। स्मृतिवचनं दर्शयति तथाचाहेति। ततः स्वयम्भूर्भगवान् व्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥ ततः प्रलयावसानानन्तरं स्वयम्भूः परमात्मा। इदं महाभूतादि आदिग्रहणान्महदादीनि च व्यञ्जयन्, अव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण ततः स्थूलरूपेण प्रकाशयन् वृत्तौजाः वृत्तमप्रतिहतमुच्यते "वृत्तिसर्गतायनेषु क्रमः" इत्यत्र वृत्तिरप्रतिघात इति व्याख्यातं जयादित्येन। वृत्तमप्रतिहतमोजः सृष्टिसामर्थ्यं यस्य स तथा। तमोनुदः प्रकृतिप्रेरकः "प्रादुरासीत् प्रकाशितो बभूव। सोऽभिध्याय इति। स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्याय जायतामित्यभिध्यानमात्रेणापएव ससर्ज। आदौ स्वकार्यभूतब्रह्माण्डसृष्टेः प्राक्। अपां सृष्टिश्चेयं महदहङ्कारतन्मात्रेणैव बोद्धव्या। महाभूतादिव्यञ्जयन्निति पूर्वाभिधानादनन्तरमपि महदादिसृष्टेर्वक्ष्यमाणत्वात्। तास्वप्सु वीजं शक्तिरूपमारोपितवानिति श्लोकार्थः। उक्तार्थमापस्तम्बवचसापि द्रढयति। आपस्तम्बश्चेति। श्रीभारतवचनमुदाहरति। भारते च। तत्रैवेति भारत इत्यर्थः। श्रीमुखवचनेनाप्युक्तार्थं प्रमाणयति। अहं सर्वस्येति। अहं जिज्ञास्यभूतजगजन्मादिलक्षणलक्षितपरब्रह्मस्वरूपः। सर्वस्य ब्रह्मादिस्थावरान्तस्य जगतः प्रभवः उत्पत्तिस्थानम्। मत्त एवेदं सर्वं देवमनुष्यादिलोकगमनागमनं वृद्धिह्रासादिकं प्रवर्तते। इत्येवं मत्वा बुधाः यथावद्बोधयुक्ता भावसमन्विताः प्रवृद्धप्रेमत्राहा मां निरतिशयप्रीतिविषयं भजन्त इत्यर्थः। अहं कृत्स्नस्येति। अहमेव कृत्स्नस्य जगतः प्रभवः परमकारणम्, प्रलयः संहारस्थानं संहारकारको वा कर्त्ता संहर्ता चाहमेवेत्यर्थः। मन्वादिस्मृतीनां धर्मकर्मादिस्वरूपे सावकाशत्वं शक्यं वक्तुमित्याशङ्कते। नन्विति। भवतु तावत् मन्वादिस्मृतीनां कतिपयभागस्य मुक्तयौपयिकधर्मादिप्रतिपादने चारितार्थ्यं तथापि यद्भागेन ज्ञानविषयार्थो निरूपितस्तद्भागस्य बाध्यत्वं दुर्वारमित्याशयेनोक्तशङ्कां परिहरति। नेति। यदि स्मृतित्वेन रूपेण सर्वासां स्मृतीनां प्रामाण्यमभ्युपेयते तदा कपिलस्मृतेरपि तथात्वात् न तां बाधयितुं क्षमत इत्याशङ्क्य निरस्यति नचेति स्मृतीनां मिथोविरोधे तु या स्मृतिः श्रुतिमूला तस्या एव प्रामाण्यमभ्युपेयं कश्रमूला इतरास्तु न प्रमाणपदवीमारोढुमर्हन्तीत्याह। श्रुतिविरुद्धाया इति। उक्तार्थं जैमिनिवचसा द्रढयति। तथासूत्रितमिति। सूत्रं व्याचष्टे। अस्यार्थं इति। मनोः प्राशस्त्यं प्रतिपादयन्तीं श्रुतिमुदाहरति। किञ्चेत्यादिना। श्रीमनोः प्रशंसायामपि कथं कपिलमतं

तत्त्वं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च। तथैवासुरये सर्ववेदार्थैरुपबृंहितम्। सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह। साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितमि"ति पाद्मात्। "कपिलं परमर्षिं च यमाहुर्यतयः सदा। अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्तकः" इति वनपर्वण्यग्निवंशवर्णने मार्कण्डेयवाक्याच्च ॥ १ ॥

वेदविरुद्धसांख्यादिस्मृतिबाधो न दोषावह इत्यत्र हेतुमाह—

## इतरेषाञ्चानुपलब्धेः । २ । १ । २ ॥

इतरेषां मन्वादीनां वेदविदग्रेसराणां स्वयोगमहिम्नाऽतीन्द्रियार्थसाक्षात्कारसमर्थानां वेदस्य प्रधानपरत्वानुपलब्धेश्च सांख्यस्मृतिर्नादर्त्तव्या ॥२॥

योगप्रत्युक्त्यधिकरणम्।

## एतेन योगः प्रत्युक्तः । २ । १ । ३ ॥

अतिदेशरूपमिदं सूत्रम्। तत्वं नाम असादृश्यशंकायां सादृश्यप्रतिपादनम्। केयमसादृश्यशङ्केति, "त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्ये" ति श्वेताश्वतरोपनिषदि। 'तं योगमिति मन्यन्ते स्थिरामिन्द्रियधारणामि"ति काठके च "योगः परमश्रेयोऽसाधारणहेतुज्ञानस्य साधनतया शिष्टैर्गृहीतः' तत्परमिदम् योगशास्त्रं तत्र ध्येयोऽपि श्रीपुरुषोत्तम इति सांख्यस्मृतेरसादृश्याद्वेदान्तोपयोगित्वात् तेन वेदान्तोपबृंहणं युक्तमिति मन्दानां शंका मा भूदिति सांख्यस्मृतेः सादृश्यं दर्शयन्समाधत्ते। एतेनेति। एतेनसांख्यस्मृतिनिरासेन योगस्मृतिरपि निरस्ता वोध्या। समानं सांख्यानामिवात्रापि परमेश्वरानधिष्ठितस्य प्रधानस्य स्वातन्त्र्येणोपादानत्वप्रतिपादनात्। परमेश्वरस्य निमित्तमात्रत्वाङ्गीकाराच्च। "अथ योगानुशासन"मित्यादियोगस्मृतेरपि वेदान्तविरोधस्तुल्य एव। अतो नानया वेदान्तोपबृंहणं-

---

निन्दितमित्याशङ्क्य तद्दर्शयितुं तदीयवचनं दर्शयति। याः वेदवाह्या इति। दृश्यते च श्रुत्यादौ कपिलशब्दप्रयोगः कथं तन्मतस्य हेयत्वं निर्दिष्टमित्यत्राह। औपनिषदानामिति। उक्तार्थे श्रुतिं प्रमाणयति। यो ब्रह्माणमिति वेदविरुद्धस्मृतिकर्ता अग्निवंशोद्भवः कपिलः कर्दमात्मजात्कपिलाच्छ्रीवासुदेवादन्य इति भारते श्रीमार्कण्डेयवचसा द्रढयति। कपिलो वासुदेवाख्य इति ॥१॥

सूत्रमवतारयति-नेद इति। वैदिकानां मन्वादिमहर्षीणां त्रिकालज्ञानां सूक्ष्मार्थदर्शिनां साङ्ख्योक्तप्रकारेण तत्त्वोपलब्धिर्यदि स्यात्तदा साङ्ख्यस्मृतिरनुरोद्धव्या नत्वेवमित्यर्थः। २ ॥

मन्वादिस्मृतिविरुद्धत्वाद्भवतु साङ्ख्यस्मृतेरप्रामाण्यं योगस्मृतेरतथात्वात् मन्वादिस्मृतिषु योगस्य माहात्म्यकीर्तनाच्च तत्र च प्रधानकारणवादस्योपनिबद्धत्वात् न सिद्ध्यति वेदान्तानां ब्रह्मणि समन्वयो योगस्मृतिविरुद्धत्वादित्याशङ्क्याह। एतेनैवेति। अत्रापि विषयसंशयपूर्वपक्षसिद्धान्तहेतवः पूर्ववद्द्रष्टव्याः। अतिदेशस्वरूपं निर्दिशति। तत्वं नामेति। अतिदेशत्वं नामेत्यर्थः। त्रिरुन्नतमिति। त्रीणि उरोग्रीवाशिरांस्युन्नतानि यस्मिन् शरीरे तत् त्र्युन्नतम्। "समं कायशिरोग्रीवं धारयन्।" इत्यादिस्मृतेः। तच्छरीरं समं संस्थाप्य युञ्जीतेतियोजना। न केवलं योगस्य विधानमात्रमपितु तज्ज्ञापकान्यर्थवादवाक्यान्यपि सन्तीत्याह। श्वेताश्वेतरोपनिषदीति। तामिति। तां पूर्वोक्तां धारणां योगविदो योगं परमं तप इति मन्यन्ते। परमनिश्श्रेयोहेतुज्ञानस्य साधनीं-

युक्तम् किन्तु तत्रस्थविरुद्धांशस्य निरास एव श्रेयानिति'। एवञ्च सति त्रिरुन्नतमित्योदौ योगाङ्गत्वेन यदासनाद्यभिधीयते। यच्च तत्कारणं सांख्ययोगाधिगम्यमि"तिश्रुतौ सांख्ययोग-शब्दाभ्यां ज्ञानं निष्कामकर्मच तत् खलु तदन्यद्वैदिकमेव। तस्मादुक्तलक्षणं ब्रह्मैव जगत्कारण-मिति ॥३॥

इतियोगप्रत्युक्त्यधिकरणम्

ननु ब्रह्मकारणवादेऽप्यसम्भवस्तुल्य एव विप्रतिपत्तिबाहुल्यात्। तथाहि, उपादेय-भूतस्य विकारस्योपादानगतधर्मानुविधायित्वनियमो निर्विवादः। दृष्टश्चायं सुवर्णादिविकृतौ कुण्डलादौ। प्रकृते तु कारणस्य ब्रह्मणश्चेतनत्वशुद्धत्वसर्वज्ञत्वादिधर्मस्याचेतनत्वाशुद्धत्वाव-च्छिन्ने कार्येऽनुवृत्यदर्शनादन्यथा कार्यस्यापि चैतन्यसाम्येन भोक्तृत्वभोग्यत्वविभागासिद्धेः। आकाशादिकार्यं न चेतनोपादेयमत्यन्तवैलक्षण्यात्। अग्निजलवत् गोऽश्ववच्चेति-प्रयोगात्। किञ्च न केवलं प्रत्यक्षादिभिरेव वैलक्षण्यं जगदुपलभ्यते। अपितु शब्दादपि तथात्वं विलक्षणत्वमवगम्यते "विज्ञानञ्चाविज्ञानञ्च, समाने वृक्षे पुरुषो निमग्नोऽनीशया शो-चति मुह्यमानः। अनीशश्चात्मा बध्यते भोक्तृभावादि"त्यादेरित्याह—

## न विलक्षणत्वादस्य तथात्वञ्च शब्दात्। २। १। ४

अस्य कार्यस्य जगतो ब्रह्मविलक्षणत्वान्नेदं जगद् ब्रह्मकार्यं भवितुमर्हति, अपितु तत्स-दृशस्याचेतनस्य प्रधानस्यैव कार्यं भवितुमर्हति। शेषन्तूक्तार्थम् ॥४॥

नन्वचेतनत्वाभिमतानामपि भूतेन्द्रियाणां क्वचिच्चेतनत्वं श्रूयते 'यथा तं पृथिव्य-ब्रवीत्मृदब्रवीत्, आपोवा अकामयन्त आपोऽब्रुवन्, तत्तेज ऐक्षत ता आप ऐक्षन्ते"ति। तेहेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुः; ते ह वाचमूचुस्त्वंन उद्गायेतीतिचेत्तत्राह—

भूतो योग इत्याह। योग इति। तेन योगशास्त्रेण। सूत्रार्थं विवृणोति। एतेनेति। ईश्वरानधिष्ठितं प्रानं स्वतन्त्रं विश्वं प्रत्युपादानकारणं सर्वेश्वरस्तु निमित्तकारणमिति योगस्मृतावभिहितमिति साङ्ख्यस्मृते साम्यमाह। समानामिति। उपक्रमसूत्रान्निश्चीयते योगस्यैव प्राधान्यं सचेश्वरसंसर्गैरहितः केवलचित्तवृत्ति निरोधमात्रः। तथात्वे वेदान्तार्थविरुद्धार्थाभिधायित्वाच्च तया वेदान्तोपबृंहणं भवितुमर्हतीत्याह। अथयोगानुशा-सनमित्यादिना। येनांशेन न विरोधः तदंशे तस्य प्रामाण्यमास्तां वैदिकार्थाभिधायित्वादित्याह। एवञ्च सतीत्यादिना। वेदविरुद्धार्थस्य निरसनीयत्वे सतीत्यर्थः। तदन्यत् साङ्ख्यस्मृतिभिन्नम्। निगमयति। तस्मादिति ॥३॥

इति प्रत्युक्त्यधिकरणम्

दृश्यते च लोके सारूप्ययोः कार्यकारणभावः नतु विरूपयोः प्रकृते च ब्रह्मप्रपञ्चयोर्विरूपत्वान्न विश्वं प्रति ब्रह्मणः कारणत्वं सम्भवतीति तर्कबलेनाक्षिपति नन्वित्यादिना। कारणगता धर्माः कार्ये विकारेऽन्विताः दृष्टाः यथा मृदान्विताः घटादिविकाराः। प्रकृतेः तु कारणगताश्चेतनत्वादयोधर्माः कार्ये विश्वे नोपलभ्यन्ते प्रत्युत तद्विपरीता अचेतनत्वाशुद्धत्वादय इति ब्रह्मविलक्षणत्वादस्य जगतः न तत्प्रति ब्रह्मणः कारणत्वं युक्तिबलसिद्धं किन्तु-प्रधानस्य विश्वसजातीयस्यैवेत्याह तथाहीत्यादिना। विपक्षे बाधकतर्कमुपन्यस्यति अन्यथेति। कारणवृत्ति-धर्मस्य चेतनत्वस्य कार्य्ये स्वीकार इत्यर्थः। सौत्रं नेति पदं विवृणोतिं न चेतनोपादेयमिति। तथात्वमित्यादिक

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । २ । १ । ५

तु शब्दः शंकानिरासार्थः । श्रुत्या पृथिव्यादिशब्दैस्तदभिमानिन्यश्चेतनादेवतास्तत्र-तत्र व्यपदिश्यन्ते । कुतः विशेषानुगतिभ्याम् । "हन्ताहमिमास्तिस्रो देवता" इति पृथिव्यादेर्देवताशब्देन विशेषणात् । "एता ह वै देवता अहं श्रेयसे विविदमाना" इति "तावा एता देवताः प्राणा निश्रेःयसं विदित्वा" इति च कौषीतकिभिरिन्द्रियाणां देवताशब्देन विशिष्याभिधानाच्च । तथा "अग्निर्वाग्भूत्वा मुखं प्राविशत्, आदित्यश्चक्षुर्भूत्वाक्षिणी"त्यादिषु वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशश्रवणाच्चेत्यतो नाचेतनस्य विश्वस्य चेतनं विलक्षणं ब्रह्म कारणम् । अपितु जगन्न ब्रह्मोपादानकम् तद्विलक्षणत्वात् । यद्यद्विलक्षणं तन्न तदुपादानकम् यथा मृद्विलक्षणा रुचकादयः । जगत्प्रधानोपादानकमचेतनत्वादिधर्मवत्त्वेन तत्सादृश्यात् यदेवं तदेवं मृद्विकारघटादिवत् । जगद्यदि प्रधानोपादेयं न स्यात्तर्ह्यचेतनत्वादिधर्मवदपि न स्यादित्यादितर्कसहकृतस्मृत्यनुरोधेन जगतः प्रधानोपादानकत्वं वेदान्ताः प्रतिपादयन्तीति । ५ ॥

एवंप्राप्ते राद्धान्तः—

## दृश्यते तु २ । १ । ६

तुशब्दः पूर्वपक्षव्यावृत्यर्थः । यदुक्तं जगन्न चेतनोपादेयमत्यन्तविलक्षणत्वादित्यादि तदयुक्तमाभासमात्रत्वात् । तथाहि यत्र यत्रोपादानोपादेयभावस्तत्र तत्र सादृश्यमिति व्याप्तिर्न ता-

---

सूत्रभागं व्याख्यातुकाम आह किञ्चेति । तथात्वमिति व्याख्येयपदम् । विलक्षणत्वोपपादकं शब्दमुदाहरति । विज्ञानञ्चेति । सूत्राक्षराणि व्याचष्टे । अस्येति । न विलक्षणादिति सूत्रस्यैतदग्रिमसूत्रस्य च पूर्वपक्षत्वम् ॥४॥

श्रूयते चाचेतनानां चेतनत्वमिति शङ्कते । नन्विति । तमुदाहरति यथातमिति । अहंश्रेयसइति । तेहेमे वागादयः प्राणाः, अहमर्थस्यात्मनः श्रेयसे विवदमानाः चतुर्मुखं गत्वाऽस्माकं मध्ये कः श्रेयानिति तद् ब्रह्म प्रति होचुः तांश्च ब्रह्म प्रत्युवाच युष्माकं मध्ये यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव जनो मन्यते स श्रेष्ठ इति प्रत्युवाच इति श्रुत्यर्थः । जगतोऽचेतनत्वेन मृदब्रवीदिति अचेतनाया मृदो वक्तृत्वं नोपपद्यत इति शङ्कितुराशयः । सूत्रार्थं व्याचष्टे तुशब्दइति । मृदादिशब्दैस्तदभिमानिदेवता व्यपदिश्यत इत्याह श्रुत्येति । हंत इमास्तिस्रो देवता इति तेजोऽवन्नानां तत्तद्देवताशब्देन विशेषणादित्यर्थः । चेतनस्य ब्रह्मण अचेतनजगदुपादानत्वं न सम्भवतीति निगमयति अतइति । जगद्विलक्षणं चेतनं ब्रह्म विजातीयस्य प्रपञ्चस्य कारणं न भवितुमर्हति नहि विजातीययोः प्रकृतिविकारभावो दृश्यते इत्यर्थः ॥ अनुमानमुखेन जगति ब्रह्मोपादानकत्वाभावं साधयति । जगन्न ब्रह्मोपादानकमिति तत्सादृश्यात् = प्रधानसादृश्यात् । यदेवम् = मृद्विकारघटादिकम् एवमचेतनत्वादिधर्मवत्त्वेन मृत्सदृशम् । तत् घटादिकम् । एवं मृदोपादानकम् । उक्तानुमानेऽनुकूलतर्कं दर्शयति । जगद्यदीति ॥५॥

सिद्धान्तसूत्रमित्याह । एवंप्राप्त इति । सूत्रं व्याचष्टे तुशब्दइति । यदाशङ्कितं तदनूद्यति यदुक्तमिति । परिहरति तदयुक्तमिति । आभासमात्रत्वादिति । अत्यन्तविलक्षणत्वादिति हेतोर्व्यभिचारित्वात् । आभासत्वमेवोपपादयति तथाहीत्यादिना । यद्युक्तव्याप्तेर्नियतत्वं स्यात्तदा व्यापकाभावेन सादृश्याभावेन व्याप्यस्योपादानोपादेयभावस्याभावः विरहिमन् सिद्ध्येत तदेव नास्तीत्याह यत्रोपादानोपादेयभाव इति । यतः उपादानोपादेयभावहेतुतः । तथात्वम् सादृश्यरूपसाध्यवत्त्वम् । उक्तव्याप्तेर्व्यभिचारं दर्शयन् सूत्रं विवृणोति दृश्यते हीति । कार्यकारणयोः यावद्धर्म-

क्षन्नियता यतस्तथात्वं स्यात्, दृश्यते हि विलक्षणयोरपि कार्यकारणभावः। यथा भुक्तादन्नात्केशनखादिरूपस्य विलक्षणस्य, गोमयाच्च वृश्चिकस्य, मक्षिकादिभ्यः कृम्यादेर्द्व्याद्गुणादेः शृङ्गाच्छरस्य, दावाग्निदग्धकदलीकाण्डाद्वेत्रांकुरस्य श्वमस्तकोप्तगोधूमयावनालादेः, पलाण्डुलशुनांकुरस्य कार्यस्योत्पत्तेरुपलम्भात्। किञ्च कार्यकारणभावे सर्वथा सादृश्यं विवक्षितं किञ्चित्सादृश्यं वा ? नाद्यः। कार्यकारणभावस्यैवासिद्धेः। अन्यथा केशनखादावन्नादेर्वृश्चिकादौ च गोमस्य सादृश्यप्रत्ययापत्तेः। द्वितीये त्विष्टापत्तिः। सत्तादेर्ब्रह्मधर्मकस्याकाशादावपि सत्वात्। आकाशोऽस्तीति प्रत्यक्षप्रतीतेः। आकाशादिप्रपञ्चजातं ब्रह्मोपादेयं सत्तादिधर्मवत्वात्। यन्नैवं तन्नैवमग्निसेचनयोरिवेत्यनुमानात्सत्प्रतिपक्षत्वञ्च बोध्यम्। आत्मन आकाशः सम्भूतः इत्यादिश्रुतेश्च। ६ ॥

ननु यदि विलक्षणयोरपि कार्यकारणभावस्तर्हि द्रव्यान्तरत्वेनोपादाने ब्रह्मणि उत्पत्तेः पूर्वमुपादेयं जगदसदिति प्रसज्जेत। असत एवोत्पत्तिः स्यादित्यसत्कार्यवादस्त्वयाङ्गीकृतः स्यादिति चेत्तत्राह—

## असदितिचेन्नप्रतिषेधमात्रत्वात् २। १। ७

कारणात्कार्यस्य विलक्षणत्वे उत्पत्तेः पूर्वमेकत्वावधारणात् कारणे कार्यं न विद्यते, इतिचेन्नैष दोषः। कुतः ? प्रतीतिकार्यकारणयोः सर्वथा सादृश्यनियमस्य प्रतिषेधमात्रत्वात्। पूर्वसूत्रे हि कार्यकारणयोः सर्वथा सादृश्यनियमाभावोऽभिहितः। ननु कारणात्कार्यस्य द्रव्यान्तरत्वमपि। कारणद्रव्यमेव स्वविलक्षणकार्याकारेण परिणमते इत्यङ्गीकृतत्वात्। कार्यं यथा सत्तथा "तदन्यत्वमि"ति सूत्रव्याख्याने वक्ष्यामः। ७ ॥

---

पुरस्कारेण साजात्यं किञ्चिद्धर्मेण वेति विकल्पयति। किञ्चेति। आद्यपक्षं निरस्यति नाद्यइति। कार्यकारणभावासिद्धेरिति। मृद्घटयोरपि मृत्वेन घटत्वेन साजात्यस्याभावात्तयोरप्युपादानोपादेयभावो न सिद्ध्येत एवमन्यत्रापि द्रष्टव्यम्। विपक्षे बाधकतर्कमाह। अन्यथेति। यत्किञ्चिद्धर्मपुरस्कारेण साज्यात्याङ्गीकार इत्यर्थः। सादृश्यप्रत्ययापत्तेरिति। केशनखादावन्नादेः पार्थिवत्वेन साजात्यस्य सत्वादित्यर्थः। आकाशब्रह्मणोरपि सत्वेन साजात्यमित्याह। सत्तादेरिति। विश्वं ब्रह्मोपादानत्वाभावादिति प्रागुपदर्शितानुमाने सत्प्रतिपक्षत्वं दर्शयति। आकाशादिप्रपञ्चजातमित्यादिना। यन्नैवमिति। यत्र साध्यं नास्ति तत्र हेतुरपि नास्तीत्यर्थः। अनुमानेन जगति ब्रह्मोपादानकत्वं प्रसाध्य श्रुतिप्रमाणेनापि तद्दर्शयति आत्मनइति ॥६॥

विलक्षणादुपादानात् विलक्षणकार्योत्पत्त्यङ्गीकारे। उपादेयस्य कार्यस्योत्पत्तेः प्राग्विलक्षणोपादानात्मनावस्थानस्य वक्तुमशक्यत्वेनासत्कार्यवादप्रसङ्ग इत्याशङ्कते। नन्वित्यादिना। विलक्षणत्वकथनेन द्रव्यान्तरत्वमुक्तं भवतीत्याशयेन द्रव्यान्तरत्वेनेत्युक्तम्। द्रव्यान्तरत्वेन निमित्ते ब्रह्मणि उत्पत्तेः प्राक् यदि कार्यं विश्वं विलक्षणत्वेन विद्येत तदा सत्कार्यवाद उपपद्येत नत्वेवमतोऽसदेव जगदुत्पद्यत इत्यर्थः। सूत्रस्य शङ्कापरं भागं विवृणोति। कारणादिति। उक्ताशङ्कां परिहरति। नैषदोषइति। सजातीययोरेव कार्यकारणभावनियमो निषिद्ध्यते पूर्वसूत्रे नतूपादानादुपादेयस्य द्रव्यान्तरत्वस्याभिधानमित्याह प्रकृतिकार्यकारणयोरिति ॥७॥

ननु स्यादेतन्मृद्घटयोरिव सुवर्णकुण्डलयोरिव च कार्यकारणयोर्द्रव्यैक्यम्। तथापि कार्यस्य जगत उपादाने ब्रह्मणि प्रलयवेलायां सत्वात् कार्यगताः सर्वेऽपि धर्मा अचेनत्वपरिच्छिन्नत्वाशुद्धत्वाज्ञत्वकर्मवश्यत्वादयो ब्रह्मण्येव प्रसज्येरन्। तदा तेन तस्याभेदात्। तथासति "सत्यं ज्ञानमनन्तं ब्रह्म, अपहतपाप्मा विजरो विमृत्युः, यः सर्वज्ञः सर्ववित्, इत्याद्युपनिषद्वाक्यानामसामञ्जस्यं स्यादिति पुनराक्षिपति—

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्। २। १। ८

जगतो ब्रह्मोपादानकत्वे अपीतौ प्रलये तद्वत्कार्यस्येव ब्रह्मणोऽप्यचेतनत्वादिप्राप्तेः प्रसङ्गादसमञ्जसं वेदान्तवाक्यम्। 'अपीतौ' इतिसृष्ट्यादिप्रदर्शनार्थः। ८॥

तत्पूर्वकत्वात्सृष्ट्यादेः उत्पत्तावपि ब्रह्मणस्तद्धर्मापत्तिरित्यत्रोत्तरमाह—

## न तु दृष्टान्तभावात्। २। १। ९

तुशब्दः प्रसक्तस्यासम्भाव्यत्वद्योतकः। नैव तद्वत् प्रसङ्गः। कुतः? एकस्यैव कार्यकारणावस्थाद्वयान्वयेऽपि कारणस्य शुद्धतयावस्थितौ दृष्टान्तस्य भावाद्विद्यमानत्वात्। यथा एक एव सुवर्णपिण्डम् कार्यावस्थायां स्वपरिणामभूतकटककुण्डलाद्यात्मनावस्थितः, पुनस्तेषां शक्त्यात्मना स्वस्मिन्नप्यये च न तद्धर्मैः स्वयं संस्पृश्यते शक्तिधर्माणां शक्तिगतत्वनियमात्। यथा वा मृत्पिण्डः स्वपरिणतघटादिधर्मैः, यथा च पृथ्वी स्वविकारचतुर्विधभूतग्रामधर्मैर्न संस्पृश्यते, एवं ब्रह्मापि कार्यावस्थायां व्यक्तनामरूपचिदचिदात्मकंजगदाकारेण स्थितमपि न तद्धर्मैः संस्पृश्यते। अचिन्त्यानन्तशक्तिमत्तया निरतिशयानन्दैकस्वभावतया च तद्विलक्षणत्वात्। पुनस्तस्मिंस्तस्याप्यये च ब्रह्म शक्तिधर्माः परिच्छिन्नत्वाज्ञत्वकर्मवश्यत्वादयो ब्रह्मशक्तिभूतचिदचिद्वस्तुगता एव स्युरिति नासङ्गे शुद्धे ब्रह्मणि तेषां प्रसङ्ग इत्यतो न किञ्चिदसमञ्जसम्। ९॥

किञ्च त्वत्सम्भावितदोषास्त्वदभिमते प्रधानकारणवादेऽपि समाना इत्याह—

---

सत्कार्यवादिनां मते कार्यकारणयोरैक्यात्कार्यगताः दोषाः अचेतनत्वादयः कारणे ब्रह्मणि स्युः ततश्च ब्रह्मणो निरनिष्टत्वनिरवद्यत्वप्रतिपादकश्रुतीनामसामञ्जस्यं प्रसज्येत इति शङ्कते नन्वित्यादिना। तदा=प्रलयदशायाम्। तेन=कारणेन ब्रह्मणा। तस्य=कार्यस्य जगतः। ततः किमित्यत आह तथासतीति। कारणस्य ब्रह्मणः कार्यवदशुद्धत्वे। शङ्कासूत्रं विवृणोति जगत इत्यादिना ॥८॥

पूर्वपक्षार्थमनूद्यति। तत्पूर्वकत्वात्; ब्रह्मपूर्वकत्वात्। तद्धर्मापत्तिः=कार्यगतधर्मापत्तिः। सिद्धान्तसूत्रमिदम्। सूत्राक्षराणि व्याचष्टे। तुशब्द इति। तुशब्दार्थमेव विवृणोति नैवतद्वत्प्रसङ्ग इति। एकस्य ब्रह्मणः कार्यावस्थाकारणावस्था चेत्यवस्थाद्वयं विद्यते उभयस्यामवस्थायां तत्र न कार्यगतदोषप्रसक्तिः यथा विकारः स्वोपादाने लीयमानः स्वधर्मैरुपादानं नदूषयतीत्यस्मिन्नर्थे दृष्टान्तानां सत्वादित्याह। एकस्यैवेति। कार्यगताः ये धर्माः ते शक्तावेव विद्यन्ते कुतः कार्याणां प्रलयवेलायां शक्त्यात्मनावस्थानादिति तद्धर्माणां न ब्रह्मणि संसर्गलेशोपीत्यर्थः। दृष्टान्ते कार्यधर्मायोगित्वं कारणे प्रदर्श्य दार्ष्टान्तेपि तद्धर्मासंसर्गित्वं दर्शयति एवमित्यादिना। शक्तिगतधर्मा शक्तावेवविद्यन्ते। न तु शक्तिमति ब्रह्मणि तस्य निरतिशयानन्दस्वभावत्वेन तद्विलक्षणत्वादित्यर्थः ॥ ९ ॥

## स्वपक्षे दोषाच्च । २ । १ । १०

तथाहि 'त्रिगुणमचेतनं निरवयवं प्रधानं तत्कार्याकारेण परिणमते' इति भवतो राद्धान्तः। तत्र निरवयवान्नीरूपात्प्रधानात्सावयवस्य रूपादिमतः कार्यस्योत्पत्तेरसम्भवे विशेषाभावात् । "यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायात् । इतरथा सर्वस्यापि कार्यमात्रस्य नीरवयवत्वं निरूपत्वञ्च स्यात् तथात्वे च कार्यप्रत्यक्षं न स्यात् । नामरूपादिना विभक्तं कार्यञ्च नोपलभ्येतेति सङ्क्षेपः । १० ॥

यच्चोक्तं तर्कसहकृतस्मृत्यनुरोधेन जगतः प्रधानोपादानकत्वं वेदान्ताः प्रतिपादयन्तीति तत्प्रत्याह—

## तर्काप्रतिष्ठानादप्यन्यथादनुमेयमितिचेदेव मप्यनिर्मोक्षप्रसङ्गः । २ । १ । ११

अपि शब्दश्चार्थे । तर्कस्याप्रतिष्ठानादनवस्थानाच्च शास्त्रमूलको ब्रह्मकारणवाद एव स्वीकार्यः, न तर्कमूलः प्रधानकारणवादः । "नारायणाज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्या" दिश्रुतेः। "अतश्च संक्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः । स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः" इत्यादिस्मृतेश्च । शाक्योलूक्याक्षपादकणादकपिलपतञ्जलितर्काणां परस्परतर्कप्रतिहततयाऽप्रतिष्ठितत्वान्न तर्कमूलस्य कपिलपक्षस्य सम्भव इति भावः। किञ्च "नैषा तर्केण मतिरपनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठे" ति, अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि" त्यादिश्रुतिस्मृतिभिरपि तर्काणां निषे-

---

कार्यकारणयोर्वैलक्षण्यं तावत्समानमुभयोः पक्षयोः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गोऽपीतौ तद्वत्प्रसङ्गश्चेति दोषाः प्रधानोपादानपक्षेऽपि सन्तीत्याह । किञ्चेति । साङ्ख्यानां मतं दर्शयति । तथाहीत्यादिना । विपक्षबाधकतर्कमाह । इतरथेति । कारणगतधर्माणां कार्यवृत्तितयास्वीकार इत्यर्थः । ततः किमनिष्टमित्यत आह । तथात्वे चेति । निरवयवत्वनीरूपत्वाङ्गीकारे ॥ १० ॥

प्रधानमेव जगत्कारणमिति वदन्ती साङ्ख्यस्मृतिः तर्कसहकृता अनुरोद्धव्या तदनुसारेण वेदान्तार्थो वर्णनीय इत्याह—यच्चोक्तमित्यादिना । सूत्राक्षराणि विवृणोति—अपि चशब्दार्थे । अनवस्थानादिति । तर्कस्यापाद्यापादकयोर्व्याप्तिरूपतया तत्रापि यदि व्यभिचारशङ्का स्यात् सा तर्कान्तरादपसारणीया यदि तत्राप्याशङ्केत तदान्यत् तर्कान्तरमन्वेषणीयमित्येवमनवस्था स्यात्तदुक्तं "यत्नेनाऽनुमितोप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यत" इत्याशयः । तर्को हि द्विविधः श्रुतिमूलकः तर्कमूलकश्च । आद्योपादेयो न द्वितीय इत्याह । शास्त्रमूलक इति । ब्रह्मकारणवादस्य श्रुतिमूलकत्वं दर्शयति । नारायणादिति । स्मृतिमुदाहरति । अतश्चेत्यादिना । श्रुतिमूलकत्वात् स्मृतेरपि प्रामाण्यमित्यर्थः। तर्कमूलकानां कणभक्षाक्षचरणकपिलप्रभृतिभिरुक्तानां परमाणुवादिप्रधानकारणवादानां परस्परतर्कहतानां श्रुतिमूलकत्वाभावान्नोपादेयता इत्याह । शाक्य इत्यादिना । श्रुतिस्मृतिभ्यामपि तर्कस्य निषिद्धत्वमाह । किञ्चेति । उक्तानुमानस्येति । विश्ववृत्तिप्रधानोपादानकत्वं वेदान्तप्रतिपाद्यम् । तर्कसहकृतसाङ्ख्यस्मृत्यनुरोधादित्यनुमानस्येत्यर्थः । नेदं विश्वं ब्रह्मप्रकृतिकं विलक्षणत्वादिति प्रागुदाहृताना

ध्यत्वान्नोक्तानुमानस्यापि प्रामाण्यम्। ननु विलक्षणत्वादितर्काणामप्रतिष्ठितत्वेऽप्यन्यथा शाक्यादितर्काप्रतिहतत्वेन व्याप्तिपक्षधर्मतासम्पन्नेन केनचित्प्रतिष्ठितेनानागतेन तर्केण प्रधानमनुमेयम्। नच प्रतिष्ठितस्तर्क एव नास्तीति वक्तव्यम् तर्काप्रतिष्ठानादित्यस्यैव तर्कस्यप्रतिष्ठितत्वात्। तर्कमात्रस्याप्रतिष्ठितत्वे च लोकव्यवहारोच्छेदप्रसङ्गात्। भूतभवन्मार्गसाम्येनानागतेऽपि मार्गे सुखदुःखप्राप्तिपरिहाराय लोकप्रवृत्तिदर्शनात्। "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता"। आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः। इति वदता मनुना च तर्कस्य निर्णयहेतुत्वप्रतिपादनादिति चेदेवमपि तथापि तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः। त्वत्तोऽप्यधिकतमकुतर्ककुशलपुरुषसद्भावनासम्भवात्। अतः प्रत्यक्षादिप्रमाणागोचरे परब्रह्मणि तर्काप्रवेशाच्छ्रुतिरेव प्रमाणम्। तन्मूलकतर्कश्च तदुपबृंहणयोपादेयो मन्तव्य इति, श्रुतेः। ननु तद्विरुद्धः। "शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिस्मृती" इतिभारतात्। तर्को नाम प्रमाणानुग्राहक ऊहः। अज्ञातनिश्चये वस्तुनि क्रियमाणस्तत्वज्ञानैकप्रयोजनः। "यथाग्नेर्विस्फुलिङ्गा" इतिश्रुत्या प्रत्यगात्मनो जन्म प्रतीयते। "न जायतेम्रियते वे"तिश्रुत्या च तदभावस्तत्रात्मनि नित्यत्वसंशये, आत्मा नित्य एव यदि नित्यो न स्यात्तर्हि कृतनाशाकृताभ्यागमप्रसङ्गः स्यादित्यादिरूपः "अविनाशीवाऽरे आत्मानुच्छित्तिधर्मत्वादि-

---

तर्काणामप्रतिष्ठितत्वाद्धेयत्वं भवतु तथापि प्रतिवादितर्काप्रतिहतः व्याप्त्यादिसम्पन्नः प्रतिष्ठितस्तर्को यद्यस्ति तेन तर्केण प्रधानस्य जगत्कारणत्वमनुमातुं शक्यत इत्याशङ्कते। नन्विति। अन्यथेति। अन्यथाभूताः ये शाक्यादीनां तर्काः तैरप्रतिहत्वेनेयर्थः। एतेन तर्कस्य दार्ढ्यं दर्शितं व्याप्तिपक्षधर्मतासम्पन्नेत्युक्त्या तर्कस्याभासत्वं निराकृतं भवति। अनागतेनेत्युक्त्या च तर्कस्य विलक्षणत्वं द्योतितम्। ननु सोऽपि तर्कोऽप्रतिष्ठितः तर्कजातीयत्वादित्यत आह। नचेति। तर्कादेवेष्टानिष्टत्वमनुमाय लोक इष्टे विषये प्रवर्त्ततेऽनिष्टे च निवर्त्तते, इतितर्कस्य प्रतिष्ठितत्वं वक्तव्यमित्याह। तर्कमात्रस्येति। तदेवोपपादयति भूतेति 'मार्गे' विषये, अनागतपाकः सुखहेतुः पाकत्वात्। अतीतपाकवत्। विषादिभक्षणं दुःखहेतुः विषभक्षणत्वात्। अतीतविषभक्षणवत्। इति तर्कात्मकानुमानादेव लोकः प्रवर्त्तते निवर्त्तते चेष्टानिष्टविषय इत्यर्थः। न केवलं लौकिकवैदिकव्यवहारानुपपत्तिरेव तर्कस्य प्रतिष्ठितत्वे मानं किन्तु मनुवचनमपीत्यतस्तदुदाहरति। प्रत्यक्षमिति। धर्मस्य तत्वबोधमिच्छता प्रत्यक्षमनुमानञ्च धर्मसाधनभूतद्रव्यगुणजातित्वज्ञानाय शास्त्रं वेदमूलं स्मृत्यादिरूपं नानाप्रकारधर्मस्वरूपविज्ञानाय सुविदितं कर्त्तव्यम् तदेव च प्रमाणत्रयं मनोरभिमतम् उपमानार्थापत्यादेश्चानुमानान्तर्भावः। आर्षमिति ऋषिदृष्टत्वादार्षं वेदं धर्मोपदेशञ्च तन्मूलस्मृत्यादिकं यस्तद्विरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति नतु मीमांसानभिज्ञ इति श्लोकयोरर्थः। एवमपीतिसूत्रस्थं व्याख्येयपदम् तस्य व्याख्यानमाह। तथापीत्यादिना। केनचित्तर्ककुशलेन पुंसा इदमित्थमेव ज्ञानमिति प्रतिपादितं तदन्येन दूषितं तेनापि प्रतिष्ठापितम्। एवमप्रतिष्ठितत्वादनिर्मोक्षः स्यादित्यत आह। त्वत्तोप्यधिकतमेति। नहि प्रत्यक्षेण प्रमाणेन ब्रह्म प्रतिपत्तुं शक्यते येन तत्र तर्कस्य प्रवेशः स्यात् किन्तु श्रुतिप्रमाणकमेव तदिति निगमयति। अतइति। न वयं तर्कत्वेन रूपेण तर्कसामान्यं प्रतिषेधयामः किन्तु श्रुतिमूलरहितम्। श्रुतिमूलकञ्च तर्कं वयमपि वेदार्थनिश्चायकतया मन्यामहे, इत्याह। तन्मूलकतर्कश्चेति। तद्विरूद्धइति। श्रुतिविरुद्धइत्यर्थः। उक्तार्थे भारतवचनं प्रमाणयति शुष्कतर्कं परित्यज्य इति। तर्कस्य लक्षणमाह। तर्को नामेति। अप्रयोजकत्वादिशङ्काकलङ्कितेन प्रमाणेनार्थस्साधयितुं न शक्यतेऽतस्तदर्थं तर्कापेक्षा स च प्रमाणानामनुग्राहकस्तेषामुज्जीवन इत्यर्थः। तस्य प्रयोजनं निर्वक्ति। अज्ञातनिश्चय इति। तदुदाहरति। यथेति।

शास्त्रमूलकत्वात्प्रमाणसहायत्वेन गृह्यते । यदि प्रपञ्चो मिथ्या न स्यात्तर्ह्यनिर्मोक्षप्रसङ्गः स्यात् । यदि सेश्वरं सर्वेदं जगन्मिथ्या न स्यात्तर्हि निर्विशेषाद्वैतसिद्धान्तसिद्धिर्न स्यादित्यादिरूपश्च शास्त्रनिर्मूलत्वान्निषिद्ध्यते । "आगमस्याविरोधेन ऊहनं तर्क उच्यते" इति वचनात् । "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थं ऊहस्तर्कः" इति न्यायसूत्र च । एवं तर्कग्राहकश्रुत्यादेः श्रुतिमूलकतर्कविषयत्वं, तर्कनिषेधकश्रुत्यादेश्च शास्त्रनिर्मूलतर्कनिषेधविषयत्वमिति विवेका उक्तः । तस्मादचिन्त्यानन्ताघटघटनापटीयः शक्तिमत्तया निःशेषदोषगन्धाघ्रातमाहात्म्यं सर्वज्ञत्वाद्यनन्तसद्गुणाश्रयं परं ब्रह्मैव जगत्कारणं न प्रधानमिति ॥११॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः । २ । १ । १२

अतिदेशसूत्रमिदम् । परिगृह्यन्ते इति परिग्रहा न परिग्रहाः अपरिग्रहाः शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः । शिष्टैर्मन्वादिव्यासादिभिः केनचिदप्यंशेनापरिगृहीता इत्यर्थः । यद्वा शिष्टाः परिशिष्टाः कपिलपतञ्जलिप्रभृतयोऽन्ये न विद्यते वेदस्य परिग्रहो येष्वित्यपरिग्रहाः शिष्टाश्च तेऽपरिग्रहाश्च शिष्टापरिग्रहाः वेदमगृह्णन्तः केवलतर्कपराः । कणभक्षाक्षपादक्षपणकभिक्षुप्रभृतिपरमाणवादिकारणवादा अपि एतेन वेदविरोधिप्रधानकारणवादनिरासेन

---

तदभावः जन्मनोऽभावः । श्रुतिमूलकं तर्कमुदाहरति । यदि नित्य इति । कृतनाशेति । आत्मनो नाशे तदनुष्ठितानां कर्मणां नाशे सति जन्मान्तरे निर्हेतुकसुखदुःखे प्रसज्येयातामित्यर्थः । उक्ततर्कमूलभूतां श्रुतिमुदाहरति । अविनाशीति । श्रुतिस्मृतिमूलशून्यान् तर्कान् प्रदर्श्य निषेधयति । यदीत्यादिना । उक्तार्थमाप्तवचसा द्रढयति । आगमस्याविरोधेनेति । अविज्ञाततत्त्वेऽर्थे इति । तर्क इति लक्ष्यनिर्देशः । "कारणोपपत्तित ऊह" इति लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् । कारणं व्याप्यं तस्योपपत्तिः आरोपस्तस्माद्य ऊहः—आरोपः, अर्थाद्व्यापकस्य । तथाच व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्याद्यारोपाद्यो व्यापकस्याहार्यारोपः स तर्कः यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः । ह्रदो निर्वह्निस्स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति । निर्वह्निःस्याद्द्रव्यं स्यादिति वारणाय व्याप्येति । तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति । स चायं पञ्चविधः । आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्गभेदात् । स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसङ्ग आत्माश्रयः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा (१) । यथा यद्ययं घट एतद्घटजन्यस्स्यादेतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात् (२) यद्ययं घट एतद्घटवृत्तिस्स्यादेतद्घटव्याप्यो न स्यात् । (३) यद्ययं घट एतद्घटज्ञानाभिन्नः स्याज्ज्ञानसामग्रीजन्यःस्यात् । एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम् । तदपेक्ष्यापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः । सोऽपि पूर्ववत् त्रिधा । तदपेक्ष्यापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम् । चतुष्कक्षादावपि स्वस्य स्वापेक्ष्यापेक्ष्यपेक्षितत्वसत्त्वान्नाधिक्यम् । अस्यापि पूर्ववत् त्रैविध्यम् । अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात् । तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्नि‍व्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः । प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकन्तु प्रसङ्गानात्मकत्वान्न तर्कः किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इत्यभिसन्धिः । अधिकरणार्थं निगमयति तस्मादिति ॥ ११ ॥

अतिदेशस्य लक्षणं पूर्वं प्रदर्शितम् । शिष्टापरिग्रहशब्दस्य विग्रहवाक्यं दर्शयति परिगृह्यन्ते इत्यादिना । शिष्टैरपरिगृहीता इति व्याख्याने तु वक्ष्यमाणानां वैशेषिकादिमतानामेव शिष्टापरिगृहीतत्वं पूर्वोक्तस्य प्रधानकारणवादस्य तु शिष्टपरिगृहीतत्वमित्येव प्रतीतेरित्यत आह । यद्वेति शिष्टाश्च ते अपरिग्रहाश्चेति व्याख्याने पूर्वोक्तप्रधा-

निरस्तावेदितव्यास्तेषामपि तर्कमूलत्वाविशेषात् ॥ १२ ॥

## सू० भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । २ । १ । १३ ॥

पुनरप्याशङ्क्य, समाधत्ते । ननु ब्रह्मैव जगदुपादानमिति यत्तद् युक्तं न वा ? इति संशये, न युक्तमिति पूर्वः पक्षः । तथा सति कार्यकारणयोरभेदनियमेन ब्रह्मण एव कार्यकारणरूपत्वाज्जीवब्रह्मणोः स्वभावविभागः । "अजो ह्येको जुषमाणोऽनुशेते, तयोरन्यः पिप्पलं स्वाद्वत्ति अनीशश्चात्मा बध्यते भोक्तृभावादि" त्यादिश्रुत्युक्तो न सम्भवति । अविभागे च सति ब्रह्मणोऽपि जीववत्सुखदुःखभोक्तृत्वापत्तेः । न च "सम्भोगप्राप्तिरितिचेन्न वैशेष्यादि"त्यत्र परमात्मनः सम्भोगप्रसङ्गः परिहृत इति वाच्यं, तत्रोपोऽस्यतयोपासकहृत्स्थस्यैकशरीरान्तर्वर्तितामात्रेण सम्भोगप्रसङ्गो न भवतीत्युक्तम्, अत्र तु जीवब्रह्मणोरनन्यत्वाङ्गीकारेण तद्वत्तस्यापि तत्प्रसङ्गस्य दुर्वारत्वात्, कार्यगतसर्वदोषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव श्रेष्ठ इति चेत्तत्रोत्तरम् । "स्याल्लोकवदि"ति । लोके यथा मृत्पिण्डजन्यस्य मृन्मयस्य घटाद्यवस्थापन्नस्य मृदमन्तरेण पृथक्स्थितिप्रवृत्त्यनर्हतया मृदभिन्नत्वेऽपि स्वरूपस्वभावनामरूपसङ्ख्याव्यवहारादिभेदः सुप्रसिद्धः, तद्वद्ब्रह्मोपादानकस्य जगतोऽपि ब्रह्मव्यतिरेकेण पृथक्स्थितिप्रवृत्त्यनर्हतया ब्रह्माभिन्नत्वेऽपि स्वरूपस्वभावादिभेदस्य श्रुतिस्मृतिसूत्रसिद्धस्य स्वाभाविकत्वात् । अयं भावः, न वयं ब्रह्मण उपादानत्वेऽपि तस्य चेतनाचेतनयोश्च स्वरूपैक्यमङ्गीकुर्मः, येनोक्तः दोषः स्यात् । अपि तु "अस्थूलमनण्वह्रस्वमदीर्घमपाणिपादः, अणोरणीयान्महतो महीयान्, अणुर्ह्येष आत्मा, अनीशश्चात्मा बध्यते

---

नकारणवादस्यापि शिष्टापरिग्रहस्सिद्ध्यति ॥ १२ ॥

सङ्गतिमाह । पुनरपीति । अधिकरणमारचयति । नन्वित्यादिना । तथासति ब्रह्मणो जगदुपादानकारणत्वस्य युक्तत्वे । कार्यकारणयोरनन्यत्वात् जीवेशयोः श्रुतिसिद्धः स्वभावभेदो नोपपद्येतातो न ब्रह्मणो जगदुपादानकारणत्वं सिद्ध्यति किन्तु प्रधानस्येत्यर्थः । स्वभावविभाग इत्यस्य न सम्भवतीत्यनेन समन्वयः । जीवेशयोस्स्वभावभेदप्रतिपादिकां श्रुतिमुदाहरति । अजो ह्येक इति । यदि जीवब्रह्मणोर्विभागो नोररीक्रियते तदा ब्रह्मणोऽपि सुखदुःखादिभोगः प्रसज्येत इत्याह, अविभागइति । अधिकरणारम्भमाक्षिपति । नचेति । यथा कार्यवशात्परगृहं प्रविष्टस्य गृहसन्निधिमात्रेण गृहपतित्वप्रयुक्तानर्थाभ्युदयभाक्त्वं न भवति तथोपास्यत्वाय हृदयस्थशरीरसन्निधिमात्रेण तदात्मकत्वप्रयुक्तभोक्तृत्वापत्तिर्नास्तीति सम्भोगप्राप्तिरिति चेदित्यत्रोक्तम् । अत्र तु तदनन्यत्वप्रयुक्तभोक्तृत्वमाशङ्क्यमिति भेद इत्याह । तत्रोपास्यतयेति । तत्र सम्भोगप्राप्तिरित्यस्मिन्सूत्रे । तद्वदिति जीववदित्यर्थः । तत्प्रसङ्गस्य सुखदुःखादिभोक्तृत्वस्य । एतावता प्रबन्धेन सूत्रस्य पूर्वपक्षांशो विवृतः । परिहरति । अत्रोत्तरमिति यथा मृदभिन्नोऽपि घटः स्वरूपेण पृथुबुध्नोदरत्वेन स्वभावेन जलाहरणादिना घटनाम्ना श्यामादिरूपैकत्वादिसङ्ख्यया भिन्नस्तद्वत् ब्रह्माभिन्नोऽपि प्रत्यगात्मा स्वरूपस्वभावादिना भिन्न इत्याह । मृन्मयस्येति । यदि ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपत ऐक्यं स्यात्तदा गुणवद्दोषाश्च स्वाभाविका भवेयुरिति दोषोऽस्माकं सिद्धान्ते प्रसज्येत नत्वेवमस्माभिः प्रतिपाद्यते किन्तु ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भेदः, इतरेतरात्यन्तविलक्षणत्वादित्याह । अयं भाव इत्यादिना । उक्तार्थं श्रुतिमुखेन द्रढयति । अस्थूलमित्यादिना चेतनस्याणुत्वेन निर्देशाद्ब्रह्म, अचेतनस्य च स्थूलत्वेन ब्रह्मणस्तयोर्वैलक्षण्यमित्यर्थः । एवमेव तयोश्च सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्र-

भोक्तृभावात्, "अजामेकां लोहितशुक्लकृष्णां ..." "गौरनाद्यन्तवती जनित्री भूतभावनी सितासिता च रक्ता च" इत्यादि श्रुत्युक्तं स्वरूपस्वभावादिवैलक्षण्यं स्वाभाविकं ब्रूमः। अनन्यत्वं च कारणं विना कार्यस्य, आत्मानं विनात्मीयस्य व्यापकं विना व्याप्यस्याधारं विनाधेयस्य, पृथक्स्थितिप्रवृत्त्यनर्हत्वेनेति सुखदुःखभोक्तृत्वस्य च पुण्यापुण्यकर्मप्रयुक्तत्वान्न परब्रह्मणि तत्प्रसङ्गः। परब्रह्मणस्तु अपहतपाप्मत्वादिधर्मवत्तया कर्मसम्बन्धगन्धलेशासम्भवात् ॥ १३ ॥

अथ यदुक्तं कार्यस्य कारणादनन्यत्वं तदिदानीं स्पष्टमाह—

## तदनन्यत्वमारम्भणशब्दादिभ्यः । २ । १ । १४ ॥

तत्र कार्यं मिथ्याऽनिर्वचनीयं वा? असद्रूपं वा? सद्रूपं वा? इति संशये, आहुरेके, "असच्चेन्न प्रतीयेत, सच्चेन्न बाध्येत, प्रतीयते बाध्यते च, अतः सदसद्विलक्षणमनिर्वचनीयमेवाभ्युपगन्तव्यम्, अनिर्वचनीयत्वादेव मिथ्यात्वमिति, प्रपञ्चो यदि मिथ्या न स्यात्तर्हि ज्ञाननिवर्त्योऽपि न स्यात्। दृश्यते हि लोके मिथ्यापदार्थस्य शुक्तिरजतादेरधिष्ठानज्ञानान्निवृत्तिरतोऽयं प्रपञ्चो ज्ञाननिवर्त्यत्वादिति, ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिर्जगन्मिथ्यात्वे मानमिति तन्न, मिथ्यात्वानिर्वचनीयत्वादेर्लक्षणप्रमाणानुपपत्त्या पूर्वैर्विस्तरतोनिरस्तत्वादत्रोपरम्यते। किञ्च नहि ज्ञानमज्ञानस्यैव मिथ्याभूतस्य निवर्त्तकमिति नियमः, ज्ञानमात्रेण ज्ञानसमानविषयकाज्ञानानुपादानकस्य सत्यस्य तज्ज्ञानप्रागभावस्य घटादिज्ञानेन

---

सत्त्वसर्वाधारत्वादियोगेन भेदः ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तज्जसत्वपराधेयत्वादियोगेन चाभेद इति भावः। अनन्यतावच्छेदकरूपं दर्शयितुमाह। अनन्यत्वञ्चेति। ब्रह्मणि सुखदुःखभोक्तृत्वं वारयति। सुखदुःखभोक्तृत्वस्यचेति ॥ १३ ॥

सूत्रमवतारयति। अथेति। विचाराङ्गं संशयं दर्शयति। तत्र कार्यमिति। तत्र निरूपणीये। तत्र पूर्वपक्षमाह। आहुरेक इत्यादिना। अर्थापत्तेर्विषयशोधकतर्कमाह। असच्चेन्नेति। विपर्ययानुमाने पक्षधर्मतामाह। प्रतीयत इति। ततः किं सिद्ध्यतीत्यत्राह। अतइति। विमतस्य जगतः प्रतीतिविषयत्वाद्बाध्यत्वाच्च। प्रपञ्चस्य मिथ्यात्वपर्यवसायि तर्कं दर्शयति। प्रपञ्चो यदीति। तत्र दृष्टान्तमाह। दृश्यतइति। परिहरति। तन्नेति। मिथ्यात्वानिर्वचनीयत्वादेर्लक्षणप्रमाणानुपपत्त्या पूर्वैर्विस्तरत इति परपक्षगिरिवज्रे पराभिमतमिथ्यालक्षणगिरिनिपाते। किमिदं मिथ्यात्वं सत्त्वानधिकरणत्वमिति चेन्न। निर्धर्मके ब्रह्मण्यतिव्याप्तेः नापि। बाधकज्ञानविषयत्वं ब्रह्मण्यतिव्याप्तेरेवेत्यादिग्रन्थेन मिथ्यात्वलक्षणं निरस्तम्। तत्रैव मिथ्यात्वे प्रमाणमपि नास्ति। तथाहि न तावत् प्रत्यक्षं वर्त्तमानग्राहिणस्तस्य त्रैकालिकबाध्यत्वग्राहकत्वायोगादित्यादिकं द्रष्टव्यम्। परपक्षगिरिवज्रे, पराभिमतानिर्वचनीयवादविषयप्रमाणगिरिनिपाते। २० अथाज्ञानस्यानिर्वचनीयत्वोक्तिरपि स्वकपोलोल्लासमात्रं लक्षणाभावात्। तथाहि-किं नामानिर्वचनीयत्वं सद्विलक्षणत्वमितिचेन्न, असतः नृशृङ्गादावतिव्याप्तेः। नाप्यसद्विलक्षणत्वमात्मन्यतिव्याप्तेः नापि सदसद्भिन्नत्वं वस्तुजातस्य सदसदन्यतरत्वनियमेन तादृशप्रतियोगसद्भावसम्भवात्। नापि निर्वचनानर्हत्वम्, अनेनैव निरुच्यमानतयाऽसम्भवादित्यादसंदर्भेणानिर्वचनीयत्वं विवेचितमस्ति तत्रैव द्रष्टव्यम्। अनिर्वचनीयत्वसद्भावे प्रत्यक्षानुमानादिप्रमाणमुत्थाप्य तत्रैव दूषितमत्रबोध्यम्, ज्ञानमज्ञानस्यैव मिथ्याभूतस्य निवर्त्तकमितिव्याप्तौ व्यभिचारं दर्शयति। नहि ज्ञानमित्यादिना निवर्तते हि ज्ञानमात्रेण सत्यभूतस्तज्ज्ञानप्रागभावोऽज्ञानानुपादानक इत्याह। ज्ञानमात्रेणेति। स्थलान्तरेष्वपिव्यभिचारं दर्शयति घटादिज्ञानेनेति। सेत्वादिदर्शनस्येति। श्रूयते च पुराणादौ सेतुदर्शनात्सतः पापस्य निवृत्तिः एतेन सच्चेन्न बाध्यते-

पटादिज्ञानस्य प्रत्यभिज्ञादिना संस्कारस्य यथा दोषदर्शनेन रागादेः सेत्वादिदर्शनेन ब्रह्महत्यादेश्च सत्यस्यैव निवृत्तिदर्शनात् । ननु सेत्वादिदर्शनमज्ञाननिवृत्तिद्वारेणादृष्टद्वारेण वा निवर्त्तकं ? साक्षान्निवर्त्तकत्वेऽपि न ज्ञानत्वेन, किन्तु विहितक्रियात्वेनेति चेन्न । प्रकृतेऽपि साम्यात्, श्रुतदर्शनत्यागेन तत्प्राप्तिस्तज्जन्यादृष्टं वा निवर्त्तकं कल्प्यते चेदिहापि श्रवणज्ञानोत्तरब्रह्मध्यानं तज्जन्यादृष्टं वा निवर्त्तकमिति वक्तुं शक्यत्वात् । "तस्याभिध्यानादिति" श्रुतेः । ननु सेतुदर्शनमात्रं न निवर्त्तकं, किन्तु दूरगमनादिविशिष्टमिति चेन्न, अत्रापि ज्ञानमात्रं न निवर्त्तकं, किन्तु नियमाधीतवेदान्तश्रवणादिनियमविशिष्टमन्यथा भाषाप्रबन्धादिश्रवणेऽपि असम्भावनादियुक्तस्याज्ञाननिवृत्त्यापत्तेः । किञ्च शूद्रादीनामपि म्लेच्छभाषानिरूपितवेदान्तार्थश्रवणादिनाऽपि मोक्षप्रसङ्गात् । नच नियमाध्ययनादीनामधिकारसम्पादनेनैवोपक्षीणत्वान्न ज्ञानसहकारित्वमिति वाच्यं, प्रकृतेऽपि दूरगमनादीनामधिकारसम्पादनेनैव नैराकांक्ष्यसाम्यात् । न च "दृष्ट्वैव तं मुच्यते" इति दर्शनमात्रस्य निवर्त्तकत्वश्रवणादिति वाच्यं, "प्रकृतेऽपि सेतुं दृष्ट्वा ब्रह्महत्यां व्यपोहती"ति सेतोश्चाक्षुषज्ञानस्यैव निवर्त्तकत्वश्रवणात् । किञ्च लोकेऽदृष्टत्वेऽपि विपक्षे बाधकाभावात् । श्रुतिबलात्सत्यस्यापि बन्धस्य निवृत्तिः किं न स्यादन्यथा लोकेऽधिष्ठानतत्त्वे साक्षात्कृते कर्मवशादपि निरुपाधिकभ्रमानुवृत्तेः जीवन्मुक्तिदशायां कर्मवशादनुवृत्तस्य जगतः सत्यत्वमेव स्यात् । किञ्च तत्र मतेऽपि लोकेऽत्यन्ताप्रसिद्धस्यापि व्याप्तिशून्यस्याश्रौतस्यानाद्यध्यासस्य प्रतिपादनेन ह्यत्यन्ताप्रसिद्धाङ्गीकारसाम्यात्, न ह्यनाद्यध्यासे श्रुतिर्मानं नापि लोकप्रसिद्धा

---

त्यंशो दूषितः । प्रथमतः सेतुदर्शनं ततोऽज्ञाननिवृत्तिः, अदृष्टोत्पत्तिर्वा ततो ब्रह्महत्यादिपापानां निवृत्तिरितिसेत्वादिदर्शनं न साक्षात्पापनिवर्तकमिति शङ्कते । नन्विति । तुष्यतु दुर्जन इति न्यायेनाह साक्षान्निवर्तकत्वेऽपीति । पापनिवर्तकतावच्छेदकं न ज्ञानत्वं किन्तु विहितक्रियात्वमित्याह । नज्ञानत्वेनेति । परिहरति । नेति । तदेवोपपादयति श्रुतदर्शनत्यागेनेति सेतुदर्शनस्य शुद्धनियमादिसापेक्षस्यैव पापनिवर्तकत्वं नतु तद्दर्शनमात्रमित्याशङ्कते । नन्विति साधनचतुष्टयसंपन्नाधिकारिणः शास्त्रोक्तलक्षणसम्पन्नस्य गुरुमुखादौपनिषदमेव वाक्यार्थं श्रवणेनैव गृहीत्वा मननादिविनैव ज्ञानेन त्वयापि बन्धनिवृत्तिः स्वीकृता अन्यथा नियमविधिबाधापत्तेस्तथाच निवर्त्तकज्ञानस्याधिकार्यादिसापेक्षत्वं तवापि साम्यमतोनोक्तदोषावकाशः, अन्यथा म्लेच्छानामपि श्रुतभाषाप्रबन्धादिना वाक्यार्थज्ञानसम्भवेन बन्धनाशापत्तेरित्याशयेनोक्तां शङ्कां परिहरति । नेति नियमादीनामधिकारिसम्पादनेनैवोपक्षीणत्वेन कर्मवन्न ज्ञाने तदपेक्षेत्याशङ्क्यापाकरोति । नचेति । दूरागमननियमादीनामधिकारिसम्पादनपरत्वेन सेतुदर्शने तदनुपयोगान्नोक्तदोषावकाश इत्याह । प्रकृतेऽपीति । दर्शनमात्रस्य श्रुत्या निवर्त्तकत्वमाशङ्क्य परिहरति । नचेति । श्रुतिबलात् सत्यस्यैव बन्धस्यनिवृत्तिसम्भवेनाध्यस्तवर्णनस्य दुराग्रहमात्रत्वाद्वैयर्थ्यमेवेत्याशयेनाह । किञ्चेति । विपक्षे बाधकतर्कमाह । अन्यथेति । सत्यस्य बन्धस्य निवृत्यनभ्युपगम इत्यर्थः । अधिष्ठानत्वे । प्रपञ्चभ्रमस्याधिष्ठानत्वंब्रह्म, अधिष्ठानसाक्षात्काररूपकारणसत्वेऽपि निरुपाधिकभ्रमः कर्मवशान्ननिवर्त्तते तदा प्रपञ्चस्य सत्यत्वमेवसंप्राप्तमित्याह । कर्मवशादिति । लोकेप्यन्ताप्रसिद्धस्यानाद्यध्यासस्य स्वीकारात्साम्यमित्याह । किञ्चेति । तदेवोपपादयति । नह्याध्यास इति । यत्राध्यासत्वं तत्र सादित्वं शुक्तिरूप्यादिवत् यत्रानादित्वं तत्र नाध्यासत्वमित्यन्वयव्यतिरेकव्याप्तिवदनाद्यध्यासे व्याप्त्यदर्शनादित्याह ।

व्याप्तिः । यत्राध्यासस्तत्रानादित्वमिति प्रत्युत सादित्वव्याप्तिः शुक्तिरूप्यादौ प्रसिद्धा, किन्तु युक्तिमात्रं मानं, तथाऽपि कुलधर्मतया तत्राङ्गीकारः । अस्माकं तु श्रुतिबलात्सत्यस्यैव श्रौतब्रह्मज्ञाननिवर्त्त्यत्वाङ्गीकारे को वा दोष इति मनोषिभिर्विवेचनीयम् । ननु ज्ञानैकनिवर्त्यस्य किं नाम सत्यत्वं न तावदज्ञानाजन्यत्वं "मायां तु प्रकृतिमि"ति श्रुतिविरोधात् मायाविद्ययोरैक्यात् । नापि स्वाधिष्ठाने स्वभावशून्यत्वमस्थूलादिश्रुतिविरोधात् । नापि व्यवहारकाले बाधशून्यत्वं तर्हि व्यावहारिकमेव सत्त्वमागतमेवाध्यस्तत्वं तच्च श्रुत्यर्थयोग्यताज्ञानार्थं वर्णनीयमेवेति चेन्न । सर्वस्य जगतः "तत्तेजोऽसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, नारायणाज्जायते प्राणः, अहं सर्वस्य प्रभवः" इत्यादिश्रुतिस्मृतिप्रमाणेन ब्रह्मजन्यतयाऽज्ञानजन्यत्वाभावात्सत्यत्वमेव । नापि "मायांतु"इति श्रुतिविरोधः, तस्याः प्रकृतिशब्दवाच्यश्रीपुरुषोत्तमाधीनाचित्प्रकृतिप्रतिपादनेनैव नैराकाङ्क्ष्यान्नाज्ञानपरत्वं मायाशब्दस्य ज्ञाने शक्त्यभावात् । यदुक्तं स्वाधिष्ठान इत्यादि तत्तुच्छम्"गौरनाद्यन्तवती"ति श्रुतिबलात्तद्गतपरतन्त्रसत्ताया अनाद्यनन्तत्वाभ्युपगमस्यादोषात् । श्रुतेश्च सर्वविलक्षणब्रह्मप्रतिपादनपरतया प्रपञ्चनिषेधपरत्वाभावात् । यच्चोक्तं व्यवहारकाले बाधशून्यत्वमित्यादि, तदपि तुच्छमनाद्यनन्तत्वविधायकश्रुत्यैवैतद्विकल्पस्य निरासात् । किञ्च संस्कारसापेक्षगरुडभ्रमरादिध्यानज्ञाननिवर्त्यविषकीटत्वादौ सत्यत्वदर्शनेन श्रवणादिजनितसंस्कारसापेक्षज्ञाननिवर्त्यस्य प्रपञ्चस्य सत्यत्वमेव स्यात् । किञ्च लोके निवृत्तिनिवर्त्ययोः समानसत्ताकत्वनियमात् । अज्ञाननिवृत्तिवदज्ञानमपि तात्त्विकं स्यात्, ज्ञानज्ञेययोर्दोषाधिष्ठानयोश्च समान-

---

नामीति । स्वमते दोषो नास्तीत्याह । अस्माकन्त्विति । तत्वज्ञानेन यत्सत्यत्वं निवर्त्तते तत्सत्यत्वं कीदृगिति जिज्ञासते । नन्विति । या माया सा प्रकृतिः सा एवाविद्येत्यनर्थान्तरम् । तथाच तज्जन्यत्वस्य सत्ये प्रपञ्चे सत्त्वाद्व्यापकमिदं लक्षणमित्याह । मायाविद्ययोरिति । स्वाधिष्ठानेति । घटाधिष्ठाने मृदि घटात्यन्ताभावशून्यत्वस्य सत्यत्वस्य घटे सत्त्वाल्लक्षणसङ्गतिः । यदि विश्वे सत्यत्वं स्यात् तदा प्रपञ्चादिनिषेधपरायाः श्रुतेः विरोधः स्यादित्याह । अस्थूलेति । तथा श्रुत्या प्रपञ्चस्य स्थूलस्य निषेधबोधनात्तस्य सत्यत्वे तन्न घटेत इत्यर्थः । श्रुत्यर्थेति । अध्यस्तस्य प्रपञ्चस्य तत्वज्ञानेनैव बाधः । यदि प्रपञ्चस्याध्यस्तता न स्यात्तदा श्रुत्यर्थयोग्यता न निर्वहेदिति तस्याध्यस्तत्वं कल्प्यमितिभावः । यदाशङ्कितं तत्परिहरति नेति । नहि जगतोऽज्ञानजन्यत्वं किन्तु ब्रह्मजन्यत्वमित्यत्र श्रुतिस्मृतीः प्रमाणयति तत्तेजोऽसृजत इति । सत्यत्वमेवेति । सर्वस्य जगतः सत्यत्वमिति योजना । श्रुतिस्थप्रकृतिपदस्य ब्रह्माधीनाचित्प्रकृतिपरत्वं व्युत्पादयन्नुक्तश्रुतिविरोधं निरस्यति । नापि मायांत्विति । नहि मायापदमज्ञाने शक्तं येनाज्ञानजन्यत्वं विश्वस्य स्यादित्याह । मायाशब्दस्येति । प्रागुक्तार्थमनूद्य दूषयति । यदुक्तमिति । जगतः स्वतन्त्रसत्वं नास्ति किन्तु परतन्त्रसत्वं तद्गतपरतन्त्रसत्वस्यानाद्यन्तशून्यत्वरूपं नित्यत्वं गौरनाद्यन्तवतीति श्रुत्या बोध्यते तथाच स्वाधिष्ठाने स्वाभावशून्यत्वरूपं सत्यत्वं वक्तुं शक्यत एवेत्याह । गौरनाद्यन्तवतीति । अस्थूलमनण्वित्यादिश्रुतिर्न विश्वं निषेधयति किन्तु सर्वविलक्षणतया ब्रह्मप्रतिपादनपरेत्याह । श्रुतेश्चेति । अस्थूलादिश्रुतेरित्यर्थः । प्रागुक्तार्थं दूषयितुमनूद्यति । यच्चोक्तमिति । निरासादिति । चेतनाचेतनवर्गवृत्तिपरतन्त्रसत्वस्य गौरनाद्यन्तवतीति श्रुत्या बोधनादुक्तदोषावकाश इत्यर्थः । गरुडध्यानेन विषादेः सत्यस्यैव निवृत्तिः । भ्रमरध्यानेन कीटत्वं निवर्त्तते इत्याह किञ्चेति । भवतां राद्धान्तेऽज्ञाननिवृत्तेर्ब्रह्मरूपतया तात्त्विकत्वं यथा तद्वत, निवर्त्यभूतमज्ञानमपि तात्विकं स्यात् । निवृत्तिनिवर्त्ययोः समानसत्ताकत्वनियमात् । इत्याह किञ्चेति । तथाप्रकृतेऽपीति । सेतुदर्शनाद् सत्यस्यैव पापस्य निवृत्तिः

सत्ताकत्वनियमात् ब्रह्मवदज्ञानमपि सत्यं स्यात् । किञ्च यथानादिभावरूपस्याज्ञानस्यान्यत्रादृष्टाऽपि निवृत्तिः श्रुतिबलादङ्गीकृता, तथा प्रकृतेऽपि किं न स्यात् । किञ्च शङ्खस्य श्वेतत्वानुमित्यादिना तदीयस्य श्वेतत्वविषयकाज्ञानस्यारोपितपीतत्वस्य वा निवृत्तिवत्त्वन्मते बिम्बप्रतिबिम्बयोरैक्यसाक्षात्कारेणैक्याज्ञानस्यारोपितभेदस्य वा निवृत्तिश्चेत् श्वेतत्वानुमित्यादिना तदज्ञाननिवृत्तावज्ञानकार्यस्यारोपितपीतत्वादेरनुवृत्तिर्न स्यात् । नच तस्य सोपाधिकत्वेन यावदुपाधिस्थायित्वनियमान्नोक्तदोष इति वाच्यं, उपादाननिवृत्तौ कार्यानुवृत्त्ययोगात्, ज्ञानस्य स्वप्रागभावनिवर्त्तन इवाज्ञाननिवर्तनेऽप्यन्यानपेक्षणात् । अपि च चरमसाक्षात्कारेण जीवन्मुक्तिदशानुवृत्तस्याज्ञानलेशस्य वाऽज्ञानसंस्कारस्य वा प्रारब्धकर्मादेर्वा निवृत्तिः किं न स्यात् ? तस्मात्त्वयाप्यज्ञानस्यारोपितभेदस्य वाज्ञानविरोधिन एव ज्ञानेन निवृत्तिर्विरोधश्च कार्यनिरूप्य इत्येव वक्तव्यम् एतन्ममापि समानम्, ज्ञाननिवर्त्यत्वे न तावत्सत्त्वं मिथ्यात्वं वा नियामकमपि तु ज्ञानविरोधित्वमेवेति सिद्धमित्यलं विस्तरेण । वस्तुतस्तु भगवत्प्रसादादेव बन्धनिवृत्तिर्न प्रकारान्तरेण । "शृण्वन्तोऽपि बहवो यं न विद्युः, यमेवैष वृणुते तेन लभ्यः, यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण" इत्यन्वयव्यतिरेकश्रुतेः । "मत्प्रसादात्तरिष्यती"ति स्मृतेश्च । नचैवं ज्ञानस्य वैयर्थ्यापत्त्या तत्प्रतिपादकशास्त्रव्याकोपप्रसङ्ग इति वाच्यम्, तस्य तत्प्रसादहेतुत्वात् । तथाह श्रीप्रल्हादः "एवं ज्ञाते सभगवाननादिः पुरुषोत्तमः प्रसीदत्यच्युते तस्मिन्प्रसन्ने क्लेशसंक्षयः तस्मिन्प्रसन्ने किमिहास्त्यलभ्यमि"त्यादिना । अतो ज्ञानस्य कारणत्वं भगवत्प्रसादस्यावान्तरव्यापारत्वमित्युभय-

---

श्रुतिबलेन स्वीकार्यंमित्यर्थः । ज्ञानं द्विविधं परोक्षापरोक्षभेदात् । तत्रापरोक्षतत्त्वं ज्ञानस्याज्ञाननिवर्त्तकत्वे शङ्खश्वैत्यानुमित्या तद्विषयकमज्ञानमारोपिमपि, तत्वञ्च निवर्त्येत इत्याह । किञ्चेति । बिम्बभूतं ब्रह्म, प्रतिबिम्बो जीवः । शङ्खश्वैत्यानुमित्याप्यज्ञाननिवृत्तावज्ञानकार्यस्य पीतत्वभ्रमस्यानुपपत्तिः स्यादित्याह । श्वेतत्वानुमित्यादिनेति । उपाधिनिवृत्तिप्रहकृतज्ञानेन सोपाधिकप्रतिबिम्बभ्रमो निवर्त्तेत इत्याशङ्क्य परिहरति । नचेति । तस्य=पीतत्वभ्रमस्य । यथा ज्ञानप्रागभावनिवृत्तिर्ज्ञानमात्रमपेक्षते तद्वदज्ञाननिवृत्तिरपि ज्ञानातिरिक्तं नापेक्षत इत्याशयेन समादधाति । उपादानानुवृत्ताविति । यतश्चरमसाक्षात्कारोऽज्ञानसंस्कारं प्रारब्धकर्म च न निवर्त्तयति अतस्त्वयापि ज्ञानविरोधित्वेन रूपेणाज्ञानमारोपितभेदञ्च प्रति ज्ञानत्वेन ज्ञानस्य निवर्तकत्वं वाच्यम् । तेन रूपेण निवर्त्यनिवर्त्तकभावोऽस्माकंमतेऽपि इष्ट एवेत्याह=अपिचेति । तदेवोपपादयति । ज्ञाननिवर्त्यत्व इत्यादिना । पुरुषोत्तमस्यानुग्रह एव प्रत्यगात्मनो बन्धनिवृत्तौ कारणमिति सिद्धान्तयति । वस्तुतस्त्विति । नप्रकारान्तरेणेति । न केवलश्रवणमनननिदिध्यासनैः । उक्तार्थं श्रुतिप्रमाणेन द्रढयति । शृण्वन्त इति । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेने"त्यत्र प्रवचनशब्देन मननं लभ्यते तत्साधनत्वान्मेधाशब्दश्च निदिध्यासनवाची । श्रवणमनननिदिध्यासनैः केवलैर्नप्राप्य इत्यर्थः । किन्तत्राह । 'यमेवैष वृणुते तेन लभ्यः ।" एष परमात्मा यमुपासकं वृणुते तेन प्राप्यस्तेन वरणीयेन प्राप्य इत्यर्थः यस्य प्रसादादिति । यस्य प्रसादाद्व्यतिरिक्तं न संसारमोचकमित्यर्थः । "बन्धको भवपाशेन भवपाशाच्च मोचकः ॥ कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।" इत्यादिस्मृतेश्च । यदि तदनुग्रहमात्रस्यैव बन्धनिवर्त्तकत्वं तदा श्रवणमनननिदिध्यासनबोधका वेदान्ता व्याकुप्येरन्नित्याशङ्क्य परिहरति । नचेति । तस्य=ज्ञानस्य, उक्तार्थे श्रीप्रह्लादवचनं प्रमाणयति । तथाह 'श्रीप्रह्लाद-इति एवंज्ञातं इति "देवाः मनुष्याः पशवः पक्षिवृक्षसरीसृपाः । रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् । एतद्वै-

शास्त्रस्याविरोधादित्यलं प्रासङ्गिकेन । अथ पराहतं च सतर्कैरेतदन्यथानुपपत्तिरूपं प्रमाणम् । तर्कश्च "प्रपञ्चो यदि सत्यो न स्यात् तर्हि श्रीपुरुषोत्तमस्य परब्रह्मणः परिपाल्यो न स्यात्, तत्परिपाल्यत्वं च श्रुतिस्मृतिसूत्रैरुद्धुष्यमाणं तस्मात्सदेवेति । तथाहि अध्यस्ते प्रवृत्तिरधिष्ठानसाक्षात्काराभाववत एव पुरुषस्य दृश्यते घटते च, नतु शुक्तिं शुक्तित्वेन साक्षादनुभवितुः शुक्तिरूप्यादाने प्रवृत्तिः, स्वाप्निकपुत्रादिगजतुरगादिपालनार्था प्रवृत्तिश्च जाग्रतोऽनुन्मत्तस्य कस्यचिद् दृष्टा युक्ता वा । तथा सर्वस्याधिष्ठानतत्त्वं सर्वदा पश्यतः परमेश्वरस्य प्रपञ्चमिथ्यात्वे कथं तस्य पालने प्रवृत्तिरिति पण्डितंमन्यैर्वैदिकत्वाभिमानिभिरेकाग्रमनसा विचारणीयम् । परमेश्वरस्याज्ञत्वकल्पनायां परमेश्वरत्वमेव न स्यात्, सर्वज्ञत्वे च मिथ्यावस्तुपरिपालने प्रवृत्त्यसम्भव एव । अन्यथा परमेश्वरस्य भ्रान्तत्वप्रसक्त्या तत्प्रतिपादकवेदो दत्ततिलाञ्जलिः स्यात् । नन्वैन्द्रजालिकवत्तस्य मिथ्यापालनं भवत्विति चेन्न । दृष्टान्तवैषम्यात् । ऐन्द्रजालिको मन्त्रौषधादिबलादतीतानागतान् देशान्तरस्थितांश्च सत एव पदार्थान्प्रदर्शयत्येव, नत्वपरोक्षतया स्वयं पश्यति पालयति वा । प्रकृते तु "यः सर्वज्ञः सः सर्ववित्, स्वाभाविकी ज्ञानबलक्रिया च, नामरूपे व्याकरवाणि, आकाशो ह वै नामरूपयोर्निर्वहिता, सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते । एकं बीजं बहुधा यः करोती"त्यादिश्रुतिभ्यः ईक्षणबहुभवनसङ्कल्पपूर्वकसृष्ट्यादिकर्तृत्वम् । "स्वयमात्मानमकुरुत, सच्च त्यच्चाभवदि"त्यादिना बहुभवितृत्वेनोपादानत्वं चोपलभ्यत इति विपरीतत्वाद् दृष्टान्तस्येत्यर्थः । नन्वैन्द्रजालिकस्य स्वमायया-

---

जानता सर्वं जगत् स्थावरजङ्गमम् । द्रष्टव्यमात्मवद्विष्णुः यतोऽयं विश्वरूपधृक् (विष्णुपुराणे प्र० अ० अ० १८) इतिश्लोकद्वयमेवंज्ञात इत्यस्य प्राक्तनोनमनुसन्धेयम् । तस्मान्निश्चीयते ब्रह्म चिदचिद्भ्यां भिन्नाभिन्नमिति ज्ञाते सति भगवान् श्रीपुरुषोत्तमः प्रसीदति ततो निरशेषक्लेशसंक्षय इत्यर्थः । फलितार्थं प्रदर्शयन्निगमयति । अतइति । प्रपञ्चो यदि मिथ्या न स्यात्तर्हि ज्ञाननिवर्त्योऽपि न स्यादितिसत्तर्काणां सत्तर्कैः पराहतत्वं दर्शयति । अथेत्यादिना । अन्यथानुपपत्तिरूपमिति । ज्ञाननिवर्त्यत्वान्यथानुपपत्तिर्जगन्मिथ्यात्वे मानमित्यर्थः । सत्तर्कान् दर्शयति । तर्कश्चेति । आपाद्याभावेनापादकाभावस्तर्कफलमिति निर्विवादम् तथाच श्रीपुरुषोत्तमपाल्यत्वाभावाभावेन प्रपञ्चस्य सत्यत्वं सिद्ध्यतीत्यर्थः । तार्किकबुद्धावापाद्यव्यतिरेकनिश्चयः कारणं नात इष्टापत्तिः कर्तुं शक्यत इत्याशयेनाह । तत्परिपाल्यत्वञ्चेति । तर्कस्य फलं दर्शनति । तस्मादिति । तदेवोपपादयति । तथाहीत्यादिना । यस्य पुंसोऽधिष्ठानसाक्षात्कारं नास्ति स एवाध्यस्ते वस्तुनि प्रवर्तते न तदितर इत्याह । अध्यस्त इति । परमेश्वरस्याज्ञत्वं वा सर्वज्ञत्वं वेति विकल्प्याद्यपक्षं निरस्यति । परमेश्वरस्येति । द्वितीयविकल्पमभिप्रेत्याह । सर्वज्ञत्वे चेति । विपक्षे बाधकतर्कमाह । अन्यथेति । सर्वज्ञस्य परमेश्वरस्य मिथ्यावस्तुपरिपालने प्रवृत्तिस्वीकार इत्यर्थः । शङ्कते । नन्विति । परिहरति । नेति । दृष्टान्तवैधर्म्यमेव दर्शयति=ऐन्द्रजालिक इति । यः सर्वज्ञइति सर्वविषयकज्ञानवान् । सर्ववित् = तत्तद्वस्तुगतसर्वप्रकारकज्ञानवानित्यर्थः । स्वाभाविकीति श्रुत्यर्थः प्राग्दर्शितः । आकाशः = ब्रह्म, ईक्षणबहुभवनसङ्कल्पपूर्वकसृष्ट्यादिकर्तृत्वमिति । 'सोऽकामयत बहु स्यां प्रजायेये'तिश्रुतेः । स आनन्दमय आत्मा देवमनुष्यादिरूपेण बहुस्यां तदर्थमाकाशादिभूतरूपेण प्रजायेय व्यष्टिसमष्टिरूपचेतनाचेतनविषयकसङ्कल्पं कृत्वेत्यर्थः । सच्चेति । सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते । त्यच्छब्देन पूर्वावस्थापरित्यागिविकारास्पदमचेतनमुच्यते । ब्रह्मैव चेतनाचेतननामरूपभाग्भवतीत्यर्थः । अन्यथानुपपत्तिप्रमाणेनैन्द्रजालिकस्य विषयापरोक्षत्वं साधयन्नाशङ्कते । नन्विति । परिहरति । नेति । तस्य=प्रकृतविषयस्य । तदेव दृष्टान्तेनोपपादयति । तथाहीत्यादिना ।

ऽमोहितस्य विषयापरोक्षत्वाभावे पश्यन्त्विदमाश्चर्यफलमिति प्रतिज्ञावचनं तथैव प्रदर्शयितृत्वं चानुपपन्नम्, एतदन्यथाऽनुपपत्त्या तस्य विषयापरोक्षमस्तीत्यवश्यमङ्गीकार्यमिति चेन्न तस्यान्यथोपपन्नत्वात्। तथा हि यथा वैद्यो गुरूपदेशादिना ज्ञातौषधिप्रभावो भविष्यद्रोगनाशादिविषयकापरोक्षाभावेऽपीदमौषधमिमं रोगं सद्यो नाशयति, पश्यन्त्वस्य प्रभावमिति वदति ददाति च, तथैन्द्रजालिकोऽप्यस्मान्मन्त्रादेरेते भ्राम्यन्तीति ज्ञातमन्त्रादिप्रभावः पश्यन्त्विदमित्यादि वदति दर्शयति चेति भावः। न चैन्द्रजालिकस्याप्यैन्द्रजालिकान्तरात्स्वस्रष्टानां रक्षणदर्शनात्। तथात्वे च नोक्तवैषम्यमिति चेन्न। भ्रमजनकस्वमन्त्रौषधादिगतसामर्थ्यस्यैव रक्षणान्न विषयस्येति। ननु मम पक्षे परमेश्वरस्यापि व्यावहारिकत्वेन तद्गुणशक्त्यादीनां सार्वज्ञादीनामपि तथात्वेन पारमार्थिकत्वाभावात्। तथा चाह भाष्यकारः— "ईश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसार = प्रपञ्चबीजभूते सर्वज्ञेश्वरस्य मायाशक्तिः प्रकृतिरि"ति श्रुतिस्मृत्योरभिलप्येते, ताभ्यामन्यः सर्वज्ञ ईश्वरः, "आकाशोह वै नाम० नामरूपे० सर्वाणि रूपाणि० एकं बीजमि" त्यादिश्रुतिभ्यः। एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति व्योमेव घटकरकाद्युपाध्यनुरोधि। स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्यात्मकोपाधिप्रत्युपस्थापितनामरूपकृतकार्यकरणसङ्घातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं, न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूप-

---

दार्ष्टान्ते योजयति। तथेन्द्रजालिक इति। दृष्टान्तवैषम्यं परिहरन्नाशङ्कते। नन्विति। तथात्वे=अन्यस्मात्स्रष्टानामैन्द्रजालिकस्य रक्षणकर्तृत्वे। न विषयस्य रक्षणं किन्त्वौषधमन्त्रगतसामर्थ्यस्यैवमित्याशयेन परिहरति। नेति। अविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वं न परमार्थतः किन्त्वेतत्सर्वं व्यावहारिकमिति शङ्कते। नन्विति। उक्तार्थे भाष्यं प्रमाणयति। तथाचाह इति। तथात्वेन=व्यावहारिकत्वेन। तत्त्वान्यत्वाभ्यामिति। नामरूपयोरीश्वरत्वं वक्तुमशक्यं जडत्वात्। नापीश्वरादन्यत्वं कल्पितस्य पृथक्सत्तास्फूर्त्योरभावादित्यर्थः। संस्कारात्मकनामरूपयोरविद्यैक्यविवक्षया ब्रूते—मायेति। नामरूपे चेदीश्वरस्यात्मभूते तर्हीश्वरो जड इत्यत आह। ताभ्यामन्यइति। अन्यत्वे व्याकरणे च श्रुतिमाह। आकाशइत्यादिना। अविद्याद्युपाधिना कल्पितभेदेन विम्बस्थानीयस्येश्वरत्वं प्रतिविम्बभूतानां जीवानां नियम्यत्वमित्याह। सच स्वात्मभूतानिति। नचात्र नाना जीवा भाष्योक्ता इति भ्रमितव्यम्, बुद्ध्यादिसङ्घातभेदेन भेदोक्तेः। ननु घटवदुपाधेरनधिगमे कथमौपाधिकभेदानुरोधेन नियम्यनियन्तृत्वं कल्प्यते तत्राह। अविद्येति। ईश्वरस्येश्वरत्वं काल्पनिकमिति स्पष्टयितुं विशिनष्टि। व्यवहार इति। कल्पितमीश्वरत्वमित्युपपादितं निगमयति। तदेवमिति। सर्वज्ञत्वादिवदीश्वरत्वस्य वास्तवत्वमाशङ्क्याह। सर्वज्ञत्वमिति। सर्वज्ञत्वाद्यविद्यात्मकोपाधिपरिच्छेदापेक्षमिति सम्बन्धः। पूर्वोक्तेन प्रकारेणाविद्यात्मको योऽसावुपाधिस्तेन कृतो यो जीवप्रपञ्चाख्यः परिच्छेदस्तदपेक्षमितियावत्। अन्वयमुखेनोक्तार्थं व्यतिरेकद्वारा निरूपयति। न परमार्थतइति। इत्यद्वैतवादिनां पूर्वपक्षस्य विवरणम्। परिहरति। नेति। तत्र हेतुमाह। अश्रौतत्वेनेति। हेत्वर्थमेवोपपादयति। तथाहीत्यादिना। आकाशो ह वै नामरूपयोरित्यादिश्रुतिषु नहि मिथ्यात्वव्यावहारिकत्ववाचकपदं श्रूयते येन तवोक्तकल्पना साधीयसी स्यादित्याह। तास्विति। उपलभ्यन्ते च तासु नामरूपादिकारणत्वप्रतिपादकानि पदानीत्याह। प्रत्युतइति। अतएव=नामरूपादिहेतुत्वप्रतिपादकपदानामुपलब्धेरेव। नामरूपयोः सत्यत्वे श्रुतिं प्रमाणयति। यस्येति। परमात्मनो ज्ञानशक्त्यादीनां व्यावहा-

आत्मनोऽशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यत इत्यादिनेति चेन्न । अश्रौतत्वेन कल्पनामात्रत्वात् । तथाहि परमेश्वरस्य मिथ्यात्वे किं मानमिति वक्तव्यम् ? न च "आकाशोह वै" इत्यादिश्रुतय इति पूर्वमेवोक्ता इति वाच्यम्, तासु मिथ्याव्यावहारिकादिप्रतिपादकपदानामेकतमस्याप्यदर्शनात् । प्रत्युत नामरूपादिहेतुत्वप्रतिपादनपराणां पदानामेवोपलभ्यमानत्वात् । अतएव न नामरूपयोरपि मिथ्यात्वम्, "यस्य नाम महद्यशः; अथ नामधेयं सत्यस्य सत्यं, प्राणा वै सत्यं, तेषामेष सत्यमि"त्यादिना सत्यत्वश्रवणात् । नापि तस्य ज्ञानशक्त्यादीनां व्यावहारिकत्वं वक्तुं शक्यम्, "परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च"इति कण्ठरवेण स्वाभाविकत्वश्रवणात् । नच तासां व्यावहारिकसत्त्वपरत्वं तत्त्वश्च ज्ञानबाध्यत्वं भेदवाक्यानां प्रत्यक्षादिप्रमाणगम्यभेदविषयकत्वेनानुवादपरत्वाभ्युपगमादितिवाच्यम्, आपातोक्तेः । तथाहि "जीवब्रह्मभेदे प्रत्यक्षादीनामप्रसरादि"ति विवरणाचार्यवचनात् प्रत्यक्षादिशक्त्यभावेन भेदवाक्यानां स्वार्थे एव प्रामाण्यम्, अन्यथा स्वरूपस्यापि बाधोऽभ्युपगन्तव्यः, स्वाभाविकत्वसाम्यात् । किञ्च घटोऽस्तीति प्रत्यक्षेण निर्विशेषाधिष्ठानवस्तुनो गम्यत्वादभेदवाक्यानामेव तदनुवादपरत्वेन स्वार्थेऽप्रामाण्यं, प्रत्यक्षगृहीतग्राहित्वात् । तथाच तवैव सिद्धान्तविरोधः, अन्यथा विवरणवाक्यभङ्गः । किञ्च "ईश्वरस्यात्मभूते इवे"त्यस्य कोवाऽर्थो विवक्षितः । स्वरूपात्यन्ताभिन्नत्वं वा ? शुक्तिरजतवदसत्त्वस्य प्रतीयमानत्वं वा ? स्वरूपापृथक्सिद्धत्वमात्रं वा?नाद्यः, श्रुतिप्रमितत्वात् । अन्यथा

---

रिकत्वं यत्पूर्वपक्षभाष्य उक्तं तदपि निराकरोति । नापीति । तस्य = परमात्मनः । जीवेश्वरयोर्भेदस्य प्रत्यक्षसिद्धत्वेन भेदप्रतिपादकवाक्यकदम्बस्यानुवादकत्वात् न स्वार्थे प्रामाण्यं किन्तु व्यावहारिकसत्वपरत्वमित्याशङ्क्य परिहरति नचेति । तत्वञ्चेति । व्यावहारिकसत्वञ्च । न तावत् प्रत्यक्षगोचरो जीवेश्वरभेदस्तयोरतीन्द्रियत्वेन प्रत्यक्षाविषयत्वात् "नेन्द्रियाणि नानुमान"मिति श्रुतेः । अनुयोगिप्रत्यक्षनिरूप्यत्वाद्भेदप्रत्यक्षस्य । एवं भेदस्य प्रत्यक्षगोचरत्वासिद्ध्या तद्विषयकवाक्यानामनुवादपरत्वानर्हतया स्वार्थे एव तेषां प्रामाण्यमित्याशयेन समादधाति । आपाततोक्तेरित्यादिना । तामेवोपपादयति । तथाहीत्यादिना । विपक्षे बाधकतर्कमाह । अन्यथेति=भेदवाक्यानां स्वार्थे प्रामाण्यानभ्युपगमेइत्यर्थः व्यावहारिकसत्वपरत्व इति यावत् । स्वाभाविकत्वसाम्यात् । यथा स्वभावसिद्धानां ज्ञानशक्त्यादीनां व्यावहारिकत्वाद्बाधोऽभ्युपेयते तथा ब्रह्मस्वरूपस्यापि स्वाभाविकत्वात्तस्यापि बाधः प्रसज्येत इत्यर्थः । घटोऽस्तीति प्रत्यक्षेण घटाधिष्ठानभूतनिर्विशेष ब्रह्मप्रतिपत्त्या अभेदप्रतिपादकवाक्यानामनुवादकत्वान्न स्वार्थे प्रामाण्यं तथाचाद्वैतवादिनां मते विरोधो जागरूकइत्याह । किञ्चेति । विपक्षेबाधकतर्कमुपन्यस्यति । अन्यथेति । भेदवाक्यानामनुवादकत्वइत्यर्थः । विवरणवाक्यं । जीवब्रह्मभेदे प्रत्यक्षादीनामप्रसरादिति । 'ईश्वरस्यात्मभूतइवेति' श्रीशाङ्करीयं भाष्यम् । तत्र विकल्पत्रयमाह । स्वरूपात्यन्ताभिन्नत्वमिति । यदि नामरूपयोः स्वरूपात्यन्तभिन्नत्वं स्यात् तदा 'यस्य नाम महद्यशः, अथ नामधेयं सत्यस्य सत्यमि'त्यादिभेदप्रतिपादिकानां श्रुतीनां विरोधः प्रसज्येतेत्याशयेनाद्यपक्षमपाकरोति । नाद्यइति । विपक्षे बाधकतर्कमाह । अन्यथेति । नामरूपयोः स्वरूपात्यन्तभिन्नत्वइत्यर्थः । नहि प्रमाणमन्तरा दृष्टान्तमात्रस्यार्थसाधकत्वमित्यभिप्रेत्य द्वितीयविकल्पं निरस्यति । नापि द्वितीयइति । बाधकमाह । अन्यथेति । नामरूपयोःप्रतीयमानत्वेः । चरमः = नामरूपयोः स्वरूपापृथक्सिद्धत्वरूपः । उक्तार्थे श्रुतिं प्रमाणयति । ऐतदात्म्यमिति । उपसंहरति । तस्मादिति । यदीश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्वं पारमार्थिकं न स्यात्तदा अवैदिकानां साङ्ख्यानां पथि प्रविष्टानां भवतां राद्धान्तोऽप्यवैदकस्स्यादित्याह । किञ्चेति । वादिपराजयार्थं सत्तर्कान् दर्शयति किञ्चेत्यादिना ।

"नामैव ब्रह्म रूपमेव ब्रह्मे"ति प्रतीत्यापत्तेः। नापि द्वितीयः, प्रतीयमानत्वे प्रमाणाभावात्, प्रत्युत "अथ नामधेयं सत्यस्य सत्यमि"ति सत्यत्वश्रवणात्। "व्याकरवाणी"ति व्यक्तीकरणश्रुतेश्च। अन्यथा "प्रत्यापयामी"ति श्रवणं स्यात्। चरमश्चेदिष्टापत्तिः, तदात्मकत्वेन स्वरूपापृथक्सिद्धत्वस्य सिद्धान्तेऽप्यङ्गीकारात्। "ऐतदात्म्यमिदं सर्वमि"ति श्रुतेः। नाप्यनिर्वचनीयत्वम्, अनिर्वचनीयख्यातिनिरासे तस्य पूर्वाचार्यैर्विस्तरेण निरस्तत्वात्। तस्मात्सदेव। किञ्चेश्वरस्यातिरिक्तत्वे निरीश्वरसाङ्ख्यादिभ्यो वैदिकेभ्यस्तव सिद्धान्तस्य परवञ्चनं विना को वा विशेषः? सर्वस्य वेदस्य सार्वज्ञसर्वशक्त्यादिनिलयपरब्रह्मपरत्वेन भवतां परिभाविततर्कमात्रं विना प्रमाणान्तरं नास्तीत्यलं कुतर्कनिरासैः। किञ्च यदि प्रपञ्चमिथ्यावादः श्रौतः स्यात्तर्हि शुक्तिरजतादिदृष्टान्ता वेदे उपन्यस्ताः स्युः। यद्यनिर्वचनीयवादः सूत्रकाराभिप्रेतः स्यात्तर्हि सूत्रितोऽपि स्यान्नतु तथा दृश्यते, तस्मात्कार्यं सदेवेत्यादितर्का अत्रानुसन्धेयाः। ननु ब्रह्मज्ञानेतराबाध्यत्वे, असद्भिन्नत्वे, च सति चिदन्यत्वान्मिथ्या, दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्च, शुक्तिरूप्यवदित्यनुमानमत्र प्रमाणमिति चेन्न। तस्य पक्षसाध्यहेतुदृष्टान्तानामसम्भवेनाभासमात्रत्वात्। तथाहि चिदन्यद्रूपः पक्षः प्रमितो न वा? नाद्यः, प्रमितस्य निषेद्धुमशक्यत्वात्। ननु प्रपञ्चस्य प्रत्यक्षगोचरत्वेऽपि सत्त्वानधिकरणत्वादिना मिथ्यात्वं वक्तुं शक्यमेवेति चेन्न। तव मते निर्विशेषस्य शुद्धस्य ब्रह्मणोऽपि सत्त्वानधिकरणत्वाभ्युपगमात्तत्रातिव्याप्तिः। शुद्धं ब्रह्म मिथ्या सत्त्वानधिकरणत्वात्,

---

प्रपञ्चस्य मिथ्यात्वमनुमानेन साधयन् पुनर्वादी प्रत्यवतिष्ठते। नन्वित्यादिना। पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेतिमते शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणम्। तदुपादाने तु शुक्तिरूप्यादेर्ब्रह्मज्ञानेतरबाध्यत्वान्न तत्र सिद्धसाधनम्। नच शुक्तिरूप्यस्य बाध्यत्वे नाबाध्यत्वविशेषणेनैव सिद्धसाधनवारणे ब्रह्मज्ञानेतरेति व्यर्थमिति वाच्यम्। तथात्वेऽस्मन्मते वियदादेरपिबाध्यत्वात् पक्षालाभप्रसङ्गात्। अतस्तन्माभूदित्येतदर्थं ब्रह्मज्ञा नेतरेत्यबाध्यत्वविशेषणस्यावश्यकत्वात्। इतरविशेषणद्वयन्तु तुच्छे ब्रह्मणि च बाधवारणायादरणीयम्। परिहरति। नेति। तस्य। मिथ्यात्वसाधकानुमानस्य। तदेवोपपादयति। तथाहीति। प्रमितस्य प्रपञ्चस्य निषेधो न सम्भवतीत्यतः प्रथमकल्पमपाकरोति। नाद्य इति। प्रत्यक्षप्रमाणविषयीभूते प्रपञ्चे सत्वानधिकरणत्वेन मिथ्यात्वं साधयाम इति शङ्कते। नन्विति। तवमतते निधर्मिकेब्रह्मणि सत्वानधिकरणत्वमतिव्यापकमित्याह। तवमतइति। अनुमानप्रयोगंदर्शयति। शुद्धंब्रह्मेति। यदि प्रपञ्चस्य प्रमितत्वंनास्ति तदाश्रयासिद्धत्वान्नोक्तानुमानेन प्रपञ्चे मिथ्यात्वं साधयितुं शक्यत इत्याशयेन द्वितीयविकल्पं निरस्यति-तद्द्वितीय इति। आश्रयासिद्ध्या दूषितमनुमानं दर्शयति-शशशृङ्गमित्यादिना। पक्षाप्रसिद्धिं प्रदर्श्य-साध्याप्रसिद्धिं दर्शयति। अथेति। दुर्निरूप्यत्वमेवोपपादयति तथाहीत्यादिना। विकल्पयति तच्चेति। मिथ्यात्वञ्चेत्यर्थः। यथा रजतत्वादिनिषेधस्य निषेधेरजतत्वं सिद्ध्यति तथा प्रपञ्चस्य मिथ्यात्वमसत्वमेव तस्य मिथ्यात्वे सत्वाभावाभावे पर्य्यवसानात् प्रपञ्चस्य सत्यत्वं सिद्ध्यतीत्याशयेन द्वितीयविकल्पं निरस्यति। द्वितीयइति। उक्तार्थं दृष्टान्तेन समर्थयति। घटाभावाभावस्येति। ततः किमित्यत आह। सिद्धसाधनापत्तिरिति। प्रपञ्चस्य सत्यत्वमनुमानात् प्रागेव सिद्धं तस्यानुमानेन साधने सिद्धसाधनं तस्य सिद्धिविधयाऽनुमानविरोधित्वमित्यर्थः। उक्तार्थं लौकिकदृष्टान्तेन द्रढयति। यथा केनचिल्लौकिकेनेति। मिथ्यात्वस्य बाध्यत्वाऽबाध्यत्वाभ्यां पाशारज्जू दर्शयति। मिथ्यात्वस्येति। सत्वविशिष्टेति। सत्यत्ववति विश्वस्मिन् सत्वविशिष्टासत्वाभावस्येष्टापत्त्योक्तशङ्कां-

तवाभिप्रेतप्रपञ्चवदित्यनुमानात्। नद्वितीयः। शशशृङ्गं तीक्ष्णाग्रं शृङ्गत्वात्, हरिणशृङ्गवत्, खपुष्पं गन्धवत्, पुष्पत्वात्प्रसिद्धपुष्पवदिति प्रयोगस्यैवाश्रयासिद्धत्वाच्च। अथास्य साध्योऽपि दुर्निरूपः, तथाहि साध्यमत्र मिथ्यात्वं, तच्च सत्यं वा ? तुच्छं वा ?। आद्ये मिथ्यात्वस्य सत्यत्वे अद्वैतभङ्गः। द्वितीये मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापत्तिः, घटाभावाभावस्य घटरूपत्ववज्जगन्मिथ्यात्वमिथ्यात्वस्य सद्रूपत्वात्, सिद्धसाधनतापत्तिश्च। यथा केनचिल्लौकिकेनोक्तं देवदत्तो मृतः, परेण चाप्तेन निर्णीयोक्तस्तदभावः। एवं चाप्तवाक्याद्देवदत्तमरणस्य मृषात्वे तस्य जीवनं सिद्धं, तद्वत् मिथ्यात्वस्याबाध्यत्वेऽद्वैतहानिः बाध्यत्वे जगतः सत्यत्वमित्युभयथाऽपि पाशारज्जू इत्यर्थः। किञ्च किं तावन्मिथ्यात्वं ? नच सदसत्त्वानधिकरणत्वं च सत्त्वविशिष्टासत्त्वाभावरूपमिति वाच्यम्, सदेकस्वभावे जगति विशिष्टाभावस्येष्टत्वात्। नच सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं द्वयमिति वाच्यम्, सत्त्वासत्त्वयोरेकतराभावेऽपरस्य सत्त्वावश्यकत्वेन व्याघातात्, निर्धर्मकब्रह्मवत्, सत्त्वराहित्येऽपि सद्रूपत्वोपपत्त्या मिथ्यात्वासिद्धेः। एतेन सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभावरूपं विशिष्टं तत्त्वमित्यपि निरस्तं, दोषसाम्यात्। ननु क्वचिदुपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वं, त्रिकालाबाध्यत्वं सत्त्वं तयोरभावः साध्य इति चेन्न। असल्लक्षणस्या-

---

परिहरति सदेकस्वभाव इति। तथाच विशिष्टाभावसाधने सिद्धसाधनमितिभावः। सत्वात्यन्ताभावेति। सदसदत्वानधिकरणत्वमित्यत्र सत्वासत्वयोः प्रत्येकमनधिकरणत्वविशेषणत्वेऽनधिकरणत्वात्यन्ताभाववत्वरूपवत्वे न ह्यर्यवसानेन च सत्वात्यन्ताभावासत्वत्यन्ताभावरूपधर्मद्वयं लभ्यत इति भावः। जगति सत्वाभावेऽसत्वमेव स्थास्यति कथं तदभावो तत्र वर्त्तेत यदि तत्रासत्वात्यताभावस्तदा सत्वमेव समागतं कथं सत्वात्यन्ताभाव इति परस्परव्याघात इत्याह सत्वासत्वयोरिति। अर्थान्तरमप्याह निर्धर्मकेति। यथा केवलब्रह्मणो वाध्यत्वाभावरूपसत्वादिकं न धर्मः "केवलो निर्गुणः" इत्यादिश्रुतेः। ब्रह्मनिष्ठसत्वस्याबाध्यत्वेनाद्वैतश्रुतिविरोधाच्च। अथ च तस्य बाध्यत्वादिधर्मोऽपि नास्ति श्रुतिप्रमितत्वात् साक्षित्वादिना बाध्यत्वासम्भवाच्च तेन तत् सद्रूपम्, तथा प्रकृतानुमानात् प्रपञ्चस्योक्तसत्वाभावसिद्धावपि न बाध्यत्वम् स्वतःप्रमाणप्रत्यक्षादिप्रमाविषयत्वात् तेन सोऽपि सद्रूप इति सद्रूपत्वविरोधिमिथ्यात्वासिद्ध्यार्थान्तरमितिभावः। एतेनेति सत्वासत्वयोरेकतरस्याभावेऽपरस्य सद्भावावश्यकत्वेन प्रपञ्चस्य निरुक्ताभावद्वयवत्तानुपपत्तिरूपदोषेणेत्यर्थः। दोषसाम्यात्=पूर्ववद्व्याघातसाम्यात्। सत्वासत्वयोरन्यथात्वं व्युत्पाद्यपरस्परविरहरूपत्वाभावं व्यवस्थापयन्नाशङ्कते नन्विति। क्वचिदुपाधौ=किञ्चिद्धर्मिणि। तयोः=निरुक्तसत्वासत्वयोः। परिहरति नेति। किञ्चिद्धर्मिनिष्ठसत्वेनाप्रतीयमानत्वरूपमसत्वस्य लक्षणं ब्रह्मण्यतिव्याप्तमित्याह असल्लक्षणेति। इष्टापत्तौ दोषमाह तस्याप्युक्तासत्वाङ्गीकार इति। वैयर्थ्यापत्तेरिति। चिद्भिन्नेतिविशेषणं ब्रह्मणि बाधवारणाय पक्षकोटौ निवेशितम् सत्वेन प्रतीत्यर्हत्वरूपपक्षविशेषणेनैव ब्रह्मणि बाधवारणसम्भवे पक्षांशे चिद्भिन्नत्वविशेषणं व्यर्थं स्यादित्यर्थः। तुच्छे बाधवारणायासद्भिन्नेतिविशेषणं मिथ्यात्वानुमाने पक्षकोटौ निवेशितम्, तदपि निष्प्रयोजनकं तुच्छेऽपि क्वचिदुपाधौ सत्वेन प्रतीत्यर्हत्वस्य शब्दाभासेन सत्वादित्याह। शब्दाभासेनेति। शून्यवादिमतसाम्यमुपपादयन्नाह उक्तसत्वाभावस्येति। लाघवात्सत्वासत्वयोः परस्परविरहरूपत्वमेव वाच्यं तथात्वञ्चेत् प्रागुक्तदूषणं स्यादेवेत्याह। लाघवादिति। ब्रह्मवत्प्रपञ्चस्य सद्रूपत्वे मानाभावाच्च सद्रूपत्वेनाप्युपपत्त्याऽर्था-

सङ्गे ब्रह्मण्यतिव्याप्तेः। तस्याप्युक्तासत्त्वाङ्गीकारे चिद्भिन्नेति वा सद्भिन्नेति विशेषणस्य वैयर्थ्यापत्तेः, शब्दाभासेन तुच्छस्यापि क्वचिदुपाधौ सत्त्वेन धीसम्भवाच्च, उक्तासत्त्वाभावस्य शून्यवादिप्रपञ्चे स्वीकाराच्च, लाघवात्सत्त्वासत्त्वयोः परस्पराभावस्यैवौचित्याच्च। नन्वेकेनैव सर्वानुगतेन ब्रह्मसत्त्वेन सर्वत्र सदितिज्ञानोपपत्तौ प्रत्येकं सद्रूपत्वकल्पनमयुक्तमन्यथाऽनुगतव्यवहारानुपपत्तेरिति चेन्न। सत्ता त्रैविध्यस्य त्वयाऽपि स्वीकारात्, लाघवेन "यदासीत्तदधीनमासीदि"ति श्रुतेः प्रामाणिकपरतन्त्रसत्तयाऽप्यनुगतधीदर्शनाच्च। एतेन सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यमिति निरस्तं, निर्धर्मके ब्रह्मण्यतिव्याप्तेश्च। नच सद्रूपं ब्रह्म तत्तदभावाधिकरणमिति वाच्यम्, प्रपञ्चेऽपि साम्यात्। नच ब्रह्मणो निर्धर्मकत्वात्सत्त्वासत्त्ववत्तत्तदधिकरणत्वमपि नास्तीति वाच्यम्, निर्धर्मकत्वहेतुसत्त्वासत्त्वाभ्यां व्याघातात्, सत्त्वासत्त्वाद्यनधिकरणत्वनिषेधे सदसत्त्वाधिकरणत्वापत्तेरिति साध्यासम्भवः। एवं हेतूनामप्याभासत्वमेव। तत्र दृश्यत्वं नाम किंवृत्तिव्याप्यत्वं ? वा फलव्याप्यत्वं ? वोभयव्याप्यत्वं वा ? नाद्यः, ब्रह्मण्यतिव्याप्तेः, तस्यापि वेदान्तजन्यवृत्तिविषयत्वात्। अन्यथा वेदान्तस्य वैयर्थ्यापत्तेः। नच "यत्तदद्रेश्यमि"ति श्रुतेः। शुद्धं न दृश्यं, किन्तूपहितमेव, तस्य मिथ्यात्वं चेष्टापत्तम्। नहिवृत्तिदशायामनुपाहितं तद्भवतीतिवाच्यम्, उपहितभाने उपधेयभानावश्यकत्वात्, प्रसिद्धार्थकयत्तच्छब्दयोरयोगाच्च। विशि-

---

न्तरता। नच सन्घट इत्यादिबुद्धिरेव मानमिति वाच्यम्। एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ प्रपञ्चस्य प्रत्येकं सत्स्वभावतां विना तदनुपपत्त्यभावादित्यभिप्रेत्यार्थान्तरतां निराकुर्वन्नाह नन्विति। ननु सदाकारप्रत्ययो यदा द्रव्यादौ तदा तत्र समवायेन सत्ताजातिर्विशेषणमस्तु यदा द्रव्यत्वादौ तदा सामानाधिकरण्यसम्बन्धेन सा तथाच कथं ब्रह्मण एव तथात्वं तत्राह अनुगतेति। परिहरति नेति। सत्तात्रैविध्यस्येति। व्यावहारिकीसत्ता १ प्रातिभासिकी २ पारमार्थिकीसत्ता ३ इत्यर्थः। लाघवेनेति त्रिविधसत्तास्वीकारापेक्षया स्वतन्त्रपरतन्त्रसत्ताया द्वैविध्य=स्वीकारे लाघवमित्यर्थः। परतन्त्रसत्वस्वीकारे श्रुतिं प्रमाणयति। यदासीत्तदधीनमिति। एतेन=वक्ष्यमाणदोषेणेत्यर्थः। तत्तदभावानधिकरणमिति। सत्प्रतियोगिकभेदासत्प्रतियोगिकभेदरूपाभावानधिकरणमित्यर्थः। तथाच ब्रह्मणि नातिव्याप्तिरितिभावः। प्रपञ्चेऽपि साम्यादिति सद्रूपं जगत् निरुक्तोभयभेदानधिकरणं तत्र न मिथ्यात्वसिद्धिरित्यर्थः। तत्तदधिकरणत्वमिति। सदसदत्वाधिकरणत्वमपीत्यर्थः। निर्धर्मकत्वहेतुसत्त्वासत्त्वाभ्यामिति। ब्रह्मणि निर्धर्मकत्वरूपहेतुसत्वे निर्धर्मकत्वरूपसधर्मकत्वं सिद्ध्यति सिद्धौ च न निर्धर्मकत्वहेतुना साध्यसिद्धिरिति, सिद्ध्यसिद्धिभ्यां व्याघात इत्यर्थः। दोषान्तरमाह। सत्वासत्त्वाद्यनधिकरणत्वनिषेध इति। मिथ्यात्वसाधकानुमाने साध्यं निरस्य हेतूनप्यपाकरोति। एवं हेतूनामिति। वृत्तिव्याप्यत्वमिति, इन्द्रियार्थसन्निकर्षद्वारानिस्सृतान्तःकरणपरिणामो वृत्तिस्तद्व्याप्यत्वं नाम तया प्राप्यत्वम्। विषयत्वमित्यनुक्त्वा व्याप्यत्वमिति वचनं यथा तडागोदकं कुल्यात्मना वहिर्निर्गत्य विषयं व्याप्य तदाकारं भवति तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा वहिर्निर्गत्य विषयं प्राप्य तदाकारं भवति सेयं वृत्तिपरेणोच्यमानत्वाद्विषयं व्याप्येति तदीयवचनानुसारेणेति ज्ञातव्यम्। आद्यपक्षं दूषयति नाद्य इति। ब्रह्मण्यतिव्याप्तेरिति। वेदान्तजन्या या उक्तरूपमनःपरिणामरूपचरमवृत्त्या आत्मनोऽपि व्याप्यमानत्वाद् व्यभिचार इत्यर्थः। अन्यथेति। आत्मनो वृत्तिव्याप्यत्वानङ्गीकार इत्यर्थः। न शुद्धत्वस्य

ष्टभाने विशेष्यभानं ह्यावश्यकं, नहि दण्डीति ज्ञाने पुरुषस्य विषयता नास्ति, नच विशेष्य-तापन्नं मिथ्यैवेति वाच्यम्। अधिष्ठानस्याधिकसत्ताकनियमेन विशेष्यतापन्नस्य मृषात्वेऽधि-ष्ठानत्वासम्भवात्। नहि विशेष्यतापन्नं सर्वथा ज्ञानाविषयं ह्यधिष्ठानं भवति जगतोऽपि विशेष्यतापन्नत्वादिना मिथ्यात्वं, स्वरूपेण तु सत्यत्वमित्यापत्त्याऽद्वैतहानिः स्यात्। किञ्च शुद्धस्याविषयत्वे मोक्षाभावप्रसङ्गः उपहितज्ञानेनैव मोक्षसिद्ध्याऽपसिद्धान्तापत्तेश्च। किञ्च सत्यस्य शुद्धस्यैव व्यावहारिकघटाद्यधिष्ठानस्य घटादिगोचरचाक्षुषादिवृत्तिविषयतायाः सत्त्वान्न ह्यधिष्ठानमविषयीकृत्याध्यस्तं वृत्तिर्विषयीकरोति "मनस्यैवानुद्रष्टव्यं, दृश्यते त्वग्र्यया बुद्ध्ये"ति श्रुतेः। न चोपहितविषयकैवेयं श्रुतिरिति वाच्यम्, त्वन्मतभाष्यविरोधात्। तथाहि "तदव्यक्त-माह ही"ति सूत्रभाष्ये अव्यक्तं परं ब्रह्मेन्द्रियाग्राह्यं निरूप्य, "अपि च संराधने प्रत्यक्षानुमा-नाभ्यामि"ति सूत्रभाष्ये च अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्य-न्तीत्यादिना परस्यैव पश्यतेः क्रियायाः कर्मत्वस्वीकारेण तद्बाधात्, तत्रोदाहृतश्रुतिस्मृतीनां "ततस्तु तं पश्यति निष्कलं ध्यायमानः"इति। "ज्योतिः पश्यन्ति युञ्जानाः योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमि" त्यादीनां बाधाच्च। किञ्चोक्तश्रुत्यादीनां यदि शुद्धविषय-कत्वं नाङ्गीक्रियते, तर्हि शुद्धस्य ज्ञानाभावे तादवस्थ्ये तदाच्छादकमूलाज्ञानस्याप्यनिवृ-

---

दृश्यत्वाङ्गीस्वाङ्गीकारे मानमस्तीत्यत आह। यत्तदद्रेश्यमिति अद्रेश्यम्=अदृश्यम्। ननु शुद्धब्रह्मणोऽदृश्यत्वे "दृश्यते-त्वग्र्या बुद्ध्ये" त्यादिश्रुतिविरोध इति चेन्न। दृश्यत्वश्रुतीनां विशिष्टब्रह्मविषयकत्वात्। नच विशिष्ट एव व्यभिचार-स्तत्र मिथ्यात्वस्यापि सत्वादित्याह। तस्य मिथ्यात्वमिति। चरमवृत्त्युपहितस्यात्मन एव चरमवृत्तिविषयत्वरूपदृश्य-त्वाङ्गीकारे उपधेयस्य शुद्धस्यापि वृत्तिविषयत्वप्राप्तत्वेन व्यभिचार इत्यत आह। उपहितभान इति। यदित्यनेन ब्रह्मोद्देश्यत्वात्तत्राऽदृश्यत्वादिकं विधीयते तथा यदित्यादिपदेनैव ब्रह्मणो ज्ञातत्वात्तस्य पुनरदृश्यत्वाभिधाने स्वक्रिया-विरोध इत्यर्थः। यदि शुद्धं ब्रह्म दृश्यं न स्यात्तर्हि तत्सिद्धिरेव न स्यात्। नच तस्य स्वप्रकाशत्वात्स्वत एव सिद्धिरिति वाच्यम्। स्वत इति कोऽर्थः स्वेनेति प्रमाणेन विनेति वा? नाद्यः कर्तृकर्मविरोधात्। न द्वितीयः शशवि-षाणादीनामप्येवं सिद्धेःप्रसङ्गात्। अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधातुं निषेद्धुं वा शक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वम् अभावज्ञानेऽधिकरणज्ञानस्य हेतुत्वादित्यपि द्रष्टव्यम्। दृश्यत्वहेतोरन्वयव्यतिरेकित्वाद्धेतुसाध्य-व्यतिरेकग्रहाधिकरणत्वेन शुद्धस्य ज्ञेयत्वमप्यावश्यकं तथापि हेतुसाध्ययोः व्यतिरेकग्रहो विशिष्ट एवास्तामित्यत आह विशिष्टभान इति। विशिष्टदृश्यत्वेनैव शुद्धस्यापि दृश्यत्वसिद्ध्या व्यभिचारो दुर्वार इति भावः। ननु विशिष्टज्ञानानन्तरं व्यवधानेन विशेष्यज्ञानं जायते तज्ज्ञानादेव विशेष्यविषयकाज्ञानस्य निवृत्तिर्नतुविशिष्ट-ज्ञानात्। अतो विशिष्टे ज्ञातेऽपि विशेष्येऽज्ञानमुपपद्यत इत्यत आह। नहि दण्डीति। तथाच व्यवहित-विशेष्यज्ञानकल्पनमप्रामाणिकमिति भावः। विशिष्टस्य ज्ञानविषयत्वे विशेष्यतापन्नस्य शुद्धस्यापि मिथ्यात्वान्न तत्र व्यभिचार इत्याशङ्कां निराकरोति। न चेति। अधिष्ठानत्वानुपपत्त्या विशेष्यतापन्नस्य शुद्धस्य ब्रह्मणो न मृषात्वमित्याशयेनाह अधिष्ठानस्येति। उक्तार्थमेव विवृणोति। नहि विशेष्यतापन्नमिति। स्वरूपेणेति। विशे-षणाविशिष्टकेवलस्य स्वरूपेणेत्यर्थः। ततः किमित्यत आह अद्वैतहानिरिति। वेदान्तजन्यचरमवृत्तेः शुद्धब्रह्म-विषयकत्वेन तस्मिन् वृत्तिविषयकत्वसत्त्वेऽपि मिथ्यात्वाभावाद् व्यभिचारस्तस्य वेदान्तजन्यचरमवृत्त्यविषयकत्वे मोक्षाभावप्रसङ्गश्चेत्याह किञ्चेति। ब्रह्मणि शब्दजन्यवृत्त्यविषयत्वान्न व्यभिचार इत्यत आह। किञ्चेति।

स्याऽनिर्मोक्षप्रसङ्गः। सबलज्ञानस्य मोक्षासाधकत्वाभ्युपगमात्। "परात्परं पुरिशयं पुरुषमीक्षते" इत्यादिना परात्परस्यैव ब्रह्मणो दर्शनक्रियाकर्मत्वश्रवणाच्च। तद्बाधोऽपि दुःपरिहरः। नापि फलव्याप्यत्वम्, अतीन्द्रियेष्वपञ्चीकृतभूतेषु चोदनैकवेद्यधर्मादौ तव मते साक्ष्येकवेद्ये सुखादौ तदभावेनाव्याप्तिप्रसङ्गात्तेषां सत्यत्वापत्तेः। सुखादयो धर्मादयश्च सत्याः, फलव्याप्यत्वराहित्यात्, ब्रह्मवत् इति प्रयोगात्। नाप्युभयव्याप्यत्वं तत्त्वं, विशेषस्य सामान्यानतिरेकेण वृत्तिव्याप्यत्वाभ्युपगमादेव दृश्यत्वसिद्ध्या ब्रह्मण्यतिव्याप्तिप्रसङ्गस्य दुर्वारत्वादिति संक्षेपः। नापि जडत्वं हेतुः। तत्त्वं न तावदज्ञानत्वं, वृत्तिज्ञाने भागासिद्धेः, आत्मनि व्यभिचाराच्च। तथाहि आत्मरूपं ज्ञानं सविषयं? न वा? आद्ये, स्वविषयं? परविषयं वा? नाद्यः, त्वयाऽनभ्युपगमात्। न द्वितीयः, मोक्षे परस्याभावात्, त्वन्मते वर्त्तमानस्यैव विषयत्वात्। न चार्थोपलक्षितप्रकाशस्यैव ज्ञानत्वात् तस्य मोक्षेऽप्यनपाय इति वाच्यम्। यदा कदाचिद्विषयसम्बन्धान्मोक्षे ज्ञानत्ववद्यदा कदाचिद्दुःखादिसम्बन्धाद्दुःखित्वाद्यापत्तेः। अभावादिषु सप्रतियोगित्वादेरिव ज्ञाने सविषयत्वस्यापि स्वाभाविकस्य धर्मिसमसत्ताकस्य दर्शनात्। न च सविषयत्वं ज्ञानस्य विषयेण सहाध्यासिकः सम्बन्धः। स च न स्वाभाविकः, एतद्धेत्वधीनमिथ्यात्वसिद्धेः, प्रागाध्यासिकसम्बन्धासिद्धेः। मोक्षे अध्यासिकसम्बन्धासिद्धेरिति वाच्यम्, अज्ञानेच्छादेरिव ज्ञानस्यापि सविषयतायाः स्वाभावि-

---

उक्तार्थमेव विवृणोति नह्यधिष्ठानमिति। ब्रह्मणः शब्दाजन्यवृत्तिविषयत्वे श्रुतिं प्रमाणयति मनसैवेति। उक्तश्रुतेरुपहितब्रह्मविषयकत्वमाशङ्क्य परिहरति नचेति। श्रीशाङ्करीयभाष्यविरोधं दर्शयति। तथाहीत्यादिना यत्प्रतिषिद्धात् प्रपञ्चजातादन्यपरंब्रह्म तदस्ति चेत्कस्मान्न गृह्यत इति उच्यते तदव्यक्तमिति अव्यक्तशब्दार्थं व्याचष्टे। अव्यक्तं परब्रह्मेति 'मनसैवानुद्रष्टव्यमित्यादिश्रुतीनामुपहितब्रह्मविषयकत्वे। निरस्तसमस्तप्रपञ्चमिति विशेषणेन शुद्धस्यैव दर्शनक्रियाकर्मत्वबोधनात्तद्विरोधः स्पष्ट एवेति भावः। तद्बाधात्। पश्यतिक्रियाकर्मत्वस्य बाधात् तत्रत्योदाहृतश्रुतिस्मृतीनां बाधमप्याह। तत्रेति। शुद्धब्रह्माच्छादकं मूलाज्ञानं शुद्धब्रह्मविषयकज्ञानादेव निवर्त्तते नतूपहितब्रह्मज्ञानान्नतज्ज्ञानाद् मोक्षः किन्तु शुद्धब्रह्मविषयकज्ञानादेव यदि तस्य ज्ञानविषयत्वं नाङ्गीक्रियते तदा मोक्षाभावः प्रसज्येत इत्याह किञ्चेति। श्रुतिं प्रमाणयति परात्परमिति। फलव्याप्यत्वरूपं दृश्यत्वं निरस्यति—नापीति। अतीन्द्रिये शब्दैकगम्ये धर्मादावन्तःकरणवृत्त्यभावेन तत्प्रतिफलितचैतन्यरूपफलव्याप्यत्वस्याभावेनोक्तहेतोर्भागासिद्धत्वमित्याह अतीन्द्रियेष्वपञ्चीकृतभूतेष्विति। तदभावेन=फलव्याप्यत्वाभावेन। अन्तःकरणतद्धर्मसुखादीनां साक्षिमात्रवेद्यतया अन्तःकरणवृत्तेः वहिर्निर्गमनाभावेन तत्प्रतिफलितचैतन्यरूपफलव्याप्यत्वस्य सुतरामभावादेवमादिषु हेतोर्भागासिद्धत्वम्। शुक्तिरूप्यादौ साधनवैकल्यञ्चेत्यर्थः। ततः किमित्यत आह तेषामिति। सुखादीनाम्। तदेवानुमानेनोपपादयति—सुखादय इति। तृतीयविकल्पं निरस्यति नापीति। तत्वम्=दृश्यत्वम्। अतिप्रसङ्ग इति। मिथ्यात्वाभाववति ब्रह्मणि वृत्तिव्याप्यत्वरूपदृश्यत्वहेतोस्सत्वाद् व्यभिचार इत्यर्थः।

## अथ जडत्वहेतुनिरासः।

दृश्यत्वहेतुमपाकृत्य जडत्वहेतुमपि निरस्यति नापीति। तत्वम्=जडत्वम्। वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेन केवलचैतन्यस्याज्ञानत्वेन चैतन्ये व्यभिचारः वृत्तिरूपज्ञानेऽज्ञानत्वहेतोर्भागासिद्धत्वञ्चेत्याह। न तावदिति।

कत्वात्। भोक्तृभोज्यं विना भुजेरिव, ज्ञातृज्ञेयं विना ज्ञानस्यासम्भवात्। न चानादौ तदनपेक्षा, अनादेः प्रागभावस्य प्रतियोग्यपेक्षाया जात्यादेर्व्यक्त्यपेक्षाया अज्ञानस्य विषयाश्रयापेक्षाया दर्शनात्। ज्ञानस्य ज्ञानत्वं हि ज्ञेयोल्लेखित्वं, तच्चातीतादिज्ञानस्याप्यक्षतम्, तच्च तत्रानिष्टं, उल्लेखस्य तत्र संसारत्वेन मोक्षे तदुल्लेखे तद्विप्लवप्रसङ्गात्। नापि ज्ञानस्य निर्विषयत्वं सम्भवति ज्ञानत्वहानेः, अर्थप्रकाशत्वरूपज्ञानस्वभावाभावे घटादेरपि ज्ञानत्वापातात्, ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादिति विवरणोक्तिबाधाच्च। किञ्चात्मरूपं ज्ञानं प्रमा ? भ्रमः ? वा, नाद्यः। तद्बोध्यस्याविद्यादेः सत्यत्वापत्तेः। नान्त्यः, भ्रमस्य दोषजन्यत्वनियमेनात्मनस्तदभावात्। उभयभिन्नत्वे ज्ञानमेव न स्यात्। नच तार्किकाभिमतेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्चोभयवैलक्षण्येऽपि ज्ञानत्वोपपत्तिः, ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य भ्रमत्वे दोषजन्यत्वस्य चापत्तेः। निर्विकल्पकस्य तद्वति तत्प्रकारकत्वाभावादिति वाच्यम्, अबाधितार्थकत्वरूपयाथार्थ्यप्रामाण्यस्येश्वरीयज्ञानादावक्षतेः, विशेष्यावृत्त्यप्रकारकत्वरूपप्रामाण्यस्येश्वरज्ञाननिर्विकल्पकयोरक्षतत्वाच्च। प्रमासामान्ये च न गुणजन्यत्वं नियामकं, किन्तु तद्विशेषे एव। प्रमामात्रे च 'नानुमतो गुण' इति मणिकृतोक्तेः, किन्तु दोषाजन्यत्वमेव हि तन्नियामकम्, नापि ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वं जडत्वं, वृत्त्या-

---

तदेवोपपादयति तथाहीत्यादिना। आत्मरूपज्ञानमिति। चैतन्यरूपा ज्ञप्तिरित्यर्थः। तत्रयानुभ्युपगमात् स्ववृत्तिविरोधेनेत्यादि। तथा हि लोके क्रिया द्विविधा दृष्टा सकर्मिका अकर्मिकाचेति तत्राकर्मिका क्रिया कर्त्राश्रिता यथा शयनासनक्रिया देवदत्ताश्रितैव। सकर्मिका क्रिया च द्विविधा काचन कर्त्राश्रिता यथा भोजनगमनादिक्रिया देवदत्ताश्रिता काचन कर्माश्रिता च्छिदाच्छेद्यरूपकर्माश्रिता तदिह ज्ञानरूपा क्रिया सकर्मिकेति कर्माश्रिता कर्त्राश्रिता वाच्या तदत्र चैतन्यस्वरूपभूतज्ञानरूपक्रियां प्रति ब्रह्मण एव विषयत्वाङ्गीकारे तस्यैव कर्तृत्वात्तस्यैव कर्मत्वात् कर्तृकर्मक्रियाणां सर्वासामप्येकत्वात् क्रियाया कर्मिभूतायां स्वस्यामेव वृत्तिः प्राप्ता, इदञ्च विरुद्धं नहि च्छिदा च्छिदायां वर्त्तते शयनं शयने। एवञ्च स्ववृत्तिविरोधेन ब्रह्मस्वरूपज्ञप्तेः स्वविषयत्वं परैर्नाङ्गीकृतमिति सम्प्रदायः। द्वितीयं निरस्यति। न द्वितीय इति। आत्मनि व्यभिचारमुद्धरति। अर्थोपलक्षितप्रकाशस्यैवेति। तस्य=अर्थोपलक्षितप्रकाशस्येत्यर्थः। अर्थोपलक्षितप्रकाशभिन्नत्वरूपदृश्यत्वहेतोरात्मन्यसत्वान्न व्यभिचार इति भावः। यदाकदाचिदिति। स्वाभाविकस्यानारोपितस्यारोपाभावात् यथा गगने नैल्यमारोपितम्। न तथाज्ञाने सविषयकत्वमारोपितम्, अतो ज्ञानसमसत्ताकं तद तथाच सर्वदृश्योच्छेदे मोक्षेऽर्थत्वोपलक्षितस्य रूपत्वासम्भवात् तद्भेदस्योक्तापत्तिभिया हेतुत्वाऽसम्भव इति भावः। ज्ञानस्य सविषयत्वं विषयसम्बन्धः सच न तात्विकः किन्त्वाध्यासिकोऽतो न तस्य स्वाभाविकत्वमित्याशङ्क्यापाकरोति। नचेति। न चेत्यस्य स्वाभाविक इत्यग्रतनेनान्वयः। तत्र हेतुमाह। एतद्धेत्वधीनमिथ्यात्वसिद्धेरिति अर्थविषयकज्ञानभिन्नत्वरूपदृश्यत्वहेतुना प्रपञ्चस्य मिथ्यात्वसिद्धौ सत्यां विषयज्ञानयोः सम्बन्धे मिथ्यात्वसिद्धिः नतु प्रागध्यासिकसम्बन्धसिद्धिरित्यर्थः। स्वसिद्धौ स्वसिद्धिरित्यात्माश्रय इति भावः। ज्ञानस्य सविषयत्वं विषयसम्बन्धः सच स्वाभाविको नत्वध्यासिक इति दृष्टान्तेन द्रढयति। अज्ञानेच्छादेरिव ज्ञानस्येति। आत्मरूपज्ञानस्यानादित्वान्न ज्ञात्राद्यपेक्षा। अनादिनः परानपेक्षत्वादित्याशङ्क्य परिहरति नचेति। अनादीनामपि पदार्थानां तत्तत्पदार्थसापेक्षदर्शनात्। ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वं स्वभावः। अन्यथा इदमहं जानामीत्यनुभवो न स्यादित्याह अनादेरिति। यदि ज्ञानस्यानादित्वात् न तत्र

त्मकज्ञाने भागासिद्धेः, लाक्षणिकज्ञानपदजन्यधीविशेष्यत्वस्य देहेन्द्रियादावपि सत्त्वेना-सिद्धेः। नाप्यनात्मत्वं जडत्वं, तथाहि आत्मत्वं न जातिः, तस्यैकत्वात्, विशिष्टानां भेदेऽपि पक्षान्तःपातित्वात् प्रतियोग्यसिद्ध्या तदभावासिद्धेः। नचानानन्दत्वं जडत्वं, वैषयिकानन्दे भागासिद्धेः। नच सोऽपि ब्रह्मानन्द इति वाच्यं, क्षीरनीरपानजन्यानन्दानां तारतम्योपलब्ध्या ब्रह्मत्वासम्भवात्। नच दुःखनिष्ठोत्कर्षापकर्षयोरानन्दे उपचारः, दुःख-लेशाप्रतीतावप्यानन्दतारतम्यस्य प्रतीतेः। नाप्यज्ञातृत्वं जडत्वं, तव मतेऽन्तःकरणस्य ज्ञातृत्वेन तत्राव्याप्तेः, शुद्धे ब्रह्मण्यतिव्याप्तेश्च। शुद्धं ब्रह्म मिथ्या, अज्ञातृत्वादाकाशादि-वदित्याभाससाम्यात्। नच कल्पितज्ञातृत्वं शुद्धेऽपि स्वीक्रियते इति वाच्यं, कल्पितेन हेत्व-भावेनातिव्याप्त्यनुद्धारात्, शुद्धत्वभङ्गाच, शुद्धाशुद्धविभागासिद्धेश्चेति संक्षेपः। नापि परि-च्छिन्नत्वस्य हेतुत्वम्, आभाससाम्यात्। तथाहि तत्त्वं नाम देशकालवस्तुपरिच्छेदवत्त्वं, तत्रात्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वं, ध्वंसाभावप्रतियोगित्वं कालपरिच्छिन्नत्वम्, अन्योऽन्याभावप्रतियोगित्वं वस्तुपरिच्छिन्नत्वमिति विवेकः। तत्र नाद्यद्वितीयौ, आकाशरू-पदेशस्य कालस्य चापरिच्छिन्नत्वेन तत्राव्याप्तेः। आकाशवत्सर्वगतश्च नित्यः "सदेव सौम्येदमग्र आसीत्, अथ मर्त्योऽमृतो भवति सर्वमात्मैवाभूत्, अथ संपत्स्ये" इत्यादि-श्रुतिभिः सदा सर्वत्र कार्यदर्शनादित्यादियुक्त्या धर्मिग्राहिणा साक्षिणा च तथा-

---

तत्र ज्ञात्राद्यपेक्षा तद्ध्वंसादेः प्रागभावादेः प्रतियोगिनि जातिरूपधर्मस्य व्यक्तिरूपे धर्मिणि जीवब्रह्मविभागस्य च धर्मिप्रतियोगिनो वेदरूपस्य शब्दस्य च वक्तृवाच्ययोरज्ञानस्यचाश्रयविषययोः ब्रह्मसत्तायाश्च कर्त्रपेक्षा न स्यात्। तथाचास्तिब्रह्मेत्यादौ कर्त्तरि लकारो न स्या दित्यर्थः। तच्चेति। ज्ञेयोल्लेखित्वञ्चेत्यर्थः। अतीतादिज्ञानस्येति। वन्हिरत्र पर्वते पूर्वमासीदित्यनुमितौ यथातीतवन्ह्युल्लेखो भवत्येव मोक्षे सुषुप्तौ चातीतविषयोल्लेखरूप-ससाराख्योपप्लवः स्यात्। तथाच मोक्षसुषुप्त्योर्निष्प्रपञ्चता न स्यात्। तथाच ज्ञानत्वव्यापकसविषयत्वरहितत्वान्न ज्ञानमात्मेति प्रतीत्या तत्रा ज्ञानत्वहेतोर्व्यभिचारःसुस्थ इत्यभिप्रेत्याह। तच्चेति ज्ञेयत्वोल्लोखित्वेचेत्यर्थः। मोक्षे-आत्मरूपज्ञानस्य निर्विषयत्वाङ्गीकारे, आनन्दस्यात्मरूपज्ञानाविषयत्वप्राप्त्या आनन्दाप्रकाश एव स्यात्। तथाच मोक्षस्य परमपुरुषार्थत्वं न स्यात्। निर्विषयत्वे ज्ञानत्वमेव न स्यात्। घटवदित्याह। नापीति। उक्तार्थे विवरणकारस्य विरोधमाह ज्ञातुरिति। "ज्ञातृज्ञेयविहीनन्ते ब्रह्मज्ञानात्मकं यदि। भोक्तृभोज्यविहीनापि भवेत्तर्हि भुजिक्रिया" इति ज्ञानविशेषाभ्यां प्रमाऽप्रमाभ्यां वहिर्भूतत्वाच्च नात्माज्ञानमित्याह—किञ्चात्मरूपं ज्ञानमिति तद्वेद्यस्येति प्रमारूपसाक्षिवेद्यस्येत्यर्थः। प्रमायां सदर्थविषयकत्वनियमादितिभावः तदभावात्। दोषजन्यत्वा-भावादित्यर्थः। उभयभिन्नत्वेति। प्रमात्वाप्रमात्वाख्यधर्मद्वयभिन्नत्वइत्यर्थः। स्वभावतोरूपद्वयहीनश्चेत्स्वभाव-तोज्ञानमपि न स्यादित्यर्थः। उभयवैलक्षण्येति। प्रमात्वभ्रमत्ववैलक्षण्येनेत्यर्थः। ईश्वरज्ञानस्य प्रमात्वं यदि स्यात्। तदा गुणजन्यत्वं स्यात् यदि तस्य भ्रमत्वं स्यात्तदा दोषजन्यत्वं स्यादित्याह। ईश्वरज्ञानस्येति। निर्विकल्पकेतिचेति। प्रकारता विशेष्यता संसर्गता त्रयशून्यत्वं निर्विकल्पत्वम्। अवाधितार्थकत्वरूपं यथार्थ प्रामाण्यमभ्युपेत्योक्तदोषं परिहरति—अवाधितेति। तार्किकमतरीत्यापीश्वरज्ञाननिर्विकल्पकयोः प्रमात्वमुपपाद-यन्नाह। विशेष्यवृत्यप्रकारकत्वरूपप्रामाण्यस्येति। रङ्गविशेष्यकरजतत्वप्रकारकभ्रमात्मकज्ञानीयरङ्गनिष्ठविशेष्यता-श्रयीभूते रङ्गेऽवृत्तिरजतत्वात्मकः प्रकारस्तन्निरूपकत्वं निरुक्तभ्रमे तद्भिन्नत्वस्य प्रमायामिवेश्वरज्ञाननिर्विकल्पयोः

त्वानवगमात्। नच "आत्मनः आकाशः सम्भूतः" इत्याकाशस्य कालपरिच्छेदश्रवणादुक्तविरोध इति वाच्यं, भूताकाशस्योत्पत्तिनाशादिसम्भवेऽपि अव्याकृताकाशस्य तदयोगात्। नहि पूर्त्तिं विनाऽवकाशनाशः सम्भवति. एतेन विमतं मिथ्या, विभक्तत्वात्। सन् घटः सन्पटः इति घटादिकमननुगतमनुगतसद्रूपे विभज्यते इति निरस्तम्। नीलो घटो नीलः पटो। घटश्चलति पटश्चलति, असन्नृशृङ्गमसत् खपुष्पमित्यादौ नीलादिषु घटादीनामसति नृशृङ्गादीनामध्यासापत्तेः। अयं सर्पोऽयं सर्प इति रज्जुमालादिष्वननुगतेष्वनुगतस्य सर्पस्यारोपवदननुगतेषु घटादिष्वनुगतसद्रूपस्यारोपापत्तेश्च। खण्डो गौर्मुण्डो गौरित्यादावनुगतगोत्वादौ व्यक्तेरारोपापत्तेश्च। नच सद्रूपब्रह्मभिन्नगोत्वादेरनभ्युपगमान्नोक्तदोष इति वाच्यम्। अगवादिव्यावृत्तस्य गवादिवैलक्षण्यव्यवहारस्यानुपपत्तेः। सद्रूपस्य सर्वानुगतत्वेन व्यावृत्तेरसम्भवात्। नच तत्तद्व्यक्तिविशिष्टं सत्सामान्यमेव तत्तद्व्यवहारजनकमिति वाच्यं, तत्तद्व्यक्तिविशिष्टस्य मिथ्याभूतस्य व्यक्त्यनधिष्ठानत्वेन तत्र व्यक्तेरध्यासायोगात्। तत्सामान्यव्यक्त्योराध्यासिकसम्बन्धातिरिक्तसम्बन्धस्य त्वयाऽनङ्गीकारात्। एतेन घटादिकं सद्रूपेकल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति निरस्तम्। रूपादिहीनस्य ब्रह्मणश्चाक्षुषत्वायोगात् चक्षुरादिगृहीतस्य दृश्यस्य मिथ्यात्वेन

---

सत्वाल्लक्षणसमन्वयः। ईश्वरज्ञानेप्रमात्वं तदास्याद्यदि प्रमात्वं सर्वप्रमासाधारणं गुणजन्यतावच्छेदकं तार्किकमते स्यात् तदा तस्य नित्यसाधारणताकारणाय जन्यत्वघटितमुच्येत तत्तु न सम्भवति। प्रमामात्रे गुणस्यानुज्ञातस्य कारणत्वासम्भवाच्च। उक्तञ्च मणौ प्रमामात्रे नानुगतौ गुणः किन्तु तत्तत्प्रमायांभूयोऽवयवेन्द्रियसन्निकर्षः। यथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं गुणत्वमित्याह प्रमासामान्ये चेति। प्रकारान्तरेण जडत्वं निरुच्य तदपि दूषयति नापीति। ज्ञानपदजन्यप्रतीतिविषयत्वमात्मनि तद्भिन्नत्वस्य प्रपञ्चे सत्वात्तस्य जडत्वोपपत्तिरित्यर्थः। भागासिद्धेरिति। वृत्यात्मकज्ञाने ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वरूपजडत्वहेतोरभावसत्वाद्भागासिद्धत्वं ज्ञानपदजन्यप्रतीतिविशेष्यत्वस्यैव वृत्यात्मकज्ञाने सत्वादिति भावः। अनात्मत्वरूपं जडत्वमपाकरोति। नापीति। तदेवोपपादयति। तथाहीत्यादिना तस्य = आत्मनः। विशिष्टानाम् = अन्तःकरणोपाधिविशिष्टानां जीवानाम्। भेदे = नानात्वे। प्रतियोग्यप्रसिद्ध्येति प्रतियोगिन आत्मत्वस्यासिद्ध्या दुर्निरूप्यत्वात्। तदभावासिद्धेः। आत्मत्वाभावरूपजडत्वासिद्धेः। आनन्दभिन्नत्वरूपं जडत्वं निरुच्य तदपि निरस्यति। नचेति। भागासिद्धेरिति। वैषयिकानन्दे आनन्दभिन्नत्वाभावसत्वाद्भागासिद्धत्वमित्यर्थः। वैषयिकानन्दस्य ब्रह्मरूपत्वमङ्गीकृत्य भागासिद्धिं निरस्यति। नचेति। सर्वात्मना दुःखतद्ध्वंसाभ्यां रहिते कस्मिंश्चित्पुरुषे नीरपानजातक्षीरपानजसुखमधिकमिति सुखतारतम्यानुभवात् स्वरूपानन्दे च तदयोगात् तदतिरिक्ते वैषयिकानन्दोऽस्तीति भावः। नचेति। नचेत्यस्योपपचार इत्यनेन समन्वयः। तत्र हेतुमाह। दुःख इति। अज्ञातत्वरूपं जडत्वं निरस्यति नापीति। तत्र व्याप्तेरिति। पक्षान्तर्गतेऽन्तःकरणेऽज्ञातृत्वाभावसत्वात्तस्य स्वरूपासिद्धत्वमिति भावः। ब्रह्मण्यतिव्याप्तेरिति। तच्चात्मनि व्यभिचारादिना वक्तुं न शक्यत इति भावः। कल्पितज्ञातृत्वं शुद्धे ब्रह्मण्यङ्गीकृत्य व्यभिचारमुद्धरति। कल्पितज्ञातृत्वमिति अज्ञातृत्वमात्रं हेतुः नतु कल्पिताज्ञातृत्वं तथाच ब्रह्मण्यतिव्याप्तितादवस्थ्यमित्याह। कल्पितेनेति। शुद्धे कल्पितं ज्ञातृत्वाङ्गीकारे शुद्धत्वव्याघात इत्याह शुद्धत्वभङ्गाच्चेति। इतिजडत्वहेतुभङ्गः।

घटाद्यनधिष्ठानत्वात्। किञ्च ब्रह्मणः सर्वेन्द्रियग्राह्यत्वे घटादिवन्मिथ्यात्वस्यावश्यंभावात्, अधिष्ठानरूपनिर्विशेषं वस्तु मिथ्या, इन्द्रियगोचरत्वात्तत्र मते घटादिवदित्यनुमानात्। किञ्च ब्रह्मण इन्द्रियग्राह्यत्वाङ्गीकारे महावाक्योपदेशस्यानुवादकत्वापत्तेः। महावाक्योपदेशो न स्वार्थपरः, इन्द्रियगृहीतग्राहकत्वेनानुवादरूपत्वात्, अग्निर्हिमस्य भेषजमिति वाक्यवदित्यनुमानात्। एतेन द्रव्यग्रहे रूपाद्यपेक्षा, ब्रह्मणस्तु द्रव्यत्वाभावेन तदनपेक्षत्वान्नोक्तदोषावकाशः "अस्थूलमनणिव"ति परिमाणनिषेधादिति निरस्तम्। उक्तश्रुतेः प्राकृतपरिमाणनिषेधेन नैराकांक्ष्यात्। अन्यथा "अणोरणीयान्महतो महीयानि"त्यादिश्रुतिव्याकोपात्। नापि तृतीयोऽन्योन्याभावप्रतियोगित्वरुपो वस्तुपरिच्छेदरुपो हेतुः, अनृतादौ ब्रह्मात्यन्ताभावान्योऽन्याभावयोः सत्वात्तत्रातिव्याप्तेः। ब्रह्म मिथ्या, अनृतादिवृत्त्यन्योऽन्याभावप्रतियोगित्वात्त्वन्मते घटपटादिवदित्यनुमानात। नन्वनृतादौ ब्रह्मात्यन्ताभावान्योऽन्याभावयोर्मिथ्यात्वात् तत्र ब्रह्मसंसर्गस्य चाभिन्नत्वान्नोक्तदोष इति चेन्न। तथात्वे मिथ्यात्वाभिन्नत्वसंसर्गयोस्तात्त्विकत्वापत्त्या तद्भिया पारमार्थिकस्यैवाभावस्याकामेनापि त्वयाऽङ्गीकार्यत्वात्, सन्दिग्धानैकान्त्यस्य दुर्वारत्वात्, अप्रयोजकत्वाच्च। किञ्च ब्रह्मभिन्नत्वस्य तात्त्विकस्य प्रपञ्चेष्वभावात् ब्रह्मण्यनृतव्यावृत्तिरतात्त्विकी तया तस्य तथात्वमनुमातुं शक्यते, कल्पितस्य त्वोत्पत्ति सत्त्वात् सिद्धं दृश्यत्वादिहेतूनामाभासत्वं सोपाधिकत्वात्। उपाधयश्च, सप्रकारकधियाधा-

---

मिथ्यात्वसाधकत्वेनाभिमतं परिच्छिन्नत्वहेतुमपाकरोति। नापीति। तत्वम्=परिच्छिन्नत्वम्। देशकाल इति। क्वचिद्देश एव विद्यमानत्वं देशतः परिच्छेदः। क्वचित्काल एव विद्यमानत्वं कालपरिच्छेदः। केनचिद्वस्तुना तादात्म्यापन्नत्वं वस्तुपरिच्छेदः यथा ह्यारुण्यगुणेन क्रयसाधनगवादिकं परिच्छिन्नमिति व्यवहारः। आरुण्यादेस्तादृशगवादेस्तदन्यस्माद्व्यावर्त्तकत्वात्तथाच तत्तद्देशो घटादेराधारविधया तदन्याधारविषयिताद्व्यावर्तक इति घटादितत्परिच्छिन्नमिति व्यवह्रियते। एवमेतद्वस्तुतादात्म्येन घटादेर्विशेषणं सदीतरवस्त्वात्मकाद्व्यावर्तकमिति स तत्परिच्छिन्न उच्यते। एवमयं घट एतद्देशपरिच्छिन्न इत्यादि वाक्यस्यैतद्घटः एतद्देशे न देशान्तरावच्छिन्नेभ्यो व्यावर्त्तितः। एवमेतत्कालपरिच्छिन्न इत्यादावपि बोध्यमिति भावः। तद्देशस्याधारविधयावच्छेदकत्वमन्ययोगव्यवच्छेदकतया विशेषणत्वं परिच्छेद्यघटादेर्देशान्तरवृत्त्यन्ताभावप्रतियोगित्वं पर्य्यवसितम्। एतत्कालस्य ध्वंसानधिकरणतया विशेषणत्वं कालान्तरध्वंसाधिकरणत्वं पर्य्यवसितमिति परिच्छिन्नशब्दादेव देशान्तरवृत्त्यत्यन्ताभावप्रतियोगित्वलाभः। तत्रापि देशान्तरादिघटितस्य हेतुत्वे तस्य सार्वदृश्यानुगतत्वादत्यन्ताभावप्रतियोगित्वादिभिन्नांशवैयर्थ्याच्चोक्तप्रतियोगित्वादेव हेतुत्वमित्याशयेनाह। तत्रात्यन्ताभावप्रतियोगित्वमिति। आकाशरूपदेशस्येति। नित्ययोःकालाकाशयोरत्यन्ताभावस्य ध्वंसस्य चाप्रतियोगित्वात्तयोरुक्तपरिच्छिन्नत्वमव्याप्तं तथाचोक्तहेतोः स्वरूपासिद्धत्वमिति भावः। आकाशस्य नित्यत्वे श्रुतिं प्रमाणयति। आकाशवदित्यादिना इदमग्र इति। जगत्सृष्टेः प्राक् प्रलये कालस्य सत्वोक्त्या नित्यत्वसिद्धिरित्यर्थः। अथेति। "यदा सर्वे प्रमुच्यन्ते कामा अस्य हृदि स्थिता" इति ज्ञानेन सर्वकामप्रहाणानन्तरममृतो भवतीत्युच्यते। तथाच ज्ञानेन सर्वकामप्रहाणानन्तरमपि कालसत्वस्याथेत्यनेनावगमान्नित्यत्वसिद्धिरित्यर्थः। यत्रे त्वस्येस्य यस्यामवस्थायामित्यर्थकत्वेनाविद्यानिवृत्तिरूपमोक्षावस्थायामपि कालसत्वप्रतीत्या तस्य नित्यत्वसिद्धेर्न तस्य कालतः परिच्छेद इति भावः। तव्यात्वावगमात्=नित्यत्वावगमात् नन्वाकाशे नानित्यत्यरूपकालपरिच्छेदराहित्यं "तस्माद्वा

एतस्मादात्मन आकाशः सम्भूत" इति श्रुतेः। श्रुतिसिद्धजन्यत्वेन ध्वंसप्रतियोगित्वरूपकालपरिच्छिन्नत्वस्याकाशेऽनुमातुं शक्यत इत्याशङ्क्य परिहरति। नचेति। भूताकाशस्येति। नाव्याकृताकाशविषयेयं श्रुतिः। किन्तु भूताकाशविषया, भागासिद्धिश्चाव्याकृताकाश एवास्माभिरभिहितेत्याशयः। नचाकाशद्वयमप्रामाणिकमिति वाच्यं भूताकाशोऽव्याकृताकाशश्चेत्याकाशद्वयं वियत्पादे टीकाकृद्भिरुक्तत्वात्। यदुक्तं प्रमाणमालायां 'विवादाध्यासिताः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः। विभक्तत्वात्। यथा सर्पमालादिकम् स्वानुगते रज्ज्वा इदमंशे सदर्थे ब्रह्मण्यनुगच्छुक्तिपटादिकं विभज्यते, सन् घटः सन् पट इति'प्रतीतेरित्यानन्दबोधोक्तं दूषयितुमुपन्यस्यति। एतेनेति। विभक्तत्वादिनि। विभक्तत्वं न तावद्भिन्नत्वं कादाचित्कत्वं क्वाचित्कत्वं वा। आद्यस्य वस्तुपरिच्छिन्नत्वरूपहेतुनिरासेन द्वितीयतृतीययोः कालपरिच्छिन्नत्व-देशपरिच्छिन्नत्वरूपहेतुनिरासेन निरस्तत्वात्। नापि बाधकदशायां निषिध्यमानत्वं साध्याविशिष्ट्यात्। नापि कदाचिदेव प्रकाशमानत्वं सुखदुःखादिभोगेऽसिद्धेऽप्रयोजकत्वाच्च। नाप्यनुगतत्वमननुगतानां घटपटादीनां चलनादौ रूपादौ द्रव्यत्वादौ ध्वंसत्वादावनात्मत्वादौ च खपुष्पन्ट शृङ्गादीनासति आत्मनश्च सदर्थेऽनध्यासादित्याशयेनाह। नीलो घट इति। प्रत्येकं चलनानुविद्धत्वेन प्रतीयमानयोर्घटपटयोश्चलनादावनध्यासेन व्यभिचारमभिधाय दूषणान्तरमाह। खण्डो गौरिति। तथाचोक्तहेतोः स्वानुविद्धतया प्रतीयमाने गोत्वादौ व्यक्तीनामकल्पितत्वात् खण्डमुण्डादिव्यक्तौ व्यभिचार इत्यर्थः। सत्सामान्यातिरिक्तगोत्वादि सामान्यानभ्युपगमान्नोक्तदोषावकाश इत्याशङ्क्य निराकरोति। नचेति। इयं गौरियं गौरित्याकारिका प्रतीतिरनुगतधर्ममन्तरा न भवतीत्यननुगतगवादिव्यक्तावनुगतगोत्वमावश्यकमित्याशयेनाह। अगवादिव्यावृत्तस्येति। ननु सद्रूपेणैवानुगतव्यवहारोपपत्तिरित्यत आह। सद्रूपेति। तत्तद्व्यक्तिविशिष्टमात्र। नन्वेवं गवादिपदानां तत्तद्व्यक्तिविशिष्टसत्सामान्ये तत्सामान्यविशिष्टतत्तद्व्यक्तिषु वा शक्तिर्वाच्या तेषां नानार्थकत्वापत्तिः। एवं गवादेः कारणत्वादिकमपि तत्तद्व्यक्तिघटितावच्छेदकभेदेनानन्तं स्यादितिचेन्न। सर्वासु गोव्यक्तिषु एकस्या एव शक्तेः सम्भवेन नानार्थकत्वाभावात्। नचानुगतमेकावच्छेदकं विना तावद्व्यक्तिनिष्ठा कथमेका शक्ति शक्यते वक्तुमिति वाच्यम्। तावद्व्यक्तिधीजननानुकूला शक्तिर्गोपदे स्वीक्रियते साऽखण्डकारणतारूपा, उक्तधीनिष्ठा कार्यताप्यखण्डा तयोश्चावच्छिन्नत्वे मानाभावान्न कोऽपि धर्मस्तदीयाखण्डावच्छेदकताश्रयः। अतःशक्तिग्रहनिष्ठकारणत्वमप्येकमेव। नच तथाप्येकां गोव्यक्तिमवगाहमानाच्छक्तिग्रहादन्यगोव्यक्तिशाब्दधीः स्यादिति वाच्यम्। इष्टत्वात्। गोत्वादिजातिस्वीकारेऽपि गोत्वेनैकगोव्यक्तिविषयकशक्तिज्ञानात् गोत्वेन गोव्यक्त्यन्तरशाब्दबोधस्य मीमांसकादिभिः स्वीकारात्। मैयतः, कारणत्वादेरखण्डत्वस्वीकारेऽन्वयव्यतिरेकज्ञानस्यैव तद्ग्राहकत्वं वाच्यम्। उक्तज्ञानञ्च नानुगतैकं विनेति तादृशं गोत्वादिकमावश्यकमिति भावः। तत्तद्व्यक्तिविशिष्टस्य सद्रूपस्य मिथ्यात्वेन तद्व्यक्त्यधिष्ठानत्वायोगान्न तत्र तद्व्यक्तेरध्यास इत्याह। तद्व्यक्तिविशिष्टस्य। जातिव्यक्त्योराध्यासिक एव त्वन्मते सम्बन्ध इत्याह। तत्सामान्यव्यक्त्योरिति। ब्रह्मसिद्धिकारोक्तपक्षमपि दूषयितुमुपन्यस्यति। एतेन घटादि भिति। तदनुविद्धतयेति। सूत्रे स्यूतानां नानामणीनां सूत्रानुस्यूततया यथा प्रतीतिस्तथा घटः पटः सन्निति सदर्थानुविद्धत्वेन प्रतीयमानत्वादित्यर्थः। यद्यदनुविद्धतया प्रतीयते तत्तत्र कल्पितमिति सामान्यव्याप्तौ दृष्टान्तमाह। प्रत्येकचन्द्रेति। जलतरंगेषु प्रतिबिम्बस्यायं चन्द्रोऽयं चन्द्र इत्यादिरूपेण गगनस्य चन्द्रानुवेधोऽस्तीत्यवधेयम्। 'सन् घट' इत्यत्र ब्रह्मणः स्फुरणे रूपादिहीनतया चक्षुषाद्यनुपपत्तिर्बाधिका न तस्य घटादिकं प्रत्यधिष्ठानता। चक्षुषा गृहीतस्य दृश्यस्य मिथ्यात्वादित्याशयेनोक्तमतं निरस्यति। रूपादिहीनस्येति। प्रतिनियतग्राह्येष्वेव रूपाद्यपेक्षा ननु सर्वेन्द्रियग्राह्यसद्रूपे ब्रह्मणि। रूपादिहीनस्यापि तस्य चाक्षुषत्वमुपपद्यते। यथा रूपादिरहिताया अपि सत्तायाः सर्वेन्द्रियग्राह्यत्वमनुमतं परैः। अभ्युपगम्यते च मीमांसकादिभिः कालस्य रूपादिहीनस्य सर्वेन्द्रियग्राह्यत्वमित्यत आह। किञ्चेति। अनुमानं दर्शयति। महावाक्योपदेश इति। एतेनेति=वक्ष्यमाणहेतुना। तदनपेक्षत्वात्=रूपाद्यनपेक्षत्वात्। विपक्षे बाधकतर्कमाह। अन्यथेति। प्राकृतपरिमाणनिषेधपरत्वे। जडादिवृत्त्यन्योन्याभावप्रतियोगित्वस्यात्मनि सत्त्वादात्मनि व्यभिचार इति तृतीयमपि निरस्यति। नापीति। अत्यन्ताभावेऽन्योन्याभावे च प्रतियोगिसंसर्गसमसत्ताकत्वं निवेश्यात्मनि व्यभिचारं परिहरन्नाशङ्कते। नन्वित्यादिना। अनृतादौ ब्रह्मणोऽन्योन्याभावोऽत्यन्ता-

र्हत्वम्, अध्यस्ताधिकदोषप्रयुक्तभानत्वं प्रतिभासमात्रशरीरत्वं चेत्यादयः। देहात्मैक्याध्यासस्यापि सप्रकारकभेदविषयकज्ञानबाधयोग्यत्वात् न तत्र साध्याव्याप्तिः। नच सप्रकारकेति अध्यस्ताधिकेति च विशेषणवैयर्थ्यं, तद्भिन्नैवोपाधेः साध्यव्यापकत्वादिति वाच्यं, विशिष्टाभावस्यातिरिक्तत्वेन तद्विशिष्टस्यैव साध्यव्यापकतया वैयर्थ्याभावात्। तावन्मात्रस्य तु साधनव्यापकत्वान्नोपाधित्वमिति संक्षेपः। किञ्चास्य प्रयोगस्य दृष्टान्तोऽपि दुर्निरूपः,

---

भावश्चातात्त्विकस्तत्प्रतियोगिनो ब्रह्मणः संसर्गस्तु तात्त्विक इति प्रतियोगिसमसत्ताकत्वविरहान्नान्योन्याभावात्यन्ताभावौ धर्त्तुं शक्येते किन्त्वज्ञानाकाशात्यन्ताभाववेवेति न व्यभिचारासिद्धिरिति भावः। अभावस्य मिथ्यात्वकथनेन प्रतियोगिनस्तत्संसर्गस्य च समानसत्ताकत्वविरहोऽभावे सूचित इति भावः। ब्रह्मप्रतियोगिसंसर्गस्य तात्त्विकत्वेऽद्वैतव्याघात इत्यत आह। ब्रह्मसंसर्गस्येति। तथात्वे=अनृतादौ ब्रह्मसंसर्गाभावस्य मिथ्यात्वे। मिथ्यात्वाभिन्नत्वसंसर्गयोरिति। ब्रह्मसंसर्गाभावस्य मिथ्यात्वं नाम ब्रह्मसंसर्गाभावाभावप्रतियोगित्वं तस्य मिथ्यात्वे ब्रह्मसंसर्गत्वेन रूपेण तत्संसर्गस्य ब्रह्मभिन्नत्वस्य च तात्त्विकत्वं स्यात् तथासत्यद्वैतहानिप्रसङ्ग इत्यर्थः। तयोस्तात्त्विकत्वापत्तिभिया जडवृत्तिब्रह्मप्रतियोगिकसंसर्गाभावतत्प्रतियोगिकान्योन्याभावयोः पारमार्थिकत्वं वाच्यम्। तथाच तात्त्विकप्रतियोगिसमानसत्ताकब्रह्मप्रतियोगिकसंसर्गाभावान्योन्याभावप्रतियोगित्वस्यात्मनि सत्वाद्व्यभिचारस्तदवस्थ इति भावः। उक्तरीत्यनुसरणेऽपि सन्दिग्धानैकान्तिकत्वं दुर्वारमित्याह। सन्दिग्धेति। नन्वेवं प्रपञ्चे ब्रह्मभिन्नत्वं तात्त्विकं प्रसज्येत इत्यत आह। किञ्चेति। तयेति। तात्त्विकया ब्रह्मण्यनृतव्यावृत्येत्यर्थः। तस्य=प्रपञ्चस्य। तथात्वम्=तात्त्विकत्वम्। (इतिपरिच्छिन्नत्वहेतुनिरासः)।

अथ दृश्यत्वादेर्हेतोः सोपाधिकत्वाद् व्याप्यत्वासिद्धमित्याह। सिद्धमिति। उपाधयश्चेति। सप्रकारकेति। सप्रकारिका या धीः नेदं रजतमिति तद्बाध्यत्वस्य शुक्तिरूप्ये सत्वादित्यर्थः। शुक्तिरूप्ये दृष्टान्ते मिथ्यात्वमस्ति निरुक्तोपाधिश्चास्तीति साध्यव्यापकत्वम्। दृश्यत्ववति पक्षे चोपाधिर्नास्तीति साधनाव्यापकत्वम्। प्रपञ्चस्यात्र यद्यपि ब्रह्मसाक्षात्कारेण निवर्त्तते तथापि स च साक्षात्कारो न सप्रकारक इति न साधनाव्यापकत्वहानिः। अध्यस्ताधिकेति। अध्यासे यो दोषः मायाऽविद्यादिस्तदपेक्षयाऽधिको यो दोषः काचादिस्तज्जन्यभ्रमज्ञानविषयत्वेन तत्प्रयुक्तभानत्वमित्यर्थः। शुक्तिरूप्यान्तर्भावेण साध्यव्यापकत्वम्। दृश्यवस्तु घटादिषु जगद्भ्रमनिमित्ताविद्यादोषापेक्षयाऽधिकदोषप्रयुक्तस्यासत्वात्साधनाव्यापकत्वम्। प्रतिभासमात्रशरीरत्वमिति। साध्यवति शुक्तिरूप्ये प्रतिभासमात्रशरीरस्य सत्वात्साध्यव्यापकत्वं,दृश्यत्ववति घटादौ प्रतिभासमात्रशरीरत्वस्यासत्वात्साधनाव्यापकत्वम्। ननु 'मिथ्यात्ववति देहात्मैक्याध्यासे निरुक्तोपाधेरसत्वात्साध्याव्यापकत्वमित्यत आह। देहात्मैक्याध्यास इति। मिथ्यात्ववति शुक्तिरूप्ये नेदं रजतमिति ज्ञानबाधार्हत्वस्य सत्वात्तावन्मात्रेणैव साध्यव्यापकत्वोपपत्तौ सप्रकारकेति विशेषणं व्यर्थम्। एवं दोषप्रकारकभानत्वमात्रेणैव साध्यव्यापकत्वसम्भवादध्यस्तेति विशेषणं व्यर्थम्। यद्युपाधावुक्तविशेषणद्वयाप्रवेशे साधनाव्यापकत्वमुपाधौ न घटते दृश्यत्ववति प्रपञ्चे ब्रह्मसाक्षात्कारबाध्यत्वस्याविद्यादिदोषभानप्रयुक्तत्वस्य च सत्वात् सप्रकारकेति अध्यस्ताधिकेति च विशेषणं सार्थकम्। तथापि साध्यव्यापकत्ववेलायान्तु तद्वैयर्थ्यमेवेत्याशङ्क्य परिहरति। नचेति। विशिष्टाभावस्येति। सप्रकारकत्वविशिष्टबाधार्हत्वाभावस्येत्यर्थः। तद्विशिष्टस्येति। सप्रकारकत्वविशिष्टबाधार्हत्वस्य, साध्याधिकरणरूप्यादिवृत्तियोंऽभावो न हि सप्रकारकत्वविशिष्टबाधार्हत्वाभावः किन्तु घटाद्यभावस्तत्प्रतियोगितानवच्छेदकत्वस्य सप्रकारकत्वविशिष्टबाधार्हत्व एव नतु ज्ञानबाधार्हत्व इति न तयोर्वैयर्थ्यमिति भावः। सप्रकारकत्वविशिष्टबाधार्हत्वे साध्यसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्तदपेक्षया ज्ञानबाधार्हत्ववृत्तिसाध्यसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकत्वाभावो भिन्न इत्यखण्डाभावघटकतयाप्युक्तविशेषणयोः सार्थक्यमपि द्रष्टव्यम्। मिथ्यात्वसाधकानुमानस्य साध्यं हेतुञ्च निरस्य शुक्तिरूपस्य

शुक्त्यादेः पक्षान्तःपातित्वेन तत्प्रयोगस्याभासमात्रत्वात्। न च माऽस्तु शुक्त्यादिदृष्टान्तः व्यतिरेकिदृष्टान्तस्य ब्रह्मणः सत्वान्नोक्तदोषावकाश इति वाच्यं, विकल्पासहत्वात्। तथा हि शुद्धस्य दृष्टान्तत्वं ? विशिष्टस्य वा ? नाद्यः, सर्वप्रमाणागोचरस्य ब्रह्मणः शशशृङ्गकल्पत्वेन दृष्टान्तानर्हत्वात्, प्रमाणविषयत्वे शुद्धत्वहानेरद्वैतभङ्गाच्च। न द्वितीयः, विशिष्टस्य पक्षान्तःपातित्वात्, तत्र मते व्यतिरेक्यनुमानानङ्गीकाराच्च। तस्मात्पक्षादीनामाभासत्वेनापातरमणीयत्वमुक्तानुमानस्येति सिद्धम्। किञ्च विश्वं यदि कल्पितं स्यात्तर्हि साधिष्ठानं स्यात्, सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निःसामान्ये ब्रह्मण्यसम्भवात्। विश्वं यदि कल्पितं स्यात्तर्हि सप्रधानं स्यात्, न चैवमस्ति तस्मान्न तथा। विश्वं यद्यध्यस्तं स्यात्तर्हि ससंस्कारं स्यान्नतु तदस्ति, तस्मान्न तथा। न च स्वेनाध्यस्तः स्वारोपहेतुरिति वाच्यं, भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासकारणत्वासम्भवात्। अन्यथा भ्रमहेतुसंस्कारस्याधिष्ठानसमसत्ताकत्वं दुर्वारम्। न च संस्कारोऽज्ञातो व्यावहारिकः स्वेनारोपितः स्वाध्यासहेतुरस्त्येवेति वाच्यम्, अज्ञातस्याध्यस्तत्वे मानाभावेन पारमार्थिकत्वप्रसङ्गात्। किञ्च विश्वं यद्यध्यस्तं स्यात्तर्हि ससादृश्यं स्यान्न चैवमस्ति तस्मान्न तथा। न च पीतः शङ्ख इति सादृश्यं विनाऽपि भ्रमो दृष्ट इति वाच्यं, द्रव्यत्वादिना तत्रापि सादृश्यज्ञानवत्त्वस्यानुमेयत्वात्, स्वर्णमयशङ्खमूर्त्तौ तस्य

---

दृष्टान्तत्वमपि निरस्यति। किञ्चेति। अन्वयिदृष्टान्तासम्भवेऽपि व्यतिरेकिदृष्टान्तस्य सत्वान्न दृष्टान्तासम्भव इत्याशङ्क्य परिहरति। नचेति। सर्वप्रमाणशून्यस्य शुद्धस्य ब्रह्मणो न दृष्टान्तार्हता। अविद्योपहितस्य विशिष्टस्य पक्षकोटिनिविष्टत्वान्न कथमपि दृष्टान्ततेत्याशयेन दूषयति। नाद्यइति। व्यतिरेक्यनुमानानङ्गीकाराच्चेति। व्यतिरेकव्याप्तिधीजन्यानुमितिकरणत्वं व्यतिरेकित्वम्। अन्यगतव्याप्तिज्ञानस्याप्यन्यलिङ्गकानुमितिहेतुत्वे कृतकत्वानित्यत्वव्याप्तिज्ञानेन धूमाद्वह्न्यनुमित्यापत्तेरनुमानस्य व्यतिरेकरूपता। ननु व्यतिरेकव्याप्तिज्ञानमप्यनुमितिकारणं धूमादावन्वयव्याप्त्यज्ञानदशायां व्यतिरेकव्याप्तिज्ञाने पक्षधर्मताज्ञाने च सति सन्निकृष्टपर्वतादौ वह्निज्ञानस्यानुभूयमानत्वात्। नचातिप्रसङ्गः। स्वगतव्याप्तिज्ञानवत्स्वाभावनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानस्यापि फलबलेनानुमितिहेतुत्वकल्पनादितिचेन्न। व्यतिरेकव्याप्तिज्ञानोत्तरजायमानं ज्ञानं नानुमितिरूपं क्लृप्तकारणाभावात् किन्त्वर्थापत्तिप्रमाणजन्यत्वादर्थापत्तिरेवेति केवलाद्वैतवादिनां रहस्यमिति। उपसंहरति। तस्मादिति। साध्याभावसाधकं तर्काकारं दर्शयति। किञ्चेत्यादिना। आपाद्यव्यतिरेकनिश्चयेनापादकाभावस्य सिद्धिस्तर्कफलम्। प्रकृतेऽधिष्ठानत्वाभावनिश्चयेन कल्पितत्वाभावो विश्वस्मिन् सिद्ध्यति। एतेन मिथ्यात्वसाधकानुमानमपाकृतं भवति। आपाद्यव्यतिरेकात्मकाधिष्ठानत्वाभावनिश्चाययकं तर्कं दर्शयति। सामान्यतो ज्ञातत्वे सतीति। ब्रह्म यदि सामान्येन ज्ञातं सत् विशेषेणाज्ञातं स्यात्तदाधिष्ठानं स्यात्। दृष्टञ्चैतत् इदं रजतमित्यत्रेदंत्वरूपसामान्यधर्मो रजतस्य साधकः शुक्तौ वर्त्तते। शुक्तित्वञ्च तस्य बाधकः, नैवं ब्रह्मणि सम्भवति। अधिष्ठानत्वे सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वं यत्प्रयोजकमुक्तं तद्विरुद्धयोर्निःसामान्यत्वनिर्विशेषत्वयोर्धर्मयोः ब्रह्मणि सत्वान्नोक्ततर्के व्यभिचारशङ्कावकाशस्तथाच ब्रह्मणः समान्यधर्मत्वादिना तावज्ज्ञातत्वं न सम्भवति निःसामान्यत्वात्। अज्ञातविशेषवत्त्वञ्च न सम्भवति निर्विशेषत्वाङ्गीकारादितिभावः। अधिष्ठानासिद्ध्याऽध्यासस्य सिद्धिमपाकृत्येदानीमारोप्यासिद्धिनिबन्धनाध्यासस्य सिद्धिं निरसितुं तर्कान्तरमाह। विश्वंयदिति। सप्रधानमिति। आरोप्यस्य प्रपञ्चस्य सत्तापेक्षयाधिकसत्ताकं सत्यभूतमिति यावदित्यर्थः। यथा शुक्तिरूपस्य मिथ्यात्वात् तदध्यासार्थमर्थक्रियाकार्यापणस्थं रजतं सत्यं प्रधानमङ्गीक्रियते। एवमस्य प्रपञ्चस्य मिथ्यात्वाङ्गीकारे एतत्प्रपञ्च-

प्रत्यक्षसिद्धत्वाच्च। किञ्च विश्वं यद्यध्यस्तं स्यात्तर्ह्यनादिकर्मादिजन्यं न स्यात्, अध्यासानादित्वस्य क्वाऽपि प्रसिद्ध्यभावात्, प्रत्युत सादित्वस्य शुक्तिरूप्यादौ दर्शनात्तस्मान्नाध्यस्तत्वमित्यादिप्रतिकूलतर्कैः प्रतिहतमिदमनुमानं न प्रामाण्यार्हमित्यलं विस्तरेण। अप्रमाणत्वात्सूत्रकारपक्षहीनत्वाच्चोपेक्षणीयोऽयमनिर्वचनीयवादो मुमुक्षुभिः। असद्वादस्त्वग्रे निरस्यतं। तस्मात्सदेवेदं विश्वं "सदेव सौम्येदमग्र आसीदिति" श्रुतेः। "सत्वाच्चावरस्येति" वक्ष्यमाणसूत्राच्च। तच्च कार्यकारणात्मकत्वात्तदपृथक्सिद्धमित्याह भगवान्सूत्रकारः। "तदनन्यत्वमिति"। तस्य कार्यस्य ब्रह्मणः सकाशादनन्यत्वं, यद्वा तस्मात्कारणात् ब्रह्मणोऽनन्यत्वं तदात्मकत्वादिनाऽपृथक्सिद्धत्वं कार्यस्य जगतः। तत्र प्रमाणमाह। "आरम्भणशब्दादिभ्यः" इति। आरम्भणशब्दादियं षां "विकारो नामधेयं मृत्तिकेत्येव सत्यं, सदेव

---

साध्यार्थक्रियाकारिप्रधानीभूतं प्रपञ्चान्तरमङ्गीकार्यं तस्य सत्यभूतप्रपञ्चान्तरस्य त्वन्मतेऽसम्भवान्न विश्वस्मिन् कल्पितत्वं सिद्ध्यतीतिभावः। तदेवोपपादयति नचैवमस्तीति। सप्रधानं नचास्तीति तदर्थः। तस्मात् =प्रधानाभावात्। न तथा कल्पितत्वाभावः। एतेन तर्कस्य फलं दर्शितं भवति। तर्कान्तरमाह। विश्वमिति। ससंस्कारमिति। सत्यार्थविषयकसंस्कारोऽध्यासे कारणं तवमते सत्यस्य प्रपञ्चस्याभावेन तद्विषयकसंस्कारानुपपत्तिरितिभावः। नतुतदस्ति =सत्यार्थविषयकसंस्कारो नत्वस्ति। तस्मान्नतथा=प्रपञ्चविषयकसंस्काराभावा न्नविश्वस्याध्यस्तत्वम्। संस्कारारोपंप्रति संस्कारेणाध्यस्तसंस्कारएवहेतुः न तस्य सत्यत्वमित्याशङ्क्यापाकरोति। नचेति। स्वेन= संस्कारेण। अध्यस्तः=अध्यस्तसंस्कारः। स्वारोपहेतुः =संस्कारारोपहेतुः। भ्रमरूपकार्ये सति यस्य संस्कारः पूर्वं वृत्त इति तस्य कार्यानुमेयत्वं "कार्योन्नेयधर्माणां यथाकार्यमुन्नयना"दिति वचनात्तथाच भ्रमात्प्राक् कार्यानुमेयस्य संस्कारस्याध्यासकारणत्वं नोपपद्यते इत्याह। भ्रमात्पूर्वमिति। स्वस्य=अध्यस्तस्य। अनाहार्यस्मर्यमाणनिरुपाधिकभ्रमात्पूर्वं संस्कारस्य कारणत्वेन सत्यत्वं वाच्यं नतु तस्याध्यस्तत्वमिति भावः। विपक्षे बाधकतर्कमाह। अन्यथेति। संस्कारस्यानादित्वे। कल्पादौ तत्पूर्वं प्रधानजगदन्तराभावेन तद्भ्रमजन्यसंस्काराभावेन कल्पाद्यो भ्रमो न स्यात्। कल्पान्तरीयजन्यजगद्भ्रमजन्यसंस्कारात्कल्पाद्ये भ्रम उत्पद्यत इत्येवं परंपरया संस्कारस्यानादित्वं वाच्यं स च संस्कारोऽधिष्ठानगतएवातएवाधिष्ठानसमसत्ताकस्तथासति तस्य सत्यत्वं स्वीकार्यं तथात्वेऽद्वैतव्याघात इति भावः। भ्रमात्प्रागज्ञातस्य संस्कारस्य व्यावहारिकत्वमुपगम्य नोक्तदोष इत्याशङ्क्य परिहरति। नचेति। ज्ञातस्यैवाध्यासो भवति नत्वाज्ञतस्येत्याह। अज्ञानस्येति। अज्ञातस्य संस्कारस्य व्यावहारिकत्वे ज्ञातस्य संस्कारस्य पारमार्थिकत्वं स्यादित्यर्थः। संस्कारस्याध्यासहेतुत्वमपाकृत्य सादृश्यस्य तद्धेतुत्वमपाकरोति। किञ्चेति। शुक्तिरजतयोः सादृश्यमस्तीति शुक्तौ रजतारोप उत्पद्यते निर्विशेषे ब्रह्मणि तु गुणकृतसादृश्याभावात् कथं तस्मिन्नध्यास इति भावः। नच निरुपाधिके भ्रमे सादृश्यस्य हेतुता पीतशङ्ख इतिभ्रमे व्यभिचारादित्याशङ्क्य निराकरोति। नचेति। तत्रापीति। पीतः शङ्ख इति भ्रमेपीत्यर्थः। तर्कान्तरमाह। विश्वमिति। यत्राध्यासत्वं तत्र सादित्वं शुक्तिरूप्यादिवत्। यत्रानादित्वं तत्र नाध्यासत्वमात्मवदित्यन्वयव्यतिरेकवदनाद्यध्यासे तु व्याप्त्यदर्शनादित्याह। अध्यासानादित्वस्येति। अपिच पुरोवर्त्तिनीन्द्रियसंयुक्त एव विषये विषयान्तराध्यासदर्शनात् कथमविषये चेतनेऽध्यासः सम्भवति। संस्कारसादृश्यसम्प्रयोगादीनामध्यासे ह्यावश्यकानां कारणानामभावेन कथमध्यासोपपत्तिरिति। उपसंहरति। तस्मान्नाध्यस्तत्वमिति। तस्मात् अनिर्वचनीयस्यनिर्युक्तिकत्वात्। अप्रमाणत्वात्सूत्रकाराननुमतत्वादित्यर्थः। तत्र श्रुतिं प्रमाणयति। सदेवेदमिति। "ब्रह्म वा इदमग्र आसीदि"ति सामानाधिकरण्यनिर्देशादवरस्य कार्यस्येदम्पदवाच्यस्य कारणे सत्वात्सत्वादनन्यत्वं निश्चीयत इति सूत्रार्थः। प्रथमाध्याये चिदचिद्विशिष्टत्वेन ब्रह्म बहुशो वर्णितम्। इह तु कारणाद्ब्रह्मणः कार्यस्य जगतः पृथक्स्थितिप्रवृत्त्यभावादनन्यत्वमित्यर्थः। अथेदानीमुक्तसिद्धान्तं द्रढयितुं "कारणात्कार्यस्यानन्यत्वं नास्ति कार्यञ्चोत्पद्यत" इतिवैशेषिका

सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत बहु स्यां प्रजायेय, तत्तेजोऽसृजत, ऐतदात्म्यमिदं सर्वं तत्सत्यं, स आत्मा तत्त्वमसि, सर्वं खल्विदं ब्रह्म, तज्जलानिति, तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते"त्यादीनां तान्यारम्भणशब्दादीनि तेभ्यो वाक्येभ्यः प्रमाणेभ्यः। अत्रामनन्ति छन्दोगाः। "येनाश्रुतं भवती" त्यादिना ह्येकोपादानकारणविज्ञानेन सर्वकार्यविज्ञानं प्रतिज्ञाय तत्सिद्धये दृष्टान्तोपन्यासः। "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति।" यथेति दृष्टान्ते मृत्पिण्डेन मृद्द्रव्यरूपतया विज्ञातेन सर्वं मृन्मयं मृद्विकारजातघटशरावोदञ्चनादिकं मृदात्मकतया विज्ञातं भवति तत्तदवस्थाविशेषमात्रत्वादुपादेयजातस्य स्वोपादानापृथक्सिद्धत्वादित्याह, वाचारम्भणमिति। कार्यजातं वाचा वागिन्द्रियेणारभ्यते "घटेन जलमाहरे" त्यादिना व्यवह्रियते इति वाचारम्भणं "कृत्यल्युटोबहुलमिति" कर्मणि ल्युट्। तद्द्विविधं विकारो नामधेयं चेति। तत्र कम्बुग्रीवादिमद्व्यक्तिविशेषरूपो विकारशब्दवाच्यः, नामधेयं च घटादिशब्दवाच्यः शब्दविशेष एव। ननु यथा कारणं मृत्तिका स्वतन्त्रसत्ताश्रयत्वात्सत्या तथा घटादीनां कार्याणामपि पृथक्स्वतन्त्रसत्त्वं भवतु, उपलभ्यमानत्वादित्यत्राह मृत्तिकेत्येव सत्यमिति। एवकारोऽन्ययोगव्यवच्छेदार्थः। इति शब्दः कारणपरामर्शपरः। मृत्तिकाकारणभूतैव स्वतन्त्रसत्ताश्रया, न तु तथा घटादिकार्यं स्वातन्त्र्येण सत्यं, कारणव्यतिरेकेणानुपलभ्यमानत्वात्, तदन्वितस्य चोपलभ्यमानत्वाच्चेति दृष्टान्तः। एवमाकाशादिप्रपञ्चजातस्य ब्रह्मोपादेयतया तदात्मकतया च स्वतन्त्रसत्ताऽनधिकरणत्वात् स्वोपादानकारणभूतब्रह्मापृथक्सत्त्वमेवेति सिद्धान्तः। "ऐतदात्म्यमिदं सर्वमिति",

---

आहुस्तन्मतं निराकरोति। तच्च कार्यमिति। सूत्रार्थं विवृणोति। तस्य कारणस्येति। सूक्ष्मावस्थापन्नात्कारणात् स्थूलावस्थापन्नं कार्यं भवतीत्यर्थः। कस्य कस्मादनन्यत्वमित्यत्राह। तस्मादिति। तदात्मकत्वादिना = कारणात्मकत्वादिना। हेतुवाक्यं व्याचष्टे। आरम्भण इति। आदिशब्दोपात्तानि वाक्यान्याह। विकार इति। अस्यार्थः स्वयं दर्शयिष्यते। इदं विभक्तनामरूपं बहुत्वावस्थं जगत् अग्रे सृष्टेः प्रागेकमेवाविभक्तनामरूपतया एकावस्थापन्नमेवाद्वितीयमाधारान्तरशून्यञ्च सदेवासीत् इति वचनमनाधारमित्यादिनैकार्थ्यात् सच्छब्दः असत्कार्यव्यावृत्यर्थः। एवकारेण बहुस्यां सूक्ष्मावस्थकार्यबहुत्वावस्था व्यपदिश्यते। सर्वत्र सृष्टिप्रकरणे ईक्षापूर्विकैव सृष्टिः श्रूयते अतस्तानि वचनान्युदाहरति। तदैक्षत इति। ईक्षणं पर्यालोचनम्। एतेन बहुभवनसङ्कल्पवत्वं कारणस्य प्रदर्शितम्। तस्योपादानकारणत्वं सूचयितुमाह। बहुस्यामिति। ईक्षणस्य फलमाह। तत्तेज इति। इदं परिदृश्यमानं जगत्। ऐतदात्म्यं ब्रह्मायत्तस्थितिप्रवृत्तिकत्वेन ब्रह्मात्मकम्। तत्सत्यं एतदात्मकत्वमेव सत्यं प्रपञ्चस्य प्रामाणिकमित्यर्थः। स आत्मा सच्छब्दवाच्यः। आत्मा = परमचेतनः। तत्वमसीति वाक्येन त्वंपदवाच्यपरतन्त्रसत्ताश्रयस्य श्वेतकेतोः सर्वज्ञत्वसर्वशक्तित्वविश्वात्मत्वस्वतन्त्रसत्तादिधर्मविशिष्टब्रह्माभिन्नत्वं बोध्यते। सर्वमिति सर्वमिदं चेतनाचेतनात्मकं जगत् ब्रह्मात्मकम्। तत्रहेतुमाह। तज्जलानिति। दृष्टान्तवाक्यं व्याचष्टे। यथेति। तत्तदवस्थेति। सूक्ष्मावस्थापन्नात्कारणात् स्थूलावस्थापन्नं कार्यं भवतीति भावः। स्वोपादानेति। स्वस्य कार्यस्य यदुपादानं कारणं तस्मादपृथक्सिद्धत्वादित्यर्थः। यथा कारणस्य पृथक्सत्ता तथा कार्यस्यापि स्यादित्याशङ्क्ते। नन्वित्यादिना। मृत्तिकेत्येव सत्यमिति श्रुत्यर्थं विवृणोति एवकार. इति। तदात्मकतया =

श्रुतेः । "वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च" इत्यादिस्मृतेश्च । यत्तु कैश्चित्स्वकपोलकल्पितानश्रौतदृष्टान्तान् शुक्तिरूप्यमृगतृष्णोदकादीनुपन्यस्याकाशादिकार्यस्य मृषात्वं प्रतिपादयद्भिरेतत्सूत्रं विवर्त्तपरत्वेन व्याख्यायते, तदसमीचीनं, प्रतिज्ञादृष्टान्तासम्भवात् । तथाहि "येनाश्रुतं श्रुतमित्यादि" श्रौतप्रतिज्ञावाक्ये कारणविज्ञानेन कार्यविज्ञानं प्रतिज्ञातं, तत्र किं तावत्कारणं शुद्धं निर्विशेषं ब्रह्म वा उपहितं वा ? नाद्यः, तस्य कारणत्वानभ्युपगमात्, तत्र प्रमाणाभावेन तद्विज्ञानस्यैवासम्भवाच्च । "तमेव विदित्वाऽतिमृत्युमेति, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः" इत्यन्वयव्यतिरेकश्रुतिव्याकोपाच्च, तज्ज्ञानाभावेऽनिर्मोक्षप्रसङ्गाच्च । न द्वितीयः, तद्विज्ञानस्य मोक्षाहेतुत्वेनाप्रयोजकत्वात्, उपहितस्यैव ब्रह्मणो जगत्कारणत्वेन तज्ज्ञानेन तदुपादेयज्ञानेजातेपितस्य मोक्षाहेतुत्वेन मिथ्यात्वेन चानिर्मोक्षप्रसङ्गस्यावश्यंभावात् । अन्यथोपहितं ब्रह्मैव मुक्तोपसृप्यं स्यात् शुद्धस्यासिद्धेश्चेत्यर्थः । किञ्च शुक्तिरूप्यमृगतृष्णोदकादिदृष्टान्तनामप्यप्रामाण्यम्, अश्रौतत्वात्, श्रौततात्पर्यविरोधाच्च । मृत्तिकाद्युपादानपदार्थज्ञानाद्यथा घटादितत्कार्यजातस्य विज्ञानं तदुपादेयत्वात्सर्वप्राणिगोचरं, न तथा शुक्तिज्ञानाद्रूप्यमात्रस्य ऊषरज्ञानाद्वा उदकमात्रस्य विज्ञानं कस्याप्यनुन्मत्तस्य जायते उपादेयत्वाभावात् । तस्माद् दृष्टान्ताभासत्वमेव तेषामिति सिद्धं "लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं स दृष्टान्तः" इति गौतमीयलक्षणसूत्रात् । ननु घटादीनामपि मृदादावध्यस्तत्वेन विवर्त्तपक्षेऽपि दृष्टान्तत्वसम्भवान्नाभासत्वमिति चेन्न । मृदादिज्ञानेन घटादीनां बाधादर्शनात्, बाधं विना चारोपे मानान्तराभावात् । मृदादिज्ञानेऽपि घटादीनां पूर्ववद्विद्यमानानां प्रातीतिकत्वासम्भवाच्च । किञ्च व्यावहारिकविवक्षायां मृदादिवत् कारकव्यापा-

---

ब्रह्मात्मकतया । उक्तार्थं श्रुत्या स्मृत्या च द्रढयति । ऐतदात्म्यमिति । कार्यमात्रस्य मिथ्यात्वमङ्गीकृत्य विवर्त्तवादपरत्वेन "तदनन्यत्वमारम्भणशब्दादिभ्यः" इदं सूत्रं व्याचक्रुः तन्मतं दूषयितुमुपन्यस्यति । यत्त्विति । तस्य = निर्विशेषशुद्धस्य तत्र = निर्विशेषशुद्धे । तद्विज्ञानस्य = निर्विशेषशुद्धब्रह्मज्ञानस्य । निर्विशेषशुद्धविज्ञानाभावे श्रुतिद्वयस्य विरोधमाह । तमेवेति । तं परमात्मानं विदित्वा मृत्युं संसारमतिक्रामति । एतेन वाक्येन वेदनकर्मत्वं सविशेषस्य ब्रह्मणो घटते नतु निर्विशेषचिन्मात्रस्य शुद्धस्येति सूचितम् । चर्मवदिति । यथा अमूर्त्तस्याकाशस्य चर्मवत् वेष्टनं नोपपद्यते तद्वत् परमात्मज्ञानमन्तरेण मोक्षोऽपि न सम्भवतीत्यर्थः । तज्ज्ञानाभावे= शुद्धब्रह्मज्ञानाभावे । उपहितं ब्रह्म जगत्कारणमिति द्वितीयकल्पं निरस्यति । न द्वितीय इति । तद्विज्ञानस्य = उपहितविज्ञानस्य । विपक्षे बाधकतर्कमाह । अन्यथेति । उपहितविज्ञानस्य मोक्षहेतुत्वे । शुक्तिरूप्यमृगतृष्णोदकानां दृष्टान्ताभासत्वमाह । किञ्चेति । उपसंहरति । तस्मादिति । उक्तार्थमक्षपादसूत्रेण द्रढयति । लौकिकपरीक्षकाणमिति । लौकिकः = अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः प्रतिपाद्यः । परीक्षकः = शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादकः । तथाच वादिप्रतिवादिनोः साध्यसाधनोभयवत्त्वप्रकारकतदभाववत्त्वप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति सूत्रार्थः । विवर्त्तवादेऽपि दृष्टान्तत्वमुपपादयन्नाशङ्कते । नन्विति । परिहरति । नेति । शुक्तिसाक्षात्कारेण यथा नेदं रजतमितिबाधो जायते तस्मादेव निश्चीयते शुक्तौ रजतत्वारोपः प्रकृते तथा नास्तीत्याह । मृदादिज्ञानेनेति । यज्ज्ञानोत्तरकाले बाधनिश्चयस्तज्ज्ञानस्य भ्रमत्वमित्यर्थः । घटादीनां प्रातीतिकत्वं निरस्यति । मृदादिज्ञान इति । यद्यत्र तात्त्विकं सत्वं विवक्ष्यते तदा मृदादीनां तथात्वाभावात् न दृष्टान्तत्वमुपपद्यत इत्याह । तात्त्विकसत्वविवक्षायामिति । यदि घटादयो मृदादिमात्रेऽध्यस्ता भवेयुस्तदा

रसाध्यानां जलाहरणादिकार्योपयुक्तानां चावस्थाविशेषाणां घटादीनामपि सत्त्वात् तात्त्विक-सत्त्वविवक्षायां च मृदादेरपि सत्यत्वाभावाच्च दृष्टान्ताभासत्वम् । ननु घटादयो न तावन्मृदादिमात्रेऽध्यस्ताः किन्तु मृदाद्यवच्छिन्नचेतने एव, तथात्वे च मृदाद्यवच्छिन्नतत्त्वज्ञानाभावात्तद्बाधो युक्त एवेति चेन्न । प्रमाणहीनत्वात्, श्रौतदृष्टान्तविरुद्धत्वाच्च । नहि श्रुतौ मृदाद्यवच्छिन्नचेतनविज्ञानेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्त उपन्यस्तः, किन्तु मृत्पिण्डमात्रमेव, तस्मात्कपोलकल्पितपारिभाषिकमात्रत्वाद्दृष्टान्ताभासत्वमेव । ननु "शुक्तौ ज्ञातायां रूप्यं तत्त्वतो ज्ञातं भवति । साहि तस्य तत्त्वं, एवं ब्रह्मज्ञानात्सर्वं तत्त्वतो ज्ञातं भवती"ति श्रीवाचस्पतिमिश्रैर्भामतीप्रबन्धे प्रतिपादनात् । किञ्च यथा घटकरकाद्याकाशानां महाकाशादनन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वादेवमस्य भोग्यभोक्त्रादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यमि"त्यादि श्रीभगवत्पादैर्भाष्यकारैश्चोक्तत्वात्कथं प्रलाप इति चेन्न । एवं तर्हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थ उक्तः स्यात् । तच्चायुक्तं, सर्वमिति साधारणश्रवणात्स्वस्य स्वहेतुत्वायोगात्, "येनाश्रुतमिति" श्रुतिगताश्रुतादिपदवैयर्थ्याच्च । किञ्च तत्त्वं नाम स्वासाधारणं स्वरूपं, स्वासाधारणधर्मो वा, नतु भ्रमाधिष्ठानं, श्रौतदृष्टान्तानां मृत्पिण्डादीनां घटाद्यधिष्ठानत्वाभावात्, अन्यथा रजतादिवत् घटादीनामपि बाधप्रसक्तेः बाधाभावान्यथानुपपत्तेरप्यत्र प्रामाण्यात् । एवं दार्ष्टान्तेऽपि ब्रह्मज्ञानात्प्रपञ्चाबाधदर्शनस्याप्यनध्यस्तत्वे मानत्वं

---

मृदादिज्ञानेन घटादीनां बाधः स्यान्नत्वेवमित्याशङ्कते । नन्विति । तथात्वे = घटादीनां मृदाद्यवच्छिन्नाध्यस्तत्वे । तत्त्वज्ञानाभावात् = चैतन्यज्ञानाभावात् । तदबाध इति । घटादीनामबाध इत्यर्थः । परिहरति । नेति । भेदनिषेधहेतुं व्याचष्टे । आरम्भणशब्दगतात्वदिति । एवं हि ब्रह्मज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत यदि ब्रह्मैव तत्त्वं जगतो भवेत् यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति सा हि तस्य तत्त्वं तत्त्वज्ञानञ्च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तः यथा सोम्यैकेनेति व्याख्यातं श्रीवाचस्पतिमिश्रैस्तदनन्यत्वमितिसूत्रव्याख्यानावसरे स्वकृतभामत्यां तदेवात्र दूषयितुमनूद्यते । नन्वित्यादिना । श्रीमत्भगवत्पादैः शङ्कराचार्यैरस्य सूत्रस्य यद्व्याख्यानं कृतं तद्दूषयितुमुपन्यस्यति । किञ्चेत्यादिना । दृष्टनष्टस्वरूपत्वादिति । दृष्टम् प्रातीतिकं नष्टमनित्यं यत्स्वरूपं तद्रूपेणानुपाख्यत्वादित्यर्थः । स्फूर्तिशून्यत्वादिति यावत् । अनन्यशब्दार्थं व्याचष्टे । स्वरूपेणानुपाख्यादिति । ब्रह्मव्यतिरेकेणाभाव इति । स्वरूपैक्ये कार्यकारणत्वव्याघात इत्यत आह । व्यतिरेकेणेति । कारणात् पृथक्सत्त्वशून्यत्वं कार्यस्य साध्यते नैक्यमित्यर्थः । ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वेन तवाभिमतत्वान्नहि ब्रह्मातिरिक्तं किञ्चिदस्ति येन तद्विज्ञानं ब्रह्मविज्ञानेन भवितव्यमतो ज्ञायते ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्याशयेन परैरुक्तमर्थं निरस्यति । नेति । तच्चायुक्तमिति । 'एकविज्ञानेन सर्वं विज्ञातं भवती'ति श्रुतौ स्वज्ञानेन स्वज्ञानमभिप्रेतं चेत् तदा सर्वपदस्य वैयर्थ्यं प्रसज्जेत तदेव व्यर्थीभूय ज्ञापयति कार्यं स्वोपादानकारणभूतब्रह्मापृथक्सत्त्वमिति भावः । अश्रुतपदमप्यस्मादुक्तार्थ एव प्रतीयते अन्यथा तस्य वैयर्थ्यं स्यादित्याह । येनाश्रुतमिति । एवं ब्रह्मविज्ञानात्सर्वं तत्त्वतो ज्ञातं भवतीति यदुक्तं तदपि निराकरोति । किञ्चेति । तत्त्वशब्दार्थं व्याचष्टे तत्त्वं नामेति । नतु भ्रमाधिष्ठानं तत्त्वमिति योजना । तत्र हेतुमाह । श्रौतदृष्टान्तानामिति । बाधकतर्कमाह । अन्यथेति । मृत्पिण्डादीनां घटाद्यधिष्ठानत्वेत्यर्थः । यथा शुक्तिसाक्षात्कारेण रजतस्य बाधो जायते तथामृत्पिण्डविज्ञानेन बाधः प्रसज्जेत यतस्तज्ज्ञानात्तेषां बाधो न भवति अतस्तेषां न घटाद्यधिष्ठानतेय-

बाधयम् । अन्यथा शुक्तिरजतज्ञानाद्रूप्यनाशवद्ब्रह्मज्ञानात्सर्वनाशापत्त्या सर्वविज्ञानासम्भवादिति भावः । अपि च वाचारम्भणशब्दस्य मिथ्यार्थकत्वे योगरूढ्योरभावात्, वाचारब्धकाव्यादेर्मिथ्यात्वादर्शनात्, वागालम्बनमात्रमिति व्याख्यानेऽश्रुतकल्पनात्, त्वया नामधेयमित्यस्यापि नाममात्रं ह्येतदिति व्याख्यातत्वेन पौनरुक्त्याच्च । ननु "को भवानिति निर्देशो वाचारम्भो ह्यनर्थकः" इति स्मृत्या वाचारम्भशब्दस्य मिथ्यापरत्वदर्शनात्तथाऽत्रापि बोध्यमिति चेन्न । स्मृतावपि पूर्वोक्तरूढ्याद्यभावेन त्वदिष्टपरत्वाभावात् । तथाहि—देहानां प्रकृत्युपादेयत्वेन प्राकृतत्वाविशेषात् "कोभवानिति निर्देशो" देहविषयकप्रश्नोऽनर्थकः प्रकृतेः स्वतन्त्रभिन्नतया निर्धारणरूपार्थशून्यः, किन्तु वाचारम्भो वाग्व्यवहारयोग्य, इति स्मृत्यर्थः । अन्यथा शब्दमात्रस्यापि वागिन्द्रियारभ्यत्वसाम्यात् वाचेति वैयर्थ्यापत्तेः । अर्थासत्त्वेन वागादिप्रयोगस्य त्वयैवानुभूतत्वात्, न तु त्वदन्यैः कैश्चिदिति भावः । ननु वाचारम्भणनामधेयपदाभ्यां विचारासहत्वं विवक्षितं, तथाहि भूविकारस्य घटादेः स्वरूपविचारे विकारो मिथ्या । भूः सत्या तत्स्वरूपविचारे च साऽपि मिथ्या, तद्धेतुभूतापञ्चीकृतभूतान्येव सत्यानि । तत्स्वरूपविचारे च तेषामपि मिथ्यात्वं, किन्तु तत्परमकारणं ब्रह्मैव सत्यमिति मृत्तिकेत्येव सत्यमिति, सत्यमित्यत्र हेतुर्वाचारम्भणं विकारो नामधेयं वाङ्मात्रं विचारासहं, तस्मान्निर्विकारं ब्रह्मैव सत्यमिति चेन्न । विपरीतत्वात् । तथा च विकारस्य कारणात्पृथक्सत्त्वासिद्ध्या स्वतन्त्रसत्ताभावमेव बोधयति श्रुतिः, न तु स्वरूपेण मृषात्वम्, अन्यथा विचारासहत्वमात्रेण मिथ्यात्वकल्पनायां ब्रह्मणोऽपि "न सत्तासदुच्यते" इति स्मृतेः सदसद्भ्यां विचारासहत्वेन मिथ्यात्वप्रसक्तेर्दुर्वारत्वात् । ब्रह्म मिथ्या, सदसद्भ्यां विचारासहत्वात् तत्र मते पृथिव्यादिवदिति प्रयोगात् । किञ्च विकारो नामधेयमित्यत्र साक्षात्कण्ठरवेण विकारशब्दपाठादपि विवर्तासिद्धेः । यदि श्रुतेर्विवर्त्तोऽभिप्रेतः स्यात्तर्हि विकार इति मृत्पिण्डादिदृष्टान्तांश्च न श्रावयेत् अपि तु भ्रान्तिनामधेयमिति ब्रूयात्, शुक्तिरजतादिदृष्टान्तांश्चोपन्यसेत् । नहि विवर्त्तं पर्यायं विकारोऽपितु

---

न्यथानुपपत्तिप्रमाणमुपन्यस्यति । रजतादिवदिति । एवं दार्ष्टान्तेऽपि योजयति । अन्यथेति । ब्रह्मणि प्रपञ्चाध्यस्तत्वे । नहि वाचारम्भणशब्दो योगेन रूढ्या वा मिथ्यात्वं ब्रूते न वा वाचारब्धत्वमिथ्यात्वयोर्व्याप्यव्यापकभावो वाचारब्धकाव्यादौ व्यभिचारात् । नापि वागालम्बनं तदर्थोऽश्रुतकल्पनापत्तेरित्याह । अपि चेत्यादिना । स्मृतिप्रमाणाद्वाचारम्भणशब्दस्य मिथ्यापरत्वं प्रदर्शयन्नाशङ्कते नन्वित्यादिना । नहि स्मृतौ रूढ्या योगेनच वाचारम्भशब्दस्य मिथ्यापरत्वं बोध्यत इत्याह । स्मृतावपीति ; स्मृतेरर्थं विवृणोति देहानामिति । अन्यथेति । उक्तार्थानभ्युपगमे । घटादिशब्दानामर्थसत्त्वादेव तत्प्रयोगः । नहि निरर्थकान् शब्दान् त्वदन्यः कोऽपि प्रयुङ्क्ते, इत्युपहसन्नाह अर्थासत्त्वेनेति । तथाहीति । विचारासहत्वं दर्शयतीत्यर्थः । वाचा केवलमारभ्यते विकारजातं नतु तत्त्वतोस्ति यतो नामधेयमात्रमेतत् । तथाचावस्तुतयानृतं विकारजातं मृत्तिकेत्येव सत्यं तस्माद्घटशरावोदञ्चनादीनां नान्यत्वं मृदेव तस्य पुनर्विचारे सोऽपि मिथ्या मृदः कारणानि भूतानि तेषामपि मिथ्यात्वं परमकारणं ब्रह्मैव सत्यमित्यर्थः । परिहरति । नेति । विपरीतत्वादिति । नहि विकारजातस्य कारणात् पृथक्सत्वमस्ति येन तेषां स्वतन्त्रसत्वं सिद्ध्येत तथाच विकारजातं न स्वरूपेणानृतं भवितुमर्हति यदि विचारासहत्वमात्रेण विकारमात्रेऽनृतत्वं कल्प्यते ब्रह्मणः सदसद्भ्यां विचारासहत्वेन मिथ्यात्वं स्यादित्यर्थः । श्रुतौ

भ्रममात्रमन्यथा विवर्त्त एव न स्यात्। किञ्च यदि नामरूपात्मकं कार्यमनृतमेव तर्हि वेदान्तशास्त्रस्य तद्विचारस्य चापि मृषात्वाविशेषेण तस्मात्सद्रूपब्रह्मभावापत्तिलक्षणमोक्षस्यापि कथमिव सिद्धिरिति मनीषिभिर्वैदिकम्मन्यैर्विचारणीयमेकाग्रमनसा। "कथमसतः सज्जायेते"ति श्रुतेः "साधनं चेदवश्यं च परमार्थास्तिता भवेत्। सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते" इति भट्टपादैरुक्तत्वाच्च॥ १४॥

नन्वसत्यमपि प्रतिबिम्बं बिम्बस्य रेखारोपितो वर्णश्चार्थस्य वर्णदैर्घ्यादिकं नगो नाग इत्यर्थभेदस्य शङ्काविषं मरणस्य सवितृसुषिरादिश्चारिष्टादेः रज्जुसर्पो भयकम्पादेः स्वाप्निकः स्त्रीसङ्गमः सुखस्य स्वाप्नोऽर्थः शुभाशुभयोः साधकं दृष्टम्, आह च भगवान्भाष्यकारः "नैष दोषः। शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः, स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात्। तथा च श्रुतिः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शनः" इत्यसत्यस्वप्ननिदर्शनेन सत्यसमृद्धेः प्रतिपत्तिं दर्शयति, तथा प्रत्यक्षदर्शनेषु केषु चिदनिष्टेषु जातेषु न चिरमिव जीविष्यतीति विद्यादित्युक्त्वा, अथ "स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती"त्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यते इति दर्शयति, प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते, ईदृशेनासाध्वागमः" इति "तथाऽऽकारादिसत्याक्षरप्रतिपत्तिर्दृष्टारेखानृताक्षरप्रतिपत्तेरि" त्यादिनेति चेत्तत्राह भगवान्सूत्रकारः—

## भावे चोपलब्धेः। २। १। १५॥

कारणस्य सद्भावे सत्येव कार्योपलब्धिर्दृष्टचरा। यथा मृदादिभाव एव घटादिकार्यो-

---

विकारशब्दनामधेयशब्दाभ्यामुपादानाच्च विवर्त्तवादः सिद्ध्यतीत्याह। किञ्चेति। असतो वेदान्तवाक्यात्तद्विचारद्वारा कथं सद्रूपमुक्तेः सिद्धिरित्यत्र श्रुतिं प्रमाणयति। कथमसज्जायत इति। उक्तार्थं भट्टवचसा द्रढयति। साधनमिति। यस्य कार्यस्य कारणं यदि सत्वं स्यात्तदा कार्यस्य सत्वमावश्यकम्। अपरमार्थेनासत्येन पारमार्थिकस्य सत्त्वस्य सिद्धिर्न युज्यते न युक्तमिति तदर्थः। तथाचानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य भवदभिमतमोक्षस्य न सत्यत्वमुपपद्यते धूलिकल्पितधूमेनानुमितस्य वन्हेरिव प्रमेयबाधापत्तेरिति भावः।॥ १४॥

असत्यादपि सत्यस्य सिद्धिं दृष्टान्तैः साधयन्नाशङ्कते। नन्वसत्यमपीति। असत्यमपि प्रतिबिम्बं बिम्बस्य साधकं दृष्टमिति योजना। एवमग्रेऽपि बोध्यम्। रेखारोपित इति। रेखास्वकारत्वादिभ्रान्त्या सत्या आकारादयो ज्ञायन्ते। यद्यपि रेखास्वरूपं सत्यं तथापि तद्यथासङ्केतमसत्वं नहि सङ्केतयितारः सङ्केतयन्तीदृशरेखाभेदेनायं वर्णः प्रत्येतव्यः त्वीदृशो रेखाभेदोऽकार ईदृशश्च ककार इति। वर्णदैर्घ्यादिकमिति। वर्णे ह्रस्वत्वं दीर्घत्वञ्चारोपितं तस्माद्वर्णगतह्रस्वत्वज्ञानात् नगः पर्वत इत्यर्थभेदः। एवं वर्णवृत्तिदैर्घ्यज्ञानान्नागः करीत्यर्थभेदश्च सिद्ध्यतीतिभावः। सवितृसुषिरादिति। सूर्यच्छिद्रदर्शनादरिष्टस्य सिद्धिरित्यर्थः। उक्तार्थे भगवत्पादभाष्यकाराणां सम्मतिं दर्शयति। आहचेति। असत्यात्सत्यस्य ज्ञानं न जायते इतिनियमस्य श्रुत्या व्यभिचारमाह। तथाचश्रुतिरिति। असत्यात् सव्यस्येष्टस्य ज्ञानमुक्त्वानिष्टस्य ज्ञानमाह। तथा प्रत्यक्षदर्शनेष्विति। असत्यादपि सत्यस्य प्रतिपत्तिर्भवतीत्यन्वयव्यतिरेकावपि प्रमाणमित्याह। प्रसिद्धञ्चेति। असत्यात्सत्यस्य प्रतीतौ दृष्टान्तान्तरमाह। तथाकारादिति। कस्य भावे कस्योपलब्धिरित्यत्राह। कारणस्येति। शङ्कते। नन्विति।

पलम्भो नान्यथा, देशान्तरे कालान्तरे वा, तस्मात्सदेवोपादानमुपादेयस्य तदनन्यत्वं च। ननु चाग्निकार्ये धूमे गोमयादिकार्ये वृश्चिकादौ चानन्यत्वं न दृश्यते। तत्रोच्यते—अग्निर्हि निमित्तकारणं पितेव पुत्रस्य विनष्टेऽप्यग्नौ धूमस्थितिदर्शनात्, अग्निसंयुक्तार्द्रेन्धनाद्धि धूमो जायते गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः, वृश्चिकादौ चाद्यकारणं पृथिवीद्रव्यत्वेनान्यत्वोपलब्धेः। नापि पूर्वोक्तव्यभिचारकल्पना युक्ता, सर्वत्र कारणस्य सत्त्वात्। तथाहि—बिम्बाभाववदवृत्तिरूपव्याप्तेः प्रतिबिम्बे सत्त्वात् तज्ज्ञानस्यैव सतो बिम्बानुमितिजनकत्वाच्च न व्यभिचारः। रेखायाश्च वर्णे पदस्यार्थे इव सङ्केतितत्वेन रेखास्मारितवर्णस्यैव बोधकत्वात्, रेखाभेदज्ञानवतामपि तथा बोधात्, दीर्घत्वादिकं वर्णगतं सत्यमेव। तार्किकमते नानादीर्घादयोऽनित्या वर्णाः। सिद्धान्ते तु नित्या एव, त्वन्मते त्वनित्या एव, शास्त्रयोन्यधिकरणे वेदानित्यत्वस्य त्वयाङ्गीकारात्। दीर्घत्वादिज्ञानस्यैव हेतुत्वेन मतान्तरेऽप्यनुपपत्त्यभावात्। शङ्कानिमित्तभयजन्यधातुव्याकुलतैव मरणहेतुर्नविषं पुत्रमरणश्रवणवत्, भारतयुद्धादौ घटोत्कचादिभिः शक्तिविशेषात्सृष्टमर्थक्रियाकारिगजादिकं सत्यमेव, सवितृसुषिररज्जुसर्पज्ञानमेवारिष्टभयादिहेतुः सत्यप्यर्थे तदज्ञाने भयाद्यभावात्, स्वाप्नस्त्रीज्ञानस्यैव सुखहेतुत्वं, न तु तत्सङ्गमस्य तदज्ञानां तदभावात्। स्वाप्निकपदार्थानामपि परमात्मसृज्यत्वेन सत्कार्यजनकत्वात्, नासतः क्वापि कार्यकारित्वमिति भावः। किञ्चैकत्र सत एवान्यत्रारोपो नियतः स्वरूपेणासतः खपुष्पादेः कचिदप्यारोपादर्शनात्। नचारोपे तद्विषयकप्रतीतिमात्रमेवापेक्षितं, नतु विषयसत्त्वमपीति वाच्यम्, असतः प्रतीतेरेवासम्भवात्। ननु शुक्तौ रजतप्रतीतिवत् रज्जौ सर्पप्रतीतिवच्च भेदप्रतीतेरपि दोषमात्रकारणमपेक्षितं, न विषयसद्भाव इति चेन्न। त्वन्मते दोषमात्रकारणस्यापि तुच्छत्वसाम्येन ततः प्रतीतिरूपकार्योत्पत्तेरसम्भवात्, कार्यस्य कारणसत्तापेक्षत्वनियमात्। न चासत्यस्याप्यारोपितसर्पस्य भयकम्पादिजनकत्वदर्शनात् उक्तहेतोर्व्यभिचार इति वाच्यम्। स्वरू-

---

समवायिकारणानुवृत्तिं वदता त्वयापि प्रतिसन्धानाभावाशङ्का परिहरणीया तत्रादिकारणपृथिवीप्रत्यभिज्ञानमस्तीति वदसि चेत्तदस्माकमपि तुल्यमित्याशयेन समाधत्ते। तत्रोच्यत इति। गन्धैक्यादिति। निमित्तकारणाप्रत्यभिज्ञानं न दोषः उपादानमेव प्रत्यभिज्ञातव्यः तच्च धूमे गन्धवत्वात् पृथिवीत्वं प्रत्यभिज्ञायत एवेति भावः। प्रागुपदर्शितान् दोषान् परिहरति। नापीति। तत्र हेतुमाह। सर्वत्रेति। प्रतिबिम्बे बिम्बव्याप्तिज्ञानं सद्रूपमेव बिम्बानुमितिं जनयतीत्याह। तथेति। सङ्केतयितारः सङ्केतयंतीदृशरेखाभेदेनायं वर्णः प्रत्येतव्यः इति रेखास्मारितवर्णस्यैव बोधकत्वेत्याह। रेखायाश्चेति। तथाबोधात् = रेखास्मारितवर्णबोधात्। सिद्धान्ते = वैदिकसिद्धान्ते। त्वन्मते=केवलाद्वैतवादिनां मते। तत्र हेतुमाह। शास्त्रयोन्यधिकरण इति। तदज्ञाने=अर्थाज्ञाने। स्वाप्नस्त्रीज्ञानस्यैव सुखहेतुत्वं नतु तत्सङ्गस्य स्वप्नस्त्रीज्ञानाभाववतां सुखाभावादितिभावः। आपणस्थस्य सत्यरजतस्यैव शुक्त्यादावारोपः। नत्वसतः खपुष्पादेः कुत्रचिदप्यारोपस्तथाच सत्येष्वकारादिषु विद्यमानस्यैवाकारत्वस्य रेखास्वारोप इति सिद्धमकारस्य सत्यत्वमित्याह। किञ्चेति। अर्थविषयकप्रतीतिमात्रमेवारोपे हेतुः नत्वर्थस्य सत्यत्वमित्याशङ्क्य परिहरति। नचेति। असतः ज्ञानमेव न जायते सत्यमेव ज्ञानविषयत्वनियतमित्याशयेन समादधाति। असत इति। यथा शुक्तौ रजतप्रतीतौ दोषमात्रस्य कारणत्वं नत्वर्थस्य सत्यत्वं तद्वद् भेदप्रतीतावपि दोषस्यैव कारणत्वं न विषयसद्भावस्य इत्याशङ्कते। नन्वित्यादिना। कार्यं कारणसत्त्वनियतमिति

पेणासतः कार्योत्पत्त्यनुकूलशक्तिमत्त्वाभावात्, आरोपितसर्पस्थलेऽपि सर्पज्ञानस्यैव भयादिहेतुत्वं नारोपितविषयस्येति पूर्वमेवोक्तम्, अन्यथा सर्पज्ञानाभाववतो बालस्य भ्रमो भयादिश्च भवेत्, ननु तदस्ति, प्रत्युत सत्यसर्पस्यापि बालैः स्वहस्तस्पर्शदर्शनात्। न चासतोऽपि रज्जुसर्पादेः स्वज्ञानजनकता इव भयकम्पादिजनकतापि किं न स्यादिति वाच्यं, तत्रापि दोषस्यैव ज्ञानजनकत्वान्नारोपितविषयस्य। अन्यथाऽसत्यपि तमोदोषे रज्जौ सर्पज्ञानोत्पत्तिः केन वार्यते, तवाभिप्रेतासतः कारणस्य विद्यमानत्वात्। एवं च मृगतृष्णाजलेन मृगादीनां तृष्णानिवृत्तिः, गुञ्जारोपिताग्निना शीतनिवृत्तिः, विषारोपितामृतेन मरणाभावः, शूद्रात् ब्राह्मण्यां जातस्य चाण्डालस्य ब्राह्मणत्वेन ज्ञातस्य वेदाधिकारः, तत्कृतयज्ञस्य ज्योतिष्टोमादेः स्वर्गादिजनकत्वम्, आरोपितात्मत्वादेश्च देहादेः श्रवणादितो मुक्तिः, स्वाप्निकयज्ञादेश्च स्वर्गादिप्राप्तिश्च स्यादिति भावः। तस्मात्सदेवोपादानमिति सिद्धम् ॥ १५ ॥

तथैव कार्यमपि सदेवोत्पद्यते इत्याह—

## सत्त्वाच्चावरस्य । २ । १६ ॥

अवरस्य कार्यस्य कारणे सत्त्वात् यत्र यस्याभावोन तत्तत उत्पद्यते, यथाऽग्नेर्व्रीह्यंकुरादिः सिकताभ्यस्तैलमित्यर्थः। यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, तथा कार्यरूपं विश्वमपि त्रिषु कालेषु सत्त्वं न व्यभिचरतीति परैरपि तथैवोक्तेः। अन्यथा "सदेव सौम्येदमग्र आसीदात्मा वा इदमग्र आसीदि"त्यादाविदंशब्दगृहीतस्य कार्यस्य भूतकालीनसत्तायोगश्रवणस्य बाधात्, अत्यन्ताभावप्रतियोगिनोऽवस्तुत्वेन कालसम्बन्धासम्भवात्। ननु स्वप्नरथादिसृष्टिदर्शने विषयस्य दुर्निरूपत्वेन मृषात्वं सुप्रसिद्धं, तद्वज्जाग्रत्प्रपञ्चस्यापि मृषात्वमेव। तथा च विषयासिद्ध्या तज्ज्ञानमपि मृषैवेति चेन्न। विषयस्य तत्रापि

---

सर्ववादिसिद्धमिति। केवलाद्वैतसिद्धान्ते तुच्छत्वसाम्याद्दोषकारणात् प्रतीतरूपं कार्यं न कथमपि प्रतिपत्तुमर्हतीत्याह। त्वन्मत इति। कार्यत्वं कारणसत्तासापेक्षत्वव्याप्यमिति व्याप्तौ व्यभिचारमाशङ्क्य निराकरोति। नचेति। असति कार्यानुकूलशक्तिमत्त्वमेव नास्तीति नासतः कार्यजनकत्वं किन्तु सत्यस्य सर्पज्ञानस्यैव भयादिहेतुत्वमित्याह। स्वरूपेणेति। विपक्षे बाधकतर्कमाह। अन्यथेति। सर्पज्ञानस्य भयाद्यजनकत्वे ज्ञानं प्रति विषयस्य हेतुत्वात् रज्जुसर्पादिज्ञानं प्रति विषयविधया असतोऽपि रज्जुसर्पादेर्यथा स्वज्ञानजनकत्वं भयकम्पादिजनकतापि किन्नोपेयत इत्याशङ्क्य परिहरति। नचेति। अन्यथेति। दोषाजनकत्वे। तत्र हेतुमाह। तवाभिप्रेतासत इति। एवञ्च = आरोपितविषयस्य कारणत्वे तृष्णानिवृत्तिः स्यादिति योजना। एवमग्रेऽपि। निगमयति तस्मादिति ॥ १५ ॥

सूत्रमवतारयति। तत्रैवेति। सूत्रार्थं विवृणोति। अवरस्येति। सिकताभ्यश्चेति। नहि तैलं सिकतात्मना सिकतायामस्ति यथा घटोऽस्ति मृदात्मना प्रत्युतोत्पन्नो घटो मृदात्मनोपलभ्यते नैवं प्रत्युत्पन्नं तैलं सिकतात्मनेतिभावः। परैरिति। भगवत्पादैः श्रीशङ्कराचार्य्यपादैः तथैवोक्तेः। यथाच कारणं ब्रह्म त्रिषु कालेषु सत्वं न व्यभिचरति एवं कार्यमपि जगत्त्रिषुकालेषु सत्वं न व्यभिचरतीत्यर्थः। अन्यथेति। कार्यस्यासत्वे। 'सदेवे'ति श्रुताविदंशब्दवाच्यं कार्यं सद्रूपं तस्य मिथ्यात्वे नोत्तरकालेऽधिष्ठानसाक्षात्कारेण बाधान्न कथमपि कालसम्बन्धिता तस्य घटत इत्याह। सदेव सोम्येति। यथा स्वाप्निकार्थानां मृषात्वं तथा जाग्रदर्थस्याप्यनृतत्वमित्या-

सत्त्वात्। तथा हि स्वाप्नपदार्थस्येश्वरसृज्यत्वेन याथात्म्यसद्रूपत्वात् आकाशादिवत्। एवं च तद्विषयकज्ञानयाथार्थ्यस्य विवादोनिरवकाशः। ननु यदि स्वप्नसृष्टिः पारमेश्वरीया तर्हि तात्कालिकबाधोन स्यात्, तत्समीपवर्तिभिरन्यपुरुषैश्चानुभूयेत, नतु तदस्ति, तस्माज्जीवसृष्टिरेवातस्तन्मिथ्यात्वस्य सुतरां सिद्धिरिति चेन्न। न तावदीश्वरसृष्टेः सर्वस्या अप्याकाशादिवद्बहुकालावस्थायित्वनियमो वक्तुं शक्यः, तत्सङ्कल्पानुसारित्वात्, तत्कार्यस्य तत्र कस्यचिदाकाशादेर्महाप्रलयावसानावस्थितिरितरस्य देवदत्तपुत्रादेर्यत्किञ्चित्कालावस्थायित्वनियमः कस्यचित्पदार्थस्य तात्कालिकोत्पत्तिविनाशयोगश्च प्रत्यक्षादिप्रमाणसिद्धः, तस्मात् स्थितिकालस्य तत्कर्त्तृपरमेश्वरसङ्कल्पाधीनत्वेन बह्वल्पकालावस्थानानियमान्नोक्तदोषावकाशः। नापि समीपवर्त्तिभिरननुभूयमानत्वं मिथ्यात्वे नियामकं, देवदत्तादिमनोगतसुखदुःखादेरन्यैरननुभूयमानत्वेऽपि तस्य मिथ्यात्वाभावात्, तथा प्रकृतेऽपि बोध्यम्। नच मनोगतसुखादेर्जीवजन्यत्वमिति शङ्कनीयम्, ईश्वरसृज्यत्वस्य श्रीमुखगीतत्वात् "सुखं दुःखमि"त्यारभ्य, "भवन्ति भावा भूतानां मत्त एवे"ति वाक्येन। किञ्च तत्तत्प्राणिपुण्यापुण्यानुरूपतत्तत्पुरुषानुभाव्यतावत्कालावस्थानुकूलभगवत्सङ्कल्पसृष्टा एव, स्वाप्नपदार्था न जीवसृष्टास्तेषां बद्धावस्थायां सत्यसङ्कल्पत्वाभावात्। अन्यथा तेषां सुखमेव सर्वदा स्यान्न कदाचिदपि दुःखयोगः, जाग्रत्समयेऽपि स्वसङ्कल्पानुसारिणीं सृष्टिं कुर्युः, न तु तथा दृश्यते, प्रमाणाभावादसम्भवाच्च। किञ्च "एषु जाग्रति कामं कामं पुरुषो निर्मिमाणस्तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते, तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति स्वाप्नसृष्टिश्रुत्युक्तलिङ्गानि न कथमपि जीवात्मन्यन्वेतुं शक्यानि परमेश्वरासाधारणधर्मत्वाद्विशेषार्थस्तु तृतीयाध्याये तत्प्रकरणे

---

शङ्कते। नन्वित्यादिना। यथाकाशादिपदार्थानामीश्वरसृज्यत्वेन सद्रूपता तद्वत्स्वाप्निकार्थानामपीश्वरसृज्यत्वात्सत्यत्वमित्याशयेनोक्तां शङ्कां व्युदस्यति। नेति। तत्रापीति। स्वप्नादावपीत्यर्थः। स्वप्नसृष्टिः न परमेश्वरीया किन्तु जीवसृष्टिस्तदर्थानां मिथ्यात्वमित्याशङ्कते। नन्विति। ईश्वरसृष्टावपि केषांचिदर्थानां पृथिव्यादिभूतानामाप्रलयं स्थितिः। देवदत्तपुत्रादीनां शतवर्षस्थायित्वम्। कस्यचिदर्थस्य द्वित्रिक्षणावस्थायित्वं तदिच्छापरतन्त्रत्वादतो नहि सर्वस्याप्यर्थस्य बहुकालावस्थाननियमो वक्तुं शक्य इत्याह। नतावदिति। स्वप्नसृष्टेः परमेश्वरीयत्वपक्षे यो दोष उक्तस्तमपाकरोति। नापीति। तस्य = सुखदुःखादेः। नचेति। नचेत्यस्य शङ्कनीयमित्यनेनान्वयः। तत्र श्रीमुखवाक्यं प्रमाणतयोपन्यस्यति। सुखदुःखमिति। स्वाप्निकार्थाः तत्तत्प्राणिकर्मापेक्षाः तावत्कालावस्थायिनस्तत्तत्पुरुषाणामनुभवविषयीभूताः भगवत्सङ्कल्पसृष्टा एव नतु जीवसृष्टास्तेषां मुक्तितः प्राक् सत्यसङ्कल्पत्वाभावादित्याह। किञ्चेति। अन्यथेति। सत्यसङ्कल्पत्व इत्यर्थः। तेषाम् = बद्धजीवानाम्। स्वाप्निकपदार्था ईश्वरसृष्टा एवेत्यत्र श्रुतिं प्रमाणयति। किञ्च य एषु जागर्त्तीति। सर्वेषु सुप्तेषु जीवेषु। कामं कामं णमुलन्तमिदं सङ्कल्प्य सङ्कल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्तीत्यर्थः। तदेव प्रकाशकं तदेवानन्याधीनममृतमुच्यते। नित्यमुक्तानाममृतत्वेऽपि निरुपाधिकामृतत्वाभावात्तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम्। तत्सर्वात्मकं ब्रह्म कोऽपि नातिक्रामतीत्यर्थः। उपसंहरति। तस्मादिति। कार्यमात्रं प्रति ब्रह्मणः कारणत्वादपि स्वाप्नार्थान् प्रत्यपि कारणत्वमित्याह। किञ्चेति। अचेतनानां स्वरूपान्यथाभावलक्षणोत्पत्तिः सम्भवति जीवानान्तु सा नास्तीति कथं ब्रह्मणः सर्वजगत्कारणत्वमित्याशङ्कते। नन्विति। विपक्षे बाधकतर्कमाह।

वक्ष्यते, तस्मात्परमेश्वरसृज्या एव स्वाप्नपदार्था इति सिद्धम्। किञ्च तत्कार्यकारित्वान्यथानुपपत्तिरपि तत्सत्यत्वे मानत्वेनानुसन्धेया। किञ्च ब्रह्मणः सर्वकारणत्वान्यथानुपपत्तिश्चापि स्वाप्नपदार्थानां तत्सृज्यत्वे प्रमाणम्। ननु ब्रह्मणः सर्वोपादानत्वाऽनुपपत्तिः तथा ह्यचेतनस्य परिणामिसत्तायोगाद्भवतु तत्कारणत्वं ब्रह्मणः, चेतनस्य तु कूटस्थसत्ताश्रयत्वेन जन्माद्यसम्भवात् कथं तत्कारणत्वमन्यथाऽनित्यत्वापत्तेः। प्रत्यगात्मानोऽनित्याः जन्मादिमत्त्वात् घटादिवदिति प्रयोगात्। "न जायते म्रियते वा विपश्चिदि"त्यादि शास्त्रव्याकोपात् कृतनाशादिप्रसङ्गाच्चेति चेन्न, प्रामादिकोक्तेः। स्वाप्नादिकर्मणां मध्ये फलं दातुमुन्मुखस्य प्रबलस्यैकतमस्य कर्मविशेषस्य फलानुभूतये तदनुकूलदेहादिसंयोगे सति तद्भोगार्हज्ञानशक्त्यादिविकाशस्य जीवजन्मपदार्थत्वात् अत्यन्तविस्मृतिपूर्वकस्थूलदेहादिवियोगेन भोगाद्यनर्हतापत्तेश्च मृत्युनाशादिपदार्थत्वान्नोक्तदोषावकाशः। वस्तुतस्तु अस्याः शङ्काया उन्मत्तप्रलापत्वमेव। श्रुतेस्तावत्सर्वकार्यं प्रत्येव ब्रह्मणः कारणत्वप्रतिपादकत्वेन जीवे तत्प्रसङ्गाभावात्, यदि प्रत्यगात्मा कार्यं स्याद् ब्रह्मणश्च तदुपादानत्वाभावे सर्वकारणत्वे न्यूनताप्रसक्तिः स्यान्नतु तदस्ति, तस्यानाद्यनन्तकूटस्थत्वश्रवणादिति भावः। ननु "अनादिनिधनानित्ये"ति वेदस्याप्यनाद्यनन्तत्वश्रवणात्तत् कारणत्वं ब्रह्मणोऽनुपपन्नं, तथात्वे च ब्रह्मणः समस्तकारणत्वेऽव्याप्तिरिति चेन्न, तस्यापि निःश्वसितन्यायेनाविर्भावकारणत्वस्य ब्रह्मगतत्वेनोक्तदोषानवकाशात्. "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद सामवेद" इति श्रुतेरुक्तन्याये मानत्वात्। "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इति श्रुतेश्च तदाविर्भावे मानत्वात्। "वेदानां जन्मादयस्तु निर्विकारित्वेनैवाविर्भावतिरोभावमात्रत्वं, नत्वानुपूर्व्यन्यथाभाव" इति—सिद्धान्तसेतुकायां—"श्रीसुन्दरभट्टपादोक्तेः"। अचेतनप्राकृतवर्गस्याकाशादेस्तु परिणा-

---

अन्यथेति। जीवात्मनामुत्पत्तिस्वीकारे। तदेवोपपादयति। प्रत्यगात्मन इति। नजायत इति। विपश्चित्वाहोंऽयमिदानीमपि जन्ममरणशून्य इत्यर्थः। कृतनाशादिप्रसङ्गादिति। पूर्वजन्मार्जितानां पुण्यापुण्यानां नाशप्रसङ्गादित्यर्थः। परिहरति नेति। तत्र हेतुमाह। प्रामादिकोक्तेरिति। आत्मा नोत्पद्यते नो जायते म्रियते वा विपश्चिज्ज्ञाज्ञौद्वावजावित्युत्पत्तिनिषेधश्रुतेः। ताभ्य एव श्रुतिभ्यो नित्यत्वावगमाच्च। नचोत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञाविरोधः शङ्क्यः। स्वरूपस्य नित्यत्वेऽपि ज्ञानसङ्कोचविकाशलक्षणान्यथाभावरूपावस्थान्तरापत्तिसत्वेनोत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञायाश्चोपपत्तेः। उत्पत्तिनिषेधश्रुतेश्च स्वरूपान्यथाभावलक्षणोत्पत्त्यभावपरतयाविरोधादित्याशयेन जन्मादीनां लक्षणमाह। स्वानादिकर्मणामिति। प्रकारान्तरेणोक्तशङ्कां निरस्यति। वस्तुतस्त्विति। निखिलकार्योत्पत्तित्वावच्छिन्नं प्रत्येव ब्रह्मणः उपादानकारणत्वं बोधयन्त्यः "यत इमानि भूतानि जायन्ते" इत्यादिश्रुतयः सन्ति ताभिरचेतनकार्यजातं प्रति तस्य कारणत्वं निश्चीयते नतु चेतनं प्रत्यगात्मानं प्रति तस्य कूटस्थसत्ताश्रयत्वेन जन्माद्यसम्भवादित्याह। श्रुतेस्तावदिति। तत्प्रसङ्गाभावात्=ब्रह्मकारणत्वप्रसङ्गाभावात्। तदुपादानत्वाभावे=प्रत्यगात्मन उपादानत्वाभावे। नतुतदस्ति=न्यूनत्वप्रसक्तिरस्ति। तस्य=जीवात्मनः। वेदस्यानादित्वान्नित्यत्वं तं प्रति ब्रह्मणः कारणत्वं न घटत इति कथं निखिलजगदुपादानकारणत्वं ब्रह्मणो लक्षणमुपपद्यत इत्याशङ्कते। नन्विति। परिहरति। नेति। तत्रापि=वेदेऽपि। उक्तार्थे श्रुतिं प्रमाणयति। अस्य महतो भूतस्येति। तदाविर्भावे=वेदाविर्भावे। उक्तार्थं स्वकीयाचार्य्यसमत्या द्रढयति। सिद्धान्तसेतुकायामिति। तार्किकाणां मतमा-

मिसत्ताकत्वेन स्थूलसूक्ष्मावस्थान्तरव्यक्ताव्यक्तनामरूपान्तरविभागेनावस्थितिरेवोत्पत्तिलय-शब्दाभ्यां प्रतिपाद्यते, नतु तार्किकवत् असतो जन्मनाशौ शशशृङ्गादावतिप्रसङ्गात्. नाप्यन्ये-षामिवारोपापवादौ श्रुतिप्रमाणशून्यत्वादिति संक्षेपः। एवं मिथ्यात्वे प्रमाणासिद्ध्या कार्यं सदेव स्वोपादानब्रह्मापृथक्सिद्धं चोपादानात्मकत्वादुपादेयमात्रस्येति सिद्धम् "सदेव सौम्य, ऐतदात्म्यमित्यादि" श्रुतेरिति राद्धान्तः। "सदसच्छब्दयोः पञ्चमहाभूतपरत्वस्य श्रुत्यैव कण्ठ-रवेणव्याख्यातत्वात् "यदन्यद्वायोरन्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चासदि"ति श्रुतेः। अन्यथा "न सत्तन्नासदुच्यते" इति स्मृत्याऽऽत्मनोऽप्यनिर्वचनीयत्वप्रसङ्गादिति पूर्वमेवोक्तमलं विस्तरेण ॥ १६ ॥

ननु माऽस्तु कार्यस्याध्यस्तत्वासिद्ध्या मिथ्यात्वमनिर्वचनीयत्वे प्रमाणाभावात्, किन्त्वसत्त्वमेवास्तु प्रपञ्चस्य, तत्र श्रुतिप्रमाणस्य सत्त्वादित्याक्षिप्योत्तिष्ठन्त्यसत्कार्यवादिनो-वैशेषिकादयः—

## असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ २ । १ । १७ ॥

तथा चायं तेषामभिप्रायः—कार्यमसदेव कारणवैलक्षण्यात्। तथाहि—नहि कार्यकारण-विषयकज्ञानस्यैकरूपत्वनियमः शब्दभेदात्, घटः पट इति शब्दात्कार्यप्रत्ययः, मृत्तन्तव इति शब्दात्कारणप्रत्ययः, जलाहरणादिदेहाच्छादनादिच घटपटादेः कार्यस्य फलं कुड्यनि-र्माणादि रज्जुनिर्माणादि च मृत्तन्त्वादिकारणस्य फलम्। नहि घटादिना कुड्यनिर्माणादि-सम्भवो नाऽपि मृदादिना जलाहरणादिसम्भवश्चेत्यन्वयव्यतिरेकेण फलभेदाच्च। कालभेदा-दपि प्राक्कालीनं कारणमुत्तरकालीनं च कार्यम्। आकृतिसङ्ख्याभेदाच्च पिण्डाकारमेकसङ्ख्याकं च कारणं, कम्बुग्रीवपृथुबुध्नोदराकारमनेकसङ्ख्याकं च कार्यम्। किञ्च कार्यस्य सत्त्वे कारकव्या-

---

चेष्टुमाह। नतु तार्किकादिवदिति। यद्यसतः प्रपञ्चस्य जन्माभ्युपेयते तदा शशविषाणादीनामपि तथात्वं प्रसज्येत इत्याह। शशविषाणेति। मायावादिनां मतमाक्षिपन्नाह। नापीति। कार्यस्य मिथ्यात्वे न किमपि मानमस्ति येन कार्यस्यासद्रूपत्वं घटेत इति निगमयन्नाह। एवं मिथ्यात्व इति। स्वोपादानब्रह्मापृथक्सिद्धम् = कार्योपादानब्रह्मापृथक्सिद्धम्। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। सदेवेति। तदेव श्रुत्योपपादयन्नाह। यदन्यद्वायो-रिति। विपक्षे बाधकतर्कमाह। अन्यथेति। सदसच्छब्दयोः पञ्चभूतपरत्वाभावे ॥ १६ ॥

असत्कार्यवादिनां वैशेषिकादीनां मतं दूषयितुमुपन्यस्यति। नन्विति। नहि कार्यस्य मिथ्यात्वेऽनिर्व-चनीयत्वे मानमस्ति येन विश्वस्य तथात्वं कल्प्येत इत्याह। कार्यस्येति। असद्वा इदमग्र आसीदिति। तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्वं कारणवैलक्षण्येन कार्यस्यासत्वं वैशेषिकमतानुसारेण साधयितुमुपक्रमते तेषामयमाशय इति। शब्दभेदं दर्शयति। घटपट इति। कारणप्रत्ययेऽपि शब्दभेदमाह। मृत्तन्तव इति। कार्यस्य फलं दर्शयति। जलाहरणादिति। कारणस्य फलमाह। कुड्यनिर्माण इति। यत्कारणेन कर्तुं शक्यते न तत्कार्येणेत्याह। नहीत्यादिना। फलभेदं निरूप्य कालभेदादपि तयोर्वैलक्षण्यमाह।

पारवैयर्थ्याच्चेत्यादिभ्योहेतुभ्यः कार्यस्यासत्त्वमिति तात्पर्येण शङ्क्यते कणभक्षादिभिः। ननु "असदेवेदमग्र आसीत्, असद्वा इदमग्र आसीदि"त्यादिश्रुतिभिः कार्यस्योत्पत्तेः प्राक्कालेऽसत्त्व-व्यपदेशात्कथं सत्त्वमिति चेत्तत्रोत्तरमाह भगवान्सूत्रकारः। नेति। प्रागपि कार्यस्यासत्त्वं व्यपदिश्यते इति नाशासनीयम्! तत्र हेतुमाह, धर्मान्तरेणेति। अभिव्यक्तनामरूपात्सत्त्व-धर्माद्धर्मान्तरमनभिव्यक्तनामरूपमसत्त्वं, तेन योगादियं श्रुतिरसत्त्वं व्यपदिशति। ननु स्वरू-पासत्त्वं, सत्त्वासत्त्वे हि द्रव्यधर्मौ अनभिव्यक्तनामरूपकमतिसूक्ष्ममासीदित्यर्थः। तत्र हेतुः। वाक्यशेषादिति। उपक्रमे जाते संशये वाक्यशेषाद्विनिश्चीयते तात्पर्यमिति प्रेक्षावतां प्रक्रिया, यथा "अक्ताः शर्करा उपदध्यादि"त्युपक्रमे केनाक्ता इति सन्देहे 'तेजो वै घृतमि'ति वाक्य-शेषाद्घृतेनेति निश्चयः। एवमत्राप्युपक्रमे "असदेवेदमग्र आसीदि"त्यादिना असदिति निर्दिष्टे तस्यैव पुनः "तत्सदासीदि"ति वाक्यशेषेण तच्छब्देन परामृश्य सत्त्वाभिधा-नादसत्त्वसंशयं वारयति। असतः कालत्रयसम्बन्धायोगात्तथात्वे चासीदिति प्रयोगानुपपत्तेः। सच्छब्देन परामर्शानुपपत्तेश्च, अपि च "असद्वा इदमि"त्यत्रापि "तदात्मानं स्वयमकुरुते"ति वाक्यशेषे विशेषश्रवणान्न स्वरूपासत्त्वं, किन्त्वव्यक्तनामरूपकत्वादतिसूक्ष्मं वस्त्वसच्छब्देनो-च्यत इत्यर्थः। तस्मात्कार्यं सदेवोपलभ्यमानत्वात्. नह्यत्यन्तासतः खपुष्पादेः क्वाऽप्युपलब्धि-

---

कालभेदादि। आकृतिसंख्याभेदादपि कारणकार्ययोर्वैजात्यमाह। आकृतिसङ्ख्याभेदाच्चेति। यदि कारणे कार्यस्य प्रागपि सत्त्वं तदा दण्डादिव्यापारस्य वैयर्थ्यं स्यादतः कारणव्यापारात्प्राक् कार्यस्यासत्त्वं वाच्यमित्याह। किञ्चेति। सूत्रस्योत्तरभागमवतारयितुमाह। नन्विति। कार्यस्यासत्त्वे श्रुतिं प्रमाणयति। असदेवेदमग्र आसीदिति। निषेधस्य प्रतियोगिनं विवृणोति। प्रागपि कार्यस्येति। समाधत्ते। तत्रोत्तरमाहेति। कार्यमुत्पत्तेःप्रागप्यसत्त्वं व्यपदेशानर्हमिति प्रतिज्ञावाक्यमित्यर्थः। तत्र = उक्तप्रतिज्ञावाक्ये। धर्मान्तरेण वाक्यशेषादिति सूत्रस्यावशिष्टभागः। धर्मान्तरेणेति हेतुवाक्यं व्याचष्टे। अभिव्यक्तनामरूपात्सत्त्वं धर्मान्तरमिति। तथा च कार्यं यतः नामरूपात्सत्त्वं धर्मान्तरवत् अत उत्पत्तेः प्रागप्यसत्त्वं व्यपदिश्यते, इति नेति भावः। यच्च निरुक्तधर्मान्तरं तदेव कार्योत्पत्तेः प्रागनभिव्यक्तनामरूपमसत्त्वमिति यावत्। तेनेति। कार्योत्पत्तेः प्रागनभिव्यक्तरूपासत्त्वेनेत्यर्थः। ननु श्रुत्याऽसत्त्वकथनात् कार्यस्य स्वरूपासत्त्वं स्यादित्यत आह। ननु स्वरूपा-सत्त्वमिति। श्रुतिघटकासत्पदार्थं व्याकुर्वन्नतु स्वरूपासिद्धत्वमित्यत्र हेतुमाह। अनभिव्यक्तनामरूपकमिति। कथमेतद् गम्यत इत्यत आह। तत्र हेतुः वाक्यशेषादिति। तत्र = अनभिव्यक्तनामरूपकातिसूक्ष्मे। प्रेक्षावतां = विवेचकानाम्। आक्ताः शर्करा उपदध्यादित्युपक्रमे केनाक्ता इति सन्देहे "तेजोघृतम्"इति वाक्यशेषात् घृतेनेति यथा निश्चयः एवमत्रापि तत्सदितिवाक्यशेषात् सन्निश्चय इत्यर्थः। आसीदित्यतीतकालसम्बन्धोक्तेः कार्यं सदे-वेत्याह। असत्त्वसंशयमिति। तथात्व इति। असतः पूर्वापरकालासम्बन्धत्व इत्यर्थः। उक्तन्यायं वाक्या-न्तरेऽतिदिशति। अपिचेति। कार्यस्वरूपासत्त्वं वा स्वरूपसत्त्वंवेतिसन्देहे "तदात्मानं स्वयं कुरुते"ति वाक्यशे-षात्तदात्मानमिति विशेषणान्न कार्यस्य स्वरूपासत्त्वं किन्त्वव्यक्तनामकत्वादतिसूक्ष्मं कार्यं"मसद्वा इदमग्र आसीदि"तिश्रुतौ असच्छब्देनोच्यत इति निश्चयः। अमुमर्थमाह। तदात्मानमिति। सत्कार्यविषयत्वे फलितमाह। तस्मा-दिति। प्रागुक्तासत्त्वादसिद्धान्तमनूद्य दूषयति। यदुक्तमिति। कारणानुस्यूतमेव कार्यं सर्वत्रोपलभ्यत इति कारणवैलक्षण्यं न कार्यस्यासत्त्वसाधकमित्याह। नहि कारणान्वयहीनमिति। यदुक्तं कालभेदादपि कार्यकारणयोर्भेद इति तदप्यपाकरोति। नापीति। कालभेदात्तयोरिति। प्राक्कालीनं कारणमुत्तरकालीनं कार्यमिति प्रत्यययोरित्यर्थः। नद्रव्यपरत्वमिति। न समवायिकारणद्रव्यपरत्वमित्यर्थः। असम्भवादिति। प्राक्कालीनंकारणमित्यादिप्रत्ययस्य

दृष्टा चोपपन्ना वा । यदुक्तं कारणवैलक्षण्यादिति कार्यासत्त्वे हेतुः सोऽपि स्वरूपासिद्धत्वेनाभासरूप एव । नहि कारणान्वयहीनं कार्यं क्वाऽप्युपलभ्यते, नापि कालभेदात्तयोरत्यन्तभेदो वक्तुं शक्यः, तस्यावस्थाभेदविषयकत्वान्न द्रव्यपरत्वमसम्भवात्, कारणावस्थाभेदेनैवाकारसङ्ख्याफलादिभेदस्याप्युपपद्यमानत्वेनोक्तदोषायोगात् । अन्यथा बालस्याप्यवस्थाभेदेन स्वरूपभेदोऽङ्गीक्रियतां तर्कनिपुणैस्तथात्वे च योऽहं पितुरुत्सङ्गेऽक्रीडं सोऽहं वृद्धो बालाँल्लालयामीति प्रत्यभिज्ञानुपपत्तेः, कृतनाशाकृताभ्यागमप्रसङ्गाच्च । नापि तस्य भावे कारकव्यापारवैयर्थ्यं, पूर्वानभिव्यक्तस्याभिव्यञ्जनेनैव तस्य सार्थक्योपपत्तेः । अन्यथाऽसतोऽभिव्यक्त्यङ्गीकारे कारकादिव्यापारेणाग्नेर्यवादीनां, जलमन्थनात् घृतादेः, सिकताभ्यस्तैलस्याप्यभिव्यक्तिप्रसङ्गात् । किन्त्वसत्कार्यवादिनामपि कारकव्यापारोऽनुपपन्न एव । प्रागुत्पत्तेः कार्यस्यासत्त्वेन कार्यादन्यत्रैव कारकव्यापारेण भवितव्यं, तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटादीनामुत्पत्तिप्रसङ्गादित्यर्थः । तस्मान्नासत्त्वं कार्यस्येति भावः । किञ्च युक्तेः शब्दान्तराच्चेति हेतुद्वयेन कार्यस्य सत्त्वं निश्चीयत इत्यक्षरार्थः । तत्र युक्तिर्नाम अनुपपत्तिनिरासेनोपपत्तिसमर्थनेन वस्तुनिर्णायकवाग्विसर्गः । तथा हि यद्यसदेव कार्यं तर्हि दध्यर्थिभिः क्षीरस्यैव घटार्थिभिर्मृद एव च ग्रहो न स्यात्, प्रत्युत विपर्ययश्च स्यात्, दध्यर्थिभिर्मृदादिग्रहः, घटार्थिभिश्च क्षीरादिग्रहः स्यादसत्त्वाविशेषात्सर्वत्र, नतु तदस्ति, तस्मान्न तथा । अतः कारणे व्यक्ताव्यक्तोभयावस्थायां कार्यस्य सद्भावः स्थूलसूक्ष्मावस्थया सदसत्पदाभ्यां श्रुत्या व्यपदिश्यते इत्यर्थः । अन्यथा सर्वत्र सर्वाभावाविशेषेणाग्न्यादेरप्यङ्कुराद्युत्पत्तिः कथं न जायते ? ननु साम्येऽप्यसत्त्वे क्षीरे एव दधिघृतादेः कश्चिदतिशयो न मृदादौ, मृद्येव घटस्य कश्चिदतिशयो न क्षीरादाविति चेन्न, अतिशयाङ्गीकारे प्रागवस्थायामसत्कार्य-

---

कालभेदादत्यन्तभेदविषयकत्वेनैव चारितार्थ्यसिद्धे न द्रव्यविषयकत्वमुक्तमतो नेत्युक्तयैव मृद्द्रव्ययोरभेदात् कार्यं सद्रूपमिति भावः । आकृतिसङ्ख्याभेदाच्चेति । कार्यावस्थातः कारणावस्था भिन्ना तद्भेदेनेत्यर्थः । अन्यथा = यद्यवस्थाभेदेन स्वरूपभेदाङ्गीकारे । तस्य = कार्यस्य । भावे = सत्त्वे । पूर्वानभिव्यक्तकार्यस्याभिव्यक्तौ कारकव्यापाराणामुपयोगान्न तेषामपार्थतेत्यत आह । पूर्वानाभिव्यक्तस्येति । स्वपक्षे दोषं परिहृत्य परपक्षे तं प्रसञ्जयति । अन्यथेत्यादिना । अन्यथा = पूर्वानभिव्यक्तस्यानभिव्यञ्जने । अग्नेरिति । अग्नेः सकाशात् यवादीनामभिव्यक्तिप्रसङ्गादिति योजना । एवमग्रेऽपि । असत्कार्यवादे कारकव्यापारो निर्विषय एव स्यादभावस्य विषयत्वानुपपत्तेरित्यादिदूषणमाह । किन्त्वसत्कार्यवादिनामिति । कार्यस्य कारणाभेदे सविषयत्वं कारकव्यापारस्य स्यान्नान्यथेति भावः । सत्त्वानन्यत्वयोर्हेत्वन्तरं प्रदर्शयन् सूत्रं पठति । किञ्चेति । युक्तिशब्दार्थमाह । युक्तिर्नामेति । तदेव दृष्टान्तमुखेन प्रदर्शयति । तथाहीत्यादिना । नतुतदस्तीति । नहि दध्यर्थिभिर्मृत्तिकोपादीयते नहि घटार्थिभिः क्षीरमित्यर्थः । तस्मान्न तथेति । तस्मात् दध्यर्थिभिः क्षीरस्यैवोपादानात् । घटार्थिभिः मृद एवोपादानात् । नतथा = असदेव कार्यं न । अन्यथेति । उक्तार्थानङ्गीकार इत्यर्थः । कार्यस्यासत्त्वेऽपि कुतश्चिदतिशयात् प्रवृत्तिनियमोपपत्तिरिति शङ्कते । नन्विति । अतिशयो हि धर्मो नासति कार्ये भवितुमर्हतीति भावः । ननु न कार्यस्यातिशयो नियमहेतुरपि तु कारणस्य शक्तिभेदः सचातिशयोऽसत्यपि कार्ये कारणे सत्त्वानैवमिति चेन्न । यतः कार्यकारणाभ्यां कार्यवदसति शक्तिर्न कार्यनियामिका अन्यथा यस्य कस्यचिदन्यस्य नरशृङ्गस्य

दादहानिः, सत्कार्यवादसिद्धिश्च, तत्र श्रीमुखेनैव सिद्धेति। नच सत्कार्यवादे कारकव्यापारवैयर्थ्यं शङ्क्यं, तस्य पूर्वमेव निरस्तत्वात्, कारणस्य कार्याकारव्यवस्थापकत्वेनैव तस्य सार्थकत्वात्। कारणमेव हि कार्याकारं प्रतिपद्यमानं कार्यमित्युच्यते कार्याकाराणां कारणात्मकत्वनियमात् "ऐतदात्म्यमिदं सर्वमि" तिश्रुतेः "वासुदेवात्मकान्याहुरि"ति स्मृतेश्चेत्यादियुक्तेः कार्यस्य प्रागुत्पत्तेः सत्त्वनिश्चयात्। किञ्च शब्दान्तराच्चेति सत्त्वनिश्चय इति योज्यं पूर्वोदाहृतादसत्प्रतिपादकादसच्छब्दादन्यस्तद्विपर्ययप्रतिपादनपरः शब्दः शब्दान्तरः "सदेव सौम्येदमि"त्यादिस्तस्मादपीति यावत्। यद्वा "तद्धैके आहुः असदेवेदमग्र आसीदि"त्यसद्व्यपदेशपरस्ततो वैलक्षण्यपरः "कथमसतः सज्जायेते"ति शब्दान्तरस्तस्मादप्युत्पत्तेः प्राक् कार्यस्येदंशब्दाभिधेयस्य सत्त्वनिश्चयात्। अन्यथा तस्येदंशब्दव्यपदिष्टस्य कार्यस्य सच्छब्दवाच्येन कारणेन सह श्रूयमाणसामानाधिकरण्यस्यासम्भवो दुर्वारः, सदसतोरितरेतरात्यन्तविरुद्धयोः सामानाधिकरण्यासम्भवात्। एतेन "स्थाणुरेव चौर" इतिवत् "सर्वं खल्विदं ब्रह्मे"ति जगत्कारणयोः सामानाधिकरण्यं सूपपन्नमित्युक्तिर्निरस्ताऽश्रौतत्वादन्यथाऽसत्कार्यवादप्रसङ्गात्। स्थाणुचौरयोरुपादानोपादेयत्वाभावेन दृष्टान्तासिद्धेश्च "तज्जलानिती"ति वाक्यशेषात्। एतेन कार्यकारणयोरत्यन्तभेदपक्षोऽपि निरस्तः। अत्यन्तभिन्नयोर्गवाश्वयोरिव सामानाधिकरण्यासम्भवात् "गौरनाद्यन्तवती, ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः, तत्सदासीत्, अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं, अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदमसौ सृजते, अष्टरूपामजां ध्रुवामि"त्यादिश्रुतिभ्यः "ऊर्ध्वमूलमधःशाखमि"त्यादिस्मृतेश्च। ननूक्तश्रुत्यादीनां भेदपराणां व्यावहारिकसत्तापरत्वेन नैराकाङ्क्ष्यान्न पारमार्थिकत्वमभेदपरश्रुत्या-

---

वा नियामकत्वप्रसङ्गादन्यत्वासत्वयोः शक्तावन्यत्र चाविशेषात्तस्मात्कारणावस्थापन्नं सूक्ष्मकार्यमेवाभिव्यनक्ति नियामकतया शक्तिरिति भावः। उक्तार्थं श्रुतिस्मृतिमुखेन प्रमाणयति। ऐतदात्म्यमिति। "शब्दान्तराच्चे"ति सूत्रावयवमवतार्य व्याचष्टे। सत्वनिश्चय इति। कार्यस्य प्रागुत्पत्तेरिति शेषः। प्रकारान्तरेण शब्दान्तरं विभजते। तद्धैक इति। कारणस्येत्थं सत्वेऽपि कथं कार्यस्य सत्वसिद्धिरित्याशङ्क्याह। अन्यथेति। कार्यस्येदंशब्दाभिधेयस्य सत्वानिश्चयेत्यर्थः। "सदेव साम्येदमग्र आसीदि"तिश्रुतौ श्रूयमाणेदंशब्दाभिधेयस्य जगतः सच्छब्दवाच्येन परमकारणभूतेन ब्रह्मणा सह सामानाधिकरण्यमसत्कार्यवादे नोपपद्यते परस्परविरुद्धयोः सदसतोः सामानाधिकरण्यासम्भवादित्याह। तस्येदंशब्दव्यपदिष्टस्येति। तस्य = विश्वस्य। प्रागुक्तार्थं दूषयितुमनूद्यति। एतेनेति = वक्ष्यमाणदोषेण। निरासे हेतुमाह। अश्रौतत्वादिति। अन्यथेति = श्रौतत्वो दृष्टान्तासिद्धौ वाक्यशेषं प्रमाणयति। तज्जलानिति। तस्माज्जायत इति तज्जः तस्मिँल्लीयत इति तल्लः अनतीत्य-नस्तानीत्यर्थः। उक्तार्थं श्रुत्या स्मृत्या च द्रढयति। गौरनाद्यन्तवतीति। गौः प्रकृतिः, आद्यन्तशून्या नित्येति यावत्। उक्तश्रुतीनां व्यावहारिकभेदसत्तापरत्वं नतु पारमार्थिकसत्वपरत्वम्। पारमार्थिकसत्वं समर्थयन्त्योऽभेदश्रुतयस्तु प्रबला इत्याशङ्कते। नन्विति। परिहरति। नेति। अभेदप्रतिपादका वेदान्ताः प्रबलाः षड्लिङ्गोपेतत्वादित्याशङ्क्यापाकरोति। नचेति। तथात्वस्य = षड्लिङ्गोपेतत्वस्य। तथाम्नायतेऽन्तर्यामिब्राह्मणे भेदस्य षड्लिङ्गोपेतत्वं। बृहदारण्यके "वेत्थ त्वं क्वाप्यन्तर्यामिणमित्युपक्रम्य एष त आत्माऽन्तर्यामीत्युपसंहारः। एष ते आत्मात्येकशविंशतिकृत्वोऽभ्यासः। अन्तर्यामितायाः अप्राप्तत्वादपूर्वता। सवै ब्रह्मविदित्यादिफलम्। त्वं याज्ञवल्क्यसूत्रमविद्वांस्तवोन्तर्यामिणं ब्रह्मगवी रुद्रतेजसा मूर्द्धा ते पतिष्यतीति निन्दारूपोऽर्थवादः। यस्य पृथिवी

दीनां तु परमार्थसत्त्वपरत्वात्प्राबल्यमिति चेन्न, कपोलकल्पनां विना प्रमाणान्तराभावात्। नच षड्लिङ्गोपेतत्वेन प्राबल्यमिति वाच्यं, भेदपरश्रुत्यादीनामपि तथात्वस्य पूर्वाचार्यैः प्रतिपादितत्वाद्विस्तरभियाऽत्रोपरम्यते। नचाभेदपराणां निरवकाशत्वेन प्राबल्यं, भेदपराणामपि तथात्वात्। नच तद्विषयभेदस्य प्रत्यक्षप्राप्तत्वेन तासामनुवादपरत्वमिति वाच्यं, निर्विशेषाधिष्ठानरूपसत्ताया अभेदशास्त्रविषयाया अपि घटोऽस्ति घटः स्फुरति पटोऽस्तीति प्रत्यक्षप्राप्ततयाऽभेदश्रुतीनामपि तदनुवादपरत्वसाम्यात्। किञ्चाभेदश्रुतिगम्यं निर्विशेषाद्वितीयं ब्रह्म तासां विषयो न वेति? नाद्यः, तस्य पदार्थत्वेन भेदशास्त्रवदभेदश्रुतीनामपि व्यवहारपरत्वं भवतां श्रीमुखेनैव सिद्धं, निर्विशेषाद्वितीयं ब्रह्म व्यावहारिकमभेदश्रुतिविषयत्वात्पदार्थत्वाच्च, तत्र मते व्योमादिवदिति प्रयोगात्। नद्वितीयः, इदमर्थत्वेन शब्दादिप्रमाणागोचरे भेदशास्त्रवदभेदशास्त्रस्यापि व्यवहारविषयत्वं सूपपन्नम्। किञ्च सर्वप्रमाणाविषयस्य शशशृङ्गायमाणत्वेन द्वितीयपरशास्त्रस्यापि निर्विषयत्वेन बाधप्रसक्तेर्दुर्वारत्वात्। तत्र पक्षेऽभेदशास्त्रस्य निर्विषयत्वेनैव बाधः। अस्मत्पक्षे तस्य सर्वज्ञसर्वशक्तेर्विश्वकारणस्यैक्यप्रतिपादनपरत्वेनैव नैराकाङ्क्ष्यान्नोक्तदोषयोग इत्यलं विस्तरेण। ननु यदि विवर्त्तपक्षानङ्गीकारस्तर्हि कोऽत्र पक्षोऽभिप्रेतः सङ्घातवादो वा? आरम्भवादो वा? परिणामवादो वा? इति। नाद्यः, बाह्यपक्षप्रवेशात्। न द्वितीयः, तार्किकपक्षावलम्बनप्रसङ्गात्। नापि चरमः, आनुमानिकसाङ्ख्यमतप्रवेशात्, पक्षान्तराभावाच्चेति चेन्न। चरमपक्षस्यैवास्मदभिप्रेतत्वात्सूत्रकाराभिमतत्वाच्च। "आत्मकृतेः परिणामात्।" "स्वयमात्मानमकुरुते"ति श्रुतिसूत्राभ्याम्। ननु आकाशकल्पस्य विभोर्वस्तुनः

---

शरीरं यं पृथिवी न वेदेत्याद्युपपत्तिरि"ति। अभेदवाक्यानामन्यविषयाभावेन स्वार्थे प्रामाण्यात्प्राबल्यमित्याशङ्क्य परिहरति। नचेति। तथात्वात् = निरवकाशत्वेन प्राबल्यात्। जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वेन भेदप्रतिपादकवाक्यकदम्बस्य भेदानुवादपरत्वेन दौर्बल्यमित्याशङ्क्य परिहरति। नचेति। तासाम् = भेदश्रुतीनाम्। अभेदवाक्यानां निर्विशेषाधिष्ठानसत्तापराणां घटोऽस्तीति प्रत्यक्षप्रमाणसत्ताबोधकतयानुवादकत्वमित्याह। निर्विशेषाधिष्ठान इति। अभेदश्रुतीनां को वा विषय इति पृच्छति। किञ्चेति। आद्यपक्षं निरस्यति। नाद्य इति। तस्य = ब्रह्मणः। यद्यभेदश्रुतिविषयत्वेन ब्रह्मणो व्यावहारिकत्वं प्रसज्येत इत्याह। निर्विशेषेति। द्वितीयपक्षं निरस्यति। न द्वितीय इति। यथा भेदप्रतिपादकवचसां व्यवहारपरत्वं तथाऽभेदवाक्यानामपि व्यवहारविषयत्वमेव वक्तव्यमित्याह। इदमर्थत्वेनेति। लक्षणप्रमाणाभ्यां वस्तुनः सिद्धिरिति निर्विवादं तथाच सर्वप्रमाणागोचरे परब्रह्मणि शशशृङ्गायमाणत्वेन तत्प्रतिपादकवेदान्तानां निर्विषयत्वेन बाधः प्रसज्येत इत्याह। किञ्चेति। स्वसिद्धान्त उक्तदोषं परिहरति। अस्मत्पक्ष इति। तस्य = परब्रह्मणः। पक्षत्रयाणां दोषाक्रान्तत्वाद्विवर्त्तपक्ष एवाङ्गीकार्य इति शङ्कते। नन्विति। सङ्घातपक्षं निरस्यति। नाद्य इति। बाह्यपक्षप्रवेशादिति। श्रुतिस्मृतिबहिर्भूतानां नास्तिकानां पक्षे प्रवेशादित्यर्थः। चरमपक्षस्य = परिणामवादस्य। आत्मकृतेरिति। लोके कृतिमान् कर्त्ता भवति कृतिविषयो मृदादिरुपादानमिति व्यवस्था। प्रकृते चात्मनः कृतिमत्त्वं कृतिविषयत्वञ्चोभयं श्रूयते 'तदात्मानं स्वयं कुरुते'ति, आत्मानमिति द्वितीयया कृतिविषयत्वं स्वयमिति कृतिमत्वम्। एवञ्च ब्रह्मैव निमित्तमुपादानञ्च। कुतः? आत्मकृतेः। आत्मसम्बन्धिनी कृतिरात्मकृतिः सम्बन्धो विषयविषयिभावः। कृतिः कारणं तस्मादित्यर्थः। तत्राव्याकृतरूपेण कर्तृत्वम्। व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात्। नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं पुनः कृतिकर्मत्वमत आह। परिणामादिति। यथा विभुपरिमाणस्याकाशस्य परिणामो न भवति

परिणामोऽसम्भव एव। तथा च ब्रह्म परिणामानर्हं भवितुमर्हं विभुपरिमाणकत्वात्, निरवयवत्वाच्चाकाशवद्, इति चेन्न। परिणामस्वाभाव्यात् क्षीरवत् सर्वज्ञत्वात्सर्वशक्तिमत्वाच्च स्वेच्छया-परिणामयेदात्मानमिति शक्यते वक्तुम्। ननु सावयवस्यैव क्षीरादेः परिणामदर्शनान्न निरवयवस्येति तादवस्थ्यमेवास्य दोषस्येति चेन्न। क्षीरपरमाण्वादौ तद्व्यभिचारात्। तथा हि—नहि सावयवत्वं वस्तुपरिणामे प्रयोजकमपि तु वस्तुगता तादृशी शक्तिरेव। अन्यथा जलस्यापि सावयवत्वाविशेषेण दधिभावे परिणामापत्तेर्दुर्वारत्वात्, क्षीरावयवानां निरवयवत्वाच्च। अयम्भावः—द्रव्यपरिणामेऽवयविगता शक्तिः कारणमवयवगता वा? नाद्यः, नहि द्रवद्रव्ये व्यतिरिक्तस्यावयवित्वं त्वयाऽभ्युपगम्यते। द्वितीये तु क्षीरावयवाः सावयवा? निरवयवा वेति? आद्ये, अनवस्थापत्तिः क्षीराब्धिः कुण्डे स्यादवयवानामानन्त्यात्, तस्मान्निरवयवा एवेत्यकामेनापि त्वयाऽभ्युपगन्तव्याः। एवं निरवयवस्य परिणामाभाववच्चनियमभङ्गात् विरुद्धो हेतुर्निरवयवत्वादिति। नापि विभोः परिणामाभावनियमः आकाशस्यापि वाय्वात्मना शब्दात्मना च परिणामदर्शनात्। "आकाशाद्वायुरि"ति श्रुतेः। एतेन द्वितीयस्यापि हेतोः सत्प्रतिपक्षत्वं दृष्टान्तविकलत्वं चोक्तं भवति। तथा च ब्रह्मपरिणामयोग्यं विभुत्वादाकाशवदिति। नच तस्यापि सावयवत्वं जन्यत्वादिनावगम्यते इति वाच्यं, अपश्चीकृतस्यात्र विवक्षितत्वात्। "आकाशवत्सर्वगतश्च नित्यः" इति श्रुतेः। ननु स्यादेतन्निरवयवस्यापि विभोस्तादृशशक्तियोगादेव परिणामस्तथापि तत्र कृत्स्नस्य ब्रह्मणः परिणामोऽभिप्रेतः? तदेकदेशस्य वा? आद्ये, सर्वस्यापि परिणतत्वान्मुक्तोपसृप्यब्रह्माभावप्रसङ्गः विकारित्वानित्यत्वप्रसक्तिश्च, तथात्वे "नित्यं विभुं सर्वगतमि"त्यादिश्रुतिव्याकोपश्च। किञ्च विकारापन्नस्य कृत्स्नस्य ब्रह्मणो जगदाकारतया प्रत्यक्षगोचरत्वेन सर्वेषामपि प्राप्तत्वात् सर्वमोक्षप्रसङ्गः, साधनतत्प्रतिपादकशास्त्रतदुपदेष्टृणा-

---

तथा ब्रह्मणोऽपि परिणामो न घटत इत्याशङ्कते। नन्विति। परिहरति। नेति। सर्वशक्तियोगात् ब्रह्मणस्तादृशस्वभावात् परिणामो घटत इत्याह। परिणामस्वाभाव्यादिति। सावयवस्य वस्तुन एव परिणामो ननु निरवयवस्येति शङ्कते। नन्विति। परिहरति। नेति। तदेवोपपादयति। तथाहीत्यादिना। विपक्षे बाधकतर्कमाह। अन्यथेति। यदि वस्तुगततादृशशक्त्यनङ्गीकारे। क्षीरादिपरिणामे क्षीरादिगता शक्तिराहोस्वित् क्षीरावयवगता वे ति विकल्पयति। अयंभाव इत्यादिना। द्रवद्रव्येऽवयवावयविभावो नास्ति त्वन्मत इत्याशयेनाद्यपक्षं निरस्यति। नाद्यइति। द्वितीयपक्षे विकल्पयति। द्वितीयेत्विति। क्षीरावयवाः सावयवास्तेपि सावयवा इत्येवं क्रमेणानवस्था प्रसज्येत इत्याह। आद्यइति। निरवयवत्वे च परिणामो न घटते तथाच निरवयवत्वहेतोर्विरुद्धत्वमापद्यत इत्याह। एवमिति। ब्रह्म परिणामानर्हं विभुपरिमाणत्वादिति वाद्यनुमाने सत्प्रतिपक्षं दृष्टान्तासिद्धिञ्च दर्शयति। नापीत्यादिना। उक्तार्थे श्रुतिं प्रमाणयति। आकाशाद्वायुरिति। फलितार्थमाह। एतेनेति। आकाशस्य जन्यत्वेन सावयवत्वात्तत्परिणामोऽस्तु न तु निरवयवस्य ब्रह्मण इत्याशङ्क्य परिहरति। नचेति। तस्य=आकाशस्य। उक्तार्थं श्रुतिमुखेन द्रढयति। आकाशवदिति। भवतु तावन्निरवयवस्य ब्रह्मणो विचित्रशक्तियोगात्परिणामस्तत्पक्षे विकल्पयन्नाशङ्कते। नन्विति। कृत्स्नपरिणामपक्षमपाकरोति। आद्यइति। तथात्वे=विकारित्वानित्यत्वे। कृत्स्नपरिणामपक्षे दोषान्तरमाह। किञ्चेति। तदेकदेशपरिणामात्मकद्वितीयपक्षं निरस्यति। न द्वितीय इति। परिहरति। नेति। तत्रहेतुमाह। उदाहृतेष्वपीति। षष्ठे=छान्दोग्ये षष्ठे प्रपाठके। 'न्यग्रोधफल-

मानर्थक्यं च, न द्वितीयः, सदेशत्वापत्त्या सावयवत्वयोगेन "निष्कलं निष्क्रियं शान्तमि" त्यादिनिरवयवत्वप्रतिपादकशास्त्रव्याकोपाच्चायोग्य एव परिणामपक्ष इति चेन्न। उदाहृतेष्वाकाशादिषु निरवयवत्वविभुत्वसाम्येऽपि निर्विकारित्वदर्शनेन निर्दोषत्वात्। तस्मान्निरवयवस्यापि विभोर्ब्रह्मणः परिणामेऽपि तादृशशक्तियोगादेवाविकारित्वमपीति ध्येयम्, सोऽयं परिणामो न्यग्रोधधानादृष्टान्तेन षष्ठे श्रुत्या वर्णितः। वस्तुतस्तु शक्तिविक्षेपस्यैव परिणामशब्दवाच्यत्वाद्ब्रह्मस्वरूपपरिणामानभ्युपगम एवेति पूर्वमेवोक्तम् ॥ १७ ॥

एवञ्च न कश्चन दोष इत्यादि तात्पर्यं बुद्धौ कृत्वा सूत्रयति भगवान् बादरायणः—

## पटवच्च । २ । १ । १८ ॥

यथा सङ्कुचितः पटः पटत्वेनागृह्यमाणोऽपि पटएव, प्रसारणे तु स्पष्टं प्रत्यक्षतया गृह्यते; तथा तिरोभावसमयेऽनभिव्यक्तं विश्वं नामरूपाभ्यामगृह्यमाणमपि सदेवाविर्भावसमये तु प्रत्यक्षागमादिना स्पष्टं नामरूपाभ्यां गृह्यते इति सूत्रार्थः। तथोक्तं वैष्णवे श्रीध्रुवेण "न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः। संयमे विश्वमखिलं बीजभूते तथा त्वयि ॥ बीजादङ्कुरसम्भूतो न्यग्रोधः स समुत्थितः। विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगदि" त्यादिना ॥ १८ ॥

उक्तसिद्धान्तसिद्धये तदुपोद्बलनरूपं दृष्टान्तरमाह भगवान् सूत्रकारः—

## यथाच प्राणादिः । २ । १ । १९ ॥

यथा प्राणायामसङ्कुचितशक्तिः प्राणः प्राणापानादिना विशेषरूपेणागृह्यमाणोऽपि सूक्ष्मसद्रूपप्राणापानादिविशेषवानेव। मुक्तायामस्तु तत्तद्विशेषरूपेणाकुञ्चनप्रसारणादिकार्यान्यथानुपपत्त्या स्पष्टं गृह्यते, तद्वत्सृष्टेः प्राक् अनभिव्यक्तनामरूपकं कार्यं तत्तन्नामरूपाभ्यामगृह्यमाणमपि स्वोपादेन सदेव, सृष्टिसमये तु व्याकृतनामरूपत्वात् स्पष्टं गृह्यत इत्यक्षरार्थः।

---

मतआहरेतदं भगव इति भिन्धी"त्यारभ्य 'श्रद्धत्स्व सोम्येति स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्यन्तेन ग्रन्थेन सोऽयं परिणामः प्रतिपादितः। एष महान्यग्रोधः एतस्यैव किलाणिम्नः कार्यतया तिष्ठति। अतोऽणोरपि सच्छब्दितात् परिदृश्यमानस्य स्थूलस्य प्रपञ्चस्योत्पत्तिः सा च परिणामरूपब्रह्मणोऽचिन्त्यशक्तियोगादेव परिणामिःस्वलक्षणमुपादानत्वं निरुक्तदृष्टान्तेनोपपद्यत इत्यर्थः। शक्तिविक्षेप एव परिणामशब्दार्थ इत्याह। वस्तुतस्त्विति ॥ १७ ॥

सूत्रवतारयितुमाह। एवञ्चेति। दृष्टान्तेनापि कार्यस्य सत्वं व्युत्पादयति। यथेति। संवेष्टनसमये किमयं पटो वस्त्वन्तरम्वेति ग्रहीतुं न शक्यते तस्य प्रसारणवेलायां पटत्वेन रूपेण गृह्यत इत्यर्थः। दार्ष्टान्ते योजयति। तथेति। उक्तार्थं पुराणवचसा दृष्टान्तेन परबुद्धावारूढं करोति। तथोक्तमित्यादिना।

सत्कार्यवादं दृष्टान्तान्तरेण साधयन्नग्रिमसूत्रमवतारयति। उक्तसिद्धान्तसिद्धय इति। यथा वायुरेक एव प्राणायामेन निरुद्धवृत्तिर्विशेषरूपेण ग्रहीतुं न शक्यते यदा मुक्तप्राणायामस्तदा विशेषरूपेण गृह्यत इत्याह। यथेति। दार्ष्टान्ते योजयति। तद्वत्सृष्टेरिति। नोपपद्यते कार्यस्य सत्वमित्याशङ्कते। नन्विति। तदेवोपपादयति। तथाहीत्यादिना। नानात्वनिन्दयाप्येकमेकत्वमेव सत्यमित्याह। मृत्योः स मृत्युमिति। परकारणस्यैवैकस्य

ननु कार्यस्य सत्त्वमनुपपन्नं, तथाहि—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यती"त्यादिश्रुतिभिः सावधारणाभिरन्वयव्यतिरेकेण कारणैकत्वनिश्चायिकाभिः कारणेतरवस्तुमात्रस्य निषिध्यमानत्वान्मृषात्वमेव, तस्माद्रज्जुज्ञानेन सर्पादिबाधवत् ब्रह्मात्मत्वज्ञानेन शारीरत्वस्य बाधे तत्कृतसर्वव्यवहारस्यापि बाधः स्यादिति. "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये"दिति श्रुतेः। तथैवाह च भगवान्भाष्यकारः, "मृत्तिकेत्येव सत्यमि"ति। प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात् वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्। दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिदं सर्वं तत्सत्यमि"ति च परमकारणस्यैकस्य सत्यत्वावधारणात्। 'स आत्मा तत्त्वमसि श्वेतकेतो!' इति च शारीरस्य ब्रह्मभावोपदेशात् स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरसाध्यमतश्चैवं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरत्वस्य बाधकं सम्पद्यते रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनां, बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवतीत्यादिनेति चेन्न, एकत्वावधारणश्रुतीनां जगत्कारणसार्वज्ञादिमत्परब्रह्मैकत्वपरत्वेन "नेह नाने" त्यादिश्रुतीनां च कारणगतस्वतन्त्रसत्तावच्छिन्नवस्तुमात्रनिषेधपरत्वेन चास्मत्पक्षे स्वार्थे एव प्रामाण्यात्, न तावत्कारणैकत्वावधारणं निषेधश्चेतरस्य वस्तुजातस्यानृतत्वे नियामकम्। अपि तु स्वविषयसमसत्ताकत्वनिषेधमात्र एव। यथा चोलराज एकोऽद्वितीयोऽभूदिति वाक्यं न तद्राजान्तरमात्रस्य तत्सेनादीनां वा निषेधपरं, किन्तु तत्तुल्यनृपान्तरस्य निषेधमात्रपरमेव। एवं प्रकृतेऽपि समञ्जसम्। किञ्च कार्यजातस्यानृतत्वेऽसत्कार्य-

---

सत्यत्वावधारणात्तदितरस्य मिथ्यात्वमित्याह। कारणैकत्वनिश्चायिकाभिरिति। प्रमातृत्वादिबाधात्तदाश्रयव्यवहारो नास्तीति व्यवहाराभावेऽर्थापत्तिमुक्त्वा श्रुतिवाक्यमुपन्यस्यति। यत्रत्वस्येति। यदुक्तमेकत्वं नानात्वञ्चोभयं सत्यमित्यत्राह। मृत्तिकेति। न केवलमेवकारसामर्थ्याद्विकारानृतत्वं किन्तु वाचारम्भणश्रुतेश्चेत्याह। वाचारम्भणेति। तथापि कथमाकाशादिविकारवैयर्थ्यं दार्ष्टान्तिके पूर्वोक्तावधारणादेरभावादित्याशङ्क्य तत्रापि दृष्टान्तनिविष्टार्थानुशक्तेरेवमित्याह। दार्ष्टान्तिकेऽपीति। किञ्च कार्यप्रपञ्चस्य ब्रह्मवत्सत्यत्वे तद्विशिष्टजीवस्य तद्भावोपदेशासिद्धिरित्याह। स आत्मेति। जीवस्य ब्रह्मैक्यं ध्यानादिसाध्यमभिसन्धायोपदेशो भविष्यतीत्याशङ्क्याह। स्वयमिति। जीवब्रह्मणोः संसारित्वासंसारित्वेन विरुद्धत्वादैक्यायोगात् तत्त्वं भविष्यतीति वाक्यविपरिणामः स्यादित्याशङ्क्याह। अतश्चेति। स्वभावोऽत्राविद्या तया कृतः स्वाभाविकः समाधानम्।

इतिपूर्वपक्षविवरणम्

(समाधानम्) परिहरति। नेति। एकत्वावधारणश्रुतीनामिति। 'एकमेवाद्वितीयमित्यादि' श्रुतीनाम् सार्वज्ञादिसम्पन्नं ब्रह्म एकमेव जगत्कारणमिति कारणस्यैकत्वनिश्चायकत्वेनोक्तश्रुतीनां स्वार्थे प्रामाण्यमित्यर्थः। स्वतन्त्रेति। स्वतन्त्रसत्त्वाश्रयजगत्कारणस्य परब्रह्मण इतरवस्तुनः स्वतन्त्रसत्त्वं निषिध्यत इतिबोधयन्तीनां 'नेह नानास्ति किञ्चने' तिश्रुतीनां स्वार्थे प्रामाण्यमित्यर्थः। नतावदिति। कारणस्य ब्रह्मण एकत्वनिश्चयः 'एकमेवाद्वितीयमि'तिश्रुतिप्रतिपाद्यः 'नेहनाने'तिश्रुतिबोध्यनिषेधश्च ब्रह्मेतरवस्तुनः मृषात्वे न हेतुः किन्तु ब्रह्मतुल्यसत्ताकत्वनिषेधमात्र एवेत्यर्थः। उक्तार्थं दृष्टान्तेन द्रढयति। यथाचोलराजेति। एकस्यैव वस्तुनः सत्यत्वे तदितरस्य सर्वस्यापि मिथ्यात्वेन नानात्वाभावाद्वैदिकः कर्मकाण्डः लौकिकश्च व्यवहारः समस्त एवोच्छिद्येत ब्रह्मगोचराश्च श्रवणमन-

वादापत्त्या वैदिकत्वं दत्ततिलाञ्जलिः स्यात् "असत्यमप्रतिष्ठं च जगदाहुरनीश्वरमि"ति आसुरपक्षाभ्युपगमश्च, "सदेव सोम्येदमग्र आसीत्, सत्त्वाच्चावरस्ये"त्यादिशास्त्रव्याकोपश्च। नापि "यत्र त्वस्ये"तिश्रुतिः प्रपञ्चबाधपरा, किन्तु कारकजातस्य स्वतन्त्रसत्तानिषेधेन तस्य ब्रह्मात्मकत्वविधानपरेति सर्वं समञ्जसम्। अन्यथा "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इत्यादिश्रुतिविरोधात्। श्रुत्यर्थस्तु सदेवेत्यत्र स्वतन्त्रसत्ताश्रयः सत्पदार्थः। "आत्मा हि परमः स्वतन्त्रोऽधिगुणः" इति श्रुतेः। एकपदं ब्रह्मणः चराचराभ्यामुत्कर्षरूपप्राधान्यं विधत्ते 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेः। 'एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानवाची'ति "एकोगोत्रे" इति सूत्रे कैयटोक्तेश्च। सहायान्तरशून्यत्वोत्कर्षपरो वा "ष्णान्ताः षडि"ति सूत्रे एकशब्दोऽयं बह्वर्थः। अस्ति सङ्ख्यार्थेऽस्त्यसहायवाची, "अस्त्यन्यार्थ" इति महाभाष्यकारोक्तेश्च। तथा च चराचराभ्यामुत्कृष्टमन्यसहायहीनमेकसङ्ख्याकमेकपदार्थः। "प्रधानक्षेत्रज्ञपतिः. अक्षरात्परतः परः" इत्यादिश्रुतेः। यस्मात्क्षरमतीतोऽहं, मत्तः परतरं नान्यदि"ति श्रीमुखोक्तेश्च, अयोगव्यवच्छेदार्थः प्रथम एव शब्दः, तदधिकोत्कृष्टव्यवच्छेदपरो द्वितीयः, स्वातिशयवस्तुशून्यइत्यर्थः। अद्वितीयशब्दश्च समाननिषेधपरः। "न तत्समश्चाभ्यधिकश्चे"ति श्रुतेः। "नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इति स्मृतेश्च। यद्वा एकशब्दः सङ्ख्यापरः, एवाद्वितीयशब्दयोश्चेतनाचेतननिषेधपरत्वम्, उभयोरपि ब्रह्मसमस्वतन्त्रसत्ताकत्वाभावात्। किञ्च स्वगतानन्तासंख्येयज्ञानादिकल्याणधर्माणामपि स्वरूपेतरस्वतन्त्रसत्ताभावेन तद्गतस्वतन्त्रसत्तानिषेधोऽप्यविरुद्धः। "तदासीत्तदधीनमासीदि"ति श्रुतेः। तथाच चेतनाचेतनानां स्वगतधर्माणां च तदात्मकत्वाद्विशेषेण तदपृथक्सिद्धत्वात् "एत-

---

नादयश्च सर्वे दत्ताञ्जलयः प्रसज्येरन्नित्याह। किञ्चेति। प्रपञ्चस्यासत्यत्वेऽसुरपक्षाभ्युपगमः सदेव सोम्येदित्यादिश्रुतीनां, सत्त्वाच्चावरस्येतिसूत्राणां बाधश्च प्रसज्येत इत्याह। असत्यमित्यादिना। 'यत्रत्वस्ये'तिश्रुतेर्व्यवस्थां दर्शयन् तस्याः प्रपञ्चनिषेधपरत्वं परिहरति। नापीति। बाधकतर्कमाह। अन्यथेति उक्तार्थानङ्गीकारे। सत्पदार्थस्योक्तार्थत्वे श्रुतिं प्रमाणयति। आत्माहीति। तत्र स्वतन्त्रपदाभिधानादितिभावः। श्रुतिस्थमेकपदं व्याचष्टे। एकपदमिति। एकेमुख्यान्यकेवलेति। उक्तार्थं कैयटोक्त्यापि द्रढयति। एकशब्दोऽयमिति। एकशब्दस्य प्रकारान्तरेणार्थमाह। सहायान्तरेति। तत्रापि मानमुपन्यस्यति। ष्णान्तापडिति। यत् फलितं तदाह। तथाचेति। चराचराभ्यामुत्कृष्टार्थांशे श्रुतिं प्रमाणयति। प्रधानक्षेत्रज्ञ इति। प्रधानस्य प्रकृतेः क्षेत्रज्ञस्य जीवस्यपतिः नियन्तेत्यर्थः। सदेवेत्यत्रैवकारार्थमाह। अयोगेति। एकमेवेति घटक एवकारार्थमाह। अयोगेति। एक एवेति घटक एवकारार्थं विवृणोति। तदधिकेति। अद्वितीयशब्दार्थमाह। अद्वितीयशब्दश्चेति। उक्तार्थं श्रुतिमुखेन प्रमाणयति। नतत्समइति। एकशब्दस्य सङ्ख्यार्थकत्वं स्वीकृत्य व्याचष्टे। यद्वेति। एवाद्वितीयपदयोरर्थमाह। एवाद्वितीयशब्दयोरिति। उभयोरिति। चेतनाचेतनयोरित्यर्थः। ब्रह्मवृत्त्यनन्तानां गुणात्मकधर्माणां स्वरूपापेक्षया स्वतन्त्रसत्वं नास्तीत्याह स्वगतानामिति। तत्रप्रमाणमाह। यदासीदिति। फलितार्थमाह। तथाचेति। उक्तार्थं श्रुतिस्मृतिभ्यां प्रमाणयति। ऐतदात्म्यमिति। अस्यार्थं विवृणोति। एषएवेति। अस्य वाक्यस्येति = एकमेवाद्वितीयमितिवाक्यस्येत्यर्थः। सजातीयादिभेदमुदाहरति। तत्र चेतन इति। तत्र = तेषु। तद्विषयस्य = भेदविषयस्य। परिहरति। नेति। तदेवोपपादयति। तथाहीत्यादिना। स्वोक्तव्याघातात् = श्रुत्युक्तद्वितीयमात्राभावस्य कालत्रयेऽस्ति चेत् तदा ब्रह्मेतरस्मिन् तत्र त्रैकालिकनिषेधप्रतियोगित्वस्यासत्वात् स्वोक्तेः व्याघातात्

दात्म्यमिदं सर्वमि" त्यग्रिमवाक्यात् "वासुदेवात्मकान्याहुरि" तिस्मृतेश्च। एष एव स्वतन्त्रसत्ताश्रयः सत्पदार्थः आत्मा यस्य स तदात्मा तस्य भावस्तत्त्वमिति श्रुत्यर्थः। सदात्मकमिति यावत्। नन्वस्य वाक्यस्य सजातीयादिभेदशून्यपरत्वमेव, तत्रचेतनवृत्तिभेदः सजातीयभेदः जडभेदो विजातीयभेदः, धर्मभेदः स्वगतभेदस्तथा च त्रिविधभेदस्य श्रुत्यैव निषिद्धत्वेन तद्विषयस्य कथं पारमार्थिकत्वमिति चेन्न, स्वप्राङ्गणेऽश्वधावनमात्रत्वात् तथाहि—अद्वितीयपदेनैव द्वितीयपदार्थमात्रस्य निषेधसिद्धौ पदान्तरवैयर्थ्यात्, ब्रह्मेतरस्य त्रैकालिकनिषेधप्रतियोगित्वं वदन्तोऽत्र प्रष्टव्याः, श्रुत्याभिहितद्वितीयमात्राभावः कालत्रयेऽस्ति ? न वा ? नाद्यः स्वोक्तव्याघातात्। अन्त्ये, द्वितीयस्य सत्त्वापत्तेः। नच नाभावो द्वितीयोऽद्वैतविरोधीति वाच्यम्, अभावत्वाधेयत्वाधारत्वादिभावैरविनाभूतेनातिशयोऽप्यद्वैतभङ्गात्, अभावत्वरूपप्रवृत्तिनिमित्तसम्भवेन वेदान्तानां सखण्डार्थत्वापत्तेश्च। किञ्च कोवा सत्पदार्थः ? शुद्धोवोपहितोऽव्याकृतोवा ? नाद्यः, "तदैक्षत बहु स्यामि" ति श्रुत्येक्षणबहुभवनसंकल्पयोगश्रवणादन्यथा शुद्धत्वभङ्गात्। त्वया शुद्धस्य पदार्थत्वानङ्गीकाराच्च। अन्यथा मिथ्यात्वप्रसङ्गात्। शुद्धं ब्रह्म मिथ्या पदार्थत्वात्त्व मते घटादिवदित्यनुमानात्। द्वितीये, ततोमायाभूतोपाधिर्भिन्नोऽभिन्नोवा ? नाद्यः, द्वैतापत्तेः। नान्त्यः, उपाधिर्ब्रह्मेति सिद्धान्तापत्तेः, उपहितस्य पारमार्थिकसत्ताऽसम्भवाच्च। अन्यथा तस्यैव मुक्तगम्यत्वेन शुद्धस्याप्रयोजकत्वापत्तेश्च। नाप्यव्याकृतः, सिद्धान्तभङ्गादस्मदिष्टत्वाच्च। अव्याकृतस्य जीवादिभेदेऽपि नास्माकं हानिः, जीवादीनां तादात्म्यसम्बन्धाभ्युपगमात्, ब्रह्मणः सविशेषत्वाङ्गीकाराच्च। अव्याकृतं नाम भूतसूक्ष्माणि कर्मसंस्कारसहिताश्च जीवास्तदन्तर्यामी परमेश्वरश्चाधिष्ठाता एतेषां समुदायस्तस्य चानेकविशेषत्वात्सुतरां तव सिद्धान्तभङ्गः, उक्तव्याख्याविरोधश्च।

---

कालत्रये द्वितीयमात्राभावो नास्तिचेत् अभावाभावस्य प्रतियोगिस्वरूपतया द्वितीयाभावाभावस्य द्वितीयस्य सत्यत्वापत्तेरित्याशयेन द्वितीयकल्पमपि परिहरति। अन्त्यइति। अभावद्वितीयोऽस्माकमिष्ट एवेत्याशङ्क्य निरस्यति। नचेति। द्वितीयाभावस्यातिरिक्तत्वपक्षे तत्राभावत्वसत्त्वेऽद्वैतभङ्गः। द्वितीयाभावस्याधिकरणस्वरूपत्वपक्षेऽपि द्वितीयाभावनिष्ठाधेयतानिरूपिताधिकरणत्वस्यावश्यकत्वादद्वैतव्याघात इत्याह। अभावत्वाधेयत्वेति। अभावत्वरूपप्रवृत्तिनिमित्तसम्भवेनेति। प्रवृत्तिनिमित्तत्वं नाम वाच्यत्वेसतिवाच्यवृत्तित्वेसतिवाच्योपस्थितिप्रकारत्वम् तद्घटकविशेषणानां प्रयोजनमन्यत्रदिशावसेयम्। सत्पदार्थं त्रिधा विकल्पयति। किञ्चेत्यादिना। शुद्धे ब्रह्मणि सङ्कल्पयोगे तु शुद्धत्वमेव व्याहन्येत इतिशुद्धो न सत्पदार्थ इत्याह। नाद्य इति। अन्यथेति = निरुक्तसङ्कल्पयोगे। अन्यथा = पदार्थत्वाङ्गीकारे। द्वितीयकल्पमपि निरस्यति। द्वितीयइति। ततः = उपहितात् ब्रह्मणः। उपाधिब्रह्मेति। उपाधिब्रह्मणोरभेदात् तदापत्तिरित्यर्थः। अन्यथा = पारमार्थिकसत्ताश्रये। तस्य = उपहितस्य। तृतीयकल्पमपि निरस्यति। नाप्यव्याकृत इति। इष्टापत्तिं विवृणोति। अव्याकृतस्येति। अव्याकृतशब्दं व्याचष्टे अव्याकृतत्वं नामेति। तस्येति अव्याकृतस्येत्यर्थः। उक्तव्याख्याविरोधश्चेति। नह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः। किन्तर्हि व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरं तेन धर्मान्तरेणासद्व्यपदेश इत्यारभ्यान्ते च तस्माद्धर्मान्तरेणैवासद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धमिति भगवत्पादानां श्रीशङ्कराचार्याणाम् 'असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषादि'ति-

अन्यथा भूतसूक्ष्माभावेऽसत्कार्यवादापत्तिः, जीवानङ्गीकारे कृतनाशादिप्रसंगः, सृष्टिवैचित्र्य हेतभूतकर्माभावे सृष्ट्यभावप्रसंगः, तस्याः साम्यप्रसंगश्च, ब्रह्मणि वैषम्यनैर्घृण्यप्रसक्तिश्च। परमेश्वरानंगीकारे स्रष्ट्रभावेन सृष्ट्यसम्भवः, वाद्यसत्त्वांगीकारप्रसंगाच्च। किञ्च द्वितीय-मात्रनिषेधे श्रुतावग्रपदवैयर्थ्यम्। किञ्च कोवाऽद्वितीयपदार्थः, न द्वितीयोऽद्वितीयइति नञ्समासे नञर्थस्तु षड्विधः। तत्र न तावत्सादृश्यं द्वितीयसदृशमिति पदार्थापत्तेः, निर्विशेषे सादृश्यधर्मासम्भवाच्च। नाप्यभावः, असदेव सभवति, असद्ब्रह्मेति वेद चेदि"ति निन्दा श्रवणात्। नापि तदन्यत्वं, द्वैतापत्तिप्रसंगात्। नापि तदल्पता, ईषद्द्वितीयइति पदार्थः स्यात्। नाप्यप्राशस्त्यं अप्रशस्तद्वितीयइत्यर्थः स्यात्। नापि विरोधोऽनंगीकारात्। किञ्चा द्वितीयपदस्य द्वितीयाभावमात्रसङ्कोचापेक्षया सकलकल्पनाऽविरोधाय स्वतन्त्रसत्तावच्छिन्न-द्वितीयनिषेधपरत्वस्यैवौचित्यात्। नचावान्तरतात्पर्येण द्वितीयाभावसिद्धिर्महातात्पर्येण चाख-ण्डार्थसिद्धिरिति वाच्यं, द्वितीयाभावस्य सत्त्वेऽद्वैतहानिः मृषात्वेद्वैतस्य सत्यत्वापत्तिः। द्वितीयाभावविशिष्टतया ज्ञाते ब्रह्मणि विशेष्यमात्रे सन्देहाद्यभावेन तत्र तात्पर्यकल्पनस्या-प्रमाणिकत्वात्। अन्यथा शब्दमात्रस्य तात्पर्यद्वयं स्वीकृत्याखण्डार्थकत्वापत्तिरिति संक्षेपः। एतेन "आत्मा वा इदमग्र आसीन्नान्यत्किञ्चनमिषत्.एकोह वै नारायणआसीदि" त्यादिश्रुतयोपि व्याख्याताः,तुल्यार्थत्वात्। अथ "नेह नाने"ति, इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति, तस्य सर्वास्वप्युपनिषत्स्वेकत्वावधारणात्। कारणनानात्वदर्शनस्य फलमाह। "मृत्योः समृत्युमाप्नो तीति नित्यसंसारी भवति परमेश्वरे नानात्वदर्शित्वात्" इव शब्दोऽल्पार्थः "इवोपमायामल्पे च" ति कोशात्। स च कैमुत्यन्यायपरः, कारणे ब्रह्मणि यदल्पनानात्वदर्शनस्यैवेदृक्फलं किं पुनर्बहुत्वेनेत्यर्थः। एतेन "द्वितीयाद्वै भयं भवती"त्यपि श्रुतिर्व्याख्याता तुल्यार्थत्वात्। ननु कारणे ब्रह्मणि भेदाप्रसक्तिरप्रसक्तस्य च निषेधायोगादिति चेन्न, जगत्कारणेनऽनेक-त्वप्राप्तेः, शास्त्रसिद्धत्वात् "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः। जीवे प्रलय-मृच्छन्ति न जीवात्कारणं परमि"ति "ब्रह्मा देवानां प्रथमः सम्बभूव, विश्वस्य कर्ता भुव-

---

सूत्रस्थं भाष्यम्, अव्याकृतसत्पदार्थत्वे तद्विरोधः स्पष्ट एवेत्यर्थः। अन्यथा = अव्याकृतस्योक्तार्थानङ्गीकारे। तस्याः सृष्टेः। सृष्टिहेतुभूतकर्मणामसत्त्वात्सृष्टेर्वैलक्षण्यं न स्यादित्यर्थः। अन्यथेति। सृष्टेः साम्यस्वीकारे। अन्यथा = स्रष्ट्रनङ्गीकारे। नञर्थस्तु षड्विध इति "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इतिप्राचीनानामुक्तेः। तत्र = तेषु नञर्थेषु। सादृश्यपक्षमपाकरोति। नतावत्सादृश्यमिति। अभावपक्षं निरस्यति। नाप्यभाव इति। विरोधपक्षं परिहरति। नापि विरोध इति। तात्पर्यद्वयकल्पनेनोक्तार्थद्वयसिद्धि-माशङ्क्य परिहरति। नचेति। द्वितीयाभावस्य सत्यत्वं वा मिथ्यात्वं वेति विकल्प्याद्यपक्षे दोषमाह। द्वितीया-भावस्येति। द्वितीयविकल्पमभिप्रेत्याह। मृषात्व इति। तात्पर्यकल्पनस्येति। महातात्पर्यकल्पनस्याप्रमा-णिकत्वादित्यर्थः। अन्यथेति। तात्पर्यान्तरकल्पने। श्रुत्यर्थं व्याचष्टे। अथनेहनानेति। तस्य = ब्रह्मणः। प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति तर्केण ब्रह्मणि नानात्वप्रसक्त्यावेव तन्निषेधः कर्तुं शक्यते नत्वप्रसक्त-स्येत्याशङ्कते। नन्वित्यादिना। परिहरति। नेति। उक्तार्थं प्रमाणेन द्रढयति। जीवेत्यादिना। प्रकारान्तरेण

नस्य गोप्ता, न सन्नचासच्छिव एव केवलः स्वभावमेके कवयो वदन्ति, कालं तथाऽन्ये" इत्यादिश्रुतिभिः कारणनानात्वस्य सुप्रसक्तत्वात्। इहेति। विशेषणान्नानात्वमात्रनिषेधसम्भवः निषेधतदाधारब्रह्मणोर्निषेधनिषेध्ययोर्नानात्वतदभावयोश्च भेदावश्यकत्वादिति संक्षेपः। अथ नानाशब्दोऽत्र विनार्थकः "विनञ्भ्यां नानाञौ न सहे"ति सूत्रे महाभाष्यकारैर्नानाविनाशब्दयोरेकार्थत्वोक्तेः। तथा चैवं योजना, इह जगति नाना स्वोपादानं परमेश्वरं विना किञ्चनापि वस्तुजातं नास्ति, सर्वकार्यत्वावच्छिन्नस्य स्वोपादानाविनाभूतत्वात्। "यच्चापि सर्वभूतानां बीजं तदहमर्जुन। न तदस्ति विना यत्स्यान्मया भूतं चराचरमि"ति श्रीमुखोक्तेः। अन्यत्स्पष्टं, "सर्वं तं परादाद्य आत्मनोऽन्यत्सर्वं वेदे"तिश्रुत्यन्तराच्च। एतेनैव "नाना विष्णुं मोक्षदो नान्यदेवः"इत्यपि श्रुतिर्व्याख्याता, विष्णुं विनाऽन्यदेवो ब्रह्मादिर्मोक्षदो नास्तीत्यर्थः। 'बन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः' इति स्मृतेः। "संसारबन्धस्थितिमोक्षहेतुरि"ति श्रुत्यन्तराच्चेति। अथ "यत्र त्वस्ये"ति यत्र यस्यां ध्रुवास्मृत्याख्यावस्थायामस्य विदुषः सर्वं कर्तृकरणकर्मादिकारकजातमात्मैवाभूदिति आत्मशब्दोऽत्र विश्वात्मभूतपरब्रह्मपरः ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात्तत्ताविधानमविरुद्धं ब्रह्मैव ब्रह्मापृथक्सिद्धमेवाभूत् तर्हि केन स्वतन्त्रसत्तावच्छिन्नकरणेन कं वा स्वतन्त्रत्वेन पृथक्वस्तुजातं कर्मकारकरूपं को वा स्वतन्त्रभूतो द्रष्टा कर्तृकारकरूपः पश्येदिति योजना, सर्वकारकजातस्य तत्प्रयोज्यतया केषुचिदपि कर्त्रादिषु स्वातन्त्र्याभावेन "स्वतन्त्रः कर्त्ते"ति सूत्रोक्तकर्त्रादिकारकलक्षणासमन्वये तत्ताभावात् तदात्मकतत्प्रयोज्यतदाध्येयतद्व्याप्यत्वाद्यवच्छिन्नैस्तत्तत्कारकैस्तत्तत्कर्मकारयिता श्रीपुरुषोत्तम एव "एष एव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषते, स कारयेत्पुण्यमथापि पापमि" त्यादिश्रुतेः तस्मात्तदात्मकेन करणेन तदात्मकं वस्तुजातं तदात्मको द्रष्टेत्यर्थः। ऐतदात्म्यमिदं सर्वमि"ति श्रुतेरिति संक्षेपार्थः। तस्मात्कार्यं सदेव, कारणादनन्यं चेति सिद्धम्॥ १९॥ इत्यारम्भणाधिकरणम्॥

### इतरव्यपदेशाधिकरणम्

अथाक्षिप्यते

## इतरतव्यपदेशाद्धितायरणादिदोषप्रसक्तिः। २। १। २०॥

---

नानाशब्दार्थं व्याचष्टे। अथवेति। श्रुत्यर्थं विवृणोति। इह जगतीति। उक्तार्थं श्रीमुखवाक्येन द्रढयति। यच्चापीति। यत्र त्वस्य सर्वमात्मैवाभूदिति श्रुत्यर्थं व्याचष्टे। अथ यत्रत्वस्येति। तत्प्रयोज्यतया = ईश्वरप्रयोज्यतया। उक्तार्थं भगवत्पाणिनीयसूत्रेण द्रढयति। स्वतन्त्र इति। तत्ताभावात् = जीवस्य स्वतन्त्रकर्तृत्वाभावात्। तदात्मकेति। भगवदात्मक इत्यर्थः। तत्प्रयोज्य इति ईश्वरप्रयोज्येत्यर्थः। एवमग्रेपि। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। एषएवेति। निगमयति। तस्मादिति। ऐतदात्म्यमिति श्रुत्यर्थस्तु प्रागुपदर्शितदिशावसेयः। अधिकरणार्थं निगमयति। तस्मादिति॥ १९॥ इत्यारम्भणाधिकरणम।

इतरव्यपदेशाधिकरणम्।

पूर्वपक्षसूत्रमित्याह। अथेति। सूत्रं व्याचष्टे। नन्वित्यादिना। स्वतन्त्रस्याप्यज्ञस्य स्वानर्थकारित्वं

ननु ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने इतरस्य जीवस्य "तत्त्वमस्ययमात्मा ब्रह्मे" त्यादिवाक्यैर्ब्रह्मत्वोपदेशात्, इतरस्य ब्रह्मणो वा "अनेन जीवेनात्मनाऽनुप्रविश्ये" त्यादिना शारीरत्वव्यपदेशात्। तथा च ब्रह्मणः सार्वज्ञ्यसर्वशक्त्याद्याश्रयस्यात्मनोहितरूपजगदकरण-मिहितरूपजगत्करणमित्यादिदोषप्रसक्तिः स्यात् ॥ २० ॥

नह्याध्यात्मकादित्रिविधदुःखहेतुरूपे कार्ये स्वाधीनोबुद्धिमान्प्रवर्त्तते, जीवब्रह्मणोर्भेदवा-दिन्यः श्रुतयोजगतोब्रह्मणोऽनन्यत्वं वदद्भिर्भवद्भिरेवपरित्यक्ताः भेदे सत्यनन्यत्वासिद्धेः, तस्माद्ब्रह्मणोजगत्कारणत्वमनुपपन्नमिति प्राप्ते समाधत्ते—

## अधिकं तु भेदनिर्देशात् । २ । १ । २१ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः। यत्सार्वज्ञ्याद्यनन्ताचिन्त्यासङ्ख्येयकल्याणधर्माश्रयं जग-दभिन्ननिमित्तोपादानकारणं तत्तस्माच्छारीरादधिकमुत्कृष्टं तदत्यन्तविलक्षणं परं ब्रह्मेति नोक्त-दोषावकाशः। कुतः? "भेदनिर्देशात्" "आत्मा वाऽरे! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-सितव्यः" इति कर्त्तृकर्मादिभेदस्य "ब्रह्मविदाप्नोति परमि"ति प्राप्तृप्राप्तव्यभेदस्य, "यआ-त्मानमन्तरोयमयती"ति नियन्तृनियम्यभेदस्य च निर्देशात्। अयं भावः—यदि चेतनस्य शारीरस्य जगत्कारणत्वं सूत्रकृतोऽभिप्रेतं स्यात्तर्हि तस्य सार्वज्ञ्यादिसर्वशक्त्ययोगेन हिताक-रणादिदोषप्रसक्तिः स्यान्नतु तदस्ति, प्रत्युत तदत्यन्तविलक्षणस्य सर्वज्ञानशक्तिबलैश्वर्यादिक-ल्याणधर्मार्णवस्य परब्रह्मणः समस्तदोषगन्धाघ्रातमाहात्म्यस्य श्रीपुरुषोत्तमस्य स्वतन्त्रसत्ताश्रय-स्य कारणत्वनिर्देशान्नोक्तदोषयोगः। एतेन वक्ष्यमाणो भेदाभेदलक्षणसिद्धान्तोऽपि सूत्रकृता सूचितः, तादात्म्यादभेदोक्तेः ब्रह्मणः स्वरूपेण भेदनिर्देशात्। तथा च परतन्त्रसत्तावच्छिन्न-स्वरूपेण भिन्नत्वेऽपि तदात्मकत्वादिना तदपृथक्त्वाद्भिन्नाभिन्नत्वमिति भावः ॥ २१ ॥

## अश्मादिवच्च तदनुपपत्तिः । २ । १ । २२ ॥

---

सम्भवति ब्रह्मणस्तु सर्वज्ञस्य नैवमित्याह। तथाचेति। भेदप्रतिपादकश्रुतिभिर्जीवब्रह्मणो वैजात्यं प्रतिपाद्यते अतो नोक्तदोषाऽवकाश इत्याशङ्क्याह। जीवब्रह्मणोरिति। "तत्त्वमसि" अयमात्मा ब्रह्म सर्वं खल्विदं ब्रह्मेत्यादयः श्रुतयः शतशः सन्ति ताभिः श्रुतिभिर्जीवब्रह्मणोरनन्यत्वं यदि व्यपदिश्यते तदा भेदप्रतिकाः श्रुतयो बाध्येरन् तासांबाधकल्पनामन्तराजीवब्रह्मणोरनन्यत्वं न सिद्ध्यति तस्माद्ब्रह्मणो जगत्स्रष्टृत्वेहितकारणादिदोषः प्रसज्यत-इत्याशयः पूर्वपक्षमनूद्य सिद्धान्तयति। इतिप्राप्ते समाधत्त इति। सूत्राक्षराणि व्याकरोति। तुशब्द इति। जीवब्रह्मणोरत्यन्तविलक्षणत्वान्नोक्तदोषावकाशः इत्याह। यत्सार्वज्ञाद्यनन्तेति। शरीराद्वैलक्षण्यबोधनायैव सार्वज्ञ्याद्युक्तिः। भेदमेवश्रुतिमुखेन दर्शयति। आत्मावा रे द्रष्टव्य इति। पर्य्यवस्तितार्थं निरूपयति। अयंभाव इत्यादिना। न वयं स्वरूपतो जीवब्रह्मणोरैक्यं साधयामो येनोक्तदोषः प्रसज्येत किन्तुब्रह्मणः प्रत्यगात्मनां स्वरूपेण भेदः। इतरेतरात्यन्तविलक्षणत्वात् ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्वपराधेयत्वादियोगेन चाभेदः तथाचाभेदप्रतिपादकवाक्यानां भेदप्रतिपादकवाक्यानाञ्च तुल्ययोगक्षेमत्वात् प्रामाण्यं सुस्थितम्। एकतर-पक्षाङ्गीकारेतु एकतरश्रुतिवाक्यानां बाधोऽवश्यं स्वीकार्यस्तस्माद्भेदाभेदपक्ष एव साधीयानित्याह। एतनेति ॥२०-२१॥

यथा लोके पृथिवीविकाराणामश्मनां वज्रवैदूर्यपद्मरागसूर्यकान्तादीनां प्रहीणपापाणादीनां च पृथिव्यात्मकतया पृथिवीत्वाविशेषेऽपि न पृथिवीस्वरूपैक्यमुपपद्यते। आदिना लोष्टकाष्ठतृणादिपरिग्रहः। तथा जीवस्य ब्रह्मात्मकत्वादिना ब्रह्मत्वाविशेषेऽपि न स्वरूपैक्यमिति परब्रह्मैव जीवकर्मानुगुणसुखदुःखहेतुजगत्सर्गकर्तृ इति तदनुपपत्तिः परकल्पितदोषानुपपत्तिः॥ २२॥ इति इतरव्यपदेशाधिकरणम्॥

अथ उपसंहाराधिकरणम्।

## उपसंहारदर्शनान्नेति चेन्न, क्षीरवद्धि। २। १ २३॥

ननु पुनरपि ब्रह्मणो जगत्कारणत्वं न सम्भवति, कुतः? उपसंहारदर्शनादिति। बाह्यकारकोपादानमुपसंहारः। लोके हि घटपटादिकार्य्यजननशक्तियुक्ता अपि कुलालतन्तुवायादयस्तदुपकरणमृद्दण्डचक्रसूत्रतन्तुतूरीवेमाद्यनेककारकाण्युपसंहृत्यैव तत्तत्कार्य्यं कुर्वाणा दृश्यन्ते, सृष्टेः प्राक् च बाह्यसाधनसामग्री नास्ति। "सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयमि" त्यादिश्रुतेस्तत्कथमसहायं ब्रह्म जगत्सृष्टौ प्रवर्त्तेत? अतो न ब्रह्म जगत्कारणमिति चेत्, समाधत्ते, नेति। नहि कार्यजनिशक्तानां सर्वेषां बाह्यकारकोपादानसापेक्षत्वं दृश्यते, यथा हि क्षीरं दधिभावाय, नीरं हिमभावाय, स्वयमेव परिणमते तत्स्वाभाव्यात्, तथा ब्रह्मापि। नच क्षीरादावातञ्चनाद्यपेक्षत इति वाच्यं, तत्रातञ्चनस्य दधिभावानुपयोगित्वात्, किन्तु शैघ्र्याय, रसविशेषाय च तदुपयुज्यते पयसः स्वतएव परिणामशक्तिः, कुलालादीनां त्वनीश्वरत्वेन स्वतः सामर्थ्याभावादुपसंहारसापेक्षत्वं युक्तं, ब्रह्म तु सर्वज्ञं शर्वशक्ति "यः सर्वज्ञः सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते स्वभाविकी"त्यादिश्रुतेः॥ २३॥

## देवादिवदपि लोके। २। १। २४॥

अपिशब्दश्चेतनसादृश्यं सम्भावयति। यथा देवाः पितर ऋषयः स्वेस्वे लोके बाह्यसा-

---

यथा पार्थिवद्रव्याणां परस्परविजातीयानां पृथिवीत्वेन रूपेण विशेषाभावेऽपि न स्वरूपैक्यता तद्वत् जीवब्रह्मणोः ब्रह्मात्मकत्वेनाविशेषेऽपि स्वरूपैक्यं नोपपद्यते परब्रह्मण एवप्रत्यगात्मनां तत्तत्कर्मानुरूपेण फलदातृत्वादिति नोक्तदोषः पदमादधातीत्यर्थः॥ २२॥ इति इतरव्यपदेशाधिकरणम्॥

अथ उपसंहाराधिकरणम्।

लोकेऽपि यथाकुलालादयः घटोत्पादनसमाग्रीमन्तरा कार्यं जनयितुं न शक्नुवन्ति तथाऽसहायं ब्रह्म सृष्टेः प्राक् कथं जगन्निर्मातुं शक्नोति इत्याशङ्कते। नन्विति। सृष्टेः प्राक् ब्रह्मणोऽसहायत्वे श्रुतिं प्रमाणयति। "सदेव सोम्येदमिति"। एतावता सूत्रस्य पूर्वपक्षांशो व्याख्यातः परिहारभागं सूत्रस्य विवृणोति। नेतीत्यादिना। यथा क्षीरनीरादयः दधिहिमभावेन स्वयमेव परिणमन्ते तथा सर्वसर्जनशक्तिमत् ब्रह्मापि बाह्यसाधनमनपेक्ष्यैव सर्वं जनयितुं समर्थं इत्याह। नहीत्यादिना। कुलालदयस्तु बाह्यसामग्रीमन्तरा न कार्यं जनयितुं समर्थास्तेषां तादृशशक्तेरभावात् इत्याह। कुलालादीनामिति। भगवतः पुरुषोत्तमस्य सर्वज्ञत्वे सर्वशक्तिमत्वे च श्रुतिं प्रमाणयति। यः सर्वज्ञ इति॥ २३॥

वैदिकदृष्टान्तेनोक्तार्थं द्रढयति। देवादिवदिति। सूत्रं व्याचष्टे। अपिशब्द इति। देवादीनां

धनमनपेक्ष्याभिध्यानमात्रेण स्वापेक्षितानि वस्तूनि सृजन्ति, तन्तुनाभश्च स्वयमेव प्रवर्तते, बलाका च रेतःसेकमन्तरेण गर्भं धत्ते, तथाऽसौ पुरुषोत्तमः स्वसङ्कल्पमात्रेण सर्वं सृजतीति ॥ २४ ॥ इत्युपसंहाराधिकरणम् ॥

अथ कृत्स्नप्रसक्त्यधिकरणम् ।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा । २ । १ । २५ ॥

पुनरप्याक्षिपति । ननु निरवयवं सावयवं वा ब्रह्म कार्याकारेण परिणमते ? आद्ये, कृत्स्नस्य ब्रह्मणः क्षीरवत्, कार्यरूपतापत्तौ कार्यातिरिक्तं ब्रह्म न स्यात्, कार्यस्य च सर्वप्रत्यक्षत्वात्सर्वमोक्षप्रसङ्गः । द्वितीये, निरवयवत्ववाचकः शब्दः "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः"इत्यादिः कुप्येद्विरुध्येत, अतो ब्रह्मणः परिणामानुपपत्तेर्जगदुपादानत्वं न सम्भवति, किन्तु प्रधानमेवेष्टव्यमित्याक्षेपे-प्राप्ते ॥ २५ ॥

समाधत्ते

## श्रुतेस्तु शब्दमूलत्वात् । २ । १ । २६ ॥

तु शब्दः आक्षेपनिरासार्थः । ब्रह्मणो जगदुपादानत्वेऽपि न तावत्कृत्स्नप्रसक्तिः । कुतः ? श्रुतेः यथा जगदुपादानत्वं ब्रह्मणः श्रूयते, तथा कार्यवैलक्षण्येन सत्त्वं चापि श्रूयते "सोऽकामयत बहु स्यां, स्वयमात्मानमकुरुत, सच्च त्यच्चाभवदि"त्यादिना "अस्थूलमनण्वहस्वमदीर्घमि"त्यादि, "एतावानस्य महिमा ततो ज्यायांश्च पुरुष"इत्यादिना च । नापि निरवयवत्वशब्दकोपः, ऊर्णनाभेरिव शक्तिविक्षेपलक्षणपरिणामाङ्गीकारस्य पूर्वमुक्तत्वात्स्वरूपे परिणामानङ्गीकारात् ब्रह्म ह्यनन्तशक्तिभोग्यशक्तिं विक्षिप्याकाशाद्यचेतनरूपेण परिणामयते, भोक्तृशक्तिं चेतनाख्यां देवादिरूपेण विक्षिप्य, तदन्तर्यामितया तत्फलं भोजयति । उपसंहरति चेति । सूर्यो यथा स्वरश्मीन् । ननूपमानमात्रेण कथं निर्दोषत्वसिद्धिरिति चेत्तत्राह । शब्दमूलत्वादिति । उक्तवैदिकसिद्धान्तस्य शब्दमूलत्वान्निर्दोषत्वमित्यर्थः । तथा च श्रुतिः "यथोर्ण-

---

बाह्यसाधननिरपेक्षाणां यदि स्वसङ्कल्पमात्रेण स्वाभिलषितार्थजनयितृत्वं किमुत सर्वशक्तिमतो ब्रह्मणः सर्वस्रष्टृत्वमिति ॥ २४ ॥ इत्युपसंहाराधिकरणम् ।

अथ कृत्स्नप्रसक्त्यधिकरणम्

दृष्टान्तविधयोपन्यस्तस्य क्षीरनीरादेः सावयवत्वं दृष्टं तद्वद् ब्रह्मणोऽपि सावयत्वं वाच्यं तथात्वे निरवयत्वश्रुतीनां विरोधः स्यात् । निरवयवत्वे कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामः स्यात् । तथात्वे सर्वमोक्षापत्तिरित्याक्षिपतीत्याह । पुनरपीति । तदेवोपपादयति । नन्विति ॥ २५ ॥

सिद्धान्तसूत्रमुपादत्ते । श्रुतेरिति । सूत्रं व्याचष्टे । तुशब्दइति । यदुक्तं ब्रह्मणो जगदुपादानत्वे जगदाकारेण परिणामे कृत्स्नप्रसक्तिरिति तत्राह । ब्रह्मण इति । निरवयवं ब्रह्म परिणमते न कृत्स्नमिति कुतः सम्भवनेति पृच्छति । कुत इति । श्रौतेऽर्थे नासम्भवनेति परिहरति । श्रुतेरिति । श्रुतिमुदाहरति । सोऽकामयत बहु स्यामिति । यदुक्तं निरवयवत्वप्रतिपादिकानां श्रुतीनां व्याकोपस्तदपि परिहरति । नापीति । सूत्रस्या-

नाभिः सृजते गृह्णते च, यथा सतः पुरुषात्केशलोमानि, यथा पृथिव्या औषधयः सम्भवन्ति, तथाऽक्षरात्सम्भवतीह विश्वमि"ति "प्रसार्य्य च यथाऽङ्गानि कूर्मः" इति भीष्मोक्तेश्च । एवं च यद्यचेतनानामेव परस्परं परिणामवैचित्र्यं पृथिव्या औषध्यादिलक्षणः परिणामः, अन्नस्य केशनखदन्तपिशितादिलक्षणः, चेतनोर्णनाभेश्चोर्णापरिणामोऽप्रच्युतस्वरूपतयैव प्राण्यन्तरेष्वत्यन्तासंभाव्यमानो दृश्यते, किमुत चेतनस्य सर्वज्ञस्य सर्वाचिन्त्यशक्तेः स्वतन्त्रस्य शास्त्रैकसमधिगम्यस्य जगत्कारणस्य ब्रह्मण इति भावः । नहि भावानां शक्तयः केन चित्प्राकृतबुद्धिना परिच्छेत्तुं शक्यन्ते, तर्काणामप्रतिष्ठितत्वात् ॥ २६ ॥

## आत्मनि चैवं विचित्राश्च हि । २ । १ । २७ ॥

न चैतदाश्चर्यं, ब्रह्मणो विचित्रजगत्स्रष्टृत्वेऽपि स्वरूपाप्रच्युतित्वमिति, हि यत आत्मनि जीवात्मनि च देवादिशरीरेऽप्रच्युतस्वरूपतयैव एवं विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते, किमुत ब्रह्मणइति । द्वितीयश्चशब्दः कैमुत्यद्योतकः ॥ २७ ॥

## स्वपक्षे दोषाच्च । २ । १ । २८ ॥

प्रधानकारणवादेऽपि त्रिगुणस्य प्रधानस्य निरवयवत्वाभ्युपगमान्महदाद्याकारेण परिणामे कृत्स्नप्रसक्तिर्निरवयवत्वप्रतिज्ञाहानिर्वेति दोषः समानः । गुणा एव तस्यावयवा इति चेत्, तत्रापि गुणसमूहस्य प्रधानत्वे गुणानां निरवयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां तेषां स्थूलमहदाद्यारम्भकत्वासिद्धिः । गुणैरारब्धस्य प्रधानत्वे प्रधानं कारणमिति सिद्धान्तविरोध इति वैशेषिकमतेऽप्येवं दोषाः, परमाणूनां निरवयवत्वाभ्युपगमात् ॥ २८ ॥

## सर्वोपेता च सा तद्दर्शनात् । २ । १ । २९ ॥

---

वशिष्टभागमवतारयितुं शङ्कते । नन्विति । उक्तार्थं श्रुतिमुखेन निर्द्धारयति । तथाचेत्यादिना । प्रमाणान्तरागोचरस्य ब्रह्मणो विलक्षणधर्मिणः विलक्षणधर्मसंयोगः शास्त्रेण प्रतिपन्नो न विरुद्ध इतिभावः । फलितार्थं दर्शयति । एवञ्चेति । कैमुत्यन्यायमनुसृत्याह । किमुत इति ॥ २६ ॥

प्राप्तैश्वर्य्याणां देवराजप्रभृतीनां प्रत्यगात्मनां निर्मिताः सृष्टयः स्वात्मप्रभावानुरूपाः विचित्रा दृश्यन्ते यथा तथा लोकातीते सर्वज्ञे विचित्रशक्तिमति परे ब्रह्मणि सहस्रशः शक्तयस्सन्तीति किमुत वक्तव्यमिति । अस्य सूत्रस्य विशेषव्याख्या वेदान्तकौस्तुभभाष्ये द्रष्टव्या ॥ २७ ॥

दोषसाम्यं दर्शयति । प्रधानकारणवाद इति । प्रधानं महदाद्याकारेण परिणममानं साकल्येन वा परिणमते एकदेशेन वा । आद्ये कृत्स्नस्यैव कार्याकारेण परिणतत्वादवशिष्टस्य भागस्य भावात्तदाश्रितस्य कार्यस्यायोगात्कार्यं कारणञ्चेत्युभयमपि समुच्छिद्येत । द्वितीये पक्षे प्रधानस्य निरवयवत्वस्वीकारे कथं विचित्रजगदारम्भ उपपद्यत इत्यर्थः । उक्तदोषं निरसितुमाह । गुणाश्चेति । तस्य=प्रधानस्य । सत्त्वादिगुणानां समूहः प्रधानमुतसत्त्वादिगुणैरारब्धं प्रधानमित्येति विकल्प्याद्यपक्षमभिप्रेत्याह । तत्रापीति । प्रदेशभेदमनपेक्ष्य संयुज्यमानानाम् । असंयुक्तप्रदेशभेदरहितसंयोगवता लोके हीष्टकादयः पूर्वपूर्वसंयुक्तैः प्रदेशैः संयुज्यमानाः पृथुकार्यारम्भका दृष्टा इत्यर्थः । द्वितीयपक्षमभिप्रेत्याह । गुणैरिति ॥२८॥

पूर्वमुपादानस्य ब्रह्मणः सर्ववैलक्षण्येन सर्वशक्तियोगात् कृत्स्नप्रसक्त्यादयो दोषा निरस्ताः। तत्र न केवलं सर्ववैलक्षण्येन सर्वशक्त्युपेता सा परा देवतेत्युच्यते, अपि तु तद्दर्शनाच्च। दर्शयतीति दर्शनं श्रुतिः सर्वशक्तियोगश्रुतेश्चेत्यर्थः। "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, सत्यकामः सत्यसङ्कल्प" इत्यादिश्रुतेः ॥ २९ ॥

## विकरणत्वान्नेति चेत्तदुक्तम्। २। १। ३०॥

सर्वशक्तिमत्त्वेपि "न तस्य कार्यं करणं च विद्यते" इति करणरहितस्य तस्य न कार्यारम्भः सम्भवति, लोके हि देवादयः सर्वशक्तिमन्तोऽपि करणसम्पन्ना एव कार्याय प्रभवन्तीति चेद्यदत्र वक्तुं योग्यं तदुक्तं "शब्दमूलत्वादि"ति, श्रुत्यवगाह्ये तर्काप्रवेशात्। तथा चश्रुतिः, "अपाणिपादो जवनोग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति ॥ ३० ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

अथ प्रयोजनवत्त्वाधिकरणम्।

## न प्रयोजनवत्त्वात्। २। १। ३१॥

पुनरप्याक्षिपति। न ब्रह्मणः कारणत्वं सम्भवति, सर्वप्रवृत्तीनां प्रयोजनवत्त्वात्। तस्य चाप्तसमस्तकामत्वेन प्रयोजनाभावादन्यथा स्वार्थप्रवृत्तौ पूर्णकामत्वहानिः, परार्थप्रवृत्तौ अनन्तदुःखबहुलं जगत्सृजतः करुणावत्त्वादिहानिः ॥ ३१ ॥

## लोकवत्तु लीलाकैवल्यम्। २। १। ३२॥

तुशब्द आक्षेपनिरासार्थः। आप्तसमस्तकामस्यापि परब्रह्मणो विचित्रविश्वसृष्टौ प्रवृत्तिर्लीलैव केवला, न तत्र प्रयोजनोद्देशो, लोकवत्। यथा लोके राजादीनां परिपूर्णकामानामपि क्रीडाप्रवृत्तिर्दृश्यते, यथा वा सुखोन्मत्तस्य सुखोद्रेकात्फलनिरपेक्षनर्तनादि ॥ ३२ ॥

---

श्रुतेस्तु शब्दमूलत्वादिति सूत्रेण पौनरुक्त्यमाशङ्क्याह। पूर्वमिति। सम्प्रति धर्मिधर्मयोर्वैलक्षण्यं कण्ठरवेण प्रदर्शितमिति भेद इतिभावः ॥ २९ ॥

सर्वशक्तिसम्पन्नस्यापि ब्रह्मणो न जगत्स्रष्टृत्वमुपपद्यते "न तस्य कार्यं करणञ्च विद्यत" इतिश्रुत्या करणत्वनिषेधादिति सूत्रस्य पूर्वपक्षखण्डं विवृणोति। सर्वशक्तिमत्वेऽपीति। श्रुत्यर्थस्तु कौस्तुभे विवृतस्तत्र द्रष्टव्यः। सूत्रस्योत्तरभागं विवृण्वन्नाह। इतिचेदत्र वक्तुं योग्यमिति। श्रुतिमुदाहरति। तथाचेति ॥ ३० ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥

अथ प्रयोजनवत्त्वाधिकरणम्

न ब्रह्मणो जगत्कारणत्वं सम्भवति अवाप्तसमस्तकामस्य प्रयोजनाभावात्सर्वा अपि प्रवृत्तयः प्रयोजनपर्य्यवसायिन्य एव लोके दृश्यन्त इत्याक्षिपन्नाह। पुनरप्याक्षिपतीति। प्रेक्षावतां प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्ता नच परब्रह्मणः स्वार्था प्रवृत्तिः अवाप्तसमस्तकामत्वादित्याह। तस्यचेति। तस्य = ब्रह्मणः। परार्थप्रवृत्तिमभिप्रेत्याह। परार्थप्रवृत्ताविति ॥ ३१ ॥

सूत्रं व्याचष्टे। तुशब्द इति। प्रेक्षावतामननुसंहितप्रयोजनानामपि यादृच्छिकासु क्रियासु प्रवृत्तिदर्शना-

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति । २ । १ । ३३ ॥

ननु लीलयापि ब्रह्मणो विश्वसृष्टिप्रवृत्तौ वैषम्यनैर्घृण्ये प्रसज्येयातां । वैषम्य नाम देवमनुष्यादीनामुत्तममध्यमादिरूपविषमसृष्टिकर्तृत्वम्, नैर्घृण्यं नाम दुर्विषहदुःखगर्भजगन्निर्मातृत्वेन तत् संहर्तृत्वेन च निर्दयालुता । तत्रोत्तरमाह, नेति । नेश्वरस्य वैषम्यनैर्घृण्ये प्रसज्येते, कुतः ? सापेक्षत्वात् । तत्तत्प्राणिपुण्यापुण्यकर्मसापेक्षत्वादीश्वरस्य व्रीहियवाम्रादिसृष्टिवैचित्र्ये तत्तद्बीजगतासाधारणसामर्थ्यसापेक्ष्यपर्जन्यवत् । न च सापेक्षत्वेऽप्राधान्यं भृत्यादिसेवानुसारेण फलदातृ राज्ञोऽप्राधान्यादर्शनात् । तथाहि दर्शयति श्रुतिः "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणा, साधुकारी साधुर्भवति, पापकारी पापो भवती" त्यादिः ॥ ३३ ॥

## न कर्माऽविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते २।१।३४

ननु "सदेव सोम्येदमग्र आसीदेकमेवे"ति सृष्टेः पूर्वं क्षेत्रज्ञतत्कर्माविभागश्रवणात् कथं कर्मापेक्षया वैषम्याद्यप्रसक्तिरिति चेन्न, कुतः ? क्षेत्रज्ञानां तत्कर्मणां चानादित्वात्, संसारस्य हेतुहेतुमद्भावोपपत्तेः, पूर्वसृष्टिसम्पादितधर्मप्रपञ्चस्यात्यन्तिकनाशाभावात्, तदपेक्षयोत्तरसृष्टौ न किञ्चिद्बाधकमिति भावः । ननु कुतस्तेषामनादित्वमित्यत आह । उपपद्यते च क्षेत्रज्ञानां तत्कर्मप्रवाहाणांचानादित्वं, क्षेत्रज्ञानां स्वरूपतोऽनादित्वेऽप्यविभागश्रवणं च नामरूपविभागाभावादन्यथा कृतनाशादिप्रसंगात् । उपलभ्यते च क्षेत्रज्ञानामनादित्वं श्रुतिस्मृत्योः । "न जायते म्रियते वा विपश्चित्, अजो ह्येको जुषमाणोऽनुशेते, प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी"ति ॥ ३४ ॥

## सर्वधर्मोपपत्तेश्च । २ । १ ३५ ॥

---

त्तथैव परमेश्वरस्य जगत्सर्जने प्रवृत्तिर्लीलैव केवला । अपरिमितशक्तीनां तत्र विद्यमानत्वादित्यर्थः ॥ ३२ ॥

न ब्रह्मणो जगत्स्रष्टृत्वमुपपद्यत इत्याक्षिपन्नाह । नन्विति । वैषम्यशब्दार्थं निर्वक्ति । वैषम्यं नामेति । नैर्घृण्यपदार्थं विवृणोति । नैर्घृण्यं नामेति । सूत्रस्य पूर्वपक्षखण्डांशं व्याख्यायोत्तरखण्डांशं विवृणोति । तत्रोत्तरमाह इत्यादिना । प्रश्नपूर्वकं हेतुमुपादत्ते । कुतइति । व्रीहियवादिविलक्षणसृष्टौ तत्तद्बीजगतान्येवासाधारणसामर्थ्यानि कारणानि भवन्ति ईश्वरस्तु पर्जन्यवदित्याह । तत्तत्प्राणीति । तत्तत्कर्मसापेक्षत्वे परमेश्वरस्याप्राधान्यमाशङ्क्य परिहरति । नचेति । तत्रहेतुमाह । भृत्यादिसेवानुसारेणेति ॥ ३३ ॥

यदि सृष्टेः प्राक् क्षेत्रज्ञानां कर्मावधारणं स्यात्तदा तदपेक्षयेश्वरस्य प्राणिषु सुखादिवैचित्र्यनिर्मातृत्वं सम्पद्येत तदेव तु नास्तीत्याशङ्कते । नन्विति । सूत्रावयवं व्याकुर्वन्नुत्तरमाह इतिचेन्नेति । यथाङ्कुरोत्पत्तौ वीजस्य कारणत्वं तथा विश्वोत्पत्तौ कर्मणाञ्च हेतुत्वं तथाच पूर्वपूर्वकर्मवैचित्र्यवशादुत्तरोत्तरविचित्रसृष्टिसिद्धिरित्याह । क्षेत्रज्ञानामित्यादिना । यदि क्षेत्रज्ञतत्कर्मणामनादित्वं तदा सृष्टेः प्राक् कथं तदवधारणं नेत्यत्राह— क्षेत्रज्ञानामिति । विपक्षे बाधकतर्कमाह । अन्यथेति । क्षेत्रज्ञानां तत्कर्मणाञ्च सादित्व इत्यर्थः । उक्तार्थं श्रुतिस्मृतिप्रमाणेन द्रढयति । उपलभ्यतेचेति ॥ ३४ ॥

प्रधानपरमाण्वादिष्वनुपपन्नानां सार्वज्ञ्यादीनां सर्वेषां धर्माणां कारणत्वोपपादकानां ब्रह्मण्येवोपपत्तेश्च ब्रह्मैव कारणं, न प्रधानादिः, परिमितशक्तित्वात्। ब्रह्मणश्चाचिन्त्यानन्तशक्तिमत्त्वात् सर्वमनवद्यमिति ॥ ३५ ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥

इतिश्रीभगवदवतारश्रीसनन्दनादिप्रवर्तितसुदर्शनचक्रावतार श्री१०८ भगवन्निम्बार्क मुनीन्द्रोपबृंहितानादि वैदिकसम्प्रदायानुगतनिखिलशास्त्रपारावारीण श्री केशव काश्मीरिभट्टविरिचितायां वेदान्तकौस्तुभप्रभाविवृत्तौ ब्रह्मसूत्रवृतायां द्वितीयाध्यायस्य प्रथमपादः विवरणम्।१।

---

उपपद्यन्ते च भगवति कल्याणगुणसागरे श्रीपुरुषोत्तमे सत्यकामत्वसत्यसङ्कल्पत्वसर्वशक्तिमत्वादयो धर्माः तस्यैव जगदुत्पत्तिस्थितिलयकर्तृत्वं नतु प्रधानप्रभृतीनामित्याह । प्रधान इति ॥ ३५ ॥

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां,
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रोच्यमानम्।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां,
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये विष्णुनाम ॥ १ ॥

इतिश्रीरसिकशिरोमणिश्री१०८स्वामिहरिदासपदाश्रिताश्रितानुगामिनाऽमोलकरामेण संगृहीतायां वेदान्तकौस्तुभप्रभाब्रह्मसूत्रवृत्तिटीकायां दीपिकायां द्वितीयोऽध्यायस्यप्रथमपादः ॥ १ ॥



# द्वितीयाध्याये द्वितीयपादारम्भः ।



साङ्ख्यतार्किकबौद्धैश्च जैनैः पाशुपतादिभिः ।
दुर्विज्ञेयं गुरुं कृष्णं निम्बार्कं समुपाश्रये ॥ १ ॥

## अथ रचनानुपपत्यधिकरणम्

एवं परोद्भावितदूषणपरिहारपूर्वकं परब्रह्मणोविश्वजन्मादिकारणत्वमुक्तम् । इदानीं परपक्षान्निराकर्तुं परपादः प्रवर्तते । अन्यथा परतन्त्रप्रज्ञाः प्राणिनस्तेषां परपक्षाणां प्रामाणिकत्वशङ्कया तेष्वेवावलम्बेरन्नतु वैदिकपक्षमाद्रियेरन्, पूर्वंतु-"ईक्षतेर्ना शब्दं, कामाच्च नानुमानापेक्षा, एतेन सर्वे व्याख्याताव्याख्याताः" इत्यादिना तदुदाहृतवैदिकवाक्यानामतत्परत्वमुक्तमिह तु वाक्यान्यनपेक्ष्य स्वातन्त्र्येण तद्युक्तयः प्रतिषिध्यन्ते इति न पुनरुक्तिः । तत्र साङ्ख्या मन्यन्ते. त्रिगुणमचेतनं प्रधानं जगत्कारणं, तस्यसत्त्वे पञ्चहेतूनाहुस्तथा हि भेदानां परिमाणात्. समन्वयाच्छक्तितः, प्रवृत्तेश्च कार्यकारणविभागादविभागाद्वैश्वरूप्यस्येति, विश्वरूपमेव वैश्वरूप्यं विचित्रसन्निवेशं जगत्तस्य ये च परिमितास्ते सामान्यकारणपूर्वकाः यथा घटादयः । एवं परिमिता महदादिपृथिव्यन्ता भेदास्तेषामेकं देशकालापरिमितं गुणत्रयसामान्यं

---

ज्ञानवैराग्यभावादिकल्याणगुणसागरम् ।
निम्बादित्यमहं वन्दे त्रय्यन्तार्थप्रदर्शकम् ॥ १ ॥

### अथ रचनानुपपत्यधिकरणम्

अस्मिन्पादे परेषां युक्त्याभासा निराक्रियन्तेऽतः साङ्ख्यतार्किकादीनां नामोत्कीर्त्तनपुरस्सरं कृष्णाभिन्नाद्याचार्य्यस्योपायत्वेनोपेयत्वेन वरणीयत्वमाह श्लोकेन साङ्ख्यइति । प्रथमपादार्थं विवृण्वन् द्वितीयपादेन सङ्गतिं प्रदर्शयति । एवमिति । परैः प्रतिवादिभिरुद्भावितानि यानि दूषणानि तेषां परिहारः तत्पूर्वकमित्यर्थः । परपक्षान्निराकर्तुमिति । नहि परमतनिरासव्यतिरेकेण स्वसिद्धान्तो व्यवस्थापयितुं शक्यत इतिभावः । किमर्थं परपक्षो निरस्यत इत्यत्राह । अन्यथेति । परपक्षानिरास इत्यर्थः प्रतिवादिनां विप्रतिपत्तयः प्रागेव निराकृताः सम्प्रति तेषां प्रतिक्षेपे पौनरुक्त्यं स्यादित्यत्राह । ईक्षतेर्नाशब्दमिति । अतत्परत्वमिति । "सदेव सौम्येदमग्रआसीदि"त्यादिवेदान्ता न साङ्ख्याभिमतप्रधानादिप्रतिपादनपराः किन्तु ब्रह्मपरा इत्येवंप्रकारेण तेषां निरासः सम्प्रति तु वेदान्तवाक्यजातमनपेक्ष्यैव वाद्यभिमतयुक्तीनां निराकरणमित्यर्थः । तावत्साङ्ख्यानां मतं दर्शयति । तत्रेति । तेषु । त्रिगुणमिति । त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणम् । अचेतनम् । सर्व एव प्रधानबुद्ध्यादयोऽचेतना न तु वैनाशिवच्चैतन्यं बुद्धेरित्यर्थः । तस्य = प्रधानस्य । तदेवोपपादयति । तथाहीत्यादिना । भेदानाम् ।

कारणमस्ति। ये च यदन्विता दृश्यन्ते, ते तदेककारणपूर्वकाः, यथा मृदन्विताः शरावादयस्तत्पूर्वकाः। तथा सुखदुःखमोहान्विता बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मकसामान्यकारणपूर्वका भवितुमर्हन्ति। तथा घटादिकार्याणां कारणशक्तितः प्रवृत्तिवन्महदादिकार्याणामपि कारणशक्तितः प्रवृत्तिर्वाच्या तच्छक्तिमत्कारणमव्यक्तम्। किञ्च कारणात्कार्यस्य विभागोजन्म, अविभागो लयश्च, तत्र दृश्यते। एतौ विभागाविभागौ वैश्वरूप्यस्य विचित्रसन्निवेशस्य जगतो-दृश्यमानौ क्वचित्कारणे विश्रान्तौ विभागत्वादविभागत्वाच्च मृदि घटविभागाविभागवदिति त्रिगुणस्य जगतो गुणत्रयसाम्यरूपप्रधानादुत्पत्तिस्तस्मिन्नेव लयश्चेत्यनुमीयते इति प्राप्ते तत्राह

## रचनाऽनुपपत्तेश्च नाऽनुमानम्। २। २। १॥

जगद्धेतुतयाऽनुमीयते इत्यनुमानं प्रधानं न जगत्कारणं कुतः? रचनाऽनुपपत्तेः तत्स्वभावाभिज्ञचेतनानधिष्ठितं प्रधानं न विचित्रजगद्रचनासमर्थमचेतनत्वात् रथप्रासादादिरचनाहेतुभूतकेवलदार्वादिवदिति। च शब्देनान्वयानुपपत्तिः समुच्चीयते। न हि बाह्यारूपादयःसुखदुःखमोहान्विता अवभासन्ते सुखादीनां चित्तधर्मत्वेन प्रतिपुरुषमान्तरत्वेन सम्पद्यमानत्वात्। न बाह्यार्थाकारतयाऽनुगताः सुखादयः सम्पद्यन्ते चेतनस्यात्मीयवासनानुसारेण बाह्यविषयनिमित्तास्तूत्पद्यन्ते, इति सत्त्वादेश्चान्वितस्य द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासम्भवात्। नच सत्त्वादीन्यपि द्रव्याणि तेषां द्रव्यगुणतया प्रसिद्धेः शक्तितः प्रवृत्तेरित्यादिहेतवस्तु ब्रह्मण्युपपद्यन्ते तस्याप्यपरिमितत्वात् जगतस्तदधीनस्थितिप्रवृत्तित्वात् जगदुत्पत्तिलयवत्त्वादिति॥ १॥

---

महदादीनां भूम्यन्तानां कार्याणां मूलकारणं प्रधानमस्तीति योजना। विवादाध्यासिता महदादिभेदा, अव्यक्तकारणवन्तः परिमितत्वात् घटादिवत्। घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृष्टाः। विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात्। भिन्नानां समानरूपता समन्वयः। सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायलक्षणाः प्रतीयन्ते। शक्तितः प्रवृत्तेश्चेति कारणशक्तितः कार्यं प्रवर्तते। अव्यक्तात्कारणात्कार्यानुपपत्तेः। शक्तिश्च कारणगता न कार्यस्याव्यक्तादन्या इत्यर्थः। कारिकार्थं विवृणोति। विश्वरूपमेवेति। स्वार्थे ष्यञ्। तस्य = जगतः। तेषाम् = महदादिपृथिव्यन्तानाम्। एतेनाद्यहेतुर्विवृतः द्वितीयहेतुं व्याचष्टे। येच यदन्वितेति। तृतीयहेतुं व्याकरोति। तथाघटादिकार्याणामिति। तूर्यपञ्चमहेतू विवृणोति। किञ्चेति। पूर्वपक्षमनूद्य सिद्धान्तयति। इति प्राप्ते तत्राह इति। सूत्रार्थं व्याचष्टे। जगद्धेतुतयेति। चशब्दस्यार्थमाह। चशब्देनेति। यदुक्तं साङ्ख्यैर्बाह्यपदार्थानां सुखदुःखमोहान्वितत्वमुक्तं तदपि प्रत्यनुमानेनापाकरोति। नहि बाह्येति। ये यदन्विता दृश्यन्ते तदेककारणपूर्वकाः यथा मृदन्विताः शरावादयस्तत्पूर्वकाः। सुखदुःखमोहात्मकसामान्यकारणपूर्वका भवितुमर्हन्तीति यत् प्रागुक्तं पूर्वपक्षे तत् दूषयितुमाह। नचेत्यादिना। यं प्रति यस्यान्वितत्वं तं प्रति तस्य कारणत्वं यथा घटादिकार्यं प्रत्यन्वितस्य मृदादेः घटं प्रति कारणत्वमेवं सत्त्वमयसुखदुःखादिकार्यं प्रत्यन्वितस्य सत्त्वादेः सुखादिकं प्रति कारणत्वं सिद्धमिति यदुक्तं तस्य शौक्ल्यादिष्वनैकान्त्यमित्याह। सत्त्वादेरन्वितस्येति। शौक्ल्यादेरित्यत्रादिना गोत्वादिपरिग्रहः। शुक्लो घट इत्यत्र घटे शौक्ल्यमन्वितं नहि तं प्रति शौक्ल्यस्य कारणत्वं दृष्टं श्रुतं वा तथाचोक्तव्याप्तौ व्यभिचार इतिभावः। यत्कार्यं प्रति यस्य द्रव्यस्यान्वितत्वं तत्कार्यं प्रति तस्य द्रव्यस्य कारणत्वं यथा हेमादेः कटकं प्रति कारणत्वं तथा द्रव्यात्मकानां सत्त्वादीनां कार्येऽन्वितानां सुखदुःखादिकं प्रति कारणत्वं सेत्स्यतीत्याशङ्क्य परिहरति। नचेति। निरासे हेतुमाह। तेषामित्यादिना। तेषां गुणादीनाम्। सत्त्वादयो

## प्रवृत्तेश्च ।२।२।२॥

अनुपपत्तेरिति वर्त्तते। अचेतनस्य प्रधानस्य स्वतः प्रवृत्त्यनुपपत्तेश्च न कारणं तत्, मृदादीनां रथादीनां वा चेतनाऽधिष्ठितानामेव स्वकार्येषु प्रवृत्तिदर्शनात् ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ।२।२।३॥

ननु पयोयथा चेतनानऽधिष्ठितमेव दध्यात्मना स्वतः परिणममानं दृश्यते, वत्सवि-वृद्धये प्रवर्त्तते च, अम्बु च जलधरविमुक्तमेकरसं जम्बीराम्रनारिकेरादिविचित्ररसरूपेण स्वतः परिणमते, स्यन्दते च लोकानुग्रहाय, तथा प्रधानमपीति चेत्तत्परिहरति। तत्राऽपीति। क्षीरा-दावपि चेतनाऽनधिष्ठिते प्रवृत्त्यनुपपत्तेः। तयोश्चेतनाधिष्ठितत्वं चान्तर्यामिब्रह्मणे "योऽप्सु तिष्ठन्नि"त्यादिऽश्रुतिसिद्धम्। वत्सवृद्धये च धेनुः पयःप्रवर्त्तयति द्रवत्वाच्च वत्सचूषणेन क्षरति। अम्बु च चेतनाधिष्ठितमेव निम्नदेशापेक्षयाद्रवत्वात्स्यन्दते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ।२।२।४॥

प्रधानव्यतिरिक्तस्य प्रवर्त्तकस्य नवर्त्तिकस्य वा हेत्वन्तरस्य सृष्टेः प्रागनवस्थितेरव-स्थित्यभावात् प्रधानस्य स्वतः प्रवृत्तिः सा च नित्या स्यादनपेक्षत्वात्। ततश्च सर्वदा सृष्टिरेव स्यात्। पुरुषसन्निधिरूपहेत्वन्तरस्वीकारेणापेक्षणादपि न केवलं प्रधानं परिणामकर्त्तृ सन्निधिसातत्येन प्रवृत्तिसातत्यापत्त्या प्रलयाभावोऽपवर्गाभावश्च ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ।२।२।५॥

न च यथा धेन्वाद्युपभुक्तं तृणोदकपल्लवादि स्वयमेव क्षीराद्याकारेण परिणमते

---

गुणाः द्रव्यस्य धर्माः नतु तत्स्वरूपत्वमितिभावः। तस्य = परब्रह्मणः। तदधीनप्रवृत्तिमत्वात् = ब्रह्माधीनप्रवृ-त्तिमत्वात् ॥ १ ॥

अचेतनं कार्यं चेतनाधिष्ठितकारणकं दृष्टं यथा मृदादिकम्। यन्नैवं तन्नैवं यथा नित्यं तुच्छं वेति प्रत्यनुमानेन साङ्ख्यमतं निरस्यति। अचेतनस्येति ॥ २ ॥

दृष्टमचेतनमपि प्रयोजने प्रवर्त्तमानं यथा वत्सविवृद्धये क्षीरमचेतनं प्रवर्त्तते पयो दध्यात्मना परिणमते एवमम्बु च जलदविमुक्तमेकरसमपि तत्तत्स्थानभेदेन विचित्ररसरूपेण स्वतः परिणमते तथा प्रकृतिरचेतना पुरुषविमोक्षणाय प्रवर्त्तिष्यत इति साङ्ख्यः पुनः प्रत्यवतिष्ठते। नन्विति। न.रक्षीरप्रवृत्तेरपि चेतनाधिष्ठानानि-बन्धनेत्याशयेन परिहरन्नाह : क्षीरादावपीति ॥ ३ ॥

प्रकृतेः प्रवर्त्तको निवर्त्तकश्च हेत्वन्तरमस्ति नवा ? नास्तीति चेत् सर्वदा सृष्ट्युत्पादापत्तिः प्रधानस्य सर्गादौ प्रवृत्तिकारणानपेक्षत्वात्। यदि प्रकृतेः प्रवर्त्तकं किञ्चिद्धेत्वन्तरमस्ति तच्च पुरुषस्य सन्निधिरूपं तदा न केवलस्य प्रधानस्य जगत्परिणामकर्तृत्वं सम्भवति पुरुषसन्निधानस्य सार्वदिकतया सर्वदा सृष्ट्युत्पत्तौ प्रलयापवर्गौ लुप्येयाताम् इत्याह। प्रधानव्यतिरिक्तस्येति ॥ ४ ॥

यथा गोभुक्तं तृणादिकं क्षीरादिरूपेण स्वयं परिणमते तथा निमित्तान्तरनिरपेक्षमव्यक्तं महदाद्याकारेण परिणंस्यत इत्याशङ्क्य परिहरति। नचेति। नचेत्यस्य वक्तुं शक्यमित्यनेनान्वयः। अन्यत्र धेन्वादेरन्यत्रा-

तद्वत्प्रकृतिरपि महाद्याकारेण परिणंस्यत इति वक्तुं शक्यमन्यत्राभावात्, अन्यत्रानडुहाद्युपभुक्तेषु तेषु क्षीराकारेण परिणामाभावात्। अतः प्राज्ञाधिष्ठितमेव तृणादि क्षीरीभवति तथा प्रधानमपि ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् । २ । २ । ६ ॥

एवं तावत्प्रधानस्य स्वतः प्रवृत्तिर्नास्ति जडत्वादित्युक्तम् साचेत्तव हर्षायाऽस्माभिरभ्युपगम्येत तथापि तया न किञ्चित्प्रयोजनं सिध्यति। तथाहि प्रधानप्रवृत्तेः किं प्रयोजनं भोगो वा ? अपवर्गो वा ? उभयं वे ? ति। आद्ये प्रधानस्याचेतनत्वात्पुरुषभोगार्था सेति चेत्प्रवृत्तेः प्राक्चैतन्यमात्रवपुषोनिर्विकारस्य निष्क्रियपुरुषस्य प्रकृतिदर्शनरूपभोगासंभवात् सन्निधिमात्रं भोगहेतुरितिचेत्सन्निधेर्नित्यत्वात् सन्ततत‍द्भोगप्रसङ्गादनिर्मोक्षप्रसङ्गः। द्वितीये प्रवृत्तेः प्रागप्यपवर्गस्य सिद्धत्वादनर्थका सा। तृतीये भोक्तव्यानामानन्त्यादनिर्मोक्षप्रसङ्गएवेति ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथापि । २ । २ । ७ ॥

ननु यथा पंगुपुरुषोऽन्धपुरुषमधिष्ठाय; प्रवर्त्तयति, अश्मावाऽयस्कान्तोयः प्रवर्त्तयति एवं पुरुषः प्रधानं प्रवर्त्तयिष्यतीति चेत् तत्रोच्यते। तथाऽपीति। तेनापि प्रकारेण नैव दोषान्निर्मोक्षः, त्वया पुरुषस्य निष्क्रियत्वाभ्युपगमेन प्रवर्त्तकत्वासम्भवात् तदभ्युपगमे च स्वसिद्धान्तविरोधः। पङ्गुर्हि वागादिभिरन्धं प्रवर्त्तयति; अयस्कान्तश्च सामीप्यात्। तव पुरुषस्य तु निष्क्रियनिर्गुणत्वान्न कश्चित्प्रवर्त्तनव्यापारोऽस्ति, सन्निधिमात्रेण प्रवर्त्तकत्वे

---

नडुहादौ तदुपभुक्तस्य तृणादीनां क्षीराकारेण परिणामो न जायत इति सूत्रं विवृणोति। अन्यत्रेत्यादिना। यथा गोभुक्ततृणादीनां क्षीराकारेण परिणमनं प्राज्ञकर्तृकं तथा प्रधानमपि प्राज्ञाधिष्ठितमेव जगदाकारेण परिणमते नतु स्वत इतिभावः ॥ ५ ॥

अभ्युपगमेऽर्थाभावादिति। कस्याभ्युपगम इति जिज्ञासायां प्रवृत्तेश्चेति पूर्वसूत्रार्थं मनसि निधायाह। एवं तावदिति। स्वतइति। अचेतनं चेतनाधिष्ठितमेव कार्यं कर्त्तुं शक्नोति नान्यथेति प्रागेवमस्माभिः प्रवृत्तेश्चेति सूत्रव्याख्यानावसरेऽभिहितमित्यर्थः। अचेतनस्य प्रवर्त्तकत्वं नास्ति तथापि तव मनःसन्तोषाय प्रधानस्य प्रवर्त्तकत्वाभ्युपगमेऽपि न किमपि प्रयोजनं सिद्ध्यतीत्याह। सा चेत्तव हर्षायेति। सा = प्रवृत्तिः। साङ्ख्यमतं दूषयितुं विकल्पत्रयमाह। तथाहीत्यादिना। सुखदुःखानुभवोहि भोगः सचानुभवः स्वाश्रयमन्तरेण न सम्भवति अतोऽनुभूयमानत्वान्यथानुपपत्त्या अनुभविता कल्प्यते स चानुभविता ते पुरुषादन्यो न सम्भवति प्रकृतेर्जडत्वात् तथाच पुरुषस्य भोगार्था प्रवृत्तिः स्वीकार्या तस्य प्राक् निर्विकारस्य चिन्मात्रस्य पुरुषस्य भोगो न घटत इत्यभिप्रेत्याद्यपक्षं निरस्यति। आद्यइति। द्वितीयकल्पमप्यपाकरोति। द्वितीयइति। सा = प्रवृत्तिः। तृतीयमपि कल्पं व्युदस्यति। तृतीयेति ॥ ६ ॥

दृक्शक्तिसम्पन्नः पङ्गुरिव पुरुषः प्रवृत्तिशक्तिसम्पन्नं प्रधानमिव प्रवर्त्तयिष्यतीत्याशङ्क्य सूत्रमवतारयति। नन्विति। समाधत्त – तत्रोच्यत इत्यादिना। साङ्ख्यानां सिद्धान्ते पुरुषो निष्क्रियो निर्विकारस्तस्य कथमपि प्रवर्त्तकत्वं नोपपद्यत इत्याह। पुरुषस्येति। तदभ्युपगमे = प्रवर्त्तकत्वाभ्युपगमे। पङ्गुदृष्टान्तं विघटयति। पंगुर्हीति। अयस्कान्तदृष्टान्तेन स्ववृत्तिव्यापारमन्तरेणापि पुरुषस्य प्रवर्त्तकत्वमुपदिष्टमित्याशङ्कां समाधत्ते। अयस्कान्तश्चेति।

प्रलयाभावोऽपवर्गाभावश्च सन्निधेर्नित्यत्वादित्युक्तमेव ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च । २ । २ । ८ ॥

इतश्च प्रधानस्याप्रवृत्तिः प्रलये सत्त्वादीनां साम्येनावस्थितानां स्वरूपनाशापत्त्यापरस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेर्बाह्यस्य च कस्यचिद्वैषम्यहेतोरभावात् । "प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः । क्षोभयामास योगेन परेण परमेश्वरः" इत्युक्तौ चेश्वराभ्युपगमेन वेदान्तवाद एवेति नात्र नो विवादः शब्देति श्रुतेः ॥ ८ ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् । २ । २ । ९ ॥

नन्वन्यथा दूषितप्रकारभिन्नप्रकारान्तरेण गुणानानुमिमीमहे । तथाहि चलं गुणवृत्तमित्यभ्युपगमात्साम्यावस्थिता अपि गुणा यथा कार्यं वैषम्योपगमयोग्या एवेति चेदेवमपीदमहमेवं करिष्यामीति प्रधानस्य ज्ञातृत्वशक्तिवियोगात्पूर्वोक्तारचनानुपपत्त्यादयो दोषा दुष्परिहरा एव । वैषम्योपगमयोग्यत्वेऽपि तेषां साम्यावस्थायां वैषम्यहेतोरभावेन वैषम्यासम्भवः । हेत्वभावेऽपि वैषम्यभाजश्चेत्सर्वदा वैषम्यं स्यादिति ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् । २ । २ । १० ॥

पूर्वापरविरोधाच्चासमञ्जसं कापिलमतं, तथा ह्येवं ते वदन्ति, प्रकृतिः परार्था, दृश्या, भोग्या । पुरुषस्तु तस्या द्रष्टा, भोक्ताधिष्ठाता, साक्षी चेति, सा च तस्य भोगापवर्गा-

---

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुक्त्वा फलितमाह । पुरुषस्यत्विति ॥ ७ ॥

चकारसूचितां प्रतिज्ञां दर्शयति । इतश्चेति । सत्त्वरजस्तमसां गुणानां साम्यावस्था प्रकृतिः । तस्यामवस्थायां गुणानामुपमर्दोपमर्दकभावो नास्ति तथासति तदानीं तस्याः स्वरूपनाशः प्रसज्यते अतस्तस्यामवस्थायां गुणानां नाङ्गाङ्गिभावः कल्पयितुं शक्यः तस्मान्न प्राज्ञानधिष्ठितं प्रधानं जगत्कारणमित्याह । प्रलय इत्यादिना ॥ ८ ॥

सूत्रस्थमन्यथाशब्दं व्याचष्टे । दूषितप्रकारभिन्नप्रकारान्तरेणेति । कार्यानुसारेण गुणानां स्वभावः साङ्ख्यैरभ्युपगम्यते, यथा यथा कार्योत्पाद उपपद्यते तथा तथैषां स्वभाव इत्याह । तथाहीत्यादिना । तदर्थं विवृणोति । साम्यावस्थिता इति । पूर्वपक्षमनूद्य 'ज्ञशक्तिवियोगा'दिति सूत्रस्य भागं विवृण्वन्नुक्तशङ्कां परिहरति । एवमिति । कारणसत्त्व एव सर्वत्र कार्योत्पाद इति सर्वतन्त्रसिद्धान्तस्तथा च भवतु तावद्गुणानां वैषम्ययोग्यत्वं गुणानां साम्यावस्थायां वैषम्यकर्तुरभावात् कथं वैषम्यसम्भव इत्याह वैषम्योपगमयोग्यत्वेऽपीति ॥ ९ ॥

पुरुषो न संसरति न मुच्यते इत्युक्ता पुरुषभोगार्था प्रधानप्रवृत्तिरिति साङ्ख्याः प्रचक्षते तच्च वेदान्तार्थविरुद्धत्वादसमञ्जसमिति साङ्ख्यतन्त्राभिमतप्रधानजगदुपादानमिति प्रदर्शयन्सूत्रार्थं व्याकरोति । पूर्वापरविरोधाच्चेति । पञ्चविंशतिस्तत्त्वानीत्युक्त्वैव गुणाः परस्परभिन्ना इत्यप्युक्तं तदपि विप्रतिषिद्धं गुणभेदे हि सप्तविंशतिस्तत्त्वानि स्युरिति पूर्वापरविरुद्धत्वान्न साङ्ख्यदर्शनं समीचीनमित्यर्थः । तन्मतमेव दर्शयति । तथा ह्येवमिति । परार्थाः । अव्यक्तमहदहङ्कारप्रभृतयः परार्थाः पुरुषार्थाः सङ्घातत्वात् । शयनासनाभ्यङ्गवत् । सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे सङ्घाताः दृश्या भोग्याः बुद्ध्यादयः कार्यकारणयोरनन्यत्वात् ते च प्रकृत्यभिन्ना इत्यर्थः । नच द्रष्टारमन्तरेण दृश्यता युक्ता तेषां तस्मादस्ति द्रष्टा दृश्यबुद्ध्यतिरिक्तः स च पुरुष इत्याह । पुरुषस्त्विति । तस्याः = प्रकृतेः । द्रष्टा । चेतनो द्रष्टा भवति नाचेतनः । भोक्ता = भोग्ये सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्म-

तर्थया प्रयोजनवती । तयैव साधनभूतया स भोगमपवर्गं च लभते इति च । स च नित्यनिर्विकारश्चैतन्यमात्रस्वरूपो न द्रष्टा, न भोक्ता, न कर्त्तेत्यत एव न स बध्यते, न मोक्षार्थं यतते, न मुच्यते इति च । पुरुषसन्निधानमात्रेण पुरुषस्य चैतन्यं स्वस्यां स्वस्याश्च कर्तृत्वं पुरुषे चानुसन्धायाचेतना प्रकृतिरेव बध्यते, मोक्षार्थं यतते, मुच्यते चेति, पुरुषस्यानुपकारिणा-भोगापवर्गरूपप्रयोजनं साधयन्ती प्रकृतिरुपकारिणीति च वदन्ति अध्यासरूपबन्धादयः पुरुषस्यापि सन्त्यन्यथा कस्तस्योपकार इत्येवमाद्यनेके विप्रतिषेधास्तत्स्मृतौ द्रष्टव्याः ॥१०॥

इति रचनाऽनुपपत्त्यधिकरणम् ॥

अथ परमाणुकारणवादं निराकरोति ।

तथा चायं तेषां सिद्धान्तः पार्थिवाप्यतैजसवायवीयभेदात् चतुर्विधाः परमाणवस्ते च नित्या निरवयवा रूपादिमन्तः पारिमाण्डल्यपरिमाणाः प्रलयेऽनारब्धकार्या अवतिष्ठन्ते । सर्वत्र त्रिभ्यः कारणेभ्यः समवाय्यसमवायिनिमित्ताख्येभ्यः

---

मनुभूयेते तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन केनचिदन्येन भवितव्यं सचात्मेत्यर्थः । भोग्यत्वं प्रधानस्योक्तं तत्रश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्तास्य भोक्त्रपेक्षेतिभावः । अधिष्ठातेति । यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टम् । यथा रथादि यन्त्रादिभिः । सुखदुःखमोहात्मकञ्चेदं बुद्ध्यादि तस्मादेतदपि परेणाधिष्ठातव्यम् । सच पुरुष इत्यर्थः । साक्षीति । साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी यथाहि लोके अर्थिप्रत्यर्थिनौ विवादविषय साक्षिणे दर्शयतः । एवं प्रकृतिरपि स्वचरितविषयं पुरुषाय दर्शयतीति पुरुषः साक्षी इत्यर्थः । साच = प्रकृतिः । तस्य = पुरुषस्य । पुरुषस्य भोगो कैवल्यञ्च प्रधानस्य प्रयोजनमित्याह । भोगापवर्गतयेति । अभेदे तृतीया तस्याः प्रयोजनेऽन्वयः । भोगापवर्गाभिन्नप्रयोजनवतीति बोधः । तया = प्रकृत्या । सः = पुरुषः । पुरुषोऽगुणोऽपरिणामी कथमस्य मोक्षः मुचेर्बन्धनविश्लेषार्थत्वात् । सवासनक्लेशकर्माशयानाञ्च बन्धनसंज्ञितानां पुरुषेऽपरिणामिन्यसम्भवात् । अतएवास्य न संसारः प्रेत्यभावापरनामास्ति निष्क्रियत्वात् कथमुक्तं पुरुषविमोक्षार्थमित्याशङ्क्याह । सच नित्यनिर्विकारचैतन्यमात्रस्वरूपइति । पुरुषगतं चैतन्यं प्रकृतावारोप्यते पुरुषवृत्तिकर्तृत्वं प्रकृतावारोप्यते तस्मात्प्रकृतिरेव बध्यत इत्याह । पुरुषसन्निधिमात्रेणेति । प्रकृतिरेव बध्यत इति । तदुक्तं "तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित् संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिरिति" । अध्यासरूपाः बन्धमोक्षसंसाराः पुरुषे सन्तीत्याह । अध्यासरूपबन्धादय इति । विपक्षे बाधकतर्कमाह । अन्यथेति । पुरुषे तादृशबन्धानभ्युपगमे । इतिबहुतरपूर्वापरविरोधस्य जागरूकत्वान्नादर्तव्या साङ्ख्यस्मृतिरित्याह । इत्येवमिति ॥ १० ॥ इतिरचनानुपपत्त्यधिकरणम् ॥

अथ महद्दीर्घाधिकरणम्

आनुमानिकप्रधानकारणवादवदानुमानिकपरमाणुकारणवादो निराकर्त्तव्य इत्याह । अथेति । प्रधानकारणवादनिराकरणानन्तरमित्यर्थः । तार्किकतन्त्राभिमतसिद्धान्तं दर्शयति । तथाचायमिति । परमाणूनां चातुर्विध्यमाह । पार्थिवाप्येति । परमाणूनां साधर्म्यमाह । तेषामिति । पारिमाण्डल्यपरिमाणा इति । परमाणुः परिमण्डलस्तद्गतमणुपरिमाणं पारिमाण्डल्यमित्युच्यते तच्च स्वसमानजातीयगुणारम्भकं न भवतीत्यर्थः । कारणत्रैविध्यं दर्शयति । सर्वत्रेति । तदुदाहरति । यथेति । तेषाम् = तन्तूनाम् । प्रलीने जगति प्राणिकर्मोन्मेषविशेषोपधानादीश्वरस्येच्छायां सिसृक्षारूपायां सत्यां निश्चलेषु निरवयवेषु परमाणुष्वाद्य कर्मोत्पद्यते तेन कर्मणा परमाणुद्वयं संयुज्यते संयुक्तेन परमाणुद्वयेन द्व्यणुकं ह्रस्वमारभ्यते । त्रिभिर्द्व्यणुकैर्महत्परिमाणकं त्र्यणुकमुत्पद्यत इत्यादिक्रमेण सर्वं जगदुत्पद्यत इत्याह । तत्रेश्वरेच्छावशेनेति । द्रव्याणि द्रव्यान्तरमारभन्त इति सूत्रार्थमुक्त्वा

कार्यनिष्पत्तिः यथा पटरूपकार्यस्य तन्तवः समवायिकारणं तेषामितरेतरसंयोगोऽसमवायिकारणं, तुरीवेमकुविन्दादिनिमित्तकारणं, तत्रेश्वरेच्छावशेनाद्यं कर्म वायवीयेषु परमाणुषूत्पद्यते, ततः संयोगस्तेन द्वाभ्यां परमाणुभ्यां द्व्यणुकं ह्रस्वमुत्पद्यते, त्रिभिर्द्व्यणुकैस्त्र्यणुकं महदुत्पद्यते, चतुर्भिस्त्र्यणुकैश्चतुरणुकमित्येवं क्रमेण महान्वायुरुत्पद्यते, एवं तैजसपरमाणुभ्यो महानग्निः, आप्येभ्योमहान् जलधिः, पार्थिवेभ्योमहती पृथिव्युत्पद्यते। कारणगुणेभ्यश्च कार्ये गुणान्तरमुत्पद्यते। यथा परमाणुगतशुक्लादिभ्योद्व्यणुकशुक्लादिः तद्गतद्वित्वसङ्ख्यातश्च द्व्यणुके ह्रस्वत्वाणुत्वे परिमाणे चोत्पद्येते, परमाणुपरिमाणरूपपारिमाण्डल्यं तु न द्व्यणुके पारिमाण्डल्यान्तरमारभते, ततोऽप्यतिसौक्ष्म्यापत्तेः। द्व्यणुकगतत्रित्वसङ्ख्यातस्त्र्यणुके महत्त्वदीर्घत्वपरिमाणे चोत्पद्येते, द्व्यणुकगतह्रस्वत्वाणुत्वे तु महत्त्वादेर्नारम्भके प्रथमानुपपत्तेः, संहारे चेश्वरेच्छया परमाणुषु कर्म, तेन संयोगनाशस्तेन द्व्यणुकनाश इत्येवं क्रमेण पृथिव्यादिनाश इति तस्याप्यसामञ्जस्यं प्रतिपाद्यते—

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्। २। २। ११॥

पूर्वतोऽसमञ्जसमिति वर्त्तते। वेति चार्थे। अनुक्तं ह्रस्वद्व्यणुकवदिति समुच्चिनोति।

---

गुणाश्च गुणान्तरमिति सूत्रार्थमाह। कारणगुणेभ्य इति। तदुदाहरति। यथेति। द्व्यणुकगतह्रस्वत्वाणुत्वपरिमाणं प्रति द्व्यणुकगतद्वित्वसङ्ख्यायाः कारणत्वमित्याह। तद्गतद्वित्वसङ्ख्यातश्चेति। द्व्यणुकगतद्वित्वसङ्ख्यातश्चेत्यर्थः। परमाणोरणुपरिमाणन्तु न द्व्यणुकपरिमाणकारणं तथात्वे परिमाणत्वं स्वजातीयोत्कृष्टपरिमाणजनकत्वव्याप्यमिति नियमेनाणुपरिमाणजन्यस्याणुतरत्वापत्तिस्तथासति त्रुटेः प्रत्यक्षत्वं न स्यादित्याशयेनाह। परमाणुपरिमाणरूपपारिमाण्डल्यमिति। द्व्यणुकगतत्रित्वसङ्ख्याजन्यं त्र्यणुकमहत्वदीर्घत्वपरिमाणमित्याह। द्व्यणुकगतत्रित्वसङ्ख्यात इति। त्र्यणुकगतमहत्वपरिमाणं प्रति द्व्यणुकगतह्रस्वत्वाणुत्वे न कारणे तथासति त्र्यणुकस्य महत्वदीर्घत्वपरिमाणवत्वं न स्यादित्याह। द्व्यणुकगतह्रस्वत्वाणुत्व इति। उत्पत्तिक्रमं निरूप्य संहारक्रमं दर्शयति। संहारेचेति। तस्य = तार्किकसिद्धान्तस्य। सूत्रं व्याचष्टे। पूर्वत इति। चार्थं स्पष्टयति। अनुक्तमिति। अणुह्रस्वेभ्यो द्व्यणुकेभ्योऽणुद्रव्यं न जायते ह्रस्वमपि न जायेत इति व्यभिचार इत्याह। ह्रस्वपरिमण्डलाभ्यामिति। तत्र परमाणूनां निरवयवत्वं तावदयुक्तं यथाङ्गुलिद्वयं प्रत्येकं दशदिक्सम्बन्धिदशदेशावच्छिन्नं परस्परं संश्लेष्यमाणमेकया महादिशा विदिग्द्वयेन चावच्छिन्नैः प्रत्येकं त्रिभिस्त्रिभिः प्रदेशैः संश्लिष्यते इत्येकं षड्भिः पार्श्वैः संयुज्यते एव पटारम्भकास्तन्तवः संश्लेष्यमाणाः षड्भिः पार्श्वैः संयुज्यमानाः प्रत्येकमसंयुक्तसप्तपार्श्वयुक्तास्सन्तः स्वाधिकपरिमाणं पटमारभन्त इति दृष्टम्। एव परमाणवोऽपि षड्भिः पार्श्वैस्संयुज्यमाना एव परिमाण्डलाख्यस्वपरिमाणाधिकपरिमाणमणुत्वह्रस्वत्वयुक्तद्व्यणुकंमहत्वदीर्घत्वयुक्तत्र्यणुकादिकार्यमारभन्त इति वक्तव्यमिति परमाणूनां प्रदेशोऽवश्यमङ्गीकर्त्तव्यः अन्यथा परिमण्डलात् परमाणोरणुह्रस्वस्य द्व्यणुकस्य द्व्यणुकान्महतो दीर्घस्य त्र्यणुकस्य च प्रथमानुपपत्तेरित्याशयेनाह। तथाहीतीत्यादिना ननु माभूत् परमाणुतः प्रथिमा द्व्यणुकस्य द्व्यणुकात् त्र्यणुकस्य प्रथमा तु कारणबहुत्वात् भविष्यतीत्यत्राह। कारणबहुत्वेनेति। कल्पनामात्रत्वादिति। कारणबहुत्वात् त्र्यणुकस्य प्रथमात्वं यदि स्वीक्रियते तदा परमाणोः पारिमाण्डल्यपरिमाणं द्व्यणुकस्याणुत्वह्रस्वत्व इतिविभागाभावप्रसङ्गात्। परमाणुद्वयसंयोगस्य व्याप्यवृत्तित्वे द्व्यणुकस्यापि परिमण्डलत्वापत्तेः। द्व्यणुकोत्पादकपरमाण्वोस्संयोगमभ्युपगच्छतस्तेनैव तयोः प्रदेशसिद्धेश्च। नहि परमाणूसंयोज्यमानौ द्वावपि समानदेशौ सन्तौ संयुज्येते। मूर्त्तानां समानदेश-

ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् त्र्यणुकोत्पत्तिवादवत् अणुह्रस्वद्व्यणुकोत्पत्तिवादवच्चान्यदपि काणादमतं सर्वमसमञ्जसमिति। तथाहि—तन्त्वाद्यवयवानां स्वांशैः षड्भिः पार्श्वैः संयुज्यमानानामेव पटाद्यवयवव्युत्पादकत्वदर्शनात्परमाणवोऽपि सावयवा एव द्व्यणुकाद्युत्पादकाः स्युः अन्यथा परमाणुसहस्रस्यापि संयोगे पारिमाण्डल्यानतिरिक्तपरिमाणतयाऽणुत्वह्रस्वत्वमहत्वाद्यसिद्धिर्भवेत्, कारणबहुत्वेन कार्यमहत्वोत्पत्तेश्च कल्पनामात्रत्वात्। तेषां सावयवत्वाङ्गीकारे चानवस्था॥ ११॥

## उभयथाऽपि न कर्मातस्तदभावः। २। २। १२॥

आद्यकर्मोत्पत्तिरनुपपन्ना प्रलये यत्नाभिघातादीनां कर्महेतूनामभावात्। शरीरप्रविष्टे हि मनस्यात्ममनः संयोगे सत्यात्मगुणस्य प्रयत्नस्य जायमानत्वात्तदा च शरीराभावात्स न संम्भवति, ईश्वरेच्छायाश्च नित्यत्वेन नित्यं तत्प्रसङ्गः स्यात्, न चादृष्टस्यात्र हेतुत्वं कल्प्यते इति वाच्यं, विकल्पासहत्वात्। तथाहि परमाणुगतमाद्यं कर्म स्वगतादृष्टप्रयुक्तमात्मगतादृष्टप्रयुक्तं वा ? नाद्यः, अदृष्टस्यात्मासाधारणधर्मविशेषस्य परमाणुवृत्तित्वासम्भवात्, अनभ्युपगमाच्च। अभ्युपगमे च सदोत्पादकत्वप्रसङ्गादपसिद्धान्तापत्तेश्च, अदृष्टस्याचेतनत्वेन प्रवर्त्तकत्वासम्भवाच्च। न द्वितीयः। तस्यात्मगत्वेऽपि तदात्मनां चैतन्याभावेन कार्य्योत्पा-

---

ताविरोधात् अतः प्राक्प्रत्यग्भावेन दक्षिणोत्तरभावेन ऊर्ध्वाधरभावेन वा भिन्नदेशस्थितौ संयुज्येते इत्येव वक्तव्यम्। तथासति यद्देशस्थितपरमाणुः येन परमाण्वन्तरेण संयुज्यते स तद्देशान्यदेशावच्छिन्नेनापि तेन किं संयोक्तुमर्हति अनर्हत्वे वा कथ तस्मिन् प्रदेशभेदो न भवेदिति त्वमेव परिभावय। तस्मात् द्व्यणुकत्र्यणुकादिजननतत्परिमाणातिशयसिद्ध्यर्थं परमाणुषडंशत्वमनिच्छद्भिरपि परमाणुवादिभिरङ्गीकार्यः। तदङ्गीकारे तत्तदंशानामपि उक्तन्यायेन सांशतायामनवस्था प्रसज्यते तथाचानन्तावयवारब्धत्वाविशेषात् मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गः। अतस्सांशत्वमपि नाङ्गीकारार्हमिति चेत् तर्हि सांशत्वे त्वनवस्था निरंशत्वे द्व्यणुकोत्पाद्यनुपपत्तिरिति पक्षद्वयेऽपि समापतद्दोषं परमाणुकारणवादव्यसनमेव त्यक्त्वा सुखी भव इत्यभिप्रेत्याह। तेषां सावयवत्वाङ्गीकार इति। तेषां = परमाणूनाम्॥ ११॥

अग्रिमसूत्रमवतारयति। किमत्रेति। प्रलये निश्चलेषु परमाणुषु सर्गाद्यकालद्व्यणुकारम्भकसंयोगोत्पादककर्महेतूनामसत्वात्। न तत्संयोगस्य सम्भवनापीत्याह। आद्यकर्मोत्पत्तिरिति। यद्यत्कार्य्यं तत्सनिमित्तकमिति नियमेन कर्मणश्च किञ्चिन्निमित्तं वक्तव्यं तच्च प्रयत्नाभिघातादिवेत्याह। प्रलय इति। सम्प्रति शरीरचेष्टोत्पत्तिं प्रति यत्नाख्यं कारणमस्ति तरुचलने पवनाभिघातः शरीरादेर्नोदनादि तथाणुष्वाद्यकर्मोत्पत्तौ न किञ्चिदपि कारणमुपलभ्यते इत्यर्थः। अभिघातादीत्यादिपदेन नोदनगुरुत्ववेगस्थितिस्थापका गृह्यन्ते क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषोऽभिघातो यथोद्यमितनिपतितमुसलस्योलूखलेन संयोगः, नोदनन्तु संयुक्तस्य यत्नविशेषापेक्षः स एव संयोगो यथाक्षेपानुकूलयत्नापेक्षः सन्नद्धकरशरसंयोगो नोदनेन तुल्ययोगक्षेमः सँस्कार इति विवेकः। आदिसर्गे। यत्नायोगं साधयति। शरीरप्रविष्ट इति। आत्ममनःसयोगस्य तदाभावात्तन्निमित्तप्रयत्नस्य कथं मत्रायोगोक्तिस्तत्राह। शरीराभावादिनि। ईश्वरेच्छावशेन परमाणुष्वाद्यकर्मनिष्पत्तिरित्यत्राह। ईश्वरेच्छायाश्चेति। तत्प्रसङ्ग = परमाणुषु कर्मप्रसङ्गः। अग्नेरूर्ध्वंजलन वायोस्तिर्य्यक्पवनमणुमनसोश्चाद्यं कर्मेत्येतानि अदृष्टकारितानीत्यभ्युपेयते। अतोऽदृष्टवशादुत्पन्नेन कर्मणा संयोगस्सम्भवतीत्याशंक्य परिहरति। नचेति। परमाणुष्वाद्यकर्मजनकमदृष्टम् परमाणुसमवेतमाहोस्विदात्मसमवेतं वेति विकल्पयति। तथा हीत्यादिना

दनयोग्यताऽसम्भवात् । अन्यथा प्रलयाभावप्रसङ्गो दुर्वारः, तदेवं नियतस्य कस्य चित्कर्महेतो-रभावान्न कर्मोत्पत्तिस्तदभावाच्च न संयोगः, नापि विभागस्तथात्वे च सर्गप्रलययोरभाव एव स्यात् ॥ १२ ॥

अथायुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः समवायः, यथेह तन्तुषु पटः, गवि गोत्वं, पटे शुक्लादिरूपमिति कार्यकारणयोः सामान्यविशेषयोर्गुणगुणिनोश्च सम्बन्धः समवाय एव । स चैको नित्यः सर्वगतो व्योमवदिष्यते, युतसिद्धानां तु संयोगः सम्बन्धः, यथा पृथक्सिद्धयो रज्जूघटयोरित्यपि तत्सिद्धान्तस्तत्र समवायसम्बन्धं निराकरोति—

## समवायाभ्युगमाच्च साम्यादनवस्थितेः । २ । २ १३ ॥

तदभाव इत्यनुवर्त्तते । कार्यकारणयोः समवायाभ्युपगमाच्च प्रकृतकणभुक्प्रक्रियाऽस-म्भवः । कुतः ? साम्यात्, समवायस्यापि सम्बन्धित्वसाम्यात् । तथाहि यथा द्व्यणुकं समवायसम्बन्धेन स्वकारणे समवैत्यत्यन्तभिन्नत्वात् तथा समवायोऽपि समवायिभ्यां समवा-यसम्बन्धान्तरेण सम्बध्येत. अत्यन्तभेदसाम्यात् । सोऽपि सम्बन्धान्तरेणेत्यनवस्थानात् ।

---

स्वगतादृष्टप्रयुक्तमिति । परमाणुगतादृष्टप्रयुक्तमित्यर्थः । अदृष्टं ह्यात्मसमवेतं ननु परमाणुसमवेतमित्याशयेनाद्यपक्षं निरस्यति । नाद्यः । अनभ्युपगमादिति तार्किकाणां नये अदृष्टस्यात्मनिष्ठत्वेन स्वीकारान्नतत्परमाणुनिष्ठम् । अतएवादृष्टाधिष्ठातृतया ईश्वरसिद्धिः कुसुमाञ्जलौ कृता इतिभावः । यदि स्वाश्रयसंयुक्तसम्बन्धेनादृष्टं परमाणु-वृत्तीत्युच्यते तत्राह । अभ्युपगम इति । परमाणुवृत्त्यदृष्टस्य सार्वदिकतया सर्वदा सृष्ट्युत्पादापत्तेरित्याह सदोत्पादकत्वप्रसङ्गादिति । यदादृष्टस्य विपाककालस्तदा तत्फलमुत्पादयति प्रलये तस्य विपाककालासम्भवान्न तदानीं जगत्कल्पनाप्रसक्तिरित्यत आह अपसिद्धान्ताच्चेति । हरितक्यादिद्रव्यस्येवात्मगुणस्या दृष्टस्य विपाकासम्भवान्नोक्तप्रकारः साधीयानित्यर्थः । आत्मसमवेतमदृष्टमिति द्वितीयविकल्पं निरस्यति । न द्वितीय इति । तस्य = अदृष्टस्य । तदा = सर्गाद्यकाले । चैतन्यायागेनेति तार्किकाणां मते आत्मनि चैतन्यमागन्तुकं कारणसामग्री-प्रयोज्यमिति यावत् । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । आत्मसमवेतादृष्टस्य कार्यजनकत्वे । दृष्टादृष्ट-निमित्तयोरुभयोरसत्वान्न परमाणुकर्मस्तदभावान्न द्व्यणुकोत्पत्तिरितिनिगमयति । तदेवमिति । तदभावात् = कर्मणोऽभावात् । तत्संयोगः=परमाणुद्वयसंयोगः । यथा संयोगोत्पत्यर्थं कर्म नास्ति विभागोपत्यर्थमपि तन्नास्तीत्याह । नापीति । तथात्वे = संयोगविभागजनककर्मणोऽभावे ॥ १२ ॥

तार्किकमतरीत्या समवायस्थ लक्षणं दर्शयति । अथेति । ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धावित्यर्थः । तदुक्तं कणादसूत्रे ' इहेति यतः कार्यकारणयोस्समवाय"इति । इहप्रत्ययस्य सर्वत्राधाराधेय-भावनिर्वाहकसमवायविषयत्वस्यावश्यंभावेन समवायस्सिद्ध्यतीत्याशयः । विशिष्टबुद्धौ विशेषणविशेष्यसंसर्गविष-यत्वेनापि तत्सिद्धिरित्यपि बोध्यम् । अयुतसिद्धानां समवायमुदाहरति । यथेह तन्तुषु पट इति । युतसिद्धानां संयोगं दर्शयति । यथेति । अप्रामाणिकपरमाणुकारणवादाभ्युपगमादसमञ्जसवैशेषिकमतं तथा समवायाभ्युप-गमादप्यसमञ्जसमित्याशयेन परिहरतीत्याह । तत्र समवायसम्बन्धमिति । सूत्रं व्याचष्टे । तदभाव इति । अयुतसिद्धेष्ववयविगुणक्रियाजातिषु अयुतसिद्ध्युत्पादनार्थं समवायोऽभ्युपगम्यते तदा समवायस्यापि सम्बन्धान्तरमपे-क्षणीयम् अयुतसिद्धिसाम्यात् । एवं तस्य तस्यापि सम्बन्धान्तरस्यायुतसिद्ध्युत्पादकं सम्बन्धान्तरमपेक्षणीयमित्यनवस्था स्यादित्याशयेनाह । समवायस्यापीति । सम्बन्धित्वसाम्यादिति । समवायिसम्बन्धित्वात् । यथाऽवयवाभ्या-मत्यन्तभिन्नोऽवयवी समवायेनावयवाभ्यां सम्बध्यते । एवं समवायोऽपि सम्बन्धिभ्योऽत्यन्तभिन्नोऽन्येन समवायेन समवायिभिःसम्बध्येत । अत्यन्तभेदसाम्यात् । तस्यापि सम्बन्धान्तरमन्वेषणीयमित्युपपादयति । तथा-

अतो न समवायाभ्युपगमः प्रामाणिकः । नच समवायस्य स्वयं सम्बन्धरूपत्वान्न सम्बन्धान्तरापेक्षेति वाच्यं, संयोगस्यापि सम्बन्धरूपत्वसाम्येन समवायाऽनपेक्षत्वापत्तेः । तथात्वे च संयोगस्य संयोगिभ्यां संबन्धः समवायपूर्वक इति प्रतिज्ञाभङ्गापत्तेः । नच संयोगो गुणत्वात्समवायमपेक्षत इति वाच्यं, पारिभाषिकमात्रत्वात्, समवायस्यापि गुणत्वं वक्तुं शक्यते, न च कार्यकारणयोरयुतसिद्धत्वं, कारणस्य पूर्वसिद्धत्वात्कार्यस्योत्तरकालीनत्वात्, तथात्वेऽपृथक्सिद्धत्वासम्भवात् । न चान्यतरापेक्षत्वमयुतसिद्धत्वमिति वाच्यं, तथापि द्वयोः सतोः सम्बन्ध इति कृत्वोत्पन्नं कार्यं क्षणमात्रं पृथगवस्थाय समवायेन सम्बध्यत इति दूषणस्य तादवस्थ्यात् । अथोत्पत्तिरेव समवाय इत्यप्ययुक्तं, तथात्वे समवायस्य नित्यत्वासम्भवात्, उत्पत्तिनित्यत्वयोरत्यन्तविरोधात्, उत्पत्तेर्नित्यत्वाङ्गीकारे कार्यत्वावच्छिन्नस्य नित्यत्वापत्तेः कारकव्यापारानर्थक्याच्च । तस्मात्तादात्म्यलक्षण एव सम्बन्धो न समवायकृत इति ॥ १३ ॥

## नित्यमेव च भावात् ॥ २ । २ । १४ ॥

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्भावान्नित्यसृष्टिप्रसङ्ग इत्यक्षरार्थः । अयमभिप्रायः परमाणवः प्रवृत्तिस्वभावाः ? निवृत्तिस्वभावाः ? उभयशीलाः ? अनुभयशीला वा ? आद्ये, सृष्टेर्नित्यत्वं प्रलयाभावश्च । द्वितीये सर्गाभावो नित्यप्रलयप्रसक्तिश्च । न तृतीयचतुर्थौ उभयस्वभावत्वस्येतरेतरविरोधात्सर्वथाऽनुपपत्तिरिति ॥ १४ ॥

---

हीत्यादिना । अवयवावयविनोर्विशिष्टबुद्धिनिर्वाहकस्समवायः स्वतन्त्रसम्बन्धो न सम्बन्धान्तरमपेक्षत इत्याशङ्क्य परिहरति । नचेति । स्वभावादेव स्वरूपेण नित्यसम्बन्धः समवायो न सम्बन्धान्तरेणेति नानवस्थेत्यर्थः । समवायस्य स्वाभाविके सम्बन्धिपारतन्त्र्ये संयोगस्यापि स्वतः संयोगितन्त्रत्वयोगात्तस्य संयोगिभ्यां समवायकल्पना न स्यादिति विपक्षे दोषमाह । संयोगस्यापीति । ततः किमित्यत आह । तथात्वेति । संयोगस्य स्वतः संयोगितन्त्रत्व इत्यर्थः । संयोगस्य सम्बन्धान्तरापेक्षायां गुणत्वं हेतुः नच द्रव्यासमवेतो गुणो भवति । नच संयोगस्य समवायं विना समवेतत्वं तस्मात्संयोगस्यास्ति समवाय इत्याशङ्क्य परिहरति । नचेति । नहि गुणत्वं सम्बन्धान्तरापेक्षायां तन्त्रकर्मादीनामपि तदपेक्षत्वादित्याशयेनाह । पारिभाषिकमात्रत्वात् । आधुनिकसङ्केतःपरिभाषा तयाचार्थबोधकं वाक्यं पारिभाषिकमित्यर्थः । अयुतसिद्ध्युत्पादनार्थं समवायोऽभ्युपगम्यते कार्यकारणयोरयुतसिद्धत्वात्तयोरपि समवाय इत्यपि मतं निराकरोति । नचेति । कार्याव्यवहितप्राग्वृत्तित्वं कारणत्वं, कारणोत्तरवृत्तित्वं कार्यत्वं, कारणकार्ययोर्भिन्नकालीनत्वान्न तयोरयुतसिद्धत्वस्य सम्भवनापीत्यर्थः । तथात्वे = कार्यकारणयोः पूर्वोत्तरकालीनत्वे । प्रकारान्तरेणायुतसिद्धत्वं निर्वाच्य प्रागुक्तंदोषमपाकरोति । अन्यतरापेक्षत्वमिति । नहि कारणात्प्राक् कार्यं स्थातुं शक्नोति सत्कार्यवादापत्तेरतः कार्यकारणयोः विद्यमानतादशायां सम्बन्धो भवितुमर्हति नतु तयोः पूर्वकाले सम्बन्ध इति दूषणस्य जागरूकत्वात्समवायवादो हेय इत्याह । तथापीति । उत्पत्तिरेव समवाय इत्यपि रिक्तं वचः तस्य नित्यत्वहान्यापत्तेरित्याह । अथेति । तथात्वे = समवायस्योत्पत्तिरूपत्वे । नहि विरुद्धयोर्धर्मयोरेकत्र समावेशोऽन्यथा विरोधावधारणस्य दुरुपपादत्वादित्याशयेनाह । उत्पत्तिनित्यत्वयोरिति । उत्पत्तेर्नित्यत्वाङ्गीकारे दोषान्तरमाह । उत्पत्तेरिति । कार्यकारणयोस्तादात्म्यलक्षण एव सम्बन्ध इति व्युत्पादयन्निगमयति । तस्मादिति ॥ १३ ॥

सूत्रस्याक्षराणि व्याचष्टे । परमाणूनामिति । चतुर्धा विकल्पयति । अयमभिप्राय इत्यादिना । आद्यपक्षं निरस्यति । आद्य इति । द्वितीयेऽनुपपत्तिं स्फोरयति । द्वितीय इति । चरमपक्षावभिप्रेत्याह । न तृतीयचतुर्थाविति ॥ १४ ॥

## रूपादिमत्वाच्च विपर्य्ययोदर्शनात् ॥ २ । २ । १५ ॥

परमाणवो रूपादिगुणवन्तो न वा ? आद्ये रूपादिमत्त्वाच्च परमाणूनां नित्यत्वविपर्यं-योऽनित्यत्वं स्यात्, रूपादिमतां घटादीनामनित्यत्वदर्शनात् । परमाणवोऽनित्यारूपादिमद्द्र-व्यत्वात् घटादिवदिति प्रयोगात् । द्वितीये सिद्धान्तभङ्गात्, कार्यस्यापि रूपादिशून्यत्वापत्तेश्च । अथ रूपादिर्नेष्येत कार्यं रूपादिमन्न स्यादतो रूपादिमन्तो नित्याश्चेति तव वचनात् ॥१५॥

## उभयथा च दोषात् ॥ २ । २ । १६ ॥

परमाणूनामुपचितगुणवत्त्वाङ्गीकारे सर्वेषां तुल्यत्वापत्तेः अप्स्वपि गन्ध उपलभ्येत तेजसि गन्धरसौ वायौ रूपरसगन्धाश्च तेषां स्थौल्यहेतुत्वात् परमाणूनामपि स्थूलत्वापत्त्याऽप-रमाणुत्वप्रसङ्गात् । अपचितगुणवत्त्वे च सर्वेषामेकैको गुणः स्यात्तथात्वे च तेजसि स्पर्शो-न स्यादप्सु रूपस्पर्शौ पृथिव्यां रूपस्पर्शरसा न स्युः कारणगुणपूर्वकत्वात्कार्य्यगुणानामित्यु-भयथापि दोषादिति सूत्रार्थः । ननु केचिदुपचितगुणाः केचिदपचितगुणा इति विचित्रत्वाङ्गी-कार इति चेन्न । तथाऽप्युपचितगुणानां परमाणुत्वहानिप्रसङ्गात्, दृश्यादृश्यादिमूर्त्तामूर्ताद्यवान्त-रविचित्रताया गुणोपचयनिबन्धनत्वात् चतुर्विधपरमाणूनां स्वतोभेदात् । सिद्धान्ते तु महाभूत-वृत्तिगुणानां नियमश्रुतिसिद्धत्वेन दोषाभावादिति भावः । शब्दस्पर्शरूपरसगन्धाः पृथिव्या-

---

यदि जगन्मूलकारणं रूपादिमत्स्यात्तदा तत्र नित्यत्वनिरवयवत्वयोर्विपर्ययस्स्यात् रूपादिमतामनित्यत्व-सावयवत्वदर्शनादिति तर्कानुगृहीतेन द्व्यणुकमूलकारणं रूपादिरहितं नित्यत्वान्निरवयवत्वादित्यनुमानेन पराहत-त्वादपि न रूपादिमत्परमाणुरूपकारणसिद्धिरित्यभिप्रेत्याह । परमाणव इति । यद्यनित्यत्वादिपरिहाराय परमाणूनां रूपादिशून्यत्वमुच्येत तदा कार्यगुणानां कारणगुणपूर्वकत्वनियमासिद्धिः । तत्सिद्धये रूपादिमत्वा-ङ्गीकारे चानित्यत्वापत्तिरित्याशयेन द्वितीयपक्षं निरस्यति । द्वितीय इति ॥ १५ ॥

परमाणुकारणवादानुपपत्तौ हेत्वन्तरमाह । उभयथेति । परमाणूनामतुल्यगुणत्वे तुल्यगुणत्वेच दोषध्रौव्यात्तद्वा-दासिद्धिरित्याह । परमाणूनामिति । यथा पृथिव्यां गन्धरूपरसस्पर्शादयो गुणा उपलभ्यन्ते तथाप्सु रूपादित्रयो गुणाः। "रूपस्पर्शौ तेजसि, स्पर्शगुणवान् वायुः" इति चतुर्णां भूतानामुपचितापचितगुणवत्वमुपलभ्यते तद्वत् परमाणूना-मप्युपचितापचितगुणवत्वमस्ति नवेति विकल्प्याद्यपक्षमभिप्रेत्याह । उपचितगुणवत्वाङ्गीकार इति । सर्वगुणानां सर्वत्र स्वीकारे कार्यगुणाः कारणगुणपूर्वका इति तन्मतसिद्धनियममभिप्रेत्याह । सर्वेषामिति । गुणानामुपचयस्य हि द्रव्यस्थौल्ये हेतुत्वात् परमाणूनां तथात्वेऽपरमाणुत्वप्रसङ्ग इत्याह । तेषामिति । उपचितगुणानामित्यर्थः । मूर्त्तेः स्थौल्यं विना गुणानामुपचयो न भवति कार्येषु भूतेषु तथात्वोपलब्धेरितिभावः । द्वितीयपक्षमभिप्रेत्याह । अपचितगुणवत्वेचेति । तथात्वेति । एकैकगुणवत्वे । क्षितौ रूपरसस्पर्शगन्धा उपलभ्यन्ते सा उपचितगुणा तदन्ये भूता अपचितगुणा इति वैलक्षण्याङ्गीकारेण नोक्तदोषः पदमादधातीत्याशङ्कते । नन्वित्यादिना । पृथिव्यां चतुर्गुणवत्वदर्शनात्परमाणुष्वपि चतुर्गुणवत्वे मूर्त्युपचयात्स्थौल्यापत्तिर्दुर्वारेत्याशयेन परिहरति । नेति । कस्यचि-द्वस्तुनो दृश्यत्वं कस्यचिन्नेत्यत्र गुणानामेव नियामकत्वमित्याह । दृश्येति । परमाणूनां परस्परवैचित्र्यं गुणोपचया-पचयनिबन्धनं नतु स्वरूपभेदनिबन्धनमित्यर्थः । श्रुतिमूलके अस्मदीये सिद्धान्ते नोक्तदोषावकाश इत्याह । सिद्धा-न्तेत्विति । पृथिव्यादिचतुर्णां क्रमेण गुणान् श्रुतिप्रमाणेन दर्शयति । शब्दस्पर्शरूपरसगन्धा इति । तेषु=उक्ते-षुगुणेषु । उक्तार्थं श्रीपराशरवचसा द्रढयति । आकाश इति । आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविशत् । द्विगुणस्तु

गुणास्तेषु गन्धहीनाश्चत्वारोऽपां गुणास्तेषु रसहीनास्त्रयो गुणा अग्नेः शब्दस्पर्शाविति वायोः शब्द एक आकाशस्ये"ति लौकिकोपनिषच्छ्रुतेः। "आकाशवायुतेजांसि सलिलं पृथिवी तथा। शब्दादिभिर्गुणैर्ब्रह्मसंयुक्तान्युत्तरोत्तरैरि"ति विष्णुपुराणोक्तेश्च सर्वज्ञसर्वशक्तिब्रह्माधिष्ठितत्वाच्च महाभूतादिप्रपञ्चस्येत्यलं प्रासङ्गिकेन ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २ । २ । १७ ॥

प्रधानकारणवादस्य कश्चित्सत्कार्यवादाद्यंशो मन्वादिभिरौपनिषदैर्गृहीतः असत्कार्यवादस्य वैशेषिकादिपरिकल्पितपरमाणुकारणवादस्य च केनाऽप्यंशेनापरिग्रहादत्यन्तमनपेक्षातिशयेनानादरणीयोऽयं पक्षः श्रेयोऽर्थिभिरिति सूत्रकृतोऽभिप्रायः ॥ १७ ॥

इतरव्यपदेशाधिकरणम्।

## समुदाये उभयहेतुकेऽपि तदप्राप्तिः ॥ २ । २ । १८ ॥

बौद्धसिद्धान्तग्राहिणो हि चत्वारस्तत्र बाह्यार्थास्तित्ववादिनौ वैभाषिकसौत्रान्तिकौ, तयोरपि बाह्यार्थप्रत्यक्षवादी आद्यः, विज्ञानानुमेयबाह्यार्थवादी द्वितीयः, निरालम्बनविज्ञानास्तित्ववादी योगाचारः, त्रयोऽप्येते स्वाभ्युपगतं वस्तु क्षणिकं वदन्ति। सर्वशून्यवादी माध्यमिकः, सचाऽऽसंस्कारक्षयात् ग्राह्यग्राह्याकाकारविमुक्ता संवित्सन्ततिर्निर्वातस्थदीपवत् क्षणपरम्परयाऽवतिष्ठते संस्कारक्षये सा प्रदीपवदेव निर्वाणमृच्छति सेयमभावप्राप्तिरपवर्ग इति मन्यते। अन्ये तु सन्तत्यविच्छेदमिच्छन्ति। तत्र बाह्यार्थास्तित्ववादिमतं भूतभौतिकचित्तचैत्यभेदेन समुदायद्वयम्, तथाहि-रूप-विज्ञान-वेदना-संज्ञासंस्काराख्याः-पञ्चस्कन्धाः। तत्र रूपस्कन्धो नाम पृथिव्यादीनि चत्वारि भूतानि भौतिकं च शरीरेन्द्रियविषयरूपम्। तत्र रूपरसगन्धस्पर्शाः

---

ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥१॥ रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ। त्रिगुणस्तु ततो वह्निः स शब्दस्पर्शवान् भवेत् ॥२॥ शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत्। तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥३॥ शब्दः स्पर्शश्च रूपञ्च रसश्चेद्गन्धमाविशत्। संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् ॥४॥ तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते। शान्ताः घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः। परस्परानुप्रवेशाद्धारयन्ति परस्परमिति स्पष्टतया तत्रैव स्मर्यते ॥ १६ ॥

साङ्ख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकपरिग्रहोऽस्ति वैशेषिकपक्षस्य तु केनाऽप्यंशेनापरिग्रहादत्यन्तमनपेक्षैव कार्येत्याह प्रधानकारणवादस्येत्यादि ॥ १७ ॥

अथ इतरव्यपदेशाधिकरणम्

माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाश्चतुर्विधा बौद्धाः। ते सर्वेऽप्यादिबुद्धस्य शिष्याः क्रमेण सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादिनः। तत्र "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते। अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः। यथा यथा विचार्य्यन्ते तथा तथे"त्यादिन्यायैः गुरुणा सर्वशून्यत्वं बोधितेषु शिष्येषु ये गुरूक्तं तथैवाङ्गीकृत्य पर्यनुयोगं नाकुर्वन् ते गुरूक्तस्य श्रद्धयाङ्गीकरणादुत्तमाः। तत उपरि पर्य्यनुयोगकरणादधमाश्चेत्युत्तमाधमत्वयोगात्। मध्यमां स्थितिमास्थिता माध्यमिकाः। ये तु "बाह्यार्थानां शून्यत्वमङ्गीकृत्य कथं विज्ञानस्यापि शून्यत्वं जगदान्ध्यप्रसङ्गादिति पर्यनुयोगमनुकुर्वन् ते गुरूक्ताङ्गीकरणस्याचारसंज्ञया तन्मते पारिभाषितस्य च सद्भावात् योगाचाराः। गुरुणा तान् प्रत्यान्तरं विज्ञानमात्रमस्ति तदेव नीला-

खरस्वभावाः पार्थिवाः परमाणवः पृथिवीरूपेण संहताः पृथिवीव्यापारायावतिष्ठन्ते रूपरस-स्पर्शाः स्नेहस्वभावा आप्याः परमाणवः सलिलात्मना संहन्यन्ते रूपस्पर्शा उष्णस्वभावास्तै-जसास्तेजोरूपेण संहताः, तथा स्पर्शा ईरणस्वभावा वायवीया वायुरूपेण संहन्यन्ते। पृथिव्यादि-चतुष्टयं च शरीरेन्द्रियविषयरूपेण संहन्यते इत्येवमेते चतुर्विधाः क्षणिकाः परमाणवो भूतभौ-तिकसंघातहेतुत्वं प्रतिपद्यन्ते। सोऽयं परमाणुहेतुको भूतभौतिकरूपो रूपस्कन्धो बाह्यसमुदायः। विज्ञानस्कन्धो नामाभ्यन्तरोऽहंप्रत्ययसमारूढो घटज्ञानं पटज्ञानमित्येवमविच्छेदेन वर्त्तमानो-विज्ञानसन्तानः, अयमेव कर्त्ता, भोक्ता चात्मा नाऽन्योनित्योऽस्तीति। वेदनास्कन्धश्च सुखवेदना दुःखवेदना च, संज्ञास्कन्धो नामोपलक्षणप्रत्ययो यथा स्वस्तिमती गौरिति स्वस्ति-

आकारं ननु तद्व्यतिरेकेण बाह्यं नीलादिकमस्ति सहोपलम्भनियमेन नीलादीनां तद्विज्ञानानाञ्चाभेदसिद्धेः। भेदे गवाश्ववत्तन्नियमाभावप्रसङ्गात् तदेव विज्ञानाकारात्मकं नीलादिकमनादिवासनावशात् बहिर्वदवभासत इति बोधिते कथं सर्वथैव बाह्यार्थस्य शून्यत्वं बाह्यस्य नीलादेरवभासात्। अहमुल्लेखेन विज्ञान-स्यान्तरतया इदमुल्लेखेन नीलादेर्बाह्यतया च भेदेऽवभासमाने सहोपलम्भनियममात्रस्याप्रयोजकस्या-भेदसाधनाक्षमत्वात्। सहत्वोक्त्यैव भेदानुमितेश्चेति यैः पर्य्यनुयुक्तं तान् प्रति सत्यमस्ति बाह्यं नीलादिकं ननु तत्प्रत्यक्षम्। अनुत्पन्नस्याविद्यमानस्य प्रत्यक्षत्वायोगात्। उत्पन्नस्य क्षणिकस्य स्थित्यभावात्। किन्तूत्पद्यमानं नीलादिविज्ञाने स्वाकारं समर्प्य नश्यति। ततो विज्ञानगताकारेणातीतत्नीलादिकमनु-मीयते इति बोधिते सति तैरित्थं शिष्यप्रश्नानुरोधेन कियत्पर्य्यन्तमुपदेशसूत्रं प्रवर्त्तयिष्यत इति सूत्र-स्यान्ते पृष्टे गुरुणाऽभिहितम्। भवन्तः सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति। अतस्ते सौत्रान्तिकाः। ततो विज्ञानेनानुमेयं बाह्यमितीयं विरुद्धा भाषा। तस्यैव विज्ञानस्य तद्विषयप्रत्यक्षत्वात्। प्रत्यक्षस्य कस्यचिदर्थस्याभावे व्याप्तिसम्वेदनस्थानाभावेनानुमानाप्रवृत्तेश्चेति यैः पर्य्यनुयुक्तं ते वैभाषिकास्तान् बाह्यप्रत्यक्षत्वमुपदिष्टम्। एवं यथाश्रुतं स्वस्वप्रश्नोत्तरवाक्यार्थं श्रद्धधानास्ते तथैव मतभेदेनास्थिषत। तत्र वैभाषिकादिक्रमेण चतुर्विधानपि बौद्धान् निरसितुं क्रमेण चत्वार्य्यधिकरणानि। ततः क्षपणकान्निरसितुमेकमधिकरणम्। वैदिककापिलकणभुङ्नि-राकरणानन्तरमवैदिकास्ते निरस्यन्ते। तत्र पूर्वाधिकरणेऽसत्कार्यवादिनो वैशेषिका निरस्ता बौद्धसिद्धान्तस्य तत्तुल्यत्वात्तमपि निरस्यतीति सङ्गतिं प्रदर्शयन्नाह। बौद्धसिद्धान्तस्येति। बौद्धसिद्धान्तग्राहिणां माध्यमिकयो-गाचारसौत्रान्तिकवैभाषिकसंज्ञानां चतुर्णां सिद्धान्तं दर्शयति। बौद्धसिद्धान्तग्राहिण इति। बौद्धास्तु सर्वस्यापि प्रपञ्चस्य क्षणिकत्वमभ्युपगच्छन्तस्सर्ववैनाशिकाः। बौद्धेष्वपि वैभाषिकसौत्रान्तिकाः परमाणुवादिन इति कणाद-प्रत्यासत्त्या तदुभयसाधारणैस्सौत्रान्तिकसाधारणैश्च दूषणैरुभयेषां प्रथमाधिकरणे निरासः। द्वितीयाधिकरणे क्षणिकवादसाम्यात् योगाचाराणां ततो बौद्धत्वसाम्यात् माध्यमिकानां तदनन्तरमवैदिकत्वसाम्यात् क्षपणकाणा-मितिभावः। विज्ञानानुमेयबाह्यार्थवादी द्वितीय इति। सौत्रान्तिकानामतमित्थम्। ज्ञानगतैर्नीलाद्याकारैः बाह्यार्थगतास्तेऽनुमीयन्ते इन्द्रियसन्निकृष्टेन नीलाद्यर्थेन जायमानं हि ज्ञानं स्वयमप्यर्थवन्नीलाद्याकारं भवति। तज्ज्ञानं स्वप्रकाशतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोति ज्ञानस्य नीलादिषु नापरोक्ष्यानुभवः। नीलार्थिनो बहिः प्रवृत्तिस्तु नापरोक्षज्ञानात् किन्तु तदन्तरभाविन आनुमानिकज्ञानात्। यथा वायुनिषेवणार्थिन-श्शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिः नचाक्षुषशाखाचलनज्ञानात्। किन्तु तल्लिङ्गवायुसञ्चारविषयानुमानिक-ज्ञानादिति। निरालम्बनविज्ञानास्तित्ववादिन इति। आन्तरं विज्ञानमात्रमस्ति तदेव नीलाद्याकारं ननु तद्व्यतिरेकेण बाह्यं नीलादिकमस्ति सहोपलम्भनियमेन नीलादीनां तद्विज्ञानानाञ्चाभेदसिद्धेः। भेदे गवाश्ववत्त-न्नियमाभावप्रसङ्गात्। तदेव विज्ञानाकारात्मकं नीलादिकमनादिवासनावशात् बहिर्वदवभासत इति योगाचार इत्यर्थः। सर्वशून्यवादो माध्यमिक इति। ते खलु एवमाहुः—'नेष्टन्तदपि धीराणां विज्ञानं पारमार्थिकम्। एका-नेकस्वभावेन वियोगाद्वियदन्तवत्'। विज्ञानानामपि नीलपीतशीतोष्णाद्येकानेकस्वभावत्वविकल्पादौ स्थानान्नपर-

मत्तया गौरुपलक्ष्यते । ध्वजेन गृहं, दण्डेन पुरुष इति संस्कारस्कन्धो नाम रागद्वेषमोहमदमात्सर्यभयशोकविषादादयश्चैतसिका धर्माः, ते चामी चतुर्विधाः स्कन्धाश्चित्तचैतिका उच्यन्ते सर्वव्यवहारास्पदभावेनान्तः संहन्यन्ते । सोऽयं विज्ञानादिचतुःस्कन्धीहेतुक आन्तरः समुदायः सर्वं वस्तुजातं समुदायद्वयरूपं यदतोऽन्यत्तत्सर्वमवस्तु कालाकाशादि तावेतौ लोकयात्रामावहतः । सिद्धे च लोकव्यवहारे नित्येनात्मना नास्ति प्रयोजनमिति मन्येते । तत्रेदमभिधीयते उभयहेतुकेऽपि समुदायेऽभ्युपगम्यमाने तदप्राप्तिः समुदायासम्भवः, न तावत्स्वतः समुदायापत्तिः समुदायिनामचेतनत्वात् क्षणिकत्वाच्च, नाप्यन्यतः नित्यस्य भोक्तुः प्रशासितुः संहन्तुश्चेतनस्यानभ्युपगमात् । समुदायासिद्धौ स्थूलाभावेन व्यवहारो न सिध्येत्परमाणूनां च क्षणध्वंसित्वादतीन्द्रियत्वान्न तैर्व्यवहारोऽस्तीति लुप्येत लोकयात्रा ॥ १८ ॥

---

मार्थसत् । अतस्तुच्छमेवतत्त्वमिति । यावत्पर्यन्तं संस्कारस्य नाशो न भवति तावत्पर्य्यन्ताग्राह्यग्राहकाकारविमुक्ता चित्सन्ततिरनुवर्त्तते संस्कारक्षये तस्या अभाव इत्याह । सचेति । वैभाषिकमतं दर्शयति । अन्येत्विति । यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरभेदोऽस्ति तथापि सर्वास्तितायां सम्प्रतिपत्तिरस्त्येकीकृत्य दर्शयति । तत्रेति । तेषु समुदायद्वयमितिभूतं भौतिकं बाह्यम् । चित्तं चैतञ्च कामादि आन्तरमिति समुदायद्वयमित्यर्थः । भूतभौतिकचित्तचैतान् दर्शयति । तथाहीत्यादिना । रूपस्कन्धपदवाच्यं द्वयं भूतं भौतिकञ्च तदतिरिक्ताः स्कन्धाः चित्तचैतिका उच्यन्ते । अमुमर्थं स्पष्टयति । तत्र रूपस्कन्धो नाम पृथिव्यादीनीति । परमाणून् विभजते । तत्रेति । तेष्वित्यर्थः । खरस्वभावाः = कठिनस्वभावाः सर्वत्र सङ्घातः अवयवसमुदाय एव नतु तद्व्यतिरेकेण अवयविद्रव्यान्तरोत्पत्तिरस्ति तदुत्पत्तौ तत्र चाक्षुषत्वाद्यर्थं पृथग्रूपादिमत्वस्याभ्युपगन्तव्यत्वात् । अवयवरूपादिव्यतिरिक्तस्य चावयविनि रूपादेरनुपलम्भात् । नहि नानावर्णैस्तन्तुभिरारब्धे पटे तन्तुगतनानारूपव्यतिरेकेण पटरूपान्तरमुपलभामह इतिभावः । तार्किकैः परमाणूनां स्थिरत्वमभ्युपगम्यते वैभाषिकसौत्रान्तिकाना तार्किकप्रत्यासत्याऽतिशयोऽस्तीत्याह । एते चतुर्विधाः क्षणिका इति चतुर्विधेभ्यः परमाणुभ्यः भूताः पृथिव्यादयः भौतिकाः शरीरेन्द्रियाणि जायन्त इत्याह । परमाणव इति । विज्ञानस्कन्धं दर्शयति । विज्ञानस्कन्धो नाम इति । संज्ञास्कन्धमाह । संज्ञास्कन्धो नाम इति । तमुदाहरति । यथेति । तेचामीति । विज्ञानवेदनासंज्ञासंस्काराख्या इत्यर्थः । समुदायद्वयरूपमिति । भूतभौतिकस्वरूपरूपस्कन्धबाह्यसमुदाय एकः विज्ञानादिचतुस्कन्धीहेतुक आन्तरः समुदायः इत्यर्थः । बौद्धमते वस्तुतः कालो नास्ति । उद्यन्नेव स्वरस भंगुरो घटादिः क्षणकल्पनामात्रनिमित्तं भवति सच घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्वात् क्षणिक इत्युपचर्य्यते । इत्यभिप्रेत्याह यदतोन्यदिति । तेषां मतआकाशस्याप्यवस्तुत्वं तच्चाग्रे स्फुटीभविष्यति । तावेताविति । उक्तसमुदायद्वयमित्यर्थः । इति तेषां प्रक्रियानिरूपणम् । उक्तस्य बाह्याध्यात्मिकभावजातस्याध्यक्षानुमानाभ्यां क्षणिकत्वे सिद्धे स्थायिनो ब्रह्मणो जगत्सर्गवादिनस्समन्वयस्य विरोधोऽस्तीति प्राप्तमनूद्य सिद्धान्तयति । तत्रेदमभिधीयत इति । सूत्रं व्याचष्टे । उभयहेतुकेऽपीति । बाह्ये पृथिव्याद्यणुहेतुके भूतभौतिकसमुदाये विज्ञानादिस्कन्धहेतुके समुदाय इत्यर्थः । संघातः स्वतो वा परतो वा ? नाद्य इत्याह । समुदायिनामिति । चेतनो हि कर्ता भवति अचेतनानामणूनां स्वातन्त्र्येण प्रवृत्त्यसिद्धेर्न स्वतः सङ्घातो घटते । अणूनां भूतानाञ्च मेलनव्यापारं विना हेतुत्वे सर्वदा कार्योत्पादापत्तिः मेलनहेतुव्यापारविशिष्टानामणूनां भूतानाञ्च भूतभौतिकहेतुत्वं वक्तव्यं नच तत् क्षणिकत्वे घटते । येषां व्यापारावेशस्तेषां मेलनक्षणे नष्टत्वात् । येषां मेलनं तेषां व्यापारक्षणानुत्पन्नत्वात् । यस्य चेतनस्येन्द्रियसन्निकर्षः तस्य ज्ञानोत्पत्तिकाले यस्य ज्ञानोत्पत्तिस्तस्यग्रहानादिव्यवहारकाले च नष्टत्वात्, इत्यभिसन्धिः । द्वितीयपक्षमपि निरस्यति । नाप्यन्यत इति । नहि क्षणिकविज्ञानादन्यः कश्चिच्चेतनस्त्वयाभ्युपगम्यते । तस्मात्संहन्तुरभावे सङ्घातानुपपत्तिरित्यर्थः ॥१८॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न, सङ्घातभावाऽनिमित्तत्वात् ।१९।

कार्यं प्रत्ययते गच्छतीति व्युत्पत्तेः प्रत्ययशब्दो हेतुवाची । नन्वितरेतरहेतुत्वादुपपन्नमस्मद्दर्शनम् । तथाहि योऽयं विज्ञानस्कन्धोऽहंप्रत्ययसमारूढः सन्ततिरूपेण वर्त्तते तस्याविद्यादयोऽनादिकालप्रवृत्ता हेतवः, सच तेषामिति अविद्यानामविपरीतबुद्धिः, अस्थिरे स्थिरदृष्टिरमार्गे मार्गदृष्टिरिति । तया रागद्वेषादिलक्षणसंस्कारस्कन्धो जन्यते, ततः पुण्यापुण्यकर्मलक्षणा प्रवृत्तिः, ततोजन्मशरीरग्रहणम्, ततः पञ्चबुद्धीन्द्रियमनोरूपं षडायतनं, ततः षड्विज्ञानानीन्द्रियमनोविषयेषु रूपादिषूत्पद्यन्ते, तदेवं प्रमातृप्रमाणप्रमेयव्यवहारसिद्धेः सर्वमुपपन्नमिति चेत्तत्परिहरति । नेति । कुतः ? "सङ्घातभावाऽनिमित्तत्वात्" नह्यविद्यादीनां भूतभौतिकसङ्घातापत्तौ निमित्तत्वमुपपद्यते पूर्वपूर्वक्षणस्योत्तरोत्तरहेतुत्वेऽपि न सङ्घातापत्तिहेतुत्वं, विज्ञानस्य क्षणिकत्वात् । कर्मणोऽपि क्षणिकत्वादुत्पत्तिनिरोधमात्रं सर्वत्र भवेत् । न सङ्घातापत्तौ सामर्थ्यं शक्यं कल्पयितुं, प्रमाणाभावात् ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २ । २ । २० ॥

एवं पूर्वक्षणस्योत्तरहेतुत्वमभ्युपगम्यापि सङ्घातानुपपत्तिरित्युक्तमथेदानीं हेतुत्वस्याप्यसम्भव उपपाद्यते । उत्तरक्षणस्योत्पत्तिवेलायां पूर्वक्षणस्य निरोधात् विनष्टत्वात् उत्तरक्षणं प्रति हेतुत्वानुपपत्तिरेव । तथाहि पूर्वस्तावद्घटक्षणः, स किमुत्पन्नः सन्नुत्तरहेतुरनुत्पन्नोवा ? नानुत्पन्नः, शशविषाणतुल्यत्वात् । नाप्युत्पन्नः, अभाववत्तुच्छत्वात्. उत्पन्नविनष्टस्यानुत्पन्नस्य चाभावत्वाविशेषात् । अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत । ननु पूर्वक्षणविना-

---

सूत्रशङ्कापरं भागं विवृणोति । कार्यमिति । हेतुवाचीति । 'प्रत्ययो धीनशपथज्ञानविश्वासहेतुष्वि'तिनानार्थवर्गः । तदेवोपपादयति । तथाहीत्यादिना । अस्थिरेष्वपि स्थिरत्वभ्रान्तिरूपाऽविद्यास्ति साच विज्ञानस्कन्धस्य हेतुः सचाविद्यादीनामित्याह । याऽयमिति । तस्य=अहंप्रत्ययसमारूढस्य विज्ञानस्कन्धस्य । सचेति । विज्ञानस्कन्ध इत्यर्थः । तेषाम्=अविद्यादीनाम् । अविद्यां दर्शयति । अविद्यानामेति । तया अविद्यया । ततः=रागद्वेषमोहादितः । ततः=प्रवृत्तितः । ततः=शरीरात् । ततः=षडायतनात् । सूत्रस्योत्तरभागं व्याकुर्वन्नाह । इतिचेदिति । हेतुवाक्योत्थापकाकाङ्क्षां दर्शयति । कुत इति । हेत्वर्थमेव विवृणोति । नह्यविद्यादीनामिति । कारणाभावेन समुदायभावानुपपत्तावुक्तायां कारणोक्त्या हि तदुपपत्तिस्समर्थनीया । नचाविद्यारागादिपरमाण्वादिव्यापारनिरपेक्षस्समुदायहेतुः । शुक्तिरजतभ्रान्तिरूपाविद्यारजतरागादिनाऽपि शुक्तेश्शुक्तिरूपस्समुदायताप्रहाणेन रजतरूपसमुदायतापत्तिप्रसङ्गात् । अन्यस्याविद्ययान्यस्य रागादिजननेऽतिप्रसङ्गेनाविद्यारागादिप्रवाहानुपपत्तिरितिभावः ॥१९ ॥

पूर्वसूत्रोक्तमनूद्य अस्य सूत्रस्य भावं वक्ति । एवमित्यादिना । हेतुहेतुमद्भावो नोपपद्यते क्षणिकत्ववादे तथात्वे कथं लोकयात्राया निर्वाह इत्याह । उत्तरक्षणस्येति । हेतुत्वानुपपत्तिमेव दर्शयति । तथाहीत्यादिना । उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्य कारणत्वमभ्युपेयते तस्योत्पन्नस्य कारणत्वमाहोस्विदनुत्पन्नस्येति विकल्पयति । सक्किमुत्पन्न इति । अन्त्यपक्षं निरस्यति । नानुत्पन्न इति । आद्यपक्षं परिहरति । नाप्युत्पन्नइति । अभावस्यहेतुत्वमाशङ्क्याह । अभावस्येति अभावस्य सर्वत्र सुलभत्वादितिभावः । पूर्वस्य क्षणस्य विनाश उत्तरस्य क्षणस्योत्पत्तिश्च समानकालीनेत्याशङ्कते । नन्वित्यादिना । दृष्टान्तदार्ष्टान्तयोर्वैधर्म्यमाशङ्क्य परिहरति । नेति । तत्र =

शउचरक्षणोत्पत्तिश्च युगपद्भवेतां, तुलान्तयोर्नामोन्नानवदिति चेन्न, तत्र मध्ये सूत्रधारणा-दन्तयोश्च युगपदुपस्थितयोरेकस्य गुरुत्वान्नामस्तद्रहितस्योन्नामइति, न चात्रोत्तरोत्पत्तिकाले पूर्वस्य स्थितिरिष्यते, येनासौ तद्धेतुत्वं प्रतिपद्येत, अवतिष्ठते चेत् क्षणिकत्वहानिः। किञ्च कारणधर्मानुविधायित्वमन्तरेणेदं कार्यमिदं कारणमिति कल्पनायामतिप्रसङ्गो मृदन्विताः शरावादयो दृश्यन्ते सुवर्णान्विताश्च कुण्डलादयो नचाकारसमर्पणे सामर्थ्यं क्षणिकत्वात्त-स्मान्नित्यपक्ष एव कार्यकारणव्यवस्था युज्यते प्रत्यक्षप्रत्यभिज्ञानाच्च कुम्भादीनां नित्यत्वम्। ननु च नित्यत्वेऽपि कार्यकारणभावोनोपपद्यते, क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्। किं कुशू-लस्थोव्रीहिरंकुरजननस्वभावः? अतत्स्वभावोवा? यद्यतत् स्वभावो न कथंचिदपि जनयेत्। अथ तत् स्वभावस्तदानानीमेवोत्पादयेत्ततश्च यानि कर्माणि व्रीहिणा कर्तव्यानि तानि सर्वाणि युगपत्कुर्यात्। नच सामग्रीवशेनांकुरं जनयेदतत्स्वभावत्वे सामग्र्या अकिञ्चित्करत्वात्। यच्चोक्तं प्रत्यभिज्ञानाच्च नित्यत्वमिति तदनैकान्तिकं, प्रदीपज्वालादिष्वदर्शनात्। यदि च नित्योभावः स्यादन्ते विनाशदर्शनं न प्राप्नुयात्। अथ मुद्गरादिना घटस्य विनाशः क्रियति इति चेत्तदयुक्तं, तथाहि विनाशः किं द्रव्यभिन्नोऽभिन्नोवा क्रियते? आद्ये, घटस्य

---

तुलायाम्। दार्ष्टान्तेयोजयति। नचेति। येन पूर्वस्थितिमत्त्वेन। असौ=पूर्वक्षणः। तद्धेतुत्वम्। उत्तरक्षणहेतुत्वम्। यदि पूर्वक्षणस्य स्थितिरिष्यते तत्राह। अवतिष्ठतेचेदिति। कारणतावच्छेदक कार्यतावच्छेदकधर्ममन्तरा कार्यकारण-भावएव न भवितुमर्हति तथाच यद्येनान्वितं तं प्रति तस्यैव कारणत्वं यथा हेम्नान्विताः कुण्डलकटकादय इत्याशये-नाह। किञ्चेति। अतिप्रसङ्गः सर्वस्मादपिसर्वकार्योत्पादापत्तिरित्यर्थः। यद्येनान्वितं तत्तस्यकार्यं यथा हेम्नान्वितं रुचकादि तत्कार्यम्। अन्विताश्चभावेनातोभावस्यस्थिरकारणत्वं नत्वाभावस्येत्याह। मृदन्विताइति। कारणेऽस्ति सामर्थ्यं स्वाकारसमर्पणरूपमित्याशङ्क्य परिहरति। नचेति। तत्र हेतुमाह। क्षणिकत्वादिति। यदिवस्तुनः स्थिरत्वं स्यात्तदोत्तरत्रस्वाकारं समर्पयेन्नत्वेव मित्यर्थः निगमयति। तस्मादिति। कथं भावानां नित्यत्वमुच्यत इत्यत्राह। प्रत्यक्षप्र-त्यभिज्ञानाच्चेति। सोऽयंकुम्भ इति प्रत्यभिज्ञया भावानां नित्यत्वमित्यर्थः। यदि भावानां नित्यत्वमभ्युपगम्यत तदा कार्यकारणभावो न सम्भवति पूर्वापरवर्तिनोरेवहेतुहेतुमद्भावादित्याशङ्कते। नन्विति। नित्यत्वे। स्थायित्वे क्रमयौगपद्या-भ्यामिति। स्थायीभावः स्वीयामर्थक्रियां क्रमेण कुर्याद्युगपद्वा। आद्ये कालान्तरभाविनीं प्रत्यपि इदानीं समर्थो वा नवा प्रथमे तावदिदानीमेव कुर्यात्। समर्थस्यक्षेपायोगात्। द्वितीये कालान्तरेऽपि न कुर्यात्। नहीदानीमसमर्थः कालान्तरे समर्थोभवति। युगपदितिपक्षेत्विदानीमेवकर्त्तव्यस्य कार्यस्य कृतत्वात् कालान्तरे तस्य सत्वं भवेदितिभावः कुशूलस्थबीजस्याङ्कुरोत्पादनसामर्थ्यमस्ति नवेति नास्तिचेत् कुशूलस्थबीजात्कालान्तरेऽप्यङ्कुरोपत्तिर्नस्यात्तत्स्वभाव-स्यापरिवर्तनात्। यद्यस्ति तदा तदानीमप्यङ्कुरोत्पादापत्तिरित्याह। किंकुशूलस्थाव्रीहिरिति। अतत्स्वभावः। अंकुरजननस्वभावाभावः। धरणिसलिलसंयोगरूपसहकारिकारणसमधानदशायां कुशूलस्थबीजादङ्कुरोत्पादइत्या-शङ्क्य परिहरति। नचेति। तत्स्वभावत्वे अंकुरजननस्वभावत्वे। प्रत्यभिज्ञानत्वं नित्यत्वव्याप्यमिति प्रागुक्तनि-यमव्यभिचार प्रदर्शनेन दूषयितुमनूद्यति। यच्चोक्तमिति। नित्यत्वाभाववत्यां प्रदीपज्वालायां सेयं प्रदीपज्वालेति प्रत्यभिज्ञात्वस्यसत्वाद्व्यभिचार इत्यर्थः। यदि भावानां नित्यत्वं स्यात्तदा तेषां विनाशो नस्यात अथोपलभ्यते च मुद्गर-पातानन्तरं घटादीनां विनाश इत्याशङ्कते। यदिचेति। व्युदस्यति। इतिचेत्तदयुक्तमिति। अयुक्तत्वमेवोपपादयति। तथाहीत्यादिना। भावानां विनाशः किं स्वरूप इतिपृच्छति। विनाशः किमिति। यदि घटविनाशोभिन्नस्तदा घटस्य न काप्यनुपपत्तिरित्याह। आद्यइति। यदि घटविनाशो घटस्वरूप एव सच कुलालेन प्रागेवनिर्मितोऽलं मुद्गरपातेन इत्याह द्वितीय इति। प्रकारान्तरमनुसरति। अथेति। घटविनाशयोः को वासम्बन्ध इतिजिज्ञास्यते

किमायतं यथा घटे कृते पटस्य न किञ्चिद्भवति, तथा विनाशेऽपि भिन्ने । द्वितीये घटस्वरूपमेव विनाशस्तच्च कुलालेन कृतमिति मुद्गरः किमपरं करोति अथ मन्यसे घटस्य सम्बन्धी विनाशः क्रियत इति । तत्र कः सम्बन्धः ? किन्तादात्म्यलक्षणस्तदुत्पत्तिलक्षणोवा ? आद्ये पूर्वोक्तमेव दूषणं तादात्म्यं तत्स्वभावता सा च कुलालेन कृतेति । द्वितीये घटमुद्गराभ्यां विनाश उत्पाद्यत इति घटस्य न किञ्चिदिति । तस्मात्स्वाभाविको विनाश एष्टव्य इति । अत्रोच्यते—योऽयं विकल्पः कृतः स तवैव सिद्धान्तं बाधते । कथं विसदृशसन्तानोत्पत्तिप्रतिनिरोधाय योऽयमन्त्योघटक्षणोऽभिमतो यतः कपालोत्पत्तिरिष्यते, स सदृशसन्तानजननस्वभावो घटक्षणत्वादतीतानन्तरघटक्षणवदित्यसावेव विसदृशसन्तानजननस्वभावोऽप्यभ्युपेयेत । अन्यथा कुम्भकारादारभ्य कपालपङ्क्तिरेव स्यादेवं सति मुद्गरेण घटक्षणस्य सदृशसन्तानजननस्वभावता विनाश्यते विसदृशसन्तानजननस्वभावता चोत्पाद्यते इत्यवश्यमभ्युपगन्तव्यम्, अन्यथा कपालोत्पत्त्यसम्भवात् । ततश्च भवता सहेतुकं विनाशमभ्युपगच्छता विकल्पः परित्यक्तः । यदि विकल्पोऽङ्गीक्रियते तर्हि विसदृशसन्तानस्त्यक्तव्य इति सिद्धहानिर्दृष्टविरोधश्च । तत्र यथा तव सदृशसन्तानजननस्वभावविनाशो मुद्गरेण क्रियते, तथा ममापि घटविनाश एव क्रियत इति स्थितः सहेतुको विनाशः प्रत्यभिज्ञानाच्च कालान्तरावस्थायित्वं, ज्वालादिष्वपि सामान्यं समाश्रित्य प्रत्यभिज्ञावृद्धिह्रासदर्शनात् व्यक्तीनामनित्यतैव । यद्यवस्थायिनी व्यक्तिः

---

तत्र कः सम्बन्धइति । तादात्म्यसंसर्गं दूषयति । आद्यइति । दूषणमेव विवृणोति । तादात्म्यइति । द्वितीयपक्षमपि निरस्यति । द्वितीयइति । उपसंहरति । तस्मादिति । इति सौत्रान्तिकवैभाषिकयोः पूर्वपक्षः । समाधत्ते । अत्रोच्यत इति । योऽयं विकल्पः कृत इति मुद्गरादिना घटादिविनाशकृतः स किं द्रव्यभिन्नोऽभिन्नो वा क्रियत इत्यादिरूपः । तन्मते भावाः सन्तानिनः । संतानो नाम भावानां फलहेतुभावेन प्रवाहः । तन्मते संतानो द्विविधो विसदृशः सदृशश्च । निरोधोऽपि तन्मते द्विविधः । बुद्धिपूर्वकोऽबुद्धिपूर्वकश्च सचाग्रे । स्फुटीभविष्यति । यो हिघटस्य चरमक्षणः सच विसदृशसन्तानोत्पत्तिप्रतिनिरोधं करोति 'तस्मान्निरोधात्कपालोत्पत्तिर्निष्पन्ना भवति इत्याह । विसदृशसन्तानोत्पत्तिप्रतिनिरोधायेति । यतः=विसदृशसन्तानोत्पत्तिप्रतिनिरोधात् । सइति पक्षनिर्देशः । अन्त्यो घटक्षणइतितदर्थः । साध्यस्वरूपं निर्दिशति । सदृशसन्तानजननस्वभाव इति । तत्र हेतुमाह घटक्षणत्वादिति । असावेवेति । असौ=अन्त्यो घटक्षणः । उक्तानुमाने बाधकतर्कं दर्शयति । अन्यथेति । सदृशसन्तानजननस्वभावस्वानङ्गीकारे । ततः किमित्यतआह । एवं सतीति । विपक्षे बाधकतर्कमाह । अन्यथेति । मुद्गरेण घटक्षणस्य सदृशसन्तानजननस्य स्वभावताया विनाशस्य विसदृशसन्तानजननस्वभावतायाश्चानङ्गीकार इत्यर्थः । ततश्चेति । मुद्गरेण घटक्षणस्य सदृशसन्तानस्वभावताया विनाशस्य विसदृशसन्तानजननस्वभावोत्पत्तेश्चाङ्गीकारादित्यर्थः । विकल्पयति । मुद्गरादिना घटादिविनाशः क्रियत इतिचेत्तदयुक्तमित्यादिना प्रागुक्त इत्यर्थः । सिद्धहानिः । तवमते सिद्धस्य विसदृशसन्तानस्य हानिः । दृष्टविरोधइति । मुद्गरपातेन घटस्य विनाशो दृश्यते तस्य विरोध इत्यर्थः । फलितार्थमाह । तत्र यथेति भवति सोऽयं घट इति प्रत्यभिज्ञातः भावानां चिरस्थायित्वमित्याह । प्रत्यभिज्ञानाच्चेति । पदार्थानां स्थायित्वपक्षेऽपि प्रदीपज्वालादौ यदनैकान्तिकत्वमभिहितं तद् परिहरति । ज्वालादिष्वपीति । सामान्यम्=ज्वालात्वं तेन रूपेण तस्यानित्यत्वम् । वृद्धिह्रासादिभ्यो व्यक्तीनामनित्यत्वमित्याह । वृद्धिह्रासदर्शनादिति । यदि ज्वालादिव्यक्तीनां स्थायित्वमभ्युपगम्यते तदा गृहादिव्यक्तिष्वपि सामान्यमाश्रित्य प्रत्यभिज्ञा स्यादित्याह । यद्यवस्थायिनीति । प्रत्यक्षादेव भावानां क्षणिकत्वं सिद्ध्यतीत्यत आह । नहीति । बौद्धमते विषयजन्यं प्रत्यक्षं प्रमाणं तच्च निर्विकल्पकमेव घटादेः क्षणिकतया घटाद्युत्पत्तितृतीयक्षणजातस्य घटादिसविकल्पकस्य घटादिविषय-

स्यात् गृहदाहादिष्वपि सामान्यं समाश्रित्य प्रत्यभिज्ञाप्रसङ्ग इत्यव्यभिचारः प्रत्यभिज्ञायाः। नहि क्षणिकत्वं प्रत्यक्षमनभूयते, प्रथमोत्पन्ने निर्विकल्पज्ञाने विशेषापरामर्शात्। यच्चोक्तं क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति ससमानो योसावन्त्यो व्रीहिक्षणो यस्मादंकुरोत्पत्तिरिष्यते, सोऽप्यंकुरजननस्वभावो न भवति व्रीहिक्षणत्वादनन्तरातीतव्रीहिक्षणवत्। नहि समानसन्तता-वकस्माद्विलक्षणक्षणान्तरोत्पत्तिसम्भवः। अथ सहकारिवशादुत्पादक इति चेन्ममापि तदवि-शिष्टमिति। किञ्च विनाशोत्पादौ भावव्यतिरिक्तावव्यतिरिक्तौवा? आद्ये, भावस्य क्षणत्रय-प्रसङ्गः, उत्पत्तिक्षणः स्थितिक्षणो नाशक्षणश्चेति। द्वितीये तूत्पादविनाशयोरभावाद्भावो नित्यः स्यात्। किञ्च विनाशो नामाभावः, सच किं भावस्य पूर्वभावी सहभावी वा पश्चाद्भावी वा? इति। आद्ये भावोत्पत्तिर्न स्यात्। द्वितीयेऽप्यविरोधाद्भावस्य शाश्वतत्वप्रसङ्गः। तृतीये सहेतुको विनाशः प्राप्नोतीति दिक्॥ २०॥

एवं क्षणिकवादमते पूर्वक्षणस्य निरोधग्रस्तत्वान्नोत्तरक्षणहेतुत्वं सम्भवतीत्युक्तमथा-सतः उत्पत्तिर्निरस्यते—

## असति प्रतिज्ञोपरोधोयौगपद्यमन्यथा। २। २। २१॥

---

अधिप्रत्ययादिशब्दार्थं दर्शयति। तत्रेति। तत्रैवातिप्रसङ्गदोषान्तरमाह। निर्हेतुकोत्पत्ताचेति। अन्यथेति जन्यत्वेन सम्भवति कार्यनियतपूर्ववर्तिन एव कारणत्वात् इत्याशयेनाह। प्रथमोत्पन्नइति। नच प्रत्यक्षं प्रति विषय-स्य कार्यसहभावेन कारणत्वात् निर्विकल्पं प्रत्यपि कथं विषयस्य कारणत्वनिर्वाहः। निर्विकल्पकोत्पत्तिक्षणे विषयाभावा-दिति वाच्यम्। एतन्मते सर्वत्र नियतपूर्ववर्त्तित्वस्यैव कारणत्वरूपत्वात्। तथाच निर्विकल्पकस्य निश्चयापरपर्याय-सविकल्पकोन्नेयतया निश्चयरूपक्षणिकत्वसविकल्पकासिद्धया क्षणिकत्वनिर्विकल्पकासिद्धिरितिभावः। अतएव-मकरन्दग्रन्थे रुचिदत्तेनोक्तं "बौद्धमते निर्विकल्पकमेव प्रमाणं नतु निश्चयापरनामधेयं सविकल्पकं तच्च निर्विकल्पकं सविकल्पकोन्नेयमितिसिद्धान्तः। प्रकृते च क्षणिकनिश्चयाभावात् तदुन्नेयं क्षणिकत्वनिर्विकल्पकमसम्भवी"ति। प्रागुक्तार्थमनूद्यति यच्चोक्तमिति। स अर्थः क्रियाविरोधरूपदोष इत्यर्थः। यश्चोभयसमो दोषः परिहारस्तयोस्समः। नैकस्तत्र पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे इति प्राचीनानामुक्तेः। अन्त्यो व्रीहिक्षणः व्रीहिक्षणान्तरमेव जनयितुं शक्नोति नत्वङ्कुरादिकमित्याह। योसाविति। अन्त्यक्षणः सदृशमेव क्षणान्तरं करोति न तु विलक्षणमन्यथा सन्ता-नस्यविच्छेदःस्यादित्याशयेनाह। नहीति। अकस्मात्। कारणमन्तरेत्यर्थः। अन्त्यक्षणः सहकारिसम्पन्नः विलक्षणं क्षणान्तरं जनयति इत्याह। अथेति। उत्पादनिरोधौ वस्तुनः स्वरूपौ तदतिरिक्तौ वेति विकल्पयति। किञ्चेति। यदि विनाशोत्पादौ वस्तुनोऽतिरिक्तौ तदा भावस्य क्षणत्रयावस्था स्यात्तथासति वस्तुनः क्षणिकत्वभङ्गः स्यादित्याशये-नाद्यपक्षं निरस्यति। आद्यइति। यद्युत्पादविनाशौ वस्तुनोऽत्यन्ताव्यतिरिक्तौ ताभ्यां सह वस्तुनोऽसंसर्गात् वस्तुनो सदातनत्वप्रसङ्ग इत्याह। द्वितीयइति। विनाशस्याभावं वितर्क्यं विल्पयति। किञ्चेति। आद्य इति। अभाव-स्य पूर्वं विद्यमानत्वान्न भावोत्पत्तिर्भवितुमर्हति इत्यर्थः। अविरोधादिति। भावाभावयोः सहभावित्वे विरोधो न घटत इति भावानां नित्यत्वं स्यात् भावानां विनाशः सहेतुकः कादाचित्कत्वादित्यनुमानं पर्य्यवसन्नं भवतीत्याह-तृतीयइति॥ २०॥

सूत्रं व्याकर्तुं पूर्ववृत्तं निर्वक्ति। एवमित्यादिना। यदि निर्हेतुककार्योत्पत्तिरिष्यते तदा अधिपतिसह-कार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारः चित्तश्चेत्तहेतव इतिबौद्धानां प्रतिज्ञा तथाहि बुद्धसूत्रं चतुर्विधान् हेतून् प्रतीत्य-चोत्यचैत्या उत्पद्यन्ते। इयं प्रतिज्ञा हीयेत। इत्याह। असतिहेताविति। प्रतिज्ञोपरोधं स्फोरयति। चतुर्भ्यइति।

असति हेतौ कार्यमुत्पद्यते चेत्प्रतिज्ञाया उपरोधो हानिः स्यात् । चतुर्भ्यः कारणेभ्यः कार्योत्पत्तिरितीयं प्रतिज्ञा हीयेत । अधिपतिप्रत्ययः, सहकारिप्रत्ययः, समनन्तरप्रत्ययः, आलम्बनप्रत्ययश्चेति विज्ञानोत्पत्तौ कारणचतुष्टयमिति वः प्रतिज्ञा, तत्र चक्षुरादि इन्द्रियमधिपतिप्रत्ययः, प्रकाशः सहकारिप्रत्ययः, मनस्कारः समनन्तरप्रत्ययो घटादिरालम्बनप्रत्यय उच्यते, निर्हेतुकोत्पत्तौ च प्रतिबन्धाभावात्सर्वं सर्वत्रोत्पद्येत । अन्यथा हेतौ सत्येव कार्यं जायते चेत्तर्हि द्वयोः कार्यकारणयोर्घटक्षणयोर्यौगपद्यं स्यात् । कार्योत्पत्तिकालं यावत्कारणस्यावस्थानात् । क्षणवादहानिः । नहि विनष्टस्य पितुः पुत्रोत्पत्तौ सामर्थ्यं दृष्टम् ॥ २१ ॥

एवमाद्यसूत्राभ्यां समुदायं निरस्य, द्वाभ्यां कार्यकारणभावक्षणिकत्वे च निरस्य, सम्प्रति तदभिमतो द्विविधविनाशो निरस्यते —

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाऽप्राप्तिरविच्छेदात् ।२।२।२२॥

मुद्गराभिघातादिहेतुकः सदृशसन्तानावसानरूपः स्थूलो यो भावविनाशः स प्रतिसङ्ख्यानिरोधः, सूक्ष्मस्वाभाविको निर्हेतुकः सदृशसन्ताने प्रतिक्षणभावी यो भावविनाशः सोऽप्रतिसङ्ख्यानिरोधस्तयोरप्राप्तिरसम्भवः । कुतः ? अविच्छेदात्, उत्पत्तिविनाशधर्मभाविनो द्रव्यस्याविच्छेदात् । एतौहि सन्तानगोचरौ स्यातां ? सन्तानिगोचरौवा ? नाद्यः, सन्तानेषु सन्तानिनामविच्छिन्नत्वेन सन्तानविच्छेदस्यासम्भवात्, तस्यावस्तुत्वाभ्युपगमात् । न द्वितीयः, सन्तानिनां घटादीनां प्रत्यभिज्ञानान्न सूक्ष्मो न स्थूलो विनाशः। त्वत्पक्षे विनाशस्य भावाव्यतिरेकान्न हेतुना विनाशः क्रियते, यस्य तु व्यतिरिक्तो विनाशस्तस्य सहेतुको विनाशः ॥२२॥

## उभयथा च दोषात् । २ । २ । २३ ॥

---

सूत्रस्थव्याख्येयपदम् । तस्यव्याख्यानमाह । हेतौसत्येवेति । कारणस्य विषयतासिद्ध्यर्थं तस्यापि कार्योत्पत्तिस्थितिक्षणे स्थित्यभ्युपगमे कार्यकारणयोः घटक्षणयोर्यौगपद्यं प्रसज्येत इत्यर्थः। यदि कारणस्य कार्योत्पतिकालवृत्तित्वमभ्युपेयते तदा कारणक्षणद्वयावस्थानात् क्षणिकत्वं व्याहन्येत इत्याह । कार्योत्पत्तिकालमिति ॥ २१ ॥

अणुभूतहेतुकसमुदायद्वयेऽभ्युपगम्यमाने जगदात्मकसमुदायभावः चेतनस्य तद्विषयव्यवहारश्च न प्राप्नोतीति। समुदायहेतुकेऽपतदप्राप्तिः। इतरेतरप्रत्ययत्वादुपपन्नमितिचेन्न सङ्घाताभावानिमित्तत्वादि तिसूत्रमुक्तम् । अग्रिमसूत्रद्वयेन च समुदायस्य कार्यकारणभावस्य क्षणिकत्वस्वचासिद्धिरुक्ता सम्प्रति तदभिमतं द्विविधं निरोधं निरस्यतीत्याह । एवमित्यादिना । सूत्रं व्याचष्टे । मुद्गराभिघातहेतुकइति । विनाश एव पराभिमतः निरोधशब्दार्थः स द्विविधः स्थूलः सूक्ष्मश्च । मुद्गरपातानन्तरं सर्वैरुपलभ्यमानो घटविनाशस्स्थूलः प्रतिसङ्ख्यानिरोधः । प्रतिसङ्ख्याविषयत्वप्रतिकूला तदसत्वग्राहिणीलौकिकानां बुद्धिस्तद्विपरीतोऽप्रतिसङ्ख्यानिरोधः सूक्ष्मः लौकिकोपलब्धियोग्यः साध्यमानः प्रतिक्षणविनाश इत्यर्थः । प्रश्नपूर्वकहेतुमाह । कुत इति । हेतुं व्याख्यातुं विकल्पयति । एतौहीति । प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधौ । सन्तानो नाम भावानां हेतुफलभावेन प्रवाहः । सन्तानिनः भावाः । आद्यं पक्षं निरस्यति । नाद्यइति । तस्य । सन्तानविच्छेदस्य । न द्वितीय इत्याह । नापीति । घटकपालादिषु सर्वत्र सैवेयं मृदिति प्रत्यभिज्ञानादन्वयिनो नाशाभावावगतेरितिहेतुमाह । सन्तानिनामिति । बौद्धमते विनाशो भावान्नातिरिच्यते निर्हेतुकएव विनाशः । स च न सम्भवति सर्वप्रपञ्चादर्शनप्रसङ्गात् । येषां मते विनाशो भावादतिरिच्यते तेषां मते सहेतुको विनाशस्तत्र न काचिदनुपपत्तिरित्याह त्वत्पक्षेत्विति ॥ २२ ॥

अविद्यादिनिरोधस्तैर्मोक्षोऽभिमतः स निरोधः सहेतुकः ? निर्हेतुको वा ? आद्ये, अथ सत्यचतुष्टयाभ्यासान्मुक्तिः, समुदायसत्यं, निरोधसत्यं, दुःखसत्यं, मार्गसत्यं चेति। सर्वमुत्पत्तिमदिति यन्निर्णयज्ञानं तत्समुदायसत्यं, सर्वं क्षणिकमिति निरोधसत्यं, सर्वं दुःखात्मकमिति दुःखसत्यं, सर्वं शून्यं सर्वं निरात्मकमिति मार्गसत्यम्, इत्येवं भावयतो रागादिनिवृत्तावभ्युपगम्यमानायां निर्हेतुको विनाश इतीयं प्रतिज्ञा हीयेत। द्वितीये, साधनोपदेशानर्थक्यप्रसङ्ग इत्युभयथाऽपि दोषादसमञ्जसं सौगतमतम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २ । २ । २४ ॥

आवरणाभावमात्रमाकाशमिति तन्मतम्। तत्राह—आकाशे अभावप्रतिज्ञा न युक्ता। कुतः ? "अविशेषात्" वाय्वादेरिव तस्यापि भावरूपत्वेन प्रतिपत्तेरविशेषात्। "आत्मन आकाशः सम्भूतः" इत्यादिश्रुतिप्रामाण्यात् "आकाशस्य स्थितिर्यावद्यावच्च जगतः स्थितिः। तावन्मम स्थितिर्भूयात् जगद्दुःखानि निघ्नतः" इति दयापरेण वदता बुद्धेनाप्याकाशस्य भावत्वमभ्यनुज्ञातम्। किञ्च चक्षुषा विशिष्टमाकाशं गृह्यते, पञ्चीकरणेन तस्य रूपवत्त्वात् रोहितशुक्लकृष्णवर्णतेजोवन्न रूपिद्रव्यसमवायित्वाच्च। ये पुनः शब्दगुणानुमेयमाकाशमिच्छन्ति तेषां तन्न सिध्यति। शब्दस्याकाशेन सह सम्बन्धाग्रहणात्। असत्यपि शब्दे नभसि बुद्ध्युत्पत्तेः। श्रूयमाणेऽपि शब्दे तद्द्वारेणाकाशे बुद्ध्यनुत्पत्तेश्च ॥ २४ ॥

## अनुस्मृतेश्च ॥ २ । २ । २५ ॥

अनुस्मृतेश्चाप्ययुक्तं सौगतमतम्। अनुभूते वस्तुनि पश्चादुत्पद्यमानं विज्ञानमनुस्मृतिः प्रत्यभिज्ञानमित्यर्थः। अहमिदमदर्शमिति यः पूर्वेद्युरनुभूतवान्सोऽहमिदानीमिदमनु-

---

अविद्यादिनिरोधः प्रतिसङ्ख्यानिरोधस्तमपि दूषयितुमाह। अविद्यादिनिरोधइति। विकल्पयति सहेतुक इति। आद्ये=सहेतुकत्वे। सत्यचतुष्टयं दर्शयति। समुदायमिति। सत्यचतुष्टयस्य स्वरूपं निर्वक्ति। सर्वमुत्पत्तिमदिति। निरोधस्य सहेतुकत्वे निर्हेतुको विनाश इति प्रतिज्ञाहानिः, निर्हेतुकत्वे साधनोपदेशस्य निष्प्रयोजनकत्वमितिभावः ।२३।

निरोधद्वयस्याकाशस्य च निरुपाख्यत्वं बौद्धैरङ्गीकृतं तत्राद्यस्य निरुपाख्यत्वं प्राङ्निराकृतं सम्प्रति तन्निराकर्त्तुमाह। आवरणाभावमात्रमिति। साध्यांशं पूरयित्वा प्रतिज्ञां दर्शयति। आकाश इति। आवरणाभावमात्र आकाशे कथं भावत्वप्रतिपत्तिरित्याशङ्क्य तदुत्पत्तिवादिनीनां श्रुतीनां भूयस्त्वादित्याह। आत्मन इति। आकाशस्यावस्तुत्वं मन्यमानस्य बौद्धस्य स्वाभ्युपगमविरोधस्य प्रसक्तिरित्याह। आकाशस्येति। यथा घट इति नीलविशिष्टस्य घटस्य प्रत्यक्षं भवति तथा पञ्चीकरणप्रक्रियायां रूपादिविशिष्टतया आकाशस्य प्रत्यक्षं चक्षुषा भवतीत्याह। किञ्चेति। तस्य=आकाशस्य। हेत्वन्तरमाह। रोहितेति। रोहितं रूपं तेजसः, शुक्लं रूपमपाम्, अन्नस्य कृष्णवर्णमिति विवेकः। तार्किकमतमाक्षिपन्नाह। येपुनरिति। तन्नसिद्ध्यतीति। प्रत्यक्षत्वं न सिद्ध्यतीत्यर्थः। तत्रहेतुमाह। शब्दस्येति। तदेवोपपादयति। असत्यपि शब्द इति ॥ २४ ॥

क्षणभङ्गवादे यद्वस्तु मया प्रागनुभूतं तदेवेदमिति प्रत्यभिज्ञा नोपपद्यते। विज्ञातुर्विनष्टत्वात्। अनुभवस्मरणयोस्सामानाधिकरण्येन कार्यकारणभावादित्याशयेन सौगतमतं निरस्यति। अनुस्मृतेश्चेति। सूत्रं व्याचष्टे। अनुभूतइति। प्रतिज्ञाकारं दर्शयति। अहमिति। अनुभवस्मरणयोस्सामानाधिकरण्याच्चदुभयात्मनः स्थिरत्वमभ्युपेयमितिभावः। तदभावात्=स्मरणाभावात्। आत्मनोऽस्तित्वसाधिकां प्रतीतिं दर्शयति। सर्वश्चेति। उक्तप्रतीत्या आत्मनोऽस्तित्वप्रत्यय इत्यर्थः। आत्मनः शून्यस्य प्रतीतौ नाहं नास्मीति लोके प्रतीतिस्स्यादि-

भवामीति क्षणभङ्गवादिनोऽनुस्मृतिर्नोपपद्यते तदभावात्सर्वव्यवहारलोपप्रसङ्गः। सर्वश्च लोकोऽहमस्मीति प्रत्यभिजानाति नाहं, नास्मीति, कश्चिदवैति आजन्मन आमरणादेतस्मिन्नन्तराले सोऽहमस्मीत्यनुसन्दधानः कथमिव बौद्धो नापत्रपते। य एवात्मा नास्तीति, निराकरोति स एवासि त्वमात्मा निराकरणस्य प्रमाता, न ह्यात्मानमात्मा निराकरोति। नच सादृश्यनिबन्धनोऽयं व्यवहारः, क्षणिकवादे सदृशयोर्वस्तुनो ग्रहीतुरेकस्य स्थायिनोऽभावात्सादृश्यनिमित्तं प्रत्यभिज्ञानमिति मिथ्यालाप एवान्यथा क्षणिकत्वप्रतिज्ञाहानिः। आत्मव्यतिरिक्ते हि पदार्थे भावाभावप्रत्ययौ भवतो नात्मन्यभावप्रत्यय आत्मानं लभते। न चैकसन्तानत्वे सतीति विशेषणं सम्भवति, सन्तानिव्यतिरिक्तस्य सन्तानस्यानभ्युपगमात्तदभ्युपगमेतु स एवात्मा स्यान्नास्ति विवादः। तस्मात्त्वत्पक्षे सन्तानिनो विज्ञानक्षणाः परस्परं भिन्ना एव सन्ति तत्रातद्दृष्टे वस्तुनि मध्यान्हे स्मृतिर्नोपपद्यते। तत्र द्रष्टुः स्मर्तुश्च कार्यकारणभावाभावात्। नच विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तं, नचान्यदृष्टमन्यः स्मरति। स्मरणं खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम्, नच विज्ञानसन्तानस्य परलोकगमनं सम्भवति, यत् "अन्तराभवदेहमनुप्रविश्य, विज्ञानसन्तानपरलोकं गच्छती" ति मन्यते अन्तराभवदेहकल्पनायां प्रमाणाभावात्। नच मरणवेलायां मण्डूकवदुत्प्लुत्य विज्ञानक्षणः प्रविशत्यमूर्तत्वात्। नच प्रेरकोऽस्ति कर्म प्रेरकमिति चेत्तादृशकर्मणि प्रमाणाभावात्। ततश्च स्वर्गनरकगमनाभावात्तत आगत्य गर्भप्रवेशासिद्धेरुत्पत्तिभावानुपपत्तिरिति दिक्। एतेन पराभिमतो दृष्टिसृष्टिवादोऽपि निरस्तः, तत्राप्यर्थतः क्षणिकत्वाविशेषात्॥ २५॥

यच्च तैरभ्युपगतमभावाद्भावोत्पत्तिरिति तत्राह—

---

स्याह नाहमिति। विरोधमेव स्फोरयति आजन्मन इति। वर्तमानदशापर्य्यन्तमिति तदर्थः। एवमग्रेऽपि द्रष्टव्यम्। अहं नास्मीति कश्चित न, अवैतीतियोजना तथाच वाधाभावात् प्रत्यभिज्ञाप्रमेत्युक्त भवति द्रष्टृस्मर्त्रोरैक्येसति भावानां स्थिरत्वमुपपद्यत इति भावः। य एवात्मा भावान् निषेधति स एवात्मा निषेधस्य प्रमाता भवतीत्युपहसन्नाह—यएवात्मेति। य एवात्मा नास्तीति निराकरोति स एव निराकरणस्य प्रमाता त्वमात्माऽसीति योजना। हियतः, आत्मा स्वात्मानं न निराकरोति सम्बधः। दीपज्वालादिष्विवात्मनि प्रत्यभिज्ञानं सादृश्यनिबन्धनमित्याशङ्क्य परिहरति—नचेति। तेनेदं सदृशमितिसादृश्यज्ञानं धर्मिप्रतियोगिज्ञानसापेक्षमितिनिर्विवादं तथासति क्षणभङ्गवादिनये स्थिरस्य ज्ञातुरसत्वान्नसादृश्यज्ञाननिबन्धनं प्रत्यभिज्ञानमुपपद्यत इत्यर्थः। विपक्षेबाधकतर्कमुपन्यस्यति—अन्यथेति। प्रत्यभिज्ञानस्य सादृश्यनिबन्धनत्व इति तदर्थः। पूर्वोत्तरक्षणयोग्रहीतुरेकस्यक्षणद्वयावस्थानात्सर्वं क्षणिकमितिप्रतिज्ञायाभङ्गस्स्यादित्याशयः। तेनेदंसदृशमितिवाह्यार्थयोर्ज्ञानपूर्वकंसादृश्यंजानतआत्मनः। स्थायित्वं दुर्वारमित्याह—आत्मव्यतिरिक्त इति। घटादयो भावाः सन्तानिन इति प्रत्ययो जायते घटादीनां निरोधोऽभावप्रत्ययो नच तादृशप्रत्ययावात्मनि जायेत इत्यर्थः। विज्ञातृस्मर्त्रोर्भेदेऽपि। सन्तानैक्यं। स्मृतिप्रयोजकमित्याशङ्क्यापाकरोति—नचेति। विशेषणमिति। निरुक्तविशेषणं सन्ताने प्रक्षिप्य स्मृतिरूपदोषं निरस्यतीतिशङ्कितुराशयः। सन्तानो नाम भावानां। हेतुफलभावेन प्रवाहः। यदि। सन्तानिभ्योऽतिरिक्तं सन्तानञ्चेत् तदैकसन्तानत्वे सतीति विशेषणं सन्ताने निवेश्योक्तदोषो निराकर्तुं शक्यते। तदेव तु नास्तीतिभावः। तदभ्युपगमे=सन्तानिव्यतिरिक्तस्य सन्तानाभ्युपगमे। सएव=भावातिरिक्तसन्तान एव। क्षणभङ्गवादिनये निरुक्तदोषंसङ्गमयन्ति। गमयति—तस्मादिति। यो द्रष्टा स एव स्मर्ता क्षणभङ्गवाद इति नियमो नास्तीत्याशये नाह तत्रेति। क्षणभङ्गवादिनय। इति। तदर्थः स्मृति प्रति पूर्वानुभवः। कारणमिति। कार्य्यकारणभावो नास्ति। स्थिरस्यैकस्य। विज्ञातुरभावादितिभावः। क्षणभङ्गवादिनये दोषान्तरं निर्वक्ति—विज्ञानसन्तानस्येति। दृष्टिरेव सृष्टिरिति वादिनां मते प्राग्प्रदर्शितदोषाणां विद्यमानत्वान्न। तद्वादोयुक्तइत्याह—एतेनेति। प्राक्प्रदर्शितदोषैरितितदर्थः तत्रापि। दृष्टिसृष्टिवादेऽपि॥ २५॥

## नासतोऽदृष्टत्वात् । २ । २ । २६ ॥

असतोऽभावाद्भाव उत्पद्यते इति तत्परिहरति, नेति । कुतः ? "अदृष्टत्वात्" असतः शशविषाणादेरङ्कुरोत्पत्त्यदर्शनात् । अभावस्य निरुपाख्यत्वाच्छशविषाणबीजाभावयोः कोविशेषः । ततश्च कारणनियमानुपपत्तिरिति सर्वं सर्वस्मादुपपद्येत । ननु बीजमनुपमृद्य नांकुरः प्रादुर्भवति, क्षीरमुपमृद्य दधीव । मृत्पिण्डमुपमृद्य घट इव च बीजमुपमृद्यैवांकुर उत्पद्यते, इत्यतोऽभावाद्भावोत्पत्तिरिति चेन्न, तत्र बीजसंस्थानमात्रं निवर्त्ततेऽविरोधिबीजद्रव्यमेव त्वङ्कुराकारेणावस्थान्तरगतया परिणमत इति प्रत्यक्षमेतन्न प्रत्याख्यातुं शक्यम् ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः । २ । २ । २७ ॥

अभावाद्भावोत्पत्तावुदासीनानां प्रयत्नशून्यानामप्यैहिकामुष्मिकसर्वार्थसिद्धिः स्यादभावस्य सुलभत्वादिति ॥ २७ ॥ इति समुदायाधिकरणम् ॥ ३ ॥

अथ विज्ञानवादियोगाचारपक्षो निरस्यते—

## नाऽभावउपलब्धेः । २ । २ । २८ ॥

शमथविपश्यना युगनद्धवाही मार्गोयोगः । तत्र शमथेति समाधिरुच्यते । विपश्यना सम्यग्दर्शनलक्षणो यथा युगनद्धौ बलीवर्दौ वहतस्तथा यो मार्गः सम्यग्दर्शनवाही स योगस्तेनाचरतीति योगाचार उच्यते । किं पुनः सम्यग्दर्शनं सर्वं बाह्यार्थ शून्यं विज्ञानं सर्वं क्षणिकं सर्वं निरात्मकमिति कथं पुनर्विज्ञानमात्रं प्रतिज्ञायते, साकारं प्रत्यक्षं च विज्ञानं नीलं पीतमिति हि साकारं विज्ञानमेव प्रकाशते, प्रत्यक्षं च तत्प्रदीपवत्प्रकाशकत्वादप्रत्यक्ष-

---

उत्तरसूत्रमवतारयति । यच्चतैरिति । सूत्रार्थं विवृणोति असतइति । अभावात्कार्योत्पत्तिं ब्रुवतः सौगतस्य कारणनियमो नोपपद्यते तथासति सर्वस्मात्सर्वकार्योत्पादापत्तिः अभावस्य सर्वत्र सुलभत्वादित्याह । ततश्चेति । शशविषाणबीजाभावयोरविशेष इत्यर्थः । अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ अ० ४ । १ । १४ ॥ इति गोतमसूत्रार्थं विवृण्वन्नाशङ्कते । नन्विति । कारणविनाशात् कार्यस्यजन्मेत्यत्र दृष्टान्तमाह । क्षीरमुपमृद्यइति । बीजस्याकारमात्रं निवर्त्तते तदेव द्रव्यमङ्कुराकारेण परिणमत इत्याशयेन परिहरति । नेति । उपमृद्यप्रादुर्भवतीति प्रयोगो न युक्तो व्याघातात् । उपमर्दकस्य पूर्वमसत्वे उपमर्दकत्वायोगात् । सत्वे च परतः प्रादुर्भावायोगादिति ॥ २६ ।

उदासीनानामपि चैवं सिद्धिरित्यस्यार्थः स्पष्ट एव ॥ २७ ॥ इतिसमुदायाधिकरणम् ।

अथउपलब्ध्यधिकरणम् ।

सूत्रमवतारयति । अथेति । योगाचारशब्दार्थं दर्शयितुं योगशब्दार्थं विवृणोति । शमथेति । शमथशब्दार्थं व्याचष्टे । तत्रेति । योगशब्दार्थं । विपश्यनाशब्दार्थं विवृणोति । विपश्यनेति । युगनद्धवाहीत्यस्य व्याख्यानम् । यथायुगनद्धाविति । सम्यग्दर्शनवाहीत्युक्तं तत्र सम्यग्दर्शनं पृच्छति । किंपुनरिति । सम्यग्दर्शनं विवृणोति सर्वं बाह्यार्थशून्यमिति । नहि तन्मते विज्ञानव्यतिरिक्तं किञ्चिदपि बाह्यार्थमस्तीत्यर्थः । उपलभ्यन्ते प्रत्यक्षतो घटपटादयो बाह्यार्थाः कथं तेषामपलाप इत्यत्राह । क्षणिकमिति । प्रश्नपूर्वकं विज्ञानमात्रसद्भावे प्रमाणं दर्शयति । कथं पुनरिति । साकारमिति । घटपटादयस्तु विज्ञानाकाराः साकारस्यैव तस्यैव प्रकाशो भवति नान्यथेत्यर्थः । नहि विज्ञानं स्वप्रकाशाय

स्योपलम्भे तस्य स्वपरोत्पन्नयोर्विज्ञानयोरविशेषप्रसङ्गः। अस्ति च विशेषः स्वोत्पन्नोन विज्ञानेन प्रवृत्तिनिवृत्तिलक्षणं व्यवहार पुरुषोनिर्वर्त्तयति। तथा चोक्तं विप्रभिक्षुणा। "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति। अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसम्वित्तिभेदवानिव लक्ष्यते" इति तत्र ग्राह्याकारः प्रमेयं ग्राहकाकारः प्रमाणं स्वसम्वित्तिः फलमिति त्रयमेकस्मिन्विज्ञानेऽवकल्पते। तस्मान्नास्ति बाह्यार्थः। इतश्च सहोपलम्भनियमान्न भेदोनीलतद्धियोः, यदैव नीलज्ञानं तदैव नीलमुपलभ्यते तस्मादनयोरभेदइति, इतश्च बाह्यार्थशून्योजाग्रत् प्रत्ययः प्रत्ययत्वात्स्वप्नप्रत्ययवत्। कथं बाह्यार्थाभावे प्रत्ययवैचित्र्यमिति चेद्वासनावैचित्र्यात्। बीजांकुरवद्विज्ञानानां वासनानां चान्योऽन्यं निमित्तनैमित्तिकभावेन वैचित्र्यस्योपपन्नत्वात्वादिति प्राप्ते, अत्रोच्यते, न बाह्यार्थस्याभावः। कुतः ? उपलब्धेः। सहि बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यते, पावकः पर्वतः पृथिवी सलिलमित्याकारवान्निराकारं च विज्ञानमन्तर्देशेऽहङ्कारसमारूढं विज्ञानमात्मापरोक्षमुत्पद्यते, तयोर्ज्ञानज्ञेययोर्भिन्नदेशयोरनुभूयमानयोः कथमेकत्वमाश्रीयते, क्षीरोदकयोस्तु परसंसर्गात्स्यादेकत्वाभिमानः प्रत्यक्षत्वं तु विज्ञानस्यास्माकमप्यभीष्टमेव। न पुनः पूर्वमेव विज्ञानं प्रत्यक्षमनुभूयते। ग्राह्याकारोपश्लेषमन्तरेण ग्राह्याकारपुरःसरमेव हि सम्वेदनं सम्वेदयितुरपरोक्षीभवति। घटसम्वेदनं पटसम्वेदनमिति हि वेद्याकारपूर्वकमेव निर्दिश्यते। यदुक्तं सहोपलम्भनियमादिति तदनिरूपिताभिधानं साहित्यस्यार्थभेदहेतुकत्वात्। सहत्वं नामैकदेशवर्त्तित्वमेककालवर्त्तित्वं वा द्वयोर्भिन्नयोः पदार्थयोस्ततश्च भिन्नोपलम्भनियमादिति

---

विज्ञानान्तरमपेक्षते येनानवस्था स्यात्। किन्तु तस्य स्वप्रकाशत्वात्। नहि प्रदीपः स्वप्रकाशाय प्रदीपान्तरमपेक्षते। इत्याह प्रदीपवदिति तदिति। विज्ञानमित्यर्थः अर्थाकारस्य विज्ञानस्याप्रत्यक्षत्वे दूषणमाह। अप्रत्यक्षस्येति। अप्रत्यक्षस्यतस्येतियोजना। तस्यविज्ञानस्य। यद्यप्रत्यक्षस्य विज्ञानस्योपलब्धिः स्यात्तदा चैत्रीयमैत्रीयविज्ञानयोरविशेषःस्यादित्यर्थः। विशेषान्यथानुपपत्या विज्ञानस्य प्रत्यक्षत्वं वाच्यमितिभावः। विशेषमेव दर्शयति। अस्तिचेति। उक्तार्थं विप्रभिक्षुवचसा द्रढयति। तथाचोक्तमिति। इतश्च ज्ञेयं ज्ञानान्नान्यदित्याह इतश्चसहोपलम्भनियमादिति। यद्येन नियतसहोपलम्भनं तत्ततो न भिद्यते यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमा नियतसहोपलम्भश्चार्थोज्ञानेनेति व्यापकविरुद्धोपलब्धिः। निषेध्यो हि भेदः सहोपलम्भनियमेन व्याप्तः यथा भिन्नावश्चिनौ नावश्यं सहोपलभ्येते कदाचिदभ्रापिधानेऽन्यतरस्यैकस्यैवोपलब्धेः। योऽयमिहभेदव्यापकनियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्त्तयतीति। तदुक्तं "सहोपलम्भनियमादभेदोनीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्यतेन्दाविवाद्वये।" इतिभावः। यो यः प्रत्ययः स सर्वो बाह्यानालम्बनो यथा स्वप्नादिप्रत्यय इत्याह। इतश्चेति। असति बाह्येऽर्थे प्रत्ययवैचित्र्यानुपपत्तिरूपार्थापत्तिबाधितमनुमानमितिशङ्कते। कथंबाह्यार्थाभावइति। अनादिसन्ततिपतितसंविदितरूपज्ञानमेव वासना तद्वशादनेकव्यवधानेनापि नीलादिवासितमेव ज्ञानं जायते कार्पासरक्ततावदन्यथोपपत्तिमाह। वासनावैचित्र्यादिति। अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यमेव ज्ञानवैचित्र्यहेतुर्नार्थवैचित्र्यमितिभावः। वासनावैचित्र्याज्ज्ञानवैचित्र्यं ततश्च तद्वैचित्र्यमित्यन्योन्याश्रयत्वमाशङ्क्याह। बीजाङ्कुरवदिति। पूर्वपक्षमनूद्य सिद्धान्तयति। अत्रोच्यतइति। सूत्राक्षराणि व्याचष्टे। नबाह्यार्थस्येति। उपलब्धेरिति। हेत्वर्थं विवृणोति। सहीत्यादिना। सः बाह्यार्थः। आकारवतो बाह्यार्थस्य प्रत्यक्षस्य बहिर्देशे सम्बद्धस्याप्रत्यक्षेणान्तर्देशेऽहङ्कारसमारूढे निराकारेण विज्ञानेनात्मनासमकमप्यभेदो नोत्पद्यत इत्याह। पावकः पर्वतइत्यादिना। यच्चोक्तं विज्ञानस्य प्रत्यक्ष-

हेत्वर्थोऽभेद इति प्रतिज्ञा, सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। प्रतिज्ञायां सत्यां हेतुर्बाध्यते, तस्मिन्प्रतिज्ञा बाध्यत इति। न च दृष्टान्तोऽस्ति ग्राह्यग्राहकयोरभेदे द्विचन्द्रज्ञानादिष्वपि ग्राह्यग्राहकयोर्भेदो दृष्टो मीमांसकैरिति संक्षेपः ॥ २८ ॥

यच्चोक्तं स्वप्नप्रत्ययवदिति तत्राह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २ । २ । २९ ॥

स्वप्नमनोरथज्ञानवद्भवितु जागरितज्ञानानि नार्हन्ति। कुतः ? वैधर्म्यात्। निद्रादिदोषदुष्टकरणजन्यानि बाधितानि च स्वप्नज्ञानानि, जागरितज्ञानानि तु तद्विलक्षणानि इति न तत्साधर्म्यम्, न च प्रत्ययत्वात् स्वप्नप्रत्ययत्वं मिथ्यात्वे हेतुरभिप्रेयेत। स्वप्नज्ञानस्य मिथ्यात्वासिद्धेः। प्रबोधप्रत्ययस्य बाधकस्याप्यमिथ्यात्वाद्दृष्टान्ताभावः। तस्माज्जाग्रत्प्रत्ययस्य मिथ्यात्वमनुमानेन साधयितुमशक्यं, प्रत्यक्षानुभवस्य बलीयस्त्वात्। ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः। यदि बाह्योऽर्थो नाभिप्रेतः स्यात्, किमर्थमित्थं यतेत सूत्रकारः। अतोऽर्थवैचित्र्यकृतमेव ज्ञानवैचित्र्यम्। तत्तदर्थव्यवहारयोग्यतापादनरूपतया साक्षात्प्रतीयमानस्य ज्ञानस्य तत्तदर्थसम्बन्धाधीनं न स्वतो ? निराकारत्वात्। सम्बन्धश्च संयोगलक्षणः। ज्ञानमपि हि द्रव्यमेव, प्रभाद्रव्यस्य प्रदीपगुणभूतस्यैव ज्ञानस्याप्यात्मगुणभूतस्य द्रव्यत्वे विरोधाभावात् ॥ २९ ॥

यदप्युक्तं बाह्यार्थाभावेऽपि वासनानिबन्धनं ज्ञानवैचित्र्यं स्यादिति तत्राह—

---

त्वं तदपीष्टापत्त्या परिहरति। प्रत्यक्षत्वन्त्विति। विषयमन्तरा विज्ञानस्य प्रत्यक्षत्वं न सम्भवतीत्याह। न पुनःपूर्वमेवेति। तदेवोपपादयति। घटसम्वेदनमिति। यच्च सहोपलम्भनियम उक्तस्तमपि दूषयितुमनूद्यति यदुक्तमिति। परिहरति। तदनिरूपिताभिधानमिति। तत्र हेतुमाह। साहित्यस्येति। साहित्यं द्वयोरेवेति तद्भेदसाधकमित्यर्थः। तदर्थमेव विवृणोति। सहत्व नामेति। ततः किमित्यत आह। ततश्चेति। प्रतिज्ञाहेत्वोर्विरोधमापादयति। सोऽयमिति। तस्मिन्निति। हेतौ सति। दृष्टान्तमपि परिहरति नचेति ॥ २८ ॥

उत्तरसूत्रमवतारयति। यच्चोक्तमिति। सूत्रं व्याचष्टे। स्वप्नमनोरथइति। हेत्वर्थं विवृणोति निद्रादिदोष इति। स्वप्नप्रत्ययो मिथ्या प्रत्ययत्वान्निरालम्बनत्वाच्चेत्याशङ्क्य परिहरति। नचेति। तत्र हेतुमाह। स्वप्नप्रत्ययस्येति। स्वप्नज्ञानमपि विषयासिद्ध्या मृषैवेति वक्तु न शक्यते विषयस्य तत्रापि सत्वात्। तथाहि स्वाप्नपदार्थस्येश्वरसृज्यत्वेन याथात्म्यं सद्रूपत्वात्। आकाशादिवत्। एवञ्च तद्विषयकज्ञानयाथार्थ्यस्य विवादो निरवकाशः। तथा च यदि स्वप्नप्रत्ययस्य मिथ्यात्वं स्यात्तदा तद्दृष्टान्तेन जागरितप्रत्ययस्यापि बाह्यार्थविषयकत्वेन मिथ्यात्वं सिद्ध्येत् न त्वेवमितिभावस्तदेवोपपादयति। प्रबोधप्रत्ययस्येति। फलितार्थं दर्शयति। तस्मादिति। जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं नानुमानेनान्यथयितु शक्यम्। अनुभवविरोधेन तदनुत्पादात् इत्याशयेनाह प्रत्यक्षानुभवस्येति। निगमयति। अतइति। तत्तदर्थसम्बन्धाधीनमित्यनेन न ? ज्ञानार्थयोस्सम्बन्धः प्रदर्शितः स च को वा सम्बन्ध इत्यत्राह। सम्बन्धश्चेति। संयोगो हि द्रव्ययोरेवेत्यत्राह। ज्ञानमपीति। द्रव्यस्य द्रव्यान्तरधर्मे नैकस्वरूपत्वं कथमिति शङ्कायां प्रदीपदृष्टान्तेन परिहरति। प्रभाद्रव्यस्येति ॥ २९ ॥

## न भावोऽनुपलब्धेः ॥ २ । २ । ३० ॥

वासनानां भावो न, कुतः ? अनुपलब्धेः । निर्हेतुकविनाशिनां ज्ञानानामनुवर्त्तमान-स्थिराकारस्याप्राप्तेः । विनष्टेन पूर्वज्ञानेन उत्पन्नमुत्तरज्ञानं कथं वास्यते । बाह्यार्थानुपलब्धेरपि प्रत्यर्थं नानारूपवासनानां ह्यर्थोपलब्धिनिमित्तत्वात् । किञ्च वासना नाम अनुभवजनितः स्मृतिहेतुः संस्कारः । तस्य चाश्रयं विना ज्ञेयाकारवैचित्र्ये सामर्थ्यं कल्पयितुं न शक्यम् । ननु आलयविज्ञानमहंप्रत्ययाख्यं तेन घटादिज्ञानैर्वासना आधार्यन्ते, ताभ्यश्च घटादि-ज्ञानानीति परस्परहेतुहेतुमद्भावेन विज्ञानवासनाचक्रं प्रवर्त्तत इति चेन्न । विज्ञानस्कन्धमात्रवा-दिनः कुतो व्यतिरिक्तवासनास्तदभ्युपगमे विज्ञानवादहानिः ॥ ३० ॥

## क्षणिकत्वात् ॥ २ । २ । ३१ ॥

नेति वर्त्तते । आलयविज्ञानस्य चाधारत्वं नोपपद्यते । कुतः ? क्षणिकत्वात् प्रवृत्ति-विज्ञानवदिति संक्षेपः ॥ ३१ ॥ इत्युपलब्ध्यधिकरणम् ॥ ४ ॥

अथ सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥

अथ सर्वशून्यवादिमाध्यमिकपक्षो निरस्यते—

## सर्वथानुपपत्तेश्च ॥ २ । २ । ३२ ॥

शून्यवाद एव बुद्धमतस्य पराकाष्ठा, शिष्यबुद्धिवैशद्याय बाह्यार्थाद्यभ्युपगमेन तत्र क्षणिकत्वादयस्तेन कल्पिताः । नच बाह्यार्था घटादयो विज्ञानं च सर्वे भावाः सन्ति उत्पत्त्य-निरूपणात्तेषां शून्यापत्तिरेव च मोक्ष इत्येव बुद्धाभिप्रायः । स्वतःसिद्धं हि शून्यं न हेतुसाध्यं सत एव हि हेतुरपेक्ष्यतेऽसतश्च पदार्थस्य न भावादभावाद्वोत्पत्तिः सम्भवति । घटादिर्हि पिण्डा-दिकमनुपमृद्य नोत्पद्यते पश्चादभावादुत्पद्यमानश्चाभावात्मक एव स्यात्, स्वतः परतो वाप्यु-

---

वासनावैचित्र्याद्विचित्रज्ञानोदयसमर्थनमप्युक्तमित्याह । यदप्युक्तमिति । सूत्रार्थं व्याचष्टे । वासनानामिति । पूर्वज्ञानेनोत्तरस्मिन् ज्ञाने वासनोत्पद्यत इत्यत्राह । विनष्टेनेति । भावमात्रस्य क्षणिकत्वेन पूर्वविज्ञानस्य विनष्टत्वान्न तेनोत्तरज्ञानं वासयितुं शक्यत इत्यर्थः । तत्र हेतुमाह बाह्यार्थानुपलब्धेरिति । यदि बाह्यार्थानामुपलब्धिः स्यात्तदा अर्थोपलब्धिनिमित्ता प्रत्यर्थं नानारूपा वासनाः स्युः न त्वेवमित्यर्थः । यः संस्कारः स साश्रयो लोके दृष्टः यथा वेगादिरिष्वाश्रयः । अतो विज्ञानासंस्काराणां नाभावः । आश्रयानुपलब्धे-रित्यर्थान्तरमाह । अपिचेति । अस्तु तर्हि आलयविज्ञानसन्तानाश्रया वासना इत्याशङ्कते । नन्विति । परिहरति । नेति । तदभ्युपगमे=वासनाभ्युपगमे ॥ ३० ॥ ३१ ॥ इत्युपलब्ध्यधिकरणम् ।

अथ सर्वथानुपपत्त्यधिकरणम् ।

विज्ञानमात्रास्तित्ववादियोगाचारमतनिराकरणानन्तरं तदप्यपलपतां माध्यमिकानां मतं निराक्रियत इति सङ्गतिं प्रदर्शयन्नाह । अथेति । "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्स्व-भावाश्च दर्शिताः ॥ यथा यथा विचार्यन्ते तथा तथे"त्यादिन्यायैः गुरुणा बाह्यार्थानां विज्ञानस्य च शून्यत्वं बोधित-मिति शून्यमेव तत्त्वम् । शून्यापत्तिरेव मोक्ष इति तन्मतं दर्शयति । शून्यवाद एवेति । शून्यस्य स्वतः सिद्धत्वं न तु साधकहेत्वन्तरापेक्षत्वमित्याह । स्वत इति । सद्रूपस्य वस्तुनो हेत्वन्तरमन्विष्यते नत्वसत इत्याह ।

त्पत्तिर्न सम्भवति। स्वतश्चेत् आत्माश्रयदोषापत्तेः प्रयोजनाभावाच्च। परतश्चोत्पत्तौ परत्वाविशेषात्सर्वतः सर्वोत्पत्तिप्रसङ्गः। जनेरभावादेव न विनाशः, अतो जनिनाशसदसदादिकं भ्रान्तिरेवेति शून्यमेव तत्त्वमिति प्राप्त आह। सर्वथेति। नेत्यनुवर्त्तते। त्वदभिमतं सर्वशून्यत्वं न सम्भवति, सर्वं शून्यमिति वादे सर्वस्य सत्त्वं वा असत्त्वं वा सदसत्त्वं वा प्रतिजानतस्तव सर्वथा नाभीष्टसिद्धिः। कुतः? अनुपपत्तेः। सर्वशून्यत्वानुपपत्तेः। लोके भावाभावशब्दयोस्तद्बुद्ध्योश्च विद्यमानवस्त्ववस्थाविशेष एव भावाभावरूपो विषयः। प्रमाणेनोपलभ्यमानघटाद्यवस्थाविशेषो भावबुद्धिविषयः, तद्विरोधिपिण्डकपालाकाराद्यवस्थाविशेषोऽभावबुद्धिविषयः। ततश्च सर्वं सदिति सर्वमसदिति वा प्रतिजानता विद्यमानवस्त्ववस्थाविशेषयोगितैव प्रतिज्ञातास्तीति न त्वदभिमततुच्छतासिद्धिः। किञ्च येन प्रमाणेन शून्यत्वं साध्यते तस्यासत्यत्वे सर्वस्य सत्यत्वापत्तिरिति सर्वथा शून्यवादोऽनुपपन्न एवेति ॥ ३२ ॥

अथ एकस्मिन्नसम्भवाधिकरणम्।

एवं मुक्तकच्छबौद्धमतं निरस्याथेदानीं विवसनजैनमतं निरस्यते—

## नैकस्मिन्नसम्भवात् ॥ २। २। ३३ ॥

सप्त चैषां निरीश्वरवादिनां पदार्थाः शास्त्रसंग्रहभूताः—जीवा१ऽजीवा२ऽऽस्रव३ संवर४निर्जर५बन्ध६मोक्षा७ इति। तत्र जीवाश्चेतनाज्ञानदर्शनसुखवीर्यगुणाः सावयवा देहपरिमाणास्ते त्रिविधा बद्धात्मानो मुक्तात्मानो नित्यसिद्धाश्चेति। ये मुक्तात्मानस्ते सर्वज्ञा निरतिशयसुखाश्चासते। जीवभोग्यवस्तुजातमजीवः। स च धर्माधर्मपुद्गलकालाकाशभेदभिन्नः। सम्यक्

---

सत एवेति। कार्यं हि भावादुत्पद्यते न त्वभावात्तथात्वे कार्यस्याप्यभावात्मकत्वं प्रसज्येत इत्याह। घटादिर्हीति। स्वतः=स्वस्मादित्यर्थः। स्वोत्पत्तौ स्वस्य कारणत्वे आत्माश्रयदोषः प्रसज्यत इत्याह। स्वतश्चेदिति। स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसङ्ग आत्माश्रयः। सचोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा। यथा यद्ययं घट एतद्घटजन्यः स्यादेतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्। एवं प्रकृतेपि द्रष्टव्यमित्याशयः। प्रयोजनाभावाच्चेति। स्वयं विद्यमानत्वादुत्पत्तिनैरपेक्ष्यं प्रयोजनाभावः। स्वसत्ता ह्युत्पत्तेः प्रयोजनम्। पूर्वमेव सत्वान्नोत्पत्त्या प्रयोजनम्। किं सत उत्पत्तिः उतासतः। सच्चेन्नोत्पत्त्यपेक्षा, असच्चेच्छशविषाणवन्नोत्पत्तिरिति भावः। पूर्वपक्षमुपसंहरति। अतइति। सर्वथा शब्देन प्रमाणप्रमेययोर्विकल्पानुपपत्तिर्विवक्षिता। तत्र प्रमेयं विकल्पयति। सर्वस्येति। प्रकारत्रयेऽप्यवस्थान्तरापत्तिरेवोक्ता स्यात्। लोकप्रतीत्या पराभ्युपगमप्रकारेण वा सत्त्वासत्त्वयोरवस्थाविशेषरूपत्वात्। नहि शून्यवादिन उभयप्रकारातिरेकेण साधनदूषणव्यवहारसम्भवः। घटत्वं स्वापेक्षया सत्, कपालापेक्षया असदित्युभयात्मकम्। घटः स्वापेक्षया नासन् कपालापेक्षया असन् अतोऽनुभयात्मकत्वमवस्थाविशेष इत्याह। लोके भावाभावशब्दयोरिति। सर्वं सदिति। किं सदिति विकल्पो दृष्टान्तार्थं इत्युक्तं भवति। प्रमाणानुपपत्तिमाह। किञ्चेति। प्रमाणशब्दः प्रमितेरप्युपलक्षणार्थः। किं सर्वं शून्यमिति प्रमितिस्तत्कारणं वा सत्यम्। उत न सत्यम्। सत्यञ्चेत् न सर्वशून्यत्वम्। असत्यञ्चेन्नतरामित्यर्थः ॥ ३२ ॥

अथ एकस्मिन्नसम्भवाधिकरणम्।

सङ्गतिमाह। एवमिति। पूर्वपक्षतन्मतप्रामाण्यात्तद्विरोधे समन्वयासिद्धिः। सिद्धान्ते तदप्रामाण्यादृष्टान्तेन तेन विरोधस्याभासतया तत्सिद्धिरित्यभिसन्धाय पूर्वपक्षयति। सप्तचेति। उक्तसप्तपदार्थान् विवृणोति। तत्रेति=तेषु। तार्किका अपि परमाणुकारणवादिनस्तेभ्यो विवसनानां जैनमतानुगामिनां वैजात्यमाह। पृथिव्या-

प्रवृत्त्यनुमेयो द्रव्यविशेषो धर्मः। अमुक्तानां स्थितिहेतुरधर्मः। वर्णगन्धरसस्पर्शवद्द्रव्यं पुद्गलः। स द्विधा परमाणुतत्सङ्घातभेदात्। पृथिव्यादिहेतवः परमाणवस्ते च न तार्किकानामिव चतुर्विधाः, किन्त्वेकस्वभावाः। पृथिव्यादिभेदस्तु परिणामकृतः। पृथिव्यादिचतुष्टयं तनुभुवनादिकश्च तत्सङ्घातः। कालस्तु भूतादिव्यवहारहेतुरणुरूपो द्रव्यविशेषः आवरणाभाव आकाशो द्विधाऽलोकाकाशः, सांसारिकः। आलोकाकाशो मुक्ताश्रयः। आश्रावयति पुरुषं विषयेष्विती-न्द्रियप्रवृत्तिराश्रवः, कर्त्तारमभिव्याप्याश्रवत्यनुगच्छतीत्याश्रवं कर्मेति वा। इन्द्रियवृत्तीः संवृणोतीति संवर इन्द्रियनिरोधः समाधिरूपः। पूर्वसञ्चितं कल्मषं निर्जरयतीति निर्जरो नाम अस्नानमौनवीरासननिष्ठ्यूतभोजनतप्तशिलारोहणकेशोपलुञ्चनादिलक्षणमर्हदुपदेशावगतं तपः। बन्धस्त्वष्टविधः कर्मलक्षणः। तत्र ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरीयमिति चत्वारि घातिकर्माणि। वेदनीयं नामिकं गोत्रिकमायुष्कमिति चत्वार्यघातिकर्माणि। बन्धनिवृत्तौ नित्यसिद्धार्हदनुग्रहात्स्वाभाविकात्मस्वरूपाविर्भावो मोक्षो भवतीति। तेषामेवापरः प्रपञ्चः पञ्चास्तिकायोनाम-जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः। अधर्मास्तिकायः, आकाशास्तिकायश्चेति। अनेकदेशवर्त्तिसाङ्केतिकपदार्थवाची अस्तिकायशब्दः, जीवश्चासावस्तिकायश्चेत्येवं सर्वत्र कर्मधारयः। इमञ्च सप्तभङ्गीनयं सर्वत्रावतारयन्ति। स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः, स्यादस्तिच नास्ति च, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्तिच

---

दिहेतवइति। व्युत्पत्तिमुखेन आश्रवशब्दार्थं निर्वक्ति। आश्रावयतीति। निर्जर इति स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः। ज्ञानावरणीयमिति। तत्र सम्यग्ज्ञानं न मोक्षसाधनं नहि विज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते। आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म। बहुषु विप्रतिषिद्धेषु तीर्थंकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म। मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरीयं कर्म। तानीमानि श्रेयोहन्तृत्वाद् घातिकर्माण्युच्यन्ते। वेदनीयमिति। मम वेदितव्यं तत्वमस्तीत्यभिमानो वेदनीयम्। एतन्नामाहमस्मीत्यभिमानः नामिकम्। अहमत्र भवतो देशिकस्यार्हतः शिष्यवंशे प्रविष्टोऽस्मीत्यभिमानः गोत्रिकम्। शरीरस्थित्यर्थं कर्म आयुष्कम्। यथायोगं तयोर्जीवाजीवयोरिदमपरं प्रपञ्चमाचष्टे तमाह। तेषामिति। जीवास्तिकायस्त्रिधा बद्धो मुक्तो नित्यसिद्धश्चेति। पूर्यन्ते गलन्तीति पुद्गलाः परमाणुसङ्घाः कायाः। पुद्गलास्तिकायः षोढा पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमञ्चेति। धर्मास्तिकायः प्रवृत्त्यनुमेयः। अधर्मास्तिकायः स्थित्यनुमेयः। आकाशास्तिकायो द्वेधा लोकाकाशोऽलोकाकाशश्च। तत्रोपर्युपरिस्थितानां लोकानामन्तवर्त्ती लोकाकाशस्तेषामुपरिमोक्षस्थानमालोकाकाशः। तत्र हि न लोकाः सन्ति। इमञ्चेति। अस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय वस्तुमात्रे न्यायं योजयन्ति। सप्तानामस्तित्वादीनां भङ्गानां समाहारः सप्तभङ्गी तस्य नयो न्याय इत्यर्थः। स्यादित्यव्ययं तिङन्तप्रतिरूपकमव्ययं कथञ्चिदर्थकम्। स्यादस्ति कथञ्चिदस्तीत्यर्थः। तथोत्तरत्रापि योजना। उक्तंहि—"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते। क्रमेणोभयविवक्षायां प्रयोगः समुदायवान्॥ युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः। आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते॥ अन्त्यवाच्यविवक्षायां षष्ठभङ्गसमुद्भवः। समुच्चयेन युक्तस्य सप्तमो भङ्ग इष्यत" इति। तथा च वस्तुनोऽस्तित्ववांच्छायां स्यादस्तीति आद्यो भङ्गः। १। नास्तित्ववांच्छायां स्यान्नास्तीति द्वितीयो भङ्गः। २। क्रमेणोभयवांच्छायां स्यादस्ति नास्ति चेति तृतीयो भङ्गः। ३। युगपदुभयवांछायां स्यादस्ति नास्तीति शब्दद्वयस्य सकृद्वक्तुमशक्यत्वात्स्यादवक्तव्यं चतुर्थो भङ्गः। ४। आद्यचतुर्थयोर्वांच्छायां स्यादस्ति चावक्तव्यश्चेति पञ्चमो भङ्गः। ५। द्वितीयचतुर्थेच्छायां स्या-

नास्ति चावक्तव्यश्चेति । अतः सर्वं वस्तुजातं द्रव्यपर्यायात्मकमनैकान्तिकं, द्रव्यस्वरूपस्य चैकत्वात् । स्थिरत्वात्सद्बुद्धिबोध्यत्वात्तदात्मना सत्त्वैकत्वनित्यत्वाद्युपपद्येत । पर्यायाश्च द्रव्यस्यावस्थाविशेषाः । घटत्वपटत्वादिरूपास्तेषां चानेकत्वादस्थिरत्वादसद्बुद्धिबोध्यत्वात्तदात्मनाऽसत्त्वादिकमुपपद्येतेति । तत्रेदमुच्यते । नैकस्मिन्निति । एकस्य द्रव्यस्यास्तित्वनास्तित्वनित्यत्वानित्यत्वादिभिरनैकान्तिकत्वं न युक्तम् । कुतः ? एकस्मिन्धर्मिणि सत्त्वाऽसत्त्वादेर्विरुद्धधर्मस्य छायातपवत् युगपदसम्भवात् । कथमेको भावोऽस्ति नास्ति च स्यात् विरोधात् । ननु पटरूपेण घटो नास्ति स्वेन रूपेणास्तीति न विरोध इति चेन्न । स्वरूपेऽपि सप्तभङ्गीनयस्याविशेषात्स्वरूपमस्तीत्यपि स्यान्नास्तीत्यपि तत्रानध्यवसानमेव स्यात् । किञ्च ये सप्तपदार्थास्ते तथैव स्युरन्यथा वेत्यनिश्चितज्ञानमप्रमाणमेव स्यात् । ननु सर्वमनैकान्तिकमित्यवधारणज्ञानं निश्चितमेवेति चेन्न । अवधारणमप्यनैकान्तिकमेव स्यात् । अवधारणं स्यान्नास्ति चावधारणमिति न क्वचिन्निश्चयः स्यात् । मोक्षोऽस्ति नास्तीत्यवधारणादप्रवृत्तिरेव स्यात्तत्रैवं शास्त्रं प्रणयन्नुन्मत्ततुल्यस्तीर्थंकरः स्यात् । यच्चोक्तं पुद्गलसञ्ज्ञकपरमाणुसङ्घाताः पृथिव्यादयस्तत्पूर्वोक्तेश्वरानधिष्ठितपरमाणुवादनिरासेनैव निरस्तमिति ज्ञेयम् । तथा पञ्चास्तिकायानामपि पञ्चत्वसङ्ख्याऽस्ति न वेति ? विकल्पे, आद्ये स्यात् । द्वितीये न स्यादिति न्यूनाधिकसङ्ख्यात्वमेव स्यादिति संक्षेपः ॥ ३३ ॥

## एवं चात्माऽकार्त्स्न्यम् ॥ २ । २ । ३४ ॥

एवमेकस्मिन्धर्मिणि विरुद्धधर्मसमावेशासम्भवदोषवदात्मनोऽपि यदिष्टं देहपरिमा-

---

न्नास्ति चावक्तव्यश्चेति षष्ठो भङ्गः ।६। तृतीयचतुर्थेच्छायां स्यादस्ति नास्ति चावक्तव्यश्चेति सप्तमो भङ्ग इतिविवेकः । एवमेकत्वमनेकत्वञ्चेति द्वयमादाय स्यादेकः स्यादनेकः स्यादेकोऽनेकश्च ; स्यादवक्तव्यः स्यादेको वक्तव्यः स्यादनेकोऽवक्तव्यः स्यादनेकोऽनेकश्च वक्तव्यश्चेति । तथा स्यान्नित्यः स्यादनित्य इत्याद्यूह्यम् । पदार्थमात्रं द्रव्यात्मना सत्त्वैकत्वनित्यत्वाद्युपेतं पर्य्यायात्मना च तद्विपरीतमित्याह । अतः सर्वं वस्तुजातमिति । तदेवोपपादयति । द्रव्यस्वरूपस्यैकत्वादिति । पर्य्यायशब्दार्थं निर्वक्ति । पर्य्यायाश्चेति । तन्मते पर्य्यायशब्दस्यावस्थासु पारिभाषितत्वादिति भावः । तदेवाह । घटत्वपटत्वादिरूपेति । तेषाम्=घटत्वादीनाम् । तमेनं सप्तभङ्गीनयं दूषयति । तत्रेदमुच्यत इति । सूत्रार्थं व्याचष्टे । एकस्येति । सत्यं यदस्ति वस्तु तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव न नास्तीत्यापादयितुं शक्यते तथाच विरुद्धयोर्धर्मयोरेकत्र न समावेश इत्याह । एकस्मिन्निति । एकस्मिन्नेव धर्मिणि भिन्नभिन्नरूपेणास्तित्वं नास्तित्वमुपपद्यत इति कथं तयोर्विरोध इत्याशङ्कते । नन्वित्यादिना । स्वेन रूपेण=घटरूपेण । सप्तभङ्गीनयस्य जागरूकत्वात् वस्तुनः स्वरूपमस्ति नास्तीति सम्भावनायां तस्य किं स्वरूपमिति निश्चेतुमशक्यत्वान्नोक्तप्रकारः साधीयान्नित्याशयेन परिहरति । नेति । जीवादिसप्तपदार्थानां सप्तत्वमस्त्येव नास्त्येवेति नियतं वा उतानियतम् । आद्ये व्यभिचारमाह । किञ्चेति । द्वितीये पदार्थनिश्चयो न स्यादित्याह । अन्यथावेति । अनेकान्तं सर्वमित्येव निश्चय इति शङ्कते । नन्विति । अनेकात्मकं वस्त्विति ज्ञानस्य निर्धारितत्वे तत्रैव वस्तुत्वस्य नैकान्त्यान्नैवमिति दूषयति । नेति । इत्येवं सर्वत्रानिर्धारणे सत्युपदेशो निष्कम्पप्रवृत्तिश्च न स्यादित्याह । मोक्षोऽस्तीति । प्रागुक्तार्थं दूषयितुमनूद्यति । यच्चोक्तमिति । आद्यइति । अस्तित्वपक्षे तेषां पञ्चत्वसङ्ख्या स्यादित्यर्थः । द्वितीये पञ्चत्वसङ्ख्याया नास्तित्वपक्षे ॥ ३३ ॥

णत्वं तदपि पक्षे स्यात्पक्षे नेत्यकात्स्न्र्यमपरिपूर्णत्वं च दोषः प्रसज्ज्येतेत्यर्थः । तत्र शरीरैकदेशे जीव इत्येकदेशा जीवशून्यः स्यात् । किञ्च मनुष्यदेहपरिमाणो जीवः केनचित्कर्मविपाकेन पिपीलिकादेहे प्रविशन्न सम्मीयेत ॥ ३४ ॥

## न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥ २ । २ । ३५ ॥

ननु मनुष्यदेहपरिमाणस्य जीवस्य हस्तिशरीरादावकात्स्न्र्यं परिहर्तुं शक्यं, कथमनन्तावयव आत्मा महति शरीरे तदवयवानामुपचयोऽर्भकशरीरेऽपचय इत्येवं पर्यायादविरोध इति चेन्नेति । कुतः ? विकारमूर्त्तत्वादिदोषप्रसङ्गात् । अवयवोपगमापगमाभ्यामनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विकारित्वं स्यात्तथात्वे चर्मादिवदनित्यत्वप्रसङ्गस्ततश्च बन्धमोक्षौ कस्य स्याताम् । यदि सावयवो जीवः स्याद्देहवद्विनाशी स्यान्मूर्त्तत्वाच्च । नचोपचयापचयौ कल्पयितुं शक्यौ प्रमाणाभावात् । येऽपगतास्तेऽपगता एव, न तेषां पुनरात्मसम्बन्धो निरूपयितुं शक्यत इति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २ । २ । ३६ ॥

अन्त्यस्य चरमदेहगतस्य परिमाणस्यावस्थितिरिष्यते विसिग्भिः । भिन्ने देहे मुक्तः सर्वगतो देहान्तरावच्छेदाभावात्तन्नित्यं परिमाणं, ततश्चाद्यमध्ययोरप्यवस्थयोर्नित्यत्वं स्यादतोऽविशेषः । सर्वदाऽणुर्वा महान्वा जीवो न शरीरपरिमाण इति वक्तुं शक्यते । एवं चोपचयापचयप्रतिज्ञाहानिरतो दिगम्बरमतमपि सौगतमतवदत्यन्तमनादरणीयमिति ॥३६॥ इत्येकस्मिन्नसम्भवाधिकरणम् ।

### अथ पशुपत्यधिकरणम् ।

अथ पशुपतिपक्षनिरास उपक्रम्यते—

## पत्युरसामञ्जस्यात् ॥ २ । २ । ३७ ॥

---

एवशब्दार्थं व्याचष्टे । एवमेकस्मिन्निति यथा पूर्वोक्तदोषः । एवं दोषान्तरमपीत्यर्थः । तदेवोपपादयति । यदिष्टमिति ॥ ३४ ॥

आत्मा देहपरिमाण इति जैनैरिष्यते । तथात्वे मातङ्गशरीरं व्याप्य स्थितस्यात्मनो मशकशरीरप्रवेशे वैकल्यप्रसङ्ग आपादितः तं परिहरन्नाशङ्कते । नन्विति । सङ्कोचविकाशवाननन्तावयव आत्मा तत्तच्छरीरानुसारेण सङ्कोचविकाशरूपं पर्य्यायावस्थान्तरमापद्यत इत्यभ्युपेयते, अतो नोक्तदोष इत्यर्थः । हेत्वर्थमेव विवृणोति । अवयवोपगमापगमाभ्यामिति । तथात्वे = विकारित्वे । विकारो जन्मादिः । अनित्यत्वं विनाश इत्यर्थः । उक्तार्थं तर्केण द्रढयति । यदीति ॥ ३५ ॥

सूत्रार्थं विवृणोति अन्त्यस्येति । विसिग्भिरिति । सिग्वस्त्रं विगतं येभ्यस्ते विसिग्यो दिगम्बरास्तैरित्यर्थः । जीवस्य तावद्गुणादेरिवापरिमाणत्वमनभ्युपगतम् । विभुत्वञ्चानिष्टम् । देहपरिमाणवादेऽणुत्वञ्चासम्भावितमणुपरिमाणदेहाभावात् । एवञ्च यथास्वरूपं मोक्षावस्थावस्थितं नित्यतया पूर्वमपि सत् तथाऽन्त्यपरिमाणं मोक्षावस्थावस्थितम् । अदेहोपाधिकं नित्यतया पूर्वमपि स्यात् । तत आत्मनो देहपरिमाणत्वहानिरित्याह । भिन्ने देहे मुक्तइति ॥ ३६ ॥ इत्येकस्मिन्नसम्भवाधिकरणम् ।

इयं तावत्पशुपतिमतानुगामिनां प्रक्रिया, पशुपतिनेश्वरेण प्रणीतं पञ्चाध्यायिशास्त्रं पञ्च तत्र पदार्था निर्णीयन्ते। कारणं, कार्यं, योगो, विधिः, दुःखान्तः, इति। कारणं प्रधानमीश्वरश्च। कार्यं महदादि। योगोऽ"प्योङ्कारमभिध्यायात्सकृदि"ति कुर्याद्धारणमित्येवमुक्तः। विधिपदार्थः विधिस्त्रिषवणस्नानादिगूढचर्यावसानः। मोक्षोदुःखान्तः। स च तार्किकादिवत्पाषाणकल्पावस्थितिः पाशुपतकापालिकयोः। शैवानां तु साङ्ख्यवच्चैतन्या आत्मानस्तिष्ठन्तीति विशेषः। ते चतुर्विधाः कापालाः, कालमुख्याः पाशुपताः शैवाश्च। सर्वेऽपि वेदविरुद्धाचारान् निःश्रेयःसाधनतया मन्यन्ते। निमित्तोपादानयोर्भेदं निमित्तकारणं पशुपतिं मन्यन्ते। तथैव साधनमपि मुद्रिकापट्कधारणादि। तथा चाहुः कापालाः—"मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः। भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति॥ कण्ठिका रुचकं चैव कुण्डलं च शिखामणिः। भस्मयज्ञोपवीतं च मुद्राषट्कं प्रचक्षते॥ आभिर्मुद्रितदेहस्तु न भूय इह जायते" इत्यादि। तथो कालमुखा अपि "कपालपात्रशवभस्मस्नोनतत्प्राशनलगुडधारणसुराकुम्भस्थापनतदाधारदेवतापूजादिकमैहिकामुष्मिकसकलफलसाधनमि"ति मन्यन्ते। "रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके। कपालं भस्मना स्नानमि"त्यादिकं शैवागमे प्रसिद्धम्। तथा केनचित्क्रियाविशेषेणेतरजातीयानामपि ब्राह्मणत्वप्राप्तिमुत्तमाश्रमप्राप्तिं च विदधति। "दीक्षांप्रवेशमात्रेण ब्राह्मणो भवति क्षणात्। कापालं व्रतमास्थाय यतिर्भवति मानवः"इति। तन्निराकरोति। पत्युरिति। नेत्यनुवर्त्तते। पशुपतेः पक्षः श्रेयोऽर्थिभिर्नादरणीयः। कुतः? असामञ्जस्यात् वेदबाह्यत्वात्। मुद्राषट्कधारणभगासनस्थात्मध्यानसुराकुम्भस्थापनतत्स्थदेवतार्चनगूढाचारश्मसानभस्मस्नानप्रणवपूर्वाभिध्यानादेरन्योऽन्यविरुद्धत्वाद्वेदबाह्यधर्मत्वाच्च। तदुक्तसाधनानां वेदोक्तवेदान्तश्रवणादिभगवदुपासनादीनां च परस्परात्यन्तविरोधाच्च। पाषाणकल्पावस्थितिरूपमोक्षस्याप्यवैदिकत्वात्। तथा पशुपतेरपि जन्यत्वेन जगत्कारणत्वासम्भवाच्च। "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायते"त्यन्वयव्यतिरेकश्रुतेस्तस्य जन्यत्वावगमात्। "तदैक्षत बहु स्यां प्रजायेय, नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रः" इत्यादिश्रुतयः परब्रह्मश्रीपुरुषोत्तमं जगदभिन्ननिमित्तोपादानं वदन्त्योऽन्यस्य वस्तुजातस्य तदुपादेयत्वं निश्चिन्वन्ति। क्वचित् श्रूयमोणाः शिवादि-

---

अथ पशुपत्यधिकरणम्।

प्रधानकारणत्वाभ्युपगमसाम्यात् साङ्ख्यनिरासानन्तरभावित्वे पशुपतिमतनिरासस्य प्राप्तत्वेऽपि सौगतार्हतमतनिरासानन्तरं तत्प्रतिक्षेपस्तस्यात्यन्तवेदबाह्यत्वज्ञापनाय कृत इत्याशयं मनसि निधायाह। अथेति। तन्मतसिद्धां प्रक्रियां दर्शयति। इयमिति। तन्मतमनूद्य सम्प्रति परिहरतीत्याह। तन्निराकरोतीति। वेदविरुद्धत्वमेवोपपादयति। मुद्रेत्यादिना। वैदिकपक्षस्य तद्वैषम्यमाह। तदुक्तसाधनानामिति। उक्तार्थं श्रुतिमुखेन द्रढयति। एकोहवै नारायण इति। ब्रह्मपरेति। "पशुना यजेत छागो वा मन्त्रवर्णादि"ति न्यायात्सामान्यशब्दानां विशेषपर्य्यवसानात् ब्रह्मशिवादिसामान्यशब्दानां ब्रह्मपुरुषोत्तमनारायणविशेषपर्य्यवसायित्वं युक्तमित्यर्थः॥ ३७॥

आत्मा जीवात्मा स्वरूपेण नोत्पद्यते। कुतः? "अश्रुतेः" सृष्टिप्रकरणेषु तज्जन्मादेरश्रवणात् उक्तश्रुतेः पूर्वोक्तरीत्या भाक्तत्वमेव। किञ्च तस्य ताभ्यः श्रुतिभ्य एव नित्यत्वावगमात्। "न जायते म्रियते वा विपश्चित्, नित्यो नित्यानां चेतनश्चेतनानाम्, अजोह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोन्यः, अजो नित्यः शाश्वतोऽयं पुराणः" इत्यादिश्रुतिस्मृतिभ्यः। न चैवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्ग इति वाच्यम्। तस्य तदात्मकत्वादिना तदपृथक्सिद्धत्वाभ्युपगमात्स्वतन्त्रसत्तानाश्रयत्वाच्चेति संक्षेपः ॥१७॥ इत्यात्माधिकरणम् ॥७॥

अथ ज्ञाधिकरणम्

अथ किं प्रत्यगात्मस्वरूपमित्यपेक्षायां तन्निर्णीयते तथाहि सकिञ्चार्वाकाभिमतदेहरूप उत दिगम्बराभिमतदेहातिरिक्ततत्परिमाणकोवा? लोकायतिकाभिमतभूतचतुष्टयसमुदायो वा? वैभाषिकाभिमतक्षणिकबाह्यार्थोवा? योगाचाराभिमतक्षणिकविज्ञानमेव वा? माध्यमिकाभिमतशून्यमेव वा? इन्द्रियाण्येव वा? मनोबुद्धिर्वा? प्राणोवा? तार्किकाभिमतदेहेन्द्रियादिभिन्नो ज्ञानेच्छादिप्रयत्नाद्याश्रयो विभुः प्रतिदेहं भिन्न आगन्तुकचैतन्यगुणोवा? साङ्ख्याद्यभिमतचिन्मात्रमेव वा? देहादिभिन्नो ज्ञानस्वरूपो ज्ञातृत्वादिधर्म्माश्रयो वेति। तत्र नाद्यः देहे मृते चैतन्यानुपलब्धेः। देहो नात्मा भौतिकत्वात् घटादिवदित्यनुमानात्। न द्वितीयः अनित्यत्वापत्तेः, देहपरिमाणको नात्मा सावयवत्वात् घटादिवत्। न तृतीयः सङ्घातत्वात्, भूतचतुष्कसमूहो नात्मा सङ्घातत्वात् व्रीह्यादिराशिवत्। न तुर्य्यः भौतिकत्वात्, क्षणिकबाह्यार्थो नात्मा जडत्वात् घटादिवत्। न पञ्चमः क्षणिकत्वात्, क्षणिकविज्ञानं नात्मा क्षणिकत्वात् शब्दादिवत्। न षष्ठः शून्यं नात्मा जडत्वादाकाशवत्। न सप्तमः स्वापादौ तल्लयात्, इन्द्रियवर्गो नात्मा सर्वावस्थाऽननुगतत्वात् देहवत् करणत्वाद्वास्यादिवच्च। नाष्टमः मनो बुद्धिश्च नात्मान्तःकरणत्वाद्बाह्यकरणवत्। न नवमः जडत्वात् सुषुप्तौ चौरादिभिर्भूषणादौ मुषिते चैतन्याभावेनाऽननुभूयमानत्वात्, प्राणोनात्मा वायुत्वात् व्यजनजन्यवायुवदित्यनु-

---

अग्रिमसूत्रमवतारयितुं शङ्कते। नन्विति। सूत्रार्थं व्याचष्टे। आत्मेति। यथाग्नेर्विस्फुलिङ्गाः व्युच्चरन्तीति श्रुतेरित्यर्थः। पूर्वोक्तरीत्येति जीवस्योत्पत्त्यादिव्यपदेशो भाक्तः वाच्यैकदेशे भज्यत इत्यादिरीत्येत्यर्थः। तस्य=जीवात्मनः। श्रुतिमुदाहरति। नजायतइति। नास्ति चेत् प्रत्यगात्मनामुत्पत्तस्तर्हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपपद्येत तदुपपत्तये वियदादिवज्जीवात्मनोऽप्युत्पत्तिमत्वं वक्तव्यं तथा सति प्रत्यगात्मनो ब्रह्मकार्यत्वात्कार्य्यकारणयोरनन्यत्वात्तदुपपत्तिरित्याशङ्क्य परिहरति। नचेति। अचेतनानां पदार्थानां यादृशोऽन्यथाभावो न तादृशः प्रत्यगात्मनां किन्तु देहादिसंयोगहेतुकविचित्रविज्ञानविकाशो जन्म तथासति नोक्तप्रतिज्ञायां हानिरिति भावः। तस्य=जीवस्य। तदात्मकत्वादिना=ब्रह्मात्मकत्वादिना तदपृथक्सिद्धत्वाभ्युपगमात्=ब्रह्मापृथक्सिद्धत्वाभ्युपगमात्॥ १७॥ इत्यात्माधिकरणम्।

अथ ज्ञाधिकरणम्

जीवात्मनां प्रसङ्गात् तस्य स्वरूपं निर्णेतुकामः पृच्छति। अथेति। सन्ति चात्र प्रत्यगात्मस्वरूपे वादिनां विप्रतिपत्तयः। तद्यथा। किञ्चेति। कायाकारपरिणतभूतविशेषस्यैव चैतन्यवत्वं नतु भूतसामान्यस्येत्यर्थः। चतुर्णां भूतानां शरीररूपेण परिणामे परिणामविशेषस्याभावात्तत्र चैतन्यमुपपद्यते। शरीरविनाशे च चैतन्यमपि

मानेभ्यः देहादिबुद्धिपर्यन्तः पदार्थो यद्यनात्मा न स्यात्तर्हि घटादिवद्ध्वंसाभावप्रतियोग्यपि न स्यात्, प्रत्यक्षगृहीतध्वंसाभावप्रतियोगित्वान्यथानुपपत्त्यापि देहादेरनात्मत्वम् एवमग्रेऽप्यूह्यम्, इन्द्रियमनोबुद्ध्यादयो यद्यनात्मभूता न स्युस्तर्हि वास्यादिवज्जाग्रदादिसर्वावस्थानत्तुगता न स्युः प्राणो यदि बाह्यवायुवज्जन्यो न स्यात् तर्हि घटादिवदचेतनोऽपि न स्यादित्याद्यर्थापत्तिभ्यश्च । नापि दशमोऽसम्भवात् । तथाहि आत्मनो विभुत्वे चैत्रचरणप्रविष्टकण्टकादिजन्यदुःखानुभवकाले सर्वेषामप्यात्मनां तत्र सत्त्वेन वेदनानुभवप्रसक्तेस्तत्र विनिगमनाभावेनासम्भावितत्वावगमात् । न च यस्य शरीरे कण्टकवेधादि तस्यैव वेदनानुभवो नान्येषामिति व्यवस्थाङ्गीकारान्नोक्तदोषप्रसङ्ग इति वाच्यम्, सर्वेषां सान्निध्याविशेषे एकस्यैवानुभवो नान्येषामिति नियन्तुमशक्यत्वात् । नच यददृष्टोत्पादितं शरीरं तत्तदीयमिति नियम इति वाच्यम्, अदृष्टस्याप्युक्तन्यायेन नियामकत्वासम्भवात् । यदा हि तादृशादृष्टोत्पादनायैकेन संयुज्यते मनस्तदान्यैरपि मनोयोगस्याविशेषात् । कथमिव कारणसाधारण्ये क्वचिदेवादृष्टोत्पत्तिर्नान्यत्रेति । ननु मनःसंयोगासाधारण्येऽपि अहमिदं फलं प्राप्स्यामीत्यभिसन्धिरदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादिव्यवस्थानमिति तत एवादृष्टनियमो भविष्यतीति चेन्न, अभिसन्ध्यादीनामपि साधारणमनःसंयोगनिष्पाद्यतया व्यवस्थित्यसिद्धेः । ननु स्वकीयमनस्संयोगोऽभिसन्ध्यादिकारणमिति मनस्संयोग एवासाधारणो भविष्यतीति चेन्न, नित्यं सर्वात्मसंयुक्तं मनः कस्यचिदेवेति नियन्तुमशक्यत्वात् । नचादृष्टविशेषादात्मविशेषेण मनसः स्वस्वामिभावसिद्धिरिति वाच्यम्, तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः । नचात्मनां विभुत्वेऽपि तेषां प्रदेशविशेषा एव बन्धभाज इत्यात्मान्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात् सुखदुःखादिव्यवस्था भविष्यतीति वाच्यम् । यस्मिन्प्रदेशे चैत्रः सुखाद्यनुभूय तस्माद्देशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते सति तस्यापि तत्र सुखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेशविशेषस्याप्यन्तर्भावात् । तस्माद्विभुत्वहात्मवादितार्किकादीनां व्यवस्था सुदुर्घटेति सङ्क्षेपः । नाप्यागन्तुकश्चैतन्यगुणः । एवं हि ते मन्यन्ते आत्मनश्चैतन्यमात्ममनःसंयोगजं अग्निघटसंयोगजरोहितादिगुणवत् । नित्य-

---

नश्यति । सुरायाः प्रकृतिभूतेभ्यः वृक्षविशेषनिर्यासेभ्यो मदशक्तिवच्चैतन्यमुपजायत इतिभावः । दिगम्बराणां मतमाह । दिगम्बराभिमत इति । तत्परिमाणकः=देहपरिमाणकः । भूतचतुष्टयसमुदाय इति । ननु प्रत्येकं भूतचतुष्टयम् । तथा सति घटादेरपि चैतन्यं स्यात् भूतत्वादिति भावः । देहेन्द्रियादिविलक्षणो ज्ञानेच्छादिचतुर्दशगुणाश्रयो विभुपरिमाणको द्रव्यविशेष आत्मेति तार्किकाणां मतमाह । तार्किकाभिमत इति । आगन्तुकचैतन्यगुणइति । आत्ममनःसंयोगजन्यमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविको नात इन्द्रियाणां वैयर्थ्यमितिभावः । चार्वाकमतं दूषयति । तत्र नाद्य इति । तत्र=तेषु । यदि देहस्यात्मत्वं स्यात्तदा नष्टे देहेऽपि चैतन्यमुपलभ्येत यतो नोपलभ्यते अतो देहातिरिक्त आत्मेत्यर्थः । देहात्मत्वाभावमनुमानेन साधयति । देहइति । दिगम्बरमतं परिहरति । न द्वितीयइति । नहि प्रत्यक्षेण प्रमाणेन देहातिरिक्त आत्मा प्रतिपत्तुं शक्यते आत्मनो देहपरिमाणकत्वे सावयवत्वं तथा सत्यात्मनोऽनित्यत्वं स्यादित्यर्थः । लौकायतिकमतं निरस्यति । न तृतीयइति । सङ्घातो हि परार्थो भवति शयनासनाभ्यङ्गवत् सङ्घातस्य सङ्घातान्तरार्थत्वे तस्यापि सङ्घातत्वात् । तदन्यत् सङ्घातान्तरमन्वेषणीयं तेन तेनेत्यनवस्था स्यात् । तस्मात्सङ्घातातिरिक्त आत्मा स्व.कार्य इतिभावः । उक्तार्थमनुमानमुखेन

चैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यादतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेति तन्न। "अत्रायं पुरुषः स्वयं ज्योतिर्भवती"ति "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वादि" त्यादिश्रुतिविरोधात्। सुप्तमूर्च्छादौ तु सदेव ज्ञानं कर्मणा संकुचितमनभिव्यक्तमपि जागरादौ विकाशितमभिव्यज्यत इति न विरोधः। यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात्, तद्वत् प्रत्यगात्मा ज्ञानस्वरूपः चेतनत्वात् स्वप्रकाशत्वादचिद्भिन्नत्वाच्च ब्रह्मवत्। प्रत्यगात्मा यदि ज्ञानस्वरूपो न स्यात्तर्हि देहादिप्रकाशकोऽपि न स्यात् "योऽयं विज्ञानघनः" इति श्रुतेः, एतेन मीमांसकपक्षोऽपि निरस्तः दोषतुल्यत्वात्। इयांस्तु विशेषः तन्मते आत्मवन्मनसामपि विभुपरिमाणकत्वमिति तथा च तत्रापि सर्वैर्मनोभिः सर्वेषां जीवात्मनां संयोगादेः साम्यम्। किञ्चात्मवत् सर्वैरपि चक्षुरादिभिरिन्द्रियैः साकं मनस्संयोगस्य साम्यात्, श्रवणस्पर्शनादिज्ञानानां युगपदुत्पत्तिप्रसङ्गो दुर्वार इति दोषविशेषश्चिन्तनीयः। दुग्धादिभिर्द्रव्यैर्मनोयोगस्य युगपत्सद्भावात्। नच श्रावणादिज्ञाने श्रवणादिभिरिन्द्रियैः शब्दादियोगस्यासाधारणहेतुत्वात् मनोभिर्विषयसन्निकर्षेऽपि ज्ञानानुत्पत्तिः सुवचेति वाच्यम्। मनसामिन्द्रियैर्नित्यसंयोगस्य सत्वेनेन्द्रियसंयुक्तमनसां विषयसन्निकर्षाविशेषात्। किञ्च अस्तु वा कयाचित्कूटकल्पनया सुषुप्त्यादौ बाह्यश्रवणादिज्ञानानुत्पत्तिः मनोविषयसंयोगस्य सत्त्वेऽपि तत्रेन्द्रियसन्निकर्षाभावात् तथापि जाग्रदादौ इन्द्रियसंयुक्तमनसां शब्दादिभिर्नित्यसंयोगस्य दुर्वारत्वेन शब्दादित्वावच्छिन्नशब्दादिमात्रविषयकज्ञानस्योत्पत्तेरवश्यंभावात्, मनस्त्वावच्छिन्नैर्मनइन्द्रियसंयोगाभावेऽपि शब्दादित्वावच्छिन्नविषयस्मरणस्य सदा सद्भावापत्तेश्चेत्यलं विस्तरेण। नापि चिन्मात्रवेति पक्षः सम्भवति "विज्ञातारमरे! केन विजानीयात्, जानात्येवायं पुरुषः, एष एव हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" इत्यादिश्रुतिव्याकोपात्। तस्माच्चरम एव पक्षः सूत्रकाराभिमत इत्याह—

## ज्ञोऽत एव ॥ २ । ३ । १८ ॥

---

साधयति। भूतचतुष्कसमूह इति। वैभाषिकमतं प्रतिक्षिपति। न तुर्य्य इति। योगाचारमतमपाकरोति। नपञ्चमइति। माध्यमिकमतं परिहरति। नषष्ठइति। सुषुप्तौ इन्द्रियाणां देहवल्लयदर्शनात् य एवाहं रूपमद्राक्षं स एवाहं शब्दं शृणोमि गन्धं जिघ्रामीत्यादि प्रत्यभिज्ञाबाधाद् रूपाद्यनुभवस्य यौगपद्योपपत्तेः। तत्क्रमभङ्गाच्चेत्यादिभिर्हेतुभिर्हिनेन्द्रियाणामात्मत्वमित्याह। नसप्तमइति। चक्षुरादिनियामकं शरोराश्रयं मन एवात्मेति वादिनां मतं निराचष्टे। नाष्टमइति। मनसः करणत्वेनात्मत्वायोगात् बाह्यकरणवत् नहि छिदाकारणानां कुठारादीनां चेतनकर्त्तारमन्तरा कार्यजनकत्वं दृष्टं तद्वत् प्रकृतेपीत्यर्थः। प्राणस्यात्मत्वं निरस्यति। न नवमइति। उक्तानुमानेष्वप्रयोजकत्वशङ्कानिरासायानुकूलतर्कान् दर्शयति। देहादिबुद्धिपर्यन्तइति। तार्किकबुद्धावापाद्याभावेनापादकाभावस्य सिद्धिः फलम्। तथा च ध्वंसाभावप्रतियोग्यभावाभावेन देहादिष्वनात्मत्वाभावाभावस्य सिद्धिरिति भावः। एवमग्रेपि द्रष्टव्यम्। तदेवोपपादयति। प्रत्यक्षगृहीतेति। मनो बुद्धिश्च नात्मान्तःकरणत्वादित्यनुमानेऽप्रयोजकत्वशङ्कां निरसितुमनुकूलतर्कं दर्शयति। इन्द्रियमनोबुद्ध्यादयइति। प्राणो नात्मेत्यत्रानुकूलतर्कमाह।

अयमात्मा ज्ञ एव ज्ञानस्वरूपत्वे सति ज्ञातृस्वरूप एव, न पाषाणकल्पः नापि ज्ञानमात्रम् कुतः ? अतएव श्रुतिभ्य एवेत्यर्थः । श्रुतयस्तु पूर्वमुदाहृता बोध्याः । प्रत्यगात्मा ज्ञाता आत्मत्वात्, ब्रह्मवत्, प्रत्यगात्मा यदि ज्ञानाश्रयो न स्यात्तर्हि तदुपदेशशास्त्रस्य सार्थक्यमपि न स्यात् "जानात्येवायमि"ति पूर्वोक्तश्रुतेः । ननु ज्ञानाख्यधर्मस्य स्वरूपज्ञानवतोऽत्यन्तसाजात्यात् । कथमिवाधाराधेयभावः ? जले क्षिप्तस्य जलान्तरस्याधाराधेयभावादर्शनादिति चेन्न । विषमदृष्टान्तत्वात् । जलयोर्द्रव्यत्वाद्भेदानुपलब्धिरिष्टापन्ना अत्यन्तसाजात्यात् । परन्तु सावयवद्रव्यत्वेन भेदस्य तत्राप्यनुमेयत्वात् । अन्यथा वृद्धिह्रासानुपपत्तेः । प्रकृते तु धर्मत्वधर्मित्वयोरवच्छेदकत्वान्नोक्तदोषावकाशः । मणिद्युमण्यादिष्वाधाराधेयभेदस्य प्रत्यक्षोपलभ्यमानत्वात्, प्रकृष्टप्रभावान् सूर्य इत्यादिप्रतीतेश्च । नच मण्याद्यवयवेष्वेव प्रभात्वव्यवहारः, सूर्यस्यावयवा एव विशीर्य्यमाणा लोके व्याप्नुवन्तीति वाच्यम्, कालान्तरे द्रव्यनाशप्रसङ्गात् । नच तत्रावयवान्तरोत्पत्तिः कल्पनीयेति वाच्यम्, प्रमाणाभावात् । प्रभातद्वतोर्भेदस्य च प्रमाणसिद्धत्वात् । "रामेणानुगता सीता भास्करेण प्रभा यथे"ति सर्वज्ञश्रीवाल्मीक्युक्तेः । अन्यथा रजतादिसम्पुटनिहितायाः कस्तूरिकाया अवयवनाशे कालान्तरे सर्वस्या अप्यनुपलब्धिप्रसङ्गः स्यात् । तस्माद्यथा सूर्यतत्प्रभयोस्तैजसत्वाविशेषेऽपि सूर्यत्वप्रभात्वावच्छिन्नतयाऽऽधाराधेयभावः प्रत्यक्षादिप्रमाणसिद्धः तथा प्रकृतेऽपि उभयोर्ज्ञानत्वसामान्येऽपि धर्मत्वधर्मित्वावच्छिन्नतया तथात्वस्य सामञ्जस्यादिति । उपलक्षणं चैतदहमर्थस्यापि ज्ञातृभिन्नाहमर्थस्वरूप इत्यर्थः । अहं जानामि अहं करोमि अहं वै त्वमसि देवते ? त्वं वा अहमस्मी" त्यादिभ्यः । यत्तु कैश्चिदुच्यते सत्यमनिदं चैतन्यम् । अनृतं युष्मदर्थोऽतनस्तयोर्मिथुनीकरणमध्यासः । तत्राहमित्याध्यात्मिककार्याध्यासेषु प्रथमोऽध्यास इति सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति श्रीभगवत्पादभाष्यकारोक्तेस्तस्माद-

---

प्राणोयदीति । तार्किकपक्षं प्रतिक्षेप्तुमाह । नापिदृशमइति । आत्मनो विभुत्वे सुखदुःखादिसाङ्कर्यापत्तिं दर्शयति । तथाहीत्यादिना । तत्र=चैत्रशरीरे । सत्वेनेति । आत्मनां विभुत्वादित्यर्थः । चैत्रशरीरे सर्वेषामात्मनां सम्बन्धोऽसम्भावित इति न सर्वेषां वेदनानुभव इत्यत्राह । विनिगमनाभावेनेति । एकतरपक्षपातिनी युक्तिर्विनिगमना तद्विरहादपि चैत्रशरीरे सर्वेषामात्मनां सम्बन्धे सम्भावितत्वसिद्धेरप्रत्यूहत्वादितिभावः । शरीरभेदमाश्रित्योक्तदोषं परिहरति । यद्यशरीर इति । निरासे हेतुमाह । सर्वेषामिति । यस्य शरीरे कण्टकवेधो जातस्तस्मिन् शरीरे सर्वेषामात्मनां सान्निध्यात्सर्वेषां दुःखानुभवो दुर्वार इत्यर्थः । अदृष्टस्य प्रत्यात्मनि भिन्नत्वान्न सर्वेषां कण्टकवेदनाजन्यदुःखानुभव इत्यत्राह । यदाहेति । तादृशादृष्टोत्पत्तौ आत्ममनोयोगस्य कारणत्वं तच्च सर्वसाधारणमेकमेव तथाचोक्तदोषो दुर्वार इतिभावः । नह्यदृष्टोत्पत्तिं प्रत्यात्मनः संयोगस्य कारणत्वं प्रतिपादयामो येनोक्तदोषः प्रसज्येत किन्त्वहमिदं फलं प्राप्स्यामीत्यभिसन्धेरपि कारणत्वं तथा च तादृशाभिसन्धेः सर्वत्रासत्वान्नोक्तदुःखसाङ्कर्यापत्तिरित्याशङ्कते । नन्विति । तत इति । अहमिदं फलं प्राप्स्यामीत्यभिसन्धित इत्यर्थः । परिहरति । नेति । तादृशाभिसन्धिं प्रत्यपि आत्मनः संयोगस्यैव कारणत्वं तच्च सर्वसाधारणमिति न सिद्ध्यति व्यवस्थेत्यर्थः । तत्तन्मनः संयोगस्तादृशाभिसन्धिं प्रत्यसाधारणकारणमिति व्यवस्था सूपपन्नेत्याशङ्कते । नन्विति । परिहरति । नेति । सर्वात्मसंयुक्तं नित्यं मनः स्वस्यैव नत्वन्यस्येति नियमः कर्त्तुं न शक्यत इत्यर्थः । अदृष्टविशेषप्रयुक्तं मनः स्वात्मनैव

हमर्थो नात्मा सुषुप्तौ स्वप्रकाशस्यात्मनः सत्त्वेऽप्येवंविधस्याहमर्थस्याभावात्। "अथातोऽहङ्कारादेशः, अथात आत्मादेशः" इत्यादिश्रुत्योभयोः पार्थक्योपदेशात्। "अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधे"ति स्मृत्या च क्षेत्रान्तःपातित्वोपदेशादहमर्थो नात्मा, सुषुप्त्याद्यवस्थानानुगतत्वात् स्थूलदेहादिवत्, करणत्वाच्च चक्षुरादिवदित्यनुमानाद्धेत्यादि। तन्न सम्यक्, असम्भवात्। तथाहि इदं रजतमिदं जलमयं सर्प इत्यादिवदध्यासमात्रस्याधिष्ठानारोप्यांशद्वयभानवत्त्वात्। अहमर्थेऽशद्वयभानाभावात्। नन्वयो दहतीतिवदहमुपलभे इति दृक्दृश्ययोरुपलम्भादस्त्यंशद्वयभानमिति चेन्न। उक्तवाक्यस्याग्निना सिञ्चेदितिवद्वाक्याभासत्वेन त्वदीयकल्पनामात्रत्वात्। किञ्चायोऽदहतीत्यस्य वाक्यत्वेन तत्राप्यंशद्वयस्य न भानम्, अन्यथाग्निना सिञ्चेदित्यत्राप्यध्यासोऽभ्युपगन्तव्यः पण्डितम्मन्यैः। किंचास्तु वा अयो दहतीत्यस्य प्रामाण्यं तत्रायःशब्दोऽजहल्लक्षणया दाहाश्रयाग्निविशिष्टायोऽर्थे वर्त्तमानतया लाक्षणिक एव। शोणो धावतीतिवत् अग्निर्माणवक इतिवद्वा तात्पर्यानुपपत्तेर्लक्षणाबीजत्वात्। अन्यथात्राप्यध्यासः कल्पनीयो मनीषिभिः। अननुभूयमाने हि द्व्यंशताकल्पने मानाभावात्। अन्यथात्मेत्यत्रापि द्व्यंशताकल्पनापत्तेः, नाप्यहमुपलभे इत्यत्र द्व्यंशताभानसम्भवः ब्रह्म स्फुरति, आत्माऽस्ति, चैतन्यं भातीत्यादावपि द्व्यंशतापत्तेः। तस्माद्द्व्यंशताभानाभावादह-

---

सम्बद्धमित्याशङ्क्य परिहरति। नचेति। अदृष्टविशेषं प्रत्यप्यात्मनः संयोगस्यैव हेतुत्वं तच्च सर्वसाधारणमित्युक्तदोषो दुर्वार इत्याह। तथाप्यदृष्टस्येति। भवतु तावदात्मनां विभुत्वं तथापि तच्छरीरावच्छेदेनात्मनां प्रदेशविशेषाः सन्ति त एव बन्धभाजस्तत एव सुखदुःखादिसांकर्यमित्याशङ्क्य परिहरति। नचेति। चैत्रीयशरीरे मैत्रशरीरवर्त्यात्मान्तरप्रदेशस्य सत्त्वं कार्यदर्शनेनानुमातुं शक्यते तद्यथा चैत्रेण स्वशरीरप्रदेशे सुखमनुभूतं ततस्तस्माद्देशादपक्रान्तस्तस्मिन्नेव प्रदेशे मैत्रस्य सान्निध्ये सति मैत्रस्यापि तस्मिन् प्रदेशे सुखं जायत इत्याह। यस्मिन् प्रदेशइति। उपसंहरति। तस्मादिति। उक्तदोषाणां जागरूकत्वादित्यर्थः। तार्किकाभिमतं जीवात्मनां विभुत्वं बहुत्वञ्च निरस्य सम्प्रत्यागन्तुकचैतन्यगुणत्वमपाकरोति। नापीति। सुषुप्तौ मूर्च्छायाञ्च विषयाभावात् ज्ञानस्याभाव इत्यर्थंज्ञानयोर्व्याप्यव्यापकभावस्तथाच नात्मस्वभावश्चैतन्यम्। आत्मानुवृत्तावपि चैतन्यास्याभावात्। अत इन्द्रियसंयोगसत्त्वे ज्ञानसत्त्वं तदभावे तदभाव इत्यात्ममनःसंयोगजमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविको नात इन्द्रियाणां वैयर्थ्यं तस्माज्जडा एव प्रत्यगात्मान इति तन्मतं व्युत्पादयन्नाह। एवं हि ते मन्यन्त इति। ते=तार्किकाः। परिहरति। नेति। स्वयं ज्योतिष्ट्वं नामकरणव्यापारायत्तप्रकाशशून्यत्वं तेषामपि प्रकाशकत्वाद्दिति प्रत्यगात्मनां स्वाभाविकचैतन्यत्वसिद्धिरिति भावः। यदि जीवानां स्वाभाविकी ज्ञानशक्तिर्न स्यात्तर्हि इन्द्रियादिसन्निकर्षेऽपि न जानीरन्नाकाशवत्। यदागन्तुकज्ञानं जडस्य भावं तत्कदाचित्परोक्षं कदाचि संदिग्धं कदाचित्विपर्यस्तं यथा घटादि नचैवमात्मा तथाहि—अनुमानिऽन्यरोक्षः स्मरन्नप्रनुभविकः सन्दिहानोऽप्यसंदिग्धः विपर्य्यस्तः सन्नप्यविपरीतः सर्वस्यात्मा तथा च तत्स्वभावः। नच तत्स्वभावस्य चैतन्यस्याभावस्तस्य नित्यत्वात्। तस्मात्सञ्ज्ञासुषुप्त्यादौ कर्मणा सङ्कुच्यते जागरेऽभिव्यज्यत इति भावः। तदेव दृष्टान्तेन द्रढयति। यथेति। अनुमानेन प्रत्यगात्मनो ज्ञानस्वरूपत्वं साधयति। प्रत्यगात्मेति। उक्तानुमानेऽप्रयोजकत्वशङ्कानिरासायानुकूलतर्कं दर्शयति। प्रत्यगात्मायदीति। उक्तार्थं श्रुतिमुखेन दर्शयति। योयमिति। एतेनेति। प्रागुपदर्शितदोषेण तार्किकमतापेक्षया मीमांसकमते यो विशेषस्तं दर्शयति। इयांस्त्विति। मीमांसकमते सुखदुःखसाङ्कार्यापत्तिदोषापेक्षया चाक्षुषस्पार्शनश्रावणप्रत्यक्षाणां युगपदुत्पादापत्तिरधिकेत्याह। तथाचेति। तत्तत्प्रत्यक्षे तत्तदिन्द्रियैर्विषयसंयोगोऽसाधारणहेतुस्तदभावान्न युगपज्ज्ञानोत्पादापत्तिरित्याशङ्क्य परिहरति। नचेति। सामान्यसामग्रीस-

मर्थ आत्मैवेति सिद्धम् ।"द्वयंशतापि न च भाति चेतनेऽहंप्रतीतिविषयेऽहमर्थके इति, पूर्वाचार्योक्तेः । ननु यद्यात्मस्वरूप एवाहमर्थोऽभिप्रेतश्चेत्तर्हि सुषुप्त्यादौ किमिति न स्फुरतीति चेन्मैवम्, अहमर्थस्ताबदिच्छादिविशिष्ट एव स्फुरतीत्यावयोर्निर्विवादत्वात्समम् । सुषुप्तौ चेच्छादेरभावादहमर्थस्य विशेषाऽननुभवोऽविरुद्ध इति ब्रूमः । एवमहं सुखीच्छामी"ति प्रतीतिभिन्नात्मविषयकप्रतीतेरसत्त्वेनात्मनोऽपीच्छादिविशिष्टितयैव ग्रहणम् । इच्छादिग्रहं विनात्मग्रहाङ्गीकारश्चेदहमर्थस्याप्यङ्गीकारे च्तेरभावात् । सुखत्वेनात्मनोऽनुभव इति चेत्तर्हि "सुखमहमस्वाप्समि' त्यहमर्थस्यैव सुखत्वेनानुभवादात्मत्वमविरुद्धमिति 'न किञ्चिदवेदिषमि" त्यज्ञानाश्रयत्वेनानुभवाच्च । ननु सुषुप्तौ नाहमर्थानुभवः । न च परामर्शानुपपत्तिरिति वाच्यम्, परामृश्यमान आत्मा इदानीं जातेनान्तःकरणेनाहमर्थेनावच्छेदादहं त्वं गतस्तथात्वे नानुभूयते तथाच नोक्तपरामर्शानुपपत्तिरितिचेन्न । न किञ्चिदहमवेदिषमित्यादावज्ञानाद्यंशे-

---

वस्य सुघटतया नोक्तदोषो वारयितुं शक्यत इत्याह । मनसामिन्द्रियैर्नित्यसंयोगस्येति । तुष्यतु दुर्जन इति न्यायेनाह । किंचेति । मीमांसकनये विभुपरिमाणकस्य मनसः शब्दादिभिर्नित्यसंयोग आवश्यकस्तथाच शब्दत्वेन शब्दमात्रविषयकज्ञानं स्यादित्याह । तथापीति । श्रुतिविरोधेन साङ्ख्यमतं दूषयति । नापीति । ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह । विज्ञातारमिति । फलितमनेन प्रत्यगात्मनः स्वाभाविकं ज्ञातृत्वम् । नहि शरीरस्य संसृतिदशायामेव ज्ञातृत्वमपि तु मुक्तावपीत्याह । जानात्येवायमिति । अवधारणासङ्कोचात् मुक्तावपि ज्ञातृत्वसिद्धिः । ज्ञातृत्वद्रष्टृत्वकर्तृत्वज्ञानत्वादेरात्मनि सद्योक्तिं दर्शयति । एषएवहीति । निगमयति । तस्मादिति । उक्तपक्षाणां दोषग्रस्तत्वात् श्रुतिस्मृतिविरुद्धत्वादित्यर्थः । चरमपक्षइति । देहादिभिन्नज्ञातृत्वादिधर्माश्रय इत्यर्थः । सूत्रार्थं व्याकरोति । अयमात्मेति । श्रुतिसम्मतमनुमानं दर्शयति । प्रत्यगात्मेति । उक्तानुमानेऽनुकूलतर्कं दर्शयति । प्रत्यगात्मायदीति । उक्तानुमानेश्रुतिं प्रमाणयति । जानात्येवायमिति । स्यादेतद्यदि तवाभिप्रेतं धर्मज्ञानं सिद्ध्येत् न तदस्ति ज्ञानयोरत्यन्तसजातीयतयाऽऽधाराधेयभावाऽसम्भवाज्जले निक्षिप्तजलवदित्याशङ्कते । नन्विति । न दृश्यतेऽभेदे कुत्राप्यधाराधेयभावः किन्तु विभिन्नवस्तुनोरिति लोकविरुद्धत्वान्न ज्ञानस्य रूपस्यात्मनो ज्ञानाश्रयत्वं स्वस्मिन् स्ववृत्तित्वाभावेन विरोध इतिभावः । ज्ञानयोरभेदं दृष्टान्तेन द्रढयति । जलेनिक्षिप्तस्येति । विषमोऽयं दृष्टान्तः । जलयोर्द्रव्यत्वेन तत्र भेदानुपलब्धिरिष्टापन्ना अत्यन्तसाजात्यात् । परन्तु भेदस्य सावयवद्रव्यत्वेन तत्राप्यनुमातुं शक्यत इत्याशयेनोक्तशङ्कामपाकरोति । नेति । धर्मधर्मिणोरत्यन्तसाजात्यं यदि तयोरभेदं प्रति कारणं स्यात्तदा धर्मधर्मिणोरभेदस्स्यात् । नत्वेवं किन्तु तयोरत्यन्तसाजात्येन धर्मधर्मिणोरभेदो न ग्रहीतुं शक्यत इतिभावः । विपक्षबाधकतर्कमाह । अन्यथेति । सावयवद्रव्यत्वेन भेदानङ्गीकार इत्यर्थः । ज्ञानस्वरूपजीवतद्धर्मयोर्ज्ञानत्वेन साम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतयाऽधाराधेयभाव उपपद्यत इत्याह । प्रकृतेत्विति । धर्मित्वेन धर्मत्वेन ज्ञानयोर्विजातीयत्वात्तदुपपत्तिः ज्ञानस्वरूप आधर्मी ज्ञानं तद्धर्म इति विवेकः । तथा च वृत्तितावच्छेदकाधिकरणतावच्छेदकयोर्ज्ञानत्वात्मत्वयोर्भेदात् तयोराश्रयाश्रयीभावो न विरुद्ध्यत इति भावः । उक्तप्रकारेण धर्मधर्मिभावः कुत्रापि दृश्यत इत्यत आह । मणीति । द्युमणित्वेन प्रभात्वेन धर्मधर्मिभावस्य द्युमणिप्रभयोः सर्वानुभवसिद्धत्वान्न काप्यनुपपत्तिः प्रभात्वावच्छिन्नधर्मतानिरूपिता द्युमणित्वावच्छिन्नधर्मितेति भावः । उक्तार्थं प्रतीत्या व्यवस्थापयति । प्रकृष्टप्रभावानिति । भानोरवयवेष्वेव प्रभात्वं व्यवह्रियते तथा च नोक्तदृष्टान्तेन प्रकृते धर्मधर्मिभावः सिद्ध्यतीत्याशङ्क्य परिहरति । नचेति । तत्र=द्युमणौ । उक्तार्थं श्रीमहर्षिवचसा द्रढयति । रामेणेति । "अनन्या राघवेणाहं भास्करेण प्रभा यथा । अनन्या हि मया सीता भास्करेण प्रभा यथा ।" इत्यपि तत्र तत्रोक्तं द्रष्टव्यम् । विपक्षे बाधकतर्कमाह । अन्यथेति । उपसंहरति । तस्मादिति । आत्मनोऽहमर्थस्वरूपत्वमुपलक्षणतया ग्राहयति । उपलक्षणमिति । एतत् = ज्ञातृत्वम् । स्वबोधकत्वे सति स्वेतरबोधकत्वमुपल-

ऽप्यपरामर्शत्वप्रसङ्गात् । नह्यज्ञानादिकं निराश्रयमन्याश्रयं वा परामृश्यते, किन्त्वहमर्थाश्रय तावन्तं कालं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्र वाहमस्वाप्समित्यत्राप्यहमंशे परामर्शानुभवाच्च । अन्यथा यः पूर्वं दुःखी सोऽधुना सुखी जात इतिवत् यः पूर्वं मदन्यः सुप्तः सोऽधुनाहं जात इति धीः स्यात् । ननु जागरे समुत्पन्नेऽनुभूयमानेऽहमर्थे परामृश्यमानात्माऽभेदारोपात्परामर्शत्वोपपत्तिरिति चेन्न । इदं रूप्यमित्यादावारोप्याभिन्नतयेदमर्थस्येवाहमित्यत्राहमर्थाभिन्नतयात्मनोऽप्रतीतेः, अन्यथैतावन्तं कालं सुप्तोऽहमन्यो वेति कदाचित्संशयः स्यान्नत्वहमेवेति निश्चयः । न च सुषुप्तिकालानुभूतात्मैक्याध्यासान्निश्चयोपपत्तिरिति वाच्यम्, अहमर्थातिरिक्तात्मानुभवस्यालीकत्वात् । न च परामृश्यमानात्मैक्यारोपात्तदुपपत्तिरिति वाच्यम् । अपरामर्शे परामर्शत्वारोपस्य क्वाप्यदर्शनात् । सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः । सिद्धे च तस्मिन्सुषुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वमित्यन्योन्याश्रयापत्तेश्च । एतेन "सुषुप्तावहमर्थप्रकाशे स्मर्येत ह्यस्तन इवाहमर्थ" इति निरस्तम् । अहंशब्दोल्लेखितपरामर्शापादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावोपपत्तेः ।

---

क्षणमित्यर्थः । उक्तार्थं प्रतीत्या व्यवस्थापयति । अहं जानामीति । श्रुतिमुखेनाप्युक्तार्थं द्रढयति त्वमसीति । नन्वात्मानात्मनोः परस्पराध्यस्तत्वे शून्यवादापत्तिरित्याशङ्क्य श्रीशाङ्करीयं भाष्यमवतारयति । सत्यमनिदमिति । अनिदम्=चेतनं चिदात्मेति यावत् । अनृतमितिभाष्यस्थं तस्य व्याख्यानं युष्मदर्थोऽचेतनं बुद्धीन्द्रियदेहादि । ते द्वे धर्मिणी मिथुनीकृत्य युगलीकृत्येत्यर्थः । तत्र स्वरूपतोऽध्यासात्तयोर्मिथुनीकरणमध्यास इति न शून्यतेत्यर्थः । मिथ्याध्यासात्मककार्याध्यासेषु प्रथमोऽध्यास इति । अध्यासो द्विविधः मनुष्योऽहमित्यर्थाध्यासस्तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यास इति । लोकव्यवहार इत्यनेन स्फोरितम् । नैसर्गिक इति। प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽनादिरित्यर्थः । अहमर्थो नात्मा प्रकाशमानेष्वप्रकाशमानत्वादित्यनुमाने विशेषणासिद्धिनिरासाय पश्चादिति विशेषण निवेश्यम् । तथा च पश्चात्परामर्शान्यथानुपपत्त्येति पूरणीयम् । परामर्शः स्मरणम् । हेतौ विशेष्यभागं दर्शयति । अनेवंविधस्येति । अप्रकाशमानस्येत्यर्थः । मानानुग्राहकां श्रुतिञ्चाह । अथातइति । छान्दोग्ये भूमप्रकरणे यत्र नान्यत्पश्यतीत्युक्त्वा स एवाधस्तादित्यादिना भूमानं सर्वात्मकत्वेनोक्त्वा स एवाधस्तादित्यादिनाहङ्कारं निरूप्य अथात आत्मादेशः । आत्मैवाधस्तादित्यादिना अहङ्कारादात्मनः पार्थक्येनोपदेशाच्चाहमर्थो नात्मा अन्यथा तदनुपपत्तेरित्यर्थः । "क्षेत्रज्ञ आत्मा पुरुष" इत्यभिधानादिति भावः । स्मृतिवचनेनाप्युक्तार्थं प्रमाणयति । अहङ्कार इति । श्रुतिस्मृतिभ्यामहङ्कारादात्मनो पार्थक्यं निर्णीय द्विर्बद्धं सुबद्धं भवतीति न्यायादनुमानमपि तत्र प्रमाणत्वेनोपन्यस्यति । अहमर्थो नात्मेति । अहमर्थत्वमहमिति धीविषयत्वम् । सुषुप्तिभङ्गापत्तिभिया नहि सुषुप्तावहमर्थो भासत इत्याशयः । इति पूर्वपक्षविवरणम् ।

अहमर्थस्य द्व्यंशतानिराकरणम् । सर्वोऽपि भ्रमः द्व्यंशविषयोऽन्यथा । निरधिष्ठानकभ्रमापत्तेरिति परेषां पन्थाः । न चाहमिति बुद्धेर्द्व्यंशविषयत्वमनुभूयत इत्याशयेन निराकुर्वन्नाह । तन्नसम्यगिति । तदेवोपपादयति । तथाहीत्यादिना । इदं रजतमिति बुद्धेर्द्व्यंशविषयत्वमिदमित्यधिष्ठानविषयत्वं रजतमित्यारोपविषयत्वं यथानुभूयते न तथाहमिति बुद्धावित्यर्थः । समानाकारकप्रतीतिदृष्टान्तेनाहमुपलभ इति बुद्धेरपि ज्ञानार्थोपलब्ध्या द्व्यंशत्वमुपपादयन्नाशङ्कते । नन्विति।यथा सेके वह्निकरणकत्वाभावाद्वह्निना सिञ्चतीति वाक्यस्य सद्वचनाभासता तथाऽयो दहतीत्यस्यापि अयसि दहनकर्तृत्वाभावेन सद्वचनाभासतेत्याशयेन निराकरोति । नेति । अंशद्वयस्येति । अयोऽर्थो वह्निभागोऽस्तीति दहनाश्रयवह्नितादात्म्याध्यासादयो दहतीति प्रयोग इति शङ्कितुराशयः । दूषयति । नभानमिति । बाधकमाह । अन्यथेति । अंशद्वयस्वीकारे । तुष्यतु दुर्जन इतिन्यायेनाह किञ्चेति । शोणइति ।

तावन्मात्रे च ह्यस्तनवैषम्यात्। अहमर्थविशेष्यकस्याहम्प्रकारस्य च परामर्शापादने इष्टापत्तेः। "एतावन्तं कालं सुखमहमस्वाप्समि"ति सुषुप्तिकालीनसुखावच्छिन्नोऽहमर्थइति स्मृतेश्च। अन्यथा स्मर्येत ह्यस्तन इवाहमर्थ इति चोद्यं निरुत्तरं स्यात्। ननु तथाप्येतावन्त कालमहमित्यभिमन्यमान आसमिति परामर्शः स्यादिति चेन्न। कर्णौ स्पृष्टः कटिं चालयसि अहमर्थप्रकाशेन तदभिमानपरामर्शापादनस्य व्यधिकरणत्वात्। अन्यथा तवापि आत्मेत्यभिमन्यमान आसमिति परामर्शः स्यात्, तस्मात्सुषुप्तावहमर्थः प्रकाशत एव। अपि च सुषुप्तावहमर्थाभावेऽहं निर्दुःखः स्यामितीच्छया सुषुप्त्यर्थप्रवृत्त्यनुपपत्तिः। योऽहं सुप्तः स एव जागर्मीति प्रत्यभिज्ञा न स्यात्। योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमीति प्रत्यभिज्ञानुपपत्तिश्च। ननु कृशोऽहं स्थूलः स्यामिति वत्प्रवृत्त्युपपत्तिरिति चेन्न। कार्श्यस्य परम्परासम्बन्धेनारोपितस्यानारोपितस्य चाहमर्थस्य विद्यमानत्वे प्रवृत्त्युपपत्तावपि सुषुप्तावहमर्थस्य नाशात्तदानींतनसुखादिसम्बन्धाभावेन प्रवृत्त्यनुपपत्तेः। विवेकिनां मम देहः स्थूलः स्यादितीच्छयैव प्रवृत्तेश्च। नहि ममात्मा निर्दुःखः स्यादितीच्छया कस्यापि सुषुप्तौ प्रवृत्तिर्दृश्यते तस्माद्दृष्टान्तानुपपत्तिरेव वैषम्यात्। अहंव्यक्तिभेदात् कृतनाशाकृताभ्यागमप्रसङ्गश्च। कर्तृभोक्त्रोश्चाहमर्थस्य भेदात्। अभिन्ने च चैतन्ये कर्तृत्वाद्यभावात्, कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात्, अहं करोमीत्येव प्रतीत्याहमर्थाऽन्यात्मनि कर्तृत्वाद्यारोपस्याप्यभावाच्च अन्यथाऽऽत्माकरोतीति प्रतीतिः स्यात्

---

शोणपदस्य रक्तरूपाश्रये लक्षणा अग्निर्माणवक इत्यत्राग्निपदस्याग्निसदृशे लक्षणा। अहमिति बुद्धेर्द्वयंशत्वमनुभूयत इत्यत्राह। अनुभूयमानइति। अन्यथा अननुभूयमानेद्व्यंशताकल्पने। आत्मेति। आत्मेत्यत्र द्व्यंशविषयत्वे नैव प्रमाणमस्ति येन तथा कल्प्येत इतिभावः। उपसंहरति। तस्मादिति। उक्तार्थमाचार्यवचसा द्रढयति। द्व्यंशतापीति।

अहमर्थस्यात्मत्वोपपत्तिः

सुषुप्तावहमर्थस्य स्फुरणाभावान्न तस्यात्मत्वं प्रत्येतुं शक्यत इत्याशङ्कते। नन्विति। ज्ञानेच्छादीनां सम्बन्धेनैवात्मनः प्रत्यक्षत्वं नान्यथेत्याशयेन समादधाति मैवमित्यारभ्य ग्रहणादित्यन्तेन। इच्छादीनां ग्रहणमन्तराप्यात्मनः प्रत्यक्षत्वमाशङ्कते। इच्छादिग्रहं विनेति। सुखमहमस्वाप्समिति परामर्शे सुखमित्यनेन तदनुकूलतया भासमानत्वमनुसंहितं भवति यथा मन्दमगच्छं मधुरमगायमिति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानींतनमान्द्यं माधुर्यञ्चानुसंहितं भवति तद्वत्। तथा चाहमर्थस्यात्मनः सुखत्वेनानुभवादहमर्थस्यात्मत्वमविरुद्धमित्यर्थः। सुखमहमस्वाप्समिति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत इति चेन्मैवम्। क्रियायाः सुखाश्रयत्वायोगेन पुरुषद्वाराक्रियाविशेषणस्य युक्तत्वात्। आत्मनस्तदानीं न किञ्चिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूताहमर्थानुभवोऽभ्युपगन्तव्य इत्याशयेनाह। न किञ्चिदवेदिषमिति। सुषुप्तावहमर्थस्याहम्बुद्धेर्वा विनाशमिच्छता चोद्यमाह। नन्विति। यथा पूर्वेद्युरनुभूतोऽहमर्थः परेद्युः स्मर्यते तथा सुषुप्तावहमर्थोऽनुभूतश्चेत्सुप्तोत्थितेन स्मर्येत यदि सुषुप्तावहमर्थो नानुभूयते तदा तत्स्मरणानुपपत्तिरित्यन्यथानुपपत्त्या सुषुप्तावपि अहमर्थोऽनुभवोऽस्तीत्याशङ्क्याक्षिपति। नचेति। नाहमर्थस्य परामर्शविषयत्वं किन्त्वात्मन इत्याशयेन वादी समाधत्ते। परामृश्यमान आत्मेति। नाहमंशे परामर्शोऽपि त्वात्मांशेऽहमर्थेत्वनुभव इत्यर्थः। नन्वहमस्वाप्समित्यहन्त्वाश्रय एव परामृश्यते नात्मा तस्याहन्त्वानाश्रयत्वादित्यत आह। इदानीमिति। जाग्रद्दशायामित्यर्थः। सुषुप्तावहङ्कारभावो जाग्रद्दशायां तस्योत्पन्नत्वादुक्तपरामर्श उत्पद्यत इत्यर्थः। अवच्छेदात् = सम्बन्धात् तथात्वेन = अहन्त्वेन अनुभूयते ज्ञायते। तथा च नृसिंहा-

न च सुषुप्तौ कारणात्मना स्थितस्यैवोत्पत्त्यङ्गीकारान्नानुपपत्तिरिति वाच्यम्। कर्त्तृभोक्तृकारणस्य कर्तृत्वादिशून्यस्य स्थितावपि कृतहान्यादेरनुद्धारात्। किञ्च त्वन्मतेऽहङ्कार एव क्रियाशक्त्या प्राणः विज्ञानशक्त्या मन इति। तथाच सुषुप्तौ लये प्राणकार्यं निःश्वासादि न स्यात्। ननु प्राणस्याहङ्काराद्भेदपक्षेऽहङ्कारस्य लयो युक्तः। अभेदपक्षेऽपि प्राणांशविहीनस्य त्वयाङ्गीकारान्नोक्तदोष इति चेन्न। प्राणस्याहमर्थत्वाभावे कर्तृत्वस्य प्राणोपाधिकत्वेनाहंकर्त्तेति बुद्ध्ययोगात्। अहमर्थत्वे तु सुषुप्तावप्यहमुल्लेखापातात्। ननु पूर्वोक्तयोः श्रुतिस्मृत्योरनुमानस्य च विरोधस्तदवस्थ एव शास्त्रबाधस्तु तत्राप्यनिष्ट इति चेन्न। श्रुत्यादेरन्यविषयत्वेन बाधाभावात्। तत्र "अथातोऽहङ्कारादेशः" इत्यादि श्रुतिस्मृत्योः "गर्वोऽभिमानोऽहङ्कार" इत्यभिधानात् गर्वादिवाचकाहङ्कारो विषयः। सतु प्राकृत एव। अहङ्कारश्चा"हं कर्त्तव्यश्च"ति श्रुत्यन्तरात्। सच मान्तोऽव्ययरूपः कारप्रत्ययान्तः। आत्मवाच्याहंशब्दस्तु दकारान्तोऽस्मच्छब्दस्तस्मादुभयोरर्थतः शब्दतश्च भेदान्नोक्तदोषावकाशः। नचोभयोरप्यहङ्कार एव शक्तिरिति वाच्यम्। अहाङ्कारस्यानेकप्रयोगदर्शनेनैकत्र शक्तेर्नियंतुमशक्यत्वात्। अहंशब्दस्त्वहङ्कारशब्दवदात्मभिन्ने प्रयोगप्राचुर्याभावादात्मपर एवेति भावः। एवमहमर्थस्य सर्वावस्थानुमतत्वसिद्ध्या परोक्तानुमानवृत्तिहेतोः स्वरुपासिद्धत्वेनाप्रमाणत्वं सुप्रसिद्धम्। ननु ज्ञातुस्सद्भावे किमिति विशेषज्ञानं न स्यादिति चेन्न। तत्र विषयाभावात्. नहि ज्ञातुः सत्त्वमात्रं विषयानुभवे प्रयोजकम्, अपितु विषयसत्त्वसहकृतमेव तस्माज्ज्ञातुः सत्वेऽपि विषयाभावाद्विशेषज्ञानानु

कारज्ञानमिदमितिभावः। न किञ्चिदिति। अविद्यायाः सुषुप्तौ सद्भावात्तदंशे परामर्शरूपत्वं तवापि सम्मतं तत्र स्यादितिभावः। कुत इत्यत आह। नहीति अन्योन्याश्रयमिति। अहमर्थान्याश्रयमित्यर्थः। परामृश्यत इति। येन सुषुप्तावपि तथैवानुभवः सिध्येदिति भावः। अहमर्थेति तथा च न किञ्चिदवेदिषमित्यहमर्थाश्रितत्वेनैवाज्ञानस्य परामृश्यमानत्वात् सुषुप्तावपि तथैवानुभवो वाच्यः स तु न सम्भवति तदा त्वयाऽहमर्थानङ्गीकारात्। तथा चाहमर्थांश इवाज्ञानांशेऽप्यनुभवापत्त्या सुषुप्तावविद्या न सिद्ध्येदिति सुषुप्तावपि परामर्शानुसारेणाहमर्थाश्रितत्वेनैवानुभवे वाच्ये तदाहमर्थसिद्ध्याऽस्मदिष्टसिद्धिरिति भावः। एतावन्तमिति। यथा स्वप्नावस्थायामहमर्थसद्भावास्त्वप्नादुत्थितस्य स्वप्नं पश्यन्नासमासमित्यहमर्थविषयकपरामर्शो भवति तस्मिँश्च परामर्शे स्वप्नं पश्यन्नासमिति परामर्शवानस्मीत्यनुव्यवसायेनाहमर्थविषयकपरामर्शत्वमनुभूयते। यथा जाग्रदवस्थायामहमर्थसद्भावाज्जाग्रदनुभूतार्थाहमर्थविषयक परामर्शः जाग्रदुत्तरकाले भवति तस्मिँश्च परामर्शे जाग्रदहमासमिति परामर्शवानस्मीत्यनुव्यवसाये नाहमर्थविषयकज्ञाने परामर्शत्वमनुभूयते तथाहमस्वाप्समिति परामर्शवानस्मीत्यनुव्यवसायेनाहमर्थविषयकज्ञाने परामर्शत्वमनुभूयतेऽतो नाहमंशे परामर्श इत्युक्तमसदिति भावः। अन्यथेति। अहमंशे परामर्शत्वमनङ्गीकृत्यानुभवत्वाङ्गीकार इत्यर्थः। मदन्यइति। मदित्यहम् उच्यते। अहमर्थान्य इत्यर्थः। परामर्शत्वमुपपादयति। नन्वित्यादिना। अन्यथेति। यद्यहमर्थो न परामृश्यत इत्यर्थः। यथा पूर्वदिनानुभूतदेवदत्ताभिन्नतयाऽनुभूते चैत्रे सोऽयं न वेति न संशयः किन्तु स एवेति निश्चयस्तथापि सुषुप्तिकालानुभूतात्मैक्याध्यासात्तदुपपत्तिरित्याशङ्कते। नन्विति। परिहरति। नेति। परामृश्यमान इति। परामृश्यमानो य आत्मा तदैक्यारोपात्सज्ज्ञानेऽनुभवरूपे परामर्शत्वस्य स्मृतित्वस्याभिमानश्चारोप इत्यर्थः। अपरामर्शइति। अनुभव इत्यर्थः। परामर्शारोपस्य = स्मृतित्वारोपस्य। पुरोवर्त्तिन्यारोपो युक्तोऽनुभवे स्मृतित्वारोपस्य कुत्राप्यदर्शनात्तथात्वे चानुव्यवसायस्य प्रमात्वनियमभङ्गापातादित्याशयः। सिद्धइति। अहमर्थस्य परामृश्यमानत्वे तु वास्तवैक्यस्य प्राप्त्या न तयोरैक्यारोपः सम्भवतीति भावः। सिद्धे

दयोऽविरुद्ध इति भावः। नचैतावन्तं कालं मामप्यहन्नावेदिषमित्यस्मदर्थाभावविषयकप्रत्ययस्य "नजानात्ययमहमस्मी"ति श्रुतेश्च सुषुप्तावहमर्थाभावे मानत्वात् कथमस्मत्प्रयुक्तहेतोः स्वरूपासिद्धत्वं तस्मादननुगमस्य तादवस्थ्यमिति वाच्यम्। उक्तप्रत्ययेऽहमर्थस्यानुवृत्तिदर्शनात्। तथाहि तत्र मामिति द्वितीयान्तस्य कर्मरूपाहमर्थस्य जाग्रदनुभूतानादिकर्मसंस्कारप्रयुक्तात्मत्वाभिमतदेहाद्यवच्छिन्नो विषयः। अहमिति प्रथमान्तस्य कर्त्तुरस्मदर्थस्य देहादिविलक्षणशुद्धब्रह्मात्मकप्रत्यगात्मा ज्ञाता विषयः। तथाच मामित्युक्तलक्षणस्य देहेन्द्रियादिसम्बन्धस्य तथैवाहमिति देहादिवियुक्तस्य तद्विशिष्टाभावविषयाकानुभूत्याश्रयाभिन्नस्य तत्रापि सत्वेन ज्ञातृतया तत्राभावान्निषेधविषयत्वं सूपपन्नम्। तथैवाहमितिदेहादिवियुक्तस्य तया भानमपि सूपपन्नतरम्। तथाचाहमर्थस्यानुभवितुस्सर्वावस्थानुगतत्वेन हेत्वसिद्धेः सूपपन्नतमत्वादप्रामाण्यमनुमानस्य। एतेनोक्तायोः श्रुतेरपि व्याख्यानमुक्तम्भवति। तस्या अप्युक्तलक्षणविशिष्टप्रतियोगिकाभावविषयज्ञानविधानपरत्वेन तुल्यार्थकत्वात्। नन्वहमर्थो नात्माऽहंप्रतीतिविषयत्वात् शरीरादिवदिति प्रयोगात्तस्यानात्मत्वावगमइति चेन्न। त्वन्मतेऽहमर्थान्तर्गताधिष्ठानभूतचितोऽपि तत्प्रत्ययविषयत्वेन तत्र व्यभिचारात्। नच येन रूपेणाहन्धीविषयत्वं

---

च यस्मिन्निति परामृश्यमानात्मैक्यारोपे सिद्धे तन्निबन्धनाहहिमर्थानुभवेऽपि परामर्शत्वाभिमान इति तस्यापरामृश्यमानत्वसिद्धौ सुषुप्तावप्रकाशमानत्वेन प्रकाशमानात्मान्यत्वसिद्धिरित्यर्थः। स्मर्येतेत्यत्राहंशब्दोल्लेखिपरामर्शः स्यादित्यापाद्यते उताहमर्थविशेष्यकाहन्त्वप्रकारकपरामर्शः स्यादिति। नाद्य इत्याह। अहंशब्देति। तदुल्लेखीति। अहंशब्दोल्लेखि नाम सविकल्पकंनास्तीत्यर्थः। तदभावइति। स्मृतेः समानविषयकानुभवजन्यत्वादितिभावः। नन्वेतावता सुषुप्तावहमर्थप्रकाशोऽङ्गीकृतस्तर्हिह्यस्तनेऽपि जाग्रदवस्थायामहमर्थानुभवसद्भावात् ह्यस्तनसुषुप्तिवैषम्यं न स्यादित्यत आह। तावन्मात्रेचेति। ह्यस्तनेऽहं शब्दोल्लेखि नाम सविकल्पकमस्ति सुषुप्तौ तन्नास्तीत्येतावन्मात्रेणैव वैषम्यमित्यर्थः। द्वितीयेत्विष्टापत्तिरित्याह। अहमर्थेति। इष्टापत्तिमेवोपपादयति। स्मर्य्यतेहीति। अहमर्थोऽहंत्वप्रकारक इति शेषः। ह्यस्तनवैषम्यमात्रेणाहमर्थे परामर्शत्वाभावे आत्मांशेऽपि परामर्शत्वं न स्यात्। यदि सुषुप्तावात्मा प्रकाशेत तर्हि स्मर्येत ह्यस्तन इवात्मेति चोद्यमस्मदुक्तोत्तरान्योत्तरशून्यं स्यादित्याह। अन्यथेति। ह्यस्तन आत्मैवेति सम्बन्धः। तत्रात्मशब्दोल्लेखिपरामर्शापादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावोपपत्तेः। आत्मविशेष्यकपरामर्शापादने, अस्वाप्समिति तत्परामर्शसद्भावेनेष्टापत्तिरेवोत्तरं वच्यं तदस्माकमपि समानमित्यर्थः। यदि सुषुप्तावहमर्थः प्रकाशेत तर्हि एतावन्तं कालमित्यभिमन्यमान आसमिति परामर्शः स्यादित्य शङ्कते। नन्विति। परिहरति। नेति। अहमर्थेति अहमर्थप्रकाशाङ्गीक्रियमाणे तदभिमानपरामर्शापादनस्य व्यधिकरणत्वात्। नह्यस्माभिः सुषुप्तावहमर्थाभिमानप्रकाश उक्त इति भावः। बाधकतर्कमाह। अन्यथेति। अहमर्थप्रकाशेन तदभिमानपरामर्शापादने आत्मप्रकाशमात्रेणात्मेत्यभिमानपरामर्शः स्यादित्यापादयितुं शक्यत्वात्। तत्र व्यधिकरणत्वान्नैवापादनं युक्तमित्युत्तरमिति वाच्यं तन्ममापि तुल्यमिति भावः। अन्तःकरणावच्छिन्नस्य स्मृतृत्वानुरोधेनैव तस्यैव तदनुभवितृत्वात् स्मृतृत्वानुभवितृत्वयोरेकाधिकरण्यनियमादित्यर्थापत्त्या ऽहमर्थसिद्धिमुपपादयन्निगमयति। तस्मादिति। प्रवृत्त्यनुपपत्तेरिति प्रत्युताहमर्थस्य सुषुप्तौ नाशादिति भावः। याऽहमिति। त्वन्मतेऽहमर्थस्यासुप्तत्वादिति भावः। प्रत्यभिज्ञेति। सुषुप्तिजागरयोरहमर्थैक्यावगाहिप्रत्यभिज्ञेति दृष्टान्तेन प्रवृत्त्युपपादनार्थं शङ्कते। नन्विति। दृष्टान्तवैषम्यमुपपादयन्निराकरोति। नेति। तदेवोपपादयति सुषुप्ताविति। दृष्टान्तरमाह। अहंव्यक्तिभेदादिति। पूर्वतनाहमर्थनाशेन पुनरद्यतनाहमर्थो सत्यङ्गीकारेण पूर्वतनाद्यतनाहङ्कारव्यक्त्यो र्भेदादित्यर्थः। कर्त्तुरिति कर्तृत्वभोक्तृत्वयोरुभयोरपि त्वन्मते ऽहमर्थनिष्ठत्वेन पूर्वतनकर्त्तुरिदानीं तत्फलभोक्तुश्चाहमर्थस्य भिन्नत्वात् पूर्वतना-

तेन रूपेणानात्मत्वं, स्वरूपेणात्मत्वमिति न व्यभिचार इति वाच्यम्। "अहमात्मागुडाकेश" त्यात्मत्वेनात्यहंप्रतीतिविषयत्वात् स्वरूपेणात्मत्वे मानाभावाच्च। नचाहमर्थ आत्मान्यः अहंशब्दाभिधेयत्वात् अहङ्कारशब्दाभिधेयत्वादित्यत्रमानमिति वाच्यम्। "अहमात्मा गुडाकेश" त्यहंशब्दाभिधेये विश्वात्मनि श्रीवासुदेवे परब्रह्मणि व्यभिचारात्। अथ यत्त्वया आत्मनो-गौरोऽहमित्यनात्मारोपाधिष्ठानत्वं मानभूतं भूयासमित्यादिना परमप्रेमास्पदत्वम्, अहमर्थस्य स्वसत्तायां प्रकाशव्यतिरेकवैधुर्येणात्मनः प्रकाशत्वं चोक्तं तत्सर्वमहमर्थस्यानात्मत्वेऽयुक्तं स्यात् उक्तस्य सर्वस्याहमर्थ एव पर्यवसानात्। नच प्रेमास्पदात्मैक्यारोपादहमर्थे तथा प्रतीतिरिति वाच्यम्, अन्योन्याश्रयापत्तेः। अहमर्थप्रेम्णोऽन्यस्यात्मप्रेम्णोऽनुभवाभावाच्च। अहिते हितबुद्ध्या प्रेमोत्पत्तावपि अप्रेमास्पदे प्रेमास्पदत्वस्यारोपादर्शनाच्च। "समारोप्यस्य रूपेण विषयो रूपवान्भवेत्। विषयस्य तु रुपेण समारोप्यं न रूपवदि"ति वाचस्पत्युक्तेः। अध्यस्तान्तःकरणगताऽप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तेश्च। अनिदमि रूप्ये शुक्तिनिष्ठे द-

हमर्थस्य कृतहानिरचतनाहमर्थस्य कर्माभावेऽपि भोगप्रसङ्ग इत्यर्थः। ननु कर्तृभोक्त्रोश्चैतन्यानुगमेनाभेदोपपत्ते र्न कृतहानादीत्यत आह। अभिन्नइति। ननु चैतन्ये वास्तवकर्तृत्वाद्यभावेऽपि आरोपितं कर्तृत्वमस्तीति तादृश-कर्तृत्वोपेतचेतन्यानुगमेनाभेदसद्भावान्न कृतहानादिदोष इत्यत आह। कर्तृत्वादिति। स्थूलः करोतीति प्रतीते रित्यर्थः। तथाचारोपि नकर्तृत्वसंगातिप्रसङ्गेनाप्रयोजकत्वान्न तेन व्यावहारिककर्तृत्वभोक्तृत्वभेदप्रमानिर्वाहे गुञ्जापुञ्जे वह्नित्वारोपेणारोहितदाहकर्तृत्वसद्भावात् तेनापि वास्तवस्फोटादिरूपकार्यापत्तिरितिभावः। अहमर्थान्येति। अहमर्थान्यस्मिन् चैतन्ये कर्तृत्वारोपो न युक्तस्तथाहि चैतन्यं कर्त्रिति कदाप्यारोपादर्शनात्। अहङ्करोमीत्येव तदारोपो वाच्य आरोपश्च प्रधानपूर्वक इति मुख्यकर्तृत्वप्रत्ययोऽन्यत्रवक्तव्यः सचैतदन्यो नास्तीति अयमेव मुख्य-प्रत्यय इति न तदारोप इति भावः। सुषुप्तौ कारणात्मनाऽहङ्कारः स्थीयते स एवोत्पद्यत इति स्वीकारेण नैक्तदोषावकाश इत्याशङ्क्य परिहरति। नचेति। कृतहान्यादेरिति। कर्तृभोक्तुश्चाहमर्थस्य भिन्नत्वेन पूर्वतना-हमर्थस्य कृतहानिरचतनाहमर्थस्य कर्माभावेऽपि भोगप्रसङ्ग इत्यर्थः। सुषुप्तौ यद्यहंकारो लीयते तदा तदकार्यं नोपपद्येत इति दोषान्तरमाह। किञ्चेति। उक्तदोषमुद्धरन्नाशङ्कते। नन्विति। प्राणस्याहमर्थत्वमस्ति नवेति विकल्प्यान्त्यपक्षमभिप्रेत्य परिहरति नेति। प्राणस्येति। आद्यपक्षमभिप्रेत्याह। अहमर्थत्वेत्विति। शङ्कते। नन्विति। श्रुतिस्मृत्योरिति। अथात आत्मादेश इति श्रुतिः। भिन्ना प्रकृतिरष्टधेति स्मृतिः। अनुमानम्। अयमर्थो नात्मा सुषुप्त्याद्यवस्थानानुगतत्वादिति। परिहरति। नेति। श्रुतिस्थाहङ्कारशब्दार्थं निरूपयति। तत्राथतइति। उभयोरिति = अहंशब्दाहङ्कारशब्दयोरित्यर्थः। अहङ्कारपदस्य गर्वेऽभिमानेऽहमिति अहंतत्वे प्रयोगदर्शनात्तस्यै-कधर्मावच्छिन्ने शक्तिरिति नियमं कर्त्तुं न शक्यत इत्याशयेनाह। अहङ्कारस्येति। अहं शब्दस्यान्यत्र प्रयोगा-दर्शनादात्मन्येव तत्पदस्य शक्तिरित्याह। अहं शब्दस्त्विति। प्रतिवाद्युक्तानुमाने स्वरूपासिद्धित्वं दर्शयति। एवमिति। परोक्तानुमानेति अहमर्थो नात्मा सुषुप्त्याद्यवस्थानानुगतत्वादिति शङ्कते। नन्विति। परिहरति। नेति। तत्र सुषुप्तौ यदि ज्ञातृत्वसत्वमात्रं विषयानुभवे प्रयोजकं स्यात्तदा सुषुप्तौ विशेषज्ञानं स्यादित्यापादयितुं शक्यते तदेव नास्तीत्याह। नहि ज्ञातुरिति। अहमर्थाननुभवसाधकनिषेधसामान्यविषयकप्रत्यभिज्ञाबलेन न जानात्यय-मितिश्रुत्या च सुषुप्त्याद्यवस्थाननुगतत्वरूपहेतोः स्वरूपासिद्धित्वं परिहरन्नाशङ्कते। नन्विति। तस्मादिति श्रुतिप्रमाणसिद्धस्यास्मदुक्तहेतोः स्वरूपासिद्धत्वाभावादित्यर्थः। अननुगमस्येति। सुषुप्त्याद्यननुगतत्वहेतोरित्यर्थः। परपक्षहेतोः स्वरूपासिद्धत्वमुपपादयन्नाह। उक्तप्रत्ययइति। एतावन्तं कालममाप्यहं नावेदिषमिति प्रत्यय इत्यर्थः। अहं नावेदिषमित्यत्र वेदनाभावाधिकरणतयाऽहमर्थस्य वेदितुरात्मनः प्रतिपत्तेर्न तन्निषेधः कर्त्तुं शक्यते नापि तत्प्रकाशनिषेधः। स्वयं ज्योतिष्ट्वश्रुतिविरोधः प्रसज्येत बाह्यर्थस्यापि यत्स्वरूपतो निषेधः सुषुप्तौ विश्वप्रलयस्या

न्तादिभानवदधिष्ठाननिष्ठसाधारणधर्म्मस्यारोप्ये भानेप्यसाधारणधर्मस्य प्रेमास्पदत्वादेर्भानासम्भवात्। आरोप्यासाधारणधर्म्माणां भीषणत्वादीनां रज्ज्वामिवारोप्यासाधारणानामप्रेमास्पदत्वादीनामेवात्मनि भानापत्तेरित्यर्थः। त्वद्रीत्या सुखानुभवरूपस्यात्मनः अहं सुखमनुभवामीति सुखानुभवाद्भेदेनैव प्रतीतेश्च। किञ्च मोक्षेऽहमर्थाभावे आत्मनाशो मोक्ष इति वाह्यमतापत्तेः। प्रेमास्पदाहमर्थस्य त्वन्मतेऽपि नाशात्। तदतिरिक्तशून्यस्य त्वन्मतेप्यनाशात्। नह्यहमर्थभिन्ने आत्मनि प्रेमधीः कदाचिदस्तीति भावः । किञ्च "माऽमृतं कृन्धि ज्योतिरहं विरजा विपाप्मा भूयासमि"ति श्रुत्याहमर्थस्यैवामृतत्वोक्तेः। अहम्मुक्तः स्यामितीच्छा च न स्यात् तस्यास्तद्विषयत्वात्। नन्वात्मन एव मुक्तिरिष्यते अहङ्कारेतरारोपात् मुक्तः स्यामितीच्छापि सूपपन्ना। यथा शरीरस्यैव पुष्टीच्छायामप्यात्मनि तदैक्यारोपात् पुष्टः स्यामितीच्छा तथात्मन एव सुखेच्छायामपि तदैक्यारोपाच्छरीरं सुखि स्यादितीच्छा चेति चेन्न।

---

सम्भवात्। अतः स्वान्यवेद्यविषयनिषेध एव विवक्षितस्तथा चोक्तप्रत्ययेऽप्यहमर्थस्यानुवृत्तिदर्शनान्नास्मदुक्तहेतोः स्वरूपासिद्धत्वमिति भावः। जागरितावस्थानुभूतदेहादिवैशिष्ट्यमिह निषेध्यमिति वक्तुं तत्र मामिति पदस्यार्थं निर्वक्ति। तत्रमामिति। तत्र=एतावन्तं कालमिति प्रत्यये। अहमर्थं दर्शयति। अहमिति। मामित्युक्तलक्षणदेहादिसम्बद्धस्य तत्राभावान्निषेधविषयत्वमुपपद्यत इति। निषेधं दर्शयति। तथाचेत्यादिना। जाग्रदवस्थानुभूतदेहादियुक्तस्यात्मत्वेनाभिमतस्यास्मदर्थस्यात्मनोऽभावः सुषुप्तौ मामपि नावेदिषमिति प्रत्यभिज्ञायां बोध्यत इत्यर्थः। सुषुप्तावात्मनोऽहमर्थस्य विशेष्यस्य सत्त्वेऽपि जाग्रदनुभूतदेहादियुक्तत्वरूपविशेषणस्याभावाद्विशिष्टाभाव इति भावः। यद्वा मामपि नावेदिषमित्यत्रास्मदर्थे प्रकारीभूतं यद्देहादिवैशिष्ट्यं तदेव निषेध्यम्। सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे इति न्यायात्। एतेनाहमर्थस्य ज्ञातुरात्मनोऽनुवृत्तेर्न तन्निषेधयितुं शक्यत इति निरस्तम्। श्रुत्यन्तरे तद्वैशिष्ट्यं निषिध्यते तद्यथाप्रियया स्त्रियया सम्परिष्वक्तो नवाह्यं किञ्चन वेदनान्तरमि"ति तद्विशिष्टाभावेपि जाग्रदवस्थानुभूतानादिकर्मसंस्कारनिरूपित आत्मत्वाभिमतदेहादियुक्तत्वविशिष्टास्मदर्थात्मा नास्तीति प्रतीतिसिद्धाभावस्तदस्तथाच सुषुप्तावहमर्थस्यात्मनोऽनुवर्त्तमानत्वान्न तदभावो नावेदिषमेतद्घटकीभूतनञा प्रत्याययितुं शक्यत इति दोषावकाश इतिभावः। अहमर्थस्यानुभवितुरात्मनः सर्वावस्थानुगतत्वादहमर्थस्यात्मत्वं निर्विवादं तथा सति सर्वावस्थानुगतत्वहेतोर्निर्दुष्टत्वमित्याह। तथाचेति। एतेन=पूर्वोक्तार्थप्रदर्शनेन। उक्तायाः=न जाना यहमस्मीत्याख्यायाः। अहम्प्रतीतिविषयेऽहमर्थे आत्मत्वाभावमनुमानेन साधयन्नाशङ्कते। नन्विति। व्यभिचारेणोक्तानुमानं निरस्यति। नेति। चिदचित्सम्वलनात्मकाहमर्थान्तर्गतेऽचिद्भागारोपाधिष्ठानभूते आत्मचैतन्यभागेऽहंप्रत्ययविषये व्यभिचार इति भावः। उक्तव्यभिचारं निरसितुमाह येन रूपेणेति। येन=अहन्त्वेन। तेन स्वरूपेण अहन्त्वेन रूपेणानात्मत्वदचित इति भावः। न व्यभिचार इति। अहन्त्वेन रूपेणानात्मत्वरूपस्य साध्यस्य चिद्भागारोपाधिष्ठानभूते आत्मचैतन्ये सत्त्वान्न व्यभिचार इत्यर्थः। आत्मत्वप्रकारकाहमर्थविशेष्यकप्रतीतिविषयत्वं यत्र तत्रात्मत्वमित्यनियमस्तत्र श्रीमुखवचनं प्रमाणयति। अहमात्मेति। प्रकारान्तरेणानुमानमाशङ्क्यापाकरोति। नचेति।। आत्मान्यत्वाभाववति भगवति वासुदेवेऽहंशब्दाभिधेयत्वरूपहेतोस्सत्त्वाद् व्यभिचार इत्यर्थः। "आत्मानात्मनोरन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्वे प्रमातृत्वभोक्तृत्वव्यवहाराः प्रवर्त्तन्त"इति भगवत्पादश्रीशङ्कराचार्य्यप्रणीतभाष्ये इतरेतराध्यासं प्रतिपाद्य तत्रात्मन्यनात्मारोपोपपादनाय गौरोऽहमित्युदाहृतं तदहमर्थस्यानात्मत्वेऽयुक्तं स्यादत्र गौरदेहैक्याध्यासोऽहमर्थ एव प्राप्तो नात्मनीत्याह। अथेति मानभूवमिति। माहं नभूवमपि तु भूयासमित्यर्थं विवृणोति भूयासमिति। आत्मनः परमप्रेमास्पदत्वमुपपादयितुमियं प्रतीतिरुदाहृता। अनयाचाहमर्थस्यैव प्रेमास्पदत्वमनुमातुं शक्यत अतोऽहमर्थस्यानात्मत्वे इदमयुक्तं स्यादित्यर्थः। अहमर्थस्येति। आत्मा स्वप्रकाशः

अन्योऽन्याश्रयापत्तेः। तत्र शरीरं पुष्टं स्यादितीच्छावत् अहं सुखी स्यामितीच्छावच्चेह चिन्मात्रं मुक्तं स्यादितीच्छायाः कदाप्यदर्शनेन मुक्तेरनिष्टत्वप्रसङ्गाच्च। यः कश्चिदात्मा मुक्तः स्यादितीच्छाचेन्न कदापि मुमुक्षुप्रवृत्तिः स्यात् ममात्मा मुक्तः स्यादितीच्छाया अदर्शनात्। ननु यद्यपीच्छासमयेऽन्तःकरणाध्याससम्भवेनात्ममात्रमुक्तीच्छा नास्तीति सत्यम्, तथापि विशिष्टगतमुक्तीच्छाया एव विशेष्यगतमुक्तिविषयत्वपर्यवसानाभ्युपगम इति चेन्न। अहमर्थाभिन्नतयात्मनो भानस्य क्वाप्यदर्शनेनैतत्कल्पनाया अप्रामाणिकत्वात्। अपि चाहमर्थो यद्यन्तःकरणगर्भितस्तर्हि मम मन इति प्रत्ययो न स्यात्तदवच्छिन्नस्य पुनस्तदनन्वयात्। किञ्चैवं मनः स्फुरति, मनोऽस्तीति ज्ञानादहमिति ज्ञानस्य वैषम्यानुभवो न स्यात्। चिदचित्सम्वलनविषयत्वाविशेषात्। तस्मादहमर्थस्यानात्मत्वे किमपि मानं नास्तीति सिद्धम्। आत्मत्वे तु प्रत्यक्षानुमानश्रुत्यादीनां सत्त्वाच्चस्यात्मत्वं सुतरां सिद्धम्। तथाहि—जानाम्य-

---

स्वसत्तायां प्रकाशव्यतिरेकवैधुर्य्यात्। अप्रकाशरहितत्वादिति यावत्। इत्यनेनात्मनः स्वप्रकाशत्वं साधितं भवति। तत्र च हेतोः स्वरूपासिद्धत्वपरिहारायात्मनः प्रकाशव्यतिरेकवैधुर्य्योपपादनायाहमितिं सदा प्रकाशोपपादनं कृतम्। इदमप्यहमर्थस्यानात्मत्वेऽयुक्तं स्यात्। अहमर्थसम्बन्धिप्रकाशव्यतिरेकवैधुर्य्येणात्मनः स्वप्रकाशत्वसाधनस्याप्ययुक्तत्वं स्यादिति भावः। आत्मनः परमप्रेमास्पदत्वोपपादनाय मानभूवमित्यहमर्थस्य प्रेमास्पदत्वोक्तिरयुक्तेति यदुक्तं तदयुक्तं परमप्रेमास्पदीभूतात्मैक्यारोपादहमर्थे परमप्रेमास्पदत्वधिय उपपत्तेरित्याशङ्क्य निराकरोति। नचेति। अन्योन्याश्रयादिति। आत्मनः प्रेमास्पदत्वसिद्धौ तदैक्यारोपादहमर्थस्य प्रेमास्पदत्वसिद्धिस्तत्सिद्धौ चात्मनः प्रेमास्पदत्वसिद्धिरित्यर्थः। नन्वात्मनः प्रेमास्पदत्वसिद्धिर्नाहमर्थस्य प्रेमास्पदत्वारोपसिद्ध्यधीना अतो नान्योन्याश्रय इत्यत आह। अहमर्थस्येति। तथा चाहमर्थप्रेम्णो योऽनुभवस्तद्व्यतिरिक्तात्मप्रेमानुभवाभावादात्मप्रेमास्पदत्वमहमर्थाधीनमित्यन्योन्याश्रय इत्यर्थ इत्याहुः। सम्प्रदायस्तु अहमर्थप्रेमास्पदत्वारोपसिद्धौ प्रकारान्तरेणात्मप्रेमास्पदत्वोपपादनसम्भवात्तन्निबन्धनात्मप्रेमास्पदत्वसिद्धिरित्यन्योन्याश्रयत्वोपपादनं पूर्वमेव कर्त्तव्यम्। इतोऽप्यहमर्थे प्रेमास्पदत्वधीर्न भ्रान्तिरित्याह अहमर्थेति अहमर्थप्रेम्णोऽनुभवस्य वक्तुमशक्यत्वादतो मानभूवमियमेवात्मप्रेमानुभव इति वाच्यं तथा च प्रधानाभावादस्यैवानुभवस्यानारोपत्वसिद्धिरित्यर्थः। किञ्च वस्तुतःप्रेमास्पदेऽहमर्थे प्रेमास्पदत्वारोपो न युक्तः। किन्त्विच्छारोपः साध्यरोपो वा वाच्यः इत्यर्थोयुक्तस्तथात्वे साक्षिणो भ्रमत्वापत्तेः। नन्वनिष्टसाधने सर्पादौ मालात्वभ्रमेणेदमिष्टसाधनं मालात्वादितीष्टसाधनताभ्रमानन्तरमिष्टसाधनताया अभावेऽपि इदं मे स्यादितीच्छा जायत इति चेत्तत्राह अहितइति। अनिष्टसाधने इष्टसाधनताबुद्ध्या प्रेमोत्पत्तौ सत्यामेव वस्तुतः प्रेम्णः सत्वात्प्रेमानुभवो भवति। अहिते प्रेमोत्पत्तिश्च भवति परन्तु प्रेमाभावे प्रेमज्ञानन्तु न भवत्येवेत्याशयः। आत्मरूपाधिष्ठानगतप्रेमास्पदत्वस्यारोपाङ्गीकारे च वाचस्पतिग्रन्थविरोधोऽत आरोप्यान्तःकरणगतप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तिरित्याह समारोप्येति। अयं श्लोकः कल्पतरौ व्याख्यातः। समारोप्यस्य सर्पादेर्भीषणत्वादिरूपेण धर्मेण विषयोऽधिष्ठानभूतो रज्ज्वादिः भीषणत्वादियुक्तो भवति विषयस्य रज्ज्वादे रूपेण पुरतो गम्यमानत्वादिना समारोप्यं सर्पादिरूपवत् अभिगम्यमानं न भवतीत्यर्थः। अहमर्थे प्रेमास्पदत्वहेतुमात्मैक्यारोपं दूषयत्यद्रीत्येति। अहं सुखमनुभवामीति प्रतीत्याऽऽत्मनोऽहमर्थाभेदप्रसिद्धेर्न तत्र तस्यारोप इत्यर्थः। बाह्यमतापत्तिः= वेदबाह्यो यो बौद्धस्तन्मतापत्तिरित्यर्थः। ननु प्रेमास्पदरूपत्वभूतवस्तुनाशाङ्गीकारात्तन्मतस्य निन्द्यत्वं न मन्मतस्येत्यत आह। प्रेमास्पदेति। प्रेमास्पदवस्तुनाशस्त्वन्मतेऽप्यविशिष्ट इत्यर्थः। ननु मोक्षे प्रेमास्पदाहङ्कारनाशेऽपि तदन्यस्य ब्रह्मणोऽविनाशात्तद्भावस्य पुरुषार्थत्वमिति चेत्तर्हि समं शून्यवादेऽपीत्याह तदतिरिक्त इति। आत्मव्यतिरिक्त इत्यर्थः। तद्भाव एव एतन्मते पुरुषार्थ इति साम्यमिति भावः। अहमर्थस्य मोक्षान्वयित्वे श्रुति

नुभवामीच्छामीत्यादिप्रतीतिभ्यः अहमर्थो मोक्षान्वयी तत्साधनकृत्याश्रयत्वात्सम्मतवदिति। नच स्वर्गसाधनकृत्याश्रये ऋत्विजि व्यभिचार इति वाच्यम्। उद्देश्यतासम्बन्धेन हि यत्र कृतिस्तत्रैव फलमिति नियमः। ऋत्विजां तु दक्षिणाया एवोद्देश्यत्वान्नोक्तव्यभिचारयोगः। अहमर्थोऽनर्थनिवृत्त्याश्रयः अनर्थाश्रयत्वात्सम्मतवत्। नचासिद्धः। अहमज्ञोऽहमनुभवामीत्यबाधितानुभवात् देहस्यानर्थाश्रयत्वाभावान्न व्यभिचारः। अनात्मत्वं नाहमर्थवृत्ति अनात्ममात्रवृत्तित्वात् घटत्वादिवदित्याद्यनुमानेभ्यः। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेय नामरूपे व्याकरवाणि, त्रिवृतं करवाणि, ब्रह्मैवेदमग्र आसीत्सचात्मानं वेदाहं हन्ताहमिमास्तिस्रो देवता" इत्यादिश्रुतिभ्यः। किञ्च प्राकृतप्रलये विश्वलयात्मकेऽवशिष्यमाणस्यैकाद्वितीयादिशब्दाभिधेयस्य परब्रह्मणः श्रीपुरुषोत्तमस्यापि प्राणमनोभूतादिसृष्टेः प्रागपि ज्ञात्रभिन्नाहमर्थस्वरूपत्वमेवेत्यवगम्यते। तस्य नित्यमुक्तत्वं तावन्निर्विवादम्। एवं तत्साम्यापन्नानां "निरञ्जनः परमं साम्यमुपैती"त्यादिश्रूयमाणानामप्यहमर्थस्वरूपत्वमेवेति मुक्तावपि तथात्वसिद्धेः। "अभयं

---

प्रमाणयति। किञ्चेति। मामृतमिति। मामहमिति अहमर्थस्यैवामृतत्वप्रार्थनाश्रवणादात्मन एव मुक्तिरित्युक्तमसदितिभावः। यद्यहमर्थस्यात्मत्वं न स्यादहं मुक्तः स्यामितीच्छा न स्यादित्याह। अहं मुक्तइति। तस्या=इच्छायाः। तद्विषयत्वात्=अहमर्थविषयत्वात्। शङ्कते। नन्विति। यद्यात्मन एव मुक्तिस्तर्ह्यहं मुक्तः स्यामितीच्छा कथं स्यादित्यत आह। अहङ्कारइति। अहङ्कारादितरीभूत आत्मा तस्य आरोप अर्थादहङ्कारे। यद्वा अहङ्कारेतरस्यात्मन आरोपस्तस्मादित्यर्थः। उक्तार्थं दृष्टान्तेन द्रढयति। यथेति। तदैक्येति। पुष्टत्वाश्रयशरीरैक्यारोपादित्यर्थः। तदैक्येति। मुख्यात्मैक्य इत्यर्थः। परिहरति। नेति। अन्योन्याश्रयापत्तेरिति। आत्माहमर्थयोर्भेदादीनामारोपसिद्धौ उक्तेच्छाया अबाधकत्वसिद्धिः। तदबाधकत्वसिद्धौ भेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः। तत्र शरीरमिति ऐक्यारोपादहं पुष्टः स्यामितीच्छायामपि कदाचिच्छरीरं पुष्टं स्यादिति मुख्येच्छा भवति। यथैक्यारोपादेव शरीरं सुखि स्यादितीच्छायामपि कदाचिदहं सुखी स्यामितीच्छा भवति तद्वत् मुक्त्यन्वय्यात्माभेदारोपेणाहं मुक्तः स्यामितीच्छायामपि कदाचिन्मात्रं मुक्तं स्यादितीच्छा प्रसज्येत। नह्येवं कदाचित्कस्यचिदिच्छा दृष्टा अतो मुक्तेरनिष्टत्वाप्रसङ्गाच्चेति आत्मसम्बन्धितयेच्छाविषयत्वाभावापातादित्यर्थः। ननु कस्यचिदात्मा मुक्तः स्यादित्यात्मसम्बन्धितया मुक्तेरिच्छाविषयत्वं सम्भवतीति चेत्तत्राह। यः कश्चिदिति। कस्यचिदात्मनो मुक्तीच्छया मुमुक्षोः स्वस्य न प्रवृत्तियुक्तेत्यर्थः। न ह्यन्यस्य स्वर्गेच्छया स्वस्य यागप्रवृत्तिर्दृष्टेतिभावः। ननु ममात्मा मुक्तः स्यादित्यात्मनो मुक्तीच्छा सम्भवतीत्याशङ्कते नन्विति। विशिष्टगतेति=अन्तःकरणविशिष्टात्मगतेत्यर्थः। यद्यहमर्थातिरिक्तत्वेनात्मनो भानं स्यात्तदैवं कल्पयितुं शक्यं नत्वेवमित्याशयेन परिहरति नेति। अहमर्थस्य चिदचित्सम्बलनात्मकत्वे बाधकान्तरमाह अपिचेति। वस्तुगत्याहमर्थोऽस्मन्मते आत्मैव तत्र त्वयान्तःकरणरूपाचिद्भागाङ्गीकार इत्यर्थः। मम मन इति। ममेति प्रतीयमानेऽहमर्थे मनसः प्रविष्टत्वात् मम मन इति प्रतीतिर्न स्यात्। नहि दण्डिनो दण्ड इति प्रतीतिः सम्भवतीत्यर्थः। एतदेवाह। तदवच्छिन्नस्येति। तद्विशिष्टस्येत्यर्थः। तथात्वेऽवच्छेदककोटौ स्वस्यैव प्रवेशापत्त्या आत्माश्रयः स्यादिति भावः। कुत इत्यत आह। चिदचिदिति। मनः स्फुरतीत्यत्र मनसोऽचित्त्वात् चिदचित्सम्बलनसद्भावादहमर्थोऽपि तत्सम्बलनस्य त्वयैवाङ्गीकारात्तयोर्ज्ञानयोश्चिदचित्सम्बलनविषयकत्वाविशेषाद्वैषम्यमनुभूयमानं न स्यादित्यर्थः। सर्वापि भ्रान्तिरधिष्ठानारोप्यरूपांशद्वयविषयेति प्रागेव निरस्तम्। उपसंहरति। तस्मादिति। अहमर्थस्यात्मत्वे प्रत्यक्षं तावदुपन्यस्यति। जानामीति। अनुमानमाह अहमर्थइति। तत्साधनेति। यो यत्फलसाधनकृत्याश्रयः स तत्फलसम्बन्धवान्। यथा स्वर्गसाधनकृत्याश्रयो यजमानः

वै जनक प्राप्तोऽसि यदात्मानमेवावेदाहं ब्रह्मास्मीती"त्यत्रावधारणेनाहमर्थाभिन्नब्रह्मतादात्म्यो-
पदेशात्। तथाभूतवेदनस्यात्मभावप्राप्तिरूपमोक्षफलकत्वोपदेशाच्च। अनविद्यस्यापि ब्रह्मणो-
ऽहमुल्लेखोक्तेश्च। "अहमित्येव यो वेद्यः स जीवइति कीर्तितः। स दुःखी स सुखी चैव स पात्रं
बन्धमोक्षयोरि"ति कण्ठरवेणाहमर्थस्य मोक्षान्वयित्वश्रवणाच्च। "अहं मनुरभवं सूर्यश्चे"ति
मुक्ततयावगम्यस्य वामदेवस्यानुभवाच्च। "अहमात्मा गुडाकेशे"ति सर्वात्मत्वम्, "नत्वेवाहं
जातु नासमि" त्यादिना कालत्रयाबाध्यत्वम्, "ददामि बुद्धियोगं तमि"ति मोक्षौपयिकज्ञान-
दातृत्वम्. "मामेव ये प्रपद्यन्ते मायामेतामि"ति मायातरणासाधारणोपायरूपशरणापत्तिविषय-
त्वम्, "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे"ति जगत्कारणत्वम्, "वेदैश्च सर्वैरहमेव
वेद्य" इति शास्त्रविषयत्वम्, "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमि"ति मुक्तोपसृप्यत्वम्,
"मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते" इत्यपुनरावृत्तिलक्षणफलत्वम्, "मामेकं शरणं

---

स्वर्गफलान्वयीत्यर्थः। ननु पुत्रः पूतः स्यादिति पुत्रगतपूतत्वरूपफलोद्देशेन पिता जातेष्टिकरणे प्रवर्त्तते। तत्र पुत्रस-
म्बन्धिपूतत्वरूपफलसाधनीभूतकृत्याश्रये पितरि पूतत्वरूपफलसम्बन्धाभावेन व्यभिचारः स्यादिति चेन्न। उत्तर-
भङ्गे पुत्रगतं पूतत्वं न जातेष्टिफलं किन्तु पूतपुत्रकत्वं तच्च पितृगतमेवेति व्यभिचारशङ्काया एवाभावात्। इममर्थ-
मजानानाः केचित् स्वसम्बन्धिफलसाधनकृत्याश्रयत्वं हेत्वर्थो विवक्षितोऽतो न पितरि व्यभिचार इत्याहुः।
स्वर्गसाधनहोमादिकृत्याश्रये ऋत्विजि स्वर्गान्वयशून्ये व्यभिचारमाशङ्क्य निरस्यति। नचेति। यद्वा अपरिक्रीत-
सम्बन्धकृत्याश्रयत्वं हेतुरतो न व्यभिचारः। अपरिक्रीतः प्रधानो यजमानः ऋत्विजस्तु द्रव्यदानेन यजमानपरि-
क्रीतत्वान्न व्यभिचारः। सम्मतवदिति। यत्र यो यदाश्रयः स तन्निवृत्त्याश्रयः यथा घटाश्रयः कपालस्तन्निवृत्याश्रय
इत्यर्थः। अनर्थाश्रयत्वहेतोरसिद्धत्वमाशङ्क्यापाकरोति। नचेति। अहमज्ञइति। अज्ञानवैषयिकसुखादेरेवा-
नर्थत्वादिति भावः। अनर्थनिवृत्त्याश्रयत्वाभाववति देहादावनर्थाश्रयत्वहेतोः सत्वाद्व्यभिचार इति भ्रमं निरस्यति।
देहस्येति। अनात्ममात्रवृत्तित्वादिति। प्रमेयत्वादौ व्यभिचारवारणाय मात्रपदं हेतौ निवेशितम्। सर्वेश्वरस्य निखि-
लकल्याणगुणार्णवस्य सर्वज्ञस्य परब्रह्मणः वासुदेवस्य ज्ञानभिन्नाहमर्थस्वरूपत्वं प्रतिपादयन्त्यः शतशः श्रुतय-
स्सन्ति ताभिः श्रुतिभिरात्मनोऽहमर्थत्वं निश्चिनुम इति बोधयत् श्रुतिकदम्बमुदाहरति। सदेवेति। उत्तरवा-
क्यघटकतच्छब्दनिर्णयाय सदेवेति वाक्यं प्राङ्निर्दिष्टम्। बहुस्यामिति वाक्ये "अस्मद्युत्तम" इत्युत्तमपुरुषबला-
दहमिति प्रत्ययसिद्धि। तदैक्षत इत्यत्र तदा सदेवेति श्रुतिनिर्दिष्ट' सच्छब्दवाच्यं जगत्कारणं ब्रह्म परामृश्यते।
ईक्षणं पर्य्यालोचनमध्यवसायः बहुभवनमहमर्थरूपात्मनिष्ठमिति भावः। त्रिवृतमिति। नामरूपव्याकर्तृत्वं त्रिवृ-
त्करणत्वञ्चाहमर्थस्यैव ब्रह्मण उपपद्यते नत्वहङ्कारस्य। अनेनाहङ्कारसृष्टेः प्रागप्यहं प्रत्ययं ज्ञापयति श्रुति-
रिति सूचितम्। अग्र इति। अहमर्थनाशवत्वेन त्वत्सम्मते प्रलयेपीत्यर्थः। त्वन्मते तु चिदचिद्रूपमनस्सम्वलना-
त्मकाहमर्थस्य मन आदिसृष्ट्युत्तरकालीनत्वादिति भावः। आत्मानमेव वेदाहमित्यत्रावधारणेनात्मनोऽहन्त्वोक्त्या-
चाहमर्थस्य नात्मभिन्नत्वशङ्कापीति सूचितम्। त्वन्मतेऽहमर्थसम्बन्धस्यैव मुख्यावद्यत्वेन निरवद्यस्य ब्रह्मणोऽह-
मित्येव वेद इति श्रुत्युक्ताहमुल्लेखायोगादिति भावः। उक्तश्रुतिभ्यः पर्य्यवसितार्थं दर्शयितुमाह किञ्चेति।
ज्ञानभिन्नाहमर्थस्वरूपत्वमित्येव गम्यत इत्यत्रैवानुमानेभ्य इत्यस्य इत्यादिभ्य इत्यस्यचान्वयः। निधूर्तनिरवद्या-
शेषाणां ब्रह्मविद्यावतां लब्धतत्साम्यानां मुक्तानां वामदेवप्रभृतीनामहमित्यात्मप्रतिपत्तिदर्शनेनाप्यहंप्रत्ययस्य मुक्ता-
वनुवृत्तिमाह। एवमिति। तथात्वसिद्धे = अहमर्थस्वरूपत्वसिद्धेः। तत्रहेतुमाह। अभयमित्यादिना। तथा च नाहम-
र्थस्यात्मभिन्नत्वमिति भावः। अनविद्यस्येति। मोक्षान्वयित्वाश्रवणाच्चेति। बन्धान्वयोऽपि द्रष्टव्यः। अभयं
वैजनकेत्यादितादात्म्योपदेशादित्यारभ्य वामदेवस्यानुभवाच्चेत्यन्तानां पञ्चम्यन्तानां मुक्तावपि तथात्वसिद्धिरित्यत्रा-

व्रजे''ति सर्वशरण्यत्वम्, ''अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामी''ति सर्वपापनिवर्त्तकत्व श्चाहमर्थस्यैव श्रीमुखेन निर्णीतं भगवता श्रीपुरुषोत्तमेन । किञ्चाहमर्थादन्य आत्मा यदि स्यात्तह्युपलभ्येत, नतु तथोपलभ्यते इति योग्यानुपलब्धेरप्यत्र मानत्वात् । अपि चास्मदर्था-न्यात्मप्रतीत्यभावान्यथानुपपत्तेरप्यत्र प्रामाण्यम् । किञ्च परैरपि भाष्ये सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहस्मीति यदि हि नात्मास्तित्वप्रसिद्धिः स्यात्सर्वो लोको नाहमस्मीति प्रतीया-दिति न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वादिति चान्वयव्यतिरेकेणात्मनोहमर्थतयैव प्रतिपादनात् । अन्यथा स्वोक्तिबाध इत्यर्थस्तस्मादहमर्थाभावाभाव एवात्मेत्यलं पल्लवनेन ॥ १८॥ इति ज्ञाधिकरणम् ॥ ८ ॥

अथ उत्क्रान्त्यधिकरणम्

अथ तत्परिमाणं निर्णीयते । तथाहि---स किं मध्यमपरिमाणको विभुपरिमाणको ऽणुपरिमाणकोवेत्याकांक्षायामाह—

## उत्क्रान्तिगत्यागतीनाम् ॥ २ । ३ । १९ ॥

प्रत्यगात्माऽणुपरिमाणक एव कुतः ? स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामतीति ये वै के चास्माल्लोकात्प्रयन्ति चान्द्रमसमेव ते गच्छन्तीति तस्माल्लोकात्पुनरे-त्यास्मै लोकाय कर्म्मणे'' इत्यादिना तस्योत्क्रान्तिगत्यागतीनां श्रवणादिति शेषः । न मध्यमपरिमाणको विभुपरिमाणको वा तत्र दोषाणामुक्तत्वात् । ननु स्यादेतत् । मनसामात्मनां च विभुत्वबहुत्वयोगे उक्तदोषाणां योगो न तु एकत्वविभुत्वयोगे तथाचैक एव विभुरात्माऽने-

---

न्वयः । अहमात्मा गुडाकेशेति सर्वात्मत्वमित्यारभ्य दशानां त्वान्तानामहमर्थस्यैव श्रीमुखेन निर्णीतमित्यन्तेन सममन्वयः । अहमर्थस्य मायाकल्पितस्य मिथ्यात्वेनात्मभिन्नत्वे बाधकमाह । मामेवेत्यादि । स्वप्रपन्नमायानि-रसनंसमर्थस्य मायिकाहमर्थसम्बन्धो न युक्त इति भावः । सर्वशास्त्रसाररूपायाः श्रीमद्भगवद्गीताया अस्म-दर्थाभिन्न-सर्वज्ञानानन्तविचित्रशक्त्याश्रय: श्रीभगवान् पुरुषोत्तमो रमानिवास: श्रीकृष्ण एव विषय इति निश्चीयते उदाहृतहेतुगर्भितवाक्येभ्य इति भावः । अनुपलब्धिप्रमाणेनाप्यहमर्थस्यात्मत्वं दर्शयति । किञ्चेति । अहमर्थस्या-त्मत्वेऽन्यथानुपपत्तिं प्रमाणयति । अपिचेत्यादिना । भगवत्पादश्रीशङ्कराचार्यप्रणीतबादरायणीयसूत्रभाष्यमप्यु-क्तार्थे प्रमाणतयोपन्यस्यति । किञ्चेत्यादिना । उपसंहरति । तस्मादिति । प्रत्यक्षानुमानश्रुतिस्मृत्यनुपलब्ध्यर्था-पत्तिप्रमाणेभ्योऽहमर्थस्यात्मत्वसिद्धिरित्यर्थः ॥ १८ ॥ इतिज्ञाधिकरणम् ॥ ८ ॥

अथ उत्क्रान्त्यधिकरणम्

अग्रिमसूत्रमवतारयितुं शङ्कते । अथेति । तत्परिमाणम्=जीवात्मनः परिमाणम् । प्रतिज्ञावाक्यप्रदर्श-नपुरस्सरं सूत्रं व्याचष्टे । प्रत्यगात्मेति । हेतुवाक्योत्थापकाकाङ्क्षां दर्शयति । कुत इति । हेत्वर्थं विवृण्वन् उत्क्रान्त्यादिबोधिकां श्रुतिमुदाहरति । स यदेति । सः=मुमूर्षुः जीवः स्वारब्धकर्मावसाने यदाऽस्माच्छरीरात् उत्क्रामति । एतैः=बुद्ध्यादिभिः । गतिबोधिकां श्रुतिमाह । यैवेति । आगतिप्रतिपादिकां श्रुतिं निर्दिशति । तस्मा-ल्लोकादिति । चन्द्रलोकादिमं लोकं प्रतिकर्म कर्त्तुमायातीत्यर्थः । यदि प्रत्यगात्मनो मध्यमपरिमाणवत्वं स्यात्तदा घटादिवत्सावयवत्वेनानित्यत्वं स्यात्तथा सति प्रत्यगात्मनां नित्यत्वप्रतिपादिकाः श्रुतयो बाध्येरन्। यदि शारीराणां विभु-

कोपाधिभिरवच्छिन्नो घटावच्छिन्नाकाशवत् भिन्नतया भाति स्वस्वोपाधिप्रयुक्ताश्च स्वीयसुख-दुःखानुभूतय उपाधीनामेवेतरेतरभिन्नानां भेदनियामकत्वेन सुखाद्यनुभवसाङ्कर्याभावाद्व्य-वस्थासामञ्जस्यम्। यद्वा बिम्बस्थानीयमेकं ब्रह्म जलादिस्थानीयेऽन्तःकरणाद्युपाधौ प्रतिबिम्बितं सज्जीवत्वमापद्यते, उपाधेश्चाऽऽविद्यकत्वात्तत्प्रयुक्तभेदोप्याविद्यकः। यथा सूर्यस्य जलपरि-पूरितघटेषु तत्र तत्र प्रतिबिम्बविशेषो घटोपाधिकृतो भेदश्च तत्रैकस्मिंश्चाल्यमाने घटजले घटे नष्टे च तद्गतस्यैकस्यैव प्रतिबिम्बस्य चाञ्चल्यबिम्बभावापत्तिर्नान्येषां तथैकस्मिन्नेवान्तः-करणे सुखादिवृत्तरूपपरिणामे सति तद्गतैकस्यैव चेतनप्रतिबिम्बस्य तत्तद्दुःखाद्यनुभवो-नान्येषाम्, तथाचैकस्मिन्नेवोपाधौ तत्त्वमस्यादिवाक्यश्रवणजन्यजीवब्रह्मैक्यज्ञानान्नष्टे सति तस्यैव ब्रह्मभावापत्तिर्नान्येषामिति सर्वस्या अपि सुखदुःखभोगसाङ्कर्याभावव्यवस्थाया बन्ध-मोक्षव्यवस्थायाश्च सुवचत्वमिति चेन्न। उभयपक्षेऽपि बन्धमोक्षव्यवस्थानुपपत्तेः सुखादि-भोगसाङ्कर्यापत्तेश्च पूर्वमेव विस्तृतत्वात् परमतप्रयोजननिराकरणप्रकरणे यस्य ब्रह्मभा-वापत्तिलक्षणो मोक्षः प्रयोजनत्वेनाभ्युपगम्यते इत्यारभ्य जीवब्रह्मैक्यं वक्तुमशक्यमित्यन्तेन ग्रन्थेन। किञ्च सर्वगताद्वितीयात्मवादे उपाधेर्विभुत्वाङ्गीकारश्चेत् सर्वस्यापि चेतनस्यावृत-त्वेन जगदान्ध्यप्रसङ्गः प्रकाशकाभावात्। गत्याद्यनुपपत्तिर्मुक्तोपसृप्यब्रह्मोच्छेदप्रसङ्गश्च "ब्रह्मविदाप्नोति परम्, पूता मद्भावमागताः" इत्यादिमोक्षशास्त्रबाधश्च। उपाधिपरिच्छिन्ना-नेकात्मत्ववादे च पदे पदे बन्धमोक्षापत्त्यादिदोषाणां पूर्वमेव विस्तृतत्वात्। किञ्च मोक्षस्यो-क्तन्यायेनाकस्मात्पदे पदे सिद्धौ "तमेव विदित्वातिमृत्युमेति, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवा" इत्याद्यन्वयव्यतिरेकावधारणयुक्तमोक्षसाधनबोधकश्रुतीनां बाधप्रसङ्गः। मोक्षोद्देशेन

---

परिमाणकत्वमिष्यते तदोत्क्रान्तिगत्यागतिभिश्चलनमेव न घटेत तथात्वे उत्क्रान्त्यादिबोधकश्रुतयो व्याकुप्येरन् इत्याह न मध्यमपरिमाणक इति। जीवात्मा एक एव विभुस्तस्य बुद्ध्याद्युपाधिसम्बन्धाधीनः परस्परं भेदो न तु वास्तविक इत्यवच्छेदवादमवलम्ब्याशङ्कते। नन्विति। तदेव दृष्टान्तेन परबुद्ध्यारूढं करोति तथाचे-त्यादिना। यदि प्रत्यगात्मन एकत्वं तदा सुखदुःखानुभवसाङ्कर्यं स्यादित्यत आह। स्वस्वोपाधिप्रयुक्ताश्चेति। अवच्छेदवादं समर्थ्य प्रतिबिम्बवादं समर्थयति। यद्वेति। ब्रह्मणः प्रतिबिम्बो जीव इति दर्शयितुं बिम्बोपाधि-प्रतिबिम्बान्निरूपयति बिम्बस्थानीयमित्यादिना। प्रत्यगात्मनां भेदश्चौपाधिक इत्याह। उपाधेश्चेति। तदेव दृष्टान्तेन परबुद्ध्यारूढं करोति। यथेति। यथैकत्रोपाधौ कम्पने तद्देशस्थसूर्यप्रतिबिम्बस्यैकस्यैव कम्पनं जायते नत्वन्यत्र तथैकस्मिन्नन्तःकरणे सुखदुःखादिरूपपरिणामे जाते सति तद्गतस्यैकस्यैव चेतनप्रतिबिम्बस्य जीवस्यैव सुख-दुःखानुभवो भवति नान्येषां प्रत्यगात्मनामिति न सुखदुःखानुभवसाङ्कर्यमित्याह। तत्रैकस्मिंश्चाल्यमान इति। यदुपाध्यवच्छिन्नस्य जीवात्मनो वेदान्तश्रवणेन ब्रह्मैक्यज्ञानमुत्पद्यते तस्मात्तदुपाधौ नष्टे तस्यैव मुक्तिर्भवतीत्येक-मुक्तौ न सर्वमुक्तिप्रसङ्ग इत्याह। तथाचैकस्मिन्नेवोपाधाविति। परिहरति। नेति। उभयपक्षेऽपीति अवच्छेद-वादप्रतिबिम्बवादपक्षेपीत्यर्थः। यस्मिन् प्रकरणे निराकृतं तत् प्रकरणं दर्शयति। परमतइति। तत्रत्यं ग्रन्थमुद्धरति यस्यचेति। एकजीववादे उपाधेर्विभुत्वे दोषमाह। किञ्चेति। दूषणान्तरमाह। गत्याद्यनुपपत्तिरिति। उपाधौ गच्छति सति ब्रह्मणो विभोर्गमनानर्हत्वेन पूर्वदेशावच्छिन्नचेतनस्य क्षेत्रज्ञाख्यस्य कस्मान्निर्हेतुको मोक्षः तथैव शुद्धस्य नित्यमुक्तस्य चेतनप्रदेशविशेषस्याकस्माद्बन्धश्चेति पदे पदे बन्धमोक्षौ स्यातां कृतनाशाकृताभ्यागमप्रसङ्गश्च

जिज्ञासाशास्त्रारम्भवैयर्थ्यञ्च । किञ्च उभयपक्षेऽप्यावरकोपाधेः सत्यत्वं मिथ्यात्वं वा ? नाद्यः। द्वैतापत्तेः सत्यस्य ज्ञाननाश्यत्वानङ्गीकारेणानिर्मोक्षप्रसङ्गाच्च, परमतप्रवेशाच्च । न द्वितीयः, अनुपपन्नत्वात् । तथाहि यथा बिम्बस्य सावयवत्वरूपवत्त्वादिना सजातीयसमसत्ता-कोपाधौ प्रतिबिम्बननियमस्तथावच्छेदकस्याप्युपाधेः समसत्ताकस्यैवावच्छेदकत्वनियमः अन्यथा स्वप्नरज्ज्वा जाग्रदवस्थायां राजभटनिगृहीतचौरादीनां बन्धनापत्तेर्मृगमरीचिकाजले सूर्यादेः प्रतिबिम्बनापत्तेश्च । नतु तदस्ति दृष्टश्रुतागोचरत्वात् । किञ्च तत्त्वज्ञानाज्जीवोपा-धिनाशे सति जीवोनश्यति न वा ? आद्ये स्वरूपनाशस्यैव मोक्षत्वापत्तिः । द्वितीयेऽविद्या-नाशेऽप्यनिर्मोक्षप्रसङ्गः ब्रह्मातिरिक्तजीवस्वरूपावस्थानात् । नच दर्पणादिषूपलभ्यमानमुख-मालिन्यादिवच्छुद्धादिव्यवस्थोपपत्तिरिति वाच्यम्। आपततोक्तेः।मालिन्यादय औपाधिका दोषाः कदा नश्येयुः ? दर्पणाद्युपाध्यपगम इति चेत्, किन्तदा मालिन्याद्याश्रयः प्रतिबिम्बस्तिष्ठति न वा ? आद्ये तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः । द्वितीये तद्वदेवं जीवना-शात्स्वरूपनाश एव मोक्षः स्यात्। किञ्च यस्यापुरुषार्थरूपदोषप्रतिभासस्तदुच्छेदः पुरुषार्थः । तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मण उत प्रतिबिम्बस्थानीयस्य जीवस्य चाभिप्रेतस्तदितरस्य वा ? आद्ययोः कल्पयोर्दृष्टान्तासिद्धिः मुखस्य तत्प्रतिबिम्बस्य वा मालिन्यादिदोषशून्यत्वात् । नहि मुखं प्रतिबिम्बं वा चेतयते उभयोर्जडत्वात्, तदुभयेतर-द्रष्टुरभावान्न तृतीयः । किञ्चाविद्याकल्प्यस्य जीवस्य को वा कल्पकः अविद्येति चेन्न तस्या अचेतनत्वात् । नापि जीवः आत्माश्रयापत्तेः, शुक्तिरजतवदविद्याकल्पितत्वाच्च जीवस्य ब्रह्मैव कल्पकमितिचेन्न ।ब्रह्मण्यि अज्ञानस्यैवापातात् । किञ्च ब्रह्मण्यज्ञानानङ्गीकारे किं ब्रह्म जीवान्पश्यति न वा ?' न पश्यति चेदीक्षादिपूर्विका विचित्रसृष्टिर्नामरूपस्यव्या-

---

स्यादित्यत उपाधेः परिच्छिन्नत्वपक्षमपाकुर्वन्नाह । उपाधिपरिच्छिन्नानेकात्मवाद इति । उक्तपक्षे दोषान्तरमाह किञ्चेति।उभयपक्षे इति । अवच्छेदवादप्रतिबिम्बवादपक्ष इत्यर्थः। विकल्पयति । उपाधेरिति । आद्यपक्षं परिहरति। नाद्यइति । आवरकोपाधेर्यदि सत्यत्वं स्यात्तदा ज्ञाननिवर्त्यत्वाभावेनामोक्षः स्यादित्याह सत्यस्येति । सत्यस्यापि ज्ञाननाश्यत्वेन यदि मुक्तिः स्वीक्रियते तदाह परमत इति । द्वितीयपक्षमपाकरोति । नद्वितीय इति । अनुपपन्नत्वमे-वोपपादयति । तथाहीत्यादिना । बिम्बोपाध्योः सजातीयत्वं समसत्ताकत्वं यत्र तत्र प्रतिबिम्बभाव इति नियममाह। यथेति । उक्तव्याप्तौ विपक्षे बाधकतर्कमाह अन्यथेति । उक्तनियमानङ्गीकार इत्यर्थः । तदस्ति = बन्धनं प्रतिबिम्ब-नञ्चास्ति । उपाधिनाशप्रयुक्तः प्रत्यगात्मनो नाशोऽस्ति नवेति विकल्पयति । किञ्चत्यादिना । आद्यपक्षं निरसितु-माह । आद्यइति । द्वितीयपक्षमपाकरोति । द्वितीय इति । तत्र हेतुमाह । ब्रह्मातिरिक्तेति । यथा दर्पणोपलब्ध-मुखमालिन्यं निवर्तत तथोपाधिसंसर्गनिवृत्तो शुद्ध आ मावतिष्ठत इत्याशङ्क्यापाकरोति । नचेति । उपाधिनिवृत्तौ दोषाणां निवृत्तिरित्यभिप्रेत्याह मालिन्यादय इति । उपाधिनिवृत्तौ दोषाश्रयः प्रतिबिम्बस्तिष्ठति न वेति विक-ल्पयति । किंतदेति । तदा उपाधिनिवृत्तिकाले । आद्यपक्षं निरस्यति । आद्यइति । द्वितीयविकल्पमभिप्रेत्याह द्वितीय इति । तदुच्छेद इति = निरुक्तप्रतिभासोच्छेद इत्यर्थः । स च किं ब्रह्मणः प्रत्यगात्मनो वेति विकल्पयति तत्रेति । विकल्पद्वयं दृष्टान्तासिद्ध्या निरस्यति आद्ययोरिति । उभयोः = मुखप्रतिबिम्बयोः । तृतीयविकल्पं निरस्यति । तदुभयेतरद्रष्टुरभावादिति । ब्रह्मजीवेतरद्रष्टुरभावादित्यर्थः । अविद्याकल्प्यं जीवात्मानं कः कल्पयति

करणादि च ब्रह्मणो न स्यात्। अथ पश्यति चेदखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान्पश्यतीति ब्रह्मण्यज्ञानप्रसङ्गः। अतएव मायाविद्याविभागवादोऽपि निरस्तः। अज्ञानमन्तरेण हि मायिनो ब्रह्मणो जीवदर्शित्वाऽसम्भवात्। नहि मायावी परानदृष्ट्वा मोहयितुमलं, नापि मायाऽमायाविनोर्दर्शनसाधनं द्रष्टेषु परेषु तन्मोहनसाधनमात्रत्वात् तस्याः। अथ ब्रह्मणो मायाजीवदर्शित्वं कुर्वन्ती जीवमोहनस्य हेतुरितिचेन्न। तर्हिपरिशुद्धस्याखण्डैकरसस्य स्वप्रकाशस्य ब्रह्मणः परदर्शित्वं कुर्वन्ती मायाऽपरपर्यायाऽविद्यैव स्यात्। ननु विपरीतदर्शनहेतुरविद्या माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेन दर्शयन्ती न ब्रह्मणो विपरीतहेतुः अतस्तस्या अनादित्वमिति। मैवम् एकत्वे ज्ञायमाने द्विचन्द्रदर्शनहेतोरप्यविद्यात्वात्। यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति तर्हि कथं तान्मोहयति। नह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान्मोहयितुमीहते। अथपुरुषार्थपरमार्थदर्शनहेतुरविद्या, माया तु ब्रह्मणो नापुरुषार्थदर्शनहेतुरतोऽस्या अनादित्वमिति मतम्, तत्र द्विचन्द्रदर्शनस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव, तन्निरसनप्रयासदर्शनात्। यदि च नापुरुषार्थदर्शनकरी माया, तर्ह्यनुच्छेद्यतया ब्रह्मस्वरूपानुबन्धिनी स्यात्। अस्तु कोदोष इति चेत्? द्वैतदर्शनमेव दोषः। "यत्र द्वैतमिव भवति तत्रेतर इतरम् पश्यति यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि" त्याद्यद्वैतश्रुतिव्याकोपात्। परमार्थविषया अद्वैतश्रुतयः मायायास्त्वपरमार्थत्वान्न विरोध इति चेत्। अपरिच्छिन्नानन्दैकरूपस्य ब्रह्मणोऽपरमार्थभूतमायादिदर्शनं तद्धत्वं चाविद्यामन्तरेण नोपपद्यते, तव मते ह्यविद्यकमेव ब्रह्म मायादिदर्शित्वादिति। ननु "अनेन जीवेनात्मनाऽनुप्रविश्ये"ति श्रुतेर्न जीवब्रह्मणोर्वास्तवो भेदः, किन्तु कल्पितभेदाश्रयणे नैवेयं व्यवस्थोच्यते नच कस्य कल्पना? न तावद्ब्रह्मणः, तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात्, नापि जीवानाम्-अन्योन्याश्रयापत्तेः, कल्पनाधीनोहि जीवभावो जीवाश्रया च कल्पनेति वाच्यम्। अविद्याजीवत्वयो बीजांकुरन्यायेनानादित्वात् जीवानां भ्रमस्यानादित्वान्न तद्धेतुरन्वेषणीय इति

---

अविद्या वा जीवो वा ब्रह्मवेति विकल्प्याद्यपक्षं प्रतिक्षिपति। नेति। तस्याः = अविद्यायाः। द्वितीयविकल्पं परिहरति। नापीति। स्वोत्पत्तौ स्वस्यापेक्षितत्वे आत्माश्रयः। यदि स्वोत्पत्तौ स्वस्यापेक्षितत्वं स्यात् स्वभिन्नं भिन्नं स्यात् स्वाव्यवहितपूर्ववर्त्तित्वञ्च स्यान्नतु तथास्तीति तर्कविधया आत्माश्रयस्य दूषकत्वं द्रष्टव्यम्। तृतीयपक्षमभिप्रेत्याह जीवस्येति। ब्रह्म जीवान् पश्यति न वेति विकल्पयति। किञ्चेत्यादिना। निषेधपक्षमभिप्रेत्याह। न पश्यतीति। एकोऽहं बहुस्यामित्यादिश्रुतीनामीक्षापूर्वकसृष्टिप्रतिपादिकानां व्याकोपः प्रसज्येत इति भावः। विधिकोटिमभिप्रेत्याह अथेति। अतएव उक्तदोषादेव ब्रह्मण्यज्ञानप्रसङ्गादेवेतियावत्। निरासे हेतुमाह। अज्ञानमन्तरेणेति। तदेवोपपादयति। नहीति। मायिन इत्युक्त्या च मायाया अज्ञानात्पार्थक्यं नास्तीति सूचितम्। परदर्शनं विना मोहनं न घटत इत्याह। न हि मायावीति। मायाकार्यं मोहनमात्रं न तु दर्शनमित्याह। नापीति। तस्या इति मायाया इत्यर्थः। एकस्याः मायाया एवोभयकार्यकारित्वञ्चास्त्वित्याशङ्कते। अथेत्यादिना। मायाया एव यद्युभयकार्यकारित्वं स्यात्तदा सिद्धं मायाऽविद्योः पर्य्यायत्वं तथा चाथ पश्यति चेदखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्मण्यज्ञानप्रसङ्ग इति। प्रतिज्ञातार्थस्य सिद्धिस्तथासति मायाऽविद्याविभागवादो दत्ताञ्जलिः स्यादिति भावः।

चेन्न। स्वकपोलकल्पनाविजृम्भितत्वात्। तथाहि–जीवस्योकल्पितस्वरूपेणाविद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात् तदतिरिक्तेन तस्मिन् कल्पितेनाकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात्। नहि मायावादे तदुभयातिरिक्ताकारस्याङ्गीकारः। नच कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमितिवाच्यम्, अखण्डैकरसस्य स्वरूपस्याविद्यामन्तरेण विशिष्टत्वासम्भवात्। किञ्च जीवाज्ञानाश्रयणे किं प्रयोजनमिति वक्तव्यम् बन्धमोक्षव्यवस्थासिद्धिरेवेति चेन्न। सातु तत्पक्षेऽपि न सम्भवति, अविद्याया विनाशो हि मोक्षस्तत्रैकस्मिन्मुक्तेऽविद्याविनाशात् सर्वे मुच्येरन्। अन्येषां ह्यमुक्तत्वादविद्या तिष्ठतीति चेत्तर्हि न कस्यापि मुक्तिः स्यात् अविद्याया अविनष्टत्वात्। प्रतिजीवमविद्याभेदः कल्प्यते चेत्। भेदः स्वाभाविको वा उत कल्पितः? नाद्यः, अनङ्गीकारात्, भेदसिद्धयेऽविद्याकल्पनस्य वैयर्थ्यप्रसङ्गात्। न द्वितीयः अन्याऽन्याश्रयात्, जीवभेदसिद्धौ तासां सिद्धिस्तासु च जीवभेदसिद्धिरिति। नच बीजांकुरन्यायेन तस्यादोषत्वमुक्तमेवेति वाच्यम्। उक्तन्यायस्यात्रानवसरात्। तथाहि बीजांकुरेषु तावदन्यदन्यद्बीजमन्यस्यान्यस्यांकुरस्योत्पादकं प्रत्यक्षादिप्रमाणसिद्धम्। इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां सिद्धिः। अथ बीजांकुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे उत विज्ञानवादिवज्जीवोत्पत्तिम्? आद्ये; असम्भवः कल्पनायाः प्राक् कल्पकस्याभावात्। द्वितीये जीवानां भंगुरत्वं कृतनाशाकृताभ्यागमप्रसङ्गश्चेति। अतएव ब्रह्मणः पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवभावकल्पनमित्यपि

---

विपरीतं शुक्तौ रजतत्वमिति यावत् या दर्शयति साऽविद्या। या ब्रह्मव्यतिरिक्तं मिथ्यात्वेन मिथ्याभूतं दर्शयति सा मायेति तयोः पार्थक्यमाशङ्कते। नन्वित्यादिना। एकश्चन्द्र इति ज्ञानसत्त्वदशायामपि द्विचन्द्रदर्शनहेतोरप्यविद्यात्वं स्यादुक्तलक्षणस्य सत्त्वादित्याशयेनोक्तां शंकां व्युदस्यति। मैवमिति। पुनरपि मायाऽविद्ययोः प्रकारान्तरेण पार्थक्यं शङ्कते अथेत्यादिना। अस्या इति मायाया इत्यर्थं। तद्धेतुः=द्विचन्द्रदर्शनहेतुः। तन्निरसन इति। अविद्यानिरसन इत्यर्थः। यद्यदपुरुषार्थदर्शनकारित्वं तत्तत्सर्वमुच्छेद्यं यद्युक्तार्थरूपवन्न तन्नोच्छेद्यमिति नियममिवलम्ब्याह। यदिचेत। द्वैतदर्शनमेवदोषइति। तथा सति द्वैतदर्शनं निषेधयन्त्याः श्रुतेर्व्याकोपः स्यादित्याह। यत्रत्वस्येति। श्रुतेर्विरोधं परिहरति परमार्थविषयेति। तद्वत्त्वञ्चेति। मायावत्त्वञ्चेत्यर्थः। श्रुत्यापि कल्पितभेदबोधनात् तमादायैवाविद्यकमेव ब्रह्मणो मायादर्शित्वमिति व्यवस्थोपपद्यत इति शङ्कते नन्विति। नचेति तस्याप्रिमवाच्यमित्यनेन सममन्वय। अन्योन्याश्रयत्वमेव विवृणोति कल्पनाधीनेति। अनादित्वेनान्योन्याश्रयं परिहरन्नाह अविद्याजीवत्वयोरिति। तद्धेतुः=भ्रमहेतुः। उक्तहेत्वर्थमेव विवृणोति। तथाहीत्यादिना। अकल्पितस्वरूपेण=चित्स्वरूपेण। तदतिरिक्तेनेति। चित्वातिरिक्तेन कल्पितेनाकारेण अन्तःकरणादिना कल्पिताकारविशिष्टस्वरूपेणाविद्याश्रयत्वमाशङ्क्य परिहरति। नचेति। जीवस्याज्ञानाश्रयणे प्रयोजनं पृच्छति किञ्चेति। सात्विति बन्धमोक्षव्यवस्था। प्रतिजीवमविद्याभेदमाश्रित्य सर्वमुक्तिप्रसङ्गमपाकरोति। प्रतिजीवमिति। अविद्याभेदस्य स्वाभाविकत्वादेव प्रतिजीवेषु सिद्धत्वात्तत्सिद्ध्यर्थमविद्याकल्पनं निष्फलमित्याह। भेदसिद्धयइति। अन्योन्याश्रयमेव स्पष्टयति। जीवभेदसिद्धाविति। उक्तन्यायस्येति बीजाङ्कुरन्यायस्येत्यर्थः। उक्तन्यायानवसरं विवृणोति। तथाहीत्यादिना। तानेवेति जीवानित्यर्थः। तासाम्=अविद्यानाम्। विकल्पेनाप्युक्तां शङ्कां व्युदस्यति। अथेति। "अतएव=वक्ष्यमाणहेतुतः। तस्य निरस्तमित्यनेनान्वयः। तत्कल्पितजीवभावस्य=ब्रह्मकल्पितजीवभावस्य। तद्वदिति।

निरस्तम्, अविद्याप्रवाहेऽभ्युपगम्यमाने तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यान्न ध्रुवरूपता, तथात्वे चामोक्षाज्जीवभावस्य ध्रुवत्वमपि तवेष्टं न सिद्ध्येत्। ननु प्रासाद-निगरणादिवदनुपपन्नतैकवेद्यायामविद्यायामवस्तुभूतायां नेतरेतरादिदोषा अनवक्लृप्तिमा-वहन्तीति चेन्न। तथात्वे च सति मुक्तानपि परं ब्रह्म चाश्रयेदविद्येति मन्तव्यं पण्डितम्मन्यैः तेषां शुद्धज्ञानरूपत्वादशुद्धाविद्या न तत्र सज्जतीति चेतद्युक्तोपपत्तिभिर्जीवानपि नाश्रयेत्तेषा-मपि स्वरूपतो ब्रह्माभिन्नत्वेन शुद्धत्वाऽविशेषात्। अन्यथा तव मते शुद्धस्य ब्रह्मणो विद्या-श्रयत्वाङ्गीकारेण मुक्तानां शुद्धानां पुनरविद्याश्रयणेऽपि कियान्दोषः। तथोक्तं विवरणे "आश्र-यत्वविषयत्वभागिनी निर्विशेषचितिरेव केवले" त्यादिना। अतः प्रतिबिम्बवादः श्रेयोऽर्थिभिः सर्वथोपेक्षणीयः। श्रुत्यादिमानशून्यत्वात्। न "न्वेक एव हि भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवदि" तिश्रुतिसिद्धत्वात्कथमश्रौतत्वमिति चेन्न। उक्त-श्रुतेरन्तर्यामिणो निर्लेपत्वप्रतिपादनपरत्वेन प्रतिबिम्बविषयकत्वाभावात्तस्मिन्वाक्ये प्रति-बिम्बशब्दादर्शनात्। काल्पनिकार्थस्य बुद्धिकौशलमात्रत्वात्। श्रुत्यर्थस्तु भूतात्मा भग-वान्वासुदेव एक एव भूते भूते चेतनाचेतनवर्गे, यद्वाऽभूत इति छेदः भूते कार्यवर्गे अभूते कारणवर्गे, यद्वा भूते सृष्टिंगते बद्धचेतनवर्गे, अभूते सृष्ट्यनन्तर्गते नित्यमुक्तचेतनवर्गे तदन्तर्यामितया व्यवस्थितः विशेषेण सदैकरसानन्दरूपेणावस्थितोऽपि तद्गतदोषासंस्पृष्ट-माहात्म्य एव दृश्यते महात्मभिस्तदनुग्रहभाजनैरुपनिषच्चक्षुष्कैरित्यन्वयः। ननु गुणदोष-सम्पृक्ते वस्तुनि वर्त्तमानस्य कथमिव तन्निर्लेपत्वमित्याशङ्क्यां दृष्टान्तेन निराकरोति। चन्द्र-वदिति। यथा चन्द्रः श्रीगङ्गादिपुण्यजलेषु शूकरादिविलोडितदुर्गन्धिगर्त्तादिजलेषु च स्वकरनिकरव्याप्त्यावर्त्तमानोऽपि तद्गतगुणदोषैर्न युज्यते, एवं ब्रह्मादिश्वपाकान्तेषु चेत-

---

अविद्यावदित्यर्थः। तथात्वे=प्रवाहतोऽनादित्वे। ध्रुवत्वम्=नित्यत्वम्। तेषां=मुक्तानां। तत्र=मुक्तेषु। उक्तोपपत्तिभिरिति। अविद्या अशुद्धरूपा इत्यादिभिरित्यर्थः। तेषां=जीवानाम्। अन्यथा=जीवानामविद्या-श्रयत्वे। विवरणकारवचसोक्तार्थं द्रढयति। तथोक्तमिति। "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर" इत्युत्तरार्द्धंमुक्तकारिकायाः। श्रुतिसिद्धं प्रतिबिम्बवादं व्यवस्थापयितुं शङ्कते। नन्विति। परिहरति। नेति। उक्तश्रु-त्यर्थं व्याचष्टे श्रुत्यर्थस्त्विति। भूतात्मेतिशब्दार्थं व्याचष्टे भगवान्वासुदेवइति। व्यवस्थितशब्दार्थमाह तदन्तर्यामितयेति। दर्शने करणं निर्दिशति। तदनुग्रहेति दृष्टान्तमवतारयितुं शङ्कते नन्विति। सूर्य इति। "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः (बृ०) आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् (ऐ०)" इत्यादि श्रुत्यनुसारेण यथा-सूर्यश्चक्षुरधिष्ठातृतया तदन्तर्गतोऽपि वहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतैर्दोषैर्न स्पृश्यते। तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात् विलक्षणत्वादित्यर्थः। बिम्बब्रह्म अविद्यात्मकोपाध्यन्तःस्थं तदनन्तःस्थं वेति द्विधा विकल्प्य तत्राद्यं निरस्यति। नाद्यइति। द्वितीयमपाकरोति नान्त्यइति। अन्यथेति। ब्रह्मणोऽविद्यावहिःस्थत्व इत्यर्थः। सदेशत्वापत्तेरिति। ब्रह्मात्मनो निरवयवस्य प्रदेशोऽस्तीतिभावः। तथात्वे=सदेशत्वे। एकजीववादं परिहरति नापीति। एकजीववादे श्रुतेर्मानमाशङ्क्य निराकरोति। नचेति। तासाम्=श्रुतीनाम्। श्रुत्यर्थं व्याचष्टे। श्रुत्यर्थस्त्विति। अन्यथेति अव-

नाचेतनेषु साम्येन स्वरूपव्याप्त्या तिष्ठन्नपि परमेश्वरो न तद्गतगुणदोषैर्युज्यतेऽस्पृष्टस्वभावत्वात्। "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य" इत्यग्रिमवाक्यात्। तत्र कथासमष्टयन्तर्यामितया बहुधा व्यष्टयन्तरात्मतयेति संक्षेपः। किञ्च तवाभिप्रेतं बिम्बभूतं ब्रह्म उपाध्यन्तःस्थम्? तदनन्तर्गतं वा? नाद्यः। जलान्तस्स्थस्य मत्स्यकूर्मादेः प्रतिबिम्बादर्शनात्। नान्त्यः तव पक्षे ब्रह्मणोऽविद्यावहिःस्थत्वासम्भवात्। अन्यथा सदेशत्वापत्तेः, परिच्छिन्नत्वप्रसङ्गाच्च, तथात्वे च मिथ्यात्वं दुर्वारम्। ब्रह्म मिथ्या सदेशत्वात् पृथिव्यादिवत्परिच्छिन्नत्वाद्घटादिवच्चेत्यनुमानादित्याद्युक्तं पूर्वमेव, एवमवच्छेदवादेऽप्युक्तदोषा ऊह्या अविशेषात्। नाप्येकजीववादस्य सम्यक्त्वं पूर्वमेव निरस्तत्वात्प्रमाणशून्यत्वाच्च। नच "पुरत्रये क्रीडति देव एकः, एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतीनां तत्र मानत्वमिति वाच्यम्। तासामेकजीवपरत्वाभावात् श्रुत्यर्थस्तु पुरत्रये जाग्रदाद्यवस्थावच्छिन्नदेहत्रये एकएव जीवः देवः प्रकाशरूपत्वात् क्रीडनशीलत्वाद्वा, नत्ववस्थाभेदाज्जीवभेदः। अन्यथा कृतनाशादिप्रसङ्गादिति प्रथमवाक्यार्थः। एको देव इत्यादिवाक्यं तु ब्रह्मपरं, सर्वव्यापित्वसर्वभूतान्तरात्मत्वकर्म्माध्यक्षत्वसर्वसाक्षित्वादीनां ब्रह्मासाधारणलिङ्गानां जीवे कथमप्यसम्भवात्, तस्मादेकजीववादोऽश्रौत एवेति सिद्धम्। "नित्यो नित्यानां चेतनश्चेतनानां, नत्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः, बहवो ज्ञानतपसा पूता" इत्यादिश्रुतिस्मृतिविरोधात्। शास्त्रे क्वचिदेकवचनोक्तिर्जातिपरा "ब्राह्मणो न हन्तव्य" इत्यादिवत्। औपाधिकभेदवादे तु कायव्यूहस्थले योगिनः सर्वदेहेषु भोग इवैकजीवस्य सर्वदेहगतसुखाद्यनुभवापत्तिः। ब्रह्मण एव जीवत्वेन नित्यमुक्तत्वादिश्रुतिव्याकोपश्च एकस्यानेकदेहेषु प्रत्यक्त्वपराक्त्वासम्भवश्च। न चान्तःकरणभेदस्यात्र नियामकत्वमिति वाच्यम् योगिनः कायव्यूहानामन्तःकरणभेदेऽपि प्रत्यक्त्वपराक्त्वदर्शनात्प्रत्युताहमित्येव सर्वत्र प्रतीतिदर्शनाच्च। अवच्छेदवादोक्तदोषाणामत्र तुल्यत्वं किन्तूपाधिसत्त्वमिथ्यात्वयोरेव विशेष इत्यलं विस्तरेण। तस्मादणुपरिमाणक एवेति प्रकृतमनुसरामः॥ १९॥

## स्वात्मना चोत्तरयोः॥ २। ३। २०॥

---

स्थाभेदाज्जीवभेद इत्यर्थः। उपसंहरति तस्मादिति। एकजीववादे श्रुतिस्मृतिन्यायविरोधं दर्शयति नित्यो नित्यानामिति। सर्ववाक्येषु बहुवचनप्रयोगादेकजीववादः श्रुतिविरुद्ध एवेति भावः। क्वचिद्वाक्ये जीवात्मानमुद्दिश्यैकवचनान्तपदप्रयोगः श्रूयते सोपि जात्येकपरत्वेन समर्थनीय इत्याह शास्त्र इति। तत्र दृष्टान्तमाह ब्राह्मणइति। नन्वौपाधिकभेदवादमादायैव जीवे बहुवचनोक्तिः समर्थनीयेत्यत आह औपाधिकभेदवादेत्विति। यद्येको जीवः स्यात्तदा सर्वदेहावच्छेदेन तस्य सुखदुःखानुसन्धानं स्यात् कायव्यूहे योगिन इव नत्वेतदस्ति नातः एकजीववादपक्षः साधीयानित्याह कायव्यूहस्थलइति। प्रत्यक्त्वेति। प्रतीपमञ्चन् प्रत्यक् तस्य भावः प्रत्यक्त्वं स्वतोऽन्यतो वा स्वस्मै भासमानत्वमित्यर्थः। योऽसावहमिति व्यवह्रियते स एव हि स्वस्मै भाति। पराक्त्वमिति। परस्मै प्रकाशमानत्वं पराक्त्वम्। अहमर्थे पराक्त्वम्, इदमर्थे प्रत्यक्त्वमिति विवेकः॥ १९॥

चशब्दोऽवक्लृप्त्यर्थः। यद्यप्युत्क्रान्तेः शरीरवियोगरूपत्वेन सा कथञ्चित्स्थितेनापि सम्पाद्या स्यात् उत्तरयोर्गत्याऽऽगत्योस्तु स्वात्मनैव सम्पाद्यत्वमिति विशेषः॥ २०॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्॥ २। ३। २१॥

ननु नायमणुः कुतः? अतच्छ्रुतेः अणुभिन्नविभुत्वश्रुतेरित्यर्थः। "योऽयंविज्ञानमय" इति जीवप्रस्तावे "सवा एष महानज आत्मे"ति महत्त्वश्रुतेरिति चेत्तत्परिहरति नेति। कुतः? इतरस्य परमात्मनोऽधिकारात्। "यस्यानुवित्तः प्रतिबुद्ध आत्मेति"ति मध्ये परमात्मप्रतिपादनात्तस्यैव परामर्श इत्यर्थः॥ २१॥

## स्वशब्दोन्मानाभ्याञ्च॥ २। ३। २२॥

इतश्चायमणुरात्मा "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा सम्विवेशे"ति कण्ठरवेणाणुत्वश्रवणात्। अणुसदृशं वस्तूद्धृत्य यन्मानं तदुन्मानं "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः सचानन्त्याय कल्पते, आराग्रमात्रो ह्यवरोऽपि दृष्टः" इतिचोन्मानश्रवणात्। प्रत्यगात्माऽणुपरिमाणक उत्क्रान्त्यादिमत्त्वात्। यन्नैवं, तन्नैवं, परमात्मवत्। जीवोयद्यणुपरिमाणको न स्यात्तदा गत्याद्युपदेशोऽपि न स्यादिति "ते धूममभिसम्भवन्ती"त्यादिश्रुतेरिति संक्षेपः॥ २२॥

ननु तर्हि सर्वावयवगतसुखदुःखाद्यनुभवयौगपद्यव्यवस्थानुपपत्तिः स्वरूपस्याणुमात्रदेशवृत्तित्वादित्यत आह—

## अविरोधश्चन्दनवत्॥ २। ३। २३॥

यथा हरिचन्दनबिन्दुः शरीरैकदेशे निपतितः कृत्स्नं शरीरमाल्हादयति तथेति।

---

उत्क्रमणं मरणम्। तच्चाचलतोऽपि सतः कर्मक्षये देहस्वाम्यनिवृत्त्या उपपद्यते गत्यागत्योश्चलने निरूढयोः कर्तृस्वभावरूपत्वादितिभावः। कथञ्चिदित्युक्त्याऽस्वरसोऽत्र सूचितः सच प्रत्यगात्मन्यणुत्वगत्योरुभयकल्पना प्रयुक्तः गौरवात्मकः। तत्र गमनस्य श्रुतिसिद्धत्वेन कल्प्यत्वं नास्ति. अतोऽणुत्वमेव कल्प्यं तच्च श्रुतिसिद्धमिति न गौरवम्। तत्र विभुत्वकल्पनं श्रुतिविरुद्धमित्याशयः॥ २०॥

सूत्रस्य पूर्वपक्षांशं विवृणोति। नन्वित्यादिना। अधिकारः=प्रस्तावः। यस्यानुवित्त इति। यस्य जीवस्यानुवित्तः 'विदज्ञाने' उपास्य इत्यर्थः। यद्वा 'विदिर्लाभे' प्राप्यः। प्रतिबुद्ध आत्मा=प्राज्ञ आत्मा॥ २१॥

"उत्क्रान्तिगत्यागतीना"मित्यादि सूत्रेण श्रुत्यर्थापत्तिरुक्ता स्वशब्दोन्मानाभ्याञ्चेति श्रुतिर्दर्शिता? स्वशब्दः=अणुशब्दः। उद्धृत्य इति। उद्धरणञ्च पृथक्करणं वालाग्रशतभागस्येति अवयवावयविनोरवयवस्य पृथक्करणं श्रूयते प्रदर्श्यते। ततश्च पृथक्करणश्रवणयोः श्रुतिकर्तृकत्वात् समानकर्तृत्वोपपत्तिरिति द्रष्टव्यम्। आराग्रम्=चर्मभेदिसूच्यग्रम्। यन्नैवं तन्नैवमिति। यदणुपरिमाणकं न तत् उत्क्रान्तिगत्यागतिमदपि न यथा परमात्मेत्यर्थः॥ २२॥

अणोरात्मनः शरीरैकदेशस्थानैकस्य सर्वशरीरावच्छेदेन सुखदुःखाद्यनुपलब्धिरिति सूत्रान्तरमवतारयितुं शङ्कते नन्विति। सूत्रार्थं विवृणोति। यथेति। तथेति। जीवात्मा देहैकदेशस्थोऽपि सर्वशरीरवर्तिसुखदुःखमनुभवतीत्यर्थः। उक्तार्थं श्रुतिमुखेन प्रमाणयति अणुनइति। उक्तार्थं श्रीमुखवचनेनापि द्रढयति यथेति।

धर्म्मिणोऽणुत्वेऽपि तद्धर्म्मभूतज्ञानस्य विभुत्वात्। "अणुनश्चक्षुपः प्रकाशो व्याप्त एवमेवास्य प्रकाशोव्याप्तोवै पुरुप" इति श्रुतेः। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत !" "अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति। यथा व्याप्य शरीराणि हरिचन्दनविप्रुपः" इत्यादिस्मृतेश्च। "यथा च दीपः शरणे दीप्यमानः प्रकाशते। एवमेव शरीराणि प्रकाशयति चेतनः" इत्यश्वमेधपर्वणि। नच प्रकाशादेर्धर्म्मस्य स्वाश्रयं विना व्याप्त्यसम्भव इति शङ्कनीयम्? दीपं विना तत्प्रभायाः वन्हिं विना तदौष्ण्यादेः, पुष्पं विना तद्गन्धस्य व्याप्तिः प्रत्यक्षागमाभ्यां सिद्धतरा। धर्मिणं विना जातिसमवायादीनां व्याप्तिरन्यैरपि स्वीकृता च। एतेन क्वचिद्विभुपरं शास्त्रमपि व्याख्यातम्, विभुधर्माश्रयाणां तथात्वस्य शक्यैवावगमान्मुख्यत्वमेवेति। नन्वात्मनोऽणुत्वाङ्गीकारेऽपि सुखादिव्यवस्था दुरुपपादा, आत्मवृत्तिविभुपरिमाणकधर्म्मभूतज्ञानेन स्वशिरःपाण्यादिगतसुखाद्यनुभूतिवत्परशरीरगतसुखाद्यनुभवोऽपि दुर्वारः, ज्ञानव्याप्तेस्तत्राऽपि सत्त्वात्, सर्वजीवनिकायवृत्तिसुखादि सर्वेषामप्यवश्यमनुभाव्यमेव। विभुवादे कल्पितदोषाणां भोगसाङ्कर्यस्य च तवापि दुर्वारत्वेन व्याप्तिसाम्यादिति चेन्न। आपाततोक्तेः। तथाहि=अस्मत्सिद्धान्ते "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति, आवृतं ज्ञानमेतेने" त्यादिमानादात्मज्ञानस्य विभुत्वेऽपि बद्धावस्थायां कर्म्मात्मकाज्ञानावृतत्वेनेन्द्रियसन्निकर्षसापेक्षत्वात्। यत्रेन्द्रियसन्निकर्षस्तस्यैवानुभवोनान्यस्येति। एवं देवदत्तस्य स्वशरीरगतसुखादिभिः स्वान्तःकरणसन्निकृष्टत्वात्तेषामेवानुभवो न यज्ञदत्तशरीरगतसुखादीनां स्वकरणसन्निकर्षाभावात्। मोक्षावस्थायान्तु तदावरकाज्ञानस्य ध्वंसात्सर्वविषयकानुभवस्येष्टापत्तिः। "सर्वं हि पश्यः पश्यति, सर्वमाप्नोति सर्वशः" इत्यादिश्रुतेः। परमते तु स्वरूपस्यैकत्वादुक्तदोषोद्धारासम्भवः, सिद्धान्ते तु प्रतिदेहं स्वरूपभेदान्नोक्तदोषावकाश इति संक्षेपः ॥ २३ ॥

---

स्मृतिपुराणवचनाभ्यामप्युक्तार्थं स्पष्टयति। अणुमात्रइति। धर्मभूतज्ञानस्य स्वाश्रयातिरिक्तप्रदेशवृत्तित्वं न घटत इत्याशङ्क्य परिहरति। नचेति। धर्मिणं विनापि तदीयो धर्मः प्रसरतीत्याह। दीपंविनेति। धर्मिणं विनापि तदीयधर्माणां व्याप्तिः परतन्त्रसिद्धान्तसिद्धेत्याह धर्मिणंविनेति। तार्किकाणां सिद्धान्ते व्यक्तिमन्तराऽपि प्रलये गोत्वादेरवस्थानं स्वीकृतमित्यर्थः। सवाएप महानज आत्मा। योऽयं विज्ञानमयः प्राणेषु" इत्येवमादिषु वचनेषु जीवात्मनो विभुत्वं श्रूयते कथं तस्याणुपरिमाणकत्वमुच्यत इत्यत्राह एतेनेति। तद्धर्मभूतज्ञानस्य विभुत्वस्वीकारेणेत्यर्थः। तथात्वस्येति। विभुत्वस्येत्यर्थः। मुख्यत्वमेवेति नगौणत्वमित्यर्थ यथाणोर्जीवस्य सकलशरीरगता वेदना तद्धर्मभूतज्ञानविभुत्वादुपपद्यते तथा परशरीरगतसुखाद्यनुभवोऽपि स्यादित्याशङ्कते। नन्विति। जीवात्मनो विभुत्वपक्षेऽपि सुखदुःखानुभवसङ्कर्यं दुर्वारमित्याह, विभुवादइति। परिहरति नेति। तमेवोपपादयति तथाहीत्यादिना। संसृतिदशायां प्रत्यगात्मनो ज्ञानमनादिकर्मात्मिकाविद्यावृतमत इन्द्रियसन्निकर्षाधीनं जायते तत्तत्पुरुषीयेन्द्रियसंयोगात्तस्यैव तद्विषयसाक्षात्कारः नान्यस्येति न परगतसुखदुःखानुभव इत्यर्थः। मुक्तिसम्पत्तिदशायां तदावरकाज्ञानस्य नाशात् प्रत्यगात्मा सर्वज्ञो भवतीत्यर्थः। उक्तार्थं श्रुतिप्रमाणेन परिहरति। सर्वं हिपश्यतीति। पश्य = तदेकं पश्यतीति समानप्रकरणाद्ब्रह्मदर्शी जीवः। अद्वैतवादिमते नोक्तदोषोद्धार इत्याह परमतेत्विति ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमात् हृदि हि ॥२।३।२४॥

ननु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं, हरिचन्दनबिन्दोर्हि देहैकदेशविशेषेऽवस्थितेर्विशेषभावाच्छरीरैकदेशावस्थानस्य प्रत्यक्षत्वात्तथाभावः। आत्मनस्तु न तथेति चेन्न। आत्मनोऽप्यवस्थितेर्देशविशेषाभ्युपगमात्। तथाह्याह श्रुतिः "हृदि ह्येष आत्मा सवा एष आत्मा हृदी" ति "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरि" त्यादि ॥ २४ ॥

आत्मनो देशविशेषे स्थितिख्यापनाय चन्दनदृष्टान्तं प्रदर्श्य एकदेशवर्त्तिनोऽपि सकलदेहं व्याप्यकार्यकरत्वे प्रकारमाह—

## गुणाद्वालोकवत् ॥ २ । ३ । २५ ॥

वाशब्दो मतान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः। आलोकवत्, यथा मणिद्युमण्यादीनामेकदेशस्थितानामप्यालोकोऽनेकदेशव्यापी दृश्यते तद्वदात्मज्ञानमपि ॥ २५ ॥

ननु ज्ञानस्य व्यापकत्वेऽणुजीवव्यतिरेकेणावस्थानं वक्तव्यम् तच्चायुक्तं, गुणिव्यतिरिक्तदेशे गुणस्यावस्थानादर्शनात्। नच दीपप्रभान्यायेनेति वाच्यम् प्रभाया दीपसंयुक्तद्रव्यान्तरत्वादित्यत आह—

## व्यतिरेको गन्धवत्तथा हि दर्शयति ॥ २ । ३ । २६ ॥

यथा गुणस्यापि गन्धस्य गुणिव्यतिरेकेण वृत्तिः पुष्पपेटिकातो दूरस्थितस्य गन्धोपलम्भदर्शनात्तद्वद्गुणिव्यतिरेकेण ज्ञानस्येत्यर्थः। अतएवात्मनश्चैतन्यगुणेनैव देहे व्याप्तिरित्यत्र श्रुतिमाह, तथा चेति, ज्ञानगुणेन सर्वदेहव्यापित्वमाप्मनो दर्शयति श्रुतिः "स एष इह प्रविष्ट आलोमभ्य आनखेभ्यः" इति ॥२६॥

## पृथगुपदेशात् २ । ३ । २७ ॥

---

हरिचन्दनविन्दुदृष्टान्तेनात्मनोऽणुत्वेऽपि सर्वदेहवृत्तिवेदनानुभव उपपादितस्तमाक्षिपति। नन्विति। तथाभावः=सकलदेहव्याप्याह्लादजनकत्वमित्यर्थः। नतथेति। न देहैकदेशवर्त्तित्वं प्रत्यक्षासिद्धमित्यर्थः। सूत्रस्य शङ्काभागं व्याख्यायेतरभागं विवृणोति इतिचेन्नेत्यादिना। हृदयदेशेह्यात्मनः स्थितिं श्रुतिमुखेन दर्शयति तथाह्याहइति। अनेनैकदेशस्थस्य सकलशरीरव्यापिकर्मकरत्वप्रकारो दर्शित इति भावः ॥ २४ ॥

अग्रिमसूत्रमवतारयितुमाह आत्मन इति। सूत्रं व्याचष्टे। वाशब्दइति ॥ २५ ॥

सूत्रान्तरमवतारयितुं शङ्कते नन्विति। नहिपटस्य रूपादिक पटमन्तरेणान्यत्र स्थातुं शक्नोतीत्याह। गुणिव्यतिरिक्तदेशइति। यथा दीपस्य प्रभागुणस्तदतिरेकेणाशेषं गृहं व्याप्नोति तथा चैतन्यमात्मगुणोऽपि तमतिक्रम्य सर्वदेहं व्याप्नुयादित्याशङ्क्य परिहरति। नचेति। नास्ति प्रभायां गुणत्वं किन्तु तेजोद्रव्यत्वमित्याह प्रभायाइति। गुणो हि गुणिदेशमतिक्रम्य वर्त्तत इति दृष्टान्तेन परबुद्ध्यारूढं करोति यथेति। दार्ष्टान्तेऽपि योजयति तद्वदिति। अतएवेति। गुणिव्यतिरेकेण गुणस्य वृत्तिस्त्वादेवेत्यर्थः। श्रुतिमुदाहरति सएषइति ॥२६॥

इतश्च आत्मगुणोव्यतिरिक्तः। कुतः? "प्रज्ञया शरीरं समारुह्य" ति "तदेषां प्राणानां विज्ञानेन विज्ञानमादाये" ति च जीवाद्विज्ञानस्य पृथगुपदेशात्। "अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्म्मे" त्यादिना तस्य नित्यत्वप्रतिपादनाच्च। तथा च स्मृतिः "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा। यथोदपानखननात् क्रियते न जलान्तरम्। सदेव नीयते व्यक्तिमसतः सम्भवः कुतः। तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाशन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति ॥२७॥

ननु "नित्यं विभुं सर्वगतं सुसूक्ष्मं, नित्यः सर्वगतः स्थाणुरि" त्यादिविभुत्वप्रतिपादकश्रुतिस्मृतिविरोधस्तदवस्थ एवेत्याशङ्कायामाह—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २।३।२८॥

तुशब्दः शङ्कानिरासार्थः। सं विभुज्ञानगुण एव सारो विभुत्वव्यपदेशोमुख्यो यस्य तस्य भावस्तस्मात्तद्व्यपदेशः विभुत्वव्यपदेशः। तत्रैकदेशिदृष्टान्तमाह। प्राज्ञवदिति। यथा प्राज्ञस्य ब्रह्मणः बृहन्तो गुणा अस्मिन्निति ब्रह्मेति श्रुत्युक्ता निरुक्तिः, एवं प्रत्यगात्मनोऽपि विभुगुणत्वाद्विभुत्वव्यपदेशो न स्वरूपेण, अन्यथा पूर्वोदाहृतानि श्रुतिस्मृतिसूत्राणि बाध्येरन् ॥ २८॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २।३।२९॥

यावदात्मवृत्तित्वान्नित्यत्वाच्च गुणस्य अतस्तेन प्रत्यगात्मनोविभुत्वव्यपदेशो न विरुद्ध इत्यर्थः। खण्डो गौरित्यादिषु तथा दर्शनात् ॥ २९॥

---

गुणिनो गुणो व्यतिरिक्तः यथा पृथिव्यां गन्धस्तथा जानामीति प्रतीत्या प्रत्यगात्मनो ज्ञातुर्ज्ञानादिगुणो व्यतिरिक्त इत्याह इतश्चात्मगुणो व्यतिरिक्त इति। इतश्च = पृथगुपदेशादित्यर्थः। यद्यात्मनो ज्ञानमात्रस्वरूपत्वं स्यात् ज्ञातृत्वबोधकानां धर्मधर्मिभेदनिर्देशपराणां धर्मनित्यत्वबोधकानां "जानात्येवायम् अविनाशी वाअरेऽयमात्माऽनुच्छित्तिधर्मे"त्येवमादीनां बाधो दुर्वारः। तत्रानुच्छित्तिरेव धर्मतया विवक्षिता अविनाशीत्यनेन पुनरुक्तिप्रसङ्गात्। अत उच्छेदरहितज्ञानधर्मकत्वं विवक्षितमित्याशयेनाह। अविनाशि वा अरेऽयमात्मेति। उक्तार्थं स्मृतिप्रमाणेनापि द्रढयति। तथाचस्मृतिरिति ॥ २७॥

यद्यात्मनोऽणुत्वं स्यात्तदा विभुत्वप्रातिपादकश्रुतयः स्मृतयश्च व्याकुप्येरन्नित्याशङ्क्य उत्तरसूत्रमवतारयति। नन्विति। सूत्रस्याक्षराणि विवृणोति। तुशब्दइति। सारशब्देन प्रधानत्वं विवक्षितम्। तच्च यावदात्मभावित्वम्। विपक्षे बाधकतर्कमाह। अन्यथेति। स्वरूपेण प्रत्यगात्मनां विभुत्वस्वीकार इत्यर्थः। पूर्वोदाहृतानीति। "एषोऽणुरात्मा चेतसा वेदितव्यः। बुद्धिगुणेनात्मगुणेन चैवाराग्रमात्रो ह्यवरोऽपि दृष्टः, बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः सविज्ञेयः स चानन्त्याय कल्पते" इत्यादीनि ॥ २८॥

यदि प्रत्यगात्मगुणानामागमापायित्वं स्यात्तदा विभुत्वव्यपदेशो विरुद्ध्येत नत्वेवं तद्गुणानां यावदात्मवृत्तित्वात्तद्व्यपदेशो न विरुद्ध्यत इत्यर्थः। यथा खण्डमुण्डादयो धर्माः यावत्स्वरूपं वर्त्तमानाः गोरिति व्यपदिश्यमाना दृश्यन्त इत्याह खण्डोगौरिति ॥ २९॥

**पुन्स्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ २।३।३० ।**

ननु तस्य नित्यत्वे सुषुप्त्यादौ विषयानुभवापत्तिरिति चेत्तत्राह—तुशब्दोऽवधारणे ।सुषुप्त्यादौ सतएव, तस्यानभिव्यक्तस्य जाग्रदादावभिव्यक्तिसम्भावाद्यावदात्मभावित्वमेव, प्रत्यगात्मज्ञानस्य पुन्स्त्वादिवत् । यथा बाल्ये विद्यमानस्यैव पुन्स्त्वस्य सप्तमधातोर्यौवनेऽभिव्यक्तिः, अन्यथा पुन्स्त्वादेरागन्तुकतापत्तेस्तथात्वे च पुन्स्त्व-क्लीबत्वविभागासिद्धिरित्यर्थः ॥ ३० ॥

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवाऽन्यथा ।२।३।३१॥**

अन्यथा प्रत्यगात्मनोज्ञानमात्रत्वे सर्वगतत्वे च नित्यमेवोपलब्ध्यनुपलब्धी प्रसज्येयातां, तयोरन्यतरनियमोवा उपलब्धिरेव वा नित्यं स्यादनुपलब्धिरेव वेति । अयम्भावः उपलब्धिरनुपलब्धिश्च तावल्लोकसिद्धा तयोरयं सर्वगतो ज्ञानात्मा चेत्कारणं तर्हि सर्वलोकस्य सर्वदा सर्वत्र ते प्राप्नुयाताम् । यद्युपलब्धेरेव हेतुस्तदा सर्वदा सर्वत्र कस्याप्यनुपलब्धिर्न स्यात् । अनुपलब्धेरेव चेद्धेतुस्तर्हि कस्यापि कुत्राप्युपलब्धिर्न स्यादिति । नच करणायत्ता तयोर्व्यवस्था, सर्वात्मनां विभुत्वेन सर्वकरणैः सर्वदा संयोगस्याविशेषादित्यादिपूर्वमेव विस्तृतम् । सिद्धान्ते तु तस्य शरीरान्तरेऽवस्थितत्वात्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्था सिद्ध्यति ॥ ३१ इत्युत्क्रान्त्यधिकरणम् ॥ ६ ॥

---

यदि ज्ञातुरात्मनो गुणस्य ज्ञानस्य नित्यत्वमुररीक्रियते तदा सुषुप्त्यादौ विषयानुभवः स्यात् यतः सुषुप्त्यादौ विषयानुभवो न जायतेऽतो न तत्र ज्ञानस्य सत्त्वं तथात्वे न तस्य स्वरूपानुबन्धिधर्मत्वमित्याशङ्कते । नन्विति । तस्य=ज्ञानस्य । सूत्रार्थं विवृणोति । तुशब्दइति । सुषुप्त्यादौ विद्यमानमेव ज्ञानमनभिव्यक्तदशापन्नं जागरेऽभिव्यक्तं भवति अतस्तस्य यावदात्मवृत्तित्वमित्यर्थः । विद्यमानस्यानभिव्यक्तस्य कदाचिदभिव्यक्तिमात्रेण दृष्टान्तोऽयम् । बाधकतर्कमाह । अन्यथेति । बाल्ये विद्यमानस्यैवपुंस्त्वस्यानङ्गीकार इत्यर्थः । ततः किमित्यत आह । तथात्वे=पुंस्त्वस्यागन्तुकत्वे ॥ ३० ॥

ज्ञानात्मवादे विभुत्वपक्षे दूषणमाह । नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इति । अन्यथेति । सूत्रस्थं व्याख्येयपदम् । अन्यतरनियमइति व्याख्येयपदम् । तस्य व्याख्यानम् । उपलब्धिरेववेति । कथं नित्यानुपलब्धिप्रसङ्ग ? उभयप्रसङ्गो वा ? कथम् । इत्यत्राह । अयम्भावइति । ज्ञानरूपः सर्वगत आत्मेति पक्षे उपलब्ध्यनुपलब्धिप्रतिज्ञानरूपात्मनः कारणत्वं चेत्तदा सर्वत्रोपलब्ध्यनुपलब्धी स्यातामित्याह । तयोरिति । उपलब्ध्यनुपलब्ध्योः, ते उपलब्ध्यनुपलब्धी, उपलब्धेर्हेतुत्वमभिप्रेत्याह । यद्युपलब्धिरेवेति । ज्ञानरूपः सर्वगत आत्मेति पक्षे उपलभ्यानुपलभ्यस्वभावः, उत उपलभ्यैकस्वभावः उतानुपलभ्यैकस्वभावः । आद्ये देहस्यान्तर्बहिः उपलब्ध्यनुपलब्धी स्याताम् । द्वितीये सर्वत्रोपलब्धिः स्यात् । तृतीये । अनुपलब्धिः स्यात् । देहस्यान्तरुपलभ्यस्वभावः । अन्यत्रानुपलभ्यस्वभाव इति व्यवस्थानयुज्यते नह्येकस्य क्वचिद्देशे स्वप्रकारमन्यत्रनेति वक्तुं शक्य इतिभावः । एवं जडत्वपक्षे विभुत्वे दूषणमाह । करणायत्तेति । पूर्वमेवेति । तत्तत्कर्मानुष्ठानहेतुभूतशरीराणां सर्वात्मसाधारणत्वाददृष्टानियम इत्यादिकं द्रष्टव्यम् । नन्विदं दूषणं सिद्धान्तेऽसमान इत्यत आह । सिद्धान्तेत्विति । तस्य=आत्मनः तत्रैव शरीरान्तर एव ॥ ३१ ॥ इत्युत्क्रान्त्यधिकरणम् ।

## कर्त्ता शास्त्रार्थवत्त्वात् ॥ २।३।३२ ॥

आत्मनो ज्ञातृत्ववत्कर्तृत्वमप्यस्ति न वेति संशये, आत्मा कर्त्तैव। कुतः? "यजेत्स्वर्गकामः, मुमुक्षुर्वै शरणं व्रजेत्, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिभोगमोक्षसाधनोपदेशशास्त्रस्यार्थवत्त्वात्। नन्वकर्त्तैवात्मा, तथाह "न जायते म्रियते वे" ति तस्य जन्मादिविकारं प्रतिषिध्य, "हन्ता चेन्मन्यते हतम्, उभौ तौ न विजानीतो नायं हन्ति न हन्यते" हननक्रियाया व्यापाराश्रयत्वं फलाश्रयत्वं वा मन्यमानोऽज्ञ इति कठवल्ल्युक्तेः। "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते। नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति। कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इत्यादिस्मृतिभ्यश्च प्रकृतेरेव कर्तृत्वेन पुरुषस्य भोक्तृत्वमात्रमेव, यथा जपाकुसुमस्थं लौहित्यं स्फटिके भाति तद्वन्मनोवृत्तिकृत्यादिकमात्मन्यध्यस्तं भासते नतु तात्त्विकम्, तथात्वे ह्यात्मनो विकारित्वापत्तेः। सुषुप्तौ मनसोऽभावे कृत्यादीनामदर्शनात्, अकर्त्रात्मबोधकश्रुतिव्याकोपाच्चेति चेन्न। असम्भवादिति ब्रूमः। तथाहि यथा प्रत्येकं स्फटिके जपाकुसुमे च लौहित्यं भेदेन भाति प्रत्यक्षप्रमाणेन, तथात्मनि मनसि च प्रत्येकं कर्तृत्वभावात्। आत्मा कृत्याद्याश्रयत्वेनाध्यस्तत्वात् कर्त्तेति मनः स्वतः कर्त्रिति कदापि साक्षात्काराभावात् दृष्टान्तवैषम्यं, अन्यथा मनः कर्त्रिति आत्माऽकर्तेति कदाचिद्भेदेनापि भानं स्यादित्यर्थः। विकल्पासहत्वाच्च। तथाहि सोपाधिकोऽयमध्यासः निरुपाधिकोवा? नान्त्यः। नेदं रजतमितिवत् सकृदेव नायं कर्तेति अकर्तृत्वयाथात्म्यज्ञानेन तन्निवृत्त्यापत्तेः। कुसुमस्यैवोपाधेः प्रतिबन्धकस्याभावात्। नाप्याद्यः। रक्तं पुष्पमिति प्रमावत् कदाचिन्मनः कर्त्रिति

---

ज्ञातृत्वाद्धि कर्तृत्वमतः कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं कर्तृत्वनिरूपणादिह सङ्गतिर्द्रष्टव्या। विचाराङ्गं संशयं दर्शयति आत्मनइति। प्रतिज्ञावाक्यं दर्शयति। आत्मेति। हेतूत्थापकाकाङ्क्षामाह। कुतइति। अर्थवत्त्वादिति प्रयोजनवत्तयाहेतुत्वमित्यर्थः। भोक्तुरेव कर्तृत्वाच्चेतनस्यैव भोक्तृत्वाच्छास्त्रस्य बोधजननद्वारा प्रवर्त्तकत्वादचेतने बोधजननायोगाच्च चेतनः कर्त्तेत्यर्थः। नात्मनः कर्तृत्वं किन्तु गुणानामेवेत्याशङ्कते। नन्विति। उक्तार्थं कठवल्लीवचसा द्रढयति। तथाहीत्यादिना। तस्य=प्रत्यगात्मनः। जीवस्याकर्तृत्वबोधकं श्रीमुखवाक्यमुदाहरति। प्रकृतेरिति। नास्त्यात्मनः कृत्याश्रयत्वं किन्तु मनोवृत्तिकर्तृत्वमात्मन्यध्यस्यते तदेव कर्तृत्वादिकमात्मनि भासते यथा जपाकुसुमलौहित्यं स्फटिक इत्याह। यथेति। तथात्वे=वास्तविककर्तृत्वे। यद्यात्मनो वास्तविकं कर्तृत्वं स्यात्तदा तस्य विकारित्वं स्यात्तथात्वे निर्विकारित्वप्रतिपादिकानां श्रुतीनां व्याकोपः प्रसज्येत इतिभावः। अन्तःकरणे सति आत्मनः कर्तृत्वमित्यन्वयः स्पष्ट एव। व्यतिरेकञ्चाह। सुषुप्ताविति। यद्यात्मनः कर्तृत्वं स्यात्तदा तस्य सुषुप्तावपि सत्वात्तत्रापि कर्तृत्वापात इत्यर्थः। अकर्तात्मबोधकश्रुतेरिति।"ससमानः सन्नुभौ लोकावनुसञ्चरन्निध्यायतीव लोलायतीवे"ति श्रुतावात्मनः कर्तृत्वमवास्तवं प्रतीयते तस्याः व्याकोपः स्यादित्यर्थः। भ्रमस्थले रक्तः स्फटिक इति प्रतीतिर्भवति कदाचित्कुसुमं रक्तमिति साक्षात्काररूपा प्रमा च भवति यथा वा इद रजतमिति भ्रमो भवति आपणे कदाचिद्रजतप्रमाभवति। एवमिहाप्यन्तःकरणनिष्ठकर्तृत्वस्यात्मन्यध्यासाङ्गीकारे रक्तः स्फटिक इतिवत्कदाचिच्चैतन्यं कर्त्रिति भ्रमः स्यात्। रक्तं कुसुममितिवत् कदाचिन्मनः कर्त्रिति प्रत्यक्षप्रमा स्यात्। नचैवमस्ति। अतो नायं भ्रम इत्याशयेन

प्रभया लोहितः स्फटिकइति भ्रमवच्चैतन्यं कर्त्रिति भ्रमेण चावश्यं भाव्यमानत्वात्। ननु कुसुमस्य स्फटिकात्मनाऽनध्यस्तत्वात् मनसस्तु चिदात्मनाऽध्यस्तत्वादिति वैषम्येन तज्ज्ञाना-ऽभावोऽविरुद्ध इति चेन्न। अधिष्ठानात्मनानध्यस्तं जपाकुसुमादिस्थानीयमुपाधिं विना भीषणत्व-युक्तसर्पस्य रज्ज्वात्मनैव कर्तृत्वादियुक्तमनसश्चिदात्मनाध्यासे रज्जौ भीषणत्वान्तरस्यैवा-त्मनि कर्तृत्वान्तरस्याध्यासस्य सोपाधिकत्वायोगात्। न चात्मनि कर्तृत्वान्तरमेवाध्यस्त-मिति वाच्यम्, अध्यस्यमानधर्माश्रयस्याभेदारोपे औपाधिकत्वासम्भवात्। ननु रज्जुसर्पादाव-ध्यस्यमानभीषणत्वादिविशिष्टसर्पापेक्षयाधिकसत्ताकसर्पान्तरस्य सम्भवेनास्य निरुपाधिकत्वम् अत्र त्वध्यस्यमानान्तःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टेतरस्याधिकसत्ताकस्यात्यन्ताभा-वात्। अन्तःकरणमात्रस्योपाधित्वमिति चेन्न। स्फटिकेऽध्यस्यमानप्रातिभासिकलौहित्यापेक्षया-ऽधिकसत्ताकलौहित्यान्तरस्य सत्त्वेन तस्यापि निरुपाधिकत्वापत्तेः। न च यत्र धर्मी तादात्म्ये-

---

परिहरति। नेति। असम्भवमेव व्युत्पादयति। तथाहीत्यादिना। प्रत्येकं स्फटिके पुष्पे च रक्तत्वबुद्धिर्वाच्यति-बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन यदि भवेत्तर्ह्येवायं भ्रमः स्यान्नचैवमस्तीति भावः। स्यादित्यर्थइति। असम्भवादितिहेतोरर्थः उक्तार्थं दूषयितुं द्वितीयहेतुमुपन्यस्यति। विकल्पासहेति। तदर्थं विवृणोति। तथाहीत्या-दिना। शुक्तिका रजतवदाभासत इति निरुपाधिकाध्यासो नात्ररजतमित्यधिष्ठानसाक्षात्कारानन्तरं यथा निवर्त्तते नत्वेवं रक्तः स्फटिक इति प्रतीतिर्भवति कदाचित् कुसुमं रक्तमिति साक्षात्काररूपा प्रमाच भवति। एवं चैतन्यं कर्त्रिति भ्रमःस्यात् मनः कर्त्रिति प्रत्यक्षप्रमाच स्यात् नचैवमस्ति अतोनायं भ्रम इत्याशयेनाद्यपक्षं दूषयति। नाद्यइति। ननु-रक्तः स्फटिकः, रक्तं कुसुममितिवत् प्रतीतिद्वयापादानमयुक्तं वैषम्यात्। तत्र ह्यध्यस्यमान रक्तत्वातिरिक्त-रक्तत्वाश्रयस्य कुसुमस्य भिन्नस्य सत्वेन धर्म्यैक्यारोपाभावेन धर्ममात्रारोपाद्रक्तद्वयप्रतीतिः। इहतु कर्तृत्वादिविशि-ष्टान्तःकरणस्यैव चिदात्मनाऽध्यासाङ्गीकारेण धर्मविशिष्टधर्म्यारोपस्यैवाङ्गीकारादध्यस्यमानकर्तृत्वातिरिक्तकर्तृत्वा-श्रयस्यान्तःकरणान्तरस्य भावेन न कर्तृद्वयप्रतीतिरिति शङ्कते। नन्विति। सोपाधिके भ्रमे जपाकुसुमरूपोपाधि-र्नस्फटिकात्मनाध्यस्यते किन्तु तद्गतधर्मसदृशधर्मान्तरं निरुपाधिके भ्रमे भीषणत्वादियुक्तं सर्पादिकमेव रज्ज्वात्मना-ऽऽरोप्यते नतु सर्पगतभीषणत्वातिरिक्तभीषणत्वान्तरम्। अत्रतु कर्तृत्वादिमदन्तःकरणमेव चिदात्मतयाऽध्यस्यते नतु तद्गतकर्तृत्वसदृशकर्तृत्वान्तरम्। अतःसर्पाध्याससदृशोऽयं निरुपाधिकएव भ्रमः स्यात् न सोपाधिकः त्वया त्वयं भ्रमः सोपाधिकतयाङ्गीकृत इत्यपसिद्धान्तः स्यादित्याशयेन परिहरति। नेति। अधिष्ठानेति। अयमपि सोपाधिक एव भ्रमः कर्तृत्वादिमदन्तःकरणमेवोपाधिरन्तःकरणगतकर्तृत्वान्तरस्यैवाध्यास इत्याशङ्क्य परि-हरति। नचेति। कर्तृत्वद्वयप्रतीत्यभावोपपत्तये आत्मान्तःकरणयोरैक्याध्यासस्यावश्यकतया न तस्य सोपाधि-कतेत्याशयेनाह। अध्यस्यमानइति। यत्राध्यासस्य समानधर्मविशिष्टधर्म्यपेक्षयाधिकसत्ताकस्य सम्भावना तत्र निरुपाधिकताऽध्यासस्य प्रकृते तथात्वाभावात्सोपाधिकत्वमितिशङ्कते। नन्विति। अध्यस्यमानधर्मापेक्षया अधिक-सत्ताकधर्मकत्वं यत्र तत्र निरुपाधिकाध्यासस्य सत्त्वमिति नियमस्य विद्यमानत्वात् स्फटिके लौहित्याध्यासस्यापि निरुपाधिकत्वं स्यादित्यत उक्तनियम व्युदस्यति। नेति। स्फटिक इति। अध्यस्यमानधर्मिसत्तापेक्षया अधिकसत्ताक-धर्मिसत्वव्यापकं निरुपाधिकाध्यासत्वमित्युक्तस्थले स्फटिके लौहित्यधर्मारोपो न तु धर्मिणस्तथाचोक्तनियमानाक्रान्तत्वा-ल्लोहितः स्फटिकइत्यत्र न निरुपाधिकाध्यासोऽपितु सोपाधिक एवेत्याशङ्क्य परिहरति। नचेति। यत्रधर्मीति। धर्मिणस्तादात्म्येनारोपविरहाल्लोहितः स्फटिक इत्यत्र नाध्यासस्य निरुपाधिकतेत्यर्थः। तादात्म्यारोपविरोधिभेदग्रहस्य प्रतिबन्धकस्य विद्यमानत्वान्न धर्मिणस्तादात्म्यारोपसम्भावना तथाच लौहित्यधर्मस्य स्फटिके बुद्धिवृत्तिकर्तृत्वस्यात्मनि

नारोपितस्ततोऽधिकसत्ताकोऽतिरिक्तश्चास्ति स निरुपाधिकोऽध्यासः रज्जुसर्पादिवत्। लोहितः स्फटिक इत्यत्र तु न धर्मिणस्तादात्म्येनारोप इति सोपाधिकलोहितोपपत्तिरिति वाच्यम्, मम मनो मम बुद्धिर्ममान्तःकरणमिति भेदधिया प्रतिबन्धादभेदारोपासम्भवेन धर्ममात्रस्यैव वक्तव्यतया लौहित्यादेरिव कर्तृत्वादेरुभयत्र प्रतीतेर्दुर्वारत्वात्। सोपाधिकस्थले धर्मारोपेणैवोपपत्त्या धर्म्यारोपस्याप्रामाणिकत्वाच्च। समीपे स्थित उपदधाति स्वीयं धर्ममन्यत्रेत्युपाधिलक्षणत्वात्। अभेदग्रहणदशायामप्ययं भीषणः सर्पो भीषणः अहं गौरः शरीरं गौरमितिवन्मनः कर्तृ चैतन्यं कर्त्रिति प्रतीत्यापत्तेः। अपि चास्मिन्नेवाधिकरणे भवद्भिरपि साङ्ख्यरीत्या बुद्धेः कर्तृत्वे प्राप्ते जीवस्यैवेति सिद्धान्तितत्वेन स्वोक्तविरोधाच्च। बुद्ध्यात्मनोरविवेकनिबन्धनस्य जीवनिष्ठकर्तृत्वस्य साङ्ख्यमतेऽपि सत्त्वेनाविशेषात्। किञ्च बन्धतन्निवृत्त्यौपयिकत्योः स्वध्वंसाभावस्वफलभाक्त्वाभ्यां सामानाधिकरण्यनियमेन बुद्धेः कर्तृत्वायोगात्। कर्तृत्वभोक्तृत्वाद्यनर्थरूपो बन्धो बुद्धिगतश्चेत्ततो मोक्षोऽपि तद्गतः स्यात्। बन्धमोक्षयोः सामानाधिकरण्यनियमात्। अज्ञानमपि दुःखादिभोगद्वारेणैवानर्थइति तत्र सिद्धान्तादित्यर्थः। न च बुद्धिगतं मद्रूपं भोक्तृत्वादिकं तद्धर्मत्वात् नानर्थरूपं, किन्तु तदुपाधिकं मिथ्याभोक्तृत्वादिकमिति वाच्यम्, एतत्कल्पनायाः कर्तृत्वाध्यासिद्ध्यधीनत्वेनान्योन्याश्रयात्। मोक्षस्यापि सत्यस्यैव पुरुषार्थत्वात्। भोक्तृत्वादिबन्धस्यापि सत्यस्यैवानर्थत्वाच्च। तदुक्तं वार्तिके बौद्धं प्रति 'नहि स्वप्न-

---

चारोपो वाच्य इत्याशयेन समादधाति। ममम नोममबुद्धिरिति। ननु रक्तत्ववतः कुसुमस्यधर्मिणः भेदाग्रहदशायां धर्मिणः स्फटिक आरोपो वाच्य इत्यतो हेत्वन्तरमाह। सोपाधिकस्थल इति। स्फटिके रक्तत्वारोपेणैवोपपत्तौ तद्धर्मवतः कुसुमस्य धर्मिण आरोपो नियुक्तिक इत्यर्थः। धर्मारोप एवोपाधिलक्षणं घटते नान्यथेत्याह। समीपेस्थित इति। यदुक्तं चिन्मनसोर्भेदाग्रहान्न कर्तृद्वयप्रतीतिरिति तदयुक्तं भेदग्रहदशायमिकर्तृद्वयाप्रतीतेरिति व्यतिरेकव्यभिचारमुक्त्वा भेदाग्रहदशायामपि प्रतीतिद्वयसद्भावादन्वयव्यभिचारोपीऽत्याह। अभेदग्रहणदशायामिति। इदं सर्पयोः शरीरात्मनोश्चेतिशेषः। अयमितीदंशापेक्षया अङ्गुल्या निर्दिश्यायं भीषण इति वदति सर्पो भीषण इति च वदति इत्यनुभवसिद्धमितिज्ञातव्यम्। प्रतीत्यापत्तेरिति। न तु तद्भवतामिष्टमितिभावः। कर्त्ता शास्त्रार्थवत्वादित्यधिकरणे बुद्धेरेव कर्तृत्वं भोक्तृत्वन्तु चैतन्यस्येति पूर्वपक्षे तयोः सामानाधिकरण्यनियमेन चैतन्यस्य भोक्तृत्ववत्कर्तृत्वमप्यङ्गीकृतं तद्विरुद्ध्येत इत्याह। अपिचेति। बुद्ध्यात्मनोरविवेकनिबन्धनं जीवनिष्ठं कर्तृत्वं तत्र सिद्धान्तितमतो न तद्विरोध इत्यत आह। बुद्ध्यात्मनोरिति। तथाच त्वन्मते तदधिकरणसिद्धान्तानुत्थानप्रसङ्ग इति भावः। यत्र बन्धस्तत्र तन्निवृत्त्यौपयिककृत्या फलेनच भाव्यमिति बुद्धेर्न कर्तृता युक्तेत्याशयेनाह। किञ्चेति। स्वध्वंसाभावइति। स्वं बन्धस्तस्य ध्वंसाभावस्तस्य मोक्षेन सममन्वयः स्वंबन्धनिवृत्त्योपयिकाकृतिस्तस्या फलं मोक्षस्तद्भोक्तृभ्यामित्यर्थः। नियमादिति। तथाच नात्मनो मोक्षः स्यात्। तथाच 'सापात्रं बन्धमोक्षयोरि'ति वचनविरोध इतिभावः। ननुकर्तृत्वादिरूपबन्धस्यात्मगतत्वान्मोक्षसामानाधिकरण्यमस्तीति चेत्तत्राह। अज्ञानमपीति। अज्ञानं न स्वरूपेण बन्धः किन्तु दुःखादिभोक्तृत्वादिरूपानर्थापादकतया, तथाच दुःखादिभोक्तृत्वाद्यनर्थरूपबन्धस्य बुद्धिगतत्वाद्बुद्धेरेव मोक्षापात इतिभावः। बुद्धिगतकर्तृत्वादेर्जीव आरोपितत्वेन मिथ्याभूतभोक्तृत्वरूपानर्थस्य जीवएव सद्भावाद्बन्धमोक्षयोस्सामानाधिकरण्यंयुक्तमित्याशङ्क्य परिहरति नचेति। एतदिति। कल्पितोऽनर्थोऽस्तीति कल्पनाया इत्यर्थः। अन्योन्येति। कर्तृत्वाध्याससिद्धौ मिथ्याभूतकर्तृत्वाद्बन्धत्वसिद्धिः। तत्सिद्धौ च मिथ्याभूतबन्धमोक्षयोर्जीवे सामानाधिकरण्यसम्बन्धेन तद्विरोधाभावाद्बुद्धेरेव सत्यभूतकर्तृत्वाद्युपपत्तेरात्मनि तदध्यास-

सुखाद्यर्थं पुमान्कश्चित्प्रवर्त्तते। यादृच्छिकत्वात् स्वाप्नस्य तूष्णीमास्येत पण्डितैरि'ति। स्थूलोभुञ्जे स्थूलः करोमीत्यादिना देहस्यानर्थान्वयापाताच्च। नापि बुद्ध्युपाधिकं ह्यात्मस्थभोक्तृत्वादिक-मनर्थः नतु देहस्थमिति वाच्यम्। अनर्थाश्रयस्यात्मनोऽनर्थकोटित्वायोगात्। भ्रमसमयेऽहम्भोक्तेति प्रमाकाले बुद्धिर्भोक्त्रीति प्रतीत्यापत्त्या शुद्धात्मनि कदापि तत्प्रतीत्यभावापत्तेश्च। अपि च मनसः श्रवणादिसाधनकर्तृत्वेन तत्फलमोक्षस्यापि तत्रैवापत्तेः शास्त्रफलं प्रयोक्तरीति न्यायात्। यत्र साधनकृतिस्तस्यैव फलभाक्त्वात्। अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गात् बन्धमोक्षयोर्वैयधिक-रण्यापत्तेश्च। नच शुद्धापहितयोः स्वाभाविकभेदाभावेन बन्धमोक्षयोः सामानाधिकरण्यं सूपपन्नमिति वाच्यम्। उपहितगतानर्थस्य शुद्धगतत्ववत्तद्गतदृश्यत्वमिथ्यात्वादीनामपि शुद्धगतत्वापत्तेः नच जातेष्टिपितृश्राद्धादौ व्यभिचार इति वाच्यम्। कृतिफलयोः सामानाधिकरण्योपपादकोद्देश्यता-संबन्धस्य फलाधिकरणे पुत्रपित्रादौ सत्त्वात्। जातेष्टावपि पित्रर्थं पुत्रगतपूतत्वादि तदनुष्ठातुः पितुरेव फलमित्यर्थः। तथैव श्राद्धेऽपि बोध्यम्। आरोपितानारोपितसाधारणकर्तृत्वस्य फलं प्रति प्रयोजकत्वे बुद्धिदेहयोर्मोक्षान्वयापत्तिः। किञ्च "तन्मनोऽकुरुत"इत्यादिश्रुतौ मनसः कृतिकर्मत्वस्य, शृण्वन्तः "श्रोत्रेण विद्वांसोमनसे"ति करणत्वस्य, "मनउत्क्रामन्मी-

---

सिद्धिरित्यन्योन्याश्रयादित्यर्थः। सत्यस्यैवेति। अन्यथा स्वप्नहत्यादेरप्यनर्थस्य बुद्धिनिष्ठत्वेन मोक्षस्यात्मनिष्ठत्वेन बन्धमोक्षयोस्सामानाधिकरण्यायोग एवेति ध्येयम्। ननु कर्तृत्वादिबन्धवन्मोक्षस्तापि कल्पितस्यैव पुरुषार्थत्वादात्म-नि बन्धमोक्षयोः सामानाधिकरण्योपपत्तिरिति शङ्कां भट्टवार्तिकसंमत्या परिहरति। तदुक्तमिति। स्वप्नसुख-स्यापि कल्पितत्वमङ्गीकुर्वाणं बौद्धं प्रत्युच्यते। नहीति। नहि स्वप्नसुखार्थं कश्चिद्यत्नं करोति। यदृच्छया निद्रायां स्वप्नस्य स्वत एव लभ्यमानत्वेन तत्सुखस्यापि तथात्वात्। अतो मौक्षसुखस्यापि कल्पितत्वेन तस्यापि स्वत एव यदृच्छया लभ्यमानत्वात् तत्साधनानुष्ठानं विहाय तूष्णीमासीतेत्यर्थः। मिथ्याभूतभोक्तृत्वकर्तृत्वादेरनर्थस्य जीवे सद्भावमङ्गीकृत्य बन्धमोक्षयोः सामानाधिकरण्याङ्गीकारे स्थूलः करोमीत्यादिप्रतीतेर्देहस्यापि मिथ्याभूतकर्तृ-त्वभोक्तृत्वादिरूपानर्थान्वयप्राप्तौ मोक्षस्यापात इत्याह। स्थूलइति। नतु देहस्थमिति। अनर्थं आत्मनइतिशेषः। तथा तद्गत एव बन्धो मोक्षश्च न देहगत इति भावः। अनर्थकोटित्वेति। बुद्ध्युपाधिकात्मस्थभोक्तृत्वस्यात्मनोऽनर्थत्वेऽऽत्म-नोप्यनर्थकोटिनिवेशापत्तेरात्माश्रयः स्यात् तथाऽनर्थहानेः पुरुषार्थत्वात् आत्मनोऽपि तत्कोटिनिविष्टत्वेन तद्धानिरपि पुरुषार्थः स्यादिति भावः। किञ्च बुद्धिगतभोक्तृत्वादेः शुद्धात्मन्यध्यासाङ्गीकारे आत्मनि भोक्तृत्वादिप्रतीत्या भवितव्यम्। अस्ति चेत् भ्रमकाले प्रमाकाले वा ? भ्रमकाले चेदहं भोक्तेत्यहमर्थनिष्ठत्वेनैव भोक्तृत्वं प्रतीयेत न शुद्धात्मनि। प्रमाकाले चेत् बुद्धिर्भोक्त्रीति प्रतीयेत ततः शुद्धात्मनि तद्भ्रमो न युक्त इत्याह। भ्रमसमय इति। यत्र कृतिस्तत्फलभोक्तृत्वमपि तत्रैव तयोस्सामानाधिकरण्यं यत् प्रागभिहितं तदेव विवृणोति अपिचेति। कुत इत्यत आह। शास्त्रफलमिति पूर्वतन्त्रे तृतीयाध्यायस्थं सूत्रम्। "शास्त्रफलं प्रयोक्तरि तस्मात्स्वयं प्रयोगः स्या-दिति"। अस्यार्थः विधिनिषेधात्मकं फलं स्वर्गनरकादि। प्रयोक्तरि=कर्मप्रयोक्तरि तत्साधनकर्मकृतिमति यजमान एव तस्मात्स्वयमेव यजमानोऽङ्गप्रधानेषु कर्ता स्यादिति। साधनकृतिरिति साधनविषयकप्रयत्नः। अन्यथेति साधनकृतेः फलभाक्त्वेन सामानाधिकरण्याभावमङ्गीकृत्य बुद्धेरेव कर्तृत्वादिकमात्मन एव मोक्ष इत्यङ्गीकारे। बुद्धिकृतश्रव-णादेः हानिः वैयर्थ्यम्। फलाभावात्। श्रवणादिकर्तृत्वाभावेऽपि आत्मनो मोक्षावगम इत्यदृष्टकल्पनास्यादित्यर्थः। ननु शास्त्रफलं प्रयोक्तरीति न नियमः। 'पुत्रे जाते इष्टिं कुर्यादिति पुत्रपूतत्वोद्देशेन जातेष्टिः पितुर्विधीयते तथा पितुः स्वर्गप्राप्त्यर्थं पुत्रं प्रति श्राद्धं विधीयते एवं जातेष्टिकृते पूतत्वरूपफलेन सामानाधिकरण्यं नास्ति पूतत्वरूपफलस्य पुत्र-गतत्वात्तथा स्वर्गरूपफलस्यापि पितृगतस्य पुत्रगतं श्राद्धमिति न सामानाधिकरण्यमिति व्यभिचारमाशङ्क्य परिह-

लित इवाश्नन्निवन्नास्त"इत्यादौ मनउत्क्रमणेऽप्यात्मनः कर्तृत्वस्य, "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन्नममाण"इत्यादौ स्वरूपाविर्भावे परमुक्तावपि कर्तृत्वस्य, "विज्ञानं यज्ञं तनुते विज्ञानात्मा योऽयं वेद जिघ्राणी"ति सश्रात्मा आनन्दभुक् चेतोमुखप्राज्ञ"इत्यादौ श्रुतौ विज्ञानात्मनिष्ठकर्तृत्वस्य श्रवणात्। न चात्र विज्ञानशब्दो बुद्धिपर इति वाच्यम्, 'विज्ञानं ब्रह्म चेद्वेद तस्माच्च न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुत' इति वाक्यशेषात्। किञ्चाहं करोमीत्यादिप्रत्यक्षेण आत्मा मोक्षसाधनकृतिमान् फलान्वयित्वात्सम्मतवत्। अज्ञानं ज्ञानसमानाधिकरणं बन्धरूपत्वात्सम्मतवदित्याद्यनुमानैश्च 'कर्ता विज्ञानात्मा योऽयं वेद जिघ्राणी'त्यादिश्रुतिभिश्च, यद्यात्मा कर्त्ता न स्यात्तर्हि भोगमोक्षसाधनोपदेशोऽपि न स्यादित्यर्थापत्त्या च सिद्धस्यात्मकर्तृत्वस्य बाधकादर्शनात्। नच श्रुतिरनुवादपरा अहमर्थान्यात्मकर्तृत्वस्य "नामरूपे व्याकरोत्स हि सर्वस्य कर्ते"ति श्रुत्युक्तेश्वरकर्तृत्वस्य च प्रत्यक्षेणाप्राप्तत्वात्। नच निर्धर्मकत्वं बाधकं निर्धर्मकत्वरूपधर्मस्य भावाभावाभ्यां व्याघातात्। नापि निष्क्रियत्वं बाधकं क्रियाया धात्वर्थत्वे ह्यात्मन्यप्यस्त्यादिधात्वर्थसत्त्वादेः सत्त्वेन तत्त्वासिद्धत्वात्। परिस्पन्दादिपरत्वे चेष्टापत्तेः। कृतिपरत्वे च

---

रति। नचेति। जातेष्टीति। यः पुत्रस्तद्गतं पूतत्वादिकं न तदनुष्ठातुर्जातेष्ट्यनुष्ठातुः पितुरेव फलं जातेष्टिकर्त्रा पित्रा मम पुत्रस्य पूतत्वार्थमिष्टिं करिष्य इति सङ्कल्पाकारः। तथा च पुत्रपुत्रकत्वं पितुरेव फलं मम पूतपुत्रकत्वार्थमिष्टिं करिष्य इत्यपि सङ्कल्पः कार्यस्तेन च पुत्रेऽपि पूतत्वं सम्पद्यते। एवं स्वर्गकामिपितृकत्वं श्राद्धकर्त्तुरेव फलमिति युक्तं शास्त्रफलं प्रयोक्तरीतिन्यायस्योपपत्तिरित्याशयेनाह। कृतिफलयोरिति। उद्देश्यतासम्बन्ध एव कृतिफलयोः सामानाधिकरण्यापादकस्तथाच पुत्रपुत्रकत्वरूपफलं जातेष्टिकर्तृपितृनिष्ठमेवेति उद्देश्यतासम्बन्धेन कृतिफलयोः सामानाधिकरण्यमितिभावः। न चात्मान्तःकरणार्थः येनात्मगतो मोक्षो मनस उद्देश्यः स्यादिति भावः। आरोपितेति। आरोपितकर्तृत्वस्य फलभाक्त्वान्वये तन्त्रत्वे तस्य स्थूलः करोमीति प्रतीत्या देहादावपि सत्त्वेन फलभाक्त्वान्वय सङ्गः। आत्मारोपितकर्तृत्वस्य फलान्वयतन्त्रत्वे कर्तृत्वाध्यासे सिद्धे आरोपितस्यापि कर्तृत्वस्य फलान्वयप्रयोजकत्वसिद्धिस्तत्सिद्धौ च कृतिफलयोः सामानाधिकरण्याव्यभिचारात्कर्तृत्वाध्याससिद्धिरित्यन्योन्याश्रय इति। न चात्मनि फलान्वये आरोपितकर्तृत्वं तन्त्रं बुद्धौ च फलान्वये सत्यभूतं कर्तृत्वं तथेति वाच्यम्। अननुगमात्। न चान्यतरत्वेन द्वयोरनुगमः कार्यस्तस्य भेदघटितत्वेनातिगुरुत्वात्। श्रूयेते मनसः कृतिकर्मत्वकरणत्वे बुद्ध्यभावदशायामपि कर्तृत्वश्रवणान्न बुद्धेः कर्तृत्वमिति श्रुति-माणमुखेनाह। किञ्चेत्यादिना। बुद्ध्यभावेऽपि संसारदशायां कर्तृत्वश्रुतेरित्यर्थमभिप्रेत्याह। मनः उदक्रामदिति। श्रूयते च प्राणाद्यतिक्रमणेऽपि स्वप्नोत्या सञ्चरणादिकर्तृत्वम् तथाहि "एतं प्राणमयमात्मानं सङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य इमाँल्लोकान्निःकामरूप्यनुसञ्चरन्निति। बुद्ध्यभावेऽपि परममुक्तिदशायां पर्यटनादिकर्तृत्वश्रुतेरित्यभिप्रेत्याह। परंज्योतिरिति। आत्मनः कर्तृत्वप्रतिपादकं श्रुतिवाक्यमुदाहरति। विज्ञानमिति। विज्ञानशब्दस्य बुद्धिपरत्वमाशङ्क्य परिहरति। नचेति। प्रत्यक्षेणानुमानेन श्रुतिन्यायादर्थापत्त्या चात्मनः कर्तृत्व साध्यते। तत्र तावत् प्रत्यक्षमुपन्यस्यति। किञ्चेति। अज्ञानमिति। आत्ममात्राश्रिताज्ञानसामानाधिकरण्यसिद्धावात्मन एव ज्ञातृत्वप्राप्त्या तत्प्रयुक्तं कर्तृत्वमपि तस्यैव सेत्स्यतीति भावः। संमतो=निगडः। अर्थापत्तिमाह। कर्त्तेति। 'कर्त्ता विज्ञानात्मा यो वेदे'ति जीवकर्तृत्वश्रुतेरानन्दभुगित्यादीश्वरकर्तृत्वश्रुतेश्च प्रत्यक्षप्राप्तजीवेश्वरकर्तृत्वानुवादपरत्वान्न स्वार्थे प्रामाण्यमिति बाधकमाशङ्क्य निराकरोति। नचेति। न चेत्यस्यानुवादपरेत्यत्रान्वयः। अहमर्थान्यात्मा जीवः। न हि अहं कर्त्तेति

"रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमि"त्यादिश्रुत्या कर्तृत्वस्य चेतने विहितत्वेनासिद्धेः। नच निष्क्रियत्वश्रुतिविरोधः। तस्या ब्रह्मणि परतन्त्रक्रियायाः प्रत्यगात्मनि स्वतन्त्रकर्तृत्वस्य निषेधकत्वात्। अन्यथा "स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतेः। "नहि द्रष्टुर्द्रष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, नहि श्रोतुः श्रुतेः, नहि मन्तुर्मतेरि" त्यादिश्रुतेश्च बाधस्य तत्रापि साम्यात्। नापि निर्विकारत्वं बाधकम्, आकाशस्य संयोगाद्याश्रयत्वेऽपि निर्विकारित्ववदात्मनोऽज्ञानतद्ध्वंसाश्रयत्वेऽपि निर्विकारित्ववच्च ज्ञानादिगुणाश्रयत्वेऽपि विकारित्वायोगात्। "अविकार्योऽयमुच्यते" इत्यादिशास्त्राच्च। ननु सुषुप्तौ मनसोऽभावे कर्तृत्वादिदर्शनं बाधकमिति चेन्न। तत्रापि श्वासादिकर्तृत्वदर्शनात्। तत्सिद्धेः। 'सुप्तो भूभूरित्यादिश्वसिती'त्यादिश्रुतेः। देहादिवन्मनसोनिमित्तरूपत्वेनापि तदुपपत्तेश्च। "कामः सङ्कल्पः" इत्यादिश्रुतिरपि मनसः करणत्वबोधनविषयकैव "मनसैवाग्रे सङ्कल्पयती"ति श्रुत्यन्तरात्। अत्र स्पष्टं कण्ठरवेण करणपाठदर्शनाच्च। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतेस्तु ह्यात्मनोभोक्तृत्वे देहादिवन्मनसोऽपि सहकारित्वमात्रमित्येतत्परत्वात्। किञ्च "ध्यायतीव लेलायतीवे"ति श्रुताविवशब्दः परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवकर्तृत्वस्येश्वरपारतन्त्र्यप्रदर्शनपरः। नापि "प्रकृतेः क्रियमाणानी"ति स्मृतिर्बाधिका, तस्या अपि स्वतन्त्र-

---

प्रत्यक्षप्रतीतिं विहाय तदन्या मकर्तृत्वं प्रत्यक्षप्राप्तं येन श्रुतेरनुवादकत्वं स्यात्। अहं कर्त्तेति प्रत्यक्षञ्च नात्मकर्तृत्वावगाहि त्वन्मतेऽस्याहमर्थभिन्नत्वादितिभावः। नन्वात्मचेतनस्य निर्धर्मिकत्वान्न तस्य कर्तृत्वमित्याशङ्क्य निराकरोति। नचेति। ब्रह्मणि निर्धर्मकस्वरूपधर्मसद्भावे निर्धर्मकत्वोक्तिव्याघातः। तदभावे सधर्मकत्वस्यैव प्राप्त्या निर्धर्मकत्वोक्तेर्व्याघात इत्याह। निष्क्रियत्वमिति। कर्तृत्वाङ्गीकारे क्रियावेशप्राप्तेरितिभावः। निष्क्रियत्वं बाधकमित्यत्रात्मनो धात्वर्थक्रियाशून्यत्वमभिमतं परिस्पन्दशून्यत्वं वा नाद्य इत्याह। क्रियाया इति। अस्त्यादिति। 'अस्ति ब्रह्मेति चेद्वेदे'त्यादिवाक्यादिति भावः। द्वितीयपक्षमिष्टापत्त्या परिहरति। परिस्पन्देति। निष्क्रियत्वस्य कृतिशून्यपरत्वमाश्रित्याह। कृतिपरत्वइति। 'निष्क्रियं निरवद्यं निरञ्जनमि'तिश्रुतिविरोधमाशङ्क्य परिहरति। नचेति। तस्याः=श्रुतेः। विपक्षे बाधकतर्कमाह। अन्यथेति। उक्तार्थानङ्गीकारे विविकारित्वमिति। कर्तृत्वाङ्गीकारे विकारप्राप्तेरितिभावः। आत्मनो ज्ञानरूपगुणाश्रयत्वेन ज्ञातृत्वाङ्गीकारे द्रव्यान्तरत्वापत्तिरूपोविकाराप्राप्तेः। यथा ह्याकाशस्य संयोगाश्रयत्वेऽपि न द्रव्यान्तरत्वापत्तिरूपो विकारः यथा वा त्वन्मतेऽज्ञानरूपबन्धतद्ध्वंसरूपमुक्त्याश्रयत्वेऽपि न द्रव्यान्तरत्वापत्तिरूपं विकारित्वंतद्वदित्याह। आकाशस्येति। सुषुप्ताविति। मनसोऽभावे मनसोऽभावदशायां सुषुप्तावित्यन्वयः। तथा चात्मनः कर्तृत्वाङ्गीकारे तस्य सुषुप्तावपि सत्वेन तत्रापि कर्तृत्वापात इत्याशङ्कते। नन्विति। परिहरति। नेति। तत्सिद्धेः=कर्तृत्वसिद्धेः। मनसोऽभावे कर्तृत्वाद्यदर्शनं न मनसः कर्तृत्वं गमयति किन्तु निमित्तत्वमेव निमित्तकारणव्यतिरेकेणापि कार्यदर्शनसम्भवात्। नहि दण्डाभावे घटाद्यदर्शनं दण्डस्य कर्तृत्वं गमयतीत्याशयेनाह। देहादिवदिति। देहाभावे कर्तृत्वादर्शनाद्देहस्यापि कर्तृत्वापात इति भावः। ननु "कामः सङ्कल्प" इत्यादिश्रुतौ कामादीनां मनआद्यात्मकत्वं कथ्यते मनआद्यात्मकत्वञ्च तत्कर्तृत्वमेवेति। मनसः कर्तृत्वसिद्धिरिति चेत् आह। कामइति। श्रुत्यन्तरादिति। श्रुत्यन्तरसम्वादात्। कामादीनां मनआद्यभेदोक्तिः श्रुत्यन्तरानुसारेण मनसः करणत्वपरैव न कर्तृत्वपरेत्यर्थः। सहकारितेति। आत्मशब्दोदितदेहादिसाधारणमनस्सहकारेणात्मनो भोक्तृत्वमुच्यत एव न तु मनसो भोक्तृत्वं तथात्वे देहेन्द्रिययोरपि भोक्तृत्वापत्तेरितिभावः। 'ध्यायतीवे'तिश्रुतौ इवशब्दश्रवणात् अहङ्कारविमूढः सन् स्वातन्त्र्येणाहं कर्त्तेति मन्यत इत्येवं जीवे स्वातन्त्र्येण कर्तृत्व-

कर्त्तृत्वनिषेधपरत्वाविशेषात्। सांसारिकप्रवृत्तावस्य कर्तृत्वं प्राकृतगुणप्रयुक्तं न स्वरूपप्रयुक्तमिति विवेचनाय गुणेषु कर्त्तृत्वं; तथा च 'कारणं गुणसङ्गो ऽस्य सदसद्योनिजन्मसु' इति। "तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिरि"ति ? केवलशब्दः स्वातन्त्र्यपरः। उक्तार्थे मानं सांसारिकप्रवृत्तावधिष्ठानादिपञ्चकस्य हेतुत्वात् केवलं स्वातन्त्र्येण स्वात्मानं कर्तारं मन्यमानो दुर्मतिरित्यर्थः। अन्यथा गुणानां कर्त्तृत्वे तेषामेव भोक्तृत्वापत्तिः, तयोः सामानाधिकरण्यनियमात्। नह्यन्यकर्त्तृककर्मणामन्येषां भोक्तृत्वं लोकवेदयोः प्रसिद्धम्। किञ्च गुणकर्त्तृकप्रवाहस्य नित्यत्वेनानिर्मोक्षप्रसङ्गोमुक्तानामपि पुनर्भोक्तृत्वप्रसङ्गश्च दुर्वारः, इतरकर्तृकत्वप्रसङ्गात्। किञ्च भोक्तृत्वमात्रस्वीकारे भुजिक्रियाया व्यापाराश्रयत्वेनावश्यम्भावात् कथमकर्तृत्वमात्मन इति पण्डितंमन्यैर्विचारणीयम्। "दैवं चैवात्र पञ्चमम्' इत्यत्र दैवशब्दः परमात्मपरः। तथा च परमात्माधीनमेव प्रत्यगात्मनः कर्त्तृत्वमिति वक्ष्यते सूत्रकारः। 'स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापी' त्यादिश्रुतेः। 'केनापि देवेन हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि' इत्यादिस्मृतेश्च बद्धावस्थायामनादिप्रकृतिसम्बन्धरूपया कर्मरूपया वाऽविद्यया संकुचितज्ञानक्रियाशक्तिकानां ज्ञानक्रियादौ मनआदिपारतन्त्र्यात् तत्सहायापेक्षा। मुक्तावस्थायां तु स्वपरस्वरूपयोराविर्भावेन बुद्धीन्द्रियादिनिरपेक्षत्वमिति विवेकः। "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति श्रुतेः 'यः सर्वज्ञः सहि सर्वस्य कर्त्ता, तदैक्षत बहु स्यां प्रजायेयेत्यादिश्रुतिरस्य ईश्वरस्य तावन्नित्यक्रियाश्रयत्वं निर्विवादमेव, तथैव मुक्तानामपि ज्ञानक्रियादियोगोऽविरुद्धः। 'स तत्र पर्येति जक्षत् क्रीडन्रममाणः सङ्कल्पादेवास्य पितरः' इत्यादिश्रुतेः। "विहारोपदेशात् सङ्कल्पादेव तु तच्छ्रुतेरि"ति वक्ष्यमाणसूत्राच्च। ननु ज्ञानेच्छाकृत्यादीनां नित्यत्वे सदा सृष्ट्याद्यापत्तिः। नच कालस्य तत्र निमित्तत्वात्तद्भावाभावयोस्तत्र नियामकत्वेन नोक्तदोषावकाश-

---

निवारकत्वादित्याह। किञ्चेति। ननु वस्तुतः कर्ता जीव आत्मानं कर्त्तारं विमूढः सन्मन्यत इति कर्तृत्वमात्रनिवारकत्वं किं न स्यादित्यत आह। तत्रैवंसतीति। आत्मान केवलमीश्वरानियतं कर्त्तारं यः पश्यतीति ईश्वरानियतकर्तृत्वं मन्यमानस्यैव निन्दनात्सर्वथा कर्तृत्वनिषेधे तु केवलंपदवैयर्थ्यं प्रसज्जेतेति भावः। उक्तार्थं श्रुतिस्मृतिप्रमाणमुखेन दर्शयति। कारयेदिति। बद्धावस्थायां प्रत्यगात्मनां सङ्कुचितज्ञानक्रियाशक्तिकतया ज्ञानेच्छाक्रियादिजनने मनआदीनां सहकारित्वं मुक्तावस्थायान्तु बुद्धीन्द्रियादीनां न तथात्वमित्याह। बद्धावस्थायामिति। प्रत्यगात्मनो मुक्तावस्थायां सार्वज्ञ्ययोगे बुद्धीन्द्रियादिनिरपेक्षत्वमिति श्रुतिमुखेन दर्शयति। सर्वं हि पश्य इति। पश्यः ब्रह्मदर्शी। सर्वदेशकालावस्थं वस्तु पश्यति आत्मकामो भवति स स्वराड् भवति स्वेनैव भगवता विश्वान्तरात्मना राजते दीप्यते नेन्द्रियादिभिः सूर्यादिभिर्वा। विहारोपदेशात्। 'स ईयतेऽमृतो स्वे शरीरे यथाकामं परिवर्त्तते' इति। जीवकर्तृकविहारस्य सञ्चरणोपदेशाज्जीवः कर्त्तेत्यर्थः। सङ्कल्पादेव तच्छ्रुतेः। मुक्तस्य सत्यसङ्कल्पादेव पित्रादिप्राप्तिः कुतः? स यदि पितृलोककामो भवति। सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीति तदभिधानश्रुतेरित्यर्थः। कस्मात्सदा सर्गो न भवति ज्ञानेच्छाकृत्यादीनां सदातनत्वादिति शङ्कते। नन्विति। सर्गोत्पत्तौ कालस्यापि सहकारिकारणत्वात्तदभावादेव न सर्गाद्युत्पत्तिरित्याशङ्क्य परिहरति। न चेति। तत्र=सृष्ट्यादौ। तदभावयो-

इति वाच्यं प्रधानादाविच्छादिसम्बन्धापादककालादेरपि सदा सत्त्वादिति चेन्न, सृष्टिप्रलयकालाश्रयां सम्बद्धायामीश्वरेच्छायामेव सिसृक्षात्वजिहीर्षात्वसम्भवात्। यथा परेषां वृत्तिश्चेदुपरागार्थेति मते व्यापकस्यापि चैतन्यस्य वृत्तिद्वारकएव घटादिसम्बन्धः। यथा च तार्किकमते सर्वगतस्यापि गोत्वादेः सास्नादिमत्येव सम्बन्धोनान्यत्र, यथा चास्मत्पक्षे विश्वात्मनः श्रीपुरुषोत्तमस्य परब्रह्मणः सर्वदेशकालवस्तुपरिच्छिन्नपदार्थेतरतया व्यापकत्वेन सर्वत्र सत्त्वेऽपि कस्मिंश्चिच्चरमजन्मन्येवाधिकारिविशेषे साक्षात्कारोनान्यत्र, तद्वत्पारमेश्वरीयेच्छादेरपि सृष्टिकालादिविशेषावच्छिन्नप्रधानादिसम्बन्धोनान्यदेति नोक्तदोषसम्बन्धावकाशइत्यनवद्यम्। नच कर्त्तृत्वस्य क्लेशावहत्वान्न तत्र श्रौतं तात्पर्यमिति वाच्यम्। दर्शपौर्णमासादावपि श्रवणमननादावपि चातात्पर्यप्रसङ्गात्, श्वासादेरकरण एव क्लेशदर्शनाच्च। 'यदा करोत्यथ निस्तिष्ठती'ति श्रुत्यैव कर्त्तृत्वस्य फलसम्बन्धविधानाच्च। एतदुक्तं भवति। कर्त्तृत्वं बुद्धिगतं वा? शुद्धगतं वा? अहमर्थगतं वा? नाद्यः, तस्या जडत्वेन तत्र कर्त्तृत्वाङ्गीकारे घटादावतिव्याप्तेः। नापि द्वितीयः। अहमर्थभिन्नात्मासिद्धेः पूर्वमेव विस्तृतत्वात्। परिशेषादहमर्थाभिन्नात्मनिष्ठमेव सिद्धम्। ननु माऽभूत्केवलयोर्बुद्ध्यात्मनोरेकतरस्य कर्त्तृत्वमुक्तदोषात् तथाप्युपाधिसम्पर्कादकर्तुरप्यात्मन एव कर्तृत्वमिति चेन्न। तथात्वे षण्डस्यापि स्त्रीसम्बन्धमात्रेण प्रजोत्पादकत्वप्रसङ्गात्। तस्मात्स्वाभाविककर्त्तृत्वाद्याश्रयस्यैवाहमर्थाभिन्नज्ञातुरात्मनो बद्धावस्थायां करणविषयसम्बन्धनिमित्तकमेव कर्त्तृत्वं स्वाभाविकदाहकत्वाश्रयाग्नेः

---

रिति। कालसत्त्वे सृष्टिसत्त्वं कालाभावे सृष्ट्यभाव इत्यर्थः। उक्तार्थं परकीयमतसिद्धपदार्थप्रदर्शनेन परबुद्ध्यारूढं करोति। यथा परेषामिति। दार्ष्टान्ते योजयति यथा चास्मत्पक्ष इति। दर्शेति। दर्शपौर्णमासाभ्यामिति श्रुतेरपि स्वार्थतात्पर्यं न स्यात्तत्रापि यागादिकरणे बह्वायासेन क्लेशसद्भावादित्यर्थः। किञ्च न कर्तृत्वं क्लेशव्याप्तं किन्तु लीलाया अकरणे श्वासादेश्चाकरण एव क्लेशदर्शनात्। कर्तृत्वाभाव एव क्लेशव्याप्त इत्याह। श्वासादेरिति। किञ्च कर्तृत्वस्य न क्लेशेन सम्बन्धः प्रत्युत फलसम्बन्ध एव श्रूयतेऽतः श्रुतेः स्वार्थे तात्पर्यमवश्यमङ्गीकार्यमिति। उक्तश्रुत्यादिबलादात्मन एव कर्तृत्वसिद्धिर्नान्यस्येति भावेनाह। यदेति फलेति। स्वस्थतयाऽवस्थानरूपेणेत्यर्थः। त्रिधा विकल्पयति। कर्तृत्वमिति। आद्यपक्षं परिहरति। नाद्य इति। तस्याः=बुद्धेः। तत्र=बुद्धौ। घटादाविति। घटस्यापि जडत्वाविशेषात्कर्तृत्वं स्यादित्यर्थः। द्वितीयपक्षं निरस्यति। नापीति। उपाधिसंसर्गेणात्मन एव कर्तृत्वमिति शङ्कते। नन्विति। उक्तदोषात्=जडत्वादिदोषात्। तथात्वेति उपाधिसम्पर्कात्कर्तृत्वे। उपसहरति। तस्मादिति। इन्द्रियद्वारकमेव कर्तृत्वं बद्धदशायां प्रत्यगात्मन इत्यर्थः। वन्हेर्दाहकत्वं स्वाभाविकं तथापि काष्ठादिसंसर्गमन्तरा न तस्य दाहकत्वं तद्वत् प्रत्यगात्मनः स्वाभाविककर्तृत्वेऽपि बद्धदशायां करणविषयाधीनमेव तदित्यर्थः। उक्तश्रुत्येति। सुप्तो भूर्भूरित्येव प्रश्वसतीत्यादिश्रुत्या। तत्रापि=सुषुप्तावपि यद्यात्मनः कर्तृत्वं स्वाभाविकं तदा कदापि तदुपरतिर्न स्यादित्याशङ्कते। नन्विति। क्रियाकर्मादिसत्त्वे कर्तृत्वसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकमाश्रित्योक्तशङ्कां निरस्यति। कर्मक्रियाभावस्येति। तदुपरमे=कर्तृत्वोपरमे। प्रत्यगात्मनां कर्तृत्वं सर्वान्तरात्मश्रीपुरुषोत्तमाधीनं तत्तत्कर्म सापेक्षञ्चेति समाधानान्तरमाह। किञ्चेति। तत्प्रेरणसङ्कल्पसत्त्वे प्रत्यगात्मनां कर्तृत्वभानं श्रीपुरुषोत्तमसङ्कल्पाभावे कर्तृत्वोपरतिरित्याह। तत्प्रेरणेति=ईश्वरप्रेरण इत्यर्थः। तथात्वे=नियामकत्वे। तत्प्रयोजकसत्त्वे=कर्तृत्वप्रयोजकसत्त्वे। तद्भानम्=कर्तृत्वभानम्। वैषम्येति। वैषम्यं

काष्ठादिसम्बन्धनिमित्तकदाहकर्तृत्ववत्सूपपन्नं, सुषुप्तिमूर्च्छादौ करणविषयादेरभावेन विशेषकर्तृत्वाभानस्यापि सूपपन्नत्वात्सामान्यश्वासादिकर्तृत्वस्योक्तश्रुत्या तत्रापि सत्त्वाच्च सर्वावस्थानुगतत्वमपि पूर्वोक्तरीत्या सूपपन्नतरम्। ननु तर्हि कर्तृत्वपक्षे जाग्रदवस्थायां कदापि तदुपरमो न स्यात्करणकलापस्य तदा सत्त्वादिति चेन्न। कर्मक्रियाभावस्य तदुपरमे प्रयोजकत्वात्। किञ्च सर्वस्यापि सचेतनस्य कर्मकर्त्रादिकलापस्य सर्वान्तरात्मश्रीपुरुषोत्तमपरतन्त्रत्वात् तन्नियन्तृत्वस्य च बद्धजीवानाद्यदृष्टफलभोगानुरूपदेशकालसापेक्षत्वेन तत्प्रेरणसङ्कल्पस्य भावाभावौ तद्धानोपरत्योर्नियामकौ भवतः, तथात्वे च तत्प्रयोजकसत्त्वे तद्धानं, तदभावे चोपरतिरित्यर्थः। बद्धजीवेत्याद्युक्त्या ब्रह्मणि वैषम्यादिशङ्कापि दूरतो निरस्ता, तस्य स्वस्वादृष्टवृत्तितया तत्प्रयोजके ब्रह्मणि तदस्पर्शात्। 'बुद्धिर्ज्ञानमसम्मोहः' इत्यादिश्लोकद्वयेन श्रीमुखगानात्। 'फलमत उपपत्तेरि'ति वक्ष्यमाणन्यायाच्च। न चैवं शास्त्राचार्योपदेशस्य निर्विषयत्वेन वैयर्थ्यापत्तिरिति वाच्यम्। उपदेशस्य श्रीहरिप्रयोजकताज्ञानप्राक्कालीनप्रवृत्तिविधायकत्वेन नैराकाङ्क्ष्यादिति भावः। एवं भोक्तृत्वादयोऽप्यूहनयाः। तथाहि सुषुप्त्यादौ 'सुखमहमस्वाप्समि'ति 'योऽहं जागर्मि स एवाहं सुखं सुप्तः' इति स्मरणप्रत्यभिज्ञानप्रमाणसिद्धम्। मोक्षे च "जक्षत् क्रीडन्नि'ति श्रुतिप्रमाणसिद्धं भोक्तृत्वमिति सङ्क्षेपः॥ ३२॥

---

नाम देवमनुष्यादीनामुत्तममध्यमादिरूपविषमसृष्टिकर्तृत्वम्। आदिना नैर्घृण्यपरिग्रहः। तत्त्वञ्च दुर्विषयदुःखगर्भजगन्निर्मातृत्वेन निर्दयालुत्वम्। तत्र हेतुमाह तस्येति। वैषम्यस्येत्यर्थः। तदस्पर्शात् = वैषम्यास्पर्शात्। उक्तार्थं स्मृतिप्रमाणेन द्रढयति। बुद्धिरिति। "बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवो भावो भयञ्चाभयमेव च॥ अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥" अ० १०। ४। ५। बुद्धिः सारासारविवेचनरूपान्तःकरणावस्था। ज्ञानम्—आत्मानात्मपदार्थावबोधनम्। असम्मोहः—बोद्धव्यवस्तुविषयकभ्रमनिरासेन तत्स्वरूपावधारणम्। क्षमा—चित्तविकारहेतौ सत्यप्यविकृतचित्तता। एवमन्येऽप्यन्यत्र दर्शितदिशावसेयाः। फलमत इत्यस्यार्थोऽग्रे व्यक्तिर्भविष्यति। यदि जीवस्य कर्तृत्वं परायत्तत्वं तदा शास्त्राचार्योपदेशस्यानर्थक्यमित्याशङ्क्य परिहरति। नचेति। जीवस्य कर्तृत्वमीश्वरायत्तमिति ज्ञानाभाववन्तं पुरुषं प्रति शास्त्रस्य प्रवर्त्तकत्वं बोधजननद्वारेणेत्याह उपदेशस्येति सुषुप्त्यादौ सुखादिभोक्तृत्वे मोक्षे च भगवत्स्वरूपगुणादिविषयकानुभवानन्दभोक्तृत्वे च जक्षन् क्रीडन्नित्यादि श्रुतेश्च मानत्वात्। कर्तृत्वभोक्तृत्वयोरैक्याधिकरणनियम इत्याह। तथाहीत्यादिना "स एवा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुनः आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति।" अस्यार्थः। आत्मनि ब्रह्मण्येव रतिर्यस्य नाहंममास्पदयोः शब्दादिपञ्चेन्द्रियविषयेषु वस्त्रालङ्कारादिषु चेति। तथैव आत्मना विष्णुना क्रीडा यस्य न लौकिकैः क्रीडोपकरणैः तएवात्मा भगवानेव मिथुनं यस्य न भार्यादि ततश्चात्मना तेनैवानन्दो यस्य "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति वाक्यात्। न बाह्यविषयैस्तत्साधनैर्नेति तथा जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चिदिति वाक्यान्तरात् स उक्तलक्षणः पुमान् स्वराड् भवति स्वेनैव भगवता विश्वान्तरात्मना राजते दीप्यते नेन्द्रियादिभिः सूर्य्यादिभिर्वा प्रकाशकरणैरिति॥ ३२॥

## विहारोपदेशात् ॥२।३।३३॥

इतश्चाप्यस्य कर्तृत्वम् विहारः सञ्चरणम् 'स ईयतेऽमृतो यत्र काममि'ति 'स्वे शरीरे यथाकामं परिवर्तते' इति च विहारमुपदिशति श्रुतिः ॥ ३३ ॥

## उपादानात् । २ । ३ । ३४ ॥

इतश्चास्य कर्तृत्वम् "स यथा महाराजः" इति प्रकृत्य "एवमेवैष एतान्प्राणान्गृहीत्वे" ति "तदेषां प्राणानां विज्ञानेन विज्ञानमादाये" ति चोपादानं सङ्कीर्त्यते । प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्यादिना विज्ञानं ग्राहकसामर्थ्यमादायेत्यर्थः ॥ ३४ ॥

इतश्चाप्यस्य कर्तृत्वमित्याह—

## व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्ययः । २ । ३ । ३५ ॥

यतोऽस्य लौकिकवैदिकक्रियासु "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे" ति श्रुत्या कर्तृत्वं व्यपदिश्यते । विज्ञानशब्देन जीवस्य न व्यपदेशः, अपि तु बुद्धेरिति चेत्तर्हि निर्देशविपर्ययः स्यात् । बुद्धेः करणत्वेन विज्ञानेनेति करणविभक्त्या निर्देशः स्यात् ॥ ३५ ॥

ननु जीवस्य कर्तृत्वे सदा स्वात्मनो हितमेव कुर्यान्न त्वहितमित्यत्राह—

## उपलब्धिवदनियमः । २ । ३ । ३६ ॥

तस्य परतन्त्रत्वाद्यथेष्टानिष्टयोरुपलब्धिस्तथा क्रियायामनियमः ॥ ३६ ॥

## शक्तिविपर्ययात् ॥२। ३ । ३७ ॥

यदि विज्ञानशब्दो बुद्धिपरः स्यात्तर्हि बुद्धेः करणशक्तिर्हीयेत, कर्तृत्वादिशक्तिश्च स्यादितश्चापि जीवस्य कर्तृत्वम् ॥ ३७ ॥

---

प्रत्यगात्मनां कर्तृत्वं हेत्वन्तरेण समर्थयति इतश्चेति ॥ ३३ ॥

स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्तेत एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते । स्वप्नविषया श्रुतिः प्राणान् गृहीत्वा जागरितस्थानेभ्य उपसंहृत्य स्वे शरीरे यथेष्टं सञ्चरतीत्यर्थः । शरीरे यथेष्टसञ्चारे शरीरप्रेरणमपि सिद्धमिति भावः ॥ ३४ ॥

स्पष्टम् ॥ ३५ ॥ ३६ । ३७ । ३८ । ३९ ॥

इतश्च प्रत्यगात्मनः कर्तृत्वमित्याह—

**समाध्यभावाच्च ॥ २ । ३ । ३८ ॥**

जीवस्य कर्तृत्वाभावे मोक्षसाधनभूतसमाध्यभावश्च स्यात्, बुद्ध्यादेरन्योऽस्मीति समाधौ बुद्धेः कर्तृत्वायोगात् ॥ ३८ ॥

**यथा तक्षोभयथा ॥ २ । ३ । ३९ ॥**

आत्मनः कर्तृत्वे हि स्वस्य भोगवाञ्छायां करोति तदभावे न करोतीत्युभयथापि व्यवस्था सिध्यति । बुद्धेः कर्तृत्वे तस्या इच्छाया अभावाद्व्यवस्था न सिध्येत् । यथा तक्षा स्वकार्ये इच्छया व्यवस्थितः ॥ ३९ ॥ इति कर्त्रधिकरणम् ।

अथ परायत्ताधिकरणम्

**परात्तु तच्छ्रुतेः ॥ २ । ३ । ४० ॥**

तत्पुनर्जीवस्य कर्तृत्वं किं स्वायत्तं परमात्मायत्तं वा ? इति विषये स्वायत्तमेवेति विधिनिषेधशास्त्रस्य सार्थक्यात् । यः स्वातन्त्र्येण प्रवृत्तिनिवृत्तिशक्तः स एव विधिनिषेध-विषयोनिग्रहानुग्रहास्पदं च भवतीति प्राप्ते ब्रूमः । परादिति । तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः । जीवस्य कर्तृत्वं परमेश्वराधीनमेव । कुतः ? तच्छ्रुतेः । कर्तृत्वादेरीश्वराधीनत्वश्रुतेः । "एष-ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमेभ्यो-लोकेभ्योऽधोनिनीषते, अन्तःप्रविष्टः शास्ता जनानां य आत्मानमन्तरो यमयती"त्यादिश्रुतेः। पूर्वमेव विस्तृतमेतत् ॥ ४० ॥

नन्वीश्वरस्य कारयितृत्वे धर्ममेव कारयेन्नाधर्ममन्यथा केनचित्पुरुषेण धर्मं, केन चिदधर्मं कारयतो वैषम्यादिप्रसक्तिरित्यतआह—

तुरुक्तशङ्कानिरासार्थः । जीवेन कृतो यो धर्माधर्मलक्षणः प्रयत्नस्तमपेक्ष्यैवान्यस्मि-न्नपि जन्मनि परमेश्वरो धर्मादिकं कारयति, तदपेक्ष्य सुखादिफलं च ददातीति । कुत एव-

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धवैयर्थ्यादिभ्यः ॥ १।३।४१ ॥**

---

अथ परायत्ताधिकरणम्

विधिनिषेधशास्त्रान्तर्यामिशास्त्राभ्यां संशयो जायते किं जीवस्य कर्तृत्वं स्वाधीनं पराधीनं वेत्याह । तत्पुनरिति । कर्तृत्वे चिन्तिते तद्विशेषश्चिन्त्यत इति सङ्गतिः तत्पुनरित्यनेन सूचिता । स्वायत्तमेव जीवस्य कर्तृत्वम् । अन्यथा विधिनिषेधशास्त्रयोरत्यन्तवैयर्थ्यं स्यात् इति पूर्वपक्षमाह । स्वायत्तमेवेति । विधिनिषेधशा-स्त्रयोः सार्थक्यं समर्थयति । यः स्वातन्त्र्येणेति । अनूद्य सिद्धान्तयति । एवं प्राप्त इति । सूत्रार्थं विवृणोति तु शब्द इति ॥ ४० ॥

चोद्यान्तरमनुवदति नन्विति । सूत्राक्षराणि व्याकरोति । तु शब्द इति । पूर्वपूर्वप्राणिकर्मापेक्षया जीवान् धर्माधर्मयोः प्रवर्तयन् न द्वेषपक्षपाताभ्यां विषमः नापि निर्घृणः परमेश्वर इत्यर्थः । ईश्वरस्य कर्म-

मिति चेदत आह । विहितेति । ईश्वरस्य कर्मसापेक्षत्वे हि "ज्योतिष्टोमेन स्वर्गकामो यजेत ब्राह्मणो न हन्तव्यः" इत्याद्योर्विहितप्रतिषिद्धयोरवैयर्थ्यं भवति । अन्यथा तच्छास्त्रमनर्थकमेव स्यात् । धर्मकृतो दुःखमधर्मकृतश्च सुखं सम्पादयेदित्यादिदोष आदिशब्दार्थः ॥ ४१ ॥ इति-परायत्ताधिकरणम् ।

## अथ अंशाधिकरणम्

### अंशोनानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । २ । ३ । ४२ ॥

जीवस्य कर्तृत्वमीश्वराधीनमिति निरूपितमिदानीं "तस्य 'अंशो ह्येष परस्ये"ति श्रुत्या ब्रह्मांशत्वाभिधानात् "निष्कलं निष्क्रियमि" ति श्रुत्या च ब्रह्मणो निरवयवत्वाभिधानादित्युभयश्रुतिविरोधसन्देहे तदविरोधप्रकारोऽत्र मीमांस्यते । तथाच किमत्यन्तभिन्नांशोऽयं, किंस्वित्सदुपाध्यवच्छिन्नो ब्रह्मप्रदेशः ? ब्रह्मैवाऽविद्यया कल्पितांश इति वा ? उत शक्तिमतः शक्तिरिव स्वाभाविकभिन्नाभिन्नः ? इति संशये किन्तावत्प्राप्तम् ? स्वामिभृत्यपुत्रभ्रातृसखिवदत्यन्तभिन्नएवांशोऽयमिति । कुतः ? नानाव्यपदेशात् "द्वा सुपर्णा सयुजा सखाया-

---

सापेक्षत्वे मानं पृच्छति कुत एवमिति । ईश्वरस्य कर्मसापेक्षत्वे विहितस्य निषिद्धस्य चावैयर्थ्यम् । नैरपेक्ष्ये तयोरानर्थक्यं स्यादित्याह । ईश्वरस्येति । बाधकतर्कमाह । अन्यथेति । कर्मनैरपेक्ष्य इत्यर्थः । तच्छास्त्रम् = विधिनिषेधप्रतिपादकशास्त्रमित्यर्थः । आदिशब्दं विवृणोति धर्मकृत इति ॥ ४१ ॥ इति परायत्ताधिकरणम् ॥

अथ अंशाधिकरणम्

अवान्तरसङ्गतिमाह जीवस्येति । तस्य = जीवस्य इत्यर्थः । श्रुतिमुदाहरति अंश इति । अग्नेः सांशत्वेऽपि निष्कलस्येश्वरस्य कथं सांशत्वमित्याह । निष्कलमिति । कः संशयहेतुरित्यत्राह उभयश्रुतिविरोध इति तदविरोधप्रकार इति श्रुतिद्वयाविरोधप्रकार इत्यर्थः । संशयबीजं प्रदर्श्य विचाराङ्गं संशयं दर्शयति । तथा चेत्यादिना । अत्यन्तभेदवादाभिप्रायेण पूर्वपक्षं संगृह्णाति । किन्तावदिति । जीवेश्वरयोः प्रवर्त्यप्रवर्त्तकभावे राजभृत्ययोरिवात्यन्तभिन्न एवांश इत्यर्थः । हेतूत्थापकाकाङ्क्षां दर्शयति कुतइति । भेदप्रतिपादकवचनान्युदाहरति द्वासुपर्णा इति । राजभृत्ययोरिवात्यन्तभेदः प्रत्यगात्मपरमात्मनोस्तर्हि अभेदश्रुतीनां का गतिरित्यत आह । अभेदश्रुतयइति । अत्यन्तभेदवादिनमभेदवादी दूषयति नैतद्युक्तमिति न ह्यभेदश्रुतीनामौपचारिकत्वं कल्पयितुं शक्यते तासामपि प्राबल्यादित्याह । अभेदश्रुतीनामिति । उपाध्यवच्छिन्नो जीवोंऽशशब्दार्थ इत्याह । अथेति । अंशशब्दस्य तादृगर्थत्वे मानं पृच्छति कथमिति । आगममुदाहरति यथाग्नेरिति । उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति यथा चाकाशेति । स चेति अंश इत्यर्थः । सूत्रस्य भागमवतारयितुमाह तत्सम्मूर्च्छित इति । स एव = अभेद एव । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । एतमेव विदित्वा मुनिर्भवति य आत्मनि तिष्ठन्नात्मनमान्तरोयमयति इति शतशो भेदप्रतिपादिश्रुतयः सन्ति ताभिर्भेदो निर्दिश्यते इत्याह । सोऽन्वेष्टव्यइति । अभेदप्रतिपादिकां श्रुतिं पठति । तत्त्वमसीति । एतावता प्रबन्धेनोपाध्यवच्छिन्नस्यांशस्याभिन्नत्वं भिन्नत्वञ्च प्रदर्शितं भवति । एतन्मतं परिहरति इत्यपि न सङ्गतमिति । उपाधिनावच्छिन्नो ब्रह्मखण्डो जीवात्मा अंशशब्दार्थः आहोस्वित् अवच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषो जीवोंऽशशब्दार्थ

ज्ञाज्ञौ, द्वावजावशानशौ पृथगात्मानं प्रेरितारं च मत्वा, अनशीश्चात्मा बध्यते भोक्तृभावात्, अनशीया शोचति मुह्यमानः" इत्यादिश्रुतिभ्यः। अभेदश्रुतयस्तु नरपतिरेव सर्वलोक इतिवदौपचारिक्य इति। नैतद्युक्तं ब्रह्मणो निरवयवत्वेनात्यन्तभिन्नांशत्वासम्भवात्। अभेदश्रुतीनामपि प्राबल्येनौपचारिकत्वायोगात् भेदनिन्दाश्रवणाच्च। अथोपाध्यवच्छिन्नस्यानन्यभूतस्य वाचकोऽयमंशशब्दः प्रयुक्तो यथाऽग्नेर्विस्फुलिङ्गस्य, कथं तर्हि निरवयवस्य परमात्मनोंऽशः सम्भवति। आगमादित्यवगम्यते। "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीति दृष्टान्तप्रणयनात्। यथाचाकाशस्य पार्थिवाधिष्टानावच्छिन्नकरणछिद्रं, यथा च वायोः पञ्चवृत्तिः प्राणः, यथा च मनसः कामादयो वृत्तयः। सच भिन्नाभिन्नरूपोऽभिन्नरूपं स्वाभाविकमौपाधिकं तु भिन्नरूपमुपाधीनां च बलवत्त्वात्। "तत्सम्मूर्छितस्तन्मयः संसरत" त्यभेदोऽभ्युपगम्यते। "स एव किं नेष्यते नानाव्यपदेशात्, "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति तत्र तत्र जीवपरयोर्भेदव्यपदेशात् अस्तु तर्हि भेद एवेति आह। 'तत्त्वमसि नान्योऽतोस्ति द्रष्टे' त्याद्यभेदव्यपदेशाच्चेत्यपि न सङ्गतं, विकल्पासहत्वात्। तथा हि नतावदुपाधिनावच्छिन्नो ब्रह्मखण्डो जीवः, ब्रह्मणोऽच्छेद्यत्वात्, जीवस्य सादित्वापत्तेश्च। नाप्यच्छिन्न एवाणुरूपोपाध्य-

---

इति विकल्पद्वयं मनसि निधायाह। विकल्पासहत्वादिति। तदेवोपपादयति तथाहीत्यादिना। आद्यविकल्पमनूद्य व्युदस्यति। न तावदिति। उपाधिरविद्याभूतोऽन्तःकरणरूपो वा सर्वगतस्य निरवयवस्य निर्विशयस्य वस्तुनश्छेदनक्रियाजन्यफलाश्रयत्वापत्त्यनर्हत्वान्नाद्यः पक्षः साधीयान्। निष्कलं निष्क्रियं शान्तमितिश्रुतेरित्याह। ब्रह्मणोऽच्छेद्यत्वादिति। जीवस्य ब्रह्मखण्डत्वे तस्यैव सादित्वापत्तेरिति। तत्रैव दोषान्तरमाह। जीवस्येति। "अजो ह्येको जुषमाणोऽनुशेते, न जायते म्रियते, प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपी'त्यादि श्रुतिस्मृतीनामजत्वानादित्वबोधिकानां व्याकोपः प्रसज्येत इति भावः। द्वितीयविकल्पं निरस्यति। नापीति। ब्रह्मैकप्रदेश इति। उपाधिसम्पर्कात्सर्वेषां दोषाणां ब्रह्मणि प्रसक्तिरित्यर्थः। उपाधौ गच्छति सति ब्रह्मणो विभोर्गमनानर्हत्वेन पूर्वदेशावच्छिन्नस्य चेतनस्य जीवस्याकस्मान्निर्हेतुको मोक्षः तथैव शुद्धस्य नित्यमुक्तस्य चेतनप्रदेशविशेषस्याकस्माद्बन्धश्चेति पदे पदे बन्धमोक्षौ स्याताम् कृतनाशाकृताभ्यागमप्रसङ्ग इति दोषान्तरमाह। किञ्चेति। उपाधेर्गमनवेलायां सर्वस्य प्याकर्षणं भवतीति पक्षमाश्रित्याह। आकर्षण इति। उपाध्यवच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात् दृष्टाश्रुतत्वात्तच्च न सम्भवतीत्यर्थः। तदसम्भवाभ्युपगमे इति कृत्स्नस्याकर्षणस्यासम्भवाभ्युपगम इत्यर्थः। पूर्वोक्तदोष इति क्षणे क्षणे बन्धमोक्षापत्तिरूपदोष इत्यर्थः। उपाध्यवच्छिन्नब्रह्मप्रदेशो जीव इति पक्षे दोषान्तरमाह। अवच्छिन्नप्रदेशेष्विति। सर्वेपि प्रत्यगात्मानः ब्रह्मणः प्रदेशा एव सर्वोपाधिसम्पर्कात् तेन रूपेणैकत्वप्रतिसन्धानं स्यादित्यर्थः। प्रदेशभेदमाश्रित्योक्तदोषं निराकुर्वन्नाह। प्रदेशभेदादिति। प्रतिसन्धानं न स्यादिति उपाधिसंयुक्तब्रह्मप्रदेशस्य जीवपदार्थत्वाभ्युपगमात्तदानीमुपाधिसंसर्गविरहेण स एवाहमितिप्रतिसंधानं नोपपद्येत इत्यर्थः। दोषान्तरं विधित्सुर्विकल्पयति। किञ्चेत्यादिना। असम्भवमेव विवृणोति। तथाहीत्यादिना। उपाधिप्रयुक्तो ब्रह्मणो जीवभाव इत्यङ्गीकारे ब्रह्मवृत्तिसार्वज्ञ्यादिधर्मा उपाधिना आवृता उत ब्रह्मणः स्वरूपं वाऽऽवृतमिति विकल्पयति। किञ्चेत्यादिना। असम्भवेनाद्यपक्षं निरस्यति। नाद्यइति। असम्भवं विवृणोति। तथाहीत्यादिना। सर्वज्ञादीनामौपाधिकत्वपक्षे उपाधेः सत्त्वमसत्त्वमिति विकल्पयति औपाधिकत्वपक्ष इति स्वप्रयुक्तमिति = उपाधिप्रयुक्तत्वम्। स्वप्रयुक्तत्वपक्षं व्युदस्यति

वच्छिन्नो ब्रह्मप्रदेशविशेषो जीवोंऽशः, ब्रह्मैकप्रदेशे उपाधिसम्बन्धापत्त्या सर्वे दोषास्तस्यैव स्युः। किञ्चोपाधौ गच्छति सति ब्रह्मप्रदेशाकर्षणानर्हत्वेनानुक्षणमुपहितब्रह्मप्रदेशभेदेन क्षणे क्षणे बन्धमोक्षौ स्याताम्। आकर्षणपक्षाभ्युपगमे चाच्छिन्नत्वात्कृत्स्नस्याप्याकर्षणं स्यात्। तदसम्भवाभ्युपगमे पूर्वोक्तदोषस्य तादवस्थ्यम्। अविच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे च सर्वजीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात्प्रदेशभेदादप्रतिसन्धानाङ्गीकारे चैकस्यापि स्वोपाधौ गच्छति सति स एवाहमिति प्रतिसन्धानं न स्यात्। किञ्चोपाधिना ब्रह्मणो जीवभावे सार्वज्ञ्यादिधर्मा आच्छादिताः स्वरूपं वा? नाद्यः, असम्भवात्। तथाहि सार्वज्ञ्यादयः स्वाभाविका धर्मा औपाधिका वा? नान्त्यः, औपाधिकत्वे उपाधेः सत्त्वमसत्त्वं वा? सत्त्वेऽपि ब्रह्मभिन्नत्वमभिन्नत्वं वा? भिन्नत्वेऽपि स्वप्रयुक्तत्वमन्यप्रयुक्तत्वं ब्रह्मप्रयुक्तत्वं वा? नाद्यः, आत्माश्रयात्। न द्वितीयः, अनवस्थानात्। न तृतीयः, अन्योऽन्याश्रयात्, प्रयोजकस्य नित्यत्वेनानिवृत्तिप्रसङ्गाच्च। अभिन्नत्वे चौपाधिकभेदासिद्धिः, उपाधिर्ब्रह्मेति समानाधिकरणघटितप्रतीत्यापत्तिश्च। नाप्यसत्यः, परमतप्रवेशापत्तेरनङ्गीकाराच्च। अथ स्वाभाविकत्वपक्षे तेषां स्वरूपं भिन्नमभिन्नं वा? भिन्नाभिन्नत्वं वा? अत्यन्तभेदे शास्त्रविरोधः। "एवं गुणान्पृथक्पश्यन्ति" इत्यादिनिषेधश्रवणात्। अभिन्नत्वे ब्रह्मणा तेषां सामानाधिकरण्यापत्तिस्तथात्वे "आनन्दं ब्रह्मणो विद्वान्पराऽस्य शक्तिरि"ति व्यधिकरणश्रुतिव्याकोपः। अन्त्ये स्वाभाविकभिन्नाभिन्नानां ह्यावरणासम्भवोऽस्मत्पक्षप्रवेशश्च। अन्यथा स्वरूपस्यावरणापत्तिस्तदङ्गीकारे सार्वज्ञ्यादिहानिः। किञ्चोपाधिः सहेतुको निर्हेतुको वा? नाद्यः, अनवस्थानात्। नान्त्यः, मुक्तस्यापि पुनर्बन्धप्रसङ्गात्। किञ्च ब्रह्मणः सार्वज्ञ्यादयो व्याप्यवृ-

---

नाद्यइति। आत्माश्रयादिति। ब्रह्मण उपाधिसम्बन्धे उपाधेरपेक्षणादात्माश्रयस्तथा च स्वस्वापेक्षितत्वेऽनिष्टप्रसङ्ग आत्माश्रयः। अयमुपाधिरेतदुपाधिजन्यः स्यादतदुपाध्यनधिकरणक्षणोत्तरवर्ती न स्यादित्याशयः। न द्वितीय इति। अन्यप्रयुक्तत्वं नेत्यर्थः। अनवस्थानादिति। ब्रह्मणि उपाधिसम्बन्धसत्त्व एव सार्वज्ञ्यादीनां तत्र सिद्धिः। उपाधिसम्बन्धस्य स्वभिन्नं प्रयोजकान्तरमन्वेषणीयं तत्राप्यन्यप्रयोजकान्तरमित्यनवस्था स्यादित्यर्थः। उपाधिसिद्धौ सत्यां ब्रह्मणः सार्वज्ञ्यसिद्धिस्तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयेण ब्रह्मप्रयुक्तत्वरूपं तृतीयकल्पमपाकरोति। न तृतीय इति। उपाधेर्ब्रह्माभिन्नत्वमिति पक्षं निरस्यति। अभिन्नत्व इति। उपाधेरसत्वपक्षं परिहरति। नाप्यसत्य इति। ब्रह्मणि सार्वज्ञ्यादयः स्वाभाविका इति पक्षमवलम्ब्य विकल्पयति। अथेति। तेषाम् = सार्वज्ञ्यादीनाम्। शास्त्रबाधेनाद्यपक्षमपाकरोति। अत्यन्तभेद इति। द्वितीयपक्षं निरस्यति। अभिन्नत्व इति। तेषाम् = सार्वज्ञ्यादीनाम्। तथात्वे = ब्रह्मसामानाधिकरण्ये। भिन्नाभिन्नत्वरूपमन्त्यपक्षमभिप्रेत्याह। अन्त्य इति। सार्वज्ञ्यादयो ब्रह्मणि यदि स्वाभाविकाः धर्मास्तदा उपाधिना ब्रह्मणो जीवभावे सार्वज्ञ्यादयो धर्मा आव्रियेरन्नित्यर्थः। अस्मदिति। स्वाभाविकभिन्नमतानुयायिनामस्माकं मते। बाधकतर्कमाह। अन्यथेति। स्वाभाविकभिन्नाभिन्नानङ्गीकारे। स्वरूपस्येति। स्वरूपस्यावरणं स्यादित्यर्थः। ततः किमित्यत आह। तदङ्गीकार इति। स्वरूपावरणाङ्गीकारे। अनवस्थानादिति उपाधेः सहेतुकत्वे तस्यापि हेतुर्वक्तव्यः पुनस्तस्याप्येवमनवस्था स्यादित्यर्थः। उपाधेर्निर्हेतुकत्वे मुक्तस्य पुनर्बन्धनं प्रसज्येत इत्यतः अन्त्यपक्षं निरस्यति। नान्त्य इति। सार्वज्ञ्यादीनां व्याप्यवृत्तित्वमव्याप्यवृत्तित्वञ्चेति विकल्पयति। किञ्चेति। प्रथमकल्पं निरस्यति। आद्य इति।

त्तयः उतैकदेशवृत्तयः ? आद्ये सर्वज्ञस्य सर्वस्यापि बन्धयोगेऽनिर्मोक्षप्रसङ्गो जगदान्ध्यापत्तिश्च । द्वितीये तद्गुणानां परिच्छिन्नत्वेनाकिञ्चित्करत्वापत्तिः मायावादपक्षप्रवेशापत्तिश्च । किञ्च मुक्तावस्थायां जीवः स्वरूपेण तिष्ठति नवा ? आद्ये, उपाधिविगमेऽपि जीवस्वरूपस्य विद्यमानताङ्गीकारे औपाधिकभेदवादो दत्ततिलाञ्जलिः स्यात्स्वरूपेणैव भेदाङ्गीकारात् । द्वितीये, स्वरूपनाश एव मुक्तस्वरूपः स्यात् । तथात्वे च प्रच्छन्नबौद्धान्मायावादिनः को वा विशेष इति त्वयैव चिन्तनीयः । नाप्युदाहृतदृष्टान्तानामग्निविस्फुलिङ्गप्राणमनोवृत्तीनामत्र प्रामाण्यं वैषम्यात् । अग्निवाय्वोः सावयवद्रव्यत्वेन तत्रांशानां स्वाभाविकानामेव सत्त्वेनोपाधिकल्पनाया अप्रयोजकत्वात् । कामादिवृत्तीनां च मनःपरिणामत्वादेवं जीवस्य ब्रह्मपरिणामत्वापत्तेस्तथात्वे चोभयोरनित्यत्वं स्यात् । तस्मान्न जीवस्योपाधिकृतांशत्वम् । नचोक्तश्रुतेर्निर्विषयत्वेन व्याकोपप्रसङ्ग इति वाच्यम्, तस्याः प्रत्यगात्मनोऽजत्वेऽपि जन्मप्रतिपादकश्रुतिसार्थक्याय देहसम्बन्धाज्जन्मप्रतिपादनपरत्वेन नैराकाङ्क्ष्यात् । वस्तुतोऽत्यन्ताभेद एव पर्यवसानाद्भेदाभेदाङ्गीकारस्य वैयर्थ्यमेव । किञ्च परैरपि विवरणे न तावद्ब्रह्मणो जातिव्यक्तिभावो गुणगुणिभावः कार्यकारणभावो विशिष्टस्वरूपत्वमंशांशिभावो वा विद्यते मानाभावात् । नच तदभावे भेदाभेदौ दृश्येते । नच "ममैवांशो जीवलोके" इतिस्मृतेरंशांशितेति वाच्यम्, 'निष्कलं निष्क्रियमि" ति निरंशत्वप्रतिपादकश्रुतिविरोधात् । "पादोऽस्य विश्वा भूतानी" ति श्रुतिर्नांशांशिभावं ब्रूते । किन्तु ब्रह्मानन्त्यप्रतिपादनाय जीवस्याल्पमात्रत्वमाह। अन्यथा सांशस्य ब्रह्मणो घटादिवदवयवारभ्यत्वप्रसङ्गात् । ननु स्वाभाविकी निरवयवता बुद्ध्याद्युपाधिनिमित्तं सांशत्वमिति नोक्तदोष इति चेन्न । एवमपि वास्तवाभेदो न सिध्येत् ।

---

सार्वज्ञ्यादिवदुपाधेरपि विभुत्वेन सर्वज्ञस्य सर्वस्यापि ब्रह्मण उपाधिना सम्बद्धत्वान्न कस्यापि तत्प्रदेशस्य मोक्षत्वं स्यात् । प्रकाशकाभावेन जगदान्ध्यापत्तिः । व्याकुप्येरन् मुक्तिप्रतिपादिकाः श्रुतय इत्यर्थः । सार्वज्ञ्यादीनां संयोगवदेकदेशवृत्तित्वमिति द्वितीयपक्षमपाकरोति । द्वितीय इति । उपाधितिरोधानकालेऽपि जीवस्वरूपेण तिष्ठति चेत्तदौपाधिकभेदवादो न सिद्ध्येदित्याद्यपक्षं निरस्यति । नाद्य इति । द्वितीयपक्षं निरस्यति । द्वितीय इति । तथात्वे=स्वरूपनाशस्य मुक्तित्वे । को वा विशेष इति । बाह्यजैविशयोरुभयोरपि स्वरूपनाशोऽभ्युपगम्यते भवद्भिस्तु जीवस्वरूपनाश इत्येतावति भेदेऽपि जीवस्वरूपनाशः समानः इत्यर्थः । प्रागुक्तार्थं दूषयितुमनूद्यति नाप्युदाहृतदृष्टान्तानामिति । कामादिवृत्तीनांमनोपरिणामवत् जीवस्य परिणामाङ्गीकारे जीवब्रह्मणोरनित्यतापत्तिरित्याह । कामादिवृत्तीनाञ्चेति । तथात्वे=जीवस्य ब्रह्मपरिणामत्वस्वीकारे । उपसंहरति । तस्मादिति । उक्तश्रुतेः="यथाग्नेर्विस्फुलिङ्गा" इति श्रुतेः । तस्याः=श्रुतेः । भट्टभास्करमतं प्रतिक्षिपन्नाह । वस्तुत इति । उक्तार्थं विवरणसमत्या द्रढयति । किञ्चेति । सविशेषे ब्रह्मणि गुणगुणिभावादि कल्पयितुं शक्यते न तु निर्विशेषे चिन्मात्रे ब्रह्मणि तथात्वं सम्भवतीत्यर्थः । विशिष्टस्वरूपत्वम्=चिदचिद्विशिष्टस्वरूपत्वमित्यर्थः । तदभाव इति । गुणगुण्याद्यभावे । अंशांशिभावे मानमाशङ्क्य परिहरति । नचेति । अंशवाची हि पादशब्दस्तेन ब्रह्मांशो जीव इति सिद्ध्यतीत्यपि परिहर्तुमाह । पादोऽस्येति । विपक्षे बाधकतर्कमाह । अन्यथेति । जीवस्य ब्रह्मांशपरत्वे । उक्तदोषं निराकर्तुं शङ्कते । नन्विति । उक्तदोष इति । ब्रह्मणोऽवयवारम्भत्वदोष इत्यर्थः । परिहरति । नेति । एवमपीति । बुद्ध्याद्युपाधिनिमित्तसांशत्वस्वीकार इति तदर्थः । औपाधिकभेदवादे दोषान्तर-

नहि निरवयवमाकाशं खड्गधारादिभिर्वस्तुतो भेत्तुं शक्यम्। अथान्तःकरणोपाधीनां वस्तुब्रह्म-दारणसामर्थ्यमस्ति तर्हि ब्रह्म स्वस्यानर्थाय कथमुपाधीन् सृजेत्? नच जीवार्था तत्सृष्टिः, तत्सृष्टेः प्राग्जीवविभागासिद्धेः। नच कर्माविद्यासंस्कारा अन्तःकरणोत्पत्तेः प्राग्विद्यमाना जीवं विभजन्ते। अन्तःकरणद्रव्यस्यैव जीवोपाधित्वाङ्गीकारादित्यादिना बहुशो निरस्तत्वाच्च। तस्माद् दुरुपपादोऽयमौपाधिकभेदवाद इति संक्षेपः। ननु स्यादेतदौपाधिकभेदवादे उक्तदोषाणां सम्भवात् तदनङ्गीकारः। अपितु निरंशत्वश्रुतिविरोधात्स्वाभाविकांशत्वाभावेऽपि सूर्यप्रति-बिम्बयोरिव जीवपरयोः कल्पितोंऽशांशिभावः भेदस्याविद्यकत्वात्स्वरूपैक्यमेव परमार्थ इति चेन्न। तुच्छत्वादुक्तसिद्धान्तस्य सूर्यप्रतिबिम्बदृष्टान्तेन जीवस्य ब्रह्मांशत्वकल्पनायां दृष्टा-न्तवैषम्येनासम्भवात्। तथाहि यथा सूर्य्यजलयोर्बिम्बोपाध्योः सावयवत्वरूपादिमत्त्वात्तत्र प्रतिबिम्बसम्भवः, न तथा दार्ष्टान्ते ब्रह्मरूपबिम्बस्याविद्यारूपोपाधेश्च निरवयवत्वनीरूपत्वा-भ्यां तत्सम्भव इति पूर्वमेवोक्तम्। ननु यज्जन्यं तत्सावयवं कार्यत्वाद्घटादिवदित्यनुमानादन्तः-करणस्य सावयवत्वाङ्गीकारान्नोक्तदोषयोग इति चेन्न। "तद्गुणसारत्वादि" त्यस्य भाष्ये भवद्भिरेव जीवस्य स्वरूपेण विभुत्वं निरूप्य अणुत्वोत्क्रान्त्यादिप्रतिपादकसूत्रश्रुतयश्च बुद्ध्यणुत्वपरिमाणपरत्वेन व्याख्यातास्तद्बाधापत्तेः। उपाधेर्निरवयवत्वे प्रतिबिम्बानुप-पत्तिः। सावयवत्वे चाणुत्वप्रतिपादकश्रुतिसूत्रभाष्याणां बाध इत्युभयथा पाशा रज्जु इत्यलं विस्तरेण। एवं च नैतेषु पक्षेषूभयश्रुत्यविरोधः सम्भवति, अतः परिशिष्टपक्ष एव सूत्रकृता-मभिप्रेत इति निश्चीयते। तथा च परमात्मनोंऽशोऽयं जीवः। कुतः? नानाव्यपदेशात्।

---

माह। न हीत्यादिना। न ह्यन्तःकरणोपाधिना ब्रह्म विदारयितुं शक्यते येन ब्रह्मखण्डो जीवः स्यात्। ब्रह्मणः खण्डनानर्हत्वादित्याह। अथेति। सर्वेऽपि स्वहितमेव प्रार्थयन्ते न त्वहितमित्याह। तर्हीति। उपाधीनां सृष्टिर्जीवार्थेत्याशङ्क्य परिहरति। नचेति। उपाधेः प्राग् यदि जीवानां सत्त्वं स्यात्तदा तदर्थमुपाधीनां सृष्टि-कल्पना घटेत न त्वेवमित्याह। प्राग्जीवविभागासिद्धेरिति। उपाधिपरिकल्पितो जीव इति भावः। प्राग्वर्त्तिकर्मा-विद्यादिभिः जीवविभागो जायत इत्याशङ्क्य परिहरति। नचेति। उक्तरूपेण जीवविभागाङ्गीकारे अन्तःकर-णोपाधिको जीव इति तव सिद्धान्तो व्याकुप्येत इत्याह। अन्तःकरणद्रव्यस्येति। श्रीभट्टभास्कराभिमतौपाधिकभे-दाभेदवादो दुरुपपादत्वान्न दरणीय इत्युपसंहरन्नाह। तस्मादिति। एतत्सूत्रस्थव्याख्यानं यत् श्रीशङ्कराचार्यपादैः कृतं तत् दूषयितुमुपन्यस्यति। नन्वित्यादिना। तदनङ्गीकारः=औपाधिकभेदाभेदानङ्गीकारः। निरंशत्वश्रुति-विरोधादिति। "निष्कलं निष्क्रिय"मिति श्रुतिविरोधात्स्वाभाविकांशत्वं जीवस्य वक्तुमशक्यमित्यर्थः। परिहरति। नेति। उपाधेर्बिम्बस्य सावयवत्वे रूपवत्वे च बिम्बप्रतिबिम्बभावो दृश्यते लोके सूर्य्यजलयोः प्रकृते चेतनो बिम्बो न रूपी नाप्यवयववान्। उपाधिरूपा बुद्धिः न रूपवती नाप्यवयववती, इति दृष्टान्तवैषम्यमित्याह। उक्तसिद्धान्तस्येति। अनुमानेनान्तःकरणस्य सावयवत्वं समर्थयन्नद्वैतवादी पुनः प्रत्यवतिष्ठते। नन्वित्या-दिना। तदीयभाष्यविरोधेनोक्तार्थं परिहरति। नेति। उपाधेर्निरवयवत्वं वा सावयवत्वं वेति विकल्पाद्यं परिहरति। उपाधेरिति। द्वितीयकल्पमभिप्रेत्याह। सावयवत्वे इति। एतावता प्रबन्धेन अत्यन्तभिन्नांशोऽयं जीव इत्यत्यन्तभेदवादिनां पक्षः, उपाध्यवच्छिन्नो ब्रह्मप्रदेश इति भट्टभास्करस्य पक्षः, ब्रह्मैवाविद्यायाः कल्पितांश इति श्रीशङ्करपादानां पक्षश्च दूषितः। सम्प्रति शक्तिमतः शक्तिरिव स्वाभाविकभिन्नाभिन्न इति चरम-

कथं तद्युक्तविरोधपरिहार इति चेत्तत्राह । अन्यथा चापीति । अनानात्वेनापि अभेदेनापि व्यपदेशादित्यर्थः । तथा च भेदाभेदव्यपदेश एव सर्वविरोधपरिहारहेतुरिति भावः । न चौपाधिकपक्षेऽपि तेनैव सर्वाविरोधसम्भव इति वाच्यम् । उक्तदोषयोगात् । अत्र तूभयोः स्वाभाविकत्वाङ्गीकारात् । नानाव्यपदेशस्तावत् नियन्तृत्वनियम्यत्वस्वतन्त्रत्वपरतन्त्रत्वसर्वज्ञत्वाल्पज्ञत्वाधारत्वाधेयत्वोपास्यत्वोपासकत्वानुग्राहकत्वानुग्राह्यत्वप्राप्यत्वप्राप्तृत्वोपकारकत्वोपकार्यत्वैकत्वानेकत्वविभुत्वाणुत्वादिभिः श्रूयते । "य आत्मानमन्तरो यमयति अन्तः प्रविष्टः शास्ता जनानाम्, आत्माहि परमः स्वतन्त्रोऽधिगुणः जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः, ज्ञाज्ञौ द्वावजावीश नीशौ । तस्मिंल्लोकाः श्रिताः सर्वे, आत्मावा अरे ! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, यमेवैष वृणुते तेन लभ्यः, ब्रह्मविदाप्नोति परं, नित्योनित्यानां चेतनश्चेतनानामेकोबहूनां यो विदधाति कामान्, सत्यं ज्ञानमनन्तं ब्रह्म, अणुर्ह्येष आत्मा चेतसा वेदितव्यः" इत्यादिश्रुतिषु । अभेदव्यपदेशश्च 'तत्त्वमस्ययमात्मा ब्रह्म अहं ब्रह्मास्मी" त्यादिश्रुतिषु । अपि चैके शाखिन आथर्वणिकाः ब्रह्मणो दाशकितवादित्वमधीयते ब्रह्मसूक्ते "ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवाः" इत्यादिना । दाशाः कैवर्ताः प्रसिद्धाः ये चामी दासाः स्वामिष्वात्मानमुपक्षिपन्ति, ये चान्ये कितवाः द्यूतकृतस्ते सर्वे ब्रह्मैवेत्यर्थः । तथा चोभयोः स्वरूपस्वभावयाथात्म्यप्रतिपादनेन भेदव्यवहारो मुख्यः "एष सर्वभूतान्तरात्मा ऐतदात्म्यमिदं सर्वमि" त्यादिश्रुत्या ब्रह्मणः सर्वात्मत्वेन सर्वस्य तदपृथक्सिद्धत्वादभेदव्यवहारश्च मुख्यः । एवं च शक्तिमतः शक्तेरिवांशत्वेन भिन्नत्वेऽपि तदपृथक्सिद्धत्वादभिन्नत्वमितिवत् प्रकृतेऽपि जीवस्य ब्रह्मशक्तित्वाद्ब्रह्मांशत्वेन भिन्नत्वम् । तदपृथक्सिद्धत्वेन चाभिन्नत्वं मुख्यमेवेति राद्धान्तः, उभयविधवाक्यानां तुल्यबलत्वात् । तथाहि वेदान्तशास्त्रे

---

पक्षः सूत्रकाराभिमत इति तमुपपादयन्नाह । एवञ्चेति । सिद्धान्तानुसारेण सूत्रं व्याचष्टे । तथा चेत्यादिना । उभयोरिति भेदाभेदयोरित्यर्थः । नानाव्यपदेश इति । नियन्तृत्वं ब्रह्मनिष्ठं नियम्यत्वं जीवनिष्ठमेवमग्रेऽपि द्रष्टव्यम् । सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वसर्वाधारत्वादियोगेन जीवब्रह्मणोर्भेदः । ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यतत्तन्त्रसत्वपराधेयत्वादियोगेन चाभेद इति विवेकः । शास्त्रं प्रमाणयति । य आत्मानमिति । एतानि क्रमतः नियन्तृत्वादिविशेषणेषु प्रमाणतया योज्यानीत्यर्थः । यद्यदात्मकं यन्नियम्यं यद्व्याप्यं यत्तन्त्रसत्ताकं यदाधेयञ्च तत्तद्भिन्नत्वनिर्देशार्हं पृथिवीघटादिवद् अग्निधूमवत् प्राणेन्द्रियवत् भूतभौतिकवदित्यनुमानमप्यनुसन्धेयम् । अभेदप्रतिपादकवाक्यान्युदाहरति । तत्त्वमस्ययमात्मेति । एतासां श्रुतीनामर्थंस्तु उपरिष्टात्स्वयं दर्शयिष्यति । सूत्रस्य शेषभागं विवृणोति । अपि चैक इति । उभयोरिति । जीवब्रह्मणोरित्यर्थः । तदपृथक्सिद्धत्वात्=ब्रह्मणोऽपृथक् सद्भावादित्यर्थः । प्रतिज्ञातार्थे हेतुमाह । उभयविधवाक्यानामिति तदेव विवृणोति । तथाहीत्यादिना । भेदवाक्यान्युदाहरति । तत्रेति । त्रिविधवाक्येषु अभेदवाक्यानि पठति । 'आत्मा वा इदमेक' इति । भेदनिषेधवाक्यानि दर्शयति । सर्वमिति । उभयविधवाक्यानां न परस्परबाध्यबाधकभावो वक्तुं शक्यः तुल्यबलत्वात् । तच्चोभयेषां भेदाभेदविषयकाणां षड्लिङ्गोपेतत्वात्साम्यमेव । एवं सर्वेषामपि स्वार्थे प्रामाण्यसिद्धये तेषां व्यवस्थामाह । तत्र भेदवाक्यानामिति । तस्येति । भेदस्येत्यर्थः । अभेदवाक्यानामर्थं दर्शयति । स्वतन्त्रेति । तस्य=अभेदस्य । तथैवेति=स्वतन्त्रसत्तयैव । सत्तां विभजते । सत्ता हीति स्व-

विविधानि वाक्यानि दृश्यन्ते। तत्र "नित्यो नित्यानां, जहात्येनां भुक्तभोगामजोऽन्यः, पृथगात्मानं प्रेरितारं च मत्वा भोक्ता भोग्यं प्रेरितारं च मत्वा, प्रधानक्षेत्रज्ञपतिः, अक्षरात्परतः परः" इत्यादीनि भेदपराणि। "आत्मावा इदमेक एवाग्र आसीत्, एकोह वै नारायण आसीत् सदेव सौम्येदमग्र आसीत्, तत्त्वमस्ययमात्मा ब्रह्म, आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म, अहं ब्रह्मास्मी" त्यादीन्यभेदपराणि। "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदे" त्यादीनि भेदनिषेधपराणि। "अस्थूलमनणु" त्यादीनि च स्थौल्यादिसामान्यनिषेधपराणि। तत्र भेदवाक्यानां परतन्त्रसत्त्वविषयकत्वेन स्वार्थाभिधायित्वं तस्य बहुत्वात्। स्वतन्त्रसत्त्वविषयिका चाभेदवाक्यप्रवृत्तिः तस्यैकत्वात्, तयैव तेषां नैराकांक्षयम्। स ताहि द्विधा, स्वतन्त्रपरतन्त्रभेदात्। आत्माश्रितत्वे सति स्वायत्तस्थितिप्रवृत्तिकता प्रथमा, नियन्तृत्वादिवत्तत्समानाधिकरणासाधारणधर्मविशेषस्तस्य च भगवद्ब्रह्मादिशब्दवाच्ये श्रीकृष्णे एवान्वयः तस्यैव सर्वनियन्तृत्वात्। नियन्तृत्वस्वतन्त्रसत्त्वयोः सामानाधिकरण्यनियमात्। "आत्माहि परमः स्वतन्त्रोऽधिगुणः, सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे" इत्यादिश्रुतिस्मृतिभ्यः। परायत्तस्थितिप्रवृत्तिकता द्वितीया। सा च चिदचिदात्मकनियम्यवर्गवृत्तिरतदसाधारणधर्मत्वात्। "यदासीत् तदधीनमासीत्, जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारते" त्यादिश्रुतिस्मृतिभ्यः। परतन्त्रसत्त्वं द्विविधं, कूटस्थं विकारशीलं च तत्र कौटस्थ्यं नाम जन्मादिविकारशून्यत्वे सति नित्यत्वम् तच्च जीववर्गाश्रितं तदाश्रयो जीवप्रत्यगक्षरपुरुषक्षेत्रज्ञादिशब्दाभिधेयः। विक्रियायुक्तत्वे सत्यनाद्यनन्तत्वं द्वितीयम्, तच्च प्रकृतिवर्गाश्रितम्, तदाश्रयश्च कार्यकारणात्मकप्रधानप्रकृत्यादिशब्दवाच्योऽचिद्वर्गः। तथैव भेदनिषेधपराणां चिदचिद्वस्तुवृत्तिस्वतन्त्रसत्त्वनिषेधपरत्वेन स्वार्थे प्रामाण्यम्। भिन्नत्वं

---

तन्त्रसत्ताया लक्षणमाह। आत्माश्रितत्वेसतीति। तत्समानाधिकरणेति। नियन्तृत्वसमानाधिकरणेत्यर्थः। तस्य=स्वतन्त्रसत्वस्य। तस्यैवेति। श्रीकृष्णस्येत्यर्थः उक्तार्थं श्रुतिमुखेन द्रढयति। आत्माहीति। परतन्त्रसत्वस्य लक्षणमाह। परायत्तेति। तस्याश्रयमाह। चिदचिदात्मकेति। उक्तार्थं श्रुतिस्मृतिमुखेन प्रमाणयति। यदासीदिति। परतन्त्रसत्त्वं विभजते। परतन्त्रसत्वमिति। कौटस्थ्यं लक्षयति। कौटस्थ्यं नामेति। तस्याश्रयमाह। तच्चेति। तदाश्रय=कौटस्थ्यसत्ताश्रयः विकारशीलसत्वस्य लक्षणमाह। विक्रियायुक्तत्वे सतीति। तस्याश्रयं दर्शयति। तच्चेति। विकारशीलसत्वञ्चेत्यर्थः। तदाश्रयः=विकारशीलसत्वाश्रयः। भेदनिषेधपराणां वाक्यानामर्थमाह। तथैवेति। भिन्नत्वं निर्वक्ति भिन्नत्वं नामेति। तच्च=भिन्नत्वञ्च। तस्य=नियम्यवर्गस्य। सामान्यनिषेधपराणां वचनानामर्थमाह। सामान्येति। तुल्यबलत्वं प्रतिक्षिपति। नन्विति। तेषाम्=अर्थवादानाम्। तदविशेषात्=श्रौतत्वाविशेषात्। जीवेश्वरभेदस्य प्रत्यक्षप्रमाणसिद्धत्वेन भेदप्रतिपादकवाक्यानां भेदानुवादपरत्वेन दौर्बल्यम्। अभेदपराणान्तु वाक्यानामन्यविषयाभावः स्वार्थे एव प्रामाण्यात्प्राबल्यमित्याह। भेदवाक्यानामिति अनुवादपरत्वादिति कल्पितभेदप्रतिपादनेन नैराकाङ्क्ष्यमित्यर्थः। भेदविषयकाणि। वाक्यानि न स्वार्थवन्ति तद्विषयस्य जीवेश्वरभेदरूपस्य प्रत्यक्षसिद्धत्वात्। यद्वाक्यं प्रमाणान्तरसिद्धविषयकं तन्न स्वार्थपरम् "अग्निर्हिमस्य भेषजमि"त्यादिवदिति प्रयोगोऽप्यत्र सूचितो भवति। 'नेन्द्रियाणि नानुमानमि'ति श्रुतिप्रमाणेन

नाम स्वतन्त्रसत्तावत्त्वेन स्थितिप्रवृत्त्यर्हत्वम्, तच्च नियम्यवर्गे नास्त्येव। तस्य ब्रह्मापृथक्सिद्धत्वादिति भेदनिषेधस्य तात्पर्यार्थः। सामान्यनिषेधपराणाञ्च ब्रह्मणः सर्वशैलक्षण्यज्ञापनेन स्वार्थे प्रामाण्यमिति सर्वेषामपि तुल्यबलत्वान्न परस्परं बाध्यबाधकभावः। ननु कथं तुल्यबलत्वम् श्रौतत्वादिति चेदर्थवादानामपि स्वार्थे प्रामाण्यापत्तिस्तेषामपि तदविशेषादतो भेदवाक्यानां प्रत्यक्षसिद्धभेदविषयकत्वेनानुवादपरत्वादग्निर्हिमस्य भेषजमित्यादिवाक्यवत् स्वार्थहीनत्वेन श्रुतिनिन्दितभेदविषयकत्वाच्च दुर्बलत्वमभेदवाक्यानां तु प्रमाणान्तराप्राप्ताभेदविषयकत्वादुपक्रमादिषड्लिङ्गोपेतत्वाच्च प्राबल्यमिति चेन्न। जीवेशयोः प्रतियोग्यनुयोगिनोः प्रत्यक्षागोचरतया तद्भेदस्यापि प्रत्यक्षाविषयत्वात्। निन्दायाश्च पृथक्स्थितिप्रवृत्तियोग्यभेदविषयकत्वेन नैराकांक्षयात्। तत्र सिद्धान्ते प्रत्यक्षप्रमाणस्य सन्मात्रानुभूतिग्राहित्वेनाभिन्ननिर्विशेषसन्मात्रानुभूतेः प्रत्यक्षप्राप्तत्वादभेदवाक्यानामेव तदनुवादपरत्वस्य वक्तुं सुशक्यत्वात्। भेदवाक्यानामपि षड्लिङ्गोपेतत्वाच्च पूर्वोक्तहेतूनामाभासत्वमेव। ननु कोऽयं भेदः स्वरूपं वा धर्मो वा? नाद्यः। स्वरूपवद्भेदस्यापि प्रतियोगिनिरपेक्षव्यवहारापत्तेः। हस्तः कर इत्यादिवत् भेदो घट इत्यादीनां पर्यायत्वापत्तेश्च। नापि धर्मस्तथात्वे स्वरूपाद्भेदोऽप्यवश्यंभावी। अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। धर्मिग्रहे भेदग्रहो भेदग्रहे च धर्मिग्रह इत्यन्योन्याश्रयश्च। तस्माद्भेदस्यैवासिद्धेः कुतस्तद्विषयकवाक्यानां प्राबल्यमिति चेन्न। तव पक्षेऽपि साम्यात्। तथाहि अभेदः स्वरूपं वा धर्मो वा? नाद्यः। स्वरूपवदभेदस्यापि ग्रहापत्त्या "अयं घटः" अयं पटइत्यादिप्रतीतिविषयाणां घटादीनामङ्गीकृत्वापत्तेः। सर्वप्रत्यक्षाणां सन्मात्रनिर्विशेषानुभूतिग्राहकत्वाविशेषे घटाद्यनुभवेनैव सत्तानुभवापत्त्या वेदान्तविचारोदकतिलाञ्जलिः स्यात्। नापि धर्मः। त्वदुत्प्रेक्षित-

---

जीवेश्वरयोर्भेदः न प्रत्यक्षप्रमाणगोचरस्तयोरतीन्द्रियत्वात् भेदप्रत्यक्षेऽधिकरणस्य। योग्यतापेक्षिता भवति तथा च भेदस्य प्रत्यक्षगोचरत्वासिद्ध्या तद्विषयकवाक्यानां नानुवादकत्वं किन्तु स्वार्थ एव प्रामाण्यं प्रत्युताभेदवाक्यानामेवानुवादकत्वं सन्मात्रानुभूतेः प्रत्यक्षप्रमाणसिद्धत्वादित्याशयेनोक्तां शंकां परिहरति। नेति। श्रुतिनिन्दितभेदविषयत्वमिति यत्प्राक्शङ्कितं तस्य समाधानमाह। निन्दायाश्चेति। षड्लिंगेति अन्तर्यामिब्राह्मणे बृहदारण्यके भेदस्य षड्लिङ्गोपेतवाक्यवाच्यत्वम् 'वेत्थ त्वं क्वाप्यन्तर्यामिणमि' त्युपक्रमः 'एष त आत्माऽन्तर्यामी' त्युपसंहारः 'एष ते आत्मे' त्येकविंशतिकृत्वोऽभ्यासः। अन्तर्यामिताया अप्राप्तत्वादपूर्वता स वै ब्रह्मविदित्यादिफलम्। तच्च त्वं याज्ञवल्क्यसूत्रमविद्वांस्तवान्तर्यामिणं ब्रह्मगवीरुद्रजसेमूर्द्धा ते पतिष्यतीतिनिन्दारूपोऽर्थवादः। 'यस्य पृथिवी शरीरं यं पृथिवी न वेदे' त्याद्युपपत्तिरिति। भेदोऽधिकरणस्वरूपस्तदतिरिक्तधर्मो वेति विकल्पयति। नन्विति। भेदस्तु प्रतियोगिसापेक्षः स्वरूपन्तु निरपेक्षमिति विजातीयत्वान्न तस्याधिकरणस्वरूपत्वं वक्तुं शक्यम्। अन्यथा तस्यापि निरपेक्षत्वं स्यादित्याशयेनाद्यपक्षं परिहरति। नाद्य इति। स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः। तदभावे कथन्तरां संशयविपर्ययौ तयोरभावे च सर्वेभ्यो भेदव्यवहार एव स्यात् तथा च न बाधकसाध्यं किंचित् स्यादिति भावः। यथा न स्वरूपग्रहणे प्रतियोग्यपेक्षा तथा भेदव्यवहारेपीत्याह। स्वरूपवदिति। यदि च येषां मते भेदः स्वरूपान्नातिरिच्यते तेषां मते स्वरूपग्रहणे यथा प्रतियोग्यपेक्षा नास्ति तथा भेदव्यवहारेऽपि प्रतियोग्यपेक्षा नाङ्गीक्रियते उभयोः स्वरूपत्वा-

दोषाणामत्रापि तौल्यात्। द्वैतापत्तेर्निर्विशेषत्वप्रतिज्ञाहानेरपसिद्धान्ताच्च। वस्तुतस्तु भेदो जातिवद्धर्मविशेष एव गोत्वादिवत्प्रतीत्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वान्नोक्तदोषावकाश इति संक्षेपः। तत्सिद्धं सर्वेषामपि वाक्यानां तुल्यबलत्वम्। तेषां सर्वेषां स्वार्थसिद्धये विश्वभिन्नाभिन्नं ब्रह्म सूत्रकृतामभिप्रेतम्। ततश्चैवं तेषां समन्वयः। अभेदवाक्यैर्जगद्ब्रह्मणोः सामानाधिकरण्यं निरूप्यते। तद्द्विविधं, यथार्थायथार्थभेदात्। अयथार्थमपि द्विविधमध्यासो बाधश्च। तत्राध्यासो नाम प्रमाणबलादन्यत्रान्यस्योपासनाद्यर्थं तत्त्वाविधानम्, यथा "नाम ब्रह्मेत्युपासीते" त्यादिश्रुत्या नामादिप्रतीकेष्वतद्वस्तुषु ब्रह्मत्वेनोपासनाविधानम्। बाधितत्वं चोत्तरविरोधिज्ञानविषयत्वम्, यथा स्थाणुरेव चौरः स्थाणुज्ञानाच्चौरस्य बाधितत्वात्। उभयोरप्यनयोः सामानाधिकरण्यलक्षणहीनत्वेन गौणत्वादयथार्थत्वम्। यथार्थं च विविधम्, कार्यकारणव्याप्यव्यापकाधाराधेयविशेष्यविशेषणात्मात्मीयादिभेदात्। तत्र न तावदध्यासः

---

विशेषादित्युच्यते तथापि यथा स्वरूपव्यवहारो न प्रतियोगिनमपेक्षते तथा भेदव्यवहारोऽपि स्यादिति भावः। स्वरूपपक्षे दूषणान्तरमप्याह। हस्तकर इति पर्यायत्वे सति सह प्रयोगस्त्याज्यः स्यादितिभावः। स्वरूपपक्षे भिन्न इति व्यवहर्तुं न युक्तं भिन्नो हि भेदप्रतियोगी। एतद्व्यवहारसिद्धये यदि स्वरूपभूतभेदान्तरं स्वीक्रियते तत्रापि भिन्न इति व्यवहारस्यायुक्तत्वात् तत्स्वरूपभेदान्तरमाश्रयणीयमित्यनवस्था। किञ्च भेदः किमनुवृत्तः उत व्यावृत्तः? व्यावृत्तश्चेत् स किं स्वरूपम्। उतधर्मः? प्रथमे घटस्य भेदव्यवहारे कृते पटविषयभेदव्यवहारो न स्यात् व्यावृत्तत्वात्। धर्मश्चेत् धर्मत्वप्रयुक्तदूषणानि स्युः। यद्यनुवृत्तः स च स्वरूपं चेत् शब्दान्तरेण सन्मात्रमङ्गीकृतं स्यात्। धर्मपक्षो पूर्ववत्। किञ्च भिदिधातोर्हि विदारणमर्थः एकस्य वस्तुनो भेदो नाम द्विधाभावः। तत्खण्डस्यापि तथा स्यात्। अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परया नाश एव स्यादित्येवमादीनि दूषणानि स्वरूपपक्षे द्रष्टव्यानि। अथ धर्मपक्षं दूषयति नापि धर्म इति। अनवस्थां वक्तुं धर्मभूतो भेदः स्वरूपेणाभिन्नो भिन्नो वेति विकल्पाद्यं तिरस्यति। तथात्व इति धर्मत्व इत्यर्थः। भेदाभावे धर्मधर्मिभावो न स्यात् स्वरूपपक्षोक्तदोषाश्च स्युरित्याह। अन्यथेति। द्वितीये मूलोच्छेदमाह भेदे चेति। तस्यापि भेदस्तद्धर्म इति। तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापेक्षया यो भेदः सोऽपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः। यद्वा स्वरूपाद्धर्मस्य यो भेदः स्वीकृतः तस्य धर्मिभूताद्धर्मात् भेदोऽपि धर्मः अन्यथा स्वरूपमेव स्यात्। तथा च स्वरूपपक्षदूषणानि स्युः। सोऽपि भेदो धर्मस्तस्यापि स्वरूपभेद इत्यनवस्थेत्यर्थः। एवं धर्मपक्षेऽनवस्थामुक्त्वाऽन्योन्याश्रयणमाह धर्मिग्रह इति। त्रेधाच तत्। धर्मिणि प्रतियोगिनि च गृहीते भेदग्रहणं भवति भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति। धर्मे धर्मिणि च गृहीते भेदग्रहणं भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति। एवं धर्मधर्मिग्रहणे धर्मितया प्रतियोगितया च ग्रहणे च तज्जातीयत्वग्रहणे च त्रिधाऽन्योन्याश्रयणमिति भावः। साधकप्रमाणाभावमुपसंहरति तस्मादिति। स्वरूपधर्मपक्षोक्तैर्दूषणैर्दुर्निरूप्यत्वादित्यर्थः। परिहरति। नेति। तव पक्षे=अभेदवादिपक्षे। साम्यमेवोपपादयति तथाहीत्यादिना स्वरूपमात्राभेदवादिनां मते स्वरूपग्रहणेनाभेदोऽपि गृहीतश्चेत् स्वरूपातिरिक्तविषयाणामलीकत्वं स्यादित्याशयेनाद्यपक्षं निरस्यति नाद्य इति। "घटोऽस्ति पटोस्ती"त्यादौ सन्मात्रमेवानुवर्त्तमानं प्रतीयते तदेव परमार्थस्तदतिरिक्तं वस्तु मिथ्याभूतमित्यत आह सर्वप्रत्यक्षाणामिति यदि सर्वप्रत्यक्षं सन्मात्रस्यैव प्रकाशकं तदा घटाद्यनुभवमात्रादेव सन्मात्रस्य ब्रह्मणोऽनुभवस्य सिद्धत्वात् सर्वेपि वेदान्ताः निष्फलाः भवेयुः तथा च नारब्धव्यं वेदान्तशास्त्रमित्यर्थः। अभेदस्य धर्मपक्ष मपाकरोति। नापीति। त्वदुक्तोक्षितदोषाणा-

विरुद्धत्वात्प्रयोजनाभावेन प्रतीकादिवदत्र प्रमाणाभावाच्च। नापि बाधः ज्ञानाबाध्यत्वादन्यथा शुक्तिरूप्यवदाकाशादेरपि बाधापत्तिः। सा चादृष्टचराऽनुपपन्नाच। नापि विशेषणविशेष्यता तदनुपपत्तेर्वक्ष्यमाणत्वात्। परिशेषात्कार्यकारणभावादिरूपमेव ग्राह्यम्, तथा च सर्वात्मा भगवान् श्रीकृष्णः स्वाश्रितात्मसत्तया स्वनियम्यव्याप्यात्मीयादिरूपात् विश्वस्मादभिन्नः। तथैव चिदचिन्नियम्यवर्गवृत्तिपरतन्त्रसत्त्वाभावरूपेणास्थूलादिवाक्यप्रतिपाद्येन विश्वविलक्षणत्वापरपर्यायेण सार्वज्ञ्यादिसद्भावरूपेण स्वासाधारणधर्मेण विश्वस्माद्भिन्न इति स्वभावतो विश्वभिन्नाभिन्नः श्रीपुरुषोत्तमः सर्ववेदान्तार्थः। एतदभिप्रायं पुरस्कृत्य तत्त्वमस्यादिवाक्यार्थोऽनुसन्धेयः। तथाहि सर्वज्ञः सर्वशक्तिः स्वतन्त्रसत्ताश्रयः श्रीपुरुषोत्तमस्तत्पदार्थः। तदात्मकपरतन्त्रसत्ताश्रयश्चेतनस्त्वंपदार्थः। असिशब्दश्च तयोस्तादात्म्यसम्बन्धाभिधायकः। एवं च विश्वात्मपरब्रह्मसर्वज्ञसर्वशक्तिस्वतन्त्रसत्तावच्छिन्नतत्पदार्थाभिन्नतदात्मकपरतन्त्रसत्ताश्रयचेतनस्त्वमसीति वाक्यार्थः। पूर्वाचार्यैस्तु सर्वज्ञसर्वशक्तिस्वतन्त्रसत्ताश्रयश्रीपुरुषोत्तमस्तत्पदार्थः। तदात्मकपरतन्त्रसत्ताश्रयजीवान्तरात्मभूतः सएव च त्वंपदार्थः। ब्रह्मणः सर्वात्मत्वस्वतन्त्रसत्ताश्रयत्वाभ्यां सर्वशब्दवाच्यत्वात् तयोस्तादात्म्योपदेशार्थोऽसिशब्दः। इत्थं च विश्वात्मपरब्रह्मसर्वज्ञसर्वशक्तिस्वतन्त्रसत्ताश्रयतत्पदार्थाभिन्नतदात्मकपरतन्त्रसत्ताश्रयत्वंपदार्थ—जीवावच्छिन्नसर्वान्तरात्मा वासुदेवस्त्वं पदार्थोऽसीति वाक्यार्थ उक्तः। तत्र ननु त्वंपदस्य जीवपरतया प्रसिद्धस्य कथं जीवान्तरात्मपरत्वमित्याशङ्क्य ब्रह्मणः सर्वात्मत्वेन सर्वशब्दवाच्यत्वादेवेति समाधानं "सर्वाणि नामानि यमाविशन्ति, सर्वे वेदा यत्पदमामनन्ति, नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिशास्त्रात्। विस्तृतश्चैषोऽर्थोऽग्न्यादिदृष्टान्तेन श्रीपुरुषोत्तमाचार्यपादैरिति संक्षेपः। नन्वेवं त्वंशब्दस्य जीवान्तर्यामिपरत्वे त्वमसीति मध्यमपुरुषो न घटेत। नहि त्वदन्तर्यामिपरमात्माऽसीत्यन्वयो युज्यत इति चेत्। उच्यते—त्वदन्तर्यामीत्यादिशब्दान्तरेणोपस्थापिते जीवान्तर्यामिणि मध्यमपुरुषान्वयासम्भवेऽपि त्वमिति युष्मत्पदोपस्थापिते तस्मिन् तदन्वयो युज्यत एव। तथाच पाणिनिसूत्रं "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति। प्रत्यगर्थबोधकयुष्मच्छब्दोपपदे मध्यमपुरुषो-

---

मिति। अनवस्थान्योन्याश्रयादीनामित्यर्थः। अभेदस्य धर्मत्वे धर्मधर्मिभावे सिद्धे द्वैतापत्तिः निर्विशेषनिर्धर्मिकप्रतिज्ञाहानिश्च स्यादित्याह द्वैतापत्तेरिति। स्वमते परोक्तदूषणं निराकर्तुमाह वस्तुत इति। जात्यादिवदिति जात्यादेरिव प्रतियोग्यप्रतीतावपि स्वरूपतः प्रत्येतुं शक्या तथा भेदोऽपि वस्तुनः जात्यधिकरणस्य अन्याश्रयधर्म्यन्तरतद्धर्मस्वधर्मांश्च प्रतियोगिनः स्वस्य तु स्वाश्रयधर्मान्तरादिति विभागस्त्विह प्रतियोग्यपेक्षयेत्याह। प्रतीत्यपेक्षयति प्रतियोगिप्रतीत्यपेक्षयेत्यर्थः। नोक्तदोष इति भेदस्य स्वपरनिर्वाहकत्वेनानवस्था निरस्ता। भेदस्य धर्मविशेषस्वरूपत्वमेव स्वीकृतं न तु धर्मिस्वरूपत्वमतो न संशयानुपपत्तिरिति भावः। फलितार्थं दर्शयति। तत्सिद्धमिति। अभेदवाक्यानां समन्वयप्रकारं दर्शयति। ततश्चैवमिति। सामानाधिकरण्यं विभजते। तद्द्विविधमिति। अयथार्थरूपसामानाधिकरण्यस्य द्वैविध्यं दर्शयति। अयथार्थमपीति।

भवतीत्यर्थः । नपुनर्युष्मच्छब्दस्य प्रत्यगर्थद्वारा परमात्मपर्यन्तत्वे मध्यमनिवृत्तिरिति । "अधिकं तु प्रविष्टं न तद्धानिरि" ति न्यायात् । एवं "सोऽहमस्मि त्वं वा अहमस्मी" त्यादिष्वस्मात्युत्तमपुरुषेऽपि अहंपदेनाभिमुखचेतनद्वारा तदन्तर्यामिणोऽभिधानाभ्युपगमात्तत्रापि "अस्मद्युत्तमः" इति हि स्मर्यते । नत्वस्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे उत्तमनिवृत्तिरिति । येतु "तत्त्वमसि, सोऽहमस्मी" त्यादिषु अहंत्वमादिशब्दैर्युष्मदस्मदर्थत्यागेन निर्विशेषचिन्मात्रस्वरूपैक्यमेव वाक्यवेद्यमाहुस्तान् "तत्त्वमसी" त्यादिवाक्यस्थोऽसिशब्दः "सोऽहमस्मी" त्यादिवाक्यस्थोऽस्मिशब्दश्च खण्डयति । श्रोतरि अनुसंधातरि च युष्मदस्मदी, ते हि तैः परित्यक्ते । नहि तेषामसिना कश्चित्प्रबोधनीयः । न चास्मिना कश्चिद्विशिष्यानुसन्धेयोऽस्ति । ननु "त्वं वा अहमस्मि, अहं वै त्वमसी" त्यादौ त्वमहंपदयोरुभयोरपि श्रवणात्कथं पुरुषव्यवस्थेति चेत् ? उद्देशविषयकमेव युष्मदादिपदमुपपदत्वेन पाणिनिसूत्राभिप्रेतम्, तथा चोद्देश्यसमर्पकोपपदवशादेवात्र मध्यमोत्तमयोर्व्यवस्था सिध्यति । एवं "तत्त्वमसी" त्यत्रापि त्वंपदार्थ उद्देश्य एव । ततश्चोद्देश्यविषयकं त्वंपदमेव पुरुषनिमित्तम्, नतु तत्पदमपीति न प्रथमपुरुषप्रसङ्ग इति ॥ ४२ ॥

## मन्त्रवर्णात् ॥ २ । ३ । ४३ ॥

मन्त्रवर्णादप्युक्तार्थस्य निश्चयः । "एतावानस्य महिमाऽतोज्यायांश्च पूरुषः, पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी" ति भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि दर्शयति । पादशब्दोंऽशवाची चिच्छक्तेरेवांशत्वाभिधानं चात्र ॥ ४३ ॥

---

अध्यासस्यलक्षणमाह । तत्राध्यासोनामेति । तमुदाहरति । यथेत्यादिना । बाधितत्वं लक्षयत्युदाहरति च । बाधितत्त्वञ्चेति । उभयोः=अध्यासबाधयोः । यथार्थसामानाधिकरण्यं विभजते । यथार्थञ्चेति । अध्यासरूपसामानाधिकरण्यं प्रतिक्षिपति । तत्र न तावदिति । बाधरूपसामानाधिकरण्यं परिहरति । नापीति । विपक्षे बाधकतर्कमाह । अन्यथेति । ज्ञानबाध्यत्वे विशेषणविशेष्यभावरूपसामानाधिकरण्यमपाकरोति । नापीति । परिशिष्टसामानाधिकरण्यं दर्शयति । तथा चेत्यादिना । तत्त्वमस्यादिश्रुत्यर्थं दर्शयितुं तावत्पदार्थोक्तिमाह । तथाहीत्यादिना । उक्तश्रुतेः पूर्वाचार्य्योक्तार्थं दर्शयितुमाह । पूर्वाचार्य्यैश्चेत्रति । पदार्थानुक्त्य वाक्यार्थं दर्शयति । इत्थञ्चेत्यादिना । तत्र=वाक्यार्थे । शङ्कते । नन्विति । निस्तृत इति । यथा'ग्नेढंगि'त्यत्राग्निशब्दोऽकारगकाराद्यवच्छिन्नानुपूर्वीकाग्निशब्दवाचकः । यथाग्नौ जुहोतीत्यत्र स एवाग्निशब्दो दहनप्रकाशनादिशक्त्यवच्छिन्नवस्तु विधायकः । उभयार्थविधायकत्वमग्निशब्दस्य शक्यत्वेन मुख्यमेवेति शाब्दिकानां मतं तथैव ह्यौपनिषदानां सिद्धान्ते सर्वेषामपि ब्रह्मरुद्रादिचेतनाचेतनवस्तुमात्राणां शब्दानां तत्तत्पदार्थवाचकत्वे तत्तदात्मभूतब्रह्मपरत्वमविरुद्धम् । यथा चतुर्मुखादिपिण्डाश्चतुर्मुखादिशब्दानां शक्यास्तदवच्छिन्नाश्चेतयितारश्च उभयेऽपि चतुर्मुखादिशब्दैर्विधातुं सुशक्यास्तथा तेषां चतुर्मुखादिपिण्डतदवच्छिन्नचेतनज्ञाभिधानपरत्वे तेषामन्तरात्मत्वाद्ब्रह्माभिधानपरत्वं वक्तुं सुशकमितिभावः ॥ ४२ ॥

ब्रह्मणोंऽशो जीव इति मन्त्रवर्णादपि निश्चीयत इत्याह । मन्त्रमेवपठति 'एतावानस्ये'ति ॥ ४३ ॥

कुतश्चायमर्थोऽवगम्यतेऽतआह—

## अपि च स्मर्यते ॥ २ । ३ । ४४ ॥

भगवद्गीतासु श्रीमुखेनेति शेषः। "ममैवांशो जीवलोके जीवभूतः सनातनः" इति। चकाराच्छक्तित्वपरामर्शः। तथा च "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूतामि" त्यनेन जीवस्य शक्तित्वोक्तस्तस्यैवांशत्वगानादिति भावः। "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा, परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्। विष्णुशक्तिः परा प्रोक्ता चेतनाख्या तथापरा" इति वैष्णवे जनकवाक्याच्चास्य शक्तित्वनिश्चयः। तस्माच्चिच्छक्तेरेव स्वाभाविकभिन्नाभिन्नांशत्वमिति सिद्धम् ॥ ४४ ॥

स्यादेतत्तथापि जीवस्य स्वाभाविकाभिन्नांशत्वे जीवगताः दोषा ब्रह्मण एव स्युरित्याशङ्क्याह—

## प्रकाशादिवत्तु नैवं परः ॥ २ । ३ । ४५ ॥

यथा जीवः कर्मवशात्सुखदुःखमनुभवति नैवं परः परमात्मा तस्य तद्धेतोरभावात्। दृष्टान्तमाह। प्रकाशादिवदिति। यथा प्रकाशस्य सूर्यादेरंशः प्रभारूपा शक्तिरेवाभ्रादिभिरुपरुध्यते न सूर्यादिः। यथा वाऽग्नेर्दाहकत्वशक्त्यंश एव मणिमन्त्रादिना निरुध्यते यथा वा देहिनो मनुष्यादेर्देहरूपांश एव शस्त्रव्याध्यादिभिः छिद्यते विक्रियते च न देही चेतनः। 'न हन्यते हन्यमाने शरीरे, इति गानात्। तथा ब्रह्मांशस्यापि जीवस्यानादिकर्मात्मिकाविद्यापरियुक्तत्वात्तत्कृतसुखदुःखानुभवितृत्वं न परस्य तद्योगो दोषास्पृष्टस्वभावत्वात् ॥ ४५ ॥

## स्मरति च ॥ २ । ३ । ४६ ॥

यथा जीवदुःखेनेश्वरस्यादुःखित्वं तथा ऋषयः स्मरन्ति। "तत्र यः परमात्माऽसौ स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। कर्मात्मा त्वपरो योऽसौ

---

उत्तरसूत्रमवतारयति। कुत इति। सूत्रस्थचकारार्थं विवृणोति। चकारादिति। उक्तार्थं श्रीमुखवचनेन प्रमाणयति। तथाचेत्यादिना। उक्तार्थं श्रीपराशरवचसापि द्रढयति। एकदेशस्येति। उपसंहरति। तस्मादिति ॥ ४४ ॥

अनन्तरसूत्रशङ्कामाह। स्यादेतदिति। सूत्रार्थं व्याचष्टे। यथेति। तस्य=परमात्मनः। तद्धेतोः=सुखदुःखहेतोः कर्मणः। उक्तार्थं दृष्टान्तेन परबुद्धावारूढं करोति। यथाप्रकाशस्येति। उक्तार्थं प्रमाणेन द्रढयति। न हन्यत इति। दार्ष्टान्ते योजयति। तथेति। तत्कृत इति। अनादिकर्मात्मिकाविद्याकृत इत्यर्थः। तद्योगः=सुखदुःखादीनां योगः। "अपहतपाप्मा सत्यकामः सत्यसङ्कल्पः न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा स्वभावतोपास्तसमस्तदोषः', इत्यादीनि। वाक्यान्यनुसन्धेयानि ॥ ४५ ॥

ऋषिवाक्यं पठति। तत्रेति। सूत्रस्थचकारार्थमाह। चकारादिति। श्रीशङ्करमतं दूषयितुमुपन्यस्यति। येषान्त्विति। उक्तदोष इति। जीवगताः ब्रह्मणि स्युरिति दोषः। अतएव=ब्रह्मणो दोषवत्त्वादेव। तस्य=ब्रह्मणः।

मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनरि''ति । चकारात्समामनन्ति चेति ज्ञेयम् । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशी'ति । येषां तु जीवो वास्तवो नास्ति, ब्रह्मैवाविद्यया जीवभावं प्राप्तं तेषां कदापि कथंचिदपि नोक्तदोषोद्धारः सम्भवति । कर्मवश्यस्य वस्तुतोऽभावात् ब्रह्मण एव सर्वदोषप्रसङ्गः । अतएवोदाहृतश्रुतिस्मृत्योरपि न तत्र प्रामाण्यमस्ति । यदि तस्य स्वप्रकाशत्वेन निर्लेपत्वाङ्गीकारस्तर्हि सुखदुःखात्मककर्मसम्बन्धस्य तत्फलभोक्तुश्चाभावात्सर्वं शास्त्रं दत्ततिलाञ्जलि स्यात् । केचित्तु यथा शुक्लकृष्णादीनां गोत्वादिविशिष्टानां गवादिवस्तूनां गोत्वादीनि विशेषणान्यंशाः यथा वा देहिनो देवमनुष्यादेर्देहोंऽशस्तद्वत् । एकवस्त्वेकदेशत्वं ह्यंशत्वं विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव । तथा च विवेचकाः विशिष्टे वस्तुनि विशेषणांशोऽयं विशेष्यांशोऽयमिति व्यपदिशन्ति । विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते, एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यत इति सिद्धान्तयन्ति । तदसमीचीनम्, दृष्टान्तदार्ष्टान्तवैषम्यात् । तथाहि यदुक्तं 'गोत्वादिविशिष्टानां शुक्लकृष्णादीनां गवादिवस्तूनां गोत्वादीनि विशेषणान्यंशा इत्यारभ्यांशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते'इत्यन्तं तत्सत्यम्, नात्र विवादः । गोत्वादेर्देवमनुष्यादेर्देहस्य च विशेषणत्वसम्भवात् । व्यावर्त्यानां सत्त्वेन व्यावर्त्तकत्वात् । परन्तु यत्पुनरुक्तमेवं 'जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चे''ति तदयुक्तं, जीवपरयोर्विशेषणविशेष्यत्वासम्भवात् । चिदचितोर्ब्रह्मविशेषणत्वे ब्रह्मणश्च

---

पूज्यपादश्रीभाष्यकारश्च रामानुजमतं दर्शयति । केचित्त्वित्यादिना । द्रव्ययोरपृथक्सिद्धविशेषणविशेष्यभूतयोरंशांशित्वं वदता द्रव्ययोः शरीरात्मनोरप्यंशांशित्वमुक्तं भवतीत्यभिप्रायेणाह । यथा वा देहिन इति । प्रकाशादीनामंशत्वं कथमिति शङ्कायामंशस्वरूपं शिक्षयति । एकवस्त्वेकदेशत्वमिति । यद्येवं विशेष्यस्यापि परमात्मनोंऽशत्वप्रसङ्गः विशिष्टवस्त्वैकदेशत्वाविशेषात् । ततश्च जीवपरयोरविशेषत्वप्रसङ्गः । किञ्च "ममैवांशो जीवलोके जीवभूतः"इति विशेष्यभूतपरमात्मानं प्रत्येकदेशत्वं जीवस्य प्रतीयते न तु विशिष्टं प्रति ममेत्यस्य विशिष्टपरत्वे प्रमाणाभावात् । 'ईश्वरांशत्वं स्वरसतः प्रतीयत'इति वक्ष्यमाणत्वाच्च । विशिष्टे विशेषणमंश इति लोकप्रसिद्धतयाऽयमेवांश इत्युपदेशवैयर्थ्यात्तदर्थं समानाधिकरणत्वस्यापि व्यर्थत्वात् । किञ्च 'जीवभूतः सनातनः' इति विशिष्टजीवेंऽशत्वकीर्त्तनं व्यर्थम् । ईदृगंशत्वस्य चिदचित्साधारण्यात् । अतएवाचितः पार्थक्येनांशत्वसमर्थनपरमहिकुण्डलाधिकरणमपि व्यर्थमिति चेन्न ? अंशत्वस्य नियाम्यशेषत्वलक्षणशरीररूपत्वस्य इहाधिकरणे समर्थनीयत्वात् । वक्ष्यति च प्रधानतयोंऽशित्वोपपत्तिरिति । तदेव वृद्धव्यवहारेण द्रढयति । तथाचेति । ततः किं प्रस्तुतदोषस्पर्शशङ्कया इत्यत्राह । विशेषणविशेष्ययोरिति । बहुलत्वसङ्कुचितत्वविरलत्वविस्तृतत्वादिस्वभाववैलक्षण्यं दृश्यत इत्यर्थः । दृष्टान्ते शिक्षितं वैलक्षण्यं दार्ष्टान्तिके दर्शयति । एवमिति । तदपाकरोति । तदसमीचीनमिति । अत्र य उपादेयांशस्तं विभज्य दर्शयन्ननभिमतांशं दूषयति । तथाहीत्यादिना । व्यावर्त्तकं विशेषणं यथा नीलो घट इत्यत्र नीलविशेषणं स्वभिन्नं पीतं व्यावर्त्तयति प्रकृते तथा नास्ति व्यावर्त्याभावेन व्यावर्त्तकस्वरूप विशेषणं न घटत इत्याह । परन्त्वित्यादिना । अन्यादृशविशेषणत्वमाशङ्क्य परिहरति । न पीति । तदेवोपपादयति । यथेति । दृष्टान्तेनोक्तार्थं परबुद्ध्यारूढं करोति । अतसीपुष्पसङ्काशइति । प्रकृते तथात्वं

विशेष्यत्वेचिदचिद्ब्रह्मेतरतत्त्वानङ्गीकारात् । व्यावर्त्याभावेन व्यावर्तकत्वं विशेषणत्व-मिति विशेषणलक्षणसमन्वयाभावात् । नापि विशेष्यरञ्जकविशेषज्ञानहेतुत्वं विशेषणत्वम्, "यथा स्वरूपसत्त्वमात्रेण नहि किञ्चिद्विशेषणम् । स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणमि' ति वचनात् । "अतसीपुष्पसङ्काशो गोविन्दः" इत्यत्रातसीपुष्पसादृश्य-विशेषणजन्यज्ञानेन गोविन्दपदार्थो रज्यते ध्यातृबुद्धावुपस्थाप्यते । तथा चेतनाचेतनयोरेकत-रज्ञाने तदुभयज्ञाने वा विशेष्यभूतस्य ब्रह्मणो रञ्जकत्वाभावात् उपस्थापकत्वासम्भव एव । अन्यथाऽहमर्थतया ज्ञातजीवस्य देहादिरूपेण ज्ञाताऽचेतनस्य च पुंसो ब्रह्मज्ञानोपस्थिति-प्रसङ्गात् । ननु स्वाभाविकभेदाभेदपक्षोऽपि दोषबाहुल्यादसम्भव एव । तथाहीश्वरः स्वरू-पेणैव देवासुरनरतिर्यगादिभेदेनावस्थित इति तदात्मकत्ववर्णनात् । तथा च सत्येकमृत्पिण्डार-ब्धघटशरावादिगतान्युदकाहरणादिसर्वकार्याणि यथा तस्यैव भवन्ति, एवं सर्वजीवगतसु-खदुःखादिकं सर्वमीश्वरगतमेव स्यात् । घटशरावादिसंस्थानानुपयुक्तं मृद्द्रव्यं यथा कार्यान्त-रानन्वितमेवं सुरासुरपशुमनुजादिजीवत्वानुपयुक्तेश्वरांशः सार्वज्ञ्यादिगुणाकरः । नच सर्वे-श्वर एकांशेन कल्याणगुणाकरः, सएवान्यांशेन हेयगुणाकर इति युक्तम्, द्वयोरंशयोरीश्वरत्वावि-शेषात् कस्तेन लाभः ? एकस्यैवैकांशेन नित्यदुःखित्वमंशान्तरेण सुखित्वम् । किञ्चांशान्तरेण सुखित्वमपि नेश्वरत्वाय कल्पते । यथा देवदत्तस्यैकस्मिन्हस्ते चन्दनागुरुलेपकेयूराद्यलङ्कार-एकस्मिन्हस्ते मुद्गरादिपातो ज्वालाप्रवेशश्च तद्वदीश्वरस्यैव स्यादिति ब्रह्माज्ञानवादादपि महापापीयानयं पक्षः । अपरिमितदुःखस्य पारमार्थिकत्वाभ्युपगमात्संसारिणामनन्तत्वेन दुस्तरत्वादिति चेन्न । उक्तशंकायाः मह्रदभ्रान्तिकल्पितत्वात् । अस्माभिः स्वरूपभेदस्य स्वाभा-विकत्वाभ्युपगमात् नोक्तदोषसंपृक्तवातलेशस्पर्शावकाशः । श्रुत्यादिषु स्वाभाविकभेदाभेदप-क्षस्यैव राद्धान्तत्वात् । यदि जीवपरयोः स्वरूपेणाभेदोऽङ्गीकृतः स्यात्तर्हि भवदुक्तदोषकल्प-

---

नास्तीत्याह । तथा चेति । विपक्षे बाधकतर्कमाह । अन्यथेति । उक्तरूपेणोपस्थापकत्वाङ्गीकारे । स्वाभाविकभेदो भेदपक्षं प्रतिक्षिपति । नन्विति । दोषमेवोपपादयति । तथाहीत्यादिना तदात्मकत्ववर्णनादिति । ब्रह्मात्मकत्व-नादित्यर्थः । ततः किमित्यत आह । तथासतीति । ब्रह्मात्मकत्वे सतीत्यर्थः । तस्यैवेति । घटशरावादि-संस्थानोपयुक्तमृद्द्रव्यस्यैवेत्यर्थः । सर्वमीश्वरगतमेवेति । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावा-भ्युपगमाद् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति गुणदोषसाङ्कर्यापत्तिरिति भावः । नह्यस्माकं मते स्वरूपतो जीवेशयोरैक्यमभ्युपेयते येनोक्तदोषः प्रसज्येत किन्तु ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भेदः इतरेतरात्यन्त-विलक्षणत्वात् । "अस्थूलमनण्वि"त्यादिश्रुते । तत्र चेतनस्याणुत्वेन निर्देशार्हत्वम् । अचेतनस्य स्थूलत्वेन ब्रह्म-णस्तयोर्वैलक्षण्येनेति विवेक इत्याशयेनोक्तदोषं परिहरति । नेति । परपक्षप्रवेशं निरस्यति । नचेति । उत्तरभाविनामिति । पश्चाद्भाविनो ये मतवादिनस्ते पूर्वसिद्धं सिद्धान्तमुपजीवन्ति आश्रयन्तीति यावदित्यर्थः । स्वपक्षे दोषमुद्धृत्य परपक्षं गुणदोषसङ्करेण दूषयति । किञ्चेति । सार्वज्ञ्यादिविशिष्टे ब्रह्मणि चिदचित्त्वं विशेषणं किं केवले वा इति विकल्पयति । तथाहीत्यादिना । अन्त्यपक्षमपाकरोति । नान्त्य इति । विपक्षे बाधकतर्क-मुपन्यस्यति । इतरथेति । निरंशत्वाभ्युपगमे । दोषान्तरमाह किञ्चेति । सार्वज्ञ्यादिविशिष्टं भिन्नं चेत-

नात्रकाशः, सतु नास्त्येवेत्यर्थः। न चैवं परपक्षप्रवेशः। उत्तरभाविनामेव पूर्वसिद्धसिद्धान्तोपजीवित्वनियमात्। युष्मत्पक्षस्यैवास्मत्पक्षानुगामित्वसिद्धिरित्यर्थः। किञ्चाहोमनीषा पूर्वपक्षारोपकाणां स्वप्रयुक्तवज्रस्य स्वसिद्धान्तपर्वते पातो नालोचितः श्रीमद्भिः। सार्वज्ञ्यादिगुणाढ्ये भगवति परब्रह्मणि श्रीपुरुषोत्तमे चेतनाचेतनयोः पापादिजाड्यादिसंपृक्तयोर्वैशिष्ट्याङ्गीकारात्। तथाहि सार्वज्ञ्यादिविशिष्टस्य ब्रह्मणश्चेतनाचेतनविशेषणे अभिप्रेते केवलस्य वा ? नान्त्यः। निर्विशेषत्वानभ्युपगमात्, इतरथा सार्वज्ञ्यादीनामव्याप्यवृत्तित्वप्रसङ्गात्, मायावादप्रवेशाच्च। किञ्च सार्वज्ञ्यादिविशिष्टस्य चेतनाचेतनाविशिष्टस्य चेतरेतरभिन्नत्वे विशिष्टद्वयसिद्ध्या विशिष्टाद्वैतभङ्गात्। चेतनादिविशिष्टप्रदेशस्य सार्वज्ञ्यादिहीनत्वापत्त्या नियन्तृत्वभङ्गाच्च। तथात्वे च त्वत्सिद्धान्त एव त्वदुक्तिवज्रनिपातः। तथाहि यथा कस्यचिन्मानवस्य देहैकदेशे चंदनागुरुलेपादि देशान्तरे क्षारकर्दमादिलेपनं परिहासार्थं बालैर्लीलया क्रियते, तथा प्रकृतेऽपि परमेश्वरस्यैकदेशे मङ्गलगुणगणादिविविधभूषणयोगः, देशान्तरे सर्वदोषसंपन्नजीवादियोगस्तस्मान्महाबीभत्सितोऽयं भवतां सिद्धान्तः। नाप्याद्यः। विशिष्टवैशिष्ट्यापत्त्या विशिष्टाद्वैतसिद्धान्तभङ्गात्। किञ्च सार्वज्ञ्यादिसमस्तकल्याणगुणाढ्यस्यैव यदि चेतनादिवैशिष्ट्याभ्युपगमोऽभिप्रेतस्तर्हि सर्ववस्त्रभूषणायुधादिदिव्यालङ्कारसंपन्नस्य पुंसोऽतिजीर्णबीभत्सितनीलवस्त्रायोभूषणादिवेष्टनवत्सर्वदिव्यगुणगणाद्यलंकृतस्य भगवतः परब्रह्मण उपर्यपरिमितदुःखाद्यवच्छिन्नजीववैशिष्ट्यमभ्युपगतं स्यात्। तस्मान्मायावादादपि महादुष्टोऽयं पक्षः। तत्पक्षे सार्वज्ञ्यादिविशिष्टस्य भिन्नत्वाङ्गीकारात्। भवन्मते तूत्तमगुणभूषणस्यैव पापाद्यवच्छिन्नजीववैशिष्ट्याङ्गीकारात्। किञ्च तन्मते कल्पितत्वाङ्गीकारेण कदाचिन्निवृत्तिसम्भावनाऽपि भवति। भवन्मते तु कदाचिदपि कथमपि

---

नाचेतनविशिष्टं भिन्नमिति विशिष्टद्वयाङ्गीकारे विशिष्टाद्वैतशब्दार्थ एव नोपपद्येत इत्यर्थः। विशिष्टद्वयस्य भिन्नत्वेनैकदेशस्य नियन्तृत्वमपि नोपपद्येत इत्याह। चेतनादिविशिष्टप्रदेशस्येति। तथात्वे=नियन्तृत्वाभावे। परपक्षमुपहसन्नाह। तथाहीत्यादिना। सार्वज्ञ्यादिविशिष्टे ब्रह्मणि चिदचिद्वैशिष्ट्यापत्त्या विशिष्टाद्वैतसिद्धान्तभङ्गेनाद्यं पक्षमप्यपाकरोति। नाप्याद्य इति। उक्तदोषं विशदरूपेण निरूपयति। किञ्चेत्यादिना। ननु चेतनविशिष्टस्याचेतनविशिष्टं व्यावर्त्यं तद्विशिष्टस्य च चेतनविशिष्टं व्यावर्त्यमतो व्यावर्त्याभावाभावान्नोक्त दोष इति चेन्न। विशिष्टस्यैकत्वाभ्युपगमात्। अन्यथा विशिष्टाद्वैतसिद्धान्तस्य भङ्गप्रसङ्गात्। अपि च चेतनाचेतनविशिष्टाभ्यामितरेतरद्व्यवच्छिद्यतेऽतस्तयोः साफल्यमिति सत्यं नात्र विवादावकाशस्तथाप्युभयविशिष्टस्य व्यावर्त्याभावतादवस्थ्यमेव दोषइति। दोषान्तरमाह। अपि चेति। भेदः स्वाभाविकोऽभ्युपगम्यत एव भोक्तृभोग्यनियन्त्रात्मकविभागो निरुपाधिकः स्वरूपकृतः। एवकारोऽयोगव्यवच्छेदपरः। भोक्त्रादिविभागो न स्वाभाविक इति वक्तुं न शक्यत इत्यर्थः। भवद्भिरिति। स्वपक्षाम्नभवालोकयद्भिरकामैरपि। तथा च विशिष्टस्याभेदो भोक्तृभोग्यनियन्तॄणामितरेतरस्वाभाविको भेदश्च तव मुखेन प्रतिपाद्यते स्वाभाविकभेदाभेदाश्रयं ब्रह्मेत्यस्मत्पक्षः सुतरां सिद्धः। विशिष्टाङ्गीकारस्तु भवतां गौरवावह एवेति भावः। स्वाभाविकभेदानङ्गीकारे दोषमाह। अन्यथेति। साङ्कर्यञ्च भोक्तरि भोग्यत्वनियन्तृत्वयोः समावेशः। भोग्ये भोक्तृत्वनियन्तृत्वयोः, नियन्तरि भोक्तृत्वभोग्यत्वयोः समावेशो-

निवृत्तिमनोरथस्याप्यसंभवः यावदात्मवृत्तित्वाङ्गीकारात् । तस्मान्महत्पापीयानयं पक्षः श्रेयोऽर्थिभिरुपेक्षणीयः । अपि च ब्रह्मणो विशिष्टाद्वैतत्वाङ्गीकारेऽपि तस्य चेतनाचेतनाभ्यां स्वभावतो ऽभेदस्तयोश्च परस्परभेदः स्वाभाविक एवाभ्युपगम्यते भवद्भिः, अन्यथा स्वभावसाङ्कर्यप्रसङ्गात् । एवं च भेदस्याभेदस्य च स्वाभाविकत्वमंगीकृत्य पुनर्विशिष्टाङ्गीकारे गौरवमात्रत्वाद्वरीयस्त्वं स्वाभाविकभेदाभेदपक्षस्यैव लाघवादिति संक्षेपः ॥ ४६ ॥

ननु ब्रह्मात्मकत्वेन ब्रह्मांशत्वेन ज्ञानस्वरूपत्वेन च सर्वेषां समानत्वे केषांचिद्वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा केषाश्चित्तत्परिहारः, केषांचिद्दर्शनस्पर्शनाद्यनुज्ञा, केषांचित्तत्परिहारश्च शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह—

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ २ । ३ । ४७ ॥

सर्वेषां ब्रह्मांशत्वज्ञानस्वरूपत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपशुच्यशुचिदेहसम्बन्धनिबन्धनावनुज्ञापरिहारावुपपद्येते ज्योतिरादिवत् । यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते, श्मशानादेस्तु परिह्रियते । यथाऽन्नादि श्रोत्रियादेरनुज्ञायते, अन्त्यजादेस्तु परिह्रियते । यथा वा मूत्रपुरीषादि गवां पवित्रतयाऽनुज्ञायते, तदेव जात्यन्तरात्परिवर्ज्यते तद्वत् ॥ ४७ ॥

ननु सर्वेषामेकरूपत्वे देहसम्बन्धादनुज्ञापरिहारौ चेदेकेनाश्वमेधे कृते सर्वैः कृतं स्यादेकेन सुरापाने कृते सर्वैः कृतमिति कथं नोच्यते आत्मनो वास्तवैकत्वादित्याशङ्क्याह—

## असन्ततेश्चाव्यतिकरः ॥ २ । ३ ४८ ॥

ब्रह्मांशत्वेनैकरूपत्वे सत्यपि न व्यतिकरः । कुतः ? असन्ततेः अव्याप्तेः । सर्वजीवात्मनामणुपरिमाणकत्वात्प्रतिशरीरं स्वरूपेणैव भिन्नत्वाच्च न कर्मसङ्करः फलभोगसाङ्कर्यं वा । कर्तुर्भोक्तुः स्वेस्वे शरीरे स्वरूपेणैव वैलक्षण्यादित्यर्थः । अविद्याकल्पितजीववादे सत्युपाध्यवच्छिन्नब्रह्मजीववादे वा जीवब्रह्मणोः परस्परं जीवानां च कर्मतत्फलभोगव्य-

---

ऽनुसन्धेयः । जीवगता गुणा ज्ञातृत्वादयो भोग्यवर्गेऽचेतने ब्रह्मणि च प्राप्नुयुः, ब्रह्मधर्माः सार्वज्ञ्यनियन्तृत्वशास्त्रयोनित्वादयो जीवात्मनि भोग्यवस्तुनि चेति महादूषणकदम्बापातं इति निर्गलितार्थः । किञ्च "गौरवञ्च परित्यज्य लाघवन्तु समाश्रये"दिति लौकिकन्यायमाश्रित्य गौरवलाघवयोर्विवेकमाह । एवञ्चेति । ४६ ॥

सर्वेषां प्रत्यगात्मनां ब्रह्मांशत्वादिभिः समानत्वात् त्रैवर्णिकानां वेदाध्ययनादावनुज्ञा तदितरेषां तन्निषेधः, उत्तमवर्णानां दर्शनस्पर्शनादिः शास्त्रेणाभिहितस्तदन्येषां निषिद्धश्चेत्यत्र किंनियामकमित्याशङ्क्योत्तरसूत्रमवतारयन्नाह । नन्विति । उत्तमाऽधमदेहसंसर्गाधीनतया प्रत्यगात्मनां विधिनिषेधावुपपन्नौ भवत इत्याह । सर्वेषामिति । दृष्टान्तेनोक्तार्थं परबुद्धावारूढं करोति । ज्योतिरादिवदिति ॥ ४७ ॥

अनन्तरसूत्रशङ्कामाह । नन्विति । समन्तात्ततिः सन्ततिः व्याप्तिः विभुत्वमिति यावत् । तदभावोऽसन्ततिः व्याप्त्यभावः अणुत्वमिति यावत् इत्यभिप्रायेणाव्याप्तेरित्युक्तम् । परपक्षे भोगव्यवस्थानुपपत्तिमाह ।

तिकरादयः सर्वे दोषाः सन्ति, नास्मन्मते इति यावत् ॥ ४८ ॥

नन्वविद्याकृतजीवपक्षेऽपि उपाधितन्त्रो हि जीव उपाध्यसन्तानाच्च नास्ति जीवसन्तानस्तत्श्च कर्मतत्फलभोगस्य व्यतिकरादयो दोषा न सन्तीत्यत आह—

## आभासा एव च ॥ २ । ३ । ४९ ॥

अखण्डस्वप्रकाशचिन्मात्रशुद्धस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनरूपो हेतुराभास एव प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति धर्मान्तरानङ्गीकारात् । आभासा इति पाठे हेतव इति बहुवचनं ज्ञेयम् । चकारः श्रुत्यादिप्रमाणाभावं समुच्चिनोति । सजातीयविजातीयस्वगतभेदशून्यतत्त्ववादिनां मते ब्रह्मण्युपाधिकल्पने युक्तय आभासा एव, शास्त्रप्रमाणाभावश्चेति यावत् । चकारात् "पृथगात्मानं प्रेरितारं च मत्वा ज्ञाज्ञौ तयोरन्यः पिप्पलं स्वाद्वत्ती" त्यादिश्रुतिविरोधश्चेति । अविद्यापरिकल्पितोपाधिभेदेऽपि सर्वोपाधिभिरुपहितस्वरूपस्यैक्याभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव । विश्वापरे त्वाभास एवेत्येकवचनान्तं सूत्रं पठित्वाऽन्यमर्थं वर्णयन्ति, परमात्माभासो जीवः प्रतिबिम्बात्मा संसार्यविद्याकल्पितः । तस्य परिमितत्वादसन्ततेरव्यतिकर इति, तदयुक्तमाभासस्यावस्तुत्वाभ्युपगमात् । अवस्तुनः शशविषाणकल्पस्याचेतनस्य कुतो बन्धो मोक्षो वा कर्माधिकारो वा । न च परमात्मनः संसारित्वमस्तीत्यादिनाऽन्यैरपि निरस्तत्वात् ॥ ४९ ॥

ननु पारमार्थिकोपाध्यवच्छिन्नब्रह्मजीववादेऽनाद्यदृष्टप्रवाहेणोपाधिप्रवाहस्यानादित्वात्तत्सम्बन्धिनि जीवे ये दोषाः, न ते ब्रह्मणि प्रसज्यन्त इत्यत आह—

## अदृष्टानियमात् ॥ २ । ३ । ५० ॥

अदृष्टैरपि नियमो न सम्भवति । अदृष्टैस्तत्कृतोपाधिभिश्च ब्रह्मणश्छेदनासम्भवात्तत्कृता दोषा ब्रह्मण्येव स्युः ॥ ५० ॥

## अभिसन्ध्यादिष्वपि चैवम् । २ । ३ । ५१ ॥

अदृष्टहेतुभूताऽभिसन्ध्यादिषु सङ्कल्पादिष्वपि चैवं नियमासम्भव उपाधिब्रह्मव्यति-

---

अविद्याकल्पितवाद इति ॥ ४८ ॥

उपाधिभेदाद्भोगव्यवस्थामुपपादयन्नाह । नन्विति । सूत्रार्थं व्याचष्टे । अखण्डेति । आभासत्वमेवोपपादयति । प्रकाशैकस्वरूपस्येति । सूत्रस्थचकारार्थं विवृणोति । चकारइति । भोगसाङ्कर्यं दुर्वारमित्याह । अविद्यापरिकल्पित इति । श्रीशङ्करपादानां व्याख्यानं दूषयितुमुपन्यस्यति । किञ्चेति ॥ ४९ ॥

अनाद्यदृष्टमेवोपाधिभेदप्रयोजकमतो नाव्यवस्थेत्याशयेनोत्तरसूत्रमवतारयति । नन्विति । ब्रह्मप्रदेशानामुपाधिनावच्छिन्नत्वे तदभावे च प्रागुक्ता दोषा अनुसन्धेयाः । अदृष्टस्याप्यनियतत्वेनोक्ता व्यवस्था न सिद्ध्यतीति भावः ॥ ५० ॥

अभिसन्धिः सङ्कल्पः स चोपाधिसंयुक्तब्रह्मवृत्तिरेव तस्य ब्रह्मस्वरूपत्वाच्च तेन कश्चिद्विशेषो भवितु-

रिक्तवस्त्वन्तराभावात् पूर्वपूर्वोपाधिसंयुक्तं ब्रह्मैव संकल्पादयस्तद्गता एवेति न कश्चिद्विशेषः। आदिना श्रद्धादिपरिग्रहः ॥ ५१ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ २ । ३ । ५२ ॥

ननूपाधिसम्बन्धिब्रह्मप्रदेशादनुपहितब्रह्मप्रदेशो भिद्यतेऽतो व्यवस्थोपपद्यते इति चेन्न उपाधीनां तत्र तत्र गमनात्सर्वप्रदेशानां सर्वोपाध्यन्तर्भावाद्भोगादिव्यतिकरस्तदवस्थ एव। प्रदेशभेदेन सम्बन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात्प्रदेशसम्बन्धिदुःखं ब्रह्मण्येव स्यात् ॥ ५२ ॥ इति अंशाधिकरणम् ॥ १२ ॥

इति श्रीसनकसम्प्रदायवेदान्तकौस्तुभप्रभाख्यायां द्वितीयाध्याय-
तृतीयपादविवरणम् ॥ ३ ॥

---

महंति। नह्यदृष्टहेतुभूतसङ्कल्पेन ब्रह्मणोऽवच्छेदः सम्भवति तस्याच्छेद्यत्वात् सर्वप्रदेशानां ब्रह्मस्वरूपभूतप्रदेशत्वाच्चतत्प्रदेशसम्बन्धिदुःखं ब्रह्मण्येव प्रसज्येत इति भावः। श्रद्धादीत्यत्र आदिना। योगानुष्ठानादिकं विवक्षितम् ॥ ५१ ॥

उपाधिसम्बन्धिब्रह्मप्रदेशभेदं स्वीकृत्य भोगादिव्यवस्थोपपादयितुं शक्यत इत्याह। नन्विति। सूत्रस्य पूर्वपक्षभागं व्याख्यायोत्तरभागं विवृणोति। इतिचेन्नेति। जीवानामन्योन्यभेदव्यतिकरमाह। उपाधीनामिति। उपाधीनां गत्वरतयैकैकोपाधिषु सर्वात्मप्रदेशान्तर्भावात् सुखादिव्यवस्थानुपपत्तिरित्यर्थः ॥१२॥

जीवस्यात्यन्तभेदे गतिरुपचरणं स्यादभेदश्रुतीनां,
गाढाभेदे तु भेदश्रुतिततिसहितः सङ्करो दुर्निवारः।
तस्मादंशः परस्येत्युचितमिह स खल्वेकवस्त्वैकदेशो,
भिन्नाभिन्ने सुसिद्धः भगवति पुरुषे कारणे वासुदेवे ॥१॥

वेदान्तकौस्तुभप्रभायाः भावदीपिकाटीकायां द्वितीयाध्याये तृतीयपादव्याख्यानम्।

# द्वितीयाध्याये चतुर्थपादारम्भः ।

अथ प्राणोत्पत्त्यधिकरणम् ।

अथेन्द्रियाणां सृष्टिविप्रतिपत्तिं परिहरति । तत्र "एतस्मादात्मन आकाशः सम्भूतः, तत्तेजोऽसृजत" इत्यादिसृष्टिप्रकरणे प्राणोत्पत्त्यश्रवणात् "असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदिति, ऋषयो वाव तेऽग्रेऽसदासीत्तदाहुः केते ऋषयइति प्राणा वाव ऋषयः" इत्यत्र प्रागुत्पत्तेः प्राणानां सत्त्वश्रवणाच्च । "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणा" इति । "एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणि च" ति "सप्त प्राणाः प्रभवन्ति तस्मादि" ति "स प्राणमसृजत प्राणात् श्रद्धामि" त्यादिषूत्पत्तिश्रवणाच्च किं प्राणा जायन्ते न वा ? इति संशये किन्तावत्प्राप्तं, न जायन्ते इति । कुतः ? "असद्वा इदमि" ति सर्वाभावकथनपूर्वकतत्सद्भावश्रवणादत्र राद्धान्तः ।

## तथा प्राणाः । २ । ४ । १ ॥

यथा आकाशादिभूतानामुत्पत्तिस्तथा प्राणपदाभिधेयेन्द्रियाणामुत्पत्तिर्बोध्यां उक्तश्रुतिभिः । "स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः, पृथिवीन्द्रियं मनोऽन्नमि" त्युत्पत्तिश्रुतीनां बाहुल्यात् ॥ १ ॥

ननु सद्भावश्रवणविरोधादुत्पत्तिर्गौणीति चेदत्राह—

## गौण्यसम्भवात् ॥ २ । ४ । २ ॥

गौण्या असम्भवो गौण्यसम्भवस्तस्मात् । प्राणोत्पत्तिश्रुतेर्गौणत्वं न सम्भवति, प्रति-

---

अथप्राणोत्पत्त्यधिकरणम् ।

पूर्वस्मिन्पादे वियदादीनामुत्पत्तिबोधकश्रुतीनामविरोधः प्रदर्शितस्तत्प्रसङ्गात्प्रत्यगात्मनः स्वरूपं विवेचितम् तत्प्रतिपादकानां श्रुतीनां विरोधाभावो निरूपितः । सम्प्रति इन्द्रियाणामुत्पत्तिक्रम उच्यते । इति सङ्गतिः द्रष्टव्या । इन्द्रियाणि किं जीववन्नोत्पद्यन्ते उत वियदादिवदुत्पद्यन्त इति विप्रतिपत्तिं परिहरन्नाह । अथेति । प्राणानामुत्पत्तिः एतस्माज्जायत इति वाक्ये न श्रूयते इत्याह । एतस्मादिति । सृष्टेः प्रागिन्द्रियसद्भावगमकं वाक्यमुदाहरति । असद्वेति । एतावता संशयबीजं प्रदर्श्य सम्प्रति विचाराङ्गं संशयं दर्शयति किं प्राणो जायते न वेति तत्र पूर्वपक्षं संगृह्णाति । किन्तावदिति । पूर्वपक्षे हेतुं पृच्छति । कुतइति । सृष्ट्युत्पत्तेः प्राक् प्राणानां सत्त्वश्रवणान्नोत्पद्यन्ते प्राणा इति पूर्वपक्षे सिद्धान्तयति । अत्रराद्धान्त इति । सूत्रार्थं व्याचष्टे । यथेत्यादिना ॥१॥

सृष्टेः प्रागपि प्राणस्य सत्त्वं श्रूयते "असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदिति ऋषयो वाव

ज्ञाविरोधात् । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती" ति एकविज्ञानेन सर्ववि-ज्ञानं प्रतिज्ञाय तत्सिद्ध्ये इदमुच्यते "एतस्माज्जायते प्राणः" इत्यादि । सा च प्रतिज्ञा प्राणादेः सर्वविकारजातस्य तदुपादेयत्वाङ्गीकार एव सिध्यति, नान्यथा, उपादानापृथक्-सिद्धत्वादुपादेयस्येत्यर्थः । तथा "आत्मनो वा अरे ! दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि" त्याद्यन्यत्रापि श्रवणात् ॥ २ ॥

## तत्प्राक् श्रुतेश्च । २ । ४ । ३ ॥

तस्य जायत इति पदस्याकाशादिषु मुख्यस्य प्रागपि प्राणादिषु श्रवणादाकाशादि-वत्प्राणानां मुख्यैव जन्मश्रुतिः । "एतस्माज्जायते प्राणः" इति सकृदुच्चरितो बहुभिः सम्ब-ध्यमानो जायते इति शब्दः क्वचिन्मुख्यः क्वचिद्गौण इति निर्णेतुमशक्यत्वात् वैरूप्यप्रसङ्गात् । तथा "स प्राणमसृजत प्राणाच्छ्रद्धामि" त्यादावपि प्राणे श्रुतः सृजतिः परेष्वपि श्रद्धादि-ष्वनुषज्यते । तथा "आत्मनो व्युच्चरन्ति" इत्यादावप्येष न्यायो बोध्यः ॥३॥

## तत्पूर्वकत्वाद्वाचः । २ । ४ । ४ ॥

यद्यपि सृष्टिप्रकरणे तेजोऽबन्नानां त्रयाणामेवोत्पत्तिः श्रूयते, तथापि वाक्प्राण-मनसां ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वाभिधानात् "अन्नमयं हि सौम्य ! मनः आपोमयः प्राणस्तेजोमयी वागि" त्यत्र भूताप्यायकत्वादपि मुख्यमेव जन्मेति निश्चीयते । नहि स्वतः सिद्धं वस्तु परानुग्राहकत्वमपेक्षत इति भावः । तस्माद्वागादीनां भूतानुग्राह्यत्वं वदन्ती श्रुतिः तत्सद्भावमनुवदतीति तात्पर्यार्थः ॥ ४ ॥ इति प्राणोत्पत्त्यधिकरणम् ॥ ४ ॥

---

तेऽग्र" इत्यादिश्रुतौ "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" त्यत्र प्राणानामुत्पत्तिर्विहिता अत उभयोः श्रुत्यो-र्विरोधपरिहाराय प्राणानामुत्पत्तिप्रतिपादिका श्रुतिर्गौणी वक्तव्या इत्याशङ्क्ते । नन्विति । सूत्रार्थं विवृणोति । गौण्या असम्भव इति । कासौ प्रतिज्ञा कथं वा प्राणानामुत्पत्तेर्गौणत्वे तद्धानिरित्यत्राह । कस्मिन्निति । कथमे-तस्मादित्यादिना प्रतिज्ञा समर्थ्यते । तत्राह स चेति । नान्यथेति । प्राणस्य ब्रह्मकार्यत्वाभावेन तज्ज्ञानासम्भवात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न सिद्ध्येतेत्यर्थः ॥ २ ॥

प्राणानां मुख्यजन्मत्वे हेत्वन्तरमाह । तत्प्रागिति । तस्येति सूत्रविगृहीतं पदं तस्य प्रागपीत्यत्रान्वयः तच्छब्दो हि बुद्धिस्थं निर्वक्ति बुद्धिस्थाः खं मनो वायुप्रभृतयः । खाद्यपेक्षया प्रागेव प्राणादिषु निर्दिष्टं जायत इति जन्मवाचिपदं मुख्यमेव न तु गौणमित्यर्थः । एकवाक्ये पठितस्य शब्दस्य क्वचिन्मुख्यत्व क्वचिद्गौण-त्वमिति वैरूप्यं न युक्तमित्याह । वैरूप्यप्रसङ्गादिति । उक्तन्यायमन्यत्राप्यतिदिशति । तथेति ॥ ३ ॥

तेजसादीनां सृष्टिप्रकरणे प्राणस्य सृष्टिर्न श्रूयते किन्तु तेषामेव सृष्टेः शिष्टत्वादित्याशङ्कामनुवदति । यद्यपीति । सूत्रव्याख्यानेनोत्तरमाह । तथापीति । "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाक्" इति वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वाच्च प्राणस्य कार्यत्वमित्युक्तम् । तदयुक्तम् । आहङ्कारिकस्य मनसो वागिन्द्रियस्य च पृथिवीतेजःकार्यत्वायोगाद्वायुविशेषस्य प्राणस्याम्बुकार्यत्वाभावाच्च अत्राप्यायनमात्रं विवक्षितमित्यभिप्रेत्याह । भूताप्यायकत्वादिति । तावतापि नोत्पत्तिः सिद्ध्यतीत्यत्राह । नहीति । तस्मादिति । परानुग्राहकत्वसापेक्षत्वादे-वेत्यर्थः । तत्सद्भावम्=प्राणसद्भावम् ॥ ४ ॥ इति प्राणोत्पत्त्यधिकरणम् ।

अथ प्राणविषयकसङ्ख्याविप्रतिपत्तिपरिहारायेदमारभ्यते—

## सप्तगतेर्विशेषितत्वाच्च । २ । ४ । ५ ॥

कतीतरे प्राणा इति विषयः । "अत्र सप्त प्राणाः प्रभवन्ति तस्मादि" ति अष्टौ ग्रहा" इति, "सप्त वै शीर्षण्याः द्वाववाञ्चावि" ति, "नव वै पुरुषे प्राणा नाभिर्दशमी" ति, "दशेमे पुरुषे प्राणा आत्मैकादशे" त्यादिश्रुतिषु सप्तादिचतुर्दशपर्यन्ता प्राणसङ्ख्या दृश्यते अतः संशयः कतीतरे प्राणा इति । किं तावत्प्राप्तम् ? सप्तैव । कुतः ? गतेरिति । "सप्त प्राणाः प्रभवन्ति तस्मादि" ति श्रुत्यावगमात् । नच "गुहाशया निहिताः सप्त सप्ते" ति वीप्साश्रुतिविरोध इति वाच्यम्, वीप्सायाः पुरुषभेदाभिप्रायकत्वात् । तथा च प्रतिपुरुषं सप्तेत्यर्थः । नन्वेवमष्टत्वाद्यधिकसङ्ख्याश्रुतेर्व्याकोप इति चेत्तत्राह । विशेषितत्वाच्चेति । "सप्त वै शीर्षण्याः प्राणा" इति तावन्मात्रेण श्रुत्या विशेषितत्वात् । अधिकस्य चात्रैवान्तर्भावादित्यर्थः ॥ ५ ॥

अत्र सिद्धान्तः—

## हस्तादयस्तु स्थितेऽतो नैवम् । २ । ४ । ६ ॥

हस्तादयस्त्वन्ये प्राणाः सप्तभ्यो भिन्नाः श्रुत्या पठ्यन्ते । "हस्तौ वै ग्रहः स कर्मणातिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोती" त्यादिश्रुतिषु स्थिते सप्तत्वातिविलक्षणे सप्तानां तदधिकसङ्ख्यायामन्तर्भावो युक्तः, न त्वधिकसङ्ख्याया हीनसङ्ख्यायाम्, अन्याय्यत्वात् । अतः हस्तादीनां सप्तातिरिक्तत्वादेव नैवं, सप्तैवेति न मन्तव्यम् । तथा चैवं व्यवस्था ।

---

अथ सप्तगत्यधिकरणम् ।

अधिकरणस्य प्रयोजनं दर्शयति । अथेति । विषयादिप्रदर्शनेनाधिकरणं रचयति । कतीतर इति । सप्त प्राणा उत मुख्यप्राणादितरे प्राणाः कतिसङ्ख्याका इत्यधिकरणस्य विषय इत्यर्थः । संशयहेतुं श्रुतिविप्रतिपत्तिं दर्शयति । अत्र सप्तप्राणाः इति । चक्षुर्घ्राणं रसनं श्रोत्रं वाङ्मनस्त्वगिति सप्त प्राणाः ग्रहत्वेन बन्धनत्वेनेति यावत् । त एव सहस्ताधिकाः सन्तोऽष्टौ तेषां ग्रहत्वं बन्धनहेतुत्वात् । एतेषां विषयाः रूपादयोऽतिग्रहास्ते हि रागादिकमुत्पाद्येन्द्रियाकर्षकत्वाद् ग्रहानतिशेरते । द्वेश्रोत्रे द्वेचक्षुषी द्वेघ्राणे वागिति सप्त शीर्ष्णिभवाः शीर्षण्याः प्राणाः । द्वाववाञ्चौ पायूपस्थौ बुद्धिमनसी चेति नव । पुरुषे तदाकारे देहे शिरःपाण्यादिमत्युक्ता नव प्राणाः नाभिश्च दशमी दशानां पूरणीति श्रुत्यर्थः । पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चाप्नोतीत्यात्मेत्येकादश प्राणाः । त एव सहृदया द्वादश । त एव साहङ्कारास्त्रयोदश । क्वचिच्चतुर्दश सप्तसप्त इत्यादिषु इत्यर्थः । अतइति श्रुतिविप्रतिपत्तितः । प्रश्नपूर्वकं सूत्रं योजयति । किं तावदिति । गतेरिति हेतुं प्रश्नद्वारा व्याचष्टे । कुतइति । प्राणानां सप्तत्वं वीप्साविरुद्धमित्याशङ्क्य परिहरति । नचेति । गुहायां हृदये शेरत इति गुहाशयाः स्थानेषु निहिता क्षिप्ता इति यावत् । पुरुषभेदकृतवीप्सां प्रकटयति । प्रतीति । सङ्ख्यान्तरश्रुतिविरोधं शङ्कते । नन्विति ॥ ५ ॥

सिद्धान्तयति । अत्रेति । तत्प्रतिज्ञां विभजते । हस्तादयस्त्विति । सप्तत्वादतिरेकश्रुतेर्न सप्तत्वनियतिरित्याह । सप्तत्वातिविलक्षण इति । अधिके न्यूनप्रविष्टं नतु न्यूनेऽधिकमितिनियममाश्रित्य सप्तानामधिकेऽन्त-

प्राणास्तावदेकादशसङ्ख्याका एव। कार्यस्यापि तावन्मात्रत्वात्, फलाभावे साधनापेक्षाभावात्। "दशेमे पुरुषे प्राणा आत्मैकादशे" ति अत्रात्मशब्दोऽन्तःकरणरूपमनोवाचकः। करणस्यैवाधिकारात्। तत्र शब्दस्पर्शरूपरसगन्धविषयकानि पञ्चज्ञानानि तत्करणानि पञ्च-ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि। वचनादानविहरणोत्सर्गानन्दरूपाश्च पञ्च-कर्मविशेषास्तत्करणानि च पञ्च कर्मेन्द्रियाणि वाक्हस्तपादपायूपस्थाख्यानि। सङ्कल्पादिकं चान्तरं कर्म, तत्करणं च मन इति। "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा" इति श्रीमुखोक्तेः। तत्र सप्तसङ्ख्याया अन्तर्भावे दोषलेशावकाशोऽपि नास्ति। अधिकसङ्ख्याश्रुतेस्तु मनोवृत्तिभेदमादाय सामञ्जस्यं बोध्यम्। तथाहि मनस एव वृत्तिभेदेन चातुर्विध्यात् तस्यैव द्वित्वविवक्षया द्वादशत्वम्, त्रित्वविवक्षया त्रयोदशत्वम्, चतुष्कविवक्षया च चतुर्दशत्वं श्रुतिभिरुच्यते। तथात्वे च सर्वश्रुतीनां स्वार्थपरत्वेन नैराकाङ्क्ष्यात्सामञ्जस्यमेव। अधिकसङ्ख्याकल्पनस्य वैयर्थ्यादेकादशैव प्राणा इति सिद्धम् ॥ ६ ॥ इति सप्तगत्यधिकरणम् ॥ २ ॥

अथेन्द्रियाणां परिमाणविवादं परिहरति—

## अणवश्च । २ । ४ । ७ ॥

प्रकृताः प्राणा इन्द्रियाणि विभवः अणवो वा? किन्तावत् प्राप्तम्, विभव इति। कुतः? "ते एते सर्वे समा अनन्ता" इति अनन्तत्वश्रुतेः। अत्र राद्धान्तः। अणवश्च। चोनियोगे। प्रकृताः प्राणा अणव एव। कुतः? प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती" ति उत्क्रान्त्यादिश्रवणात्। तेषामुत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वाच्च न स्थौल्यमपीति भावः। न चानन्तविधायकवाक्यविरोधः शङ्कनीयः, तस्यासङ्ख्यातत्वविधानपरत्वात्। यद्वा "अथ यो हैताननन्तानुपास्ते" इति श्रुत्युक्तोपासनार्थत्वात्। न च मनसोऽणुत्वे सर्व-

---

भावं कुर्वन्नाह। सप्तानामिति। सूत्रं योजयति। अतइति। उक्तनियमादित्यर्थः। श्रुतीनां विरोधे सति मानान्तरानुगृहीता श्रुतिर्बलीयसी इति न्यायेन कार्यलिङ्गकानुमानगृहीतैकादशप्राणश्रुत्यनुसारेणान्याः श्रुतयो नेया इत्यभिसन्धायाह। तथा चैवं व्यवस्थेति। चातुर्विध्यञ्च अन्तःकरणं बुद्धिरहङ्कारश्चित्तञ्चेति। ततः किमिस्यत आह। तथात्वेति। उक्तव्यवस्थया प्राणसङ्ख्याविषयश्रुतिविवादाभावे सिद्ध इत्यर्थः। फलितार्थमाह। अधिकेति ॥ ६ ॥ इति सप्तगत्यधिकरणम्।

अथ प्राणाणुत्वाधिकरणम्।

सङ्क्षेपतोऽधिकरणतात्पर्यमाह। अथेति। संशयपूर्वकं पूर्वपक्षमाह। प्राकृता इति। श्रुतावानन्त्यश्रवणादेव प्राणानां विभुत्वं निश्चीयत इत्याह। ते एत इति। प्राणानामुत्क्रान्त्यानन्त्यश्रुतिभ्यां परिच्छिन्नत्वविभुत्वसन्देहे सिद्धान्तं तावदाह। अत्र राद्धान्त इति। प्राणानामुत्क्रान्तिश्रवणमेव तेषामणुत्वमत्र गमयतीति भावः। तेषाम्=प्राणानाम्। यद्यणुत्वं प्राणानां स्यात्तदाऽऽनन्त्यविधायकश्रुतेर्व्याकोपस्स्यादित्याशङ्क्य परिहरति। नचेति। आनन्त्यश्रुतेः निर्वाहमाह तस्या इति। ते एते सर्वे समा अनन्ता इति श्रुतेरित्यर्थः। समत्वश्रुतिः कार्यकरत्वविषया। आनन्त्यं सङ्घातत्वरूपं समुदायत्वरूपमिति यावत्। कार्यबाहुल्यमानन्त्यं

देहगतसुखदुःखाद्यनुभवाभावप्रसङ्ग इति वाच्यम्, तस्य सङ्कोचविकाशशीलत्वात्। अन्यथा ध्रुवादिविषयपर्यन्तानुभवानुपपत्तेः। अन्येषां चक्षुरादीनां तेन विनाऽकिञ्चित्करत्वादिति भावः ॥ ७ ॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

## श्रेष्ठश्च । २ । ४ । ८ ॥

प्राणसम्वादे शरीरधारणहेतुतया निश्चितो मुख्यः प्राणः श्रेष्ठशब्दाभिधेयः "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे" ति श्रुतेः। स च जायते न वेति संशये, न जायते। कुतः? "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्च नासे"ति श्रुतौ आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः प्राणस्य सद्भावावगमादिति प्राप्ते राद्धान्तः। श्रेष्ठश्चेति। श्रेष्ठः मुख्यः प्राणोऽपि भूतादिवदुत्पद्यते। कुतः? "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि"चेत्यत्र मनस इन्द्रियेभ्यश्च तस्य पार्थक्येनोत्पत्तिश्रवणात्। न चोक्तश्रुतिविरोध इति वाच्यम्, तस्याः परमकारणब्रह्मपरत्वात्। नाप्यानीदिति पदं प्राणसद्भावे मानम्, अवातमिति विशेषणश्रवणात्। "अप्राणोह्यमना"इति श्रुत्यन्तरोक्तब्रह्मलिङ्गत्वादवातस्य अवातमप्राणमित्यर्थः। अन्यथाऽद्वितीयादिश्रुतिव्याकोपादित्यर्थः। पूर्वन्यायसिद्धे पृथग्योगकरणमुत्तरचिन्तार्थम् ॥ ८ ॥ इति मुख्यप्राणोत्पत्त्यधिकरणम्।

## न वायुक्रिये पृथगुपदेशात् ॥ २ । ४ । ९ ॥

---

तेन रूपेणोपासनार्थमानन्त्यकथनमित्याशयेनानन्त्यमुपपादयन्नाह। यद्वेति। मनसोऽणुत्वे कथं सर्वशरीरवृत्तिसुखदुःखानुभवो घटेत इत्याशङ्क्य परिहरति। नचेति। तस्य=मनसः। विपक्षे बाधकतर्कमाह। अन्यथेति। सङ्कोचविकाशशीलत्वानभ्युपगमे ॥ ७ ॥ इति प्राणाणुत्वाधिकरणम्।

अथ मुख्यप्राणोत्पत्त्यधिकरणम्।

प्राणस्य श्रेष्ठशब्दाभिधायत्वे हेतुं वदन् सूत्रं विवृणोति। प्राणसम्वादइति। प्राणसम्वादो नाम छान्दोग्यप्रकरणविशेषः। उक्तार्थं श्रुतिमुखेन प्रमाणयति। प्राणोवावेति। स च श्रेष्ठः प्राण उत्पद्यते नवेति संशयमाह। स चेति। तर्हि=प्रलयकाले। मृत्युः=मारको मृत्युमत्कार्यं वा नासीत्। अमृतं=देवभोग्यं नासीत्। रात्र्याः प्रकेतश्चिन्हरूपश्चन्द्रः, अन्हः प्रकेतः सूर्यश्च नास्ताम्। स्वधया सहेत्यन्वयः। पितृभ्यो देयमन्नं स्वधा। अत्रानीदिति=तच्चेष्टां कृतवदिति पूर्वपक्षार्थः। तस्मात्परब्रह्मणः परः परमुत्कृष्टमन्यच्च किमपि न बभूव इति श्रुत्यर्थः। आनीदित्यस्य पूर्वपक्षोक्तमर्थमाह। किञ्चेति। उक्तेः श्रुतेर्विरोधं परिहरति। नचेति। तस्याः=उक्तश्रुतेः। वायोर्लिङ्गं परिहरति। नापीति। अवातमिति न जीवसम्बन्धिश्रेष्ठं प्राणमभिप्रेत्योच्यते किन्तु परस्य ब्रह्मण एव लिङ्गमित्यत्र श्रुतिं प्रमाणयति। अप्राणइति। विपक्षे बाधकतर्कमुपन्यस्यति। अन्यथेति। ईश्वरलिङ्गत्वाभावे। प्राणानामुत्पत्तिश्च "तथा प्राणा" इति सूत्रेणैव सिद्धा पृथग्योगकरणं किमर्थमित्यत आह। पूर्वन्यायसिद्धेरिति। अधिकशङ्कानिराकरणार्थमिति भावः ॥ ८ ॥ इति मुख्यप्राणोत्पत्त्यधिकरणम्।

स पुनः स मुख्यः प्राणः किं वायुरुत करणव्यापार अथ वायुरेव कश्चन विशेषमापन्न इति संशये राद्धान्तमाह। प्राणः वायुतत्त्वान्तर्गत इन्द्रियो व्यापाररूपा तत्क्रिया च न भवति। कुतः ? पृथगुपदेशात्। न चैवं 'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति श्रवणविरोध इति वाच्यम्, 'प्राण एव ब्रह्मणश्चतुर्थपादः स वायुना ज्योतिषा भाति च तपति चे''ति श्रुतेः। नहि वायुरेव सन्वायोः पृथगुपदिश्येत इत्यर्थः। तथा क्रियाख्यः करणव्यापारोऽपि पृथक्त्वेनोपदिश्यते, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे" त्यत्र प्राणस्य करणेभ्यः पृथगुपदेशात्। नहि सर्वेषां कारकाणामेकव्यापारत्वसम्भवः। प्रत्येकं तेषां भिन्नव्यापारत्वनियमात्। अन्यथा सर्वेषामपि सर्वव्यापारकत्वापत्तेः। नच "यः प्राणः स वायुरि"त्यादिश्रुतिविरोधस्य तादवस्थ्यमिति वाच्यम्, वायुरेवायमध्यात्मभावात्मकावस्थापन्नः पञ्चरूपात्मना वर्त्तमानः प्राणाख्ययोच्यते न द्रव्यान्तरम्, न वा वायुमात्रमित्यविरोध उभयश्रुतेः। एतेन "सामान्या करणवृत्तिः प्राणाद्या, वायवः पञ्चे''ति करणानां सामान्या वृत्तिः प्राण इति साङ्ख्यपक्षो निरस्तः॥ ९॥

ननु "सुप्तेषु वागादिषु प्राण एको जागर्ति प्राण एको मृत्युनाऽनाप्तः प्राणः सम्वर्गो वागादीन्सम्वृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रानि''ति प्राणस्य शरीरेन्द्रियादीन् प्रति स्वातन्त्र्यश्रवणात् स्वतन्त्रः प्राण इत्यभ्युपगन्तव्यमित्याशङ्क्य समाधत्ते—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २ । ४ । १० ॥

तु शब्दः पक्षव्यावृत्त्यर्थः। तथा चक्षुरादीनि जीवकर्तृत्वादिव्यापारं प्रति करणानि तथा मुख्यप्राणोऽपि राजमन्त्रिवदुपकरणभूत एव, न स्वतन्त्रः। कुतः ? तत्सहशिष्ट्यादिभ्यः। शिष्टिः शासनं चक्षुरादिभिः सह तस्यापि शासनश्रवणात्प्राणसम्वादे। तत्सजातीयत्वे

---

अथ वायुक्रियाधिकरणम्।

वायुप्राणयोर्भेदाभेदश्रुतीनां विप्रतिपत्त्या संशयं दर्शयति। स पुनरिति। प्रतिज्ञां पूरयन् सूत्रं विवृणोति। प्राणइति। पृथगुपदेशहेतुं विशदयितुमाशङ्कते। एवं यः प्राणइति। प्राण एव ब्रह्मण इति मनो ब्रह्मेत्युपासीत इत्युपक्रम्य मनोब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैः पादैश्चतुष्पात्त्वमभिहितम्। मनो हि वागादिभिः स्वविषयेषु गौरिव पादैः प्रवर्त्तते तत्र प्राण एव मनोब्रह्मणो वागाद्यपेक्षया चतुर्थपादः। स च वायुनाधिदैवकेन भाति अभिव्यज्यते स्वव्यापारे च तपत्युद्गच्छतीतिश्रुत्यर्थः। इत्यर्थ इति। पृथगुपदेशादितिहेतोरर्थं इति। नापि क्रियाख्यकरणव्यापार इत्यत्र पृथगुपदेशहेतुं विभज्य व्याचष्टे। तथा क्रियाख्य इति। तदेवोपपादयति। नहि सर्वेषामिति। बाधकतर्कमाह। अन्यथेति। भिन्नव्यापारत्वे श्रुतिविरोधमाशङ्क्य परिहरति। नचेति। यथा मृदो घटो न वस्त्वन्तरं नापि मृन्मात्रं तद्विकारत्वात् तथा वायोर्विकारः प्राण इत्यभेदश्रुतेः विरोधं परिहरन्नाह। यःप्राणइति। उभयश्रुतेरिति। यः प्राणः स वायुरितिश्रुतिः। एतस्माज्जायते प्राण इति श्रुतिश्चेत्यर्थः। साङ्ख्यानां पक्षं प्रतिक्षेप्तुमाह। एतेनेति। वायुः न करणव्यापारः कुतः पृथगुपदेशादित्यनेनेत्यर्थः॥९॥

यथा चक्षुराद्यपेक्षया जीवस्य स्वातन्त्र्यं तद्वत् प्राणस्यापि श्रेष्ठत्वात् प्रधानत्वात् स्वातन्त्र्यं स्यादित्याशङ्कते। नन्विति। तस्य प्राधान्यं श्रुतिमुखेन प्रमाणयति। सुप्तेष्विति। सूत्राक्षराणि विवृणोति। तु शब्द इति। भवतु

हि तैः सह शासनं युज्यते, प्राणशब्दपरिगृहीतकरणेष्वस्य विशिष्याभिधानमादिशब्देन ग्राह्यम् । अथ "य एवायं मुख्यः प्राणः योऽयं मध्यमः प्राणः" इत्यादिषु विशिष्याभिधानाज्जीवं प्रति चक्षुरादिवदुपकारकत्वमिति सिद्धम् ॥ १० ॥

ननु यदि चक्षुरादिवदस्य जीवं प्रत्युपकरणत्वं तर्ह्यस्य विषयरूपकार्यमपि द्वादशमङ्गीकार्यं, तथा चैकादशसङ्ख्याककार्याभ्युपगमसिद्धान्तभङ्ग इत्याशङ्कायां समाधानमाह—

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ २ । ४ । ११ ॥

च शङ्कोच्छेदार्थः । नोक्तदोषप्रसङ्गावकाशः । चक्षुरादिवत् मुख्यप्राणस्य अकरणत्वात् जीवव्यापारं प्रति तस्य करणत्वाभावात् । तर्हि किमर्थोऽस्याङ्गीकारस्तत्राह । तथाहि दर्शयति । हीति निश्चयार्थः । श्रुतिस्तस्य भिन्नमसाधारणं कार्यान्तरं दर्शयतीत्यर्थः । तथाहि प्राणसम्वादे "अथ ह प्राणा अहं श्रेयसे व्यूदिरे" इत्युपक्रम्य, "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः" इत्युक्ते वागादीनां प्रत्येकमुत्क्रान्तौ अवचनादिवृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा प्राणस्योच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसक्तिं च निरूप्य, प्राणाधीनां देहादिस्थितिं प्राणासाधारणकार्यभूतां दर्शयति । "तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाऽहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामी" ति । किञ्च "प्राणेन रक्षन्नवरं कुलायमि" ति चक्षुरादीनां लये प्राणकृतदेहादिरक्षां दर्शयति । किञ्च "कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी" ति । "स प्राणमसृजते" त्यादिना प्राणाधीनां जीवस्य स्थितिमुत्क्रान्तिं च दर्शयतीति ॥ ११ ॥

ननु तथापि नैकत्वं प्राणस्यानेकत्वश्रवणात् । तथाहि प्राणोऽपानो व्यान उदानः समानश्चेति तत्र प्राग्वृत्तिरुच्छ्वासादिकर्मा नासादिसञ्चारी प्राणः । अपानोऽर्वाग्वृत्तिः । निःश्वासादिकर्मा व्यानस्तयोः सन्धौ वर्तमानो वीर्यवत्कर्महेतुरुदानः । ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः समानः । "समं सर्वेष्वङ्गेषु रसन्नयती" ति । एवं संज्ञासङ्ख्याकार्यभेदात्त-

---

करणेभ्यः प्राणस्य श्रेष्ठत्वं प्रधानत्वं तथापि संहतत्वादचेतनत्वात् भौतिकत्वाच्च चक्षुरादिभिः सहशिष्टत्वात् पुरुषार्थत्वात्पुरुषं प्रति परतन्त्र्यं शयनासनादिवत् । यथा राजमन्त्री अन्यराजभृत्येषु प्रधानमपि राजानमपेक्ष्य परतन्त्र एव एवं प्राणोऽपि इन्द्रियापेक्षया प्रधानमपि जीवेऽस्वतन्त्र इतिभावः ॥ १० ॥

चक्षुरादीनां करणानां रूपरसगन्धादयः विषयाः सन्ति प्राणस्यापि विषयान्तरं वक्तव्यं तथात्वे एकादशकरणगणनव्याकोपः प्रसज्येत इत्याशङ्क्य सूत्रमवतारयति । नन्विति । यदि चक्षुरादिवदस्य करणत्वं स्यात्तदा विषयान्तरस्य प्रसक्तिर्भवेन्नत्वेवमिति परिहरति । नोक्तदोषप्रसङ्गावकाश इति । अहं श्रेयसि=स्वस्वश्रेष्ठतानिमित्तम् व्यूदिरे=विवादं चक्रिरे । अवरं=नीचम् । कुलायम्=देहाख्यं गृहं प्राणेन रक्षञ्जीवः स्वपितीत्यर्थः । प्राणस्य कार्यान्तरं श्रुत्यन्तरेण दर्शयति । किञ्चेति ॥ ११ ॥

स्वान्तरत्वमेव तेषामिति चेत्तत्राह—

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते । २ । २ । १२॥

प्राणादिसंज्ञकाः पञ्च पञ्चवृत्तिः प्राण एव न तत्त्वान्तरम्, "एतत्सर्वं प्राणएवे" ति वचनात् । तत्र दृष्टान्तः । मनोवदिति । "कामः सङ्कल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे" ति वत् । यथा सङ्कल्पादयो मनोवृत्तिविशेषास्तथा प्राणोपानादयोऽपि प्राणवृत्तय इत्यर्थः ॥ १२ ॥ इति वायुक्रियाधिकरणम्

स चाणुरित्याह—

## अणुश्च । २ । ४ । १३ ॥

व्याख्यातप्रायमितरप्राणोक्तन्यायस्यात्राप्यनुसरणीयत्वात् । ननु "समप्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण प्राणे सर्वं प्रतिष्ठितं प्राणेनावृतमि" ति विभुत्वश्रवणाद्विभुत्वमेव । अन्यथोक्तशास्त्रविरोधो दुःपरिहर इति चेन्न, उक्तश्रुतेः समष्टिप्राणपरत्वेनाविरुद्धत्वात् ॥ १३ ॥ इति श्रेष्ठाणुत्वाधिकरणम् ।

अथेन्द्रियाणि स्वतन्त्रतया स्वयमेव स्वकार्ये प्रवर्तन्ते स्वस्वाधिष्ठातृदेवताप्रेरितानि वा ? किन्तावत्प्राप्तं, स्वयमेव प्रवर्तन्त इति । कुतः ? तेषां तादृक्शक्तिमत्त्वात् । अत्र ब्रूते—

## ज्योतिराद्यधिष्ठानं तु तदामननात् । २ । ४ । १४ ॥

ज्योतिरादिभिरग्न्यादिभिरधिष्ठानमधिष्ठितं वागादिकरणजातं देवताप्रवर्तितं सत् स्वकार्यार्थं प्रवर्तते, न स्वातन्त्र्येण । कुतः ? तदामननात् । "अग्निर्वाग्भूत्वा मुखं प्राविशत्,

---

न तत्वान्तरमिति । संज्ञाभेदात् कार्यभेदात् न प्राणापानादयस्तत्स्वान्तराणीत्यर्थः । मनसो वृत्तयो कामादयः यथा तत्वान्तरेण न विभक्तास्तद्वत् प्राणस्य पञ्चवृत्तयोऽपि । दृष्टान्तदार्ष्टान्तिकद्वयमपि वेदसिद्धमित्याह । एतत्सर्वमिति । काम इत्यादि । कामः=इच्छा । विचिकित्सा=सन्देहः । श्रद्धात्वराध्यधीश्चिन्ता । कामादयो ज्ञानावस्थाविशेषाः । तत्तदवस्थज्ञानहेतुर्मनः । इतीदं तैः शब्दैरुच्यते तत्तद्धेतुत्वं मनोवस्था ॥ १२ ॥ इति वायुक्रियाधिकरणम् ।

अथ श्रेष्ठाणुत्वाधिकरणम् ।

प्राणस्याणुत्वं पूर्ववदुत्क्रान्त्यादिश्रवणात् । तमुत्क्रामन्तं प्राणोऽनुत्क्रामति इत्यादिषु । अधिकशङ्कानिवृत्त्यर्थमिदं सूत्रमित्याह । व्याख्यातप्रायमिति । तदेव विवृणोति । इतरेति । अधिकशङ्कामेव दर्शयति । नन्विति । प्लुषिर्मशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते । नागो हस्ती । अन्यथेति । विभुत्वानङ्गीकारे । प्राण उत्क्रामतीति श्रुत्याऽणुत्वं प्राणस्य निश्चीयते समोऽनेन सर्वेणेति श्रुत्या विभुत्वमिति विरोधं परिहरति । नेति ॥ १३ ॥ इति श्रेष्ठाणुत्वाधिकरणम् ।

अथ ज्योतिरधिष्ठानाधिकरणम् ।

विचाराङ्गं संशयं दर्शयति । अथेति । नाधिष्ठातृसापेक्षमिति पूर्वपक्षयति । किन्तावदिति । सिद्धा-

वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदि" त्यादि-श्रवणात्। अध्यात्माधिभूताधिदैवैः सर्वज्ञानक्रियाव्यवहारसिद्धिरिति तात्पर्यार्थः। तत्राध्यात्म-शब्दः करणपरः। अधिभूतशब्दो विषयपरः, अधिदैवशब्दश्च करणाधिष्ठातृदेवतावर्गवाचकः। "चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतं श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्त-त्राधिदैवतं नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतं जिह्वाऽध्यात्मं रसयितव्य-मधिभूतं वरुणस्तत्राधिदैवतं त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतमि" त्यादिश्रुतिभ्यः। अत्र पृथिवीशब्देनाश्विनौ लक्ष्येते, शास्त्रान्तरविरोधपरिहारार्थं जडायाः प्रेरकत्वासम्भवात्। "वागध्यात्ममिति प्राहुर्ब्राह्मणाः तत्त्वदर्शिनः। वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतमि" त्यादिस्मृतेश्च। उक्तहेतोराभासत्वं निर्णीतं भवति, रथादीनां शक्ति-मत्त्वेऽपि अनडुहादिकं विना प्रवृत्त्यदर्शनात्। अप्रयोजकत्वं जडत्वेन सत्प्रतिपक्षत्वं च। इन्द्रियाणि न स्वातन्त्र्ययोग्यानि जडत्वात्, करणत्वाद्वा रथादिवत्, वास्यादिवच्चेति। तस्माच्छास्त्रादिप्रमाणबलेन पराधिष्ठितत्वसापेक्षत्वमेवेति सिद्धम् ॥ १४ ॥

ननु यदि देवताधिष्ठितत्वमेव तेषामङ्गीक्रियते तर्हि तदधिष्ठातृदेवतानामेव भोक्तृत्व-मपि स्वीकार्यं चेतनत्वात्तथात्वे च शरीरिभोक्तृत्वस्याप्रयोजकत्वापत्तिरित्याशङ्क्य तत्परि-हारमाह—

## प्राणवता शब्दात्। २। ४। १५॥

प्राणोऽस्यास्तीति प्राणवांस्तेन प्राणवता प्राणोपलक्षितदेहेन्द्रियादिसमुदायस्वामिना शारीरेणैव प्राणानां सम्बन्धो, न देवताभिः। कुतः? शब्दात्। श्रुतिमुखेन तथैवावगमात्। "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमि" त्यादिश्रुतिः शारीरेणैव प्राणानां सम्बन्धं दर्शयति। प्रमपुरुषेणेन्द्रियाधिष्ठातृदेवानां द्वारि द्वारपालानामिव करणप्रवर्तकत्वे निरूपितत्वात् न भोक्तृत्वादिषु, नहि स्वामिभोगे द्वारपालानामधिकारः सम्भवति। तासां तद्भिन्नदिव्य-

---

न्तयति। अत्र ब्रूत इति। उत्तरपक्षप्रतिज्ञां प्रकटयति। ज्योतिरादिभिरिति। हेतुमवतारयति। कुतइति। हेतुं व्याचष्टे। तदामननादिति। अध्यात्माधिभूताधिदैवशब्दानामर्थं विवृणोति। तत्रेति। उक्तेषु। उक्तार्थं श्रुतिमुखेन प्रमाणयति। चक्षुरध्यात्ममिति। उक्तेऽर्थे स्मृतिमपि सम्वादयति। वागित्यादीति फलितार्थमाह। उक्तहेतोरिति। तेषां तादृक्शक्तिमत्त्वहेतोरिति तदर्थः। उक्तहेतोरप्रयोजकत्वं दर्शयति। रथादीनामिति। वादिनो हेतोराभासत्वं स्पष्टयति। जडत्वेनेति। प्रयोगं दर्शयति। इन्द्रियाणीति। निगमयति। तस्मादिति। उक्तहेतोर्दुष्टत्वा-देवेत्यर्थः ॥ १४ ॥

इन्द्रियाणामधिष्ठात्र्यो देवता भोक्त्र्यः स्युस्तासां चेतनत्वात् तथा सति प्रत्यगात्मनो भोक्तृत्वमनुप-पन्नमिति शङ्कते। नन्विति। सूत्रार्थं व्याचष्टे। प्राणइति। श्रुतिवाक्यमुदाहरति। अथेति। यत्र यस्मिन्नु-पकरणत्वेनानुविषण्णं निबद्धं चक्षुराकाशं रूपादिप्रकाशकं सचाक्षुषः चक्षुरूपकरणकः पुरुष आत्मा चक्षुस्तु दर्शन-

भोगदानाच्च। तस्माद्भगवदाज्ञया शारीरकरणानि स्वस्वकार्ये प्रेरयन्त्यो दिव्यभोगान् भुञ्जन्ति, श्रीभगवदाज्ञाभङ्गभिया नान्यत्र भोगे तासां प्रवृत्तिरिति भावः। "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, एतस्यैवाक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना देवतानां परनियोज्यत्वश्रवणात्। "सर्वस्य चाहं हृदि सन्निविष्टः" इत्यादिस्मृतेश्च ॥ १५ ॥

## तस्य नित्यत्वात्। २। ४। १६॥

तस्य करणसम्बन्धस्य शारीरेणैव नित्यत्वान्न देवताभिरिति सूत्रार्थः। उत्क्रान्त्यादौ तदनुवृत्तिदर्शनात् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती" तिश्रुतेः। तस्मात्करणाधिष्ठातृदेवतानां सत्त्वेऽपि शारीरस्यैव भोक्तृत्वं, न देवतानामिति सिद्धम्। अत्र कैश्चित् तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तं परायत्तं? वेति विशये स्वायत्तमिति प्राप्ते उच्यते। ज्योतिराद्यधिष्ठानमिति। प्राणवता जीवेन सह ज्योतिरादीनामग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात् तस्य परमात्मनः सङ्कल्पादेव भवतीत्यर्थः। कुतः? शब्दात्। इन्द्रियाणां साभिमानिदेवतानां जीवात्मनश्च परमपुरुषामननाय तत्त्वं शास्त्रात् इति सिद्धान्तितम्, तच्चिन्त्यम्। यद्यपि चेतनाचेतनस्वरूपस्थित्यादिकं परमेश्वरायत्तमिति सर्वसम्मतम्, अस्माकं तु अभीष्टतममेव श्रुतिप्रमाणसिद्धत्वात्। तथापि उक्तार्थस्य "परात्तु तच्छ्रुतेरि" त्याद्युक्तशास्त्रेणैव सिद्धतया पौनरुक्त्यदोषस्यावश्यंभावादिति मनीषिभिरनुसन्धेयम् ॥ १६ ॥

ननु यथा प्राणापानादयो मुख्यप्राणस्य वृत्तिविशेषास्तथेतरे प्राणाश्चक्षुरादयोऽपि तद्वृत्तय एव। न तत्त्वान्तराणि। कुतः? तथैव श्रूयमाणत्वात् 'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्नि' त्यादिना। किञ्च प्राणैकशब्दश्रवणादपि तत्त्वाभेदो निश्चीयते इत्याशङ्क्योत्तरमाह—

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। २। ४। १७॥

ते प्रकृताः प्राणा वागादय इन्द्रियाण्युच्यन्ते। तानि तत्त्वान्तराण्येव। न मुख्यप्राणस्य वृत्तयः। कुतः? तद्व्यपदेशादन्यत्र श्रेष्ठात्। श्रेष्ठादन्यत्र मुख्यप्राणं विना तद्भिन्नतयेति

---

करणमात्रं रूपस्य ज्ञेयत्वम्। आत्मनश्च ज्ञातृत्वमुक्तं भवति गन्धग्रहणाय करणं घ्राणं ज्ञाता स्वात्मेति श्रुत्यर्थः। नच देवतानामत्र शरीरे भोक्तृत्वं किन्तु शारीरस्यैवेत्याह। परमपुरुषेणेति। उक्तार्थं श्रुतिमुखेन प्रमाणयति। भीषास्माद्वात इति ॥ १५ ॥

सूत्रार्थं विवृणोति। तस्येति। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। तमुत्क्रामन्तमिति। स्वकर्मार्जिते देहे जीवस्यैव भोक्तृत्वं न देवतानामिति निगमयन्नाह। तस्मादिति। केषाञ्चित् व्याख्यानं दूषयितुमुपन्यस्यति। कैश्चिदिति। तच्चिन्त्यमिति। चिन्ताबीजं स्वयं दर्शयति। यद्यपीत्यादिना ॥ १६ ॥

उत्तरसूत्रशङ्कामाह। नन्विति। श्रुतिमुदाहरति। हन्तास्यैवेति। हन्तेदानीमस्यैव मुख्यप्राणस्य

यावत् । तेषां वागादीनां श्रुतौ व्यपदेशात् । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" त्यादिना । ननु तर्हि मनसोऽपीन्द्रियत्वं न स्यात्, पृथगुपदेशाविशेषादिति चेन्न । तस्य मनसः श्रुतिव्याख्यारूपस्मृतौ हीन्द्रियत्वाभ्युपगमात् । "इन्द्रियाणि दशैकं च" ति श्रीमुखोक्तेः । "दशेमे पुरुषे प्राणा आत्मैकादशे" तिश्रुतेश्च । समानजातीयत्वमेकां जातिं क्रियां गुणं चाश्रित्य सङ्ख्याप्रयोगाः प्रवर्तन्ते, यथाष्टौ ग्रहाःरूपादिज्ञानोत्पत्तिहेतुत्वाच्चेन्द्रियत्वं मनस इति भावः । ननु कथं तर्हि चक्षुरादौ प्राणशब्दप्रयोग इति चेन्न । प्राणाधीनप्रवृत्तिकत्वेनेन्द्रियाणां तत्तानिर्देशस्य गौणत्वेनाविरोधात् "तस्मादेत एतेनाख्यायन्त" इतिश्रुतेः मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वावगमादित्यर्थः ॥ १७ ॥

## भेदश्रुतेर्वैलक्षण्याच्च । २ । ४ । १८ ॥

मुख्यप्राणस्येन्द्रियाणां च भेदश्रवणादपि मुख्यप्राणादिन्द्रियाणां तत्त्वान्तरत्वमित्यर्थः । "ते ह वाचमूचुरि" त्युपक्रम्य वागादीनामसुरविध्वस्तानामुपन्यासं कृत्वा तत्प्रकरणोपसंहारे "अथ हममासन्यं प्राणमूचुरि" त्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथक्त्वेनोपक्रमणात् । अत्रैव हेत्वन्तरमाह । वैलक्षण्याच्चेति । मुख्यप्राणादितरेषां वैलक्षण्यादपि तत्त्वान्तरत्वमिति सूत्रार्थः । तथाहि प्राणस्य वागादिषु सुप्तेषु जागरणम्, इन्द्रियाणां मृत्युव्याप्तत्वेन प्राणस्य मृत्युना ऽनाप्तत्वं, तेषां विषयग्रहणहेतुत्वं, प्राणस्य

---

सर्वे वयं रूपमसाम भवामेत्याशिषं दत्त्वा ते वागादय एतस्यैव मुख्यस्य रूपं बभूवुरिति श्रुत्यर्थः । सूत्रार्थं व्याचष्टे । ते प्राकृता इति । एतस्मादिति वाक्ये इन्द्रियेभ्यः प्राणस्य पृथक्पाठादपि निश्चीयते प्राणव्यतिरिक्तानामिन्द्रियत्वमित्याह । तेषामिति । यथा प्राणस्य पृथगुपदेशात्तस्यानिन्द्रियत्वं तथा मनसोऽप्यनिन्द्रियत्वं स्यादित्याशङ्कते । नन्विति । "इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । मनःषष्ठानीन्द्रियाणी"ति श्रीमद्भगवद्गीतावचनैर्मनस इन्द्रियत्वं व्यपदिश्यत इत्याशयेन परिहरति । नेति । श्रुतिमुखेनापीन्द्रियत्वं मनसः प्रमाणयति । दशेमइति । अत्रात्मशब्देन मनसो ग्रहणम् । समानजातीयत्वमिति । तस्याश्रयत्वमित्यग्रतने नान्वयः । कुत्रचिज्जात्यभिप्रायेणैकत्वसङ्ख्याप्रयोगः मनस्त्वैकमाश्रित्य मनस्येकत्वसङ्ख्याप्रयोगः । श्रुतिस्मृत्योः तस्य सर्वेन्द्रियनायकत्वात्तस्य पृथक्व्यपदेशः । कुत्रचित्क्रियामाश्रित्य सङ्ख्याप्रयोगः यथा पञ्च कर्मेन्द्रियाणि । गुणस्योदाहरणमाह । यथाऽष्टौ ग्रहा इति । क्वचिदष्टौ प्राणाः ग्रहत्वेन बन्धेन गुणेन सङ्कीर्त्यन्त इत्यर्थः । यदि प्राणापेक्षयेन्द्रियाणि तत्वान्तराणि तदा चक्षुरादिषु प्राणशब्दस्य प्रयोगः कथमुपपद्यत इत्याशङ्कते । नन्विति । प्राणाधीनस्थितिप्रवृत्तिकत्वादिन्द्रियेषु प्राणशब्दप्रयोगो गौण इत्याशयेनोक्तशङ्कां परिहरति । नेति । तत्तानिर्देशस्य=प्राणत्वनिर्देशस्य । उक्तार्थं श्रुतिमुखेन प्रमाणयति । तस्मादेतइति । त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते । रूपमभवन्=शरीरमभवन् तदधीनप्रवृत्तयोऽभवन्निति श्रुत्यर्थः ॥ १७ ॥

प्राणस्येन्द्रियादिभ्यो भेदः श्रूयते तस्मादपीन्द्रियाणि तत्त्वान्तराणि इत्याह । मुख्यप्राणस्येति । तेहि देवा असुराणां जयार्थमुद्गीथकर्मणि प्रथमं व्यापृतां वाचमूचुस्तत्र उद्गायासुरनाशार्थमिति तथास्त्वित्यङ्गीकृत्योद्गायन्तीं वाचमनृतादिदोषेण विध्वंसितवन्तोऽसुराः । इत्येवंक्रमेण सर्वेष्विन्द्रियेषु पापग्रस्तेषु पश्चादथेति प्रकरणं विच्छिद्य प्रसिद्धमास्ये भवमासन्यं मुख्यं प्राणमूचुस्तत्र उद्गायेति तेन प्राणेनोद्गात्रा निर्विषयतया

तु देहादिधारणपातनहेतुत्वं च श्रुतिषु दर्शनाद्वैलक्षण्येन तत्त्वान्तरत्वमित्यर्थः । इन्द्रियेषु श्रवणालोचनाद्यसाधारणवृत्तयः, प्राणस्य तु सर्वेन्द्रियेषु परिस्पन्दरूपासाधारणवृत्तिरिति विवेकः । अत्र प्रमाणभूताः श्रुतयस्तु पूर्वमेव पठिता अनुसन्धेया इति संक्षेपः । ननु "तत्तेजोऽसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, एतस्माज्जायते प्राण" इत्यादि-जगत्सृष्टिविषयश्रुतीनां परस्परविरुद्धसृष्टिक्रमपरत्वदर्शनात् इतरेतरबाध्यबाधकभावापत्त्या ह्येकतमस्यापि क्रमस्य प्रामाणिकत्वं न स्यात्, सर्वेषामपि श्रौतत्वाविशेषादिति चेन्न गुणोपसंहारन्यायेन न्यूनाधिकसङ्ख्योपक्रमस्य पौर्वापर्य्यक्रमस्याविरोधेन सर्वस्यापि सामञ्जस्यात् । तथा चोक्तम् विवरणकारैः श्रीपुरुषोत्तमाचार्यचरणैः "गुणोपसंहारन्यायेन सर्वस्य वाक्यजातस्य सामञ्जस्यमेवे"त्यादिना । एतदुक्तं भवति—सृष्टिक्रमश्रुतीनां परस्परविरोधे कयाचिद्व्यवस्थयैव भाव्यम् । अन्यथैकतमस्या अपि श्रुतेर्बाधायामर्द्धनास्तिकत्वापत्तिः । तत्र प्रलयश्रुतेः प्रबलत्वात् तदनुसारेण सर्वास्वपि सृष्टिविषयकासु श्रुतिषु गुणोपसंहार-न्यायेन सृष्टिक्रमोपन्यासः कर्त्तव्यः । तथात्वे तु न कश्चिद्विरोधावकाशः । तथैवाम्नायते सुबालोपनिषदि लयक्रमः "पृथिव्यप्सु प्रलीयते । आपस्तेजसि प्रलीयन्ते । तेजो वायौ प्रलीयते । वायुराकाशे प्रलीयते । आकाश इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ प्रलीयन्ते भूतादिर्महति प्रलीयते । महानव्यक्ते प्रलीयते । अव्यक्तमक्षरे, अक्षरं तमसि, तमः परे देवे एकीभवती" त्यादिना । व्याख्याता चेयं श्रुतिर्वैष्णवे श्रीपराशरेण । "जगत्प्रतिष्ठा देवर्षे ! पृथिव्यप्सु प्रलीयते । तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते । वायुश्च लीयते व्योम्नि तच्चा-व्यक्ते प्रलीयते" इत्युक्त्वा "प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्यु-भावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" इत्यादिनेति संक्षेपः ॥ १८ ॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥७॥

---

सङ्गदोषशून्येनासुरा नष्टाः इत्यसुराणां विध्वंसिना मुख्यप्राणस्योक्तेर्भेदसिद्धिरित्याह । तेहेति । अत्रैवेति मुख्यस्य प्राणस्य पृथक्त्वेनोपक्रमण इत्यर्थः । सुषुप्तौ वृत्युपलम्भवैलक्षण्यं शरीरेन्द्रियधारणरूपकार्यवैलक्षण्यं प्राणशब्दप्रवृ-त्तिनिमित्तवैलक्षण्यमित्याह । तथाहीत्यादिना । गुणोपसंहारो नाम एकस्यामनेकशाखासु पठितायां विद्यायां तत्र तत्र पठितानां गुणानां न्यूनाधिकानामितरेतरं निष्कृष्य संयोजनम् । यथा वाजसनेयकेऽग्निरहस्ये शाण्डिल्य-विद्या श्रूयते "मनोमयः पुरुषः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्या-धिपतिः सर्वमिदं प्रशास्ती"ति उभयत्र वेद्याभेदाद्विद्यैक्यं निश्चित्य सत्यसङ्कल्पत्वादीनां सर्ववशित्वादीनाञ्चो-भयत्रोपसंहरणमेवं प्रकृतेपि बोध्यम् । तथाहि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत"इति तैत्तिरीयश्रुतौ श्रुतस्य क्रमस्यावश्यं कल्पनीयत्वं नापि "तत्तेजोऽसृजत" इति च्छान्दोग्यश्रुतेर्विरोधस्तस्याः तेजोजनिप्रधानत्वेन श्रुत्यन्तरावगताकाशित्वनिवारणे सामर्थ्याभावात् । एकस्य वाक्यस्य व्यापारद्वयासम्भवात् । तत्तेजोऽसृजतेत्यत्राका-शाद्वायुरितिवत् क्रमवाचकशब्दाभावश्चेति । एतदुक्तमिति । यदुक्तं तदेतद्भवतीत्यर्थः । बाधकतर्कमुपन्यस्यति । अन्यथेति । व्यवस्थाया अनङ्गीकारे । उक्तार्थं सुबालोपनिषद्वचनेन प्रमाणयति । तथाचाम्नायत इति । ।१८।। इति ज्योतिरधिष्ठानाधिकरणम् ।

## संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । २ । ४ । १९ ॥

छान्दोग्ये सत्प्रकरणे "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी" ति तासां त्रिवृतं त्रिवृतमेकैकां करवाणी" ति नामरूपव्याकरणमाम्नातम्, तत्र संशयः । एतन्नामरूपव्याकरणव्यापाराश्रयो जीवः परमात्मा वेति ? किन्तावत्प्राप्तं, जीव एवेति । कुतः ? "अनेन जीवेनात्मने" ति विशेषोक्तेः । यथा चारेणाहं परसैन्यमनुप्रविश्य सङ्कलयानीति प्रयोगे चारकर्तृकमेव परसैन्यप्रवेशकलनं हेतुकर्तृत्वेन राज्ञि उपचर्यते उत्तमपुरुषप्रयोगेणैव तथा जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वेन परमात्मन्युपचर्यते उत्तमपुरुषप्रयोगेणेति अत्र राद्धान्तः । सञ्ज्ञामूर्तिक्लृप्तिरिति । संज्ञा च मूर्त्तिश्च संज्ञामूर्ती, तयोः क्लृप्तिः समर्थनं व्याकरणं, सा च त्रिवृत्कुर्वतः त्रिवृतिकर्तुः परमेश्वरस्यैव कर्म, न जीवस्य । कुतः ? उपदेशात् "सेयं देवतैक्षते" त्यादिना व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव व्याकर्तृत्वोपदेशात् व्याकरणप्रवेशयोः समानकर्तृत्वोपपत्तेश्चे ति सूत्रार्थः । ननु "अनेन जीवेनाऽत्मने" ति विशेषश्रवणाज्जीवस्यैव कर्तृत्वं युक्तमिति चेन्न । नामरूपव्याकरणात्प्राक्कर्तृत्वे जीवस्य सामर्थ्याभावात् । अन्यथा प्रलयेऽपि तस्य कर्तृत्वसामर्थ्ययोगे प्रलयाभावप्रसङ्गात् । एतेन समष्टिजीवाभिमानिचतुर्मुखस्यैव नामरूपव्याकरणं कर्मेति पक्षो निरस्तः । तस्यापि त्रिवृत्कृतभूतनिर्मितब्रह्माण्डजन्मानन्तरोत्पत्तिकत्वात् । "तस्मिन्नेवाभवद्ब्रह्मा सर्वलोकपितामह" इति स्मरणात् । किञ्च त्रिवृत्करणपूर्वकमेवेदं नामरूपव्याकरणमित्यवगम्यते । प्रत्येकं नामरूपव्याकरणस्य तेजोऽबन्नोत्पत्तिवचनेनैव निर्णयात् । नामरूपव्याकरणं विना तेजोऽबन्नमित्यादिनाम्ना निर्देष्टुमशक्यत्वात् तेज इत्यादिनामाद्यभावे केन निर्दिशेत् । यथा नामरूपव्याकरणात् प्राक् देवदत्तस्य पुत्रा इति सामान्यनिर्देशे सत्यपि देवदत्तस्य त्रयः पुत्रा यज्ञदत्तोऽग्निदत्तो ब्रह्मदत्तश्चेति निर्देशासम्भवः, नामादिव्याकरणोत्तरं तु सम्भवत्येव । तथा नामरूपव्याकरणात्प्राक् परमेश्वरसृज्यमिदं जगदिति सामान्येन निर्देष्टुं शक्येऽपि तेजोऽबन्नमिति नामादिविशेषविभागेन वक्तुमशक्यत्वात् ।

---

अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ।

संशयोत्थापकं श्रुतिवाक्यमुदाहरति । छान्दोग्यप्रकरण इति । अस्याः श्रुतेरर्थमुपरिष्टाद्वक्ष्यते । विचाराङ्गं संशयं दर्शयति । तत्रेति । उक्तवाक्य इत्यर्थः । तत्र पूर्वपक्षं संगृह्णाति । किन्तावदिति । जीवस्य गमकं लिङ्गमाह । अनेन जीवात्मनेति । नामरूपव्याकरणं यदि जीवकर्तृकं तदा व्याकरवाणीत्युत्तमपुरुषस्योपपत्तिः कथमित्यतस्तामुपपादयति । यथा चारेणेति । सिद्धान्तयति । अत्र राद्धान्त इति । सूत्रार्थं व्याचष्टे । संज्ञेति । अनेन जीवेनेति लिङ्गात् जीवस्यैव कर्तृत्वं वाच्यमित्याशङ्कते । नन्विति । परिहरति । नेति । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । जीवस्य कर्तृत्वे । एतेनेति जीवस्य कर्तृत्वनिरासेन । निरासे हेतुमाह । तस्यापीति । चतुर्मुखस्य । त्रिवृत्करणं ब्रह्माण्डान्तर्वर्त्तिनो हिरण्यगर्भस्य न सम्भवति त्रिवृत्कृतैस्तेजोऽबन्नैर्ह्यण्डमुत्पद्यते । हिरण्यगर्भस्याण्डे सम्भवः स्मर्यत इत्यर्थः । उक्तार्थं प्रमाणेन द्रढयति । तस्मिन्निति ।

व्याकरणे तु सम्भवतीति भावः। तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुत्या दर्शितम्, "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये" त्यादिना। तत्राग्निरिति रूपव्याकरणं रूपप्रागभावे नामकरणासम्भवात् रूपाभावे तदनुपलब्धिप्रसङ्गात् रूपव्याकरणमेव विषयोपलब्धेरसाधारणहेतुरित्यर्थः। तथैवाग्निरिति वर्णसमुदायरूपं नामव्याकरणमेवमादित्यादिष्वपि विवेचनीयम्। एतेनैव पार्थिवाप्यतैजसेष्वपि पदार्थेषु त्रिवृत्करणं सूपपन्नम्। उपक्रमोपसंहारसाधारण्याच्चत्र "इमास्तिस्रो देवता त्रिवृत्त्रिवृदेकैका भवती" ति उपक्रमसामान्यात्। यद्रोहितमिवाभूदिति तैजसरूपमित्युपसंहारसौम्याच्चेति संक्षेपः। यच्चोक्तं- चारेण परसैन्यं प्रविश्येत्यादि तत्तुच्छं, दृष्टान्तवैषम्यात्। राजचारयोरत्यन्तभेदेन पृथक्सिद्धत्वात्। प्रकृते जीवस्य ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात्। ब्रह्माण्डान्तर्वर्त्तिनो जीवस्य तद्वहिर्भूतवर्त्तिपदार्थानां नामरूपव्याकरणासम्भवात्। चतुर्मुखादेः स्वसृज्यानां नामादिव्याकरणे शक्तिमत्त्वेऽपि स्वप्राक्तनवस्तूनां नामादिव्याकर्तृत्वे न शक्तिरिति ध्वन्यर्थः। किञ्च जीवबुद्ध्यगोचररचनस्य जगतो नामादिव्याकृतौ परमेश्वरस्यैव समर्थत्वान्नान्यस्य। "आकाशो ह वै नामरूपयोर्निर्वहिते" त्यादिनोपनिषत्सु तस्यैव तथात्वश्रवणात्। श्रुत्यर्थस्तु- इमाः साकल्येन करनिहितफलवत् परमेश्वरस्य श्रुत्यर्थाभिमानिदेवविशेषस्य प्रत्यक्षगोचरास्तेजोऽबन्नसंज्ञकास्तिस्रो देवता अनेन जीवेन स्वात्मकसमष्टिजीवावच्छिन्नेन जीवनहेतुनाऽन्तरात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति। देवतिर्यग्मनुष्यादिविचित्रासङ्ख्येयस्वेतरागोचरव्यक्त्यात्मना विभज्य तत्तन्नामादिना संयोजयामीति। एतत्सङ्कल्पविषयसंसिद्धये तासामन्योऽन्यसंसृष्टानां तत्कार्यासमर्थानां संसर्गलक्षणसामर्थ्यं विधाय एकैकां त्रिवृतमकरोदिति यावत्। ननु एवं "अनेन जीवेनात्मने" ति सामानाधिकरण्यस्य मुख्यताभङ्ग इति चेन्न। ब्रह्मणः सर्वात्मत्वेन सर्वशब्दवाच्यत्वात्सामानाधिकरण्यं मुख्यमेवेति। अत्र ये जीवब्रह्मणोरत्यन्ताभेदमभ्युपगच्छन्ति ते प्रष्टव्याः? सृष्टेः प्राक्प्रलयसमयेऽनभिव्यक्तनामरूपकस्य जीवस्य जीवात्मना सद्भावो न वेति? नाद्यः अद्वैतभङ्गात्। ब्रह्मण एव जीवभावापत्त्या प्रवेश-

---

उक्तार्थं विशदयति शिष्यबुद्धिवैशद्याय किञ्चेत्यादिना। त्रिवृत्करणं श्रुतिमुखेन प्रमाणयति। तच्चेति। श्रुत्यर्थं विवृणोति। तत्राग्निरिति। निरुक्तश्रुतौ। तदनुपलब्धिप्रसङ्गादिति। अग्न्यात्मकवस्तुनोऽनुपलब्धिप्रसङ्गादिति तदर्थः। उक्तार्थमन्यत्रातिदिशति। एतेनेति। प्रागुक्तार्थं दूषयितुमनूद्यति। यच्चोक्तमिति। दृष्टान्तवैषम्यमेवोपपादयति। राजचारयोरिति। परस्य ब्रह्मणः कर्मेदं नामव्याकरणमित्यत्र श्रुतिं प्रमाणयति। आकाशो ह वैति। अत्राकाशशब्देन परमात्मा व्यपदिश्यते आकाशस्तल्लिङ्गादितिन्यायादितिभावः। इमा इतिश्रुत्यर्थं विवृणोति। श्रुत्यर्थइति। उक्तश्रुत्यर्थे सामानाधिकरण्यं लाक्षणिकमित्याशङ्कते। नन्विति। सामानाधिकरण्यं नाम समानविभक्तिकत्वे सत्यैकार्थवाचकत्वं तथाच जीवशब्दवाच्यत्वं ब्रह्मण एवेति मुख्यमेव सामानाधिकरण्यं नतु गौणमित्याशयेन परिहरति। नेति। अत्यन्ताभेदवादिमतं दूषयितुं विकल्पयति। अत्र य इति। अद्वैतभङ्गेनाद्यं पक्षमपाकरोति। नाद्यः इति। जीवस्यास्तित्वपक्षे दोषान्तरमाह। ब्रह्मणएवेति। द्वितीयविकल्पमपि

इति सिद्धान्तभङ्गात्। सजातीयविजातीयस्वगतभेदशून्यं निर्विशेषं ब्रह्म आसीदिति "सदेव सौम्ये"ति श्रुत्यर्थः, इतिं उपक्रमवाक्यार्थसिद्धान्तभङ्गाच्च। न द्वितीयः, जीवस्याजत्वानादित्वभङ्गात्। तद्बोधकशास्त्रव्याकोपाच्च। कृतनाशाकृताभ्यागमप्रसङ्गाच्च। किञ्च सदेवेति वाक्यस्योक्तलक्षणनिर्विशेषपरत्वाङ्गीकारे "तदैक्षत बहु स्यां प्रजायेये" त्यादिश्रुतिप्रतिपादितेक्षणबहुभवनसङ्कल्पाश्रयस्य तत्पूर्वकसृष्टिकर्तुरभावेन सृष्ट्यभावप्रसङ्गः। वाक्यस्य निर्विषयत्वापत्त्या बाधप्रसङ्गश्च नालोच्यते वैदिकाभिमानिभिर्देवानांप्रियैः। यच्च कैश्चित् 'अनेन जीवेनेत्येतदनुप्रविश्येत्यनेन सम्बध्यते आनन्तर्य्यान्न व्याकरवाणीत्यनेने'ति श्रुत्यक्षराणि योजितानि, तदप्यपेशलं, तदानीं तन्मते जीवस्याभावात्। अन्यथाऽद्वैतसिद्धान्तभङ्गात्। किञ्च क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतिबाधप्रसंगाच्च। यत्तु चारेण परसैन्यं प्रविश्येत्यादिव्याख्यानं तन्महत्क्षुद्रम्, दृष्टान्तवैषम्योक्त्या पूर्वमेव निरस्तत्वात्। अत्यन्तभेदपरत्वे ब्रह्मणो जगदुपादानत्वाभावप्रसंगात्। तथात्वे च अवैदिकतार्किकादिपक्षे प्रवेशात्। अन्यैस्तु अनेन जीवेनेत्यस्य जीवविशिष्टेनेति व्याख्यानमुक्तं तदप्यपेशलम्, विशिष्टवादस्य पूर्वमेव निरस्तत्वादित्यलं विस्तरेण ॥ १९ ॥

अथ त्रिवृत्कृतानां तेजोऽबन्नानां कार्यविभागमाह—

**मांसादिभौमं यथाशब्दमितरयोश्च। २। ४। २०॥**

भूमेस्त्रिवृत्कृतायाः पुरुषेण भुज्यमानाया इदं भौमं मांसादि कार्यं यथाशब्दं श्रुतिरूपशब्दनिरूप्यमवगन्तव्यम्। "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति मध्यमं मांसमणिष्ठं तु मन एवे" ति श्रुतेः। एवमितरयोः अप्तेजसोश्च कार्यमपि बोध्यम्। मूत्रं लोहितं प्राणश्चेत्यपां कार्यम्, अस्थिमज्जावाक् च तेजसः कार्यमित्यर्थः ॥ २० ॥

ननु सर्वं भूतभौतिकवस्तुमात्रं त्रिवृत्कृतमेव, तर्हि इदं भूमेः कार्यमिदमपामिदं तेजस इति भेदनिर्देशासम्भवप्रसंगो दुर्वारः, सर्वेषां सर्वत्र सत्त्वादित्याशङ्कां परिहरन्नाह—

**वैशेष्यात्तु तद्वादस्तद्वादः। २। ४। २१॥**

---

निरस्यति। न द्वितीय इति। अद्वैतवादिमते दोषान्तरमाह। किञ्चेति। जीवेनेत्येतदनुप्रविश्येत्यनेन सम्बध्यते आनन्तर्यात्। न व्याकरवाणीत्यनेनेति श्रीशङ्करपादानां व्याख्यानं दूषयितुमनूद्यति। यच्च कैश्चिदिति। आनन्तर्यादिति। आकाङ्क्षासन्निधियोग्यतावशेनान्वयाज्जीवेनेत्यस्य प्रविश्येत्यनेन सन्निधानाज्जीवस्य च सर्वनामरूपव्याकरणे योग्यताभावात्तस्य प्रवेशेनैव सम्बन्धो नान्येनेत्यर्थः। तन्निरस्यति तदप्यपेशलमिति। तदानीं= सृष्टेः प्राक्। बाधकतर्कमाह। अन्यथेति। सृष्टेः प्रा[illegible] जीवसत्वे। केषाञ्चित् व्याख्यानमपाकर्तुमुपन्यस्यति। यत्त्विति। विशिष्टाद्वैतवादिनां व्याख्यानं निराकर्तुमनूद्यति। अन्यैस्त्विति ॥ १९ ॥

उत्तरसूत्रमवतारयति। अथेति। सूत्रार्थं व्याकरोति। भूमेरिति। शेषमतिरोहितार्थम् ॥ २० ॥

तुशब्दः शङ्कानिरासार्थकः। विशेषस्य भावो वैशेष्यं भागभूयस्त्वमिति यावत्। तस्य पृथिव्यादौ दर्शनात्तद्वादः स तेजोऽबन्नविशेषवादो भौतिकवस्तुविशेषवादश्च सूपपन्न इत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ २१ ॥ इति संज्ञामूर्त्तिक्लृप्त्यधिकरणम् ॥८॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुण-
पद्ममकरन्दभृङ्गेण जगद्विजयिश्री६श्रीकेशवकाश्मीरिभट्टेन संगृहीतायां
श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ द्वितीयाध्याय-
चतुर्थपादविवरणम् ॥ ४ ॥

---

उत्तरसूत्रमवतारयितुमाशङ्कते। नन्विति। सूत्रार्थं विवृणोति। तु शब्दइति ॥ २१ ॥

सरसिजसम्भव एव व्याकरणनामरूपयोः कर्ता।
जीवेनेतिश्रवणात् तत्सृज्यप्रकरणेच तत्स्मरणात् ॥
नैवं यस्त्रिवृतं चकार कथितः कर्ता स हि व्याकृतौ
तद्धाता न तथा त्रिवृत्कृतधराद्युत्पादितायडोद्भवः।
तेन व्याकरणत्रिवृत्करणयोः कर्ता स एवेश्वरो
जीवेनेति तु तच्छरीरकतया तत्रैव शक्तं पदम् ॥
यत्पादाब्जरसास्वादविस्मृतान्यसुखा मुहुः।
रमन्ते तद्गुणालापैस्तं वन्दे नन्दनन्दनम् ॥ १ ॥

इति रसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाब्जाङ्कितानुगेनामोलकरामेण सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाटीकायां भावदीपिकायां द्वितीयाध्यायस्य चतुर्थपादः।



# अथ तृतीयोऽध्यायः

## प्रथमः पादः

साधनोपाययुक्तानां भक्तानां पुरुषोत्तमः।
ददाति वाञ्छितं सर्वं वर्ण्यन्ते तान्यतस्त्विह ॥

इत्थं द्वितीयेऽध्याये श्रुतिविरुद्धस्मृतीनां तर्काणां च भ्रममूलत्वं प्रदर्श्य श्रुतीनामितरेतरविरोधाभासं निराकृत्य समन्वयाविरोधो निर्णीतस्तेन च श्रीपुरुषोत्तमस्यैव परब्रह्मणो मुमुक्षुध्येयस्य निखिलजगदेककारणत्वं वेदान्ताः प्रतिपादयन्तीति स्थापितमथेदानीमस्मिंस्तृतीयाऽध्याये तत्प्राप्त्युपायभूतसाधनानि निरूप्यन्ते। तानि च कर्मज्ञानभक्तिप्राप्त्यादिरूपाणि श्रीपुरुषोत्तमाचार्यपादैर्विस्तरेण भाषितानीत्यत्रोपरम्यते। इयं तावच्छ्रेयःसाधनप्रक्रिया। आदौ जन्मसमये पुंसि भगवतः श्रीमुकुन्दस्य कृपाकटाक्षो मुमुक्षोत्पादनासाधारणहेतुभूतः। ततः सात्त्विकं मुमुक्षार्हं जन्म, मुमुक्षायां सत्यां तत्साधने स्वाधिकारानुरूपं यतते। तत्रादौ यथाधिकारभगवदर्पितनिष्कामकर्मयोगस्तेन भगवदीयानुग्रहसहकृतेन संस्कृतमनस्कस्य मुमुक्षोर्वैराग्यादिपूर्वकजिज्ञासया श्रवणादिलक्षणया तत्स्वरूपादिविषयकपरोक्षज्ञानं, ततो ध्यानपरिपाकजन्या पराभक्तिपर्यायरूपा ध्रुवा स्मृतिस्तया च तदनुग्रहेण तत्साक्षात्कारस्ततो मोक्ष इति। तत्र मुमुक्षोपायश्च प्राप्यवस्त्वतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति। तत्सिद्धये प्रथमद्वितीयपादयोरारम्भः। तत्र प्रथमे पादे पञ्चाऽग्निविद्यामाश्रित्य संसारि-

---

राधाकृष्णपदारविन्दयुगलध्यानैकतानात्मनः
श्यामीभूततनोर्हरेः सुरुचिभिर्निःसीमप्रेम्णो निधेः।
वात्सल्यादिगुणाकरस्य महतः सौन्दर्यसारश्रियः
श्यामाचार्यगुरोर्नमामि चरणं संसारतापच्छिदम् ॥

एकेन श्लोकेन तृतीयाध्यायार्थं संक्षिपति। साधनेति। द्वितीयाध्यायार्थं सुखबोधाय सङ्क्षेपेण निर्वक्ति। इत्थमित्यादिना। तृतीयाध्यायार्थं संक्षिपति। अथेदानीमिति। मोक्षसाधनानि पूर्वाचार्यवचसा प्रमाणयन्नाह। तानि चेति। मोक्षसाधनानीत्यर्थः। उक्तार्थमेव विशदयति। इयमिति। मुमुक्षाया असाधारणकारणं भगवत्कृपाकटाक्ष इत्याह। आदाविति। ततः=भगवत्कृपाकटाक्षतः। तत्साधने=मुमुक्षासाधने। सर्वं क्रमेण व्युत्पादयति। तत्रादाविति। प्रथमपादद्वितीयपादयोरर्थं सम्प्रति सौकर्यार्थं विभज्य दर्शयति। तत्रेति। पुमर्थसाधनमेवात्र निरूप्यं किमर्थं संसारगतिप्रदर्शनं तत्राह। वैराग्यार्थमिति। यस्मात्कर्मणो गत्यागतिरूपदोषो भवति तस्मात् कर्मफले जुगुप्सां घृणां विरक्तिं कुर्वीत इति श्रुत्यर्थः। तत्र देहाद्देहान्तरं गच्छन् जीवो देहान्तरहेतुभिर्भूतसूक्ष्मैः वेष्टितो गच्छति उत तदवेष्टित इति पञ्चाग्निविद्यागतप्रश्नप्रतिवचनयोर्भूतसूक्ष्मवेष्टनगमकत्वसम्भवासम्भवाभ्यां संशयं दर्शयति। तत्रायं जीव इति। यत्र जीवो गच्छति तत्र देहान्तरारम्भोऽस्ति चेदैहिकदेहारम्भकैकदेशानां भूतसूक्ष्माणां देहान्तरारम्भापर्याप्तत्वेन तदारम्भायावश्यं भूतान्तरमेलनापेक्षावश्यम्भावेन तैरेव पारत्रिकदेहोत्पत्तिसम्भवात् परलोक एव देहान्तरारम्भपर्याप्तभूतानामपि लाभोपपत्तेः। अणोर्जीवस्य स्वतो गमनसम्भवेन तदर्थमपि

जीवस्य लोकगत्यागतिरूपदोषाः प्रदर्श्यन्ते। "वैराग्यार्थं तस्माज्जुगुप्सेते" ति श्रुतेः। तत्रायं जीवो देहाद्देहान्तरं गच्छन् देहबीजभूतैर्भूतसूक्ष्मैः सम्परिष्वक्तो गच्छति उतापरिवृतः? इति संशये, असम्परिष्वक्त इति पूर्वः पक्षः "स्वर्गे नरके वा यत्र फलमनुभूयते तत्रैव भूतानि लभ्यन्ते" इति साङ्ख्यसिद्धान्तादिति प्राप्ते सिद्धान्तमाह—

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३ । १ । १ ॥

तदन्तरप्रतिपत्तौ देहाद्देहान्तरप्रवेशे देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तः परिवेष्टितो जीवो रंहति गच्छति। कुतः? प्रश्नेति। प्रश्नस्तावत् छान्दोग्ये पञ्चाऽग्निविद्यायां श्वेतकेतुं प्रति पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशादिप्रश्नान् कृत्वेदमपि पृष्टवान्। "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति। (छा० ५।३।३) निरूपणं नाम प्रतिवचनं तत् द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु श्रद्धासोमवृष्टयन्नरेतोरूपाः पञ्चाऽऽहुतीर्दर्शयित्वेति तु "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति। अतः प्रश्नप्रतिवचनाभ्यां देहबीजभूतभूतसूक्ष्मैः सहैव तत्र तत्र गच्छतीत्यवगम्यते ॥ १ ॥

ननु "आपः पुरुषवचस" इत्युक्ते केवलाभिरद्भिर्वेष्टनं श्रुतं तत्कथं सर्वैर्भूतसूक्ष्मैर्वेष्टनमित्यत्राह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् । ३ । १ । २ ॥

चोद्यनिवृत्त्यर्थस्तु शब्दः। त्रिवृत्करणेनापां त्र्यात्मकत्वादन्नतेजसोरपि परिग्रहः।

---

भूतवेष्टनानपेक्षणादिति पूर्वपक्षमाह। असम्परिष्वक्त इति। पूर्वपक्षमनूद्य सिद्धान्तयति। इति प्राप्त इति। सूत्रार्थं व्याचष्टे। तदनन्तरप्रतिपत्ताविति। पञ्चाग्निविद्यागतप्रश्नप्रतिवचनाभ्यां तद्वेष्टनसिद्धिः। तथाहि श्वेतकेतुमारुणेयं पञ्चालराजप्रवाहणः "वेत्थ यथा पञ्चम्यामाहुतौ वापः पुरुषवचसो भवन्ती"ति पृष्ट्वा तस्मिन्निमं प्रश्नं प्रतिवक्तुमजानति तस्य पितरि चाजानति तत्पित्रा समागत्य पृष्टः प्रवाहणः स्वयमेव प्रश्नविषयान् निरूपयन् कास्ताः पञ्चाहुतयः यासामुत्तमायामाहुतावापः पुरुषशब्दाभिलपनीयतां भजन्त इत्याकाङ्क्षायाम् "असौ वाव लोको गौतमाग्नि" रित्यादिना द्युपर्जन्यपृथिवीपुरुषयोषितः पञ्चाग्नित्वेन रूपयित्वा तेषु श्रद्धासोमवृष्ट्यन्नरेतोद्रव्यकाः पञ्चाहुतीरुपदिश्य तदनन्तरम्। "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति स्वपृष्टार्थं निरूपणं कृतवान् तस्मात् भूतसूक्ष्मवेष्टितस्य इह परत्र च सञ्चार इति समुदितार्थः। देवा जीवस्य प्राणा द्युलोकरूपेऽग्नौ श्रद्धारूपं वस्तु प्रक्षिपन्ति। सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमति। तञ्चामृतमयदेहं त एव प्राणाः पर्जन्यरूपेऽग्नौ प्रक्षिपन्ति। स च देहस्तत्र प्रक्षिप्तो वर्षं भवति तच्च वर्षान्त एव प्राणाः पृथिवीरूपाग्नौ प्रक्षिपन्ति। तच्चान्नं भवति। तच्च त एव प्राणाः पुरुषरूपाग्नौ प्रक्षिपन्ति तच्च तत्र रेतो भवति। तत् त एव प्राणाः योषिद्रूपाग्नौ प्रक्षिपन्ति। एवं पूर्वाहुतिषु हुतामेवापां गर्भरूपेण पुरुषसंज्ञा जायत इति विवेकः ॥ १ ॥

उत्तरसूत्रशङ्कामाह। नन्विति। सूत्राक्षराणि व्याचष्टे। चोद्येति। तेजसः कार्यमशितपीताहारप-

भूयस्त्वाद्बाहुल्यात्पञ्चम्यामाहुतावाप इत्युक्तं शुक्रशोणितेऽपां बाहुल्यदर्शनात् ॥ २ ॥

## प्राणगतेश्च । ३ । १ । ३ ॥

इतश्च भूतसूक्ष्माणां गमनमित्यवगम्यते । प्राणानामिन्द्रियाणां जीवेन सह गमनश्रुतेः "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती" ति (बृ० ४।४) "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयादि" ति स्मरणाच्च (गी० १५।७) निराश्रयाणां च तेषां गतिरनुपपन्नाऽतस्तदाश्रयभूतभूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्नाक्तत्वात् । ३ । १ । ४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि" (बृ० ५।४।२) त्येवं वाक्प्राणादीनामग्न्यादिगतिश्रु तेर्न जीवेन सह प्राणानां गमनमिति चेन्न भाक्तत्वात् । भज्यते मुख्या वृत्तिर्यया गौण्या वृत्त्या सा भक्तिः, तत्र भवं भाक्तं, वागादीनामग्न्यादिगमन-श्रवणमौपचारिकम्, अग्न्यादीनामधिष्ठातृत्वनिवृत्त्यर्थम्, लोमकेशयोर्गत्यदर्शनात् । "ओष-धीर्लोमानि वनस्पतीन्केशा" इति ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः । ३ । १ । ५ ॥

प्रथमेऽग्नौ द्युलोकाख्ये "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती" ति (छा० ५।४.२) प्रत्ययविशेषरूपायाः श्रद्धायाः श्रवणादपामश्रवणात्कथं पञ्चम्यामाहुतावपां पुरुषभाव इति चेन्नैष दोषः । हि यतस्ता एवापः श्रद्धाशब्देनोच्यन्ते याः प्रश्ने उपन्यस्ताः । कुतः ? उपपत्तेरुप-

---

रिपाकः । अपां कार्यं स्नेहस्वेदादि । पृथिव्याः कार्यं गन्धादि तथा च देहारम्भश्च न केवलाभिरद्भिर्भवति । देहे स्नेहगन्धादिकार्यदर्शनेन तेजोऽबन्नस्य सर्गाद्यकाल एव त्रिवृत्कृतत्वेन च देहस्य त्र्यात्मकत्वात् । एवं त्र्यात्मक-त्वेऽपि देहस्य लोहितादिभूयस्तया कार्यानुसारेण तदारम्भकभूतेष्वपां भूयस्त्वादप्छब्देनाभिधानमिति भावः ॥२॥

अस्ति जीवस्य गताविन्द्रियाणामपि गमनं श्रुतिसिद्धमित्याह । इतश्चेति । श्रुतिस्मृती उदाहरति । तमुत्क्रामन्तमिति । न च तेषां शरीरमनाश्रित्य गमनमवस्थानमात्रं वा सम्भवति । जीवदशायामदर्शनात् । न च तेषां स्वस्वकार्येषु प्रवृत्यर्थमेव देहाश्रयणं गमनावस्थानञ्च स्वोपादानाश्रयणमेव सम्भवतीति वाच्यम् । मार्गेचन्द्रसम्वादादिश्रवणेन तत्र स्वस्वकार्येषु प्रवृत्तेरपि सम्भवात् ॥ ३ ॥

यत्रास्येति । श्रुत्या मरणकाले प्राणानामग्न्यादिगतिश्रवणान्न तेषां जीवेन साकं गतिरित्याशङ्कते । यत्रास्येति । अत्र हि लोमकेशयोरोषधिवनस्पतिगमनदृष्टविरोधाद्भाक्तं तावदभ्युपेयम् । एवञ्च तन्मध्यपतित्वेन तेषामपि श्रुतिविरोधाद्भाक्तत्वमेवोचितमतोऽग्न्यादिश्रुतिरधिष्ठातृदेवताक्रमणपरेत्यर्थः ॥ ४ ॥

अद्भिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इत्येतन्नोपपद्यते द्युलोकाग्निविषये प्रथमे होमे तस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीतिश्रुतौ श्रद्धाया होतव्यताभिधानं नत्वपां तच्चानुपपन्नं यथा पश्वादीनामवयवा हृदयादयो हूयन्ते न तथा प्रत्ययरूपा श्रद्धा होतुं शक्यत इत्याशङ्कारूपं सूत्रस्य भागं विवृ-

क्रमोपसंहारयोरेवमुपपत्तेरन्यथा प्रश्नप्रतिवचनयोरेकवाक्यता न स्यात् । सादृश्यप्रयोगोपपत्तेश्च "श्रद्धा वा आपः श्रद्धामेवारभ्य यज्ञेन यजत" इति प्रयोगदर्शनात् ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणांप्रतीतेः । ३ । १ । ६ ॥

ननु प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषभावं प्रतिपद्यन्ते इति श्रूयते, नतु तत्सम्परिष्वक्तो जीवः श्रूयते । अतस्तत्परिष्वक्तो जीवो गच्छतीति वक्तुमशक्यमिति चेन्न । कुतः ? इष्टादिकारिणां प्रतीतेः । तस्मिन्नेव वाक्ये ह्युत्तरत्रा "थ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती" (छा०५।३।३) त्युपक्रम्य धूमादिना पितृयानेन पथा चन्द्रप्राप्तिं कथयति । "आकाशाच्चन्द्रमसमेष सोमो राजेति त इह प्रतीयन्ते तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवती" ति भूतसूक्ष्मपरिवेष्टितं जीवं द्युलोके फलभोगाय देवाः प्राणाः प्रक्षिपन्ति । सोऽयं प्रक्षेपो होम इहाभिप्रेतः ॥ ६ ॥

ननु "तद्देवानामन्नं तं देवा भक्षयन्ती" ति (छा०५।१०।५) चन्द्रकिरणारब्धदेहानां कथमन्नभाव इत्याशङ्क्याह—

## भाक्तं वा ऽनात्मवित्त्वात्तथा हि दर्शयति । ३ । १ । ७ ॥

वेति चोद्यव्यावृत्त्यर्थः । भाक्तमेषामन्नत्वं, न मुख्यम् । "न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ती" ति (छा०३।६।१) चर्वणनिषेधात् । "यथा राज्ञां विशोऽन्नं विशामन्नं पशव" इति । अनात्मवित्त्वाच्च ह्येषां केवलकर्मिणां गुणभावो देवान्प्रति । तथाहि

---

णोति । प्रथम इति । सूत्रस्य समाधानभागं व्याख्यातुमाह । इति चेन्नेति । तस्माद्गौण्यावृत्त्याऽप्सु श्रद्धाशब्दः प्रयुक्तः । अत एव श्रुतिः । श्रद्धा वा आप इति ॥ ५ ॥

भूतपरिष्वक्तो जीवो गच्छतीत्ययुक्तम् । श्रद्धां जुह्वतीत्यादिवाक्येषु जीवस्याश्रुतत्वादित्याशङ्कते । नन्विति । अश्रुतत्वफलमाह । अत इति । समादधाति । नेति । तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वतीत्येतदनन्तरस्या आहुतेस्सोमो राजा सम्भवतीत्यनेनेष्टापूर्तदत्तकारिणां द्युलोकप्राप्त्यनन्तरं सोमराजभावश्रवणात् । तत्र सोमराजशब्दस्य द्युलोकभोगार्थलब्धदिव्यदेहेष्टादिकारिपरत्वस्य तत्रत्यवाक्यान्तरपर्यालोचनयाऽवगमात्तत्र हि "अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिमि"त्यादिना पितृलोकादाकाशमाकाशाच्चन्द्रमसमित्यन्तेनेष्टादिकारिणांधूमादिमार्गेण चन्द्रप्राप्त्युक्त्यनन्तरम् । "एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ती"ति तेषां सोमराजभावः श्रूयते तेषु सोमराजशब्दस्त्वमृतमयदेहवत्त्वसादृश्यात् । समनन्तरवाक्य प्रदर्शयिष्यमाणदेवभोग्यत्वसादृश्याद्वेति भावः ॥ ६ ॥

"एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्रदेवा यथासोमं राजानमप्यायस्वापक्षीयस्वेत्येवमना स्तत्रभक्षयन्तीति श्रुत्या च देवभक्ष्यत्वश्रवणात्कथमिष्टादिकारिणामुपभोगः सम्भवतीत्याशङ्कते । नन्विति । सूत्राक्षराणि व्याकरोति । वेति चोद्यव्यावृत्त्यर्थ इति । तेषां श्रूयमाणमन्नत्वं कथमित्याशङ्क्य सिद्धान्तप्रतिज्ञामाह । भाक्तमिति । उक्तार्थं श्रुतिमुखेनापि प्रमाणयति । "न ह वै देवा इति ।-

दर्शयति श्रुतिस्तेषां देवोपभोग्यत्वम्, "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मी" ति "न स वेद यथा पशुः पशुरेव स देवानामि" ति (बृ० ३।४।१०)। स्मृतिरप्यनात्मविदां देवोपभोग्यत्वमात्मविदां च ब्रह्मप्राप्तिं दर्शयति। "देवान् देवयजो यान्ति मद्भक्ताः यान्ति मामपी" ति (गी०७।२)। तस्माद्भूतसूक्ष्मैः सम्परिष्वक्त एव जीवो गच्छतीति युक्तमुक्तम् ॥७॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

एवमविदुषामारोहणप्रकारो निरूपितः। अथेदानीमवरोहणं तत्प्रकारं चाह—

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च । ३।१।८ ॥

इष्टादिकारिणां धूमादिवर्त्मना चन्द्रमण्डलमारुह्य तत्र भुक्तभोगानां 'तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त'(छा०५।१०।४)इत्यादिनाऽवरोहः श्रूयते। स किं निरनुशयानां तेषां भवत्युत सानुशयानामिति ? विशये निरनुशयानामिति पूर्वः पक्षः। यावत्सम्पातमित्युक्तेः। सम्पतन्त्यनेनेति सम्पातं कर्म यावत्तदस्ति तद्भुक्त्वेत्यर्थः। "प्राप्याऽन्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे" इति श्रवणादित्येवं प्राप्तेऽभिधीयते। कृतस्य यागादेरत्यये भोगेन क्षये सति अनुशयवान् कर्तारमनुशेते फलोपभोगाय यःसोऽनुशयो भुक्तशिष्टं कर्म, तद्वानवरोहति। कुतः ? दृष्टस्मृति श्रुतिस्मृतिभ्याम्। श्रुतिस्तावत् "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वे" ति (छा० ५।१०।७) चरणशब्द आचरणीयकर्मपरः। कपूयचर-

---

उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति। यथेति। उक्तवचनस्यानात्मविदः केवलेष्टादिकारिणः स्वर्गं प्राप्यापि देवानां निदेशकारिणस्तदुपसर्जनभूता भवन्ति देवाश्च तत्र तत्र तान्नियुञ्जानाः पीडयन्तीत्येतदभिप्रायतया भाक्तत्वं द्रष्टव्यम्। भूतसूक्ष्मैस्सम्परिष्वक्त एव जीवो रंहति तत्परिष्वङ्गस्य देहान्तरारम्भार्थत्वादिन्द्रियगमनार्थत्वाच्च। एतद्रंहत्यागमात्रेण न कृतार्थता तेषामिह दृश्यमानदुःखानुभवस्य परत्राजानदेवभूतानां भृत्यत्वसातिशयत्वप्रयुक्तदुःखानुभवस्य चापरिहार्यत्वादितिसिद्धमित्यभिसन्धिः ॥ ७ ॥ इति तदन्तरप्रतिपत्त्यधिकरणम्।

अथ कृतात्ययाधिकरणम्।

अनात्मविदां परलोके भृत्यत्वादिप्रयुक्तदुःखवत् तल्लोकभोगस्य क्षयिष्णुत्वप्रयुक्तमपि दुःखमस्तीत्युच्यत इति तेषां देहसम्बन्धवत् तद्धेतुकर्मसम्बन्धोऽप्यवर्जनीय इति चोच्यत इतिसङ्गतिः। इष्टादिकारिणां परलोके कर्मफलं भुक्तवतां कर्मफलावसाने पुनरावृत्तिराम्नाता यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त इत्यवरोहः श्रूयते तस्य प्रकारं निरूपयितुमाह। अथेति। विचाराङ्गं संशयमाह। स किमिति। तस्य बं जन्तु यावत्सम्पातमुषित्वेति श्रवणं रमणीयचरणा इत्यादिश्रवणञ्चेति। तत्र पूर्वपक्षमाह। निरुशयानामिति। पूर्वपक्षे गमकलिङ्गमाह। यावत्सम्पातमित्युक्तेरिति। कृत्स्नस्य कृतस्य कर्मणः तत्रैव क्षयश्रवणात् प्राप्यान्तमिति श्रुत्यन्तरे तथात्वप्रतिपादनाच्च निरवशेषभुक्तकर्मणः पुनरावृत्तिराम्नायत इति निरनुशयत्वमवसीयत इति पूर्वपक्षमनूद्य समाधत्ते। इत्येवमिति। सूत्रार्थं व्याचष्टे। कृतस्येति। श्रुतिमुदाहरति। तद्य इहेति। ये केचिदिह कर्मभूमौ रमणीयचरणाः पुण्यकर्माणः पुण्ययोनिभाज इतियावत्। अभ्याशः = अवश्यं हीत्यर्थः कपूयं=पापम्। स्मृतौ आश्रमाः = आश्र-

णाः कुत्सितकर्माणः। स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते।" इति सानुशयानामवरोहं दर्शयति। स्वर्गप्राप्तिहेतुभूतज्योतिष्टोमादिकर्मभ्यः कर्मान्तरमनुशयपदवाच्यं, शेषशब्दश्चोपयुक्तात्कर्मणः कर्मान्तराभिप्रायो, नहि स्वर्गार्थस्य कर्मणः कश्चित् शेषः शक्यते कल्पयितुम्। श्रुतिप्रमाणत्वादस्यार्थस्य नानुमानमत्र क्रमते। तस्माद्यावत्सम्पातमिति यत्किञ्चेह करोत्ययमिति चैवं द्रष्टव्यं यावदामुष्मिकफलं कर्म तत्सर्वं तत्रैव क्षपयित्वाऽवशिष्टेनैहिकफलेन जपहोमादिनाऽवरोहतीति। यथा कश्चित्सेवकः सकलैः सेवोपकरणैः राजकुलं प्रविष्टश्चिरावस्थानादुपक्षीणबहूपकरणः छत्रपादुकादिमात्रपरिच्छदः स्थातुमशक्नुवन्निवर्तत इत्येवमनुशयमात्रपरिग्रहो न चन्द्रमण्डले स्थातुं शक्नोतीति। यथेतमनेवं च आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्तत इत्यर्थः। पितृयाने धूमाकाशयोर्निर्देशेनावरोहश्रवणादारोहणानुसारोऽवरोहः, तद्विरुद्धवाय्वादिश्रवणाच्चान्यथापीति ॥ ८ ॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः। ३। १। ९॥

ननु "रमणीयचरणाः कपूयचरणा" इत्यत्र चरणमाचारः शीलं वृत्तमिति नार्थान्तरम्। "अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधा" इति स्मृतेः। ततश्च न चरणशब्देन पुण्यापुण्यरूपं कर्मोच्यते। वेदेऽपि चरणकर्मणी भेदेन व्यपदिश्येते। "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणी"ति (तै०शि०११।२)अतश्च न कर्मणाऽवरोहो वर्ण्यते, किन्तु चरणाच्छीलाद्योनिविशेषप्राप्तिरिति चेत्। तन्न, चरणश्रुतिः कर्मोपलक्षणार्थेति

---

मिणः,प्रेत्य=मृत्वा,लोकान्तरे फलं भुक्त्वा ततः शेषेण भुक्तादन्येन कर्मणा अनुशयाख्येन पुनः जन्म प्रतिपद्यन्त इति· सम्बन्धः। विशिष्टा देशादयो मेधान्ता दश गुणाः येषु ते तथोक्ताः।श्रुतम्=ज्ञानम्।वृत्तम्=आचारः। अनुशयशब्दार्थं विवृणोति। स्वर्गप्राप्तिहेतुरिति। उक्तश्रुत्योरभिप्रायं वर्णयति। तस्मादित्यादिना। उक्तार्थं दृष्टान्तेन द्रढयति। यथेति। सूत्रस्यावशिष्टभागं व्याख्यातुमाह। यथेतमनेवंचेति। यथेतमित्यस्य विवरणम् आरोहप्रकारेणेति। आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो वर्षति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतितिलमाषा जायन्ते योऽन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवतीत्यारोहप्रकारः। अनेवमित्यस्य व्याख्यानं प्रकारान्तरेणेति। तद्विपर्ययेणेति यावत्। यथेतमध्वानं निवर्त्तत इतिश्रुत्यर्थं प्रदर्शयन्नाह। पितृयान इति। अवरोहन्तश्चावरोहप्रकारेण प्रकारान्तरेण चावरोहन्ति। आरोहणं हि धूमराज्यपरपक्षदक्षिणायनपितृलोकाकाशचन्द्रक्रमेण अवरोहणन्तु चन्द्रस्थानादाकाशवायुधूमाभ्रमेघक्रमेणेत्यभिप्रायेणाह। तद्विरुद्धेति। आरोहणविरुद्धेत्यर्थः॥ ८॥

कर्मविशेषाभावे पुनरावृत्तस्य कर्मानधीनब्राह्मणक्षत्रियादिजन्मानुपपत्तिरिति न च वक्तव्यं चरणविशेषेभ्यस्तदुपपत्तेरिति चोद्यं व्याकरोति। नन्विति। अनुशयशब्दाच्चरणशब्दस्य भिन्नार्थकत्वं द्योतयितुं तदर्थं विवृणोति। चरणमिति। तत्र स्मृतिमनुकूलयति। अद्रोह इति। तयोर्भेदे फलितमाह। ततश्चेति। वेदेऽपि यागादिकर्मणामाचाराणाञ्च भेदेन निर्देश इत्याह। वेदेऽपीति। तदुदाहरति। यान्यनवद्यानीति। फलितार्थं

कार्ष्णाजिनिराचार्यो मन्यते स्म । सुखदुःखे हि पुण्यापुण्यरूपकर्मफले । न हि केवलादाचारात्तयोः प्राप्तिः सम्भवति ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् । ३ । १ । १० ॥

आचारस्यानर्थक्यमेवं सति स्यादिति चेन्न । तदपेक्षत्वात्सुखसाधनपुण्यकर्माधिकारस्याचारपूर्वकत्वात् । "आचारहीनं न पुनन्ति वेदाः । सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इत्यादिस्मृतेः ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः । ३ । १ । ११ ॥

सुकृतदुष्कृते एव चरणशब्देनोच्येते । चर्यते इति चरणं कर्म, नहि लोकवेदयोश्चरणशब्दः शीले प्रसिद्धः । तुशब्द उपलक्षणार्थनिवृत्त्यर्थो, नहि मुख्ये सम्भवति लक्षणाऽऽश्रयणीया । कर्मचरणयोर्भेदव्यपदेशस्तु ब्राह्मणपरिव्राजकन्यायेनेति बादरिराचार्यो मेने ॥ ११ ॥ इति कृतात्ययाधिकरणम् ॥ २ ॥

## अनिष्टादिकारिणामपि च श्रुतम् । ३ । । १२ ॥

जीवस्य गतिस्त्रिधा—अर्चिरादिका धूमादिका यमवशगा च । तत्र विदुषां मोक्षहेतुका प्रथमा । सा च फलाध्याये वक्ष्यते । अविदुषां पुण्यकर्मणां च धूमादिकाऽत्रनिरूपिता । तदुभयविधुराणां तु नरकाद्यापत्तिश्चेदानीं निरूप्यते । तथाहि ये विहितं न कुर्वन्ति, ये च निषिद्धं कुर्वन्ति, ते उभयेऽनिष्टादिकारिणस्तेऽपि चन्द्रमसं गच्छन्ति उत नेति संशये तेषामपि श्रुतं गमनं कौशीतक्याम्नाये "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती" ति (कौ० अ० १।२) सर्वेषामविशेषेण गतिश्रवणात् ॥ १२ ॥

---

निगमयति । अत इति । परिहारं विवृणोति । तन्नेति । उदाहृतस्मृतावपि शीलस्य कर्माङ्गत्वात् चरणशब्देन शीलवाचिना कर्मानुशयो लक्ष्यते । तस्मात् सानुशया एवावरोहन्तीति भावः ॥ ९ ॥

ब्राह्मणजन्मादीनामपि कर्मफलतायामाचारवैयर्थ्यमिति चोद्यमाह । आचारस्येति । परिहरति । नेति । तदपेक्षत्वादिति व्याख्येयपदम् । आचारस्य कर्माधिकारहेतुत्वेनाचारसहितानामेव कर्मणां फलवत्त्वादिति स्मृतिमुखेन प्रमाणयति । आचारहीनमिति ॥ १० ॥

चरणशब्दस्य कर्मणि मुख्यार्थत्वं मन्यते बादरिराचार्य्य इति तन्मतं दर्शयति । सुकृतदुष्कृत इति । कर्मण एवाचारत्वे यथाकारीत्यादिभेदोक्तिः कथमित्यत आह कर्मचरणयोरिति । ब्राह्मणपरिव्राजकन्यायो गोबलीवर्दन्यायः ॥ ११ ॥ इति कृतात्ययाधिकरणम् ॥ २ ॥

अथानिष्टादिकार्याधिकरणम्

जीवस्य गतिं त्रिधा विभज्य दर्शयति । जीवस्येति । किमनिष्टादिकारिणो विहितमकुर्वाणाः निषिद्धं कुर्वाणाश्च यमयातनामनुभूय पश्चाच्चन्द्रमसं गत्वा निवर्त्तन्ते उत चन्द्रमसं न गच्छन्तीति संशये पूर्वपक्षस्तेऽपि चन्द्रमसं गच्छन्ति ये वैके चास्माल्लोकेति श्रवणादन्यथा प्रथमाहुत्यभावे योषिदग्न्याहुतेः पञ्चमत्वाभावेन तेषां पञ्चमाहुत्यपेक्षया देहारम्भाभावप्रसङ्गादिति भावः ॥ १२ ॥

नन्‌ु सुकृतिनां दुष्कृतकर्मणां च समानफलत्वमयुक्तमित्याशङ्क्याह—

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् । ३ । १ । १३ ॥**

तुशब्दः शङ्कानिरासार्थः । संयमने यमालये दुःखमनुभूयेतरेषामनिष्टादिकारिणां चन्द्रारोहावरोहौ । कुतस्तद्गतिदर्शनात् । दर्शयति च श्रुतिस्तेषां यमवश्यताम् "न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" इति । "वैवस्वतं संयमनं जनानां यमं राजानमि"ति (वि०पु०३।७।५) च ॥१३॥

**स्मरन्ति च । ३ । १ । १४ ॥**

स्मरन्ति च सर्वेषां यमवश्यत्वं पराशरादयः । "सर्वे चैते वशं यान्ति यमस्य भगवन्किले" त्यादिषु ॥ १४ ॥

**अपि सप्त ३ । १ । १५ ॥**

अपिशब्दः स्मरणस्य समुच्चयार्थः । पापिनां गन्तव्यत्वेन सप्तनरकान् रौरवमहारौरवप्रभृतीन्स्मरन्ति ॥ १५ ॥

ननु सप्तसु नरकेषु कथं यमयातनाप्राप्तिर्यतो रौरवादिषु चित्रगुप्तादीनामन्येषामधिष्ठातॄणां स्मरणादित्यत आह—

**तत्रापिचतद्व्यापारादविरोधः । ३ । १ । १६ ॥**

रौरवादिष्वपि यमव्यापारादाज्ञाकरणादविरोधः ॥ १६ ॥

इति प्राप्ते राद्धान्तः—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ३ । १ १७ ॥**

तुशब्दः पक्षनिवृत्तौ । विद्याकर्मविहीनानां देवयानपितृयानगती न स्तः, कारणाभावात् । पञ्चाग्निविद्यायां "वेत्थ यथाऽसौ लोको न सम्पूर्यते" (छा०५।१०।८) इति प्रश्नस्य प्रतिवचने

---

उत्तरसूत्रशङ्कामाह । नन्विति । अनिष्टादिकारिणां यमयातनानुभवेन विशेषः । अयं लोक इत्यादि श्रुतिस्मृतिदर्शनात् पापकर्मणां यमयातनानुभवार्थं पातालानामधोभागे रौरवादिमहानरकस्मरणाच्चोक्तदोषपरिहार इति भावः ॥ १३ ॥

स्पष्टम् १४ । १५ । १६ ॥

पूर्वपक्षमनूद्य सिद्धान्तयति । इति प्राप्त इति । सूत्राक्षराणि व्याकरोति । तु शब्द इति । न पापिनश्चन्द्रमसं गच्छन्ति विद्याकर्मविधुरत्वात् । यथाहि तेषां विद्याविधुरत्वं तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति विद्यावतः प्रकृत्याम्नाता देवयानगतिर्न सम्भवति एवं अथ य इमे ग्राम इष्टापूर्ते दत्त-

"अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनाऽसौ लोको न सम्पूर्यत" इत्यनिष्टादिकारिणामनवरोहं (छा० ६। ३। १) दर्शयति। पथोरिति च विद्याकर्मणोर्निर्देशस्तयोः प्रकृतत्वात्। "तद्य इत्थं विदुरिति देवयानः पन्था इष्टापूर्त्ते दत्तमि" (छा० ५।१०।३) ति पितृयानस्तयोरन्यतरेणापि ये न गच्छन्ति तानीमानि तृतीयस्थानभाञ्जि भूतानीति॥ १७॥

नन्वेवं तर्हि तेषां चन्द्रगमनाभावे शरीरयोगस्यैवासम्भवः पञ्चमाहुत्यभावादित्यत आह—

## न तृतीये तथोपलब्धेः। ३। १। १८॥

तृतीये स्थाने शरीरारम्भाय न पञ्चमाहुत्यपेक्षा। कुतः? तथोपलब्धेः। तथा तेनोक्तप्रकारेण 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनाऽसौ लोको न सम्पूर्यत' (छा० ६।३।१) इति तृतीयस्थानस्य केवलपापकर्मणो द्युलोकासम्पूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा। न चैवं पञ्चमाहुतिवाक्यबाध इति वाच्यम्। तस्य पुरुषवचस्त्वप्रतिपादनमात्रेणोपक्षीणतयाऽन्यनिवारकत्वे मानाभावात् अवधारणादर्शनादन्यथा वाक्यभेदप्रसङ्गात्॥ १८॥

## स्मर्य्यतेऽपि च लोके। ३। १। १९॥

अपि च लोके पुण्यकर्मणां धृष्टद्युम्नद्रौपदीप्रभृतीनां पञ्चमाहुत्यनपेक्षमयोनिजं जन्म स्मर्यते॥ १९॥

## दर्शनाच्च ३। १। २०॥

इतश्च चतुर्विधो भूतग्रामो जरायुजाण्डजस्वेदजोद्भिज्जलक्षणस्तत्र योषित्पुरुषसम्ब

---

मित्युपासते ते धूममभिसम्भवन्तीत्यादिनेष्टादिकारिणः प्रकृत्याम्नाता पितृयानगतिरपि न सम्भवति न तेषां चन्द्रप्राप्तिरुपपद्यते मार्गद्वयपरिभ्रष्टानां तृतीयस्थानिनान्तु न पञ्चमाहुत्यपेक्षाऽस्ति पञ्चाग्निविद्याप्रकरण एव वेत्थ यथा केनासौ लोको न सम्पूर्यत इति प्रश्नप्रतिवचने। अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भजन्ति जायस्व म्रियस्वेत्येतत् तृतीयस्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सत इतिश्रवणात् ये मार्गद्वयपरिभ्रष्टास्तेऽत्रैव क्रिमिकीटादिरूपेण पुनः पुनर्जननमरणवन्तो भवन्ति अतस्तृतीयस्थानिनां तेषामत्रैव परिवर्तनेन परलोकप्राप्त्यभावात् परलोको न सम्पूर्यत इत्यर्थः॥ १७॥

उत्तरसूत्रशङ्कामाह। नन्वेवमिति। प्रतिज्ञां पूरयन् सूत्रं योजयति। तृतीय इति। भोगाय हि चन्द्रारोहणमित्यादिवर्णितः प्रकारः। उपलम्भमेवाभिनयति। जायस्वेति। तस्य=पञ्चमाहुतिप्रतिपादकवाक्यस्य। मनुष्यशरीरमभिप्रेत्य तथोक्तिः न कीटक्रिमिदेहादिहेतुत्वेनेत्यर्थः। विपक्षे बाधकमाह। अन्यथेति। निषेधकत्वे वाक्यभेदप्रसङ्गादिति विधिनिषेधरूपार्थद्वये वाक्यभेदः स्यादित्यर्थः॥ १८॥

न च पुण्यकर्मणामपि सर्वेषां पञ्चमाहुत्यपेक्षानियमः द्रौपदीधृष्टद्युम्नादीनां तदभावादित्यर्थः॥ १९॥

न्धमन्तरेण स्वेदजस्थावरयोरुत्पत्तिदर्शनाच्च पञ्चमाहुत्यपेक्षा ॥ २० ॥

ननु "त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमि" ( छा० ६ । ३ । १ ) त्यत्र त्रिविधो भूतग्रामः श्रूयते, कथं तस्य चतुर्विधत्वमित्यत्राह—

## तृतीयशब्दावरोधः संशोकजस्य ३ । १ । २१ ॥

तृतीयेनोद्भिज्जशब्देन संशोकजस्य स्वेदजस्यावरोधोऽन्तर्भावः स्वेदजोद्भिज्जयोर्भूम्युदकोष्मप्रभवतुल्यत्वात् ॥ २१ ॥

इत्यनिष्टादिकार्य्यधिकरणम् ॥ ३ ॥

## तत्स्वाभाव्यापत्तिरुपपत्तेः । ३ । १ । २२ ॥

इष्टादिकारिणां भूतसूक्ष्मपरिवेष्टितसानुशयानामवरोहः । उक्तः अथ तत्प्रकारश्चिन्त्यते । "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती" ( छा० ५ । १० । ५ )त्यत्र संशयः, किमाकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः आहोस्वित्तत्सादृश्यप्राप्तिरिति ? तत्राकाशादिभाव इति पूर्वः पक्षः । राद्धान्तस्तु तत्स्वाभाव्यापत्तिराकाशादिसाम्यप्राप्तिरित्यर्थः । कुतः ? उपपत्तेः । नह्यन्यस्यान्यभाव उपपद्यते, तत्सादृश्यं तु युज्यते ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

## नातिचिरेण विशेषात् । ३ । १ । २३ ॥

आकाशवायुधूमाभ्रमेघवर्षप्राप्तौ किं द्राघिष्ठं कालं सादृश्येनावस्थानमुताल्पकालमिति विशये अल्पकाले हेत्वभावाद्द्राघिष्ठमिति प्राप्ते ब्रूमः । नातिचिरेणाल्पेन कालेनावरोहः यावद्व्रीह्यादिप्राप्तिरित्यर्थः । कुतः ? विशेषश्रवणात् । अतो वै खलु दुर्निष्प्रप-

---

स्पष्टम् ॥ २० ॥

श्रुतिविरोधं शङ्कते । नन्विति । अण्डजमेवाण्डजं पक्ष्यादि जीवजं जरायुजं मनुष्यादि उद्भिद्य जायत इत्युद्भिज्जं वृक्षादि । उद्भिज्जशब्देन स्वेदजोपसंग्रहे हेतुमाह स्वेदजोद्भिज्जयोरिति ॥२१॥ इत्यनिष्टादिकार्यधिकरणम् ।

अथ तत्स्वाभाव्यापत्त्यधिकरणम् ।

प्रागुक्तार्थेन सम्बन्धं दर्शयति । इष्टादिकारिणामिति । विषयवाक्यमुदाहरति । अथेति । कोऽसौ अध्वा यं प्रतिनिवर्त्तते तमाह यथेति । सन्देहमाह अत्र संशय इति । वायुर्भूत्वेत्यादिसामानाधिकरण्यमस्य मुख्यत्वापादकाभावसद्भावौ संशायकौ भवति श्रुत्या आकाशादिभाव एवोपेयो न तत्सादृश्यमिति शङ्कते कुत इति॥२२।

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥४॥

अथ नातिचिराधिकरणम् ।

तत्सादृश्यं गतस्येष्टादिकारिणोऽवरोहणवेलायां किं स्वल्पकालेनावस्थानमुत दीर्घकालेनेति संशयं दर्शयति आकाशेति । नियमहेतोरभावात् विलम्बेनेति मन्यते पूर्वपक्षीत्याह । अल्पकाल इति । सिद्धान्तयति । ब्रूम इति । व्रीह्यादिष्वाकाशापेक्षया चिरावस्थानं दुर्निष्प्रपतरमिति दुःखेन निःसरणं वाक्यादेवावगम्यते तदुक्तौ

तरमिति एकस्तकारश्छान्दसत्वाल्लुप्तो ज्ञेयः। व्रीह्यादिभावादुत्तरं दुःखतरं निःसरणमिति वदन्सर्वत्र पूर्वत्राचिरकालं बोधयति ॥ २३ ॥इति नातिचिराधिकरणम् ॥ ५ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात्। ३। १। २४॥

"त इह व्रीहियवा औषधिवनस्पतयस्तिलमाषा जायन्ते" इति श्रूयते। तत्र ते किं व्रीह्यादिशरीरा जायन्ते उत चेत्रज्ञान्तराधिष्ठितं व्रीह्यादौ संसर्गमात्रं प्रपद्येरन्निति विशयः। व्रीह्यादिदेहभोक्तारो जायन्ते इति पूर्वः पक्षः। जनेर्मुख्यार्थत्वोपपत्तेरिति प्राप्ते सिद्धान्तः। अन्याधिष्ठिते व्रीह्यादिशरीरिजीवविशेषाधिष्ठिते व्रीह्यादौ संसर्गमात्रं प्राप्नुवन्त्यनुशायिनो न तु व्रीह्यादिशरीरत्वम्। कुतः? पूर्ववदिति। आकाशादिवत्तेषामपि कथनात् तत्कर्मजन्यत्वाभावान्न स्थावरयोनित्वमित्यर्थः॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात्। ३। १। २५॥

अत्र साङ्ख्यश्चोदयति। कर्म द्विविधं शुद्धमशुद्धं च। तत्र शुद्धमहिंसादि, द्वितीयं ज्योतिष्टोमादि पशुहिंसावत्वात्। अनुशायिनां ज्योतिष्टोमादिकर्तृत्वेनाशुद्धव्यामिश्रकर्मफलभोगाय मुख्यमेव स्थावरं जन्मेति प्राप्ते राद्धान्तः। शुद्धमेव ज्योतिष्टोमादि कर्म। कुतः? शब्दात्। शास्त्रप्रमाणकत्वात्। "धर्माधर्मयोः सामान्यविधेर्विशेषविधिर्बलीयान्" "न हिंस्यात्सर्वभूतानी" ति सामान्यनिषेधस्य बाह्यहिंसाविषयत्वेन सावकाशत्वात्। क्रतुगतहिंसाविधेस्तु निरवकाशत्वेन बलीयस्त्वात्तेन सामान्यनिषेधस्य बाधो युक्त एवातो गौणमत्र जन्मेति ॥ २५ ॥

## रेतःसिग्योगोऽथ। ३। १। २६॥

---

आकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकारणत्वाऽवश्यंभावात् नातिचिरं तिष्ठन्तीत्यर्थः ॥ २३ ॥ इति नातिचिराधिकरणम्।

### अथ अन्याधिष्ठिताधिकरणम्

आकाशादिमेघान्तेष्विव तदनन्तरपठितेषु व्रीह्यादिष्वपि संश्लेषमात्रमिति समर्थनात् सङ्गतिः। व्रीह्यादिभावः किमवरोहतां व्रीह्यादिशरीरतापत्तिः उत तत्संश्लेषमात्रमिति संशयं दर्शयति। तत्र त इति। विशयः = सन्देहः। जायन्त इतिश्रवणात् व्रीह्यादिशरीरतापत्तिरिति पूर्वपक्षयति व्रीह्यादिदेहभोक्तार इति। पूर्वपक्षमनूद्य सिद्धान्तयति। इति प्राप्त इति। सूत्रं व्याख्यातुमाह। अन्याधिष्ठित इति ॥ २४ ॥

अत्र साङ्ख्यः शङ्कत इत्याह। अत्रेति। कर्मणो द्वैविध्यं विभज्य दर्शयति। कर्म द्विविधमिति। ततः किमित्यत आह। अनुशायिनामिति। सूत्रस्य पूर्वपक्षभागं व्याख्यायोत्तरभागं विवृण्वन्नाह। इति प्राप्ते राद्धान्त इति। वैधहिंसा पापमेव न भवति आहवनीये जुहोतीति सामान्यशास्त्रस्य पदे जुहोतीति विहितपदहोमातिरिक्तहोमविषयत्ववत्। न हिंस्यात्सर्वभूतानीति सामान्यनिषेधस्य अग्नीषोमीयं पशुमालभेतेति विशेषविहितवैधहिंसाव्यतिरिक्तहिंसाविषयत्वस्योत्सर्गापवादन्यायप्राप्तत्वादित्याशयेनाह। धर्माधर्मयोरिति ॥ २५ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं व्रीह्यादिभाववचनानन्तरं "यो योह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवती"(छा० ५।१०।५)ति श्रुतेः रेतःसिग्योगो यथा तद्योगमात्रं वक्ति, तद्वद्व्रीह्यादिभावोऽपि तद्योगमात्रमेव भूय एव भवति, तदाकृतिर्भवतीत्यर्थः। मनुष्येण भक्षितो मनुष्योजायते, पश्वादिना भक्षितः पश्वादिर्भवतीति यावत् ॥ २६ ॥

## योनेः शरीरम् । ३ । १ । २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां देहप्राप्तिः। तत्रैव सुखदुःखादिभोगस्य सत्त्वात्। ततः पूर्वं ह्याकाशादिप्राप्तौ तद्योगमात्रमेवेति सिद्धम् ॥ २७ ॥ इत्यन्याधिष्ठिताधिकरणम् ॥६॥

इति श्रीसनकसम्प्रदायप्रवर्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायि-श्रीमन्मुकुन्दचरणारुण-पद्ममकरन्दभृङ्गेण जगद्विजयिश्री६श्री-केशवकाश्मीरिभट्टेन सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ तृतीयाध्याय-प्रथमपादविवरणम् ॥ १ ॥

---

यागस्य पापमिश्रत्वाभावात् श्वशूकरादिजन्मनीव पापान्तरसङ्कीर्त्तनाभावाच्च न पापफलतया इष्टादिकारिणां व्रीह्यादिशरीरकं जन्मैतदुपपद्यते किन्तु तेषामाकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्रम् कथं तर्हि जायन्त इत्युक्तिः। यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय भवतीति पितृभावोक्तिवदिति ब्रूमः। न हि पूर्वसिद्धपितृभावेन जननं कस्यापि सम्भवति अतस्तत्र आद्यमन्नद्वारा पित्रनुप्रवेशेन तत्संश्लेषमात्रं पितृभावरूपतया व्यपदिश्यत इति वक्तव्यम्। इयमेव व्रीह्यादिभावोक्तिरपीति युक्तमिति भावः ॥ २६ ॥

योनिप्राप्त्यनन्तरमेव ब्राह्मणादिशरीरप्राप्तिस्ततः प्रागाकाशादिपित्रन्तेषु संश्लेषमात्रमिति सिद्धमित्याह। योनिप्राप्तेरिति। वैधी रागाधीनहिंसनिषेधस्वीकारेऽपि स्यान्निषिद्धैव हिंसा तत्तत्साध्येष्वन्तरेणैव रागं को वा कर्म क्लेशसाध्यं विदध्यात् ॥ मैवं हिंसैव नेया भवति मखपशोस्स्वर्गातिशयप्रापकत्वात् क्षुद्रं दुःखं प्रभूतं फलमपि च यतो रक्षणं तन्न हिंसा। दृष्टं ह्येतद्व्रणादेरुपशमनविधौ मन्त्रवर्णाच्च लब्धं तस्माद् व्योमानिलादिष्विव सुकृतकृन्तान्तेषु संश्लेषमात्रम्। इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इतिसनन्दनादिसम्प्रदायानुगतरसिकचक्रभूषा श्रीस्वामिहरिदासपदाश्रिताश्रितानुगामिपण्डितामोलकरामसंगृहीतायां वेदान्तकौस्तुभप्रभाटीकायां तृतीयाध्यायस्य प्रथमपादः।



# तृतीयाध्याये द्वितीयपादारम्भः



अथ सन्ध्यधिकरणम्

## सन्ध्ये सृष्टिराह हि ।३।२।१॥

इत्थं जाग्रदवस्थायां जन्ममरणस्वर्गनरकगमनादिदुःखजातं जीवस्य विरागार्थं प्रपञ्चितम् । एतेनात्मानात्मविवेकोऽपि सिद्धः । अथेदानीं तयोर्विवेकविरागयोर्दार्ढ्यार्थं स्वाप्नाद्यवस्था निर्णीयते । तत्र स्वप्ने सृष्टिः श्रूयते बृहदारण्यके "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान्रथयोगान्पथः सृजते, न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते, न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता"(बृ०।६।३।१०)ति । तत्र संशयः—सा सृष्टिः किं जीवकृतोत परमेश्वरकृतेति ? । जीवनिर्मितेति । कुतः ? सन्ध्ये स्वप्नस्थाने "सन्ध्यं तृतीयं स्वप्नस्थानमि"(कठ०।२।५।२) ति श्रुतेः । हि यतः "सृजते स हि कर्ता"ति श्रुतिराह स्वप्नदृग्जीवस्यैव तत्र प्रतीयमानत्वात् । १॥

## निर्मातारं चैके पुत्रादयश्च ॥ ३ । २ । २ ॥

किञ्चैके शाखिनः स्वाप्नार्थानां निर्मातारं जीवमधीयते। य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण"इति(क०।१।१।२५)। अत्र कामशब्देन काम्यंते इति कामाः पुत्रादय एवोच्यंते, नेच्छामात्रम् । "सर्वान्कामान् छन्दतः प्रार्थयस्व शतायुषः पुत्रपौत्रान्वृणीष्वे"ति प्रक्रमात् । अतो जीवनिर्मितैव स्वप्नसृष्टिः । उपकरणाद्यभावेऽपि तस्य प्रजापतिवाक्ये सत्यसङ्कल्पत्वश्रवणेन सृष्ट्युपपत्तेरिति प्राप्ते राद्धान्तमाह—

---

अथसन्ध्यधिकरणम्

प्रथमपादेन संसारस्य क्षयिष्णुत्वसातिशयत्वादिना इह परत्र तृतीयस्थानपरिभ्रमणेन च दुःखरूपता निरूपिता इति सङ्गतिं प्रदर्शयन्नाह। इत्थमिति। तस्य फलितार्थमाह । एतेनेति । सम्प्रति तृतीयपादार्थो निरूप्यते । अथेति । विषयवाक्यमुदाहरति । अथेति । विचाराङ्गं संशयं दर्शयति तत्र संशय इति। पूर्वपक्षमाह जीवनिर्मितेति। सन्ध्यशब्दार्थमाह सन्ध्य इति । तत्र मानमाह सन्ध्यमिति । हीतिव्याख्येयपदम्, स हि कर्तेति श्रवणात् तत्र तत्पदस्य "पाप्मन आनन्दांश्च पश्यतीति प्रकृतस्वप्नदृष्टृजीवपरामर्शित्वादित्यर्थः ॥ १ ॥

सर्वेषु सुप्तेषु जीवेषु । कामं कामं यामुलन्तमिदं सङ्कल्प्यसंकल्प्येत्यर्थः । न तु सर्वान् कामांश्छन्दतः प्रार्थयस्वेति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । संकल्प्यसङ्कल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्तीति श्रुत्यर्थः । कामशब्दार्थं विवृणोति । अत्रेति । तत्र गमकमाह । सर्वानिति । न च तस्य स्वप्नप्रपञ्चस्रष्टृत्वाभावस्तस्य प्रजापतिवाक्योदितसत्यसंकल्पत्वादिमत्वात् जागरदशायां तिरोहितस्यापि तस्य स्वप्ने मुक्ताविवाविर्भावोपपत्तेरित्याशयेनाह । उपकरणाभाव इति ॥ २ ॥

## मायामात्रं तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वात् ॥ ३ । २ । ३ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । स्वाप्नसृष्टिः परमेश्वरनिर्मितैव, न जीवकृता । कुतः ? यतो मायामात्रं मायाशब्द आश्चर्यवाची "जनकस्य कुले जाता देवमायेव निर्मिते" त्यत्रैवं दर्शनात् । जीवस्योपकरणाद्यभावेन तच्छक्तिशून्यत्वात् तस्य सत्यसङ्कल्पत्वादिधर्माणां कात्स्न्येंनाऽनभिव्यक्तस्वरूपत्वात्, बद्धावस्थायां तिरोधानादित्यर्थः । तस्मात्तत्तज्जीवकर्मानुसारेण तदैकैकजीवानुभवयोग्यमितरसकलपुरुषाननुभूयमानमाश्चर्यरूपं रथादिकं श्रीपुरुषोत्तमेनैव निर्मीयते । तस्य सर्वशक्तिसत्यसङ्कल्पत्वादिस्वाभाविकधर्मयोगात् ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३ । २ ॥ ४ ॥

"यदा कर्मसु काम्येषु स्त्रियमि"(छा०।५।२।६)ति अथ "यदा स्वप्ने पुरुषं कृष्णंकृष्णदन्तमि" (स्वप्नाध्यायी) त्यादिना स्वप्नस्येष्टादिसूचकत्वश्रवणात् । तच्च जीवकर्तृकत्वे न सम्भवति । यदि जीवः सृष्टिकर्त्ता तर्हि शुभसूचकमेव स्वप्नं दृष्ट्वा सदा सुखमेवानुभूयेत न कदापि दुःखी स्यात् । नहि चेतनः स्वदुःखार्थं कोऽपि यतते इति भावः । स्वाप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते । "आरोहणं गोवृषकुञ्जराणां स्वप्ने स्वगम्यागमनं च धन्यमि"ति "खरयानतैलाभ्यञ्जनान्यधन्यानी"ति । "कामं काममि"ति च परमेश्वरमेव निर्मातारमाह "य एषु सुप्तेषु जागर्ति, (कठ०।१।१।५) तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चने" ( कठ० । ५ । ८ ) ति वाक्यशेषे परमात्मासाधारणधर्मश्रवणात् । तेषां च जीवे कथमप्यसम्भवात्तस्माज्जीवानामल्पतरकर्मानुसारिफलभोगाय तावन्मात्रकालीनं तदेकतमेनानुभाव्यं रथादि परमेश्वर एव सृजतीति । विशेषार्थस्तु पूर्वमेवोक्तः ॥ ४ ॥

---

सिद्धान्तयति । राद्धान्तमाहेति । सूत्राक्षराणि व्याकरोति । तु शब्द इति । आश्चर्यरूपस्वाप्नसृष्टेः नित्याविर्भूतसत्यसङ्कल्पत्वादिगुणवान् सर्वेश्वर एव कर्त्ता न तु प्रत्यगात्मा अनादिकर्मात्मिकमायया तस्य सत्यसंकल्पत्वादीनां तिरोहितत्वात् तिरोधायकसत्वं च स्वप्नदशायामभिव्यक्त्यसम्भवात् परमेश्वरस्य स्वाप्नसृष्टिकर्तृत्व एव च रथादिसृष्ट्युक्त्यनन्तरं स हि कर्त्तेतिहेतूपन्यासः सङ्गच्छत इत्याह । जीवस्येति । तस्य = जीवस्य । सर्वेश्वरो भगवान्वासुदेवः प्राणिनां तत्तत्कर्मानुसारेण जागर इव स्वप्नेऽपि पदार्थविशेषान् सृष्ट्वा तत्प्रयुक्तसुखदुःखान्यनुभावयतीत्युपपत्तिसत्वात् । सकलप्रपञ्चनाटकसूत्रधारसर्वेश्वर एव स्वाप्नसृष्टेः कर्तेति ॥ ३ ॥

स्वप्नो भविष्यतः शुभस्य सूचक इत्यत्र मानं दर्शयति । यदा कर्मसु काम्येष्विति । स्वप्ने पश्यति समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने इति । स्वप्नेऽशुभसूचिकां श्रुतिमुदाहरति । यदा स्वप्न इति । स्वप्ने सृष्टेः परमेश्वरकर्तृकत्व एव स्वप्ने तैलपानतैलावगाहनमांसभक्षणमध्वशनैकपुण्डरीकधारणादीनामशुभसूचकानां तदानीन्तनानामनिष्टकारकाणाँ चौरव्याघ्रादीनाञ्च सृष्टिरवलेशेन उपपादिता भवति । जगत्कर्त्ता परमेश्वरः तत्तत्कर्मानुसारेण जागर इव स्वप्नेऽपि पदार्थविशेषान् सृष्ट्वा तत्प्रयुक्तसुखदुःखान्यनुभावयतीत्युपपत्तिसत्वादिति भावः । य एष सुप्तेष्विति मन्त्रोऽपि सर्वेश्वरविषयस्तदनन्तरं 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते, तस्मिन् लोकाः श्रितास्सर्वे तदुनात्येति कश्चने'त्याम्नानादित्याह । काममिति । यद्युत्वन्तं सङ्कल्प्यसङ्कल्प्येत्येवमर्थं योज्यमित्यर्थः ॥४॥

नन्वु जीवस्य सत्यसङ्कल्पादिकं कुतस्तिरोहितमिति चेत्तत्राह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥३।२।५॥**

तुशब्दः शङ्कोच्छेदकः। पराभिध्यानात् अनादितत्कर्मानुगुणपरमेश्वरसङ्कल्पादेव तिरोहितमिति ब्रूमः। ततस्तत्सङ्कल्पादेव ह्यस्य बन्धमोक्षौ श्रूयेते। "संसारबन्धस्थितिमोक्ष हेतुरि" त्यादिश्रुतेः "बन्धको भवपाशेन भवपाशाच्च मोचकः" इत्यादिस्मृतेश्च ॥ ५ ॥

**देहयोगाद्वा सोऽपि । ३ । २।६॥**

सोऽपि तिरोभावोऽपि देहयोगाद् वा भवति। वा विकल्पे। व्यवस्थितश्च विकल्पः। सृष्टिकाले देहावस्थचिद्वस्तुसंयोगात्। प्रलये च नामरूपविभागानर्हाचिद्वस्तुसंयोगात्। अतोऽनभिव्यक्तस्वरूपत्वान्न जीवस्य स्वाप्नसृष्टिकर्तृत्वमिति सिद्धम् ॥६॥ इति सन्ध्याधिकरणम्।

अथ सुषुप्त्यवस्था श्रूयते। "अथ यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु यदा नाडीषु सुप्तो भवती"ति छान्दोग्ये (८।६।३) तथा "अथ यदा सुषुप्तो भवति यदा न कश्चन वेद तदा हि ता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" (बृ०।४।१।१९) इति। "य एषोऽन्तर्हृदये आकाशस्तस्मिंश्छेते इति च बृहदारण्यके। आकाशशब्दोऽत्र ब्रह्मवाचकः। तथा "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवती"ति। नाड्यः पुरी तद्ब्रह्म चे ति त्रिविधसुषुप्तिस्थानपराः श्रुतयो

---

उत्तरसूत्रस्य चोद्यमाह। नन्विति। सूत्रार्थं व्याकरोति। तु शब्द इति। प्रत्यगात्मनः सत्यसंकल्पत्वेऽपि तस्य प्रत्यगात्मनः सत्यसङ्कल्पत्वस्य सर्वेश्वरसङ्कल्पादनादिकर्मपरम्परारूपाविद्यायाः तिरोहितत्वात् ततस्तत्सङ्कल्पादेवास्य बन्धमोक्षौ भवत इत्यर्थः। श्रुतिमुदाहरति। संसारबन्ध इति। स्मृतिं पठति। बन्धकइति ॥ ५ ॥

सूत्रार्थं व्याचष्टे। सोऽपीति। विभज्य दर्शयति सृष्टिकाल इति। फलितार्थं प्रदर्शयति। अत इति। सृष्टिकाले प्रलये च देहोचितप्रकृतियोगाभ्यां जीवस्य सत्यसङ्कल्पत्वस्य तिरोहितत्वादेवेत्यर्थः। परमेश्वरस्यैव सृष्टिकर्तृत्वं न शारीरस्येति सिद्धम् ॥ ६ ॥ इति सन्ध्यधिकरणम् ॥ १ ॥

अथ तदभावाधिकरणम्

पूर्वोत्तराधिकरणयोस्सङ्गतिं प्रदर्शयति। अथेति। स्वाप्नसृष्टिनिरूपणानन्तरमित्यर्थः। विषयवाक्यान्युदाहरति। अथ यत्रैतत्पुरुष इति। तत्=तत्र। एवं सतीति यावत्। यत्र=यदा। सुषुप्तः=समस्तोपसंहृतकरणमण्डलः। अतएव संप्रपन्नः बाह्यविषयसंसर्गजन्यदुःखरहितः स्वप्नं न विजानाति अतः, स्वप्नादर्शनं सुषुप्तिरिति यावत्। तदा आसु नाडीषु प्रविष्टो भवति पुरीतद्गतब्रह्मगमनाय नाडीषु प्रविष्टो भवतीत्यर्थः। अनया श्रुत्या नाड्याः सुषुप्तिस्थानत्वमुच्यते। पुरीततः सुषुप्तिस्थानत्वमितिप्रदर्शनाय श्रुत्यन्तरमुदाहरति "अथ यदा सुषुप्तो भवती"ति" ब्रह्मणः सुषुप्तिस्थानमिति निर्धारणाथ श्रुत्यन्तरं पठति य एषोन्तःहृदय इति। सम्पन्नो भवतीति सम्पत्तिर्नाम देहे क्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्येव स्थानम्। सम्पत्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः एवं नाड्यः पुरीतद्धृदयाकाशरूपं ब्रह्म चेति त्रिषु सुषुप्तिस्थानत्वेन श्रूयमाणेषु किमेषां विकल्पः समुच्चयो वेति संशयं दर्शयति ताः किमिति। ताः=श्रुतयः। पूर्वपक्षयति निरपेक्षत्वेनेति। पूर्वपक्षमनूद्य सिद्धान्तयति। इति प्राप्तआह इति। सूत्राक्षराणि व्याकरोति। चकार इति प्रासादखट्वापर्यङ्कन्यायेन तेषां प्रयोजनभेदेन समुच्चयसम्भवात्। "सत आगत्य

दृश्यन्ते । ताः किमन्योन्यनिरपेक्षतया सुषुप्तिस्थानं विकल्पयन्ति उत परस्परापेक्षतयैकं सुषुप्तिस्थानं प्रतिपादयन्ति ? इति संशयः । निरपेक्षत्वेन प्रतीतेर्युगपदनेकस्थानवृत्त्यसम्भवाच्च विकल्पयन्तीति प्राप्त आह—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च । ३ । । २ । ७॥

चकारः पुरीतत्समुच्चयार्थः । तदभावः स्वप्नदर्शनाभावः सुषुप्तिरिति यावत् । सा नाडी पुरी तदात्मसु भवति । कुतः ? तच्छ्रुतेः । तेषां नाडी पुरी तदात्मनां सुषुप्तिस्थानत्वेन श्रवणात् । तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ, ब्रह्म च पर्यङ्कस्थानीयम्, अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानमिति ॥ ७ ॥

## अतःप्रबोधो ऽस्मात् । ३।२।८॥

यतो ब्रह्मैव सुषुप्तिस्थानमतोऽस्माद्ब्रह्मणो जीवस्य प्रबोधो जागरितस्थानप्राप्तिरुपपद्यते । "सत आगम्य न विदुः सत आगच्छामह" (छा. ६।१०।२) इति ॥ ८ ॥

इति तदभावाधिकरणम् ॥ २ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ३ । २ । ९ ॥

किं यः सुप्तः स एव प्रबोधसमये समुत्तिष्ठति तदन्यो वेति ? विशयः ।

---

न विदुरि"ति सुषुप्तजीवानां ब्रह्मणस्सकाशादेव प्रबोधस्य नित्यवदाम्नानाच्च नाष्टदोषदुष्टो विकल्पो युक्तः । व्रीहियवयोस्त्वगत्या विकल्पः । यथाहुः "एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः विकल्प आश्रितस्तत्र गतिरन्या न विद्यत इति" प्राप्तप्रामाण्यपरित्यागः, अप्राप्तप्रामाण्यस्वीकारः, परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति व्रीहिशास्त्रे यवशास्त्रे च प्रत्येकं चत्वारो दोषा इत्येवं विकल्पेऽष्टौ दोषाः प्रसिद्धाः । एवमष्टदोषप्रसिद्धिः व्रीहियवरूपप्रसिद्धोदाहरणे । इह नाडीपुरीतद्ब्रह्मणां त्रयाणां विकल्प इति पूर्वपक्षे तु एकैकत्र चत्वारो दोषा इति द्वादश दोषाः प्रसज्यन्ते । तथाहि एकस्यां सुषुप्तौ नाड्यां शयने पुरीतद्वाक्ये ब्रह्मवाक्ये च प्रत्येकं प्राथमिकौ द्वौ द्वौ दोषौ । सुषुप्त्यन्तरे पुरितति शयने नाडीवाक्ये प्राथमिकौ द्वौ द्वौ दोषौ । पुरितद्वाक्ये तु उपरितनमपि दोषद्वयमिति चत्वारो दोषाः। पुनः सुषुप्त्यन्तरे ब्रह्मणि शयने ब्रह्मवाक्येऽपि उपरितनं दोषद्वयम् । सुषुप्त्यन्तरे नाड्यां शयने नाडीविषयेऽपि उपरितनदोषद्वयमिति स्वापचतुष्टयेन द्वादशदोषाः प्रादुःष्युः । व्रीहियवशास्त्रयोस्तु प्रयोगत्रयेणाष्टौ दोषा इति विशेषः । नन्वनेनाधिकरणेन कः परब्रह्मणो महिमाविशेषः सिद्ध्यति सुप्तजीवविश्रान्तिस्थानत्वगुणनियम इति चेत् मुक्तिसंसारयोरविशेषेण ब्रह्माश्रितस्य जीवस्य नाड्यां पुरितति वा कदाचित्सुषुप्तिरिति पूर्वपक्षेऽपि तत्तदवच्छिन्नब्रह्मणस्तद्विश्रान्तिस्थानत्वानपायात् । उच्यते—दहरविद्यायां सुषुप्तौ दहराकाशरूपं ब्रह्म प्राप्तस्य सकलपाप्मास्पर्शः श्रूयते "सर्वे पाप्मानोऽतो निवर्त्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक" इति । एवं ब्रह्मणस्सुषुप्तजीवगतसकलपापास्पर्शहेतुत्वरूपो महामहिमा नियतस्सिद्ध्यति । "तन्न कञ्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवती"ति। नाडीवाक्यगततेजश्शब्दोऽपि नाडीद्वारा प्राप्यं ब्रह्माचष्टीतेति ततोऽपि तस्य महिमा नियतस्सिद्ध्यति । अन्यथा नाडीवाक्यशेषो नाडीस्तुतिपर एव स्यादिति सुषुप्तजीवसकलपापास्पर्शहेतुत्वस्य नाडीसाधारण्यापात्या स महिमा परब्रह्मासाधारणो न सिद्ध्येदित्यभिसन्धिः ॥ ७ ॥ ८ ॥

अथ कर्मानुस्मृतिशब्दविध्यधिकरणम्

विचाराङ्गं संशयं दर्शयति । किं यः सुप्त इति । विशयः=सन्देहः । पूर्वपक्षमनूद्य समाधत्ते । इति

नियमहेत्वभावादनियम इति पूर्वपक्षे प्राप्त उच्यते—स एव त्विति। तुशब्दः पक्षव्यावृत्त्यर्थः। यः सुप्तः स एव प्रबोधसमये उत्तिष्ठति। कुतः? कर्मेत्यादि। पूर्वेद्युरर्धं कृतं कर्मानुस्मृत्य परेद्युस्तत्समाप्तये प्रवृत्तिदर्शनात्। "योऽहमस्वाप्सं स एवाहं जागर्मी"ति प्रत्यभिज्ञानात्। "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तथा भवन्ती"(छा० ६।१०।२)त्येवमादिशब्देभ्यश्च। "अग्निहोत्रं जुहुयादात्मानमुपासीते" त्यादिविधिभ्यश्च। अन्यथाऽग्निहोत्रादिकर्मस्वर्द्धकृतेष्वन्यश्चेदुत्तिष्ठति, तदाऽग्निहोत्रादिश्रवणादिभोगमोक्षसाधनविधायिकाः श्रुतयोऽनर्थिकाः स्युः। कृतनाशाकृताभ्यागमप्रसङ्गश्च। अहरहर्जीवानामुत्पत्तिविनाशौ च स्यातामिति भावः॥ ९॥ इतिकर्मानुस्मृतिशब्दविध्यधिकरणम्॥ ३॥

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात्। ३। २। १०॥

मुग्धो नाम मूर्च्छितः स किमवस्थ इति चिन्त्यते। चतस्रोऽवस्थास्तावज्जीवस्य प्रसिद्धाः जागरितं स्वप्नः सुषुप्तिरुत्क्रान्तिरिति। न पञ्चमी क्वापि प्रसिद्धाऽस्ति। तत्र केयं मूर्च्छा आसामन्यतमा उतावस्थान्तरम् इति विशयेऽन्यतमेति पूर्वः पक्षः। अवस्थान्तरकल्पने मानाभावादिति प्राप्ते राद्धान्तः। मुग्धे मूर्च्छिते मुषलाद्यभिहते पुरुषे या तस्यावस्था सार्द्धसम्पत्तिः मरणस्थानस्यार्द्धं सम्पद्यते मुग्धः। कुतः? परिशेषात्। जागरादावनन्तर्भावात्। तथाहि न तावत्स्वप्नजागरौ, विशेषज्ञानाभावात्। नापि मरणम्, प्राणोष्मणोर्विद्यमानत्वात्, नापि सुषुप्तिस्तद्वैलक्षण्यात्। सुषुप्तस्य प्रसन्नवदनत्वनेत्रनिमीलनश्वासमुश्वनादीनामुपलम्भात्। अतः परिशेषान्मरणार्द्धसम्पत्तिर्मूर्च्छा। मरणं च सर्वप्राणादिसम्बन्धोपरतिः। सूक्ष्मप्राणदेहसम्बन्धेनावस्थितिर्मूर्च्छेति विवेकः। यदुक्तं न पञ्चमी क्वापि प्रसिद्धाऽस्तीति। नैष दोषः। अस्याः कादाचित्कत्वात्। लोकायुर्वेदयोरर्द्ध-

---

पूर्वपक्षे प्राप्त उच्यत इति। सूत्रार्थं विवृणोति। तु शब्द इति। उक्तार्थं प्रत्यभिज्ञया द्रढयति। योऽहमिति। श्रुतिमुखेनाप्युक्तार्थं प्रमाणयति। इमाः सर्वा इति। बाधकतर्कमुपन्यस्यति। अन्यथेति। सुप्तेतर उत्तिष्ठतीति स्वीकारे। कृतनाशेति। कृतस्य कर्मणः नाशः, अकृतस्य कर्मणः प्राप्तिरित्यर्थः॥९॥ इति कर्मानुस्मृतिशब्दविध्यधिकरणम्।

अथ मुग्धाधिकरणम्

जीवावस्थाप्रसङ्गादिदमधिकरणम्। अस्य विषयमाह। मुग्धो नामेति। मूर्च्छाजागरस्वप्नसुषुप्तिमरणरूपप्रसिद्धावस्थास्वन्तर्भूता उत तद्भिन्नेति भेदकसद्भावासद्भावाभ्यां संशय इत्याह। तत्रकेयामति। मानाभावादिति। यद्यप्येषा विशेषविज्ञानाभावान्न जागरः स्वप्नो वा नापि सुषुप्तिः प्रसन्नवदनत्वश्वासभरितत्वयोरभावात् तथापि सर्वेषामिन्द्रियाणां प्राणवायोश्च व्यापारादर्शनान्मरणमेवैषेति पूर्वपक्षः। सिद्धान्तयति। इति प्राप्ते राद्धान्त इति। सूत्रार्थं व्याकरोति। मुग्ध इति। हेत्वर्थं विवृणोति। तथाहीत्यादिना। मरणमूर्च्छयोः पार्थक्यं दर्शयति। मरणञ्चेति। प्रागुक्तं दोषमपाकर्त्तुमनूद्यति। यत्तूक्तमिति। आयुर्वेदो वैद्यकशास्त्रम्। कथमन्यथा मुसल-

सम्पत्त्योरभ्युपगमाच्च न पञ्चमी गण्यत इति। तस्माज्जन्ममरणस्वर्गनरकादिभोगेन स्वप्नादिदुःखभोगेन च तेषु दोषं निश्चित्य, तेभ्यश्च सर्वानात्मवर्गेभ्य आत्मानं विविच्य ततः सर्वतो विरज्य श्रेयसे यतेतेति तात्पर्यार्थः। "परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेदमायात् यथेह कर्मजितो लोकः क्षीयते" इत्यादिश्रुतेः ॥ १० ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । ३ । २ । ११ ॥

दोषदर्शनेन वैराग्योत्पादनाय जीवस्यावस्थाविशेषा निरूपिताः। अथेदानीं ब्रह्मप्राप्तितृष्णोत्पादनाय ब्रह्मणः समस्तहेयसम्बन्धरहितत्वाशेषकल्याणगुणसागरत्वप्रतिपादनाय चेदमारभ्यते। तत्र जागरादिस्थानस्थितस्य जीवस्येव तदन्तर्यामितया स्थितस्य ब्रह्मणोऽपि तत्तत्स्थानप्रयुक्ता दोषाः सम्भवन्ति उत नेति संशये सम्भवन्तीति। कुतः? तत्र तत्र शरीरेऽन्तर्यामितया सर्वावस्थास्ववस्थानात्। अतः स्वेच्छया प्रविष्टस्याकर्मवश्यस्यापि नानाविधाशुचिदेहसम्बन्धः छन्दतोऽपि पूयशोणितादिमज्जनं चापुरुषार्थ एवेत्यतः सम्भवन्ति सर्वे दोषा इति प्राप्ते आह न स्थानत इति। परस्य ब्रह्मणः सर्वत्र चेतनाचेतनवस्तुमात्रे शुद्धाशुद्धपदार्थे स्वेच्छया प्रविष्टस्यापि स्थानतश्चेतनाचेतनादिस्थानभूतैः पदार्थैर्नापुरुषार्थभूतहेयधर्मसम्बन्धगन्धः। हि यस्मात्सर्वत्र सर्वास्वपि श्रुतिस्मृतिषूभयलिङ्गं ब्रह्माम्नातम्। तत्र "य आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्पः यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः, आनन्दं ब्रह्मणो विद्वान्, स्वाभाविकी ज्ञानबलक्रिया च, भीषास्माद्वातः पवते, निष्कलं निष्क्रियं शान्तम्, अथात आदेशो नेति नेति अस्थूलमनण्वि'त्यादिश्रुतयः। 'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः। तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः॥ परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे (वि० पु० ६।५।८४)। यो मामजमनादिं च वेत्ति लोकमहेश्वरं मयाऽध्यक्षेण प्रकृतिः, उत्तमः पुरुषस्त्वन्यः, सर्वज्ञः सर्वकृत्सर्वशक्ति-

---

पातादिना मुग्धं बन्धुमुपलभ्य तदीयसंज्ञालाभार्थं तदीयपितृप्रभृतयश्चिकित्साशास्त्रकुशलमन्विष्यानुगच्छेयुरिति भावः। सूत्रस्य तात्पर्यार्थं विवृण्वन् निगमयति। तस्मादिति। जीवस्य दुःखादिमदावस्थाक्रान्तत्वादित्यर्थः ॥१०॥

इति मुग्धाधिकरणम्

अथ उभयलिङ्गाधिकरणम्

पूर्वोत्तराधिकरणयोस्सङ्गतिं प्रदर्शयन्नाह। दोषदर्शनेनेति। एतदधिकरणप्रतिपाद्यमर्थं स्फुटयति। अथेति। परब्रह्मणो विचित्रस्वप्नार्थस्रष्टृत्वसुषुप्तिविश्रान्तिस्थानस्वरूपमहिमप्रतिपादनेन च मूर्च्छायाः मरणार्धसम्पत्तिरूपत्वप्रतिपादनद्वारा मूर्च्छामरणावस्थास्वरूपविशदीकरणेन च जीवस्य जागराद्यवस्थासु ये दोषा व्यञ्जितास्ते तदन्तर्यामिणोऽपि भवन्ति उत न भवन्तीति जीवदोषहेतूनां कर्मणामीश्वरे सद्भावासद्भावाभ्यां तस्मिन् कर्माभावेऽपि तेषां शरीरावस्थितिप्रयुक्तत्वतदभावाभ्याञ्च संशय इत्याशयेनाह। तत्रेति। संशये हेतुं पृच्छति।

ज्ञानबलादिमान् । अन्यूनश्चाप्यवृद्धश्च स्वाधीनो नादिमान्वशी । कामतन्द्राभयक्रोधकामादिभिरसंयुतः निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरक्रमः" इत्यादिस्मृतयश्च समस्तहेयलेशास्पृष्टमाहात्म्यमशेषकल्याणगुणसागरं परं ब्रह्म प्रतिपादयन्तीत्यर्थः । एतदभिप्रेत्योक्तं श्रीभगवताऽऽद्याचार्येण वाक्यकारेण । "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिमि" त्यादिना ॥ ११ ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् । ३।२।१२ ॥

ननु यदुक्तं ब्रह्म उभयलिङ्गत्वाच्छुद्धाशुद्धपदार्थेषु स्वेच्छया प्रविष्टस्यापि नापुरुषार्थभूतहेयधर्मसम्बन्धगन्ध इति । तन्न सम्भवति । यथा जीवस्य स्वतोऽपहतपाप्मत्वादियुक्तस्यापि तत्तद्देहसम्बन्धावस्थाभेदादुक्तदोषास्तथा परस्यापि सर्वान्तर्यामितया तत्तद्देहसम्बन्धित्वावस्थाभेदात्ते दोषाः स्युरिति चेन्न । कुतः ? प्रत्येकमतद्वचनात् । "एष ते आत्मान्तर्याम्यमृतः" इति प्रतिपर्यायमन्तर्यामिणो निर्दोषत्वाभिधानेन दोषासम्बन्धित्ववचनात् । जीवस्य तु बद्धावस्थायामपहतपाप्मत्वादिकं तिरोहितमित्युक्तं पराभिध्यानादित्यनेन । किञ्च सर्वं वस्तु परमेश्वरसङ्कल्पादेव कालभेदेन सुखदुःखात्मकं भवति । न स्वरूपतस्तथाऽस्ति । अन्यथा सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात् । तथोक्तं "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ! वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च । कोपाय च यतस्तस्माद्वस्तु दुःखात्मकं कुतः ॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते । तस्माद् दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकमि" ति । अतः कर्मवश्यानां जीवानामेव तत्तत्कर्मानुगुण्येनेश्वरसङ्कल्पेन तत्तद्वस्तुसम्बन्धप्रयुक्तो दोषः, ब्रह्मणस्तु स्वाधीनस्य सर्वत्रान्तर्यामितयाऽवस्थितस्यापि न दोषगन्धस्पर्शः सम्भवति । अपि तु सर्वनियमनरूपलीलारसपोषक एव तत्तद्वस्तुसम्बन्ध इति ॥ १२ ॥

---

कुतइति । समाधत्ते । इति प्राप्त आहेति । स्वतो निर्दोषस्य ब्रह्मणस्तत्र तत्र स्थानतोऽपि दोषाः न प्रसज्यन्ते श्रुतिषु स्मृतिषु च तस्य निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोभयलिङ्गत्वप्रतिपादनादित्यर्थः । वाक्यान्युदाहरति । आत्मेति ॥ ११ ॥

प्रागुक्तार्थं प्रतिक्षेप्तुमनूद्यति । ननु यदुक्तमिति । सूत्रस्य पूर्वपक्षभागं विवृणोति । यथा जीवस्येति । देहावस्थितितौल्ये जीववद्दोषाः परब्रह्मणि कथं न प्रसजन्त इत्यर्थः । एतच्छङ्कापरिहारार्थमेवान्तर्यामिब्राह्मणे पृथिव्यादिपर्यायेषु प्रतिपर्य्यायम् । "एष त आत्मान्तर्याम्यमृत" इत्यमृतत्वमभिहितं, ततश्च तत्र तत्र स्थित्वा नियमनं कुर्वतोऽप्यन्तर्यामिणो न तत्सम्बन्धप्रयुक्ता दोषा भवन्ति नहि कारागृहे चौरस्येव तत्क्लेशनार्थं तत्र स्थितस्याधिकारिपुरुषस्य बन्धनताडनादिदोषा भवन्तीत्याशयेनोक्तां शङ्कां परिहरति । नेति । ननु तथापि मलमूत्रादिपूरितदेहान्तरावस्थानं स्वयमेव साक्षात्कुर्वतोऽन्तर्यामिणस्तत्प्रयुक्ता दोषा न भवन्तीति कथं प्रत्येतव्यमित्यत्राह । किञ्चेति । वस्तूनां दोषावहत्वं न तत्तद्वस्तुस्वभावप्रयुक्तं, किन्तु परमेश्वरसङ्कल्पाधीनमित्याह । सर्ववस्त्विति । विपक्षे बाधकतर्कमाह । अन्यथेति । वस्तुस्वभावप्रयुक्तत्व इत्यर्थः । उक्तार्थं श्रीपराशरवचसा द्रढयति । नरकस्वर्गसंज्ञइति । फलितार्थं विवृणोति । कुतइति ॥ १२ ॥

## अपि चैवमेके ।३।२।१३॥

अपि च जीवपरयोरेकत्र स्थितिमत्त्वेऽपि यदिदं दोषभाक्त्वाभाक्त्वमुक्तमेवमेवैके शाखिनोऽधीयते "द्वासुपर्णा सयुजे" त्यादिना ॥ १३ ॥

ननु यदुक्तं जीवस्य कर्मवश्यतया कर्मफलभोक्तृत्वं, ब्रह्मणस्तु तदभावान्न तद्भोक्तृत्वमिति । नैतदुपपद्यते । यतो "ऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति स्वात्मकजीवानुप्रवेशपूर्वकं ब्रह्मणो नामरूपव्याकरणश्रुतेस्तस्यापि तदन्तर्यामितया तदात्मभूतस्य जीववत् देवमनुष्यादिरूपवत्त्वं तन्नामभाक्त्वं चाविशिष्टम् । यथात्वे च विधिनिषेधविषयतया कर्मवश्यत्वमप्यवर्जनीयमिति चेत्तत्राह—

## अरूपवदेव हि तत्प्रधानत्वात् ।३।२।१४॥

तत्तच्छरीरेऽन्तर्यामितयाऽनुप्रविष्टमपि तद्ब्रह्म अरूपवदेव देवमनुष्यादिरूपरहितमेव । कुतः ? देवतिर्यग्मनुष्यादिनामरूपनिर्वोढृत्वेन प्रधानत्वात् । "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" (छा.८।१४।१) ति श्रुतेः । अयं भावः—जीवस्य कर्मजन्यसुखदुःखभोक्तृत्वेन तत्तद्रूपसम्बन्धित्वं,ब्रह्मणस्तु कर्माभावे तत्फलभोक्तृत्वाभावादरूपत्वं, विधिनिषेधशास्त्रमपि कर्मवश्यमेवाधिकुरुते । अत उभयलिङ्गमेव हि परं ब्रह्म ।। १४ ।।

ननु स्यादेतद्यदि ब्रह्मणः सत्यकामत्वसत्यसङ्कल्पत्वसर्वज्ञत्वजगत्कारणत्वसर्वान्तरात्मत्वादिकं सत्यं स्यात्तत्तु शबलगततया नेति नेतीत्यादिश्रुतिप्रतिषिद्धत्वेन मिथ्याभूतमतः "सत्यं ज्ञानमनन्तं ब्रह्म" (तै०आ०।१।१) त्यादिश्रुतिप्रतिपाद्यप्रकाशैकस्वरूपस्य ब्रह्मणः कथमुभयलिङ्गत्वमिति चेत्तत्राह—

## प्रकाशवच्चावैयर्थ्यात् ।३।२।१५॥

---

एवमीश्वरस्य कर्माभावादेवैकदेहस्थितयोरपि जीवेश्वरयोर्भोगतदभावावस्थां दर्शयति श्रुति. "द्वा सुपर्णा सयुजा सखाये" त्यादिमन्त्र इत्याह । अपिचेति ॥ १३ ॥

जीववदीश्वरस्यापि कर्मवश्यता न निवार्य्येत्याशङ्कते । नन्विति । तस्य=ब्रह्मणः । तदन्तर्यामितयेति । जीवान्तर्यामितयेति तदर्थः । तदात्मभूतस्येति । जीवात्मभूतस्येत्यर्थः । ततः किमित्यत आह । तथात्वेति । तदन्तर्यामितया तदात्मभूतत्वे देवमनुष्यादिरूपवत्वे तन्नामभाक्त्वे चेति तदर्थः । सूत्रार्थं व्याकरोति । तच्छरीर इति । "आकाशो ह वै नामे"त्यादि श्रुत्या सर्वानुप्रविष्टस्यापि तस्य नामरूपकार्यास्पर्शेन केवलं निर्वोढृत्वप्रतिपादनादिति हेत्वर्थं व्याकुर्वन्नाह । देवतिर्यगिति । सर्वज्ञस्य तस्यास्मदादीनामिवेदं कर्म मया कर्त्तव्यमिति विधिज्ञाप्यत्वासम्भवेन सर्वप्रेरकस्य तस्य यत्प्रेर्यत्वासम्भवेन च तत्र कर्मवश्यतोक्तिर्दूरत उत्सारिता भवतीत्याशयेनोक्तसूत्रस्य भावं स्फुटीकरोति । अयम्भाव इति । फलितार्थं व्याकरोति । अतइति । उभयलिङ्गमिति । श्रुतिस्मृतिषूभयलिङ्गं स्वभावतोऽपास्तसमस्तदोषवत्त्वं स्वाभाविकनिखिलकल्याणगुणगणवत्त्वरूपेत्यर्थः ॥ १४ ॥

यथा "सत्यं ज्ञानमनन्तं ब्रह्म" त्यादिवाक्यावैयर्थ्यात्प्रकाशैकस्वरूपं ब्रह्मेत्यभ्युपगतं, तथा सत्यकामत्वादिसमस्तहेयलेशास्पृष्टमाहात्म्यत्वकल्याणगुणसागरत्वाभिधायिवाक्यावैयर्थ्यादुभयलिङ्गत्वं ब्रह्मण इति ।

## आह च तन्मात्रम् ॥३।२।१६॥

"सत्यं ज्ञानमि" ति वाक्यं प्रकाशस्वरूपं ब्रह्मेत्येतावन्मात्रमाह, नतुवाक्यान्तरावगतं कल्याणगुणसागरत्वसत्यकामत्वादिकं निषेधति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ।।२।१७॥

दर्शयति च वेदान्तवाक्यगणः परस्य समस्तहेयलेशास्पृष्टमाहात्म्यत्वं, कल्याणगुणसागरत्वम् । "य आत्माऽपहतपाप्मा निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, सत्यकामः सत्यसङ्कल्पः यः सर्वज्ञः सर्ववित्, ( छा.८।७।१ ) पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, (श्वे०।६।८) तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं ( श्वे०।३।७ ), स कारणं कारणाधिपाधिपो, न चास्य कश्चिज्जनिता न चाधिपः॥ न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिः । अथो स्मर्यतेऽपि "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय !" ( गीता० ।७।६ ) इत्यादिना ॥ १७ ॥

## अतएव चोपमा सूर्यकादिवत् । ३ । २ । १८ ॥

यतः सर्वत्रान्तर्यामितयाऽवस्थितस्यापि परस्योभयलिङ्गवत्तया निर्लेपत्वान्न तत्तत्स्थानप्रयुक्तदोषसम्बन्धित्वमत एव शास्त्रे सूर्यकादिवत् सूर्यस्य प्रतिकृतयः सूर्यकास्तद्वत् जलसूर्यादिवदित्युपमोपादीयते । आकाशमेकं हि यथा घटादिषु पृथग्भवत् । यथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् । एक एव हि भूतात्मे" (या० प्रा०) त्यादिषु । श्रुत्यर्थस्तु

---

शबलस्यैव ब्रह्मणः कल्याणगुणास्सन्ति ते तु "नेति नेती"त्यादिश्रुतिनिषिद्धत्वेन मिथ्याभूताः कथमतः प्रकाशैकस्वरूपस्य ब्रह्मण उभयलिङ्गत्वमिति शङ्कते । नन्विति ॥ १५ ॥

"सत्यं ज्ञानमनन्तं ब्रह्मे"तिमन्त्रस्तस्य ज्ञानस्वरूपत्वं वदति नतु गुणान्तरं वारयति अतः सत्यं ज्ञानमित्यतस्तस्य ज्ञानस्वरूपत्ववत् कल्याणगुणवत्त्वमपि श्रुत्यन्तरादभ्युपेयमित्याशयेनाह । सत्यं ज्ञानमिति ॥१६॥

वेदान्तगणास्तस्य निरस्तनिखिलदोषत्वं समस्तकल्याणगुणाकरत्वञ्चेत्युभयमपि दर्शयति । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमि"त्युपपादयन्सूत्रार्थं विवृणोति । दर्शयति चेति । श्रुतीनामर्थस्तु प्रागुक्तदिशावसेयः । १७ ॥

सूत्रनिविष्टात एवेत्यस्यार्थं व्याचिकीर्षुः तत्सापेक्षं यच्छब्दार्थं निर्वक्ति । यतइत्यादिना । एवं देहे स्थितस्यापीश्वरस्य तत्प्रयुक्तदोषभाक्त्वाभावादेव शास्त्रे जलदर्पणादिप्रयुक्तदोषास्पृष्टजलसूर्याद्युपमा निबद्ध्यते ।

पूर्वमेव जीवात्मस्वरूपनिर्णय उक्तः ॥ १८ ॥

नन्वम्बुन्यनवस्थित एव सूर्यो भ्रान्त्या तत्रस्थ इव गृह्यते परमात्मा तु "यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन् य आत्मनि तिष्ठन्' (बृ० ५।७।३) त्येवमादिश्रुत्या परमार्थत एव स्थितो गृह्यते, अतो न सूर्यादि दृष्टान्तो ब्रह्मणि सम्भवतीति दार्ष्टान्तवैधर्म्यादित्याक्षिपति—

## अम्बुवदग्रहणात्तु न तथात्वम् । ३ । २ १६ ॥

अम्बुवदिति सप्तम्यन्ताद्वतिः, अम्बुनीव सूर्यस्य ब्रह्मणोऽग्रहणान्न तथात्वम्, सूर्यस्येव तत्प्रयुक्तदोषगन्धाभाववत्त्वं नेति ॥ १६ ॥

तत्परिहरति—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् । ३ । २ । २० ॥

नहि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाधर्म्यं विवक्षितमसम्भवादपि तु विवक्षितांश एव तथा च सूर्यादिदृष्टान्तेन ब्रह्मणो निर्लेपत्वमात्रे तात्पर्यम्, कथमिदमवगम्यते ? उभयस्य दृष्टान्तद्वयस्य सामञ्जस्यादेवं निश्चीयते । तथाहि यथा सूर्यः शुद्धाशुद्धेषु जलाधारेषु स्वकरनिकरव्याप्त्याऽवस्थितो वस्तुतोऽनवस्थितस्तत्तद्गुणैर्दोषैर्वृद्धिह्रासादिभिर्न स्पृश्यते, यथा चाकाशो वृद्धिह्रासभाक्षु घटकर्कर्यादिषु विषमेषु वस्तुतोऽवस्थितोऽपि तद्गतवृद्धि-ह्रासादिदोषैर्न लिप्यते । एवं परं ब्रह्मापि अन्तर्भावात् तत्तदन्तरात्मत्वात्तत्र तत्रावस्थितमपि तत्तद्गतवृद्धिह्रासादिदोषैर्न लिप्यते इति वृद्धिह्रासभाक्त्वमात्रं दृष्टान्तद्वयेन निवर्त्यते ॥२०॥

## दर्शनाच्च । ३ । २ । २१ ॥

दृष्टान्तदार्ष्टान्तिकयोः सर्वात्मना साम्याभावेऽपि व्याघ्र इव पुरुष इत्यादिषु दृष्टान्तोपादानदर्शनादप्येवमवगम्यते ॥ २१ ॥ इत्युभयलिङ्गाधिकरणम् ॥ ५ ॥

---

आकाशमिति ॥ १८ ॥

ननु वस्तुतः सूर्यो जले न प्रविष्टः भ्रान्त्या तत्रस्थ इव प्रतीयते । अन्तर्यामी तु वस्तुतो देहे स्थित इत्यस्ति वैषम्यमितिशङ्क्ते । नन्विति ॥ १६ ॥

समाधत्ते वृद्धिह्रासेति । दोषास्पर्शमात्रे दृष्टान्तोऽयं जलवृद्धिह्रासादिप्रयुक्तदोषाः सूर्ये इव देहप्रयुक्तदोषा नान्तर्यामिणि भवन्तीति । एवं दोषस्पर्शाभावमात्रं हि दृष्टान्तेनोच्यते दोषास्पर्शमात्रविवक्षा च "आकाशमेकंहि यथे" त्यादिश्लोके घटादिषु वस्तुतोऽवस्थितस्याकाशस्य जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्येतिद्विविधदृष्टान्त-स्योपादानाज्ज्ञायते । दोषभाक्त्वाभावमात्रविवक्षायां हि तत्समञ्जसं भवति तस्य सूर्याकाशोभयानुगतत्वात् विवक्षितां-शसाम्यमात्रेण च दृष्टान्तीकरणम् ॥ २० ॥

लोकेऽपि सिंहो माणवक इत्यादिव्यवहारो दृश्यते सर्वात्मना साम्यन्तु क्वचिदपि न सम्भवति । तस्मान्निरस्तनिखिलदोषं समस्तकल्याणगुणास्पदञ्चेत्युभयलिङ्गं ब्रह्म इत्यर्थः ॥२१॥ इत्युभयलिङ्गाधिकरणम् ।

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः । ३ । २ । २२ ॥

पूर्वं ब्रह्मणश्चेतनाचेतनवस्त्वन्तरात्मत्वेऽपि यथा जीवस्य तत्र तत्रावस्थितस्य तत्तद्दोषयोग उक्तो, न तथा परस्य। यतः श्रुतिस्मृतिषु स्वभावतोऽपास्तसमस्तदोषत्वमनन्तकल्याणगुणगणाकरत्वं चोच्यते, अत उभयलिङ्गमिति निरूपितम्। इदानीं प्रत्यक्षादिप्रमाणैर्दुर्ज्ञेयस्य ब्रह्मणो ज्ञानाय स्थूलादिरूपोपदेशेन प्राप्तेयत्तानिषेधपूर्वकं सत्यज्ञानाद्यनन्तकल्याणगुणाश्रयमपरिच्छिन्नस्वरूपं मीमांस्यते बृहदारण्यके। तत्र स्थूलदृष्टीनां ज्ञानाय "द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं च" (बृ०४।३।१)त्यादिना तेजोऽबन्नात्मकं वाय्वाकाशात्मकं चेति पञ्चभूतात्मकस्थूलरूपमुपदिश्य, महारजनादीनि रूपाणि चोपदिश्य पठ्यते "अथात आदेशो नेति नेति (बृ.४।३।६)" नह्येतस्मादिति नेत्यन्यत्परमस्ति, "अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमि"(बृ.३।३।७)त्यत्र संशयः। नेति नेतीति श्रुतिः किं पूर्वोपदिष्टं मूर्त्तामूर्त्तादिरूपमात्रं प्रतिषेधति ? उत प्राप्तं ब्रह्मण एतावत्त्वं प्रतिषेधतीति किं तावत्प्राप्तं, ब्रह्मणो रूपादिमात्रं प्रतिषिध्यते, श्रुत्येति सामान्यनिषेधश्रवणात्। अतो मूर्त्तामूर्त्तादिनामरूपं प्रतिषिध्य, नीरूपं नित्यशुद्धबुद्धं मुक्तस्वभावमद्वितीयं ब्रह्म प्रतिपादयतीदं वाक्यम्, तस्य सत्त्वे च ब्रह्मणोऽद्वितीयत्वादि विरुद्ध्येतेति प्राप्तेसिद्धान्तमाह प्रकृतैतावत्त्वमिति । हिरवधारणे, अन्ययोगव्यवच्छेदार्थकः। प्रकृतैतावत्त्वमेव ब्रह्मणः प्रतिषेधति। प्रकृतं यन्मूर्त्तामूर्त्तप्रपञ्चमेतावदेव ब्रह्म न भवतीति "अथात आदेशो नेती नेती" त्यत्र प्रतिपाद्यते, नतु प्रपञ्चस्वरूपं निषिध्यते, अतत्परत्वाद्वाक्यस्य। द्वौ नञौ द्वित्वसङ्ख्यावच्छिन्नरूपमेतावत्त्वं प्रतिषेधतः। "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मेतदि" (श्वे. १।१२) त्यत्यत्रापि त्रिरूपत्वप्रतिपादनात्। तदेवाह—ततो ब्रवीति च भूयः। ततः पूर्वोक्तान्मूर्त्तामूर्त्तरूपद्वयाद्भूयस्त्वं ब्रवीति च वाक्य-

---

अथ प्रकृतैतावत्त्वाधिकरणम्।

पूर्वोत्तराधिकरणयोस्सङ्गतिप्रदर्शनाय प्रागुक्तार्थमनूद्यति—पूर्वमिति। सम्प्रत्येतदधिकरणेन निरूपणीयमर्थं संक्षिपति। इदानीमित्यादिना। सोपक्रमं विषयवाक्यमुदाहरति—बृहदारण्यकेति। ते रूपे दर्शयति। मूर्त्तञ्चैवामूर्त्तञ्चेति। पृथिव्यप्तेजांसि त्रीणि भूतानि ब्रह्मणो रूपं मूर्त्तम्। वाय्वाकाशात्मकञ्चामूर्त्तमिति द्विराशित्वेन पञ्चभूतानि विभागेनोक्तानीत्यर्थः। महारजनी दिव्या हरिद्रा तया रक्तं वस्त्रं महारजनं वास इत्यर्थः आदिना इन्द्रगोपाग्न्यर्चिपुण्डरीकादीनां परिग्रहः। विचाराङ्गं संशयं दर्शयति। संशयइति। पूर्वपक्षं गृह्णाति। किन्तावत्प्राप्तमिति। अथात आदेशो नेति नह्येतस्मादिति नेत्यन्यत्परमस्तीति प्रकृतं सर्वं ब्रह्मात्मकमितिशब्देन परामृश्य तत्सर्वं प्रतिषिद्ध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्मस्वरूपमिति दर्शयति श्रुतिः। अतः कथमुभयलिङ्गत्वं ब्रह्मण इति भावः। तस्य सत्त्वेचेति। उभयलिङ्गस्य सत्त्वे चेत्यर्थः। ब्रह्मणोऽद्वितीयेति। ब्रह्मणि निखिलकल्याणगुणाकरत्वनिर्दोषत्वरूपोभयलिङ्गसत्त्वे तस्याद्वितीयोक्तिर्विरुद्धैवेत्यर्थः। पूर्वपक्षमनूद्य समाधत्ते—इतिप्राप्त इति। सूत्राक्षराणि व्याकरोति। हिरवधारण इति। तदपि प्रकृते कीदृशमित्यत आह। अन्येति।

शेषः। न ह्येतस्मादिति नेत्यन्यत्परमस्तीति एतस्मात्पूर्वोक्तादन्यत् ब्रह्मस्वरूपं न हीति न वक्तव्यम्, अन्यत्परमस्तीति। एतस्मात्परमुत्कृष्टमिन्द्रियाग्राह्यमेतन्नियन्तृपुरुषोत्तमाख्यमन्यत्स्वरूपमस्तीत्यर्थः। "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" (गी०।१५।१८) इति वाक्यात्। यद्वा एवमक्षरयोजना, प्रकृते यत् स्थूलसूक्ष्मादिधर्मवद्वस्तुजडाजडवर्गः ब्रह्मगतं चैतावत्त्वमिदमियदिति परत्र वृत्तिपरिमितत्वं नेति नेतीति श्रुतिर्निषेधति। नतु ब्रह्मण उभयप्रकारत्वं, ह्यस्पृष्टाखिलदोषत्वमचिन्त्यापरिमितसार्वज्ञ्यादिधर्मवत्त्वं चेति। कुतः? ततोऽनन्तरं भूयोऽपरिमितं ब्रह्मण उभयगुणादीन्ब्रवीति प्रतिपादयतीति। एवं नेतिनेतीति नञ्भ्यां प्राकृतस्थूलसूक्ष्मादिधर्मवज्जडवस्तु तदवच्छिन्नजीववस्तुविलक्षणं ब्रह्मेति प्रतिपाद्यत इत्यन्यत्समानम्। किं तदित्यपेक्षायामाह। "अथ नामधेयं सत्यस्य सत्यमि"ति तस्य निर्वचनं "प्राणा वै सत्यं तेषामेष सत्यमि" (बृ।४।३।६) ति प्राणशब्देन प्राणवन्तो जीवा उच्यन्ते, ते हि वियदादिवदनुत्पाद्याः, अतस्तेषां सत्यशब्दवाच्यत्वं, परन्तु तेऽप्यनादिकर्मवशाद् देहयोगेन जन्मभाजः ज्ञानसङ्कोचविकाशरूपविकारवन्तश्च। एतत्परमात्मनो नास्तीति तेषामेष सत्यमिति। यद्वा, "यदासीत्तदधीनमासीदि" ति श्रुत्यनुसारात्प्राणास्तदुपलक्षिताः चेतनजातं तत्सम्बन्धिनश्चेतनाश्च परतन्त्रसत्ताश्रयास्तेषामपि सत्यं स्वतन्त्रसत्ताश्रयं चेतनादिवर्गादियत्तावच्छेदेन निर्दिष्टादत्यन्तविलक्षणं परं ब्रह्म निखिलहेयगन्धाघ्रातमाहात्म्यं समस्तकल्याणगुणैकार्णवमित्यर्थः। "सर्वस्य वशी, सर्वस्येशानः, संसारबन्धस्थितिमोक्षहेतुः। अक्षरात्परतः परः" इत्यादिश्रुतिभ्यः एतदभिप्रायमादाय पूर्वाचार्य्यैरप्युक्तं "नेति नेति च निषेधिताश्रयस्तद्विशेषविषयोऽपि सम्मतः" इत्यादिना। यथैवाह भगवान् सनत्सुजातः "तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव! निर्दिश्य सम्यक्प्रचरन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ती" ति। विश्ववैरूप्यं स्थौल्यादिधर्मवतो विश्वस्माद्विलक्षणमित्यर्थः। नाप्युक्ताद्वितीयत्वविरोधः साम्याधिकश्रू-

---

एवकारार्थमन्तर्भाव्य सूत्रं योजयति। प्रकृतैतावत्त्वमेवेति। द्वित्वसङ्ख्येति। मूर्त्तामूर्त्तवृत्तिद्वित्वसङ्ख्यावच्छिन्नरूपमित्यर्थः। उक्तार्थं प्रमाणेन द्रढयति। भोक्ताभोग्यमिति। सूत्रखण्डान्तरं व्याचष्टे। तदेव ह्येति। वाक्यशेषमुदाहरति। नह्येतस्मादिति। नेत्यन्यत्परमस्तीति। नह्येतस्मादित्यत्र निषेधपरत्वं प्रतीयते न गुणपरत्वं स्वरूपस्य सत्यत्वमात्रञ्चेति शङ्काव्यावृत्यर्थं निरुक्तवाक्यशेषस्यार्थं विवृणोति। एतस्मादिति। उक्तार्थं श्रीमुखवचनेन प्रमाणयति। यस्मादिति। मतान्तरेण सूत्रं विवृणोति। यद्वेति। "अथ नामधेयं सत्यस्य सत्यमिति प्राणाः वै सत्यं तेषामपि सत्यमि"ति वाक्यशेषस्य प्रकारान्तरेणार्थंव्याचष्टे। यद्वेति। उक्तार्थमाद्याचार्यसमत्या द्रढयति। एतदभिप्रायमादायेति। उक्तार्थं भगवत्सनत्सुजातवचसा प्रमाणयति। तथैवाह भगवान् सनत्सुजात इति। उक्तवाक्यस्थं विश्ववैरूप्यमितिपदं व्याचष्टे। विश्ववैरूप्यमिति। प्रागुपदर्शितमद्वितीयत्वविरोधं परिहरति। नापीति। श्रीशङ्करपादानामेतत्सूत्रस्थभाष्यं दूषयितुमुपन्यस्यति। केचित्त्वित्यादिना। "सन्निहितञ्चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणः तच्च ब्रह्म यस्य ते द्वे रूपे तत्र नः संशय उपजायते किमयं प्रतिषेध" इत्यतः प्राक्तनीनं भाष्यम्। विषयवाक्यमुदाहरति। नेतिनेतीति। संशयं दर्शयति। किमयं प्रतिषेध इति। अत्रसमर्थेनेतिना यत्सन्निहितं परामृष्टं तन्निषिध्यते नञा सन्निहितं मूर्त्तामूर्त्त

न्यत्वस्यैवाद्वितीयत्वस्य श्रुतिसम्मतत्वात्। केचित्तु "नेति नेती"ति किमयं प्रतिषेधो रूपे रूपवच्चोभयं प्रतिषेधति आहोस्विदेकतरम्? यदाप्येकतरं तदापि किं ब्रह्म प्रतिषेधति? रूपे परिशिनष्टि आहोस्विद्रूपे मूर्तामूर्ते प्रतिषेधति? ब्रह्म परिशिनष्टीति? सन्देहं कृत्वा वाङ्मनसातीतमविषयान्तःपातिप्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति, तस्माद्ब्रह्मणो रूपं प्रपञ्चं प्रतिषेधति, परिशिनष्टि च ब्रह्मेत्यभ्युपगन्तव्यमिति स्वरूपजिज्ञासाया-मिदमुपक्रान्तम् "अथातः आदेशो नेति नेती"ति तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते, तदास्पदं हीदं समस्तं कार्यं नेति नेतीति प्रतिषिद्धं युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनं नतु ब्रह्मणः, प्रतिषेध सर्वकल्पनामूलत्वात् "इति सिद्धान्तयन्ति, तदसत्। न तावदुक्तसन्देहो युक्तः ब्रह्मणः प्राप्तेरभावात्, प्रपञ्चस्यापि स्वरूपनिषेधपरत्वाभावाद्वाक्यस्य। नहि शास्त्रं स्वयमेव ब्रह्मणो रूपं दर्शयित्वा पुनः स्वयमेव प्रतिषेधति, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि" ति न्यायात्। ननु नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृश्यते प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपावेदनाय चेति चेन्न। तस्य कल्पकाभावेन कल्पितत्वासम्भवात्। तथा हि को वा तस्य कल्पक इति विवेचनीयम्, ब्रह्मैव वा जीवो वा? इति। नाद्यः, शुद्धस्य निर्विशेषस्य कल्पनाश्रयत्वायोगात्। अन्यथा शुद्धत्वहानेः। न द्वितीयः। भवन्मते तस्यापि कल्पितत्वेन कल्पकत्वासम्भवात्। नहि प्रतिबिम्बः कल्पनाश्रयो दृष्टः श्रुतः सम्भवति वा जडत्वात्। वास्तवचेतनान्तराङ्गी-कारेऽद्वैतभङ्गः, कल्पितत्वानुपपत्तिश्चेत्यादिना पूर्वैर्विस्तृतत्वादलमस्माभिरत्र। नापि वाचारम्भणशब्दः प्रपञ्चासत्त्वपरः, पूर्वमेवारम्भणाधिकरणे निरस्तत्वात्। किञ्च, यदि प्रपञ्चा-

सवासनं रूपद्वयम्। तदवच्छेदकत्वेन ब्रह्म। तत्रेदं विचार्यते किं रूपद्वयं सवासनं ब्रह्म च सर्वमेव प्रतिषिध्यते उत ब्रह्मैवाथ सवासनं रूपद्वयं ब्रह्म तु परिशिष्यत इत्यर्थः। अन्यतरनिषेधेनापि निषेधसिद्ध्या पक्षान्तरमाह। आहोस्विदिति। द्वितीयेऽपि ब्रह्मणोऽपि वाङ्मनसातीतत्वात्प्रपञ्चस्य चाध्यक्षादिसिद्धत्वात्तस्य व्यावहारिकमान-सिद्धत्वेऽपि कल्पितत्वात् तत्कल्पनाधिष्ठानत्वात्तन्निषेधावधित्वाच्च ब्रह्मणः परिशेषार्हत्वादिति पक्षद्वयं दर्शयति। यदापीति। एवमुपक्रमेऽपि कथं वाक्यार्थो निर्णीयतामित्याशङ्क्याध्यारोपापवादन्यायं सूचयति। तत्र कल्पित-रूपप्रत्याख्यानेनेति। निर्घटं भूतलमित्युक्तं घटस्यान्यत्र सत्त्ववद्ब्रह्मणि रूपद्वयनिषेधेऽपि ततोन्यत्र तद्भवे-दित्याशङ्क्याह। तदास्पदमिति। उपादानादन्यत्र कार्यायोगात् तत्र निषिद्धस्य न क्वापि सत्तेतिभावः। यत्तु प्रत्यक्षादिसिद्धस्य द्वैतस्य न निषेधस्तद्विरोधादिति तत्राह। युक्तञ्चेति सत्वेन सिद्धं द्वैतं निषिद्ध्यते चेद्ब्रह्म-णोऽपि तथासिद्ध्यविशेषान्निषेधस्तदवस्थ इत्याशङ्क्याह। नन्विति! आरोपाधिष्ठानत्वेन निषेधावधित्वेन चावशे-षान्न ब्रह्मणो निषिध्यतेत्यर्थः। परिहरति। तदसदिति। द्वेवावेत्यादिनोक्तं रूपद्वयं निषिद्ध्यतेचेत्पङ्कप्रक्षालनन्यायात् प्रसज्यप्रतिषेधे गौरवमित्यर्थः। रूपद्वयनिषेधपक्षोक्तशङ्का न कार्येत्यत्र हेतुमाह। यतइति। अप्रतिपाद्यं चेदनुवाद्यत्वं नच प्राप्तिकाले विनाऽनुवादस्तत्राह। लोकेति। तथापि पङ्कप्रक्षालनन्यायो न स्यादित्याशङ्क्य निषेधस्य फलत्वादि-त्याह। शुद्धेति। एतावता प्रबन्धेन भगवत्पादश्रीशङ्कराचार्याणां भाष्यमनूद्य परिहरति। नेति। तस्य=

सत्त्वमेवाभिप्रेतं तर्हि "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यस्मिन्नधिकरणेऽसत्कार्यवादं निरस्य किमर्थं सत्कार्य्यवादसमर्थनम्। तस्मात्तत्रोक्तप्रतिज्ञादृष्टान्तविरोधादधिकरणविरोधः स्ववाक्यविरोधश्चानिवार्यः। अपि च वाङ्मनसातीतमविषयान्तःपातीत्युक्त्वा पुनःशुद्धब्रह्म-स्वरूपावेदनायेत्यपि स्वोक्तिविरोधः, सर्वप्रमाणाविषयस्यावेदनासम्भवात्। विषयत्वाङ्गीकारे च मिथ्यात्वप्रसङ्गादित्यलं विस्तरेण तस्मान्नेति नेतीति शब्दो ब्रह्मणः प्राप्तमूर्त्तामूर्त्तरूपे यत्तामेव प्रतिषेधति। वाक्यशेषश्चोक्ताद्भूयस्त्वं तद्वैलक्षण्येन स्वरूपतः सत्यत्वोपलक्षि-तसार्वज्ञ्याद्यनन्तगुणतश्चानन्तत्वं प्रतिपादयतीति सूत्रकारतात्पर्यार्थः। "सत्यं ज्ञानमनन्तं ब्रह्म, (तै० आ०।१।१) यः सर्वज्ञः सर्वविदि" त्यादिश्रुतिभ्यः ॥ २२ ॥

यद्येवं तर्हि कथं गृह्यते, इत्याशङ्क्याह—

## तदव्यक्तमाह हि ।३।२।२३ ॥

हि यस्मात्तद्ब्रह्माव्यक्तं तस्मान्न गृह्यते इति शास्त्रमाह, "न चक्षुषा गृह्यते, नापि वाचा, नान्यैर्देवैर्मनसा कर्मणा वे" ( मु० ।३।१२ ) त्यादि ॥ २३ ॥

"एवमात्मा वाऽरे ! द्रष्टव्यः मनसैवानुद्रष्टव्यः" इत्यादिश्रुतीनां निर्विषयत्वेन व्याकोपः। दर्शनाभावेऽनिर्मोक्षप्रसङ्गो दुर्वार इति चेत्तत्राह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ।३।२।२४॥

संराधने सम्यग्भक्तियोगे ध्याने परं ब्रह्म व्यक्तं भवति प्रकाशते, ध्यानेन प्रीतः परमात्मा तस्मै मुमुक्षवे स्वयमात्मानं दर्शयतीत्यर्थः। कुतः इदमवगम्यत इत्यत आह प्रत्यक्षानुमानाभ्याम्। श्रुतिस्मृतिभ्यामित्यर्थः। "ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिश्रुतेः "यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रि-याः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमि" त्यादिस्मृतेश्च ॥ २४ ॥

---

रूपद्वयस्य। तमर्थमुपपादयति। तथाहीत्यादिना। आद्यं पक्षं परिहरति। नाद्य इति। बाधकतर्कमुपन्यस्यति। अन्यथेति। कल्पनाश्रयत्वे। द्वितीयपक्षमपाकरोति। न द्वितीय इति। तस्यापि = जीवस्यापि। यदि प्रपञ्चस्य मिथ्यात्वं स्यात्तदाऽऽरम्भणाधिकरणे सत्कार्यवादसमर्थनपुरस्सरं प्रतिज्ञादृष्टान्तादिकथनं विरुद्ध्येत इत्याह। किञ्चेति। तदीयभाष्ये पूर्वापरविरोधं दर्शयति। अपिचेति। सूत्रार्थमुपसंहरति। तस्मादिति ॥ २२ ॥

उत्तरसूत्रमवतारयति। यद्येवमिति। सूत्रार्थं व्याचष्टे। हि यस्मादिति। शास्त्रप्रमाणातिरिक्तप्रमाणेन ब्रह्मणोऽभिव्यक्तिर्न भवितुमर्हतीत्यत्र शास्त्रमुदाहरति। नचक्षुषेति ॥२३॥

यदि ब्रह्मणोऽभिव्यक्तिर्नास्ति तदा "आत्मा वाऽरे द्रष्टव्य" इत्यादिश्रुतयो बाध्येरन् तस्य साक्षात्काराभावे मुक्तेरपि च दौर्घट्यं प्रसज्येतेत्याशङ्क्योत्तरसूत्रमवतारयति। एवमिति। सूत्रार्थं विवृणोति। संराधनइति। श्रुतिमुदाहरति। ज्ञानप्रसादेनेति। स्मृतिं पठति। यं विनिद्रेति ॥ २४ ॥

किमात्मना ब्रह्म प्रकाशते इत्यपेक्षायामाह—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ३ । २ । २५ ॥

प्रकाशादिवदिति सूर्यवाय्वादिवत् । यथा सूर्यः तमःशीतादिदोषरहितः प्रभासङ्गत्वादिगुणयुक्तश्च, यथा वा वायुः नीचोत्तमादिसङ्गदोषरहितोऽपि शब्दस्पर्शादिगुणवांश्चेति लोके शास्त्रे च सुप्रसिद्धम् । तद्वद्ब्रह्मणोऽप्यवैशेष्यं, विशेषो मायिकधर्मस्तत्सम्बन्धराहित्यं, चकाराद्वैशेष्यं च सार्वज्ञ्याद्यनन्तकल्याणविशेषधर्माश्रयत्वं च शास्त्रे प्रसिद्धम् । "य आत्माऽपहतपाप्मा विजरो विमृत्युरि" त्यादि । "यः सर्वज्ञः सर्ववित्, सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दं ब्रह्मणो विद्वान्, स्वाभाविकी ज्ञानबलक्रिया चे" त्यादिश्रुतिभ्यः । तस्य प्रकाशश्च कर्मण्यभ्यासात् । कर्मणि संराधने सम्यग्भक्तियोगे अभ्यासादसकृदावर्त्तमानान्निदिध्यासनाद्भवति, नतु सकृद्ध्यानेनेत्यर्थः । "आवृत्तिरसकृदुपदेशादि"ति वक्ष्यमाणसूत्रात् । "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य" (बृ०।२।४।५) इत्यादिश्रुतेः । "तस्मात्सर्वेषु कालेषु मामनुस्मरे"ति भगवदुक्तेश्च । "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनरि" (गी०) ति सूत्रकारवाक्याच्च ॥ २५ ॥

प्रसङ्गात्तत्फलमाह—

## अतोऽनन्तेन तथा हि लिंगम् ॥ ३ । २ । २६ ।

अतोऽस्माद्ब्रह्मप्रकाशात्साक्षात्काराद्धेतोः अनन्तेन स्वरूपगुणशक्त्यादिभिरपरिच्छिन्नेन परब्रह्मणा श्रीपुरुषोत्तमेन सह साम्यं गच्छतीति शेषः । तत्र प्रमाणमाह—तथाहि लिङ्गमिति । एतदर्थगमकं श्रौतवाक्यमित्यर्थः । हि निश्चये । "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषंब्रह्मयोनिं तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति (मु०।३।१।३)" ति । केचित्तु ननु संराध्यसंराधकभावाभ्युपमात्परेतरात्मनोरन्यत्वं स्यादित्याशङ्क्य नेत्युच्यते । यथा सौरप्रकाश आकाशा वाङ्गुल्याद्युपाधौ कर्मणि भिन्न इव

---

अनन्तरसूत्रमवतारयति । किमात्मनेति । सूत्रार्थं व्याकरोति । प्रकाशेति । सूत्रस्थचकारार्थं विवृणोति । चकारादिति । उक्तार्थं श्रुतिप्रमाणेन द्रढयति । य आत्मेति ॥ २५ ॥

साधननिरूपणानन्तरं प्रसङ्गसङ्गतिमभिप्रेत्य फलं निरूपयितुमाह । प्रसङ्गादिति । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गत्वमित्यर्थः । सूत्रार्थं व्याकरोति । अत इति । वाक्यमुदाहरति । यदा पश्य इति । प्राक्सूत्रस्थं श्रीशाङ्करीयं भाष्यं दूषयितुमुपन्यस्यति । केचित्त्विति । सूत्रान्तरव्यावर्त्यमाह । नन्विति । व्यावर्तकसूत्रमवतारयति । नेतीति । यथा प्रकाशादय उपाधिषु भिद्यन्ते न स्वतः एवं प्रकाशः चिदात्माऽपि ध्यानादिकर्मण्युपाधौ भिद्यते, स्वतस्तस्यावैशेष्यम् एकरसत्वमित्याह । यथा सौरप्रकाश इति । प्राक् सूत्रार्थं व्याख्याय "अतोऽन-

वक्र इव भाति। वस्तुतस्त्वेकस्वरूप एव, तद्वत्प्रकाश आत्माऽपि ध्यानज्ञानादौ कर्मण्युपाधौ भिन्न इव भाति। वस्तुतस्त्वत्रैश्यमेकरूपत्वमेवात्मनः। कुतः? अभ्यासात्। "तत्त्वमसी" त्याद्यभेदश्रुत्यभ्यासात्। अतो भेदस्यौपाधिकत्वाद्विद्यया भेदं निरस्य जीवोऽनन्तेन परमात्मनैकतां गच्छति। तथाहि लिङ्गमपूर्वार्थज्ञापकं "ब्रह्मैव सन् ब्रह्माप्येती" त्यादि, इत्याहुस्तदसङ्गतम्, ब्रह्मण्युपाधिसम्बन्धासम्भवात्। तथाहि उपाधिः शुद्धेऽभ्युपगतः ईश्वरे वा?। नाद्यः, उपाधिसम्बन्धस्यैवाशुद्धत्वहेतुत्वेन शुद्धत्वहानेः। न द्वितीयः, ईश्वरस्याविद्यासम्बन्धोत्तरभावित्वात्, औपाधिकनिरूप्य उपाधिस्तन्निरूप्य औपाधिकश्चेत्यन्योऽन्याश्रयात्। प्रतिबिम्बावच्छेदवादयोस्तत्र तत्र विस्तरशो निरस्तत्वाच्च। किञ्च न तावत् "तत्त्वमसी" त्याभासो भेदनिरासे हेतुः "एष ते आत्माऽन्तर्यामी (बृ०। ३। १। ३)" ति ततोऽप्याधिक्येन भेदाभ्यासस्यापि सत्त्वात्। सिद्धान्ते भेदाभेदवाक्ययोस्तुल्यबलत्वात्। अन्यथा परस्परं बाध्यबाधकभावाभ्युपगमे उभयोरपि प्रामाण्याभावप्रसङ्गेन सर्ववेदान्तो दत्ततिलाञ्जलिः स्यात्। तस्मादभ्यासशब्द उक्तार्थक एव, तस्यैव प्रकरणात्। यदप्युक्तं 'विद्यया भेदं निरस्य, जीवोऽनन्तेन परमात्मनैकतां गच्छतीति। तदप्यप्रमाणं, स्वरूपभेदस्य स्वाभाविकत्वात्स्वाभाविकस्यापि नाशाङ्गीकारे स्वरूपनाशस्यापि वक्तुं शक्यत्वात्स्वरूपनाश एव मुक्तिः स्यात्। नापि "ब्रह्मैव सन्नि"ति श्रुतेरत्यन्ताभेदे लिङ्गत्वं, तत्राप्युभयभानस्य सत्त्वात्। ब्रह्मैव सन्निति बृहद्गुणयोगाद्ब्रह्मत्वस्यापि तत्र सत्त्वेनाभेदप्रत्ययः। "ब्रह्माप्येती" ति प्राप्तृप्राप्यभावश्रवणेन भेदस्यापि भानात्सर्वं समञ्जसम्, नैकस्यापि विरोध इत्यलं विस्तरेण ॥ २६ ॥

एवं ब्रह्मणो मूर्त्तामूर्त्तप्रपञ्चैतावत्त्वं रूपं प्रतिषिध्य, ततो भूयस्त्वमनन्तकल्याणविशेषवत्त्वं च निरूप्य, तत्प्रकाशप्रकारं च प्रतिपाद्य, ब्रह्मणो निर्दोषत्वसिद्ध्यर्थं चिदचिद्रूपप्रपञ्चस्य तेन भेदाभेदप्रकारं निर्धारयति सूत्राभ्याम्। तत्र तावदचेतनस्य ब्रह्मणा भेदाभेदः

---

न्तेने"ति सूत्रार्थं विवृणोति। अतइति। तत् परिहरति। तदसङ्गतमिति। तत्र हेतुमाह। ब्रह्मण्युपाधिसम्बन्धासत्त्वादिति। तदेवोपपादयति। तथाहीत्यादिना। आद्यपक्षं निरस्यति। नाद्यइति। द्वितीयकल्पमपाकरोति। न द्वितीय इति। ईश्वरस्य त्वन्मत आविद्यकत्वात् पूर्वसिद्धस्योपाधेराश्रयत्वस्य वक्तुमशक्यत्वादित्यर्थः। अन्योन्याश्रयदोषान्तरं तन्मते आह। औपाधिकनिरूप्य इति। यदि यत्किंचिद्वस्त्वौपाधिकं स्यात्तदा तेनोपाधिर्निरूप्यः स्यात् तन्निरूपणाधीनमुपाधिनिरूपणमित्यन्योन्याश्रय इत्यर्थः। भेदनिरासे यो हि हेतुः परैरभिमतस्तमपि निराकरोति। किञ्चेति। विपक्षे बाधकतर्कमुपन्यस्यति। अन्यथेति। तुल्यबलत्वानङ्गीकारे। उपसंहरति। तस्मादिति। यस्मादुक्तदोषात् भवन्मतसिद्धाभ्यासार्थस्य दुर्घटत्वादित्यर्थः। उक्तार्थक इति। कर्मणि संराधने सम्यग्भक्तियोगे अभ्यासादसकृदावर्त्तमानान्निदिध्यासनाद्भवति नतु सकृद्ध्यानेनेत्यर्थक इति। तत्रहेतुमाह। यस्यैवप्रकरणादिति। उक्तार्थकाभ्यासस्यैवेत्यर्थः। प्रागुक्तार्थं दूषयितुमनूद्यति। यदप्युक्तमिति। यथात्यन्ताभेदे लिङ्गं परैरुक्तं तदप्यपाकरोति। नापीति ॥ २६ ॥

सूपपन्न इत्यादि—

## उभयव्यपदेशात्त्वहिकुण्डलवत् । ३ । २ । २७ ॥

अचिद्वस्तुनो ब्रह्मणा भेदाभेद एव सम्बन्धः । कुतः ? उभयव्यपदेशात् । 'सर्वं खल्विदं ब्रह्म तज्जलानिति (छा० ३।१४।१) ब्रह्मैवेदं सर्वं आत्मैवेदं सर्वमि'त्यभेदव्यपदेशात् "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृत" इत्यादिना । "भेदव्यपदेशाच्च" त्युभयविधशास्त्राविरोधात्स्वाभाविकभेदाभेद एव सिध्यति । अन्यथा चैकतरस्य शास्त्रस्यावश्यं बाधप्रसङ्गात् । ननु भेदाभेदयोरितरेतरविरोधात्कथमेकत्रावस्थानमित्याशङ्क्य तत्साधकदृष्टान्तमाह—अहिकुण्डलवदिति । यथाऽहिकुण्डलयोरहित्वेन कुण्डलत्वेन च भेदः अह्यात्मकत्वादिना च कुण्डलस्याभेदः । तथा च कुण्डलावस्थापन्नस्याहेः कुण्डलस्य व्यक्तत्वात्प्रत्यक्षप्रमाणगोचरत्वेन भेदः स्वाभाविकः । सर्पात्मकत्वतदाधेयत्वतद्व्याप्यत्वादिना तदपृथक्सिद्धत्वादभेदोऽपि स्वाभाविकः । लम्बायमानावस्थायां तु सर्वदा सर्पायत्तत्वावच्छिन्नस्वरूपस्य कुण्डलस्य सूक्ष्मरूपेण तत्र सत्त्वेऽपि अव्यक्तनामरूपतया प्रत्यक्षाग्राह्यत्वमित्युभयोरपि स्थूलसूक्ष्मावस्थयोरनुगतत्वाद्भिन्नाभिन्नत्वम् । अन्यथा तस्य तत्राभावे पुनराविर्भावो न स्यात् । तथा स्थूलावस्थापन्नस्य कार्यस्य कारणापृथक्सिद्धपरतन्त्रसत्तावच्छिन्नस्वरूपेण व्यक्तनामरूपत्वाद्भेदः श्रुत्यादिप्रमाणसिद्धः, तदात्मकत्वादिना चाभेदः । अव्याकृतावस्थायां तु बीजेऽङ्कुरस्येव कार्यस्य कारणे सूक्ष्मरूपेण सद्भावेऽप्यव्यक्तनामरूपत्वात्प्रत्यक्षाग्राह्यत्वमित्युभयावस्थायामपि तदात्मकत्वतदा-

---

पूर्वापरग्रन्थयोरेकवाक्यताप्रतिपत्तयेऽवान्तरसङ्गतिं प्रदर्शयन्नाह । एवमिति । तेन=ब्रह्मणा । तत्र=तयोर्मध्ये । तत्र प्रतिज्ञावाक्यं पूरयन्नाह । अचिद्वस्तुन इति । उभयव्यपदेशादित्यस्य भेदाभेदव्यपदेशार्थकत्वं व्याख्यातुकामोऽभेदप्रतिपादकवाक्यमुदाहरति । सर्वमिति । भेदबोधकवाक्यं पठति । हन्ताहमिति । अत्रार्थस्तु प्रागुपदर्शितरीत्यावसेयः । औपाधिकभेदाभेदं निराचिकीर्षुराह । स्वाभाविक इति । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । स्वाभाविकभेदाभेदानङ्गीकारे । भेदाभेदयोः परस्परविरुद्धत्वात्कथमेकत्रावस्थानमिति शङ्कते । नन्विति । उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति । यथाहिकुण्डलयोरिति । विषयभेदाद्भेदाभेदयोरविरोध इत्याह । अहिकुण्डलयोरिति । तदाधेयत्वतद्व्याप्यत्वादिनेति । सर्पाधेयत्वसर्पव्याप्यत्वादिनेत्यर्थः । तदपृथक्सिद्धत्वात्=सर्पापृथक्सिद्धत्वात् । तत्र=सर्पे । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । तस्य=कुण्डलस्य । तत्र=सर्पे । दार्ष्टान्ते योजयति । तथेति । तदात्मकत्वतदाधेयत्वतदायत्तसत्ताकत्वादिनेति । कारणात्मकत्वकारणाधेयत्वकारणायत्तकत्वादिनेत्यर्थः । एतेनात्रानुमानप्रयोगा अपि सूचिताः । तथाहि जगद्ब्रह्माभिन्नं भवितुमर्हति । तदात्मकत्वात् । यो यदात्मकः स तदभिन्नो दृष्टो यथा मृदात्मको घटो मृदभिन्ननिर्देशार्हस्तद्वत् । तदाधेयत्वात्—यो यदाधेयः स तदभिन्ननिर्देशार्हः यथा भौतिकं स्वकारणरूपाधिकरणमहाभूताभिन्ननिर्देशार्हं तद्वत् । तदायत्तसत्ताकत्वात्—यो यदायत्तसत्तात्मकः स तदभिन्ननिर्देशार्ह इति । आदिना तन्नियम्यत्व

धेयत्व-तदायत्तसत्ताकत्वादिना तदपृथक्सिद्धत्वेनाभिन्नत्वेऽपि परतन्त्रसत्तावच्छिन्नतदात्मीय-स्वरूपेण नामरूपविभागेन च भिन्नत्वमपीति स्वाभाविकभिन्नाभिन्नत्वमेवेति संक्षेपः। केचित्तु इदं सूत्रं जीवात्मभेदाभेदपरत्वेन व्याख्याय 'अहिकुण्डलवदि'ति पक्षे जीवस्यावस्थारूपस्यानित्यत्वप्रसक्तिरित्यनित्यत्वं प्रतिपादयन्तो दूषयन्ति। तत्तुच्छतरं, तस्य रीत्या जीवभेदाभेदपरत्वाभावात्। अचेतनस्यावस्थापत्तिरूपानित्यत्वं सर्वसंमतत्वादस्माकमभीष्टमेवेति ॥२७॥

एवमचेतनस्य भिन्नाभिन्नत्वप्रकारं निरूप्य चेतनस्य तत्त्वं प्रतिपादयति—

## प्रकाशाश्रयवद्वा तेजस्त्वात् । ३ । २ । २८ ॥

वाशब्दोऽतिदेशार्थः। पूर्वोक्ताचेतनवच्चेतनस्यापि ब्रह्मणा भिन्नाभिन्नत्वं दर्शयति। कुतः? उभयव्यपदेशादित्यनुवर्त्तते। "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति ध्यातृध्येयत्वेन द्रष्टृदृश्यत्वेन च "ब्रह्मविदाप्नोति परं परात्परं पुरुषमुपैति दिव्यमि"ति प्राप्तृप्राप्यत्वेन च स्वाभाविकस्य भेदस्य व्यपदेशात्। "तत्त्वमस्यहं ब्रह्मास्मि, अयमात्मा ब्रह्मे" त्यादिना च स्वाभाविकाभेदस्य च व्यपदेशाद्भिन्नाभिन्नत्वमिति। अधिकशङ्का तु यदि पूर्वदृष्टान्तेन चेतनस्य भिन्नाभिन्नत्वं, तर्ह्यचेतनवदवस्थाभाक्त्वमङ्गीकृतं स्यादिति तन्निरासयन्दृष्टान्तरमाह-प्रकाशाश्रयवदिति। यथा सूर्यमणिदीपादिप्रकाशस्तत्प्रभारूपः स्वाश्रयात्सूर्यादेर्भिन्नतया प्रत्यक्षेणोपलभ्यते, स्वाभाविकभेदवत्त्वात्। सूर्यदीपादेर्दृष्टयगोचरत्वेऽपि दूरस्थत्वेऽपि सूर्यप्रभेयं दीपप्रकाशोऽयमिति भेदप्रतीतेः सर्वजनप्रसिद्धत्वात्। तथा तदाधेयत्वतदात्मकत्वादिभिश्च हेतुभिस्तदविनाभावादभिन्नत्वमपि प्रत्यक्षादिमानसिद्धमेव। अतोऽभेदस्यापि स्वाभाविकत्वमिति। तद्वत्प्रत्यगात्मनामपि परतन्त्रसत्तावच्छिन्नब्रह्मात्मीयस्वरूपत्वाणुपरिमाणकत्वाल्पज्ञत्वादिहेतुभिः स्वभावाद्भिन्नत्वेऽपि ब्रह्मात्मकत्वतदाधेयत्वतद्व्याप्यत्वतदधीनस्थितिप्रवृत्तिकत्वादिभिर्हेतुभिस्तदविनाभावादभिन्नत्वमपि स्वाभा-

---

तद्व्याप्यत्वतदधीनत्वादीनां परिग्रहः। यो यन्नियम्यः स तदभिन्ननिर्देशार्हः यथा जीवनियम्यं शरीरं जीवाभिन्नं प्रतीयते तद्वत्। यो यद्व्याप्यः स तदभिन्ननिर्देशार्हः यथा वह्निव्याप्यो धूमस्तदभिन्नस्तद्वत्। यद्यदधीनं तत्तदभिन्ननिर्देशार्हं यथा प्राणायत्त इन्द्रियगणस्तदभिन्ननिर्देशार्हस्तद्वदिति प्रयोगा द्रष्टव्याः। औपाधिकभेदवादिनामेतत्सूत्रस्य व्याख्यानं दूषयितुमुपन्यस्यति। केचित्त्विति। परिहरति। तत्तुच्छमिति ॥ २७ ॥

अनन्तरसूत्रमवतारयति। एवमिति। सूत्रार्थं व्याकरोति। वाशब्द इति। जीवपरमात्मनोर्भेदप्रतिपादकवचनान्युदाहरति। ततस्तु तं पश्यति निष्कलमिति। अभेदप्रतिपादकवाक्यानि पठति। तत्त्वमसीति। पूर्वसूत्रोपात्तदृष्टान्तेनैवोपपत्तौ दृष्टान्तरानुसरणं किमर्थमित्यत्राह। अधिकशङ्का त्विति। अधिकशङ्कामेव विवृणोति। यदीत्यादिना। यथाऽहेरवस्थाद्वयसेका कुण्डलावस्थाऽपरा लम्बायमानावस्था तद्वत् निरुक्तदृष्टान्तेन जीवस्याप्यवस्थान्तरापत्तिस्तथासति तस्यानित्यत्वं प्रसज्येतेत्यधिकं यदि शङ्केत तामपाकर्तुं दृष्टान्तान्तरमनुसृतमित्यर्थः। परबुद्ध्यावारोहार्थं दृष्टान्तं स्पष्टतया विवृणोति। यथेत्यादिना। स्वाश्रयादिति। प्रभाश्र-

विकमेव इति न केनापि वाक्येन विरोधलेशस्य सम्भावनेति । तत्र हेतुमाह—तेजस्त्वादिति । उभयोरपि तेजोरूपत्वाद्युगतोऽप्यभेदः सम्भवतीत्यर्थः । केचित्तु सवितृप्रकाशपक्षेऽप्याधाराधेयभावः "प्रत्यहमुदयास्तमयौ च भवतः" इत्याहुस्तत्तुच्छम्, आधाराधेयभावस्य शास्त्रप्रमाणसिद्धत्वेनेष्टापन्नत्वात् । "यस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन, यस्मिन्द्यौश्च पृथिवीचान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" इत्यादिश्रुतेः । "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"ति स्मृतेश्च । "द्युभ्वाद्यायतनमि" त्युक्तसूत्राच्च । नाप्युदयास्तमयौ दोषौ वक्तुं शक्यौ, तयोर्नित्यसम्बन्धात् । नहि सूर्याद्विच्छिद्य प्रकाशस्योदयास्तमयौ भवतो दृष्टश्रुतागोचरत्वात् । नाप्युभयोः सप्रकाशस्य सूर्यस्य लोकान्तरगमनागमनव्यवहारेणैवोदयास्तमयत्वव्यवहार औपचारिकः, न मुख्यः । किन्तु तस्य लोकान्तरे सप्रकाशस्य सत्त्वेऽपि मनुष्यादेः स्वदृष्ट्यावरणान्न स दृश्यते । तत्रत्यैरनावृतचक्षुभिर्दृश्यते । एवं जीवपरमात्मनोरपि प्रकाशाश्रयवत्सर्वदा वर्त्तमानत्वेऽपि "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति प्रमाणादज्ञानावृतधर्माणां न दर्शनम् । भगवत्प्रसादेन भग्नावरणानां दिव्यदृष्टीनां तद्दर्शनं शास्त्रसिद्धम् ॥ "नतु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमि"ति भगवद्वचनात् ॥ २८ ॥

ननु ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुरित्याशङ्कायां समाधत्ते—

## पूर्ववद्वा । ३ । २ । २९ ॥

वाशब्द आक्षेपनिरासार्थः । पूर्ववत् । यथापूर्वं "कृत्स्नप्रसक्तिर्निरवयवशब्दव्याकोपो वे" त्यनेन ब्रह्मणो जगदुपादानत्वं न सम्भवतीत्याक्षेपे प्राप्ते समाधत्ते "श्रुतेस्तु शब्द-

---

त्वादिति तदर्थः । प्रतीत्या सूर्यप्रभयोर्भेदं निरूप्य सम्प्रति तयोरभेदं व्युत्पादयति । तदाधेयत्वतदात्मकत्वादिभिश्चेति । सूर्याधेयत्वसूर्यात्मकत्वादिभिश्चेत्यर्थः । तदविनाभावादिति । सूर्याविनाभावादित्यर्थः । दार्ष्टान्ते योजयति । तद्वत्प्रत्यगात्मनामिति । परतन्त्रेति । परतन्त्रसत्तेन ब्रह्मात्मीयस्वरूपत्वेन अणुपरिमाणकत्वेनाल्पज्ञत्वेन च प्रत्यगात्मा ब्रह्माभिन्न इत्यर्थः । ब्रह्मात्मकत्वेति । ब्रह्मात्मकत्वेन ब्रह्माधेयत्वेन ब्रह्मव्याप्यत्वेन ब्रह्माधीनस्थितिप्रवृत्तिकत्वेन च शारीरो ब्रह्माभिन्न इत्यर्थः । तत्रेति । अभेद इत्यर्थः । यथा तेजस्त्वेन प्रभातदाश्रययोरभेद उपपद्यते ज्ञानस्वरूपत्वेन तथा जीवब्रह्मणोरपीत्यर्थः ॥ श्रुतिस्मृतिसूत्रप्रमाणेनाधाराधेयभावस्य सिद्धत्वान्नोक्तदोषावकाश इत्याशयेनोक्तशङ्कां व्युदस्यति । तत्तुच्छमिति । श्रुतिमुदाहरति । यस्मिँल्लोका इति । सर्वलोकाधारत्वं ब्रह्मण इत्यर्थः । श्रीमुखवचनमुदाहरति । मयीति । सूत्रं पठति । द्युभ्वाद्यायतनमिति । प्रत्यहमुदयास्तमयौ भवत इति यदुक्तं तदप्यपाकरोति । नाप्युदयास्तमयाविति । तयोः = उदयास्तमययोः । नित्यसम्बन्धमेवोपपादयति । नहीत्यादिना । नापीति । तस्य = सूर्यस्य । दृष्टान्ते तदुपपाद्य दार्ष्टान्ते योजयति । एवं जीवपरमात्मनोरपीति । उक्तार्थं श्रीमुखवचसा द्रढयति । न तु मां शक्यस इति ॥ २८ ॥

उत्तरसूत्रशङ्कामाह । नन्विति । यथाऽहेः कुण्डलावस्था भवति तथा ब्रह्मणोऽवस्थाविशेषः प्रपञ्च-

मूलत्वादि"ति। तथात्रापि बोध्यम्। तथाहि अनन्तगुणशक्तिमतो ब्रह्मणः परिणामिस्वभावाऽचिच्छक्तेः स्थूलावस्थायां सत्यां तदन्तरात्मत्वेन तत्रावस्थानेऽपि परिणामस्य शक्तिगतत्वात् स्वरूपे परिणामाभावात् कुण्डलदृष्टान्तो न दोषावहः, अपृथक्सिद्धत्वेनाभेदेऽपि भेदज्ञापनार्थः। उपसंहृतशक्तित्वेन प्रपञ्चस्याविभक्तनामरूपत्वात्कारणैकत्वापत्त्या "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमि" त्यादिश्रुतिभिरेकत्वप्रतिपादनादहिदृष्टान्तोक्तिरपि सम्भवतीति निरवद्यम्। भेदश्रुतयोऽपि कार्यकारणयोः स्वरूपस्वभावविवेचनपराः, नात्यन्तभेदपराः अनेकतादात्म्यप्रतिपादकवाक्यविरोधात् ॥ २९ ॥

ननु दोषवदन्तःस्थत्वे कज्जलागारे इव कथं दोषस्पर्शाभाव इति चेत्तत्राह—

## प्रतिषेधाच्च ॥ ३ । २ । ३० ॥

सर्वान्तःस्थत्वेन सर्वरूपत्वेऽपि दोषास्पृष्टस्वभावत्वेन दोषस्पर्शस्य प्रतिषेधात् श्रुत्येति शेषः। "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः। वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" इत्यादिश्रुतिभिः। केचित्तु 'अहिकुण्डलवत्प्रकाशाश्रयवद्वे" त्युभयसूत्राभ्यां परमतत्वेन भेदाभेदमुपन्यस्य "पूर्ववद्वे" त्यनेन यथा वा पूर्वमुपन्यस्तं "प्रकाशादिवच्चावैशेष्यमि"ति तथैव भवितुमर्हति। तथा ह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते इति सिद्धान्तं कृत्वा, यदि पुनः परमार्थत एव बद्धः कश्चिदात्माहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन वा एकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत। न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति, अभेदमेव हि

---

श्चेत्तर्हि व्याकुप्येरन् ब्रह्मणोऽपरिणामित्ववादिन्यः श्रुतय इत्यर्थः। सूत्रार्थं व्याकरोति। वाशब्द इति। यदि ब्रह्मस्वरूपे परिणामः स्यात्तदोक्तदोषः प्रसज्येत नत्वेवं परिणामस्य शक्तिगतत्वादित्याह। तथाहीति। यदि ब्रह्मणश्शक्तौ परिणामोऽभ्युपेयते तदा कुण्डलदृष्टान्तः कथमुपपद्यत इत्याक्षेपं परिहर्तुमाह—कुण्डलेति ॥ २९ ॥

अनन्तरसूत्रमवतारयितुं शङ्कते। नन्विति। सूत्रार्थं व्याकरोति। सर्वान्तःस्थत्वेनेति। उक्तार्थं श्रुतिमुखेन प्रमाणयति। एकस्तथेति। "उभयव्यपदेशा"दिति सूत्रं तदुत्तरसूत्रञ्च पूर्वपक्षत्वेन भेदाभेदपरं श्रीशङ्करपादैर्योजितं तद्व्याख्यानं दूषयितुमुपन्यस्यति। केचित्त्विति। अहित्वेनाभेदः। कुण्डलाख्यस्य सर्पावस्थाविशेषस्य कुण्डलत्वेन भेदः। तथा जीवस्य ब्रह्मत्वेनाभेदो जीवत्वेन भेदः। यद्वा सूर्यप्रकाशयोरेकतेजस्त्वधर्मावच्छेदेन भेदाभेदवज्जीवपरयोरपि एकेनैवात्मत्वधर्मेण भेदाभेदौ श्रुतिबलात्स्वीकार्य्याविति सूत्रद्वयार्थस्तदीयैर्वर्णितः। स्वसिद्धान्तमाह। पूर्ववदिति। तत्प्रपञ्चयति। यथेति। तर्हि भेदस्यैव प्रतिपाद्यता नैवं प्रसिद्धानुवादेनाप्रसिद्धस्य तद्भावादित्याह। अभेदमिति। तन्निराकरोति। तत्तुच्छमिति। तत्रहेतुमाह। असम्भवादिति। असम्भवमेव विवृणोति। तथाहीत्यादिना। पूर्वमुपन्यस्त इति। तद्वद्ब्रह्मणोऽप्यवैशेष्यं विशेषो मायिकधर्मैस्तत्सम्बन्धराहित्यमित्यादिना प्रागभिहितमित्यर्थः। दूषयितुं प्रागुक्तार्थमनूद्यति। यच्चोक्त-

प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वमेवानुवदत्यर्थान्तरविवक्षयेति दूषयन्ति। तत्तुच्छमसम्भवात्। तथाहि यदुक्तं "प्रकाशादिवच्चावैशेष्यमि"ति पूर्वमुपन्यस्त एव सिद्धान्त इति। तन्न। तदसम्भवस्य तत्रैव निर्णीतत्वात्। यच्चोक्तमविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते इति, तत्सत्यमस्माकमप्यङ्गीकारात्। अविद्याशब्दस्यानादिकर्मपरत्वात्। "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते। अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते"इति श्रुतिस्मृतिभ्यः अनादिपुण्यापुण्यात्मककर्मणैव बन्धः। तस्य च "तत्सुकृतदुष्कृते विधुनुते पुण्यपापे विधूय क्षीयन्ते चास्य कर्माणि" त्यादिशास्त्रात् ध्वंसेन मोक्षस्य सम्भवात्। यत्तु पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येतेत्युक्तम्, तद्दुराग्रहमात्रम्। "भूयश्चान्ते विश्वमायानिवृत्तिरि"ति श्रुतिबलादेव कर्मनिमित्तकसत्यस्यैव प्रकृतिसम्बन्धतत्कार्यलिङ्गशरीरादेर्निवृत्तिसम्भवात् न कश्चिद्दोषस्पर्शावकाशः। सत्यस्य वस्तुनो निवृत्तिर्नास्तीति नियमाभावस्य पूर्वमेव विस्तरश उक्तत्वात्। लोकेऽपि सत्यस्यैव राजकारागृहे पुरुषाणामयोमयशृङ्खलकाष्ठादिबन्धस्य राजाज्ञया निवृत्तिः। सत्यस्यैव पुरुषाङ्गलिप्तस्य चन्दनपङ्कामेध्यादेर्जलप्रक्षालनादिना निवृत्तिः। सत्यस्यैव भूषणवस्त्रगवादेर्दानेन निवृत्तिर्दृष्टचरा सर्वजनप्रसिद्धा च, तेषां च तत्र सत्त्वदर्शनात्। बन्धस्य मिथ्यात्वाभ्युपगमे च न कश्चिद्वस्तुतो बद्धः मोक्ष्यते वा भवतामित्यङ्गीकृतं स्यादिष्टमेवेति चेत्तर्हि शास्त्रारम्भो व्यर्थ एव स्यात्प्रयोजनाभावात्। तथाहि शुद्धस्य बन्धो नासीन्नास्ति न भविष्यति। यो बद्धः, स तु मिथ्या, तस्य मोक्षार्थं बुद्धिमन्तो न यतन्ते। सूर्याकाशादीनां जलघटाद्युपाधिषु प्रतिबिम्बत्वेनावच्छिन्नत्वेन च सत्त्वेऽपि क्षत्यभावदर्शनात्, तन्मुक्तये तेषां प्रयत्नस्य चादर्शनात्। एवं भवन्मते ब्रह्मणोऽपि शुद्धबुद्धनित्यमुक्तस्य कल्पिताविद्यारूपोपाधौ प्रतिबिम्बत्वेऽवच्छिन्नत्वे वा दोषास्पृष्टत्वेन क्षत्यभावात्तस्य मोक्षाय प्रयत्नस्यासम्भव एव, सर्वदा स्वरूपस्फुरणात्। न चाविद्यासम्बन्धात्स्वरूपास्फुरणमिति वाच्यम्, तर्हि द्वितीयस्य तन्मोचकस्य स्वप्रकाशस्याभावान्न कदापि कथमपि तत्सम्बन्धो नंक्ष्यति। अविद्यालक्षण-

---

मिति। अविद्याशब्दस्य कर्मपरत्वे श्रुतिमुदाहरति। अविद्ययेति। प्रागुक्तमर्थमनूद्यति। यत्तु पारमार्थिकस्येत्युक्तं तदप्यपाकरोति। तद्दुराग्रहमात्रमिति। लौकिकदृष्टान्तेनोक्तार्थं परबुद्धावारूढं करोति। लोकइति। सत्यस्यापि बन्धस्य ज्ञानान्निवृत्तिः सम्भवति "तथा विद्वान्नामरूपाद्विमुक्त" इति श्रुतिबलात् सेतुदर्शनात् सत्यस्यापि पापस्य नाशः श्रूयते तथाच सत्यस्य वस्तुनो निवृत्तिर्नास्तीति नियमोऽनैकान्तिक इतिभावः। बन्धस्य तुच्छत्वात् कस्य मुक्तये प्रयासविशेषः मुमुक्षोरेवासिद्धेः प्रयोजनासिद्धेः शास्त्रारम्भो व्यर्थ एवेत्याह। बन्धस्येति। तमेवोपपादयति। तथाहीत्यादिना। बन्धत्वं शुद्धब्रह्मगतं मायाशबलगतस्वेति विकल्प्याद्यं निरस्यति। शुद्धस्येति। द्वितीयमभिप्रेत्याह। यो बद्ध इति। तस्य = बद्धस्य। तन्मुक्तये = जलघटाद्युपाधिगतसूर्याकाशादिप्रतिबिम्बमुक्तये। तेषां = सूर्याकाशादीनाम्। ब्रह्मप्रतिबिम्बवादेऽवच्छेदवादे च मोक्षो दुर्घट इत्याह। एवं भवन्मत इति। शुद्धस्य सदा स्वरूपस्फुरणेन नित्यमुक्तत्वात् कस्य मुक्तये प्रयासविशेषः स्वीकार्य इतिभावः। अविद्यासंसर्गाद्

प्रमाणप्रयोजकाद्यभावस्य पूर्वैर्विस्तृतत्वादत्रोपरम्यते। नापि प्रतिबिम्बस्य स्वमोक्षार्थं प्रयत्नो सम्भवति, स्वरूपनाशप्रसङ्गात्। नहि स्वरूपनाशाय कश्चिद्यतते। अपि तु स्वरूपावाप्त्यै एवेति। किञ्च तस्य जडत्वेन कृत्याश्रयत्वासम्भवात्। अन्यथा घटादिष्वतिप्रसङ्गात्। प्रतिबिम्बो जडः ज्ञातृत्वकर्तृत्वादिचेतनधर्मानाश्रयत्वात्सूर्यमनुष्यादिप्रतिबिम्बवत्। तस्मा-द्बन्धस्य मिथ्यात्वे मोक्षस्यापि तत्त्वं, तस्य मिथ्यात्वे तत्साधनजातस्य वैयर्थ्यं, तथात्वे तत्प्रतिपादकशास्त्रस्य सुतरां वैयर्थ्यम्। एवं च मोक्षशास्त्रस्य सुतमां वैयर्थ्यमिति तव श्रीमुखेनैव सिद्धम्। अपि च सर्वज्ञा व्यासादयः शास्त्रकाराश्च बन्धो मिथ्या, तत्सापेक्षो मोक्षोऽपि मिथ्या, न कश्चिद्बद्धो वा मुक्त इत्येव ब्रूयुः, किमिति बहुशास्त्रविस्तारेणान्यथा-ऽयथार्थोपदेशे तेषां वञ्चकत्वं स्यात्। तथात्वे च बौद्धमतस्वीकारः स्यात्। किञ्च चेत-नस्यास्माभिरिहः कुण्डलावस्थावदवस्थात्वं न ह्यङ्गीकृतं, येन त्वदुक्तदोषप्रसङ्गः स्यात्। अपि तु प्रकाशाश्रयन्यायेन तस्य त्वाधाराधेयभाव एव स्पष्टं ज्ञायते,न त्वेकदेशत्वं जीवस्य। तथात्वे च पूर्वोक्तप्रकारेण निर्दोषत्वस्योक्तत्वात्। नापि न चात्रोभावपि भेदाभेदौ श्रुतिस्तु-ल्यवद्व्यपदिशति। अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति। भेदं तु पूर्वसिद्धमेवानुवदत्यर्थान्तर विवक्षयेति वक्तुं शक्यं, प्रतियोगिप्रत्यक्षाभावाद्भेदाप्रत्यक्षत्वेन तस्यानुवादत्वायोगात्। प्रतियोगिनोर्जीवेशयोरप्रत्यक्षत्वं प्रसिद्धमेव। ननु जगदचेतनं तु प्रत्यक्षमेवानुभूयते तदं-शेनानुवादत्वमिति चेन्न, ब्रह्मणस्तु प्रत्यक्षाभावात्। नह्येकस्य प्रत्यक्षेण भेदप्रत्यक्षो

---

ब्रह्मणः स्वरूपस्फुरणं भवितुमर्हतीत्याशङ्क्य परिहरति। नचेति। तन्मोचकस्य = अविद्यामोचकस्य। तत्स-म्बन्धः = अविद्यासम्बन्धः। अनादित्वे सति ज्ञाननिवर्त्यत्वमविद्यालक्षणम्, तच्च सादिश्रुत्याद्यवच्छिन्नचैतन्या-न्तरकेऽज्ञानेष्वव्याप्तं तेषामनादित्वायोगात्। प्रमाणाभावादप्यज्ञानासिद्धिः। अज्ञानाश्रयस्तद्विषयोऽपि दुर्निरूपः। अज्ञानस्य प्रयोजकासिद्ध्या तदसिद्धिरिति प्रागेव निरूपितमित्यर्थः। स्वमोक्षार्थमिति। प्रतिबिम्बमोक्षार्थमित्यर्थः। तस्य = प्रतिबिम्बस्य। विपक्षे बाधकमुपन्यस्यति। अन्यथेति। जडस्यापि स्वतः कृत्याश्रयत्वे। प्रतिबिम्बस्य जडत्वमनुमानेन समर्थयति। प्रतिबिम्ब इति। फलितार्थं दर्शयति। तस्मादिति। जडत्वात् = बन्धो मिथ्या जडत्वादिति प्रयोगः। तत्वम् = मिथ्यात्वम्। न कश्चिद्वस्तुतो बद्धः मोच्यते वेति भवतां राद्धान्तोऽतो मोक्षस्यापि मिथ्यात्वं वाच्यमितिभावः। तस्य = मोक्षस्य। तत्साधनजातस्य = मोक्षसाधनजातस्य। तथात्वे = निष्फलत्वे। तत्प्रतिपादकशास्त्रस्य=मोक्षसाधनप्रतिपादकशास्त्रस्य। बादरायणप्रभृतीनां बहुशास्त्रप्रणयनं निष्फलमेव प्रतिभाति सङ्क्षेपमात्रेणैव प्रयोजनस्य सम्पन्नत्वादित्याह। अपि चेति। तत्सापेक्ष इति। बन्धसापेक्षः। बाधकतर्कमाह। अन्यथेति। तदर्थमेवाह। अयथार्थोपदेश इति। तेषाम् = व्यासप्रभृतीनाम्। तथात्वे = वञ्चकत्वे। सर्वस्य कुण्डलावस्थावत्प्रत्यगात्मनोऽवस्थान्तरत्वापत्तिरस्माभिर्नोररीकृता येन जीवात्मनोऽनित्यत्वं स्यात् किन्त्वचेतनस्यावस्था-न्तरापत्तिरूपमनित्यत्वं सर्वसम्मतत्वादस्माकमपीष्टमेवेत्याशयेनाह। किञ्चेति। त्वदुक्तदोष इति। पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रस्य वैयर्थ्यं प्रसज्येत इति दोष इत्यर्थः। तस्य=चेतनस्य। तथात्वे=जीव-स्यैकदेशत्वाभावे। पूर्वोक्तप्रकारेणेति। "भूयश्चान्ते मायानिवृत्ति"रिति श्रुतिबलादेव कर्मनिमित्तकसत्यस्यैव प्रकृति-सम्बन्धतत्कार्यलिङ्गशरीरादेर्निवृत्तिसम्भवान्न कश्चिद्दोषावकाश इत्युक्तप्रकारेणेत्यर्थः। प्रागुक्तार्थं दूषयितुमनूद्यति। नापी-त्यादिना। नापीत्यस्य वक्तुं शक्यमित्यग्रतनेन सममन्वयः। तत्र हेतुमाह। प्रतियोगिप्रत्यक्षाभावादिति। प्रतियो-

ज्ञायते, अपि तूभयप्रत्यक्षेणैव। तस्मात्प्रत्यक्षादिग्राह्ये ऽचेतने परिणामादिस्वभावे प्रकाशानन्दापरिच्छिन्नस्वरूपस्यानन्तकल्याणगुणाश्रयस्य ब्रह्मणः श्रुतिज्ञापितो भेदो ऽनुभूयते। यादृशं ब्रह्म श्रुत्याभिधीयते नेदं जगत्तादृशं दृश्यते, अतो भेदो ऽस्तीति ज्ञायते। तस्माच्चिदचिद्ब्रह्मभेदस्य श्रुतिप्रमितत्वमेव नानुवादार्हत्वमिति सिद्धम्। प्रत्युताभेदवाक्यानामेव भवन्मते ऽनुवादपरत्वापातात्। तथाहि भवतां सिद्धान्ते घटः सन्पटः सन्नित्यादिप्रत्यक्षस्य सन्मात्रानुभूतिग्राहित्वेनाभिन्ननिर्विशेषसन्मात्रानुभूतेः प्रत्यक्षप्राप्तत्वादभेदवाक्यानां तदनुवादपरत्वस्य वक्तुं शक्यत्वात्। अभेदवाक्यानि न स्वार्थपराणि, प्रत्यक्षप्राप्तानुभूतिपरत्वेनानुवादपरत्वादग्निर्हिमस्य भेषजमित्यादिवाक्यवदिति पूर्वमेवोक्तत्वात्। ननु "नान्योऽतो ऽस्ति द्रष्टे" त्यादिश्रुत्या परमात्मनो ऽन्यस्य चेतनस्य "नेति नेती" त्यादिवाक्यैः प्रपञ्चस्य प्रतिषेधादुक्तार्थासिद्धेरद्वैतमेव सिद्धान्तः इति चेन्न, उक्तवाक्यानां त्वदुक्तार्थपरत्वाभावात्। तथाहि "नान्योऽतो ऽस्ति द्रष्टे" त्यस्य स्वतन्त्रद्रष्ट्रन्तरनिषेधपरत्वस्योक्तत्वात् न सामान्यद्रष्टृनिषेधपरत्वं तस्य। अन्यथा "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिद्रष्टृत्वप्रतिपादकशास्त्रव्याकोपात्। 'नेति नेती' त्यादेरपि ब्रह्मण इयत्तानिषेधपरत्वेन प्रपञ्चस्वरूप-

---

गिप्रत्यक्षाधीनं भेदप्रत्यक्षं भवति प्रतियोगिनो जीवस्याप्रत्यक्षत्वात् न तद्भेदः प्रत्यक्षसिद्ध इत्यर्थः। तस्य = भेदस्य। प्रपञ्चस्य अचेतनस्य प्रत्यक्षसिद्धत्वात् तद्भेदस्य तथात्वेनानुवादत्वमित्याशङ्कते। नन्विति। तदंशेन = जगद्भेदांशेन। प्रतियोग्यनुयोगिनोः प्रत्यक्षसत्वे एव भेदस्य प्रत्यक्षत्वं सम्भवति नान्यथेत्याशयेन परिहरति। नेति। उभयप्रत्यक्षेणैव = प्रतियोग्यनुयोगिनोः प्रत्यक्षेणैवेत्यर्थः। चिदचिद्भेदो न प्रत्यक्षसिद्धः किन्तु श्रुतिप्रमितः न तस्यानुवादार्हत्वमिति निगमयति। तस्मादिति। अभेदवाक्यानामेवानुवादपरत्वमित्याह। प्रत्युताभेदवाक्यानामेवेति। तदेवोपपादयति—तथाहीत्यादिना। अनुमानं दर्शयति। अभेदवाक्यानीति। "नान्यतोऽस्ति द्रष्टे"ति श्रुत्या परस्माद् ब्रह्मणोऽन्यच्चेतनं प्रतिषिद्ध्यते। "अथात आदेशो नेति नेति"इतिवचनेन ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणात्। ब्रह्ममात्रं निष्प्रपञ्चं वाक्यार्थान्वययोग्यं तत्पदलक्ष्यं सिध्यतीति शङ्कते। नन्विति। यद्युक्तवाक्यानां त्वदुक्तार्थे तात्पर्य्यं स्यात्तदाऽद्वैतसिद्धान्तस्तवाभिप्रेतः सिद्ध्येत् नत्वेवमित्याशयेनोक्तशङ्कां परिहरति। नेति। तदेवोपपादयति। तथाहीत्यादिना। "नान्योतोऽस्ति द्रष्टे"ति वचनं न सामान्यतो द्रष्टृत्वं निषेधति किन्तु स्वतन्त्र द्रष्ट्रन्तरमित्यर्थः। तस्येति। नान्योतोऽस्ति द्रष्टेत्यस्य। विपक्षे बाधकतर्कमुपन्यस्यति। अन्यथेति। उक्तवचनस्य सामान्यद्रष्टृत्वनिषेधकत्वे। व्याकोपादिति। यद्युक्तवचसा सामान्यद्रष्टृत्वं निषिध्यते तदा "ततस्तु तं पश्यति निष्कलं ध्यायमानः। यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशम्। जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः। तस्मिन् दृष्टे परावरे" इत्याद्याः द्रष्टृत्वप्रतिपादिकाः शतशः श्रुतयस्सन्ति तासां सर्वासां बाधः प्रसज्येतेत्यर्थः। यद्येवं तदा निषेधबोधकवाक्यानां का गतिरित्याह। नेति नेत्यादेरपीति। उक्तवाक्येन प्रपञ्चस्वरूपं न निषिद्ध्यते "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मे"त्यत्र त्रिरूपत्वाभिधानात्। किन्तु ब्रह्मणः प्राप्तमूर्त्तामूर्त्तरूप इयत्तामेव प्रतिषेधतीत्यर्थः। विशिष्टाद्वैतसिद्धान्तानुयायिनां व्याख्यानं दर्शयति। अन्ये त्वित्यादिना। "उभयव्यपदेशात्त्वहिकुण्डलवदि"तिसूत्रस्यार्थं संक्षिपति। ब्रह्मण इति। "पूर्ववद्वे"ति सूत्रार्थं तन्मतरीत्या विवृणोति। एकस्यैवेति। उक्तदोषादिति। ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्म-

निषेधपरत्वाभावस्योक्तत्वादित्यलं विस्तरेण । अन्ये तु ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तुनीति सूत्रं व्याख्याय एकस्यैव द्रव्यस्यावस्थाविशेषयोगेऽपि ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषादनिर्मोक्षप्रसङ्गः । अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रं विवक्षितम् । एवं तर्ह्यश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिव्यवहारविरोधः । तस्माद् "अंशो नानाव्यपदेशात्प्रकाशादिवत्तु नैवं परः"(ब्र०।२।३।४३) इति जीववत् पृथक्स्थित्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वं विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन च भेदव्यवहारो मुख्यः । ब्रह्मणो निर्दोषत्वं च रक्षितं तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रति अपृथक्सिद्धलक्षणविशेषणविशेष्यतया यथांशत्वं तथेह जीवस्याचिद्वस्तुनश्च ब्रह्मप्रत्यंशत्वमित्याहुस्तत्प्रामादिकम् । एकस्यैवानन्तविचित्रशक्तिकस्य ब्रह्मणः अवस्थाविशेषयोगे तद्रूपत्वेनावस्थानेऽपि दोषाभावात् । तथा हि सर्वस्य चिदचिद्वस्तुनो ब्रह्मात्मकत्वेन तदाधेयत्वेन तद्व्याप्यत्वेन तन्नियम्यत्वेन तत्तन्त्रत्वेन च तदविनाभावनियमात् । ब्रह्मणश्च वस्तुजातस्यात्मत्वादिना सर्वनामत्वेऽपि च दोषास्पृष्टस्वभावत्वात्, स्वरूपे परिणामानङ्गीकाराच्च सर्वमनवद्यम् । "ब्रह्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म, एतदात्म्यमिदं सर्वं, स्वयमात्मानमकुरुत, सच त्यच्चाभवत्, नामानि सर्वाणि यमाविशन्ति, सर्वनामा सर्वकर्मा सर्वलिङ्ग" इत्याद्याः श्रुतयः । "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः । अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ! वासुदेवः सर्वमि"ति 'इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च । सर्वं समाप्नोषि ततोऽसि सर्वः । कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिर्हरिरखि-

---

णोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुरिति प्रागभिहितदोषादि यर्थः । अथेत्यादीति । चिदचिदीश्वरेषु ब्रह्मणि च ब्रह्मत्वं नाम जातिः किमनुवर्तते उत ब्रह्मैव जातिश्चिदचिदीश्वरेष्वनुवर्त्तत इति विकल्पः । प्रथमे पक्षे ईश्वरवाचिपदैर्जगत्सामानाधिकरण्यं न स्यात् । जातिवाचिपदैर्हि सामानाधिकरण्यं न व्यक्तिवाचिभिः नहि खण्डो गौरितिवत् खण्डो मुण्ड इति सामानाधिकरण्यम् । द्वितीये जगत्कारणत्वतदाधारत्वसर्वज्ञत्वादिगुणाश्रयत्वादिकं नोपपद्यते जातेर्जगत्कारणत्वसर्वज्ञत्वाद्यसम्भवादित्यर्थः । सकलश्रुतिस्मृतिव्यवहारविरोध इति : अनेन शिरोद्वयेऽपि दूषणद्वयं विवक्षितम् । 'ब्रह्मजातियोगमात्रमि'तिपाठे ब्रह्मत्वं जातिरिति विकल्पः शिरोऽभिप्रेतं स्यात् । "ब्रह्मत्वजातियोगमात्रमि"तिपाठे ब्रह्मत्वं जातिरिति विकल्पः शिरोऽभिप्रेतं स्यात् । 'ब्रह्मत्वजातियोगमात्रमि"तिपाठे शिरोऽन्तरमभिप्रेतं स्यात् ब्रह्मापीत्यत्र भावनिर्देशः स्यात् । अपृथक्सिद्धविशेषणतयांशत्वं किं दृष्टमित्यत्राह । तदेवमिति । तदपाकरोति । तत्प्रामादिकमिति । तत्तद्रूपत्वेनावस्थाने = अवस्थारूपत्वेनावस्थाने । तमेवोपपादयति । तथाहीत्यादिना । तदाधेयत्वेन = ब्रह्माधेयत्वेन । तद्व्याप्यत्वेन = ब्रह्मव्याप्यत्वेन । तन्नियम्यत्वेन = ब्रह्मनियम्यत्वेन । तत्तन्त्रत्वेन = ब्रह्मतन्त्रत्वेन । तदविनाभावनियमात् = ब्रह्माविनाभावनियमात् । स्वरूपेपरिणामानङ्गीकाराच्चेति । शक्तौ परिणाम इत्यर्थः । सर्वस्य ब्रह्मात्मकत्वं श्रुतिमुखेन व्यवस्थापयति । "ब्रह्मैवेदं सर्वं, सर्वं खल्विदमि"ति । श्रीमुखवचनेनाप्युक्तार्थं द्रढयति । अहमात्मागुडाकेश"इति । स्मृतिमुदाहरति । इन्द्रियाणीति । एष हृत्पद्माकाशस्थः परमात्मा नित्यमेव स्वतोऽपह-

त्ताभिरुदीर्य्यते तथैकः । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् । योऽयं तवागतो देव ! समीपे देवतागणः । स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान्" इत्याद्याः स्मृतयश्च चिद्-चित्प्रपञ्चस्य ब्रह्मात्मकत्वे तदपृथक्सिद्धत्वे ब्रह्मणश्च सर्वरूपत्वे प्रमाणम् । "सत्यं ज्ञानमनन्तं ब्रह्म, य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्य-सङ्कल्पः. असङ्गो ह्ययं पुरुषः, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमि" त्यादि । अन्यत्र धर्म्यादन्यत्राधर्मादन्यस्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे" त्याद्याः श्रुतयः । "परस्तस्मात्तु भावोऽन्यो व्यक्तो व्यक्तात् सनातनः । यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । स सर्वभूतः प्रकृतिं विकारान् गुणांश्च दोषांश्च मुने ! व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेन श्रितं यद्भुवनान्तराले" इत्याद्याः स्मृतयश्च ब्रह्मणो निर्लेपत्वे प्रमाणम् । तस्मादहिकुण्डलदृष्टान्तेन भेदाभेदाङ्गीकारेऽपि परिणामादिदोषस्याचिच्छक्तिगतत्वेन पर-ब्रह्मणो निर्दोषत्वात् उक्तशङ्काया उन्मत्तप्रलापत्वं सिद्ध्यति । अन्यथा "प्रकृतिश्चे"ति "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यधिकरणयोरुदाहृतश्रुतिसमुदायस्य च व्याकोपात् । किञ्च भवद्भिरपि "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि" त्यस्य सूत्रस्य भाष्ये प्रतिज्ञादृष्टा-न्ताभ्यां निमित्तमात्रकारणत्वं निरस्य ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्डलोहमणिनख-कृन्तनविज्ञानेन घटमणिकटकमुकुटपरश्वधवास्यादितत्कार्यविज्ञानवत् निखिलजगदेककारणभूते ब्रह्मणि विज्ञाते तत्कार्यं जगद्विज्ञातमेव स्यात् । कारणमेवावस्थान्तरमापन्नं न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनादिति सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपं, कदाचिच्चाविभक्तनामरूपं, यदा

---

तपाप्मा अतएव तत्कार्यं जरादिकमस्य नेत्याह । विजर इत्यादि । "अविजिघित्सोऽपिपास" इत्यनेन क्षुभुक्षादिना-पीडाभाव उच्यते तत्रापि हेतुमाह । सत्यकाम इति । यदिष्टं तस्य तत् स्वत एव भवेदित्यर्थः । सत्यकामत्वे हेतुः सत्यसङ्कल्प इति । अमोघसङ्कल्पः । प्रागुक्तार्थं दूषयितुं निगमयति । तस्मादिति । ब्रह्मणः स्वभावतो-ऽपास्तसमस्तदोषत्वात् निर्लेपत्वादिति तदर्थः । उक्तशङ्काया इति । ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषा-दनिर्मोक्षप्रसङ्गरूपाया इत्यर्थः । विपक्षे बाधकतर्कमाह । अन्यथेति उक्तार्थानङ्गीकारे । उक्तरीत्या तदीयव्याख्याने "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि" त्यस्य सूत्रस्य भाष्यं विवृण्वन् विरोधं दर्शयति किञ्च भवद्भिरपीति । विशि-ष्टाद्वैतवादिभिरपीत्यर्थः । यदि ब्रह्मणो निमित्तमात्रं कारणत्वमभिप्रेतं स्यात्तदा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोप-पद्यते मृत्पिण्डादिदृष्टान्तश्च । नहि निमित्तकारणमात्रविज्ञानेन कार्यस्य विज्ञानं भवितुमर्हति । अतो ब्रह्मण उपादान-कारणत्वं वाच्यं तथासति प्रतिज्ञादृष्टान्तयोरुपपत्तिरित्याह । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यस्येति । सर्वं चिदचिन्मात्रं ब्रह्मशरीरकं भवति अतएव सर्वेषामात्मभूतं परं ब्रह्म तच्च विभक्तनामरूपतया कार्यस्वरूपं अ-विभक्तनामतापन्नं कारणत्वेन व्यपदिश्यत इत्याह । सर्वचिदचिद्वस्तुशरीरतयेति । निखिलवस्तुशरीरस्य भगवतः परब्रह्मणः विभक्तनामरूपावस्थामादाय विकारवत्त्वमजत्त्वञ्चोच्यत एकस्यैव परब्रह्मणः कर्तृत्वं कार्यत्वम-भिधीयते अविभक्तनामरूपविभक्तनामरूपाभ्यामित्याह । यदा चापिविभक्तनामरूपमिति । फलितार्थं दर्शयति ।

विभक्तनामरूपं तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते। यदा चाविभक्तनामरूपं तदेकमद्वितीयं कारणमिति च। एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणो विभक्तनामरूपा याऽवस्था, सा "गौरनाद्यन्तवती विकारजननीमजामेकामि" त्यादिभिरभिधीयते, इति च "आत्मकृतेः परिणामादि" त्यस्य भाष्ये 'अविभक्तनामरूप आत्मा कर्त्ता, स एव विभक्तनामरूपः कार्यमिति कर्त्तृत्वकर्मत्वयोर्न विरोध' इत्युक्तम्। तथा च परमात्मन एव सर्वावस्थावत्तया स्थूलादिसर्वकार्यस्वरूपत्वाङ्गीकारात्त्वत्प्रयुक्तदोषरूपवज्रं त्वदुपर्य्येवापतितम्। ननु परमात्मनश्चिदचित्सङ्घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगताः सर्व एवापुरुषार्थाः, तथा भूताचिदंशगताश्च सर्वे विकाराः न परमाणि कार्य्यत्वेनावस्थितयोःतयोः शरीरभूतयोर्नियन्तृतयाऽऽत्मभूतः परमात्मा तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते, इत्युक्तत्वान्न विरोध इति चेत्तर्हि आगतोऽसि नोमार्गे। अस्माभिरपि दोषाणां सर्वेषां परमात्मीयशक्तिभूतयोश्चिदचितोरेवाङ्गीकारात् स्वरूपे परिणामानङ्गीकारात्।'यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे'। यच्चोक्तमथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रं विवक्षितम्। एवं तर्ह्यश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्त्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोध इति, तत्स्ववाग्विलासमात्रं भ्रान्तिकल्पितं वा, एतत्सूत्रस्य तत्परत्वाभावात्। अचिद्ब्रह्मणोः प्रकाशाश्रयदृष्टान्तासम्भवात्। अचेतनस्य प्रभादृष्टान्तत्वं भवतामेवानुभूतं, नान्येषाम्। किञ्च ब्रह्मत्वजातेः केनाप्यङ्गीकाराभावात् "सदेव सौम्येदमग्र आसीदेकमेवे"ति श्रुत्या ब्रह्मण एकत्वावधारणादेकत्वस्य च जातिबाधकत्वात्। यदप्युक्तं "तस्माद् अंशो नाने" त्यारभ्य, ब्रह्मणोनिर्दोषत्वं च रक्षितमित्यन्तं, तदप्यसम्यक्। व्यावर्त्त्याभावेन चिदचितोर्विशेषणत्वस्य

---

तथाचेत्यादिना। त्वत्प्रयुक्तदोषरूपवज्रमिति। "ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तुनी" ति सूत्रं व्याख्याय एकस्यैव द्रव्यस्याविशेषयोगेऽपि ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषादनिर्मोक्षप्रसङ्गरूपवज्रमित्यर्थः। परमात्मनः शरीरभूतयोश्चिदचितोः कार्यत्वेनावस्थितयोः नियन्ता परमात्मा विशेषणगतैर्विकारैर्नस्पृश्यत इत्युक्तदोषं परिहरन्नाशङ्कते। नन्विति। यद्येवमुच्यते तदा प्रविष्टोऽस्माकं पथीत्याशयेनाह। इति चेत्तर्हि आगतोऽसीति। उक्तार्थं प्राचीनानां वचसा प्रमाणयति। यत्रोभयोः समो दोष इति। प्रागुक्तार्थं दूषयितुमनूद्यति। यच्चोक्तमिति। "प्रकाशाश्रयवद्वा तेजस्त्वात्" इति सूत्रस्य व्याख्याने ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः। अतो यथा तेजस्त्वेन प्रभातदाश्रययोरपि तादात्म्यम्। एवमचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्युक्तं तदपाकरोति। तत्स्ववाग्विलासमात्रमिति। तत्परत्वाभावात्=उक्तार्थपरत्वाभावात्। ब्रह्मत्वं न जातिः स्वाश्रयव्यक्तेरैक्यादित्याशयेनाह। किञ्चेति। श्रुतिप्रमाणेन ब्रह्मण एकत्वं दर्शयति। सदेव सोम्येति। "पूर्ववद्वे"ति सूत्रभाष्ये "अंशो नानाव्यपदेशात्, प्रकाशादिवत्तु नैवं पर" इति जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वमित्युक्तं तद्दूषयितुमनूद्यति। यदप्युक्तमिति। व्यावर्तकं विशेषणमिति सर्वेषां निर्विवादम्। एवं चिदचिद्वस्तुनोर्ब्रह्मविशेषणत्वाभ्युपगमे किंवा वस्तु ताभ्यां व्यावर्त्तकाभ्यां व्यावृत्तं विवक्षितमिति विवेचनीयमित्याशयेन परिहरति। तदप्यसम्यगिति। तत्रैवोक्तमनूद्यति। यत्पुनरुक्तमिति। चेतनाचेतनविशिष्ट-

पूर्वमेवान्यग्रन्थेष्वपि विस्तरशो निरस्तत्वात्। यत्पुनरुक्तं विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन च भेदव्यवहारो मुख्य इति, तदपि दुराग्रहमात्रम्, भेदाभेदव्यवहारस्यैव मुख्यत्वेन भेदाभेदयोश्च स्वाभाविकतयाऽभ्युपगम्य भूयो विशिष्टत्वाङ्गीकारस्य गौरवमात्रत्वात्। लाघवाद्भेदाभेदस्यैव वक्तुं सुशकयत्वाच्च। यच्चाप्युक्तम्, प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुणयात्मनः प्रत्यपृथक्सिद्धलक्षणविशेषणविशेष्यतया यथांशत्वं,तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वमिति। तदप्ययुक्तं, प्रकाशमणयादिदृष्टान्तेषु विशेषणविशेष्यभावे सत्यपि अंशांशित्वव्यवहारादर्शनात्। नच शरीरशरीरिणोर्विशेषणविशेष्यत्वाङ्गीकारे चिदचितोरपि ब्रह्मशरीरत्वप्रतिपादनात्तद्वैशिष्ट्यं किमिति नाङ्गीक्रियते, इति वाच्यम्, शरीरशरीरिभावे विशेषणविशेष्यभाव इति नियमाभावाच्चिदचितोर्ब्रह्मशरीरत्वेऽपि विशेषणत्वासम्भवात्। किन्तु व्यावर्त्तकत्वं विशेषणत्वम् यत्र व्यावर्त्यं सत्येव शरीरशरीरिभावस्तत्रैव शरीरस्य विशेषणत्वं नान्यत्रेति नियमात्। प्रकृते तदभावान्न विशेषणत्वमिति सिद्धम्। ननु शक्तिशक्तिमतोरप्यंशांशिभावाप्रसिद्धेः सिद्धान्ते कथमंशांशिभावाङ्गीकार इति चेन्न। "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परामि"ति शक्तित्वमभिधाय पुनः "ममैवांशो जीवलोके जीवभूतः सनातनः" इति तस्यैवांशत्वोक्तेः। तत्रापि चेतनशक्तेरेवांशत्वोक्तिर्नाचेतनस्यानभिधानादिति निश्चीयते। एतेन जीववत्पृथक्स्थित्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वमित्युक्तं निरस्तम्। किञ्च चिदचितोर्ब्रह्मविशेषणत्वस्य श्रुतिस्मृतिसूत्रेषु क्वाप्यश्रवणादपि सर्वथा विशेषणत्वासिद्धिरेवेति संक्षेपः। तस्माद्ब्रह्मणश्चेतनाचेतनयोश्चाहिकुण्डलदृष्टान्तेन प्रकाशाश्रयदृष्टान्तेन च स्वाभाविकभेदाभेद एव सम्बन्धः शास्त्रप्रतिपाद्य इति सिद्धम्। "एकः सन् बहुधा विचचार, एको देवो बहुधा सन्निविष्टः, त्वमेकोऽसि बहुधा बहून् प्रविष्टः" इत्याद्याः श्रुतयः। "एकत्वे सति नानात्वं नानात्वे

---

ब्रह्माद्वैताभ्युपगमेऽपि ब्रह्मणश्चेतनाचेतनाभ्यां भेदस्तयोश्च परस्परं भेदः स्वाभाविकोऽभ्युपगम्यत एव भवद्भिः। अन्यथा स्वभावसाङ्कर्यप्रसक्तिः। एवं भेदमप्यङ्गीकृत्य पुनर्विशिष्टाङ्गीकारात्मकगौरवाद्वरीयस्त्वं स्वाभाविकभेदाभेदमतस्यैव लघुत्वमित्याह। भेदाभेदव्यवहारस्यैवमुख्यत्वेनेति। "पूर्ववद्वे"ति सूत्रव्याख्याने यदुक्तं तदनूद्यति। यच्चाप्युक्तमिति। तदपाकरोति। तदप्ययुक्तमिति। चिदचिन्मात्रं ब्रह्मशरीरकमित्यभ्युपगम्यमाने तद्वैशिष्ट्यं तत्रावश्यकमित्याशङ्क्य परिहरति। नचेति। नहि शरीरशरीरिभावनियतो विशेषणविशेष्यभावः येन त्वदुक्तोऽर्थः सिद्ध्यतीत्याशयेनाह। शरीरशरीरिभाव इति। विशेषणत्वनिर्वचनपुरस्सरं नियमाकारं दर्शयति। किन्त्वित्यादिना। प्रकृते तदभावादिति। प्रकृते चिदचितोर्विशेषणत्वे। चिदचिद्ब्रह्मेतितत्त्वत्रयादन्यस्याभावाद् भवद्भिरपि तत्त्वत्रयादन्यस्यानङ्गीकारेण व्यावर्त्याभावाद् व्यावर्त्तकत्वरूपविशेषणलक्षणत्वाभावस्तदभावे च ब्रह्मणो विशिष्टत्वाभावः सुतरां सिद्ध इतिभावः। भवतां राद्धान्ते कथमंशांशिभाव उपपद्यते इत्याशङ्कते। नन्विति। परिहरति। नेति। तस्यैव=पराशक्तेरेव। तमेव विवृणोति। तत्रापीत्यादिना। तत्र=श्रीमद्भगवद्गीतायाम्। एतेनेति। चेतनशक्तेरेवांशत्वाभिधानेनेति तदर्थः। उपसंहरति। तस्मादिति। उक्तदूषणकदम्बात्। भेदाभेद-

सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हती''ति भगवान्मनुः। ''एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखमि'' ति भगवद्वाक्यं, हरिवंशे घण्टाकर्णः ''केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदिमं पुरातनम्। वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यताः स्म॥ अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः। आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यताः स्मे'' त्याद्याः स्मृतयश्च प्रमाणत्वेनानुसन्धेयाः। अलं विस्तरेण॥ ३०॥ इति प्रकृतैतावदधिकरणम्॥ ६॥

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः।३।१।३१

''यतो वा इमानी'' त्यादिना जगज्जन्मादिकारणतया निर्दिष्टात्सत्यज्ञानानन्दात्मकान्निर्धारितयाथातथ्यात्परब्रह्मणः परमप्यन्यत्तत्त्वमस्ति? न वेति? संशये तावदस्तीति पूर्वपक्षयति। कुतः? ''अथ य आत्मा स सेतुर्विधृतिरि'' ति सेतुत्वश्रवणात्सेतोश्च प्राप्यान्तरप्रापकत्वदर्शनेन ब्रह्मणोऽपि प्राप्यान्तरप्रापकतैव प्रतीयते, न तु स्वयं प्राप्यता। किञ्च ''एतं सेतुं तीर्त्वे''ति तरितव्यत्वाभिधानेनैतस्य प्राप्यत्वाभावाविष्करणात्। उन्मानव्यपदेशाच्च। 'चतुष्पाद् ब्रह्म षोडशकलं ब्रह्मे'' त्युन्मितं परिच्छिन्नमुच्यते,उन्मानव्यपदेशेन च सेतुप्राप्यस्यानुन्मितस्यास्तित्वं द्योत्यते। किञ्च '' अमृतस्य परं सेतुम्, अमृतस्यैष सेतुरि'' त्यमृतस्य वस्त्वन्तरस्य प्राप्यप्रापकलक्षणः सम्बन्धः प्रतीयते। किञ्च ''तेनेदं पूर्णं

---

सिद्धान्तं श्रुतिमुखेन प्रमाणयति। एकः सन्निति। अत्रैकत्वेन भेदः प्रदर्शितः,बहुत्वेन चाभेदोऽभिहितः। एवमग्रेऽपि बोध्यम्। श्रीमहाभारतस्मृतिवचसापि भेदाभेदसिद्धान्तं द्रढयति ' एकत्वेनेति। एकत्वोक्त्याऽभेद उक्तः। पृथक्त्वोक्त्या च भेदो निर्णीत इत्यर्थः। स्मृत्यन्तरेणाप्युक्तार्थं प्रमाणयति। केचिद्बहुत्वेनेति। अत्रापि बहुत्वनिर्देशेन भेदः 'एकात्मने' त्युक्त्या भेदश्चोक्त इत्यर्थः॥ ३०॥ इतिप्रकृतैतावदधिकरणम्।

अथ पराधिकरणम्

पूर्वपक्षसूत्रमिदं तदर्थं व्याचष्टे। यतो वेति। सूत्रस्थातश्शब्दस्य व्याख्यानं ब्रह्मण इत्यन्तम्। परमितिव्याख्येयपदम्। विचारस्य पूर्वाङ्गं संशयं प्रदर्श्य पूर्वपक्षं गृह्णाति। तावदस्तीति पूर्वपक्षयतीति। सेतून्मानेति हेतुं विवृण्वन् विषयवाक्यं दर्शयति। अथ य आत्मेति। सेतुशब्दार्थं व्याकरोति। प्राप्यान्तरप्रापकत्वदर्शनेनेति। ब्रह्मणः प्राप्यत्वाभावे श्रुतिं प्रमाणयति। किञ्चेत्यादिना। चतुष्पाद् ब्रह्मेति। षोडशकलविद्यायां ब्रह्मणश्चत्वारः पादा निरूपिताः। प्राचीदिक्कला प्रतीचीदिक्कला दक्षिणादिक्कला उदीचीदिक्कला एष वै सोम्य चतुष्कलः पादो ब्रह्मण. प्रकाशवन्नाम। पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कला एष वै सोम्य चतुष्कलः पादो ब्रह्मणः अनन्तवान्नाम। अग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कला एष वै चतुष्कलः पादो ब्रह्मणः अन्तवन्नामेति। गवां पादेषु पुरस्ताद् द्वौ खुरौ पश्चात् द्वौ पार्ष्णी इत्येकैकस्मिन् पादे चत्वारश्चत्वारोंशास्सन्ति ते कलाशब्देनोच्यन्ते। प्राची प्रतीची दक्षिणोदीची दिगिति चतस्रः कला अवयवा एव कलाः स प्रकाशवान् प्रथमपादः। तदुपासनायां प्रकाशवान् उपासको भवतीति प्रकाशवान् पादः। पृथिव्यन्तरिक्षं द्यौः समुद्र इति चतस्रः कलाः, एष द्वितीयपादोऽनन्तवन्नाम। सोऽयमनन्तवत्त्वेन गुणेनोपास्यमानोऽनन्तवत्त्वमुपासकस्यावहतीति अनन्तवान् पादः। अग्निस्सूर्य्यश्चन्द्रो विद्युदिति चतस्रः कला स ज्योतिष्मान्नाम तृतीयपादः

पुरुषेण सर्वमि" ति प्रतिपादितपुरुषादपि "ततो यदुत्तरतरं तदरूपमनामयमि" त्यधिकस्य निर्देशात्परस्मादपि ब्रह्मणः परमन्यदुपदिश्यते। अत एभ्यो हेतुभ्यः परस्मादपि ब्रह्मणोऽन्यत्परमभ्युपगन्तव्यम् ॥ ३१ ॥

इति प्राप्त उच्यते—

## सामान्यात्तु । ३ । २ । ३२ ॥

तुशब्दः पूर्वपक्षं निरुणद्धि । न ब्रह्मणोऽन्यत्परमस्ति । सेतुव्यपदेशस्तावत् "एषां लोकानामसम्भेदाये" ति वाक्यशेषश्रुतासङ्करकारित्वलक्षणधर्मसामान्यनिबन्धनः। "एतं सेतुं तीर्त्वे" त्यत्र तरतिश्च प्राप्तिवचनो, व्याकरणं तरतीतिवत् नोल्लङ्घनवचनः ॥ ३२ ॥

यदुक्तमुन्मानव्यपदेशादस्य परिमितत्वं प्रतीयते तत्राह—

## बुद्ध्यर्थः पादवत् । ३ । २ । ३३ ॥

बुद्धिरुपासना, तदर्थ उन्मानोपदेशः। यथा "मनो ब्रह्मेत्युपासीतेत्यध्यात्मं तदेतच्चतुष्पाद्ब्रह्म वाक् पादःप्राणः पादश्चक्षुः पादः श्रोत्रं पाद" इत्यध्यात्ममित्यत्र ब्रह्मप्रतीकभूतमनआदौ वागादिपादत्वव्यपदेश उपासनार्थो नतु तात्त्विकः। मनसो वागादिपादत्वासम्भवात्। एवमपरिच्छिन्नस्य ब्रह्मणः "प्राचीदिक्कला प्रतीचीदिक्कला दक्षिणादिक्कला उदीचीदिक्कला एष वै सौम्य ! चतुष्कलः पादो ब्रह्मणः प्रकाशमान्नामे" त्युक्तदिगादिलक्षणचतुष्कलपादसम्बन्धासम्भवादुपासनार्थ एव ॥ ३३ ॥

ननु स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानप्रतीतिस्तत्राह—

## स्थानविशेषात्प्रकाशादिवत् । ३ । २ । ३४ ॥

---

तमुपासीनो ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः । प्राणश्चक्षुः श्रोत्रं मन इति चतस्रः कलाः चतुर्थः पादः आयतनवान्नाम । तदुपासनायामायतनवान् भवतीत्यायतनवन्नाम पादः । तदेवं चतुष्पाद् ब्रह्म पादानामर्धान्यष्टौ शफाः तेऽष्टावस्येति अष्टशफम् । पादेषु चतुर्षु प्रत्येकं चतस्रः कला इति षोडशकलमित्यर्थः । तृतीयहेतुं व्याकरोति । किञ्चेत्यादिना । चतुर्थं हेतुं विवृणोति । तेनेदं पूर्णमिति । पूर्वपक्षमुपसंहरति । अत एभ्यइति ॥ ३१ ॥

पूर्वपक्षमनूद्य सिद्धान्तयति । इति प्राप्त उच्यत इति । सूत्राक्षराणि विवृणोति । तुशब्द इति । सेतुशब्दस्य तर्हि का गतिरित्याशङ्क्य तदर्थं दर्शयति । सेतुव्यपदेश इति । अत्र सामान्यशब्दो भावप्रधानवचनः । सर्वलोकासङ्करत्वस्य एषां लोकानामसम्भेदायेति श्रुतौ साधारणधर्मत्वेन श्रवणात् तद्गुणयोगेन सेतुशब्दो गौण इत्यर्थः । एवं सेतुं तीर्त्वेत्यस्य कोऽर्थ इत्यत्राह । एवं सेतुमिति ॥ ३२ ॥

व्यावर्त्यमनूद्य व्यावर्त्तकसूत्रमादाय विभजते । यदुक्तमिति । सूत्रार्थं व्याकरोति । बुद्धिरुपासनेति । ब्रह्मणे वागादिव्यपदेश उपासनार्थं इति प्रतीकस्य मनस आकाशस्य वागादिपादव्यपदेश उपासनार्थं इत्याह । मनोब्रह्मेत्युपासीत इति । निखिलजगत्कारणस्य सर्वेश्वरस्य वाक्प्राणचक्षुरादिकतिपयवस्तुपरिच्छिन्नत्वं न संभवति अतस्तस्योपासनार्थत्वं सम्प्रतिपन्नमितिभावः ॥ ३३ ॥

यथा प्रकाशाकाशादेरपरिच्छिन्नस्यापि वातायनघटाद्युपाधिवशेन परिच्छिन्नत्वानुसन्धानमेवमिहाप्यभिव्यक्तस्थानभूतप्राणाद्युपाधिवशेनोन्मितत्वानुसन्धानमुपपद्यते ॥ ३४ ॥

यदुक्तम् "अमृतस्य परं सेतुमि" ति प्राप्यप्रापकसम्बन्धव्यपदेशेनामृताद्भेदोऽत्र गम्यत इति तत्राह—

## उपपत्तेः । ३ । २ । ३५ ॥

"यमेवैष वृणुते तेन लभ्य" इति स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणे ब्रह्मणि स्वेनैव प्राप्यप्रापकत्वलक्षणसम्बन्धव्यपदेशस्यापि नानुपपत्तिः ॥ ३५ ॥

यदुक्तं ततो यदुत्तरमित्यधिकं वस्तु प्रतिपाद्यत इति तत्राह—

## तथान्यप्रतिषेधात् । ३ । २ । ३६ ॥

"यस्मात्परं नापरमस्ति किञ्चिदि"ति तत्रैव तदतिरिक्तोत्कृष्टवस्तुनो निषेधेन तद्विरुद्धतया ततो यदुत्तरतरमिति वाक्ये तदधिकवस्तूपक्षेपासम्भवात् । एतच्च एतन्मन्त्रव्याख्याने श्वेताश्वतरप्रकाशिकायां स्पष्टीकृतमस्माभिः ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः । ३ । २ । ३७ ॥

अनेन सेत्वादिव्यपदेशनिराकरणान्यप्रतिषेधरूपेणानन्तरोक्तन्यायेन ब्रह्मणः सर्वगतत्वं सर्वस्मिन् जगति व्याप्तत्वं सिद्धं भवति । तच्चास्य "तेनेदं पूर्णं पुरुषेण सर्वं यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । नित्यं विभुं सर्वगतमि" त्याद्यायामशब्देभ्यो विज्ञायते । आदिशब्देन "ब्रह्मैवेदं सर्वं

---

अनन्तरसूत्रमवतारयितुं शङ्कते । नन्वित्यादिना । सूत्रं व्याचष्टे । यथेति । यथा प्रकाशस्य भानोरपरिच्छिन्नस्य वातायनोपाधियोगात् वातायने सूर्यं इति परिच्छिन्नत्वस्यानुसन्धानं भवति, यथावाकाशस्य घटाद्युपाध्यधीनं परिच्छिन्नत्वं भवति एवं प्रकृतेऽपि प्राणाद्युपाधियोगादुन्मितत्वमनुसन्धीयत इत्यर्थः ॥ ३४ ॥

सूत्रमवतारयति । यदुक्तमिति । प्राप्यस्यैवोपायत्वं श्रूयते इत्याहाथ "यमेवैष वृणुते तनूं स्वामि" त्यनेन प्रापकत्वं प्राप्यत्वञ्च गम्यत इत्यर्थः ॥ ३५ ॥

दूष्यांशं विवृण्वन्नाह । यदुक्तमिति । सूत्रं व्याचष्टे । यस्मात्परमिति । तत्रैवेति । श्वेताश्वतरोपनिषदि । यस्मादिति पञ्चम्यन्तपदेनापरपदस्यान्वये सति समाधिकनिषेधः कृतः स्यात् परशब्दस्यान्वये सति समनिषेधो न कृतः स्यात् तच्चानिर्दिष्टं तथासति परमपुरुषवेदनस्यैकस्यैवापवर्गोपायत्वं पूर्वोक्तं न सिद्ध्यति समाभ्यधिकनिषेधपरश्रुत्यन्तरविरोधश्चापरशब्दवैयर्थ्यञ्च स्यात् । परत्वेन विवक्षितद्रव्यातिरिक्तविषयोऽयं परशब्द इति चेत् । न । कार्त्स्न्येन परत्वम्, निषेधस्य स्वतः प्राप्तेः तस्यानन्यथासिद्धसङ्कोचकाभावात् । ततो यदुत्तरमिति वाक्यं हेत्वर्थत्वेनान्यथासिद्धमितिभावः ॥ ३६ ॥

सूत्रार्थं व्याकरोति । अनेनेति । इदञ्च व्याख्येयपदम् । तच्चास्येति सर्वगतत्वं ब्रह्मणः व्याप्तिवचनशब्देभ्यो विज्ञायते इति योजना । तत्र श्रुतिं प्रमाणयति तेनेदं पूर्णमिति । नियन्तृत्वेन व्याप्तिज्ञापनार्थं नित्यं विभु-

सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वमि" त्यादयो गृह्यन्ते। अतो न ब्रह्मणोऽन्यत्प्राप्यमस्तीति ॥ ३७ ॥ इति पराधिकरणम् ॥ ७ ॥

## फलमत उपपत्तेः । ३ । २ । ३८ ॥

सर्वेषां जीवानां भोगापवर्गरूपं फलं किं कर्त्तव्यतया श्रूयमाणं कर्मैवापूर्वद्वारेण ददाति ? आहोस्वित्तत्तदाराधितः परमात्मैव इति विशयेऽग्रे पूर्वपक्षं निराकरिष्यन्प्रथमं सिद्धान्तमाह—फलमत इति। शास्त्रीयमैहिकामुष्मिकं सर्वं फलमतः परमात्मनः एव भवितुमर्हति। कुतः ? उपपत्तेः। कर्मणां हि क्षणिकत्वात्कालान्तरभाविफलं दातुमसमर्थत्वात्सर्वाध्यक्षात्सर्वज्ञात्सर्वशक्तेर्महोदारात्तत्तत्कर्मभिराराधितात्परमात्मन एवैहिकामुष्मिकभोगजातस्य स्वात्मभावापत्तिरूपमोक्षस्यचोपपन्नत्वात्। नचापूर्वमेव कर्मजन्यं कालान्तरे फलं दातुं समर्थमिति वाच्यम्। तस्याप्यचेतनस्य काष्ठलोष्टसमस्य चेतनाप्रवर्त्तितस्य प्रवृत्त्यनुपपत्तेः। स्वातन्त्र्येण फलदातृत्वे प्रमाणाभावाच्च। नचार्थापत्तेः प्रामाण्यमिति वाच्यम्, ईश्वरसिद्धेस्तस्याः क्षयात् ॥ ३८ ॥

## श्रुतत्वाच्च । ३ । २ । ३९ ॥

इतश्च "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं स वा एष महानज आत्माऽन्नादो वसुदान" इति परमात्मन्येव भोगापवर्गरूपफलप्रदातृत्वश्रवणात् ॥ ३९ ॥

पक्षान्तरमुच्यते—

---

मितिश्रुतिरुपात्ता विभुं प्रभुमियं श्रुतिः परमपुरुषविषया परात्परं पुरुषमुपैति दिव्यम्, दिव्योह्यमूर्त्तः पुरुष इति पुरुषविषयप्रकरणस्थत्वात्। सूत्रस्थादिशब्दं व्याचष्टे आदिपदेनेति ॥ ३७ ॥ इति पराधिकरणम्।

अथ फलाधिकरणम्।

विचाराङ्गं संशयं दर्शयति। सर्वेषामिति। तत्=फलम्। तदाराधितः=कर्मणाराधितः। सूत्रार्थं व्याकरोति। शास्त्रीयमिति। कटवेष्टनसंस्कारादिवत्पुण्यादिसंस्कारात्फलोत्पत्तौ नप्रदात्रपेक्षेति शङ्कते। कुतइति। तत्र सौत्रहेतुमवतार्य व्याकरोति। उपपत्तेरिति। कर्मण एव फलं कस्मान्न भवतीत्यत आह। कर्मणां हीति। क्रियारूपं कर्म क्षणिकं फलपर्य्यन्तस्थायित्वाभावान्न फलमुत्पादयेदित्यर्थः। कर्मजनितापूर्वस्य फलसाधनत्वमाशङ्क्य परिहरति। नचेति। तस्य=कर्मणः। अचेतनस्येति। यद्यदचेतनं तत्सर्वं चेतनाधिष्ठितं प्रवर्तत इति प्रत्यक्षागमाभ्यामवधारितम्, तस्मादपूर्वेणाप्यचेतनेन चेतनाधिष्ठितेनैव प्रवर्तितव्यं नान्यथेत्यर्थः। केवलकर्मणो योग्यत्वाभावादेव फलप्रदत्वं नास्तीत्याह। स्वातन्त्र्येणेति। आशुतरविनाशिनो यागस्य कालान्तरभाविफलहेतुत्वं श्रुतं स्थायित्ववस्त्वतिरेकेणानुपपन्नमपूर्वं कल्पयतीत्यर्थापत्तिस्तत्र मानमित्याशङ्क्य परिहरति। नचार्थापत्तेरिति। कर्मभिराराधितादीश्वरादेव स्थायिनो फलसिद्धेः न केवलतर्केणापूर्वं सिद्ध्यतीतिभावः तस्याः अर्थापत्तेः ॥ ३८ ॥

हेत्वन्तरेणापीश्वरस्यैव फलदातृत्वं सिद्ध्यतीत्याह। इतश्चेति। श्रुतत्वादित्यर्थः। तामेव श्रुतिमुदाहरति "विज्ञानमानन्दं ब्रह्मे"ति। अन्नमासमन्तात् प्राणिभ्यो ददातीति अन्नादः। वसुदानः=धनदाता ॥ ३९ ॥

## धर्मं जैमिनिरत एव । ३ । २ । ४० ॥

जैमिनिराचार्यो धर्मं कर्मफलप्रदं मन्यते । कुतः ? अत एव श्रुतेरुपपत्तेश्च । लोके हि कृष्यादेर्मर्दनदेश्च कर्मण एव साक्षात्परम्परया वा फलप्रदत्वदर्शनात् । तथा वेदेऽपि "यजेत स्वर्गकाम आत्मानमेव लोकमुपासीते" त्यादिना बुभुक्षुमुमुक्ष्वोः कर्त्तव्यतया श्रूयमाणं कर्मैव तत्तत्फलसाधनरूपतयाऽवगम्यते । क्षणिकमप्यपूर्वद्वारेण सर्वफलप्रदमितरथा कर्मोपदेशो निरर्थकः स्यात् ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् । ३ । २ । ४१ ॥

तुशब्दः पूर्वपक्षनिरासार्थः । पूर्वं पूर्वोक्तं परमात्मानमेव फलहेतुं भगवान्बादरायणो मन्यते । कुतः ? हेतुव्यपदेशात् । ईश्वरस्यैव पुण्यापुण्यकारयितृत्वेन फलदातृत्वेन च हेतुत्वं व्यपदिश्यते । "पुण्येन पुण्यं लोकं नयति पापेन पापम्, एष ह्येव साधु कर्म कारयती" त्यादिना । न च यज्ञादिकर्मणो देवतार्चनत्वात्तदर्चिता देवा एव फलं ददती"ति कथमीश्वर एव फलद इति वाच्यम्, देवादीनां स्वतन्त्रतया फलदत्वाभावाच्चदन्तर्यामीश्वर एव फलप्रदः । "यो वायौ तिष्ठन् योऽग्नौ तिष्ठन् य आदित्ये तिष्ठन्नि" त्यादिश्रुतेः । "यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्माराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान् । अहं हि सर्व-यज्ञानां भोक्ता च प्रभुरेव चे" त्यादिस्मरणाच्च प्रभुः फलप्रद इत्यर्थः ॥ ४१ ॥ इति फला-धिकरणम् ॥ ८ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुणपद्म-मकरन्दभृङ्गेण जगद्विजयिश्रीद्वश्रीकेशवकाश्मीरिभट्टेन सङ्गृहीयातां श्रीवेदान्तकौ-स्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायद्वितीयपादविवरणम् ॥ २ ॥

---

अनन्तरसूत्रं पूर्वपक्षपरमित्याह । पक्षान्तरमिति । सूत्रं विभजते । जैमिनिराचार्य्यइति । उपपत्तिं दर्शयति । लोकेहीति । शास्त्रमुदाहरति । तथा वेदेऽपीति । "स्वर्गकामो यजेते" त्यत्र फलसाधनत्वं श्रुतमेव तत्रापूर्वद्वारकत्वं कल्प्यमिति न विरोधः ॥ ४० ॥

सिद्धान्तसूत्रमुपादत्ते । "पूर्वन्तु वादरायणोहेतुत्वव्यपदेशादि" ति । सूत्राक्षराणि व्याकरोति । तुशब्द इति । प्रतिज्ञां विभजते । पूर्वंपूर्वोक्तमिति । तत्र प्रश्नपूर्वकं प्रमाणमाह । कुत इति । कर्मार्चितानां देवादीनां फलदत्वं किमीश्वरेणेत्याशङ्क्य परिहरति । नचेति । "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ।" "तदेवाग्निस्तद्वायुस्तत्सूर्य्यस्तदु चन्द्रमाः" इति । "यो वायौ तिष्ठन्नि" त्यन्तर्यामिब्राह्मणाच्च निश्चीयते न देवाः स्वातन्त्र्येण फलं प्रयच्छन्ति किन्तु तदन्तर्यामीश्वर इत्याह । देवादीनामिति । श्रौतहेतुमुक्त्वा स्मार्त्तंहेतुं दर्शयति । योयो यांयामिति ॥ ४१ ॥ इति फलाधिकरणम् ॥ ८ ॥

इतिश्रीसनन्दनाद्रिप्रवर्तितनिवृत्तिपदाधिष्ठितानन्यनृपतिश्रीस्वामीहरिदासपदाश्रिताश्रितानुयिना पं० अमोलक-रामेण सङ्गृहीतायां वेदान्तकौस्तुभप्रभादीपिका टीकायां तृतीयाध्यायस्य द्वितीयपादः ।

# तृतीयाध्याये तृतीयपादारम्भः



अथ सर्ववेदान्तप्रत्ययाधिकरणम्

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । ३ । ३ । १ ॥**

तदेवं जन्ममरणादिदुःखनिलयत्वरूपप्रपञ्चदोषोक्त्या ब्रह्मणो हेयसम्बन्धरहितत्व-कल्याणगुणसागरत्वनिरूपणेन तस्यैव सर्वफलदायित्वनिरूपणेन च तत्तृष्णैव तदितरवितृष्णा-पूर्विका तत्प्राप्तिकारणमिति पादद्वयेन दर्शितमिदानीं ब्रह्मोपासनासु तासु गुणोपसंहारवि कल्पनिर्णयाय विद्याभेदाभेदविचारश्च प्रारभ्यते । ताश्च त्रिविधाः, प्रतीकरूपाङ्गाश्रित-रूपाहंग्रहरूपभेदात् । तत्र प्रतीकत्वं नाम तदितरस्मिंस्तद्दृष्टिमत्त्वम् । यथा "पुरुषो वाव गौतमाग्नि"रित्यत्राग्निभिन्ने पुरुषादौ ह्यग्निदृष्टिरिति । एव मादिप्रतीकोपासनोदाहरणं बोध्यम् । अङ्गाश्रिताः कर्लाङ्ग पूद्गीथादिष्वाश्रिताः । अहङ्ग्रहत्वं नाम तत्तदुपदेशानुकूले ब्रह्मणि तादात्म्य सम्बन्धानुसन्धानम् । यथा सत्यविद्यादयः "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमी"

---

अथ सर्ववेदान्तप्रत्ययाधिकरणम्

प्रथमपादद्वितीयपादयोः वृत्तं कीर्त्तयति । तदेवमित्यादिना । तृतीयपादार्थं संचपति । इदानीमित्यादिना । अन्यत्रोपयोगार्थं स्वीकार उपसंहार इत्यर्थः । विद्यायाः त्रैविध्यं दर्शयति । ताश्चेति । तत्र=तेषु । प्रतीकत्वं निर्वक्ति । प्रतीकत्वंनामेति । आद्यामुदाहरति । यथेति । द्वितीयां दर्शयति । अङ्गाश्रिता इति । तृतीयां विद्यां निर्वक्ति । अहङ्ग्रहत्वं नामेति । तामुदाहरति । यथेति । तत्र श्रुतिं प्रमाणयति । ऐतदात्म्यमिति । गुणोपसंहारन्यायार्थं विवृणोति । तत्र गुणोपसंहारो नामेति । तमुदाहरति । यथेति । वेद्याभेदादिति । वेद्यभेदे विद्याया भेदो भवति ब्रह्मणस्तु वेद्यस्यैक्यात् विद्यैक्यमित्यर्थः । विचाराङ्गं संशयं दर्शयति । तत्रतावत्सर्ववेदान्तेष्विति । कि शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमो वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायावतारं विरुणद्धि नेति । किं शिरोव्रतं विद्याङ्गम् उताध्ययनाङ्गमिति । विद्याङ्गत्वे शाखान्तरनयावतारप्रतिबन्धकत्वात् प्रत्यभिज्ञानस्यैवैक्यानवगमतया विद्याभेदः । अध्ययनाङ्गत्वे शिरोव्रतस्य विद्यासु शाखान्तरनयाप्रतिबन्धकतया प्रत्यभिज्ञानस्यैक्यावगमकत्वाद्विद्यैक्यमिति । तत्र पूर्वपक्षयुक्तिमाह । अविशेषेति । अग्निहोत्रं जुहोति, दध्ना जुहोति इत्यादिषु जुहोतिपदस्य पुनः श्रवणेऽपि दध्नेति विशेषः श्रूयते तद्व्यावृत्यर्थमविशेषं पुनः श्रवणस्येत्युक्तम् । इडो यजति, वर्हिः यजति, तनूनपातं यजति इत्यादिषु यजतिशब्दादेः पुनः श्रवणं भेदकं दृश्यते । एकस्यामपि शाखायामनयोर्भेदहेतुत्वमस्तु ततः किमित्यत आह । प्रकरणान्तरस्येति । शाखान्तरस्येत्यर्थः। शाखान्तरत्वादेव शाखान्तराधिकरणे या सिद्धान्तयुक्तिः सैवात्रापि स्यादिति तयैवालमितिशङ्कायामधिकां पूर्वपक्षयुक्तिमाह । अतएवेति । अतएव=विद्याभेदादेवेत्यर्थः । शिरोव्रतीनामिति । शिरस्यङ्गारपात्रधारणानामित्यर्थः । ब्रह्मविद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तिरनिष्टा विद्यैक्ये तदङ्गस्य शिरोव्रतस्यान्येषामपि प्राप्तेर्न नियमोपपत्तिस्तस्मान्न विद्यैक्यमित्यर्थः । राद्धान्तयति । एवंप्राप्तइति । सूत्रे प्रतिज्ञाखण्डपूरकमुपादत्ते । सर्वेति । ऐक्यहेतुषु संयोग

त्यादिश्रुतेः। ताश्चोद्गीथविद्याशाण्डिल्यविद्यादहरविद्यादय एकैका अनेकशाखासु पठितास्तासु चेतरेतरं गुणानामुपसंहारं कृत्वोपासनीयम्। तत्र गुणोपसंहारो नाम एकस्यामनेकशाखासु पठितायां विद्यायां तत्र तत्र पठितानां न्यूनाधिकानामितरेतरं निष्कृष्य संयोजनम्। यथा वाजसनेयकेऽग्निरहस्ये शाण्डिल्यविद्या श्रूयते "सत्यं ब्रह्मेत्युपासीत, अथ खलु क्रतुमयोऽयं पुरुष" इत्यारभ्य "आत्मानमुपासीत, मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानमि"ति तथा बृहदारण्यकेऽपि शाण्डिल्यविद्या श्रूयते "मनोमयः पुरुषो भाः सत्यं तस्मिन्यदन्तर्हृदये यथा व्रीहिर्वा यवो वा स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती"ति उभयत्र वेद्याभेदाद्विद्यैक्यं निश्चित्य सत्यसङ्कल्पत्वादीनां सर्ववशित्वादीनां चोभयत्रेतरेतरोपसंहरणमेवमन्यत्रापि बोध्यम्। किं चानन्दादीनामपहतपाप्मत्वादीनां च सर्वास्वपि

---

निर्देशस्य प्राथम्येऽपि चोदनायाः प्राधान्यात् चोदनाद्यविशेषादित्युक्तम्। कर्मव्यावृत्तोपासनावाचिधात्वर्थाभिप्रायेण धात्वर्थविशेष इत्युक्तम् पूर्वतन्त्रइति। शाखान्तराधिकरण इति।। "नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेदः स्यात्" इति शाखान्तराधिकरणपूर्वपक्षं कृत्वा "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति सिद्धान्तितम्। तत्र पूर्वपक्षसूत्रस्यायमर्थः—काठक-कौथुम-माषक-कालापादीनि तत्तच्छाखागताग्निहोत्रादीनां नामानीति नामभेदः क्वचिच्छाखायाम् अग्नीषोमीयमेकादशकपालमि" ति श्रूयते अन्यत्र द्वादशकपालमिति रूपभेदः। "मारुतमसि मरुतामोजः" इत्यादीनि कारीरीवाक्यान्यधीयानाः तैत्तिरीया भूमिभोजनमाचरन्ति नान्ये। अग्निवाक्यान्यधीयानाः केचिदुपाध्यायस्योदकुम्भानाहरन्ति नान्ये। अश्वमेधवाक्यान्यधीयानाः केचिदश्वस्य घासमानयन्ति नेतरे इत्येवमादिधर्मविशेषः। पुनरुक्तिरभ्यासः। "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। दिवाकीर्त्यमदिवाकीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषामिति। यथाऽतिथये प्रश्रुतायान्नं हरेयुः तादृक् तद्यदुदिते जुह्वति" इति च शाखाभेदेन उदितानुदितहोमयोः परस्परनिन्दा। प्रश्रुताय = निर्गतायेत्यर्थः। ततश्च यस्यां शाखायां यत्कर्म निन्द्यते तत्कर्म तच्छाखाभिहितात् कर्मणो भिन्नमित्यर्थः। आसक्तिः = सर्वशाखागतानामङ्गानामेकत्रोपसंहारे मैत्रायणीनामन्वारोहसंज्ञकेषु स्थालारोहणमन्त्रेषु अग्निस्समाप्यते अन्यत्रान्येषामिति समाप्तिभेदः केषाञ्चित् शाखायामुदितहोमव्यतिक्रमे प्रायश्चित्तम्। केषाञ्चिदनुदितहोमव्यतिक्रम इति प्रायश्चित्तभेदः। कर्माभेदे उदितानुदितहोमविधानं वैकल्पिकत्वेन्नमिति उभयथाप्यवैगुण्यात् प्रायश्चित्तविधानमनर्थकं स्यात्। एवं नामभेदादिभिः शाखाभेदे कर्मभेदः। अन्यार्थदर्शनात् तथाहि द्वादशाहे श्रूयते। "यदि पुरा दिदीक्षाणाः स्युः बृहत्समानमतिरात्रमुपेयुः। उपेतं ह्येषां रथन्तरम्। अथ यद्यदिदीक्षाणा रथान्तरसमानमतिरात्रमुपेयुः।" इति। पुरादिदीक्षाणाः = पूर्वं दीक्षितवन्तः। लटश्शत्रशानचावितिद्विर्वचनम्। अत्रानिष्टप्रथमयज्ञानां द्वादशाहदर्शनं शाखाभेदेन द्वादशाहभेदे लिङ्गम्। कथम्? ताण्डिशाखायां "य एतेनानिष्ट्वा" इत्यादिना सर्वभूतानां ज्योतिष्टोमः पश्चाद्भवाङ्कतया विहितः। यदि प्रतिशाखं द्वादशाहादयः क्रतवो भिन्ना न स्युः तदा एक एव द्वादशाहो नानाशाखासु विहित इति तस्य ज्योतिष्टोमपूर्वत्वनियमात् अनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं नोपपद्यते। यदि प्रतिशाखं ते भिन्नाः तदा ताण्डिशाखायाम्। "अथान्येन यजेत इत्यन्यशब्दस्य ताण्डिनां शाखागतद्वादशाहादिक्रत्वन्तरविषयत्वोपपत्तेः शाखान्तर्गतद्वादशाहादीनां ज्योतिष्टोमपाश्चात्यत्वस्यान्निधानात् यस्यां शाखायामनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं तच्छाखागतद्वादशाहविषयत्वेन तदुपपद्यत इति। एव नामभेदादिहेतुभिः प्रतिशाखमग्निहोत्रादिकं भिद्यत इति पूर्वपक्षं कृत्वा "एकं संयोगरूपचोदनाख्यविशेषात्" इति सूत्रितम्। अस्य सूत्रस्यायमर्थः। सर्वासु शाखासु एकमग्निहोत्रात्मकं

विद्यासूपसंहारः सर्वत्रोभयविधस्य ब्रह्मणो वेदस्याभेदादिति स्पष्टयिष्यतेऽग्रे। तत्र तावत्सर्ववेदान्तेषु दहरादिविद्या श्रूयते, सा किमेका उत विद्याभेदः? इति संशये अविशेषेण पुनः श्रवणस्य प्रकरणान्तरस्य च विद्याभेदकत्वाद्विद्यान्तरमिति अत एव शिरोव्रतिनामाथर्वणिकानां विद्योपदेशनियमोपपत्तिः। अन्यथा विद्याङ्गस्य शिरोव्रतस्यान्यशाखिनामपि प्राप्तत्वादाथर्वणिकानामेवेति नियमानुपपत्तिरिति प्राप्तेऽभिधीयते-सर्ववेदान्तप्रत्ययमिति। सर्वैर्वेदान्तैः प्रतीयते इति सर्ववेदान्तप्रत्ययं सर्ववेदान्तविहितमेकमुपासनम्। कुतः? चोदनाद्यविशेषात्। विद्यादुपासीतेत्येवंरूपो धात्वर्थविशेषो विधिश्चोदना आदिना पूर्वतन्त्रे शाखान्तराधिकरणसिद्धान्तसूत्रोक्ताः संयोगरूपाख्या इहाकृष्यन्ते। चोदनादीनामविशेषाप्रतिपत्तृभेदेन पुनः श्रवणोपपत्तेस्तत एव प्रकरणान्तरत्वाभावाच्च सैवेयं विद्येति शाखान्तरेऽपि विद्यैक्यं प्रत्यभिज्ञायते ॥ १ ॥

## भेदान्नेति चेदेकस्यामपि। ३। ३। २॥

अविशेषेण पुनरुक्तेः प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति चेत्तत्रोच्यते-स्यादेकस्यामपि विद्यायां प्रतिपत्तृभेदात्पुनरुक्तिः प्रकरणान्तरं च। यस्याः शाखाया अन्येऽध्येतारस्तेषां प्रतिपत्त्यर्थं सैवविद्या पुनः श्राव्यते। एकस्यां तु शाखायां प्रतिपत्तुरभेदे प्रतिप्रकरणं विद्याभेदो वाक्यानां परस्परं निराकांक्षत्वात्। यथा शाण्डिल्यविद्योपकोशलविद्यासद्विद्याभूमविद्यादहरविद्येति ॥ २ ॥

यदप्याथर्वणे शिरोव्रतं "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमि" (मु०।३।२।१०) ति तदपि न विद्याभेदकमित्याह—

---

कर्म स्वर्गादिफलसंयोगस्य रूपाख्यस्य द्रव्यदैवतस्य जुहोत्यादिचोदनया अग्निहोत्राद्याख्यायाश्च ऐक्येन तेषामभेदप्रत्यभिज्ञाज्ञापकानामविशेषादिति। तथा. काठककौथुमादीनि शाखानां नामानि नतु कर्मणाम्। अतो नामभेदात् शाखा एव भिद्येरन् न कर्माणि। नचात्र विनिगमनाविरहः। कौथुमादिशब्दानामेकैकशाखानामत्वेन तदाम्नातेषु कर्मसु लाक्षणिकत्वोपपत्तौ तावत्सु कर्मसु प्रत्येकं शक्तिं कल्पयित्वा तत्सम्बन्धात् शाखायां लक्षणाकल्पनाया गौरवपराहतत्वात्। यथाहुः "शाखयाह्येकया योगात् बहुकर्मावबोधनम्। युज्यते कर्मनानात्वं नैकंशाखोपलक्षणम्" इति। किञ्च कौथुमशब्दः कुथुमिना प्रोक्त इत्यर्थे प्रोक्तप्रत्ययान्तः प्रवचननिमित्तकः। नच प्रवचनं शब्दादन्यस्य सम्भवति तस्य शब्दविषयकत्वात्। वाजसनेयकशब्दोऽपि आम्नायविशेषपरः। "शौनकादिभ्यश्छन्दसी" ति शौनकादिगणपठितात् वाजसनेयशब्दात् "तेनप्रोक्तं"च्छन्दसीत्यस्मिन्नर्थे णिनिप्रत्यये तदन्तस्य "छन्दोब्राह्मणानि च तद्विषयाणि" इति सूत्रेणाध्येतृवेदितृविषयत्वनियमेन "तदधीते तद्वेद" इत्यर्थे विहितस्य प्राक्दीव्यतीयप्रत्ययस्य "प्रोक्ताल्लुक्" इति लुकि वाजसनेयेन प्रोक्तमधीयते विदन्ति वा वाजसनेयिनः इति रूपंभवतीत्यन्यत्र विस्तरः ॥ १ ॥

सूत्रस्य-पूर्वपक्षभागं विवृणोति। अविशेषेणेति! प्रतिपतृभेदादिति। प्रकरणभेदाभ्युपगमे प्रतिपतृभेदात् परिहारः। प्रकरणभेदो नास्तीति च परिहारं प्रतिपत्तिभेदादुपपत्तिं व्यतिरेकपूर्वकमुपपादयति। एकस्यामिति ॥ २ ॥

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३ । ३ । ३ ॥

शिरोव्रतस्य विद्योपदेशाङ्गत्वनियमदर्शन विद्याभेदं द्योतयतीति । नैतदस्ति । तस्य विद्याङ्गत्वाभावात् । अपि तु स्वाध्यायस्य वेदस्य हि यतस्तथात्वेऽध्ययनाङ्गत्वे तन्नियमशिरोव्रतोपदेशनियमः । निमित्ते सप्तमी । तदङ्गतया शिरोव्रतं विधीयते, न विद्याङ्गतयेत्यर्थः । कुत एतदवगभ्यते ? "नैतदचीर्णव्रतोऽधीते" (मु० ।३।२।११) ति तस्याध्ययनसम्बन्धात्समाचारेऽधिकाराच्च समाचाराख्ये ग्रन्थे इदमपि वेदव्रतत्वेन व्याख्यातमिति हि पठयते । तत्र ब्रह्मविद्यां वेदविद्यामित्यर्थः । सववच्चेति । यथाहि "सवा होमाः सप्तसौर्यादयः शतौदन पर्यन्ता आथर्वणिकानामेवैकाग्नौ हूयन्ते, नान्येषां । तथाध्ययनधर्मस्तेषामेव ॥ ३ ॥

## दर्शयति च । ३ । ३ । ४ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्, "सर्वे वेदा यत्पपदमामनन्ती" ( क० २ । १५ ) ति । तथा च छान्दोग्ये "तस्मिन्यदन्तस्तदन्वेष्टव्यमि" त्युक्त्या "किं तदत्र विद्यते यदन्वेष्टयमि"ति प्रश्नपूर्वकमपहतपाप्मत्त्वादिगुणाष्टकविशिष्टस्य परमात्मन उपासनमुक्तम् ॥ ४ ॥

तैत्तिरीयके तु केवलं "तस्मिन्यदन्तस्तदुपासितव्यमि" त्येवोक्तम् । तदुभयत्र गुणोपसंहारादेव विद्यैक्यं सम्भवति । तदेवं विद्यासु गुणोपसंहारादिचिन्तार्थं शाखान्तराधिकरणाक्तन्यायस्तत्फलं विद्यैक्यं स्थिरीकृतं तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । ३ । ३ । ५ ॥

---

उत्तरसूत्रमवतारयितुं शङ्कते । यदपीति । विषयवाक्यमुदाहरति तेषामेवैतामिति । कर्त्तव्यत्वेनोपदिष्टस्य शिरस्यङ्गारपात्रधारणरूपस्य व्रतस्य विद्योपदेशाङ्गत्वे सति विद्याभेदकत्वं प्रसज्येत तत्तु विद्याङ्गत्वाभावान्नास्तीत्याह । तदपि न विद्याभेदकमिति । शिरोव्रतस्य विद्याङ्गत्वे सति हि विद्यैक्यात् सर्वशाखिनां शिरोव्रतप्राप्तिः । तस्य विद्याङ्गत्वमेव तु नास्ति अध्ययनाङ्गत्वादित्यर्थः । इदमपि वेदव्रतत्वेन व्याख्यातमिति । वेदव्रतेन = शिरोव्रतेनेदमपि व्याख्यातमित्यर्थः । शिरोव्रते पुष्कलोपदेशं कृत्वा व्रतान्तरं प्रस्तुत्य तत्र शिरोव्रतोक्तक्रममतिदेशवाक्यं शिरोव्रतं वेदव्रतशब्देन निर्दिदेश । शिरोव्रतमध्ययनाङ्गञ्चेत् "तेषामेवैतां ब्रह्मविद्यां, वदेत्" इत्यस्य कोऽर्थ इत्यत्राह । तत्रेति । अध्ययनाङ्गं शिरोव्रतं तेषामेवेति कथं नियम इत्याह । सवव्रच्चेति । कस्यचित् कर्मविशेषस्य शाखाविशेषव्रतामसाधारणत्वं युक्तमित्यर्थः । सप्त सौर्यादयः—आरोगो भ्राजरः पटरः पतङ्गः स्वर्नरो ज्योतिषीमान् विभास इति उक्तसप्तसूर्यदेवताकं कर्मशत्तोदनाख्यञ्च कर्म सप्तसूर्योपक्रमाः शतोदनपर्यन्ता होमा आथर्वणिकानामेकस्मिन्नाग्नावेव क्रियन्ते न त्रेताग्निषु तद्वन्नियम इत्यर्थः ॥ ३ ॥

तैत्तिरीयकेऽपेक्षिताकथनाच्छान्दोग्योक्तार्थोपजीवनं सिद्धं तच्च विद्यानां सर्ववेदान्तप्रत्ययन्यायविषयत्वं द्योतयतीत्यर्थः ॥ ४ ॥

चशब्दोऽवधारणे। सर्ववेदान्तेषु दहराद्युपासने समाने सति एकस्यां शाखाया-मुक्तस्य गुणस्यान्यत्राप्युपसंहारः कर्त्तव्यः। कुतः? विधिशेषवदर्थाभेदात्। अर्थः प्रयोजनं, यथा प्रयोजनाभेदादग्निहोत्रादिविधिशेषस्य सर्वत्रोपसंहारस्तद्वदिहापि ॥ ५ ॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात्। ३। ३। ६॥

"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाये" ति "तथेति तेभ्य एष प्राण उद्गायदि" (बृ० १।३।७) ति वाजसनेयिनः समामनन्ति। छन्दोगाः "पुनरथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे" (छा० १।२।७) इति। तत्र संशयः—किमत्र विद्यैक्यम् उत विद्याभेदः? इति। तत्र तावत् प्राप्तं विद्यैक्यमिति। कुतः? उभयत्रोद्गीथस्यैव प्राणदृष्टयोपास्यत्वश्रवणेन चोदनाद्यविशेषात्। तथाहि चोदना तावद्विदिधात्वर्थगताऽविशिष्टा, फलसंयोगोऽपि शत्रुपरिभवरूपोऽविशिष्टः। रूपमपि प्राणदृष्टयोद्गीथाख्योपास्यैक्यादविशिष्टम्। आख्या चोद्गीथविद्येत्यविशिष्टा। पूर्वपक्षी सिद्धान्तच्छायया परिचोद्य परिहरति ननु चान्यथात्वं नानात्वं विद्यायाः। कुतः? शब्दात्। "त्वं न उद्गाये" ति कर्तृत्वं प्राणस्य वाजिभिर्निर्दिश्यते। अन्यत्र कर्मत्वं तमुद्गीथमिति। एवं चैकत्रकर्त्तरि प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपभेदः रूपभेदे च विधेयभेदस्तत्र सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेतन्न। न रूपभेद इत्यर्थः। कुतः? अविशेषात्। उपक्रमे हि "अविशेषेण उद्गीथेनात्ययाम उद्गीथमाजह्रुरनेनैनानभिहनिष्याम" (छा०।१।२।१।) इति उद्गीथस्यैवोपास्यत्वप्रतीतेः "त्वं न उद्गायेति तथेति तेभ्य एष उद्गायदि" ति कर्मण्ये-

---

अनन्तरसूत्रसङ्गतिमाह। तैत्तिरीयके तु केवलमिति। समाने सतीति। एकसंज्ञके एकफले चोपासन इत्यर्थः। गुणशब्देनाङ्गमुच्यते स्वशाखोक्तगुणस्तद्विद्योपकारकत्वादेव ह्यङ्गीक्रियते तथा शाखान्तरोक्तोऽपि गुणस्तद्विद्योपकारकत्वादङ्गीकार्य इत्यर्थः॥ ५॥ इतिसर्ववेदान्तप्रत्ययाधिकरणम्।

अथ अन्यथात्वाधिकरणम्

बृहदारण्यकस्थमुद्गीथब्राह्मणं छान्दोग्यस्थमुद्गीथाध्यायञ्च विषयमाह। अथ हेममासन्यमिति। आस्ये भवमासन्यं मुखान्तर्विलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्व "न्नोद्गाये"ति। तथेत्यभ्युपगम्य तेभ्य एव प्राण उद्गायत तेऽसुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्नसुरा यथाश्मानमृत्वा प्राप्य मृद्वा लोष्टो वा विध्वंसत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुरित्यर्थः। तथा छान्दोग्येप्येतदुक्तमित्याह। छान्दोग्येति। विषयं दर्शयित्वा विमृशति। तत्र संशयइति। पूर्वपक्षं गृह्णाति। विद्यैक्यमिति। तेभ्य एष प्राण उद्गायतीति वाक्यद्वयं किमुभयत्र विहितस्योपासनस्योद्गीथावयवविषयतामुद्गातृविषयताञ्चावगमयति। नवेति। यदा नावगमयति तदोभयत्रोद्गीथस्यैवोपास्यत्वेन विद्याप्रत्यभिज्ञानाद्विद्यैकत्वं स्यात्। यदा तु वाक्यद्वयमुद्गीथावयवस्य प्रणवस्योद्गातुश्चोपास्यतामवगमयति तदा रूपभेदेन छान्दोग्ये वाजसनेयके चैकप्रत्यभिज्ञानाभावाद्विद्याभेदः स्यादिति सूत्रमवतारयति। पूर्वपक्षीति।

वोद्गीथे कर्त्तृत्वमुपचर्यते इति युक्तमन्यथोपक्रमविरोधः स्यादतो विद्यैक्यम् ॥६॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् । ३ । ३ । ७ ॥

न वेति पक्षव्यावृत्त्यर्थः । न वैतदस्ति, यद्रूपैक्याद्विद्यैक्यमिति । कुतः ? प्रकरणभेदात् प्रक्रमभेदादित्यर्थः तथाहि छान्दोग्ये तावद् "ओमित्येतदक्षरमुद्गीथमुपासीते" (छा० १।१।१) त्युद्गीथावयवं प्रणवमुपास्यं प्रक्रम्य "उद्गीथमाजह्रु रि" ति वचनादुद्गीथावयवभूतः प्रणवः प्राणदृष्टेर्विषय उक्तः । वाजसनेयकेतु "अविशेषेणोद्गीथेनात्ययाम" इत्युपक्रमात्कृत्स्नोद्गीथः प्राणदृष्टेर्विषयः । अतः प्रक्रमभेदाद्विधेयभेदः । विधेयभेदे च रूपभेद तस्माच्च विद्याभेद इति । नच वाक्यच्छायासमानतामात्रेणैकविद्यात्वम्, यथा निर्देशसाम्येऽप्यभ्युदयेष्टिपशुकामेष्टयोर्भेदः प्रक्रमभेदात् । तथा प्रकृतेऽपिनिर्देशसाम्यं न विद्यैक्यप्रयोजकमिति परोवरीयस्त्वादिवत् । परस्मात्परोवराच्च वरीयानुद्गीथस्तस्य भावस्तत्त्वं, तदादिवत् । यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात्परोवरीयस्त्वादिगुणाविशिष्टविधानमर्थान्तरमिति रूपभेदः, तद्वदत्रापि ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । ३ । ३ । ८ ॥

उद्गीथविद्येति संज्ञैकत्वात्तद्विद्यैक्यमिति चेदुक्तं, तदपि "न वा प्रकरणभेदादि" त्यनेन प्रकरणभेदात्संज्ञाया दुर्बलत्वात् । अपिचैतत्संज्ञैकत्वं विधेयभेदेऽप्यस्त्येव । यथाऽग्निहोत्रसंज्ञा नित्याऽग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च, यथा च छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासूद्गीथविद्येति संज्ञैक्यम् ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् । ३ । ३ । ९ ॥

---

चोदनाद्यविशेषोऽकिञ्चित्कर इति । चोदनाद्यविशेषसमुच्चय एवैक्ये प्रमाणं शब्दान्तरादिष्वन्यतमं भेदकमित्यर्थः। उपक्रमविरोध इति । उपक्रमो विरोधायोपसंहारगतः कर्तृवाचिशब्द औपचारिकः स्यादित्यर्थः ॥ ६ ॥

समाधत्ते इति प्राप्त इति । अविशेषेणोद्गीथेनात्ययाम'' इत्युपक्रमे उद्गीथशब्दस्य कृत्स्नोद्गीथपरत्वम् । "ओमित्येतदक्षरम् ।" इत्यनेन व्यावर्तितम् पञ्चभागस्य साम्नो द्वितीयभाग उद्गीथः । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधानाख्याः पञ्च भागाः तेषु द्वितीयस्योद्गीथस्यावयवभूतः प्रणवः तस्योद्गीथशब्देनाभिधानं स्वरविशेषसिद्ध्यर्थम् । प्रक्रमभेदादिति । प्रकरणभेदादित्यर्थः। प्रकरणं विधेयार्थप्रतिपादकवाक्यगतप्रदेशविशेषस्तद्भेदात् विधेयभेदः । विधेयभेदे रूपभेद इति । विधेयभेदे रूपभेद फलित इत्यर्थः ॥ ७ ॥

कुण्डपायिनामयनाग्निहोत्रं माससमात्रहोमसमासिकम् । ज्योतिष्टोमेन यजेत वाजपेयेन यजेत ।" इतिवद्विद्यानामधेयानां स्ववाक्यस्थाभावेऽप्यविच्छिन्नसम्प्रदायक्रम एव विद्यानां तन्नामत्वे प्रमाणमिति भावः ॥ ८ ॥

छान्दोग्ये प्रथमप्रपाठके उपास्यत्वेन प्रथमं प्रस्तुतस्योद्गीथावयवस्य प्रणवस्योत्तरास्वप्युद्गीथविद्यासूपास्यत्वेन व्याप्तेश्च मध्यगतस्य "तद्धिदेवा उद्गीथमाजग्मुरि"(छा० १।२।१) त्युद्गीथशब्दस्यापि प्रणवविषयत्वं समञ्जसम्। अवयवे हि समुदायशब्दो ग्रामो दग्धः, पटो दग्धः, इत्यादौ दृश्यते। एवं च छान्दोग्ये उद्गीथशब्दनिर्दिष्ट उद्गीथावयवभूतः प्रणव एवोपास्यत्वेन प्रतिपत्तव्यः। वाजसनेयके तूद्गीथशब्दः कृत्स्नोद्गीथविषय इति कृत्स्नोद्गीथप्राणदृष्टचोपास्य इति सिद्धो विद्याभेदः॥ ९॥ इत्मन्यथात्वाधिकरणम्॥ २॥

## सर्वाभेदादन्यत्रेमे। ३। ३। १०॥

छान्दोगानां वाजसनेयिनां च प्राणसम्वादे ज्यैष्ठचश्रैष्ठचगुणान्वितं प्राणमुपास्यतया प्रतिपाद्य वागादीनामपि तत्र वसिष्ठत्वादिगुणानुक्त्वा वागादीनां देहस्य च प्राणाधीनस्थितितया प्राणाधीनकार्यतया च प्राणस्य श्रेष्ठत्वमुक्त्वा वागादिगुणाः प्राणे पुनः प्रत्यर्पिताः। यद्वा "अहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसी"(बृ० ६।१।१४)त्यादिना। एवं च तत्र ज्यैष्ठचश्रैष्ठचगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यतया प्रतिपाद्यते। कौषीतकिप्रभृतीनां तु प्राणसम्वादे वसिष्ठत्वादयो गुणा उक्ता वागादीनां न पुनः प्राणे समर्पिताः। तत्र संशयः—किं कौषीतकिप्राणविद्यायां प्राणे वसिष्ठत्वादयो गुणा उपसंहर्त्तव्या उत नेति? किं प्राप्तम्, तत्रानुपसंहारोऽश्रुतत्वादिति प्राप्त उच्यते-सर्वेति। अन्यत्र कौषीतकिप्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणाः प्राणे उपादेयाः। कुतः? सर्वाभेदात्। प्राणज्यैठचश्रैष्ठचो-

---

प्रणवमात्रस्योद्गीथशब्दाभिधानं पूर्वमेव पर्य्यवसितम्। अत्र तदुगीथशब्दस्य कृत्स्नोद्गीथविषयत्वाद्विद्यैक्यमिति शङ्कायामाह। "व्याप्तेश्च समंजसम्।" "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यारभ्य"तद्वित्त्वोर्द्ध्वं ऋचस्साम्नो यजुषः स्वरमेव प्राविशत् यदा वा ऋचमाप्नोति ओमित्येवातिस्वरतीति तथा असौ वा आदित्य उद्गीथ एष प्रणव ओमितिह्येष स्वरं नेति तथाऽध्यात्म य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत ओमितिह्येष स्वरं वेत्तीत्यादिपूद्गीथशब्दस्य प्रणवविषयत्वं स्फुटम्। अवयवमात्रे समुदायवाचिशब्दप्रयोगः कथमित्यत्राह। अवयवे हीति इदमुदाहरणं व्याकरणोक्तं पटैकदेशे दग्धेपि हि पटो दग्ध इति प्रयोगः दृश्यते॥ ९॥ इत्यन्यथात्वाधिकरणम्।

अथ सर्वाभेदाधिकरणम्।

विषयवाक्यमुदाहरति। छान्दोगानामिति। "प्रशस्यस्यश्रः" इति प्रशस्यशब्दस्य आदेशाच्छ्रैष्ठ्यं प्रशस्यत्वम्। 'ज्यच' इति प्रशस्यशब्दस्य ज्यादेशः। "वृद्धस्यचे"तिसूत्रेण वृद्धशब्दस्य ज्यादेशः तस्मादत्र ज्यैष्ठ्यं प्रवृद्धत्वमित्यर्थः। वाचो वसिष्ठत्वं वाग्मिनः स्वव्यवहारजनने वसुमत्तासम्पादकत्वम्। चक्षुषः प्रतिष्ठात्वं चक्षुष्मतां समविषमभूतलादिप्रदर्शनेन प्रतिष्ठासम्पादकत्वम्। श्रोत्रस्य सम्पत्त्वं वेदशास्त्रतदर्थश्रवणादिसम्पादनेन सम्पत्करत्वम्। मनस आयतनत्वं समोहितस्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वम्। "चक्षुषा हि समे च दुर्गेच प्रतितिष्ठति श्रोत्रेण हीमे सर्वे वेदा अभिसम्पन्ना" इति वाजसनेयगतवाक्यशेषानुसारेणावगम्यते। शब्दाज्ज्यैष्ठत्वादिगुणकप्राणप्रत्यभिज्ञानाच्च वसिष्ठत्वादिगुणेषु संशयमाह तत्र संशय इति। पूर्वपक्षयति। किं प्राप्तमिति।

पपादनं वागादीनां स्थितेस्तत्कार्यस्य च प्राणाधीनतयेत्येतत् सर्वत्राप्यविशिष्टमेव । अन्यथा वागादिगतवसिष्ठत्वादेरपि प्राणहेतुकत्वानुसन्धानमन्तरा प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानं नोपपद्यते । किञ्च कौषीतकिप्राणविद्यायामपि प्राणज्यैष्ठ्यादिप्रतिपादनायैव वागादिषु वसिष्ठत्वादय उक्ताः । "अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठ" इति "सहोवाच प्रजापतिर्यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ" इत्यादिना वागादयस्तद्गतगुणाश्च देहश्च प्राणाधीना इति ज्यैष्ठ्यं श्रैष्ठ्यं च प्राणस्योपपादितम् । यतो वागादिवसिष्ठत्वादिहेतुरूपेणैव प्राणो वसिष्ठत्वादिगुणयोगित्वमित्यतः प्राणेऽपि ते उपसंहर्तव्या एवेति ॥ १० ॥

## आनन्दादयः प्रधानस्य । ३ । ३ । ११ ॥

आनन्दत्वसर्वज्ञत्वसर्वात्मत्वज्ञानान्तस्वरूपा ब्रह्मस्वरूपगुणाब्रह्मस्वरूपपरासु श्रुतिषु श्रूयन्ते । तत्र संशयः—किं तेषां सर्वासु ब्रह्मोपासनासूपसंहारोऽस्ति उत नेति ? तत्र प्रकरणपठितानामेवोपसंहारदर्शनादप्रकरणपठितानामुपसंहारे प्रमाणाभावात् । किञ्च तेषामसङ्कुच्यत्वेनोपसंहाराशक्तश्च नोपसंहर्तव्या इति प्राप्त आह आनन्दादय इति । सर्वाभेदादित्यनुवर्त्तते । प्रधानस्य ब्रह्मणः सर्वत्राभेदात् गुण्यव्यतिरेकाद्गुणानां सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः । यत्र प्रधानं तत्रैव तैर्भवितव्यमिति भावः ॥ ११ ॥

नन्वेवं गुणव्यतिरेकादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र प्रसज्येरन् । ते हि तैत्तिरीयके आनन्दमयप्रक्रमे श्रूयन्ते "तस्य प्रियमेव शिरः मोदः दक्षिणः पक्षः प्रमोदः उत्तरः पक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठे" (तै० २।५) त्यत उत्तरमाह—

---

सिद्धान्तमाह । उच्यत इति । कौषातकिशाखायामपि प्राणश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादय उक्ताः वागादिभिः प्राणा वागादयश्च देहश्च प्राणाधीना इति प्राणस्य श्रैष्ठ्यमप्युपपादितम् । वागादिभिः स्वस्वगुणानां प्राणे समर्पणोक्तिभङ्ग्या तेषां प्राणाधीनत्वानुवादमात्रं न कृतम् । नैतावता रूपभेदः । वागादीनां स्वस्वगुणान्वितानां प्राणाधीनकार्यत्वात्तस्यैव प्राणस्य वागादिगुणहेतुत्वसिद्धिः । तदेवं प्राणस्य वसिष्ठत्वादिमत्वं यत्प्राणादिगतवसिष्ठत्वादिहेतुत्वमितिभावः ॥ १० ॥ इतिसर्वाभेदाधिकरणम् ।

### अथ आनन्दाद्यधिकरणम्

विषयमाह । आनन्दत्वेति । किमानन्दादयो गुणा यासु विद्यासु श्रूयन्ते तास्वेव प्रियशिरस्त्वैश्वर्यादयो व्यवतिष्ठन्ते उत सर्वासु विद्यासु उपसंहर्तव्या इति विमृशति । तत्र संशय इति । तत्र पूर्वपक्षयति । तत्रेति । प्रमाणाभावादिति । ब्रह्मगुणत्वेनोपसंहारे प्रियशिरस्त्वादीनामैश्वर्यौदार्यकारुण्यादिगुणानां चोपसंहार्यत्वप्रसङ्गादिति भावः । सर्वाभेदादित्यनुवर्त्तत इति सूत्रस्थाभेदशब्दोऽत्रानुवर्त्तत इत्यर्थः । सर्वाभेदादिति समस्तस्याप्यभेदशब्दस्यानुवर्त्तनमुपपद्यते बुद्ध्या तावतोऽशस्य निष्कृष्य परामर्शात् । "अथ शब्दानुशासनम् ।" केषां शब्दानामित्यत्रानुशासनशब्दस्यैवेतिभावः ॥ ११ ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । ३ । ३ । १२ ॥

आनन्दादिवत्प्रियशिरस्त्वादीनामप्राप्तिस्ते हि न ब्रह्मस्वरूपगुणाः, किन्तु ब्रह्मणः पुरुषविधत्वरूपणमात्रेऽन्तर्गताः । कुतः ? यतो ब्रह्मणः शिरःपक्षपुच्छाद्यवयवभेदे सत्युपचयापचयौ स्याताम् । ततश्च "सत्यं ज्ञानमनन्तं ब्रह्म अनन्तोऽजर" इत्यादि विरुध्येत ॥१२ ॥

तेभ्य आनन्दादीनां विशेषमाह—

## इतरेत्वर्थसामान्यात् । ३ । ३ । १३ ॥

इतरेत्वानन्दादयः सर्वत्र स्युः । कुतः ? अर्थसामान्यात्, ब्रह्मस्वरूपसमानत्वात् । ब्रह्मस्वरूपवत्सर्वत्रोपसंहार्याः । आनन्दाद्यपहतपाप्मत्त्वाद्यस्थूलत्वादिसत्यज्ञानामलत्वानन्तत्वादयो हि ब्रह्मस्वरूपनिरूपणधर्मत्वेन ब्रह्मस्वरूपप्रतीत्यनुबन्धित्वात् ब्रह्मस्वरूपसमानाः । ये तु वात्सल्यकारुण्यौदार्यैश्वर्यगाम्भीर्यादयस्तेषां गुणव्यतिरेकत्वेऽपि ब्रह्मस्वरूपप्रतीत्यनुबन्धित्वाभावात् तत्र श्रुतास्तत्रैवोपसंहर्तव्या इति प्रथमसूत्रे हेत्वप्रदर्शनादनेन प्रियशिरस्त्वादिवैषम्यार्थं हेतुकथनं प्रकृतमिति न पुनरुक्तता ॥ १३ ॥

प्रियशिरस्त्वादीनां ब्रह्मस्वरूपनिरूपणधर्मत्वाभावान्न ते ब्रह्मगुणाः, भवन्ति चेत्तर्हि तदभिधाने प्रयोजनं वक्तव्यं तत्राह—

## आध्यानाय प्रयोजनाभावात् । ३ । ३ । १४ ॥

आध्यानायानुचिन्तनार्थमुपासनार्थं तेषामभिधानं, कुतः ? प्रयोजनान्तराभावात् । अयमर्थः—"ब्रह्मविदाप्नोति परमि" त्यत्र वेदितव्यतयोपदिष्टमेकं ब्रह्मानन्दमयं सुखप्रतिपत्तये प्रियमोदादिरूपेण विभज्य शिरःपक्षादिभावेन रूपयित्वा बुद्धावारोह्यते । यथा ह्यन्नमयः प्राणमयमनोमयविज्ञानमयाश्चास्य देहस्य शिरःपक्षादिरूपकेण च बुद्धावारोह्यते, तस्येदमेव शिर इत्यादिना, तस्य प्राण एव शिर इत्यादिभिश्च । तथैतेभ्योऽर्थान्तरभूततदन्तरात्माऽऽनन्दमयपुरुषस्यापि सम्यग्ध्यानाय प्रियमोदादिरूपकेण बुद्धावारोहणमित्यतः प्रियशिरस्त्वा-

---

अनन्तरसूत्रस्य शङ्कामाह । नन्वेवमिति । ब्रह्मणः स्वरूपगुणत्वाभावमेवोपपादयति । किन्त्विति । सूत्रस्थभेदपदं व्याचष्टे । यतो ब्रह्मण इति । ततः किमित्यत्राह । ततश्चेति आदिशब्दात् "अस्थूलमनण्वह्रस्वमित्यादि" वाक्यानि गृह्यन्ते ॥ १२ ॥

अग्रिमसूत्रमवतारयति । तेभ्य इति प्रियशिरस्त्वादिभ्यः । सूत्रार्थं व्याकरोति । इतर इति । पुनरुक्ततामपाकर्त्तुमाह । प्रथमसूत्र इति ॥ १३ ॥

यदि न सन्ति प्रियशिरस्त्वादयो ब्रह्मगुणाः तर्हि तेषामभिधाने प्रयोजनमभिधानीयमित्याशङ्क्योत्तरसूत्रमवतारयति । प्रियशिरस्त्वादीनामिति । सूत्राक्षराणि व्याकरोति । आध्यानायेति । अनुचिन्तनार्थमिति । "स्याच्चिन्तास्मृतिराध्यानमि" ति नैघण्टुकाः । उपासनोपयोगिशास्त्रजन्यज्ञानसिद्ध्यर्थः । परोक्षार्थस्य बुद्धावारोपणं शिरःपक्षादिरूपणादेव हि भवतीत्याह । अयमर्थ इत्यादिना । शास्त्रेण प्रतिपत्तौ बुद्ध्यारोहणाय

दीनामानन्दमयोपलक्षणार्थत्वान्न ते ब्रह्मस्वरूपप्रतीतावुपसंहार्या इति ॥ १४ ॥

## आत्मशब्दाच्च । ३ । ३ । १५ ॥

"अन्योऽन्तर आत्माऽऽनन्दमय" इत्यात्मशब्देन निर्देशाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः, आत्मनः पक्षिवत् शिरःपक्षपुच्छाद्यसम्भवादतस्तस्य सुखबोधाय रूपकतामात्रं तदिति गम्यते ॥ १५ ॥

## आत्मगृहीतिरितरवदुत्तरात् । ३ । ३ । १६ ॥

"अन्योऽन्तर आत्मे" त्यात्मशब्देन परमात्मैव गृह्यते, इतरवत् । "आत्मा वा इदमेक एवाग्र आसीदि"(ऐ०।१।१)त्यादिषु ऐतरेयकवाक्येषु यथात्मशब्दः परमात्मानमेव गृह्णाति; तद्वत् । कथमवगम्यते ? उत्तरात् तदैक्यार्थात् "सोऽकामयत बहु स्यामि" त्यानन्दमयात्मविषयादुत्तराद्वाक्यात् ॥ १६ ॥

ननु पूर्वेषु "अन्योऽन्तर आत्मा प्राणमय" इत्यादिवाक्योक्तप्राणमयाद्यनात्मस्वप्यात्मशब्दान्वयदर्शनान्नोत्तरवाक्यादपि परमात्मा निश्चेतुं शक्यत इत्याशङ्क्याह—

## अन्वयादिति चेत्स्यादवधारणात् । ३ । ३ । १७ ॥

पूर्वेष्वनात्मस्वप्यात्मशब्दान्वयान्नोत्तरवाक्यगतात्मशब्देन परमात्मनिर्णय इति चेत्स्यादेव निर्णयः । कुतः ? अवधारणात् । "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत" तै० । २ । १ । १ ) इति प्रकृतस्यात्मन एव प्राणमयादिष्वानन्दमयपर्यन्तेषु आत्मशब्देन निश्चितत्वात् ॥ १७ ॥ इत्यानन्दाधिकरणम् ॥ ४ ॥

## कार्य्याख्यानादपूर्वम् । ३ । ३ । १८ ॥

---

प्रियशिरस्त्वादिप्रतिपत्तव्यम् । एवमपरिच्छिन्नानन्दे प्रतिपन्ने सत्युपास्तौ प्रियशिरस्त्वादिकं नानुसन्धेयमित्यर्थः ॥१४॥

आत्मनो निरवयवत्वसिद्धिमुपजीव्य प्रवृत्तमिदं सूत्रमित्यभिप्रायेणाह । आत्मनश्चेति ॥ १५ ॥

सूत्रार्थं विवृणोति । अन्योन्तर आत्मेति । इतरवदिति । "आत्मा वा इदम्" इत्यादिष्वपि । उत्तरात् = "सईक्षते" इत्यादिवाक्यात् परमात्मन एव ग्रहणमित्यर्थः ॥ १६ ॥

प्राणमयादिष्वनात्मस्वप्यात्मशब्दस्य प्रयुक्तत्वाद "न्योन्तर आत्माऽऽनन्दमय" इत्यत्र कथं परमात्मपरत्वं निश्चेतुं शक्यत इत्याशङ्क्योत्तरसूत्रमवतारयति । नन्विति । उपक्रमाधिकरणन्यायेन पूर्वानुगुणमुत्तर नेयं तस्मादुत्तरवाक्यात् पूर्वस्यात्मविषयत्वं न निश्चेयमित्यर्थः । स्यादेव निर्णय इति अवधारणादिति परमात्मन एव बुद्ध्यवधारितत्वात् विषयीकृतत्वात् । एवमुपक्रमे परमात्मन एवात्मबुद्धिविषयत्वान्नोत्तरवाक्यस्योपक्रमबाध इत्यर्थः । तर्हि मध्ये त्वपरमात्मनि परवात्मवाचिशब्दः कथमित्यत्राह । प्राणमयादिष्विति । प्राणमयादिष्वात्मशब्दोऽपरमात्मबुद्ध्योपचारतो न प्रयुक्तोऽपितु परमात्मबुद्ध्यैव प्रयुक्तः । 'अन्तःप्रविष्टः शास्ता जनानामि'ति तदन्तःप्रवेशेन नियन्तृत्वं ह्यात्मत्वमित्यर्थः ॥ १७ ॥

छान्दोग्यवाजसनेयकयोर्ज्येष्ठं श्रेष्ठञ्च प्राणमुपास्यमुक्त्वा तस्यैवश्वादिमर्यादमन्नमाम्नायापो वासस्त्वेनाम्नायन्ते "सहोवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्बुको ह वासो। भवत्यनग्नो भवती" ति छन्दोगाः (छा० । ५ । २ । २) वाजसनेयिनस्तु "किं मे वास" इति प्राणेन चोदिता वागादय ऊचु "रापो वास" इति । 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्तयेतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते (बृ० । ६ । १ । १४) तस्मादेवं विदशिष्यन्नाचामेदशित्वाचाचामेदेतमेव तदनमनग्नं कुरुते" इत्यामनन्ति । तत्र संशयः, किमत्राचमनमपां प्राणवासस्त्वानुसन्धानं चोभयं विधीयते उताचमनम्, ? किं वाचमनमनूद्यापां प्राणवासस्त्वानुसन्धानमिति ? कि तावत्प्राप्तम्, उभयं विधीयते इति । कुतः ? उभयस्योप्यत्र श्रूयमाणत्वादपूर्वत्वाच्च विध्यर्हत्वम् । किं वाऽशिष्यन्नाचामेदशित्वाचाचामेदित्याचमने विधिश्रवणादेतमेव तदनमनग्नं कुरुते" इत्यपां प्राणवासस्त्वानुसन्धाने विधिविभक्त्यश्रवणादाचमनस्यैव स्तुत्यर्थमनग्नतासङ्कीर्तनमिति भोजनाङ्गस्याचमनस्य स्मृत्याचारप्राप्तत्वेन विधिविभक्तिबलात्तदेव प्राणविद्याङ्गत्वेनोपदिश्यत इति पूर्वः पक्षः । राद्धान्तस्तु यदपूर्वमप्राप्तं स्मृतितस्तदाचमनीयास्वप्सु वासोदर्शनं विधीयते, नत्वाचमनस्य विधेयत्वमुपपद्यते । कुतः ? कार्याख्यानात् । अहरहः कर्त्तव्याचमनस्य स्मृत्याचारप्राप्तस्य सङ्कीर्तनात् । शास्त्रस्य चाप्राप्ताख्यानस्वरूपत्वादाचमन मनूद्याचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयत इत्यर्थः । नचैकार्थविधाने सम्भवति प्रायत्यार्थता परिधानार्थता चेत्यर्थद्वयविधानं कल्पयितुं युक्तमाचमनस्य क्रियान्तरत्वाङ्गीकारात् । आचमनं हि क्रियान्तरमेव पुरुषस्य

---

अथ कार्याख्यानाधिकरणम्

दृष्टान्तसङ्गत्या प्राणानन्दादिगुणोपसंहारं विचिन्त्य पूर्वप्रस्तुतप्राणविद्याशेषश्चिन्त्यत इति सङ्गतिः । छान्दोग्ये प्राणविद्यायां "त्वं नः श्रेष्ठोऽसीति वागादिभिः प्राणस्य श्रैष्ठ्ये निर्धारिते किं मेऽन्नं भविष्यतीति वागादीन् पृष्टवते प्राणाय यदिदं किञ्चिदाश्वभ्य आशकुनिभ्य इति श्वादिपर्य्यन्तं प्राणिजातमन्नमुक्तम् । तत्र तावत् दृष्टिविधिरसंदिग्धः । सर्वप्राण्यदनस्याशक्यत्वात् । न ह वा एवंविदि किञ्चनानन्नं भवति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदन्न स्यान्नं वेदेति फलार्थवादश्रवणाच्च । तदनन्तरं "किं मे वास" इति प्रश्नस्योत्तरे अपां प्राणवासस्त्वमुक्त्वाऽऽम्नातं "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाद्भिः परिदधती" तिवाजसनेयिषु । काण्वा अप्येतावदेवामनन्ति । माध्यन्दिनास्तु अपां प्राणवासस्त्वमुक्त्वा "तस्मादेव शिष्यान्नाचामेदशित्वा वांचामेदेतदेव तदशनमनग्नं कुरुत" इत्यधिकमामनन्ति । किमत्राचमनं विधेयम् उताचमनीयास्वप्सु प्राणवासस्त्वचिन्तनमिति । आचमने विधिश्रवणात् प्राणवासस्त्वे उपक्रमादिसद्भावाच्च संशये पूर्वपक्षः इत्याह । छान्दोग्यवाजसनेयकयोरिति । तस्माद्वा एतदशिष्यन्त इति । अपां प्राणवासस्त्वात् । अशनं कुर्वन्तः श्रोत्रिया एतत् कुर्वन्ति किं तत् भोजनात् पूर्वमूर्ध्वञ्चाचामन्ति यत् तदद्भिः प्राण परिदधति आच्छादयन्तीत्यर्थः । विषयं संशोध्य विमृशति । तत्र संशय इति । पूर्वपक्षं गृह्णाति । किन्तावदिति । [illegible] वेदने विधिप्रत्ययाश्रवणेऽपि किं मे वासः आपो वासः इत्युपक्रमादिपर्य्यालोचनया वाससो दृष्टिपरत्वं प्रतीयते नेतिवा । नचेत् आचमना-

प्रायत्यार्थमङ्गीक्रियते आचमनीयास्वप्सु वासःकल्पनमपि क्रियान्तरमेव प्राणस्य परिधानार्थमङ्गीक्रियत इति तदनमनग्नं कुरुत इति चोपसंहरात्प्राणविद्याप्रकरणार्थपरिधानविधानमेव युक्तम्। अत एव छान्दोग्येऽद्भि परिदधतीति परिधानमेवोक्तम्, न त्वाचमनम्। अपि च "यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमि" (बृ। ६। १। १४) त्यत्र तावद्दृष्टिविधानं, नहि समस्तप्राणिभक्षणमुपासकेन कर्तुं शक्यते, प्रतिषेधातिक्रमात्तत्साहचर्यादाचमनेऽपि दृष्टिविधानमिति ॥ १८ ॥ इति कार्याख्यानाधिकरणम् ॥

## समान एवं चाभेदात्। ३। ३। १९॥

वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यविद्या श्रूयते, "सत्यं ब्रह्मेत्युपासीते"त्यारभ्य "स आत्मानमुपासीत मनोमयमि" त्यादिः। तथा तत्रैव बृहदारण्यके पुनरपि सैव श्रूयते "मनोमयोऽयं पुरुषो भाः सत्यमि" (बृ०। ५। ६। १।) त्यादिः। तत्र सन्दिह्यते, किमत्र विद्याभेदः उताभेदः? इति किन्तावत्प्राप्तम्, विद्याभेदोऽभ्यासात्,! यथा पञ्चकृत्वोऽभ्यासात् प्रयातभेदस्तथाऽत्रापीति प्राप्ते उच्यते—विद्याऽभेदः। कुतः? समानइति समाने शाखैकत्वे। एवं च गुणोपसंहारः। यथा भिन्नशाखासु विद्यैक्यं गुणोपसंहारश्च भवत्येवमेकस्यामपि भवितुमर्हति वेद्याभेदात्। न च मनोमयादीनां पुनः श्रवणमनर्थकमविदितानामेव गुणानां विधानस्य युक्तत्वादिति वाच्यम्, कतिपयविहितगुणासङ्कीर्तनस्य विद्याप्रत्यभिज्ञानसिद्ध्यर्थत्वात् ॥ १९ ॥ इति समानाधिकरणम् ॥ ६॥

## सम्बन्धादेवमन्यत्रापि। ३। ३। २०॥

---

न्तरविधिः स्यात्। प्रतीयते चेत् आचमनीयास्वप्सु वासोदृष्टिविधिः स्यात्। स्तुत्यर्थमिति। नानुसन्धानार्थमित्यर्थः। सिद्धान्तयति। राद्धान्तस्त्विति। यदपूर्वमिति व्याख्येयपदं तस्य व्याख्यानम् प्राप्तमिति। अप्राप्तस्य प्राणवासस्त्वानुसन्धानस्य विधेयत्वे आप्ताख्यानादित्युक्तहेतोः साध्याविशिष्टतैव स्यादित्याशङ्कामपनेतुमाह। शास्त्रस्येति एकस्य कर्मण एकार्थतैवेत्युचितं तस्य बलवत्प्रमाणवशादनन्यगतित्वे सत्यनेकार्थता कल्प्यते तथाच शुद्ध्यर्थं विनियुक्तस्यैवाचमनस्य प्राणपरिधानार्थत्वे विनियुक्तविनियोगविरोधःस्यादित्याशङ्क्य परिहरति। नचेति। हेतुमेव साधयति आचमनं हीति। वाससः सङ्कल्पक्रियाभेदादाचमनस्य क्रियान्तरत्वं सङ्कल्पस्यापि परिधानस्याचमनादन्यत्वात्तथात्वमेवं क्रियाभेदे सत्युत्सर्गस्य भङ्गो नास्तीति भावः। प्रायत्यर्थमिति प्रयत्नवतो भावः प्रायत्यं शुद्धिस्तदर्थमित्यर्थः। अतएव = प्राणविद्याप्रकरणार्थपरिधानविधानस्य युक्तत्वादेवेत्यर्थः। दृष्टिचोदनासाहचर्यादिहापि सैव युक्ता नाचमनचोदनेत्याह। अपिचेति॥ १८॥ इति कार्याख्यानाधिकरणम्॥ ५॥

अथ समानाधिकरणम्।

शाण्डिल्यविद्येति शाण्डिल्येन दृष्टेति, तन्नाम्नाऽङ्किता चिन्हिता विशेषिता वेद्येति यावदित्यर्थः। तामुदाहरति। सत्यंब्रह्मेति। एकस्यां शाखायां देशभेदेन कृतां विद्यां विपर्यकृत्याभ्यासात् प्रत्यभिज्ञानाच संशयमाह। तत्रेति। पूर्वपक्षं गृह्णाति। किन्तावदिति। सिद्धान्तयति। उच्यत इति। पौनरुक्त्यप्रसङ्गमाशङ्क्य परिहरति। नचेति। तत्र हेतुमाह। कतिपयेति॥ १९॥ इति समानाधिकरणम्।

बृहदारण्यके इदमाम्नायते "सत्यं ब्रह्म" (बृ।५।५।१) त्युपक्रम्य "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष (बृ० ५।५।२।)" इत्यादि। तत्र सत्यब्रह्मणो व्याहृतिशरीरतयाऽऽदित्यमण्डलेऽक्षिणि चोपास्यत्वमुक्त्वा "द्वेउपनिषदौ रहस्यनामनी उपासनशेषतया दृश्येते, "तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्ममि" ति। तत्र सन्दिह्यते, ते किं यत्र श्रुते तत्रैव नियमेन व्यवस्थिते ? उतोभयत्रोभे अनियमेनेति ? तत्रोभयोः स्थानयोर्व्याहृतिशरीरस्य सत्यब्रह्मणः एकरूपस्यैवोपास्यतया रूपाभेदात्संयोगचोदनाद्यभेदाच्च विद्यैक्यमिप्यनियते नामनी इति पूर्वपक्षयति—सम्बन्धादेवमिति। यथा शाण्डिल्यविद्यायां मनोमयत्वादिगुणविशिष्टस्यैवोपास्यत्वेनोभयत्र रूपाभेदाद्विद्यैक्यमेवमन्यत्रापि मण्डलेऽक्षिणि चैकस्यैव सत्यब्रह्मणः स्थानद्वयसम्बन्धान्न रूपभेद इति विद्यैक्यात्। "द्वे नामनी अनियते" इति प्राप्ते ॥ २० ॥

प्रतिविधीयते—

## न वा विशेषात ।३।३।२१॥

न वेति पक्षव्यावृत्तिः। न वोभयोरुभयत्रोपसंहारः कुतः ? विशेषात् उपास्यस्थानभेदात्। यथाचार्यस्यासीनस्योक्तो धर्मो गच्छतो न भवत्येवं ब्रह्मण एकत्वेऽप्येकत्रादित्यस्थानसम्बन्धितयोपास्यत्वमितरत्राक्षिस्थानसम्बन्धितयोपास्यत्वमिति स्थानसम्बन्धित्वभेदेनोपास्यरूपभेदाद्विद्याभेद इति नियते नामनी शाण्डिल्यविद्यायां तूभयत्र हृदयाधारतयोपास्यत्वान्नोपास्यस्थानं भिद्यते ॥ ११ ॥

---

अथ सम्बन्धाधिकरणम्

यथा मनोमयत्वादिगुणकस्यैवोपास्यत्वेन विद्यैक्यम्। एवमादित्यादिसम्बन्धिनो व्याहृतिशरीरकस्यैवोपास्यत्वेन विद्यैक्यमिति शङ्कया सङ्गतिः। विषयवाक्यमुदाहरति। बृहदारण्यकेति। सत्यब्रह्मण इति। य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिरः भुव इति बाहू स्वरिति प्रतिष्ठा पादावित्यर्थः। इति व्याहृतिशरीरमुक्त्वा। तस्योपनिषदह इति आदित्यपुरुषस्याहंनामकत्वमुक्तम्। अहंशब्द आत्मवाची। उपनिषद्द्वयं विषयीकृत्य सत्यब्रह्मैक्यस्थानाभेदाभ्यां संशयमाह। तत्रेति। उपास्यगुणाभेदमात्रमभेदहेतुरिति व्याहृतिशरीरत्वस्य विद्यैक्यगमकत्वात् तदभेदेन नाम्नो विकल्पेनोपसंहारः स्थानस्योपास्यान्तर्भावे स्थानैक्यमप्यभेदहेतुरिति व्याहृतिशरीरत्वमात्रेण विद्यैक्यानवगमेन विद्याभेदान्नाम्नोर्व्यवस्थितित्वमिति पूर्वपक्षसूत्रस्य भावः। सूत्रस्यार्थं विवृणोति। यथेति। पूर्वपक्षरूपमिदं सूत्रम् ॥ २० ॥

सिद्धान्तयति। प्रतिविधीयत इति। सूत्रार्थं व्याकरोति। नवेति। उभयोः = अधिदैवताध्यात्मनोः उभयत्र = आदित्ये अक्षिस्थाने च। यत्र सविशेषणं प्रधानमवगम्यते तत्र सविशेषणस्य धर्मिसम्बन्धो न निर्विशेषणस्य नाप्यन्यविशेषणसहितस्य ! नहि दण्डिनं पुरुषमानयेत्युक्ते दण्डरहितः कमण्डलुमाँश्च आनीयते तस्मादधिदैवस्य सत्यस्योपनिषदुक्ता न तस्यैवाध्यात्मं भवितुमर्हति यथाचार्यस्य गच्छतोऽनुगमनं विहितं न तिष्ठतो भवति तस्मान्नोपनिषदः सङ्करः किन्तु व्यवस्थितिरिति भावः ॥ २१ ॥

## दर्शयति च । ३ । ३ । २२ ॥

दर्शयति च श्रुतिरेवञ्जातीयकधर्मस्य विद्याभेदेनानुपसंहारं "तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे" (छा०।१।७।५) त्यादिना अक्ष्यादित्यस्थानभेदादादित्यपुरुषगतं रूपादिकमक्षिपुरुषे स्वतोऽप्राप्तमतिदेशेन प्रापयति । तस्माद्व्यवतिष्ठेते एवैते नामनी इति निर्णयः ॥ २२ ॥ इति सम्बन्धाधिकरणम् ॥ ७ ॥

## सम्भृतिद्युव्याप्त्यपि चातः । ३ । ३ । २३ ॥

"ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं कः" इति तैत्तिरीयके राणायनीयाना खिलेषु च वीर्यसम्भृतिद्युव्याप्तिप्रभृतिब्रह्मगुणजातमाम्नायते । तेषामेवोपनिषदि शाण्डिल्यविद्याद्या ब्रह्मविद्याः पठ्यन्ते । तत्र संशयः, तेषां किं तासु सर्वासु विद्यासूपसंहारः उत स्थानविशेषोपासनेषु नियम इति । तत्र तेषामुपासनविशेषमप्रकृत्याधीतानामपि विद्याभेदादुपसंहार इति प्राप्त, उच्यते--सम्भृतिद्युव्याप्तीति । सम्भृतिश्च द्युव्याप्तिश्चेति समाहार एकवद्भावः । सम्भृतिद्युव्याप्तिप्रभृतिगुणजातं न सर्वासु विद्यासूपसंहार्यम्, कुतः ? अत एव स्थानभेदादेव । शाण्डिल्यविद्यायां ब्रह्मणो हृदयमायतनमुक्तम् । "एष मे आत्मा ऽन्तर्हृदय" ( छा० । ३ । १४ । ३ ) इति दहरविद्यायामपि तदेवोक्तम्, "दहरं पुण्डरीकं वेश्म दहरो ऽस्मिन्नन्तराकाश" ( छा० ८ । १ । १ ) इति । उपकोशलविद्यायां तु अक्ष्यायतनं "य एषोऽक्षिणि पुरुषो दृश्यते" ( छा० ४ । १५ । १ ) इति । द्युव्याप्तेर्हि हृदयाद्यल्पस्थानेषूसंहारायोगात् तत्साहचर्यात्सम्भृत्यादयोऽप्यल्पस्थानविषयासु विद्यासु नोपसंहार्या इति । श्रुत्यर्थस्तु वीर्येति वीर्याणि परमात्मपराक्रमविशेषरूपाणि खादीनि, "सुपांसुलुगि" त्यनेन जस आः, कीदृशानि ब्रह्मैव ज्येष्ठमनन्यापेक्षकारणं येषां तानि ब्रह्मज्येष्ठानि । अत्रापि जस आत्वं, तानि च वीर्याणि कारणेन ब्रह्मणा सम्भृतानि धृतानि पुष्टानि च "वासुदेवस्य वीर्येण विधृतानि महात्मन" इत्युक्तेः । तच्च ज्येष्ठं ब्रह्म अग्रे देवादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्नुवत्सदा

---

विद्यैक्येन स्वतः प्राप्तौ रूपादीनां नातिदेशापेक्षा तस्मादतिदेशो विद्याभेदनिबन्धनः तस्माद् गुणानुपसंहार इत्यर्थः ॥ २२ ॥ इतिसम्बन्धाधिकरणम् ।

अथ सम्भृत्यधिकरणम् ।

विषयवाक्यमुदाहरति । ब्रह्मज्येष्ठेति । अस्याः श्रुतेरर्थोऽग्रे स्वयं दर्शयिष्यते । विचाराङ्गं संशयं दर्शयति । तत्रेति । तेषाम् = सम्भृत्यादिगुणानाम् । पूर्वपक्षं गृह्णाति । तत्र तेषामिति । गुणानामित्यर्थः । सिद्धान्तयति । उच्यत इति । सम्भृतिद्युव्याप्त्यय इति चक्तव्यमित्याशङ्क्याह । समाहारेति । चकारार्थोऽवधारणमिति । स्फोटयति । अतएवेति । सूत्रस्थसत इतिपदं व्याख्येयपदम् । तस्य व्याख्यानं स्थानभेदादेवेति ।

सर्वव्यापकमित्यर्थः। कथमेतदवगतम्? तत्राह, भूतानां चतुर्मुखादिप्राणिनां प्रथमं तु पूर्ववर्ति सत् जज्ञे प्रादुर्बभूव तेन सर्वकारणेन प्राक्सिद्धेन ब्रह्मणा सह स्पर्द्धितुं स्पर्द्धां कर्त्तुं कोऽवरजन्मा जीवोऽर्हति योग्यो भवति। सर्वस्य तन्नियम्यत्वात्तद्व्याप्यत्वात्तदाधेयत्वाच्च तदेव सर्वोपजीव्यं सर्वपूज्यं चेत्यर्थः॥ २३॥ इति सम्भृत्यधिकरणम्॥ ८॥

## पुरुषविद्यायामपि चेतरेषामनाम्नानात्। ३। ३। २४॥

छान्दोग्ये ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या श्रूयते "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनमथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनमि" त्यादिः। तत्र पुरुषो यज्ञत्वेन कल्पितः तदीयमायुश्च प्रसिद्धयज्ञसाम्यार्थं सवनत्रयत्वेन कल्पितम्। आशिशिषादिकं तु दीक्षादित्वेन कल्पितमित्यादि तत्रैव स्पष्टम्, तैत्तिरीयकेऽपि सा श्रूयते "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिरि" (नारा० ८०) त्येवमाद्यनुवाके। तत्र सन्दिह्यते, किमत्र विद्याभेदः। उत नेति? तत्र पुरुषविद्येति समाख्याऽविशेषात्पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपाभेदात्। तैत्तिरीयके फलसम्बन्धाम्नानात्। छान्दोग्यगतेन "स ह षोडशं वर्षशतं जीवती" (छा० ।३।१६।७) त्यनेनैकफलत्वाच्च विद्यैक्यमिति प्राप्ते राद्धान्तमाह—पुरुषविद्यायामिति। पुरुषविद्यायामप्युभयत्र रूपभेदाद्विद्याभेदः। कुतः? इतरेषामनाम्नानात्। इतरेशाखोदितानामितरशाखास्वनाम्नानात् पुरुषविद्यायामिवेति पाठे यथैकेषां शाखिना ताण्डिनापैङ्गिना,च पुरुषविद्यायां यज्ञावयवा आम्नाताः नैवमितरेषां तैत्तिरीयाणां पुरुषविद्यायाम्। यथा वा तैत्तिरीयपुरुषविद्यायां यजमानपत्न्यादि-सवनत्रयं चाम्नातं, नैवमितरेषां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामित्यर्थः। तथाहि छान्दोग्ये

---

श्रुत्यर्थं दर्शयति। श्रुत्यर्थस्त्विति॥ २३॥ इति सम्भृत्यधिकरणम्।

अथ पुरुषविद्याधिकरणम्

विषयमाह। छान्दोग्य इति। पुरुषो वाव यज्ञ इति। पुरुषोऽधिकारी जीवः। अत्र पुरुषस्य यज्ञरूपत्वं प्रसिद्धयज्ञसाम्येन भाव्यं प्रसिद्धयज्ञे च सामान्यतः सवनत्रयात्मकमेकं प्रसिद्धं तच्चात्र तस्य यत् षोडशोत्तरं शतमायुस्तदिति ज्ञेयम्। अथ तत्र प्रातःसवनं तत्स्थानीयमत्राह। तस्य यानीति। तस्य पुरुषस्यायुषो मध्ये यानि पूर्वाणि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम् तत्र हेतुरुक्तश्छान्दोग्ये "चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनम्" प्रातःसवनस्य गायत्रीच्छन्दसश्चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षं प्रातःसवनत्वाध्यासो युज्यत इति भावः। अथ यानि चतुश्चत्वारिंषद्वर्षाणीति। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंदिनं सवनमिति तत्रोक्तं द्रष्टव्यम्। अथ यान्यष्टाचत्वारिंशद्वर्षाणीति। अष्टाचत्वारिंशदक्षरा जगती जागतं तृतीय-सवनमित्यनुसन्धेयम्। स यदाशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा॥ १॥ सोऽधिकारी। अशिशिषति अत्तुमिच्छतीति यत् पिपासति पातुमिच्छतीति यच्चेष्टप्राप्तिनिमित्तं न रमत इति क्षुत्पिपासारतयोग्यस्वरूप-भूतयज्ञस्य दीक्षापूर्वभावित्वसाम्यात्। दुःखसाम्यादित्यर्थः। तत्रैवेति — छान्दोग्ये। स्पष्टमिति। अथ

त्रेधाविभक्तस्य पुरुषायुषः सवनत्वेन कल्पनं, तैत्तिरीयके च "यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानी" ( नारा० ८० ) त्येवं सवनत्रयकल्पनम् । छान्दोग्ये ह्याशिषादीनां दीक्षात्रयत्वकल्पनं तत्तैत्तिरीयके न कृतम् । "आत्मा यजमानः श्रद्धा पत्नी" (नारा० ८०) ति यजमानादिकल्पनं च कृतम्, तच्छान्दोग्ये न कृतम् । फलसम्बन्धभेदोऽपि, छान्दोग्ये ह्यायुःप्राप्तिफला पुरुषविद्या । तैत्तिरीयके तु पूर्वानुवाकगतस्य "ब्रह्मणो महिमानमाप्नोती" (नारा० ८०) ति ब्रह्मविद्याफलस्यैव सन्निधानादफलस्यास्यानुवाकस्य ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिरेव फलम्, अतः सवनत्रयकल्पनप्रकारभेदेन यजमानपत्न्यादिकल्पनप्रकारभेदेन च रूपभेदात् फलसम्बन्धभेदाच्च विद्याभेद इति नैकत्रोक्तानां धर्माणामितरत्रोपसंहारः ॥२४॥

इति पुरुषविद्याऽधिकरणम् ॥६॥

## वेधाद्यर्थभेदात् । ३।३।२५॥

स्वशाखोक्तगुणविशिष्टस्य ब्रह्मण उपास्यत्वमुक्तमथ तत्रान्येऽपि मन्त्राः कर्माणि च श्रूयन्ते तेषामपि ब्रह्मोपासनाङ्गत्वमस्ति ? न वेति ? मीमांस्यते । तथाह्याथर्वणिके-रुपनिषदारम्भे मन्त्रा आम्नायन्ते । "अग्ने त्वं यातुधानस्य भिन्धि तं प्रत्यञ्चमर्चिषा विध्य

---

यदश्नाति यत्पिबति यद्रमते तैः=उपसदैः। २ ।' तत् भोजनादिकमुपसदैर्यज्ञाङ्गयजमानव्यापारविशेषैः समानतामेति दीक्षानन्तर्यसाम्यात् । अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदिति ॥ ३ ॥ तत् हासादिकं स्तुतैः सामगानैः । शस्त्रैः शंसनमन्त्रैश्च समानतामेति ! शब्दवत्वसाम्यादित्यर्थः । अथ यत्तपोदानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥ ता अस्य पुरुषयज्ञस्य दक्षिणा धर्मपोषकत्वसाम्यादित्यर्थः । मरणमेवावभृथः ॥ ५ ॥ वस्वादिरूपाः मे प्राणाः । इदं सवनत्रयं यावदायुरनुसन्तनुत इत्याशीः । "अक्षितमस्याच्युतमसि प्राणसंशितमसि ।" इति मन्त्रत्रयप्रयोगः । षोडशाधिकशतवर्षजीवित्वं फलमिति दर्शितम् । संशयार्थं शाखान्तरीयपुरुषविद्यामाह । तैत्तिरीयकेति । "बर्हिः वेदाशिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति यत्पिबति तदस्य सोमपानं, यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखम् तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि ये अहोरात्रे ते दर्शपौर्णमासौ येऽर्धमासाश्च ते चातुर्मास्यानि ये ऋतवस्ते पशुबन्धाः । ये सम्वत्सराश्च परिवत्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ इति । शमयिता भोज्यानां संस्कर्ता । विमृशति । तत्रेति । ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्राप्तिफलकत्वाभावात् आयुःप्राप्तिरेव फलमिति फलाभेदाद् रूपाभेदाच्च विद्यैवयमिति पूर्वपक्षमाह । तत्रेति । तस्य गमकलिङ्गानि दर्शयति । समाख्याविशेषादित्यादिना । अनूद्य सिद्धान्तयति । इतिप्राप्ते राद्धान्तमाहेति । सूत्रार्थं व्याचष्टे । पुरुषविद्यायामिति । हेत्वर्थं विवृणोति इतरेषामिति । तदेवोपपादयति । तथाहीत्यादिना । विद्याभेदे वैलक्षण्यं दर्शयति । छान्दोग्य इति । फलभेदादपि विद्याभेद इत्याह । छान्दोग्य इति । ब्रह्मविद्याङ्गभूतायाः पुरुषविद्यायाः ब्रह्मप्राप्तिरेव फलमित्याह । तैत्तिरीयकेत्विति । निगमयति । अतइत्यादिना ॥ २४ ॥

ब्रह्मविद्यासन्निधिसमाम्नातायाः पुरुषविद्यायास्तदङ्गत्वमुक्तम् । एवं सन्निधिसमाम्नातानां 'शन्नो मित्रः' इत्यादिमन्त्राणां ब्रह्मविद्याङ्गत्वं स्यादिति सङ्गतिं प्रदर्शयन्नाह । एवमिति । विषयं वक्तुमारभते । तथाह्याथर्वणिके इति । अयञ्च मन्त्रोऽभिचारकर्मणि देवताप्रार्थनारूपः । हे देवते मद्रिपोः शुक्रं ते ज्येष्ठमङ्गं प्रविध्य

मर्मेति सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्ज शिरोऽभिप्रवृज्ज त्रिधा विपृक्त" इत्यादयः। ताण्डिभिः सामगैरपि रहस्यब्राह्मणारम्भे "देव सवितः प्रसुव यज्ञं प्रसुवे" त्यादिराम्नायते। शाट्यायनिभिश्च "श्वेताऽश्वो हरितनीलोऽसो" त्यादिः। कठैस्तैत्तिरीयकैश्च "शन्नो मित्रः शं वरुणः" (तै०।१।१।१) इत्यादिः। ऐतरेयिभिश्च महाव्रतब्राह्मणं पठ्यते "इन्द्रो वै वृत्रं हत्वा महानभवदि" त्यादि। कौषीतकिभिरपि तदेव पठ्यते "प्रजापतिर्वै सम्वत्सरस्तस्यैष आत्मा यन्महाव्रतमि" त्यादि। वाजसनेयिभिस्तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते "देवा ह वै सत्रं निषेदुरि" त्यादि। तत्र सन्दिह्यते, किमिमे उपनिषदारम्भे पठिता मन्त्राः प्रवर्ग्यादीनि च कर्माणि उपासनासु तदङ्गतयोपसंह्रियेरन् उत नेति ?। किन्तावत्प्राप्तम्। विद्याङ्गतयोपसंह्रियेरन्निति। कुतः ? विद्याप्रधानोपनिषद्ग्रन्थानां सन्निधौ पाठादिति प्राप्त उच्यते—नैषामुपासनासूपसंहारः। कुतः ? वेधाद्यर्थभेदात्। भिन्ना हीमेऽर्था वेधादयो न विद्यायामुपयुज्यन्ते मन्त्रलिङ्गेन त्वभिचारकर्मणि विनियुज्यन्ते एव। "शन्नो मित्रः शं वरुण" इत्यादिमन्त्रस्यापि "ऋतं वदिष्यामि सत्यं वदिष्यामि तेजस्विनाऽवधीतमस्त्वि" त्यादिमन्त्रलिङ्गेनाध्ययने विनियोगान्न विद्याङ्गत्वम्, नच मन्त्राणामन्यथार्थकल्पना युक्त समाख्यानात्। सन्निधेश्च लिङ्गस्य बलीयस्त्वं श्रुत्यादिसूत्तरोत्तरस्य दौर्बल्योक्तेः। प्रवर्ग्यं चाग्निष्टोमे विनियुक्तम्, अग्निष्टोमं प्रवृणक्तीति वाक्येन अग्निष्टोमः स्वर्गफलार्थं नित्यार्थं च विनियुक्तः। स्वर्गकामो यजेत वसन्ते वसन्त" इति सन्निधिपाठस्तु अरण्येऽनुवचनादिधर्मसामान्यकृतः ॥२५॥ इति वेधाद्यधिकरणम् ॥ १० ॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३।३।२६ ॥

---

लोएमध्यमैकवचनम्, विदारय। हृदयं प्रविध्य हृदयञ्च दारयेत्यर्थः। धमनीः शिराः प्रविध्य दारय। एवं मम रिपुः त्रिधा कृत्तो विश्लिष्ट इत्यर्थः। हे देव सवितः यज्ञं कर्तुमनुजानीहीत्यर्थः। शन्नो मित्रः। मित्रः = आदित्यः, नः = अस्माकम्, शं = सुखकरो भूयादित्यर्थः। संशयं दर्शयति। तत्रेति। प्रवर्ग्यादीनिचेति। आदिशब्देन महाव्रतादिकं गृह्यते। प्रवर्ग्यादेः संशयविषयत्वाभावेऽप्यापाततः,प्रतीत्यनुगुणः संशय उक्तः। पूर्वपक्षं गृह्णाति। किन्तावदिति। विनियोजकमानाभावे कथं विद्यांशे शेषतेति शङ्कते कुतः ?। "फलवत्सन्निधावफलं तदङ्ग" मिति न्यायात्फलवद्विद्यासन्निधावाम्नातानां तदङ्गतेत्याह। विद्येति। पूर्वपक्षमनूद्य सिद्धान्तयति। एवंप्राप्त इति। किमिति लिङ्गादिभिः सन्निधिर्बाध्यते इत्यत आह। समाख्यानादिति। उत्तरोत्तरस्येति। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति" प्रथमे तन्त्रे उक्तमित्यर्थः। समवाये समानविषयत्वे द्वयोर्विरोधे परस्य दौर्बल्यम्। कुतः ? अर्थविप्रकर्षात् स्वार्थबोधने परस्य पूर्वव्यवधानेन प्रवृत्तेरिति सूत्रार्थः। तथाचान्यत्र विनियुक्तानां मन्त्राणां दुर्बलसन्निधिना न विद्यासु विनियोग इति सिद्धम्। अग्निष्टोमादौ विनियुक्तानां न विद्याशेषत्वोपपत्तिरित्याह। प्रवर्ग्यञ्चेति। ननु तर्हि वेधादिवाक्यानामुपनिषद्भिः सहपाठस्य का गतिस्तामाह सन्निधिपाठस्त्विति। तस्माद्वेधादिमन्त्रकर्मणां विद्यास्वनुपसंहार इतिभावः ॥ २५ ॥ इतिवेधाद्यधिकरणम्।

"तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती" (मु० ३।१।३) त्याथर्वणिकः, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी" (छा० ८।१३।१) ति छन्दोगैश्च विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनं पठ्यते। "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पाप कृत्यामि" ति शाट्यायनिभिश्च विमुक्तयोः पुण्यपापयोरन्यत्र प्रवेशः पठ्यते। तथा कौषीतकिभिस्तु "तत्सुकृतदुष्कृते विधुनुते तस्य प्रयाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतमि" (कौ० १।४) त्युभयं पठ्यते। तद्यत्रोभयं हानमुपायनं च पठ्यते, तत्र न किञ्चिद्वक्तव्यम्। यत्रोपायनमेव पठ्यते तत्र हानिस्त्वर्थादाक्षिप्यते, अन्यथा तदनुपपत्तेः। उपायनं हि ग्रहणं तस्य च त्यागपूर्वकत्वादत्यक्तस्य ग्रहणायोगाच्च। यत्र तु केवलहानिः श्रूयते तत्रास्ति विचिकित्सा, किं यत्र विद्यायां केवलं हानं श्रूयते तत्राप्युपायनमुपसंह्रियते उत नेति? किं तावत्प्राप्तम्, नोपसंह्रियत इति। कुतः? पृथक् पठनसामर्थ्यात्। उपसंहारे हि सर्वथोभयानुसन्धानं भवेत्, तस्य च कौषीतकिवाक्येनैव सिद्धत्वादन्यत्राम्नानस्यानर्थकत्वापत्तेरिति प्राप्त उच्यते हानाविति। तुशब्दः पक्षव्यावृत्त्यर्थः। हानौ केवलायां श्रुतायामुपायनमुपसंह्रियते। कुतः? उपायनशब्दशेषत्वात्, उपायनशब्दस्य हानिवाक्यशेषत्वात्। विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य हानिवाक्यशेषत्वं, कौषीतकिरहस्ये तथाऽवगमात्। शाखान्तराम्नातवाक्यस्य शाखान्तराम्नातवाक्यशेषत्वे दृष्टान्तमाह—कुशेति। तद्यथा कौषीतक्याम्नाये "कुशा वानस्पत्याः स्थ ता मा पाते" ति सामान्यतो वानस्पत्यत्वे

---

अथ हान्यधिकरणम्

विषयं वक्तुं तच्छाखास्थवाक्यान्युदाहरति। तदाविद्वानिति। अश्वइवेति। अश्वो रोमाणीव पापमप्रारब्धमनायासेनैव विधूय चन्द्र इव राहोर्मुखात् प्रारब्धपापात् शनैर्भोगेन क्षीयमाणात् प्रमुच्य शरीरं स्थूलं सूक्ष्मञ्च धूत्वा विहाय कृतात्मा आविर्भूतस्वरूपोऽहमकृतं नित्यं ब्रह्मलोकमभिसम्भवामि गन्तास्मीति श्रुत्यर्थः। कौषीतकिश्रुतिर्न विचारापेक्षेत्याह। तथाकौषीतकिभिस्त्विति। परिशिष्टपक्षमाह। यत्र त्विति। हानोपादानयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह। तत्रातिविचिकित्सेति। पूर्वपक्षं गृह्णाति। किन्तावदिति। सिद्धान्तयति। तत्रोच्यत इति। सूत्राक्षराणि व्याकरोति। तुशब्द इति। उपायनशब्दशेषत्वादित्युक्ते उपायनशब्दस्य अन्यच्छेषभूतमिति प्रतिभातीति तद्व्यावृत्त्यर्थं व्याचष्टे। उपायनशब्दस्यहानिवाक्यशेषत्वादिति। हानिवाक्यस्योपायनशब्दः शेष इत्यर्थः। तदुपपादयति। विदुषेति। प्रधानस्य तदुपयोगित्वेन प्राप्तं हि शेषभूतम्। अत्र ब्रह्मविदुषोऽपेक्षितत्वेन प्रधानं सुकृतदुष्कृतप्रहाणं तदेव हि तस्य प्रयोजनम्। प्रहाणोपयोगोऽन्यत्र प्रवेशः तस्माद्धानिवाक्यं प्रत्युपायनवाक्यं शेषभूतमित्यर्थः। हानिप्रदेशवाक्यः प्रधानशेषाभावे दृष्टान्तो माभूदिति तद्व्यावृत्त्यर्थमाह। शाखान्तरेति। कालापिन एके शाखिनः। शाखान्तराम्नातंवाक्यं वनस्पतिसामान्यवाचि तस्य विशेषाकाङ्क्षायां तत्समर्थकत्वेन शेषभूतमित्यर्थः। यथेति। देवदैवान्यासुरदैवत्यानि च छन्दांसि तत्रानिर्द्धारितक्रमविशेषस्य वाक्यस्य क्रमविशेषनिर्द्धारणमुखेनाशेषभूतमित्यर्थः। देवासुराणामिति। देवासुरशब्दक्रमादेव च्छन्दक्रमो ज्ञायत इति न वाक्यान्तरापेक्षेति चेन्न। क्रमाविवक्षायामप्यल्पाच्तरत्वाद् देवशब्दस्य पूर्वनिपातसम्भवेन वाक्यान्तरापेक्षणात्। स्तोत्रम्=गानविशेषविशिष्टोच्चारणम्। शस्त्रम्=एकस्वरोच्चारणम्।

ऽवगते सति शाट्यायनिनाम् "औदुम्बरा" इति विशेषवाक्यं "औदुम्बर्य्यः कुशा" इति प्रतिपादयत्तद्वाक्यशेषतां गच्छति। यथा च "देवासुराणां छन्दोभिरि" त्यादिनाऽविशेषेण देवासुरच्छन्दसां पौर्वापर्यप्रसङ्गे "देवच्छन्दांसि पूर्वाणी" ति पैङ्गिवाक्यं क्रमविशेषं ग्राहयत्तद्वाक्यशेषत्वं भजते। यथा च "हिरण्येन षोडशिनः स्तोत्रमुपाकरोती" ति शाखान्तरस्थस्य तत्कालविशेषवाचि 'समयाऽध्युषिते सूर्ये' इति शाखान्तरस्थं तच्छेषतां गच्छति। यथा च "ऋत्विज उपगायन्ती" ति शाखान्तरस्थस्य "नाध्वर्यु रुपगायती" ति तत्पर्युदासरूपं शाखान्तरस्थमेवमुपायनवाक्यस्य हानिवाक्यशेषतया गतिसम्भवे हान्युपायनयोरितरेतरसमुच्चयः कार्यः, उभयोरन्योन्यसापेक्षत्वनियमान्न तु विकल्पो युक्तः। तदुक्तं द्वादशलक्षण्याम् "अपि तु वाक्यशेषः स्याद‌न्याय्यत्वाद्वि. ल्पस्य विधीनामेकदेशः स्यादि" ( मी० ) ति ॥ २६ ॥ इति हान्यधिकरणम् ॥ ११ ॥

## साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥३।३।२७॥

ब्रह्मविद्यानिष्ठस्य विदुषो ब्रह्म प्राप्नुवतः पुण्यापुण्यप्रहाणस्यावश्यंभावित्वात्प्रहाणविषयत्वाच्चोपायनस्येति द्वयस्य सर्वविद्यासु चिन्तनमुक्तम्। तत्र पुण्यापुण्यप्रहाणचिन्तने ऽस्ति विचिकित्सा। किं देहवियोगकाले एकदेशस्तयोः क्षीयते देहादुत्क्रान्तस्याध्वनि च शिष्टमित्युभयत्र चिन्तनम्? उत देहवियोगकाल एव सर्वं क्षीयते इति। तत्र "स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छती" (कौ १।३) त्युपक्रम्य "स आगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते विधुनुते" (कौ० १।४) इति कौषीतकिवाक्येऽध्वनि पुण्यपापहानिः श्रूयते। "अश्व इव रोमाणि विधूये" ( ८।१३।१ ) ति कौण्डिनां वाक्ये तु

---

उपाकरणं=प्रस्तावः। अतएवोपाकर्मणि चोपाकरणशब्दप्रयोगः अध्ययनारम्भत्वात्। उपाकरोति—प्रस्तौतीत्यर्थः। समयाध्युषिते=ईषदुदित इत्यर्थः। अनिर्द्धारितकालविशेषस्य वाक्यस्य कालविशेषं प्रतिपादयद्वाक्यं शेषभूतमित्यर्थः। यथा ऋत्विज इति। सामान्यप्राप्तमुपगानमृत्विग्विशेषे व्यवस्थापयद्वाक्यं सामान्येनोपगानवाचिवाक्यस्य शेषभूतमित्यर्थः। इमान्युदाहरणानि कर्मविचारोक्तानि। अमीषां वाक्यानां शाखान्तराम्नातवाक्यं प्रति शेषत्वानभ्युपगमे विकल्प आश्रयणीयः। सच समुच्चयेन गतौ सत्यां नाश्रयणीय इत्याह। उपायनवाक्यस्येति। उक्तार्थं पूर्वतन्त्रेण समर्थयति। तदुक्तमिति। अन्योन्यशेषशेषिभावेनान्वयादेकवाक्यत्वं स्वीकार्यम्, केवलस्य हानस्य केवलस्य चोपायनस्यासम्भवेनाप्रामाणिकत्वात्। सर्वोपनिषत्सु उभयमुक्तं भवतीति विकल्पो नोपपद्यते कौषीतकिन मन्यतरोक्तावप्यन्यतरस्याप्राप्तत्वात्पवंत्र हानमुपायनञ्चोक्तं भवतीत्यवशेषं पुनश्श्रवणमेव अतस्तत्प्रतिपत्तृभेदादिति वक्तुं युक्तमितिभावः॥ २६॥ इति हान्यधिकरणम्।

अथ साम्परायाधिकरणम्।

सङ्गतिं प्रदर्शयितुं पूर्ववृत्तमनूद्यति। ब्रह्मविद्यानिष्ठस्येति। संशयं दर्शयति। तत्रेति। विचिकित्सा=सन्देहः। विदुषः सुकृतदुष्कृतयोरेकदेशस्य हानं किं देहवियोगकाले अध्वनिचोभयोः शिष्टस्यापि हानिः। आहोस्वित् देहवियोगकाले सर्वमपि सुकृतदुष्कृतं नश्यतीत्यर्थः। तयोः=पुण्यापुण्ययोः। पूर्वपक्षोत्थापकं वाक्यद्वयं पठति। स एनं देवयानमिति। अश्वइवेतिचेति। उभयत्र=वाक्यद्वये। उभयत्रेति प्राप्तइति। सुकृतदुष्कृतयो-

देहवियोगकाल एवेति। किंयुक्तम्? उभयत्र श्रुतेर्देवयानेन पथा गमनान्यथानुपपत्तेश्चोभयत्रेति प्राप्ते पठति—साम्पराये इति। साम्पराये परलोकगमने देहादुत्सर्पणसमय एव विदुषः पुण्यपापे निरवशेषं क्षीयेते। कुतः। तर्त्तव्याभावात्। देहवियोगादूर्ध्वं विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण तर्त्तव्यस्य पुण्यापुण्यफलस्य सुखदुःखभोगस्याभावात्। तथाह्यन्येऽपि शाखिनोऽधीयन्ते "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छा० ६।१४।१) इति। "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" (छा० ८।१२।१।२) इत्यादिः। एवं चाप्यन्याम्नातमपि "सुकृतदुष्कृते विधुनुते" इति वाक्यं देहवियोगसमय एव सङ्गमयितव्यमर्थानुपपत्तिबलात्। तथा च सुकृतदुष्कृते उत्क्रान्तिसमये विधुनुते, ततश्च देवयानं पन्थानमासाद्याग्निलोकमागच्छतीत्यन्वयः। सर्वकर्मक्षयेऽपि विद्यासामर्थ्यादेव देवयानेन पथा गगनमुपपद्यते। विद्या हि स्वसामर्थ्यादेव स्वफलभूतब्रह्मप्राप्तिप्रतिपादनाय सुखदुःखोपभोगसाधनस्य स्थूलशरीरस्य सर्वकर्मणां च निरवशेषं क्षयेऽप्येनं देवयानेन पथा गमयितुं सूक्ष्मशरीरं स्थापयति ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ ३। ३। २८ ॥

ननु "तस्य पुत्रा दायमुपयन्ती" ति परकीययोः परत्र संक्रान्तिः श्रुता, सा विरुद्धा तथात्वादर्शनादिति चेत्तत्राह छन्दत इति। परसङ्कल्पात्तथात्वोपपत्तेः। यो हि विदुषां शुभं वाञ्छति तस्य सुकृतापत्तिर्यस्तु द्वेषादहितं सङ्कल्पयति तस्य दुष्कृतापत्तिरिति शास्त्रादेवावगतम्। तथाह भगवान्मनुः "प्रियेषु सुकृतमप्रियेषु च दुष्कृतम्। विसृज्य ध्यानयोगेन ब्रह्म याति सनातनमि" ति। "शप्यमानस्य यत्पापं शपमानं नियच्छती" ति स्मृत्यन्तरात्। एवमुभयोः कौषीतकिशाट्यायनिश्रुत्योरविरोधः ॥ २८ ॥

---

रैकदेशः देहावसानसमये क्षीयते शेषस्त्वध्वनीत्यर्थः। तथाचोभयश्रुत्यवैयर्थ्यं पूर्वपक्षे हेतुरिति भावः। सूत्रार्थं व्याचष्टे। साम्पराये परलोकगमन इति। साम्परायइति "युद्धायत्योः साम्परायः" इतिनिघण्टुः। सम्परा देहवियोगस्य पश्चात् ईयते प्राप्यते इति साम्परायः "एरच्"। सम्पराय एव साम्परायः। प्रज्ञादित्वात्स्वार्थे अण्। तर्तव्याभावादि त। अतइति प्राप्तिवचनः वेदान्तं तरतीत्यादिवत्। 'तृ प्लवनसन्तरणयो" रिति धातोः सेट्त्वादत्रेडभाव आगमशासनस्यानित्यत्वनिबन्धन इति भावः। कौषीतकिवाक्यविरोधं परिहरन् तदर्थं निर्वक्ति। एवञ्चेत्यादिना। देहवियोगकाल एव सर्वस्यापि सुकृतदुष्कृतहानसिद्धौ चेत्यर्थः। अर्थानुपपत्तिबलादिति। देहवियोगकाल एव सर्वसुकृतदुष्कृतहानसिद्धौ कौषीतकिवाक्यस्यार्थोऽनुपपन्नस्तद्बलादेवेत्यर्थः ॥ २७ ॥

परस्य विदुषः सुकृतदुष्कृते कथं परत्र सङ्क्रामत इत्याशङ्क्य सूत्रमवतारयति। नन्विति। सूत्रार्थं व्याकरोति परसङ्कल्पादिति। तदेवोपपादयति। यो हीति। उक्तार्थे भगवतः श्रीमनोः सम्मतिमाह। तथाह भगवान् मनुरिति। स्मृतिवचनेनाप्युक्तार्थं द्रढयति। शप्यमानस्येति। सूत्रस्य शेषभागं विवृणोति एवमुभयोरिति ॥ २८ ॥

अत्र चोदयति—

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३।३।२९ ॥

देवयानगतिश्रुतेरर्थवत्त्वं देहादुत्क्रान्तिसमयेऽध्वनि चेत्युभयथा कर्मक्षये सत्येव। अन्यथा देहत्यागकाल एव सर्वकर्मक्षयाङ्गीकारे सूक्ष्मशरीरारम्भकनाशेन तस्य स्थित्यनुपपत्तेः केवलात्मनो गतिर्नोपपद्यत इति देवयानगतिश्रुतिर्विरुध्यते ॥२९॥

अत्रोत्तरयति—

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३ । ३ । ३० ॥

परमात्मानमुपासीनानां देहत्यागकाल एव सर्वकर्मक्षयेऽप्युपपन्नो देवयानः पन्थाः। कुतः? तल्लक्षणार्थोपलब्धेः। तल्लक्षणस्य तत्सजातीयस्याकर्मलभ्यस्यार्थस्योपलब्धेः। उपलभ्यते ह्यकर्मलभ्योऽर्थः परं ब्रह्मोपासीनानाम् "स तत्र पर्येति जक्षत् क्रीडन्रममाणः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।१२।३) इत्यादिषु। लोकवत् यथा लोके राजानमुपासीनानां प्राकृतपुरुषासाधारणातिरमणीयानेकार्थसिद्धिस्तद्वत्सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं महोदारं परं ब्रह्मोपासकानां सर्वमुपपन्नमित्यर्थः ॥३०॥ इति साम्परायाधिकरणम् ॥१२॥

## अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥३।३।३१॥

कासुचितुपकोशलविद्यापञ्चाग्निविद्यादहरविद्यादिष्वर्चिरादिका गतिः पठ्यते, नान्यासु मधुविद्याशाण्डिल्यादिविद्यासु। तत्र संशयः। किमुपकोशलादिविद्यावतामेव गतिरुपपद्यते? उत सर्वेषां ब्रह्मविद्यावताम् इति। (तत्र) यत्रमार्गः श्रूयते तद्वतामेवेति प्राप्त उच्यते—अनियम इति। सर्वेषां सर्वब्रह्मविद्यावतां तथैव गमनसम्भवात्। उपकोशलादिविद्यावतामेवेति नियमो नास्ति।

---

अनन्तरसूत्रमवतारयितुमाह। अत्रेति। देहवियोगकाले सुकृतदुष्कृतयोरेकदेशः क्षीयते देहादुत्क्रान्तस्याध्वनि शेषस्य क्षय इति स्वीकार एव देवयानगतिश्रुतेरर्थवत्त्वं नान्यथेत्याह। देवयानगतिश्रुतेरिति। केवलात्मन इति। अणुत्वादात्मनो गमनमुपपद्यत इतिचेन्न। देहेन्द्रियादिरहितस्यात्मनः प्रवृत्त्यशक्तत्वात् सत्यसङ्कल्पादेरनाविर्भूतत्वादितिभावः ॥ २९ ॥

समाधत्ते अत्रेति। सूत्रार्थं व्याचष्टे। परमात्मानमिति। सूत्राशयमवतारयितुमाह। कुतइति। "तदुपलब्धे" रिति वक्तव्ये किमर्थं "तल्लक्षणार्थोपलब्धे" रिति शब्दभूयस्त्वमिति चेदुच्यते नह्याविर्भूतस्वरूपस्य कर्मकृतप्राकृतदेहसम्बन्धोऽस्ति तस्माच्छरीरत्वाकारेण सजातीयदेहसम्बन्धमात्रमेव नत्वयमेव कर्मकृतः प्राकृतदेह इत्यभिप्रायेण "तल्लक्षणार्थोपलब्धे"रित्युक्तम्। उक्तार्थं श्रुतिमुखेन प्रमाणयति स तत्र पर्येतीति ॥ ३० ॥ इति साम्परायाधिकरणम्।

अथ अनियमाधिकरणम्।

विषयमाह। कासुचिदिति। विचाराङ्गं संशयं वक्तुं कोट्यन्तरमाह। नान्यास्विति। संशयं दर्शयति। तत्रेति। पूर्वपक्षं गृह्णाति। तद्वतामिति। सिद्धान्तयति। उच्यतइति। उपकोशलविद्यानिष्ठानामेवा-

अत एव शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामविरोधः। अन्यथा विरोध एव स्यात्। श्रुतिस्तावच्छान्दोग्ये वाजसनेयके च पञ्चाग्निविद्यायामर्चिरादिना सर्वब्रह्मनिष्ठानां गमनमाह "य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती" ति वाजसनेयके, "तद्य इत्थं विदुर्ये चेमे श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ती" ति (५।१०।१) छान्दोग्ये। "तत्र य इत्थं विदुरि" ति पञ्चाग्निविद्यानिष्ठानाम् "ये चेमेऽरण्ये" इति श्रद्धापूर्वकं ब्रह्मोपासकांश्चोद्दिश्यार्चिरादिगतिरुपदिष्टा। "सत्यं त्वेव विजिज्ञासितव्यं सत्यं ज्ञानमि" त्यत्र सत्यशब्दो ब्रह्मपरः, तपःशब्दोऽपि तेनैकार्थतत्पर एवेत्यर्थः। स्मृतिरपि "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणमि" त्यादिका अनेनैव मार्गेण सर्वेषां ब्रह्मोपासकानां गमनमाह। एवं चोपकोशलादिविद्यासु सर्वविद्यासाधारणीयं गतिः प्राप्तैवानूद्यते ॥३१॥

इत्यनियमाधिकरणम् ॥ १३ ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३।३।३२॥

ननु यदुक्तं विदुषामुत्क्रमणकाल एव सुकृतदुष्कृतनाशो, अर्चिरादिका गतिश्चेति, तदयुक्तम्। वसिष्ठादीनां ब्रह्मविदामपि दुःखादियोगस्य देहान्तरप्राप्तेश्च शास्त्रसिद्धत्वादित्यत उत्तरमाह यावदिति। नहि ज्ञानिमात्रस्य देहवियोगसमये सर्वकर्मक्षयो विवक्षितः। अपि तु येषां देहपातानन्तरमेवार्चिरादिगत्या ब्रह्मप्राप्तिस्तेषामेव। वसिष्ठादीनां तु प्रारब्धस्याधिकारस्यासमाप्तत्वात् कर्मविशेषेणाधिकारविशेषं प्राप्तानां तेषां यावदधिकारसमाप्तितद्धेतुभूतकर्मक्षयो न भवति तावत्तद्भोगायावस्थितिरविरुद्धेति ॥ ३२ ॥ इति यावदधिकाराधिकरणम् ॥ १४ ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३ । ३ । ३२ ॥

---

र्चिरादिना गतिरिति न नियमः। किन्तु ब्रह्मविद्यान्तरनिष्ठानामपीत्याह। सर्वेषामिति। अतएव=उक्तनियमाभावादेव, शब्दानुमानाभ्यामिति। व्याख्येयपदम्। विपक्षे बाधकतर्कमाह अन्यथेति। उपकोशलविद्यानिष्ठानामेवार्चिरादिना गतिस्वीकार इत्यर्थः। श्रुतिमुदाहरति श्रुतिरिति। सत्यशब्दस्य ब्रह्मवाचित्वं निर्विवादं श्रुत्यन्तरञ्च सत्यं त्वेव जिज्ञासितव्यमिति। तपश्शब्दस्यापि तदैकार्थ्यात् ब्रह्मपरत्वमवसीयत इत्याह। सत्यं त्वेव विजिज्ञासितव्यमिति। तत्परएव=ब्रह्मपर एव। स्मृतिप्रमाणेनाप्युक्तार्थं द्रढयति। अग्निरिति। ३१ ॥

प्रागुक्तार्थमाक्षिपति नन्विति। सर्वेषां विदुषां देहवियोगकाले सर्वसुकृतदुष्कृतयोर्नाशो नाभिप्रेतः किन्तु येषां विदुषां शरीरपाताव्यवहितोत्तरकालेऽर्चिरादिमार्गेण ब्रह्मप्राप्तिस्तेषामेव, वसिष्ठादीनान्त्वाधिकारिकाणां यावदधिकारं प्रारब्धकर्मानुवृत्त्या देहान्तरसम्बन्ध उपपद्यत इत्याह। नहीति ३२ ॥

"एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्ति "अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन" इति बृहदारण्यके (३।८।८) वाजसनेयिभिराम्नायते। "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादमि" (मु० १।१।५) ति चाथर्वणे। तत्र सन्दिह्यते? किमिमेऽक्षरब्रह्मसम्बन्धित्वेन श्रुता अस्थूलत्वादयो गुणाः सर्वासु विद्यासूपसंह्रियेरन्? उत यत्र श्रुतास्तत्रैव? इति। किं तावद्युक्तं, तत्र विद्याविशेषरूपतया श्रुतानां तेषां सर्वविद्यासाधारणत्वाभावात् प्रतिषेधरूपतयाऽऽनन्दादिवत्स्वरूपावगमोपायत्वाभावाच्च यत्र श्रुतास्तत्रैव नियता इति प्राप्ते ब्रूते-अक्षरधियान्त्विति। अक्षरधियाम् अक्षरसम्बन्धिनीनामस्थूलत्वादिबुद्धीनामप्यानन्दादिवत्सर्वब्रह्मविद्यास्ववरोधः परिग्रह उपसंहार इत्यर्थः। कुतः? सामान्यतद्भावाभ्याम् सर्वासु विद्यासूपास्यस्याक्षरब्रह्मणः समानत्वात्। अस्थूलत्वादिगुणबुद्धीनां ब्रह्मस्वरूपानुसन्धानान्तर्भावाच्च। न केवलमानन्दादिभिर्ब्रह्मणोऽसाधारणं स्वरूपमुपस्थाप्यते, जीवात्मन्यपि तेषां विद्यमानत्वात्। अस्थूलत्वादिभिर्विशेषितं त्वानन्दादिब्रह्मणः प्रत्यगात्मनो व्यावर्त्तकम्, प्रत्यगात्मनस्तु स्वभावतः स्थूलत्वाद्यचेतनधर्मासम्बन्धित्वेऽपि तत्सम्बन्धार्हताऽस्त्यत्र।

---

अथ इत्यक्षराधिकरण

संशयोत्थापकं विषयवाक्यमुदाहरति। एतद्वैतदक्षरमिति। आथर्वणिकं वाक्यं पठति। अथेति। परविद्यामाह। अथेति। यया येन ज्ञानेन तत्पूर्ववाक्येन यच्छब्दनिर्दिष्टमक्षरमधिगम्यते प्राप्यते साक्षात्क्रियते सा परा विद्या परब्रह्मश्रीपुरुषोत्तमवेदनासाधारणवेदान्तविचारजन्यमपरोक्षज्ञानं परा विद्या। परविद्यागम्यमक्षरं सिद्धवत् बुद्धौ संहृत्य परामृशति। यत इति। यत् सर्वशास्त्रप्रसिद्धमक्षरमद्रेश्यमदृश्यं ज्ञानेन्द्रियैरियत्तया द्रष्टुमशक्यम्, अग्राह्यं कर्मेन्द्रियैरियत्तया ग्रहीतुमशक्यम् यद्वाचानभ्युदितमित्यादिश्रुत्यन्तरात् अगोत्रं मूलरहितं सर्वमूलरूपत्वात् कुलहीनं वा अवर्णं ब्राह्मणादिरहितम्, अचक्षुःश्रोत्रं तदपाणिपादं जीवानामिव ज्ञानकर्मेन्द्रियानधीनज्ञानविषयम् अनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वत आदत्ते इत्यादि श्रुत्यन्तरात् इति श्रुत्यर्थः। विचाराङ्गं संशयं दर्शयति। तत्रेति। यत्र श्रुतास्तत्रैव व्यवतिष्ठन्ते विद्यान्तरश्रुतगुणानां विद्यान्तररूपत्वे प्रमाणाभावादिति पूर्वपक्षमाह। किं तावद्युक्तमित्यादिना। समाधत्ते। ब्रूत इति। सूत्रं व्याचष्टे अक्षरधियामिति। आनन्दमात्रस्य प्रत्यगात्मसाधारण्येन समस्तहेयराहित्यविशेषितमेवानन्दादिकमेवासाधारणं ब्रह्मणो निरूपकमित्यस्थूलत्वादीनामप्यानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यनुबन्धित्वात् अक्षरसम्बन्धिनीनामस्थूलत्वादिधियां सर्वासु विद्यासु संग्रहः कार्यं इत्याह सर्वासु विद्यास्विति। तेषाम् = आनन्दादीनाम्। औपसदवदिति। वक्ष्यमाणदृष्टान्तः कर्मविषयः दार्ष्टान्तिकन्तूपासनं तस्मात् दृष्टान्तोपजीव्यमंशमाह गुणानां प्रधानवशवर्तित्व इति। जामदग्न्यचतूरात्रं जमदग्निना मुहुरनुष्ठितं चतूरात्रं नाम कर्म तत्र पुरोडाशद्रव्यकोपसदङ्गभूतः सामवेदपठितो मन्त्रः "उच्चैः साम्ना" इति वचनात्। सामवेदपठितत्वेन तस्य मन्त्रस्योच्चैर्गाने प्राप्तेऽपि उपांशु यजुषा इत्युपांशुपठितव्ययजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनुवर्तित्वादुपांशुप्रयोग प्राप्त इत्यर्थः। यथा प्रकरणान्तराधीतानामपि प्रधानानुवर्तित्वं दृश्यते तथा प्रकरणान्तराधीतानामप्यस्थूलत्वादिधर्माणां प्रधानभूतधर्म्यनुवृत्तिरुपपन्ना इत्याह। तद्वदक्षरविद्यासम्बन्धितयेति। गुणव्यतिक्रम इति। व्यतिक्रमो विरोधः गुणमुख्ययोर्मन्त्रोपसदोर्व्यतिक्रमे स्वस्ववेदविहितस्वरप्राप्त्या विरोधे सति मुख्येन प्रधानानुसारेण

तदर्हतया हि पूर्वं तत्सम्बन्धः सञ्जातः । अतो ब्रह्मणस्तदनर्हस्वरूपानुसन्धानतया-ऽस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतिपादनपरत्वात्सर्वासु विद्यासूपसंहारः । एवं चास्थूलत्वादिविशेषितविज्ञानानन्दादिस्वरूपं ब्रह्म सर्वविद्यास्वनुसन्धेयमिति गुणानां प्रधानवशवर्त्तित्वे दृष्टान्तः । औपसदवदिति । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु सामवेदपठिताः "अग्नेर्वेर्होत्रं वेरध्वरमि" त्येवमादयो मन्त्राः सामवेदपठितत्वेन सामवेदस्वरनियता अपि प्रधानभूतोपसद्वशवर्त्तित्वात् याजुर्वेदिकत्वाच्चोपसदो याजुर्वेदिकोपांशुस्वरसम्बधिनस्तद्वदक्षर-विद्यासम्बन्धितयाऽधीतत्वेन तद्विद्यानियता अप्यस्थूलत्वादयः प्रधानवशवर्त्तित्वस्वभावा-त्सर्वविद्यासम्बन्धिनः । तदुक्तं प्रथमकाण्डे "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" (जै० सू० ३ । ३ । ८) इति ॥ ३३ ॥

नन्वेवं "सर्वकर्मा सर्वगन्धः सर्वरस" (छा० ३ । १४ । ३) इत्यादीनामपि सर्वेषां ब्रह्मगुणत्वेन प्रतिविद्यं चिन्तनीयतया व्यवस्थितानामपि व्यवस्थानं स्यात्सर्वविद्यासु ब्रह्मण एव गुणित्वाद्गुणानां च प्रधानतन्त्रत्वादिति चेत्तत्राह—

## इयदामननात् ॥ ३ । ३ । ३४ ॥

इयदस्थूलत्वादिविशेषितमानन्दाद्येव सर्वत्रानुसन्धेयम् । कुतः ? आमननाद्धेतोः । आमननं ह्याभिमुख्येन मननं परब्रह्मस्वरूपानुचिन्तनं, तच्च येन विना नोपपद्यते तदेवानन्दा-दिगुणजातं सर्वत्रानुसन्धेयम् । सर्वकर्मत्वादिकं तु तत्र तत्र व्यवस्थितमित्यर्थः ॥ ३४ ॥ इत्यक्षरध्यधिकरणम् ॥ १५ ॥

## अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३ । ३ । ३५ ॥

---

वेदसंयोगः स्वरविधायकवेदसम्बन्धः प्रधानविधिविधेयत्वादङ्गानामिति सूत्रार्थः । अत्र शावरस्वामिना न्याय-साम्यादन्यदुदाहरणं दर्शितम् । "अस्याधानं यजुर्वेदविहितम् । "य एवं विद्वानग्निमाधत्ते" इति तदङ्गत्वेन वारवन्तीयं गायति इत्यादिना सामवेदे सामानि विहितानि तत्र सामसु सामवेदविहितत्वनिबन्धनोच्चैष्ट्वस्य प्राप्तिं पूर्वपक्षीकृत्य आधानस्य प्रधानस्य याजुर्वेदिकतया तद्धर्मत्वादुपांशुत्वस्य तेनोच्चैष्ट्वं बाध्यते । ततश्च वारवन्तीयादि-सामसु उपांशुत्वं प्रयोक्तव्यमिति सिद्धान्तितम् । नतूच्चैष्ट्वमभिप्रेतमिति नचानेन तस्य गतार्थता शङ्कनीया तस्यैव न्यायस्य प्रपञ्चनं क्रियत इत्युक्तत्वात् ॥ ३३ ॥

यद्यमुं न्यायमवलम्ब्य विद्यान्तरेष्वक्षरधियां निवेशः क्रियते तदा 'सर्वकाम' इत्यादीनामपि सर्वासु विद्यासु निवेशस्स्यादित्याशङ्क्योत्तरसूत्रमवतारयति । नन्विति । सूत्राक्षराणि व्याचष्टे । इयदिति । उपासनार्थं सर्वासु विद्यास्वियदेव गुणजातमुपसंहर्त्तव्यं यदस्थूलत्वादिविशेषितमानन्दत्वादिकम् । इयतैव प्रत्यगात्मव्यावृत्ता-साधारणब्रह्मस्वरूपानुसन्धानसिद्धेरित्यर्थः ॥ ३४ ॥

बृहदारण्यके उषस्तप्रश्न एवमामनन्ति वाजसनेयिनः "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व ( बृ० ३ । ४ । १ )" ति तत्र प्रतिवचनं "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो यो ऽपानेनापानिति स त आत्मा सर्वान्तर" इत्यादि । असन्तोषात् पुनस्तेन पृष्टो याज्ञवल्क्य आह "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतो-ऽन्यदार्त्तमि"ति । ततः कहोलप्रश्ने चैवं श्रूयते "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वा-न्तरस्तन्मे व्याचक्ष्वे"ति । तत्र प्रतिवचनं च "योऽशनायापिपासे शोकं मोहं जरां मृत्यु-मत्येति एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्चेत्याद्यतो-ऽन्यदार्त्तमि"( बृ० ३ । ५ ।१ ) त्यन्तम्, तत्र विचिकित्स्यते । किमत्र विद्याभेदः उत न इति । भेदः इति । कुतः ? प्रतिवचनभेदेन रूपभेदात् । पूर्वत्र प्राणनादिहेतुः प्रत्यगात्मा सर्वान्तरात्मत्वेनोच्यते, उत्तरत्राशनायाद्यतीतः परमात्मेत्युपास्यभेदाद्रूपं भिद्यते इत्येवमाशङ्क्य परिहरति "अन्तरा य आत्मा सर्वान्तर उपस्तप्रश्नो भूतग्रामवतः स्वात्मनः प्रत्यगात्मन इत्यभ्युपगन्तव्यः, सर्वस्य देहादेरन्तरात्मत्वेन तस्य सर्वान्तरत्वोपपत्तेः । अन्यथा प्रश्नस्य मुख्यान्तरात्मपरमात्मपरत्वे प्रतिवचनभेदानुपपत्तिः परमात्मनश्चाशनायादिरहितत्वात्प्राणि-तृत्वापानितृत्वाद्यसम्भवेन प्रतिवचनस्य तत्परत्वासम्भवादिति चेन्न, न प्रश्नद्वयं प्रतिव-चनद्वयं च भिद्यते, तयोरुभयत्र परमात्मविषयत्वात् । तथा हि प्रथमप्रश्नः परमात्मविषय एव । तत्र ब्रह्मशब्दस्य क्वचिज्जीवादिष्वपि गौण्या वृत्त्या प्रयोगो दृश्यते,तद्व्यावृत्त्यर्थं यत्सा-क्षादिति विशेषणम् । अपरोक्षत्वमपि "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यनन्तत्वेनावगतस्य परमात्मन एव सर्वदेशकालसम्बन्धित्वेनोपपद्यते । सर्वान्तरत्वमपि सर्वान्तर्यामिणः परमात्मन एवान्तर्यामिब्राह्मणादवगतम् । तथैव प्रतिवचनमपि तद्विषयमेव । मुख्यप्राणनक-

---

विषयवाक्यमुदाहरति बृहदारण्यक इति । उषस्तप्रश्नशब्देन प्रश्नप्रतिवचनसन्दर्भौ विवक्षितः । अपरोक्षाद्ब्रह्म = अपरोक्षं ब्रह्मेत्यर्थः । कहोलप्रश्ने "यदेव साक्षात् ब्रह्म" इति प्रक्रान्तस्याऽनुवृत्त्यर्थस्यैवकारस्य श्रवणात् कथं पूर्वपक्ष इति न वाच्यम् यदपरोक्षादेव नतु कदाचिदपि परोक्षमित्येवं योजनासम्भवेन एवकारस्य प्रकृतानुवृत्त्यर्थाभावादिति पूर्वपक्षाभिप्रायः । नदृष्टेर्द्रष्टारमिति । दृष्टिव्यतिरिक्तत्वनिषेधः उत श्रवणादिकर्त्तृ-जीवस्य मन्तव्यत्वनिषेध इति । यदा दृष्टिरूपताव्यतिरेकनिषेधः तदा तथात्वस्य जीवे सम्भवात् सर्वान्तरत्वप्राणि-तृत्वयोरप्यापेक्षिकत्वेन पूर्वत्र जीव उपास्य इति विद्या भिद्यते । यदा श्रवणादिकर्त्तृरुपास्यत्वनिषेधः तदा सर्वान्तरत्व-प्राणितृत्वयोरप्यनवच्छिन्नतया पूर्वत्रापि पर एवोस्य इति विद्यैक्यमिति रूपभेदादिति कथमुच्यते प्रश्नो ह्येकरूप इत्यत्राह । प्रतिवचनभेदेनेति । आत्मशब्दस्य परमात्मन्यपि प्रयोगदर्शनात्तद्व्यावृत्तये स्वात्मन इत्युक्तम् । स्वमेवात्मा स्वात्मा सर्वान्तरत्वमप्यापेक्षिकमस्य सम्भवतीति दर्शयितुं भूतग्रामवच्छब्दः प्रयुक्त इति भावः । तस्य = प्रत्यगात्मनः । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । सर्वान्तरत्वानङ्गीकारे प्रत्यगात्मन इत्यर्थः । भूतग्रामवत्स्वात्मन इति पूर्वपक्षमुक्त्वा समाधत्ते । नेति । सूत्रस्थनकारं योजयति । नप्रश्नद्वयमिति । आर्थहेतु-

तृत्वं हि परमात्मन एव। जीवस्य सुषुप्तिमूर्च्छादौ प्राणनादिकं प्रति कर्तृत्वादर्शनात्। एवमजानतोषस्तेन प्रतिवचनस्य प्रत्यगात्मसाधारणत्वं मन्वानेनासन्तोषात्पुनः पृष्टस्तं प्रति तद्व्यावृत्तं मुख्यं सर्वप्राणिप्राणनादिकर्त्तारं परमात्मानमाह "न दृष्टेर्द्रष्टारमि" त्यादिना। करणाधीनदर्शनश्रवणादिकर्त्ता प्रत्यगात्मा प्राणनादिकर्तृत्वेनोक्त इति न मन्वीथाः, सुषुप्त्यादौ तस्य तदभावात्। "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यादि" ति परमात्मन्येव तच्छ्रवणात्। एवमुत्तरत्र प्रश्नप्रतिवचने अपि परमात्मविषये अशनायाद्यतिक्रमणस्य तदसाधारणत्वात्। तत्र दृष्टान्तः—उपदेशान्तरवदिति। "यथा स्तब्धोऽस्युत तमादेशमप्राक्ष्य" इति प्रक्रान्तायामेकस्यामेव सद्विद्यायां "भगवांस्त्वेवमेतद्ब्रवीतु भूय एव मा भगवान्विज्ञापयतु" (छा० ६।५।४) इति प्रश्नावृत्तिः प्रतिवचनभेदश्च वेद्यस्य माहात्म्यविशेषप्रतिपादनपरतया दृश्यते। तद्वदिहापि वेद्यस्याशनायाद्यतीतत्वप्रतिपादनाय प्रश्नप्रतिवचनयोर्द्विराम्नातम्। अत एकस्यैव सर्वान्तर्यामिणः निखिलप्राणिप्राणनकारणत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपाभेदाद्विद्यैक्यम्॥ ३५॥

नन्वेवमप्युपास्यगुणस्य प्राणितृत्वाशनायाद्यतीतत्वस्य भेदेन रूपभेदात्प्रष्टृभेदाच्च विद्याभेदोऽवर्जनीय इत्याशङ्क्याह—

## व्यतिहारो विशिंषन्ति हीतरवत्। ३। ३। ३६॥

द्वयोः प्रष्ट्रोः प्रश्नस्यैकरूपत्वेन सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे निश्चिते सत्येकस्मिन्नेवोपास्ये ब्रह्मण्युषस्तकहोलयोरितरेतरं बुद्धेर्व्यतिहारो व्यत्ययः कार्यः, उषस्तस्य या सर्वान्तरस्य ब्रह्मणः प्राणनादिहेतुत्वविषया बुद्धिः सा कहोलेनापि कार्या। तथाऽशनायाद्यतीतत्वविषया बुद्धिरुषस्तेनापीति। एवं सति ब्रह्मणो जीवव्यावृत्तिर्निश्चिता भवति। विशिंषन्ति ह्युभ-

---

माह। तयोरुभयत्रेति। तयोः=प्रश्नप्रतिवचनयोः। कथमित्यपेक्षायां तं विवृणोति। तथाहीति साक्षाद्ब्रह्मशब्दवाच्यत्वमेको हेतुः। हेत्वन्तरमाह। अपरोक्षत्वमपीति। देशकालसन्निकर्षो ह्यपरोक्षे विद्यते तस्माद्ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसन्निहितत्वमित्यर्थः। मुख्यप्राणनकर्तृत्वमिति प्राणयितृत्वं विवक्षितम्। मुख्यशब्देन जीवव्यावृत्तिः। स हि कर्मानुगुणदेहेन्द्रियादीनामधिष्ठातृत्वेन कदाचित् प्राणयिता मुख्यप्राणयितृत्वं तु परमात्मन एवेत्युपपादयति परमात्मन एवेति। प्रश्नस्यार्थान्तरविषयत्वशङ्कां व्युदस्यन्नाह एवमिति। दृष्टेर्द्रष्टारमिति व्यपदेशः ओदनपाकं पचतीतिवदिति भावः। परमात्मनः सर्वदा सर्वप्राणिप्राणयितृत्वे श्रुतिं प्रमाणयति को ह्येवान्यादिति।॥ ३५॥

उपास्यभेदात् प्रष्टृद्वयसद्भावाच्च विद्याभेदः सम्भवतीत्याशङ्कते। नन्विति। प्रष्टृभेदादिति। पूर्वत्र ह्युषस्तः प्रष्टा। उत्तरत्र तु कहोल इति तयोर्भेदादित्यर्थः। प्रश्नप्रतिवचनयोरैकरूप्यान्न विद्याभेद इत्याह। द्वयोरिति। उषस्तकहोलयोरित्यर्थः। कार्य इति। व्यतिहारस्य कर्त्तव्यत्वं श्रुत्यभिप्रेतमिति सूत्रकाराभिप्राय इत्यर्थः। व्यतिहारं विवृणोति उषस्तस्येति। व्यतिहारस्य प्रयोजनमाह। एवंसतीति। व्यावृत्तिबुद्धिजननार्थं प्रतिवचनमिति वदन् विशिंषन्तीति सौत्रपदं व्याकरोति। विशिंषन्तीति। जीवजातात् व्यावृत्तं ब्रह्म प्रतिपादयतीत्यर्थः। परबुद्धावर्थस्याव-

यत्र याज्ञवल्क्यप्रतिवचनान्येकं सर्वान्तरात्मानमेवोपास्यम्। इतरवत्। यथेतरत्र सद्विद्यायां सर्वाणि प्रतिचनान्येकमेव सच्छब्दवाच्यं परं ब्रह्म प्रतिपादयन्ति तद्वत् ॥३६॥

ननु प्रश्नप्रतिवचनावृत्तिसत्त्वे सद्विद्यायामप्युपास्यैक्यं कथमवगम्यते इति चेत्तत्राह—

## सैव हि सत्यादयः । ३ । ३ । ३७ ॥

सैव हि सच्छब्दाभिहिता 'सेयं देवतैक्षत तेजः परस्यां देवतायामि" ति प्रकृता परा देवतैव यथा सौम्य! मधुमधुकृतो निस्तिष्ठन्ती" त्यादिसर्वपर्यायेष्वनुवर्त्तते "ऐतदात्म्य-मिदं सर्वं तत्सत्यं स आत्मे" ति प्रथमपर्याये पठिता एव सत्यादयः सर्वेषु पर्यायेषूपसंह्रि-यन्ते। केचित्त्वेतत्सूत्रद्वयमधिकरणद्वयं मन्यन्ते, तत्र पूर्वेण "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी" ति "तद्योऽहं सोऽसौ (योऽसौ सो) हमि" ति च वाक्ये जीवपरयोर्व्यति-हारोयमाध्यानायोऽऽम्नायते इत्याहुस्तदनादरणीयं, तस्य "सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वं तत्त्वमसी" त्यादिना ब्रह्मणि प्राप्तसर्वात्मत्वविषयत्वान्नात्रापूर्वं किञ्चित्प्रतिपादनीयमस्ति। वक्ष्यति च "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे" ति उत्तरसूत्रेण। "स यो हैतमेवं महद्यक्ष्यं प्रथमजं वेद सत्यं ब्रह्मे" त्यादिवाक्ये "तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षिन्पुरुषः" इत्यादिवाक्यं च सत्यविद्यैकैवेत्याहुस्तदप्यसम्यक्, उत्तर-वाक्येऽक्ष्यादिस्थानभेदादुपास्यरूपभेदेन फलसंयोगादिभेदेन च विद्याभेदस्य पूर्वमेव "न वा विशेषादि" त्यनेन प्रतिपादितत्वात् ॥ ३७ ॥ इत्यन्तरत्वाधिकरणम् ॥ १६ ॥

---

रोहणार्थं दृष्टान्तं विवृणोति। यथेत्यादिना ॥ ३६ ॥

अनन्तरसूत्रमवतारयितुं शङ्कते। नन्विति। सैवहीति। सेति निर्देशः "सेयं देवतैक्षत" इति सद्विद्या-वाक्यानुरोधादितिभावः। तत्रापि कारणभूतायाः परस्या देवताया एवोपास्यपरत्वं श्रुतिमुखेनोपपादयति। ऐतदात्म्यमिति। परोक्तप्रकारमनूद्य दूषयति केचित्त्विति। तस्य कथमर्थं वर्णयन्तीत्यत्राह। तत्रेति। त्वंवेति। त्वांवाऽहमस्मि त्वंशब्दबुद्धिविषयः परमात्मैवाहंबुद्धिविषयः "अहं वै त्वमसि" अहंशब्दबुद्धिविषय एव त्वंशब्द-बुद्धिविषयः अस्मि—अस्तीतिनिर्देशावहं त्वंशब्दप्रयुक्तौ अहंत्वंशब्दौ प्रवृत्तिनिमित्तभेदात्ब्रह्म पर्यन्तौ। तद्योऽह-मत्यादेरप्ययमर्थः। अभिमुखपुरुषत्वकर्तृ पुरुषत्वरूपप्रवृत्तिनिमित्तभेदादित्यर्थः। सोऽपि वक्तव्य एवेत्यत्राह तत्तु वक्ष्यत इति। अनन्तरसूत्रस्य परोक्तार्थमनुवदति उत्तरेणेति। सत्यविद्यामुदाहरति। सयोहीति अविशेषेणाधिकारी सर्वनाम-भ्यामुक्तः। उपास्यप्रसिद्धार्थो ह शब्दः। एतदितिबुद्धिस्थमुपास्यं परामृशति। तस्य व्यापकत्वमाह महदिति। यक्षं पूज्यं प्रथमजं भौतिकानांमध्ये प्रथमंजातंसच्चत्यच्चेतिसत्यंब्रह्महिरण्यगर्भाख्यं वेदोपास्ते तस्य लोकजयः फलमित्यर्थः। यत् पूर्वंप्रकृतं हृदयाख्यं तत् संप्रयुक्तयत्त्वादिगुणकं सोऽसौ आदित्यमण्डलेऽक्षिणि च पुरुषस्तस्याहरित्यहमिति-नामद्वयज्ञानात् पापक्षयः फलमितिश्रुत्यर्थः। पूर्वपक्षेगुणानांव्यवस्थयानुष्ठानं सिद्धान्तेत्वनुष्ठानैक्यमिति फलमिति। दूषयति तदप्यसम्यगिति। तद्योऽहं सोऽसौ योऽसौ सोऽहमिति सामानाधिकरण्यञ्च घटशरावशब्दयोरिवांशद्वय वाचित्वादयुक्तम्। अतएव ब्रह्मणो जीवत्वेऽहङ्कारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिः जीवस्य ब्रह्मत्वे तु जीवस्य ज्ञानानन्दैश्वर्यादीनां प्रतिपत्तिः प्रयोजनञ्चायुक्तम्। घटशरावयोरिव परस्यासाधारणगुणानामन्यत्रानुप-पत्तेः साधारणगुणानाञ्च द्रव्यत्वादीनामिव यत्तद्युष्मदस्मदपदसामानाधिकरण्यप्रतिपाद्यत्वाभावाच्च ॥ ३७ ॥ इत्यन्तरत्वाधिकरणम् ॥ १६ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः । ३ । ३ । ३८ ॥

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमि" (छा०।८।१।१) त्युपक्रम्य छन्दोगैराम्नायते "एष आत्माऽपहतपाप्मे" (छा० । ८ । १ । ५ ) त्यादि । वाजसनेयिभिश्च "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान" ( बृ० ४ । ४ । २२ ) इत्यादि । तत्र किमनयोर्विद्याभेदः उत नेति संशये एकत्रापहतपाप्मत्त्वादिविशिष्टस्योपास्यत्वमितरत्राकाशे शयानस्य वशित्वादिगुणविशिष्टस्योपास्यत्वमिति रूपभेदाद्विद्या भिद्यते इति प्राप्ते इदमुच्यते—कामादीति । छान्दोग्ये श्रुतं सत्यकामत्वादिगुणजातमितरत्र वाजसनेयके संग्रहीतव्यम्, वशित्वादयश्च तत्र छान्दोग्ये संग्रहीतव्याः । कुतः ? आयतनादिभ्यः । समानं ह्युभयत्र हृदयमायतनं सेतुत्वविधारणत्वादि च । "परं ज्योतिरुपसम्पद्ये" ति "अभयं वै ब्रह्म भवती" ति च ब्रह्मप्राप्तिरूपं फलं चैकम्, अतो रूपैक्यात्स्थानाद्यैक्यात् फलैक्याच्च न विद्याभेदः । एवं च छान्दोग्ये श्रुत आकाशशब्दो ब्रह्मवाचीति "दहर उत्तरेभ्य" (ब्र० १।३।१४) इत्यत्रोक्तम् । "आकाशे शेते" इत्यत्र त्वाकाशशब्दो हृदयपुण्डरीकवर्त्त्यवकाशवाचीति ॥ ३८ ॥

ननु यदुक्तमुभयत्रापि सत्यकामत्वादिवशित्वादिगुणजातं संगृहीतव्यमिति । तदनुपपन्नम्, "मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति एकधैवानुद्रष्टव्यमि" ति प्रकृतवाक्यात्, "स एष नेति नेत्यात्मे" त्युपरितन-( वक्ष्यमाण ) वाक्याच्च प्रतीतस्य निर्विशेषस्य ब्रह्मणो न सत्यकामत्वादयो वशित्वादयश्च पारमार्थिकाः गुणाः । अतस्तेषां मोक्षफलासु विद्यासु लोप इति चेत्तत्राह—

## आदरादलोपः । ३।३।३९॥

---

अथ कामाधिकरणम् ।

विषयवाक्यं संशयोत्थापकमुदाहरति । अथेत्यादिना । "एष आत्मापहतपाप्मे" त्यादिना अपहतपाप्मत्वादिविशिष्टविषयमुपासनमुक्तं भवति । वशित्वादिविशिष्टविषयकमुपासनप्रतिपादकं वाक्यमुदाहरति । वाजसनेयिभिश्चेति । संशयं दर्शयति । तत्रेति । रूपभेदाद्विद्याभेद इति पक्षं गृह्णाति । एकत्रेति । छान्दोग्य इत्यर्थः । इतरत्र = वाजसनेयके । वशित्वादीति । आदिपदेन स 'वा एष महानजः' इत्युक्तं दहरत्वविरोधि महत्वञ्च विवक्षितम् । वशित्वादिगुणविशिष्ट इति धर्मभेद उक्तः । आकाशे शयान इति धर्मिभेद उक्तः । एवं धर्मतो धर्मितश्च रूपभेदाद्विद्याभेद इत्यर्थः । सिद्धान्तयति । इति प्राप्त इति । इतरत्रेति पदव्याख्यानार्थं धर्ममात्रस्योपास्यत्वव्यावृत्त्यर्थञ्चाह । वाजसनेयक इति । उभयत्रापहतपाप्मत्वादीनां वशित्वादीनाञ्च प्रतिपत्तिरस्ति रूपाभेदाद्विद्यैक्यमित्यर्थः । आकाशशब्द इति । आकाशशब्दस्य भुताकाशे प्रसिद्धिप्राचुर्यात् तदेव सर्वत्र स्वतः प्राप्तम् तत्र परमात्मसाधारणगुणश्रवणं प्रसिद्धिप्राचुर्यस्यापवादकम् । तच्छान्दोग्येऽस्तीति तत्राकाशशब्दस्य परमात्मपरत्वमुक्तम् । वाजसनेयके तु तदभावात् प्रसिद्धिप्राचुर्यमेवानुविधीयत इत्यर्थः ॥ ३८ ॥

प्रमाणान्तराऽप्रतिपन्नस्य श्रुत्येकसमधिगम्यस्य सत्यकामत्वादेर्ब्रह्मगुणतयाऽऽदरेण प्रतिपादनादलोपः अप्रतिषेधः। अपि तूपसंहार एव कर्त्तव्यः। अन्यथाऽऽदरेण प्रतिपाद्य, भूयः स्वयमेव तन्निषेधे प्रवृत्तस्य शास्त्रस्यौन्मत्त्यप्रतारकत्वादिदोषापत्तिरिति। "नेह नाने" त्यादिश्रुत्यर्थस्तु पूर्वमेवोक्तः ॥ ३९ ॥

नन्वेवमपि सगुणोपासने "स यदि पितृलोककामो भवती" त्यादिना पितृलोकादिप्राप्तिश्रवणात् तस्याश्च सांसारिकफलत्वेन न मोक्षफलत्वम्। अतो न सगुणं ब्रह्म मुमुक्षोरुपास्यमिति न सत्यकामत्वादयो ब्रह्मप्रेप्सुनोपसंहार्या इत्याशङ्क्याह—

## उपस्थितेऽतस्तद्वचनात् ॥ ३ । ३ । ४० ॥

उपस्थितिरुपस्थानं ब्रह्मोपसम्पत्तिः। उपस्थिते ब्रह्मोपसम्पन्ने निवृत्तसर्वाविद्ये स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मनि अतो ब्रह्मसम्पत्तेरेव हेतोः तद्वचनात् पितृलोकप्राप्तिवचनात् न तत्सांसारिकं फलम्। अपि तु संसारान्मुक्तस्य सर्वबन्धविनिर्मुक्तस्य स्वेन रूपेणाभिनिष्पन्नस्यैव "स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन्नममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती" त्याद्युच्यते, अतः सर्वलोकेषु कामचारस्य मुक्तोपभोग्यफलत्वादुपसंहार्या मुमुक्षुणाऽपि सत्यकामत्वादयो गुणाः॥ ४० ॥ इति कामाधिकरणम्।

## तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्॥३।३।४१॥

"ओमित्येतदक्षरमुद्गीथमुपासीते" (छा० १।१।१) त्याद्याः कर्माङ्गाश्रया विद्याः श्रूयन्ते। तत्र संशयः, ताः किं कर्मसु पर्णमयीत्वादिवन्नियमेनोपादेया उत गोदोहनादि-

---

न सन्ति निर्विशेषे ब्रह्मणि सत्यकामत्वादयो गुणाः। नेह नानास्ति किञ्चन एकधैवानुद्रष्टव्यः। स एष नेति नेत्यादिवचनेभ्य इत्याशङ्क्योत्तरसूत्रमवतारयति। नन्विति। समाधत्ते इतिचेत्तत्राह इति। सूत्रार्थं व्याचष्टे। प्रमाणान्तरेति। एतेन निषेधार्थमनुवादत्वं निराकृतम्। अपूर्वत्वरूपतात्पर्यलिङ्गञ्चोक्तम्भवति। विपक्षे बाधकतर्कमाह। अन्यथेति। ब्रह्मगुणानामपारमार्थिकत्व इत्यर्थः। भूय इत्यनेनाभ्यासो दर्शितः। तन्निषेधे=गुणानां निषेधे। ब्रह्मणि गुणनिषेधं हितोपदेशप्रवृत्तस्य शास्त्रस्य विप्रलम्भकत्वं स्यादित्यर्थः। नेह नानास्तीत्यादेः कोऽर्थ इत्यपेक्षायामाह। "नेह नाने" त्यादि श्रुत्यर्थस्त्विति ॥ ३९ ॥

सर्वलोककामाचारादिकं सांसारिकं फलं निःश्रेयसफलन्तु तद्विलक्षणं स्वेन रूपेणाभिनिष्पद्यत इति श्रुतिप्रतिपाद्यमतो मुमुक्षुणा सगुणब्रह्मोपास्तिर्न विधेयेत्याशङ्क्य सूत्रमवतारयति। नन्वेवमिति। समाधत्ते। आह इति। सूत्रार्थं व्याचष्टे। उपस्थित इति। ब्रह्मसम्पत्तेरेव हेतोरिति। ब्रह्मसम्पत्त्यनन्तरं सर्वलोककामाचारकथनाद्धेतुत्वमभिप्रेतमित्यर्थः। ब्रह्मानुभववतः प्रत्यगात्मनः सर्वलोककामाचाराद्यपेक्षा कथं स्यादित्यस्य समाधानं तुर्य्येऽध्याये वक्ष्यते। निगमयति। अत इति ॥ ४० ॥ इति कामाधिकरणम्।

अथ तन्निर्धारणाधिकरणम्।

सत्यकामत्वादीनामुपसंहार्य्यत्वमुक्तम्। एवमुद्गीथमुपासनमपि नियमेनोपसंहार्य्यमिति प्रसङ्गात्सङ्गतिः।

वदनियमेनेति ? तत्र नियमेनोपादेया इति । यतो "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती" (छा० १।१।१०) त्युद्गीथादिविद्यासम्बन्धिनो वर्त्तमाननिर्देशस्य पर्णमयीत्वादिसम्बन्ध्यपापश्लोकश्रवणवत्पृथक्फलत्वप्रतिपादनायोगात् । यच्चासां स्ववाक्येषु फलं श्रूयते "आपयिता ह वै कामानां भवती" (छा० १।१।७) त्यादि, तदप्यर्थवादमात्रम-पापश्लोकश्रवणादिवत् न फलप्रधानं, तस्माद् "यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती" त्येवमादीनामनारभ्याधीतानामपि जुह्वादिमुखेन कर्मसु प्रवेशादारभ्याधी-तवन्नियमेनोपादेयत्वं, तथाऽऽसामपि कर्माङ्गभूतोद्गीथादिमुखेन कर्मसु प्रवेशात् क्रत्वङ्गतया नियमेनोपसंहार्यत्वमिति प्राप्ते ब्रूमः । तन्निर्धारणानियम इति । निर्धारणं निश्चयेन मनसो धारणमुपासनमित्यर्थः । तस्योद्गीथाद्युपासनस्य कर्मस्वनियमः । कुतः ? तद्दृष्टेः "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" (छा० १।१।१०) इत्युद्गीथोपासनरहितस्याविदुषोऽपि क्रत्वनुष्ठानवचनेनोपासनानुष्ठानस्यानियमदर्शनात् । उपासनस्य कर्माङ्गत्वे तु तदनुपपत्तेः; साङ्गक्रतुफलात्स्वर्गादेः पृथग्भूतवीर्यवत्तरत्वं ह्यस्योपासनस्य फलं, तच्चाप्रतिबन्धरूपं, प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन, अस्य तु तदभावः । श्रुत्यर्थस्तु यदेव कर्मवि-द्ययोद्गीथाद्युपास्त्या श्रद्धयाऽऽस्तिक्यबुद्ध्योपनिषदा रहस्यदेवताध्यानेन करोति, तदेव कर्म

---

छान्दोग्ये कतमक्, कतमत्साम, कतम उद्गीथ इति विमृश्य वागेव ऋक् प्राणस्साम ओमित्येतदक्षरमुद्गीथ इति निर्धारणपूर्वकमाप्त्यादिगुणकोपासनं विहितमिति तस्य निर्धारणपूर्वकत्वेऽपि न सर्वेषामीदृग्रूपत्वम् । तथाप्युपासनस्य उपास्यनिर्धारणसापेक्षत्वात् सर्वमपि निर्धारणशब्देन लक्ष्यते । तथाच क्रतुप्रकरणाधीते "जुह्वा जुहोती"ति वाक्ये जुहूः होमसाधनत्वेन विहिता । प्रकरणान्तराधीतमपि "यस्य पर्णमयी जुहूर्भवती"ति वाक्यं जुहूमनूद्य तस्याः पर्णमयत्वं विदधाति । तत्र जुहूद्वारा पर्णमयत्वमङ्गम् । तद्वत् प्रकरणान्तरविहितमप्युपासनमुद्गीथद्वारा क्रत्वङ्गम् । उद्गीथादिविषयकोपासनस्य प्रकरणान्तराधीतस्यापि क्रत्वङ्गत्वमिति प्रदर्शनाय पूर्वं विषयं दर्शयति । ओमित्यक्षरमिति । संशयमाह । तत्रेति । गोदोहनादिवदिति । गोदोहनेन पशुकामस्य प्रणयेदित्यत्र हि विधिप्रत्ययोऽस्तीति तद्व्यावृत्तिः पशुकामस्य प्रणयनसाधनत्वं हि गोदोहनस्य विधेयम्, नान्यस्य अतः फलेऽपि विधिकटाक्षोऽस्ति स तु नात्र विद्यते फलस्य वाक्यान्तरस्थत्वाद्विप्रकर्षोऽप्यभिप्रेत इतिभावः । पृथक्फलसाधनत्वं श्रुतमिति शङ्कायां "न स पापं श्लोकं शृणोती"ति पर्णत्वाद्यर्थवादवदयमप्यर्थवाद इत्याह उद्गीथादिविद्यासम्बन्धिन इत्यादिना । वर्त्तमाननिर्देशस्येति वर्त्तमानवन्निर्देशो यस्येति बहुव्रीहिः । वीर्यवत्तरत्वेत्याध्याहार्य्यम् । पूर्वपक्षमनूद्य समाधत्ते । इतिप्राप्त इति । सूत्रार्थं विवृणोति । निर्धारणमिति । तद्दृष्टेरिति । तस्यानियमस्य दृष्टिः श्रुतौ दर्शनं तस्मादित्यर्थः । अमुमर्थं प्रदर्शयन् श्रुतिमुदाहरति । तेनोभौ कुरुत इति । यश्च न वेद इत्युक्त्या अविदुषोऽपि कर्तृत्वकथनेन कर्माङ्गभूतोद्गीथाश्रया विद्या कर्माङ्गतया कर्मणि नियमेनोपसंहार्येति नियमाभावो निश्चीयते इत्यर्थः । तदनुपपत्तेरिति । नियमाभावानुपपत्तेरित्यर्थः । एतेन हेत्वर्थो विवृतः । "पृथग्ध्यप्रतिबन्धःफल"मिति सूत्रस्य भागं विवृणोति साङ्गक्रतुफलत्वादित्यादिना । अस्य = उपासनायाः फलस्य वीर्यवत्तरत्वस्य । तदभावः = प्रतिबन्धाभावः । तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नानाच विद्याचाविद्याच यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति । अस्यार्थं संक्षेपण दर्शयति श्रुत्यर्थस्त्विति । तेनौङ्कारेणोभौ खलु कर्म कुरुतः । य एतदोङ्काराख्यमक्षरमेवं रसतमत्वादिगुणकं वेद यश्च न वेद कर्तृत्वेन तयोः समत्वेऽपि विद्याऽविद्याभ्यां

वीर्यवत्तरं फलातिशयवद्भवतीति कर्मणो वीर्यवत्त्वं नाम फलवत्त्वं, तद्विद्याहीनस्यापि गम्यमानं विद्याया अनङ्गत्वं सूचयति। अतः कर्माङ्गाश्रयाणामप्युद्गीथादिविद्यानां पृथक् फलत्वाद्गोदोहनादिवत्कर्मस्वनियमेनोपादेयत्वम् ॥ ४१ ॥ इति तन्निर्द्धारणाऽनियमाधिकरणम् ॥ १८ ॥

## प्रदानवदेव तदुक्तम् ॥३।३।४२॥

दहरविद्यायां दहराकाशमुपास्यत्वेनोक्त्वा "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानि" त्यपहतपाप्मत्वादिगुणानामपि गुणिस्वरूपोपासनवत्पृथगुपासनमुक्तं, तत्र किं गुणचिन्तने गुणिनोऽनुचिन्तनमावर्त्तनीयम् उत नेति संशयः। दहराकाशस्य परमात्मन एकस्यैव सर्वगुणानां गुणित्वेन सकृदेव तच्चिन्तनोपपत्तेर्नावर्त्तनीयमिति प्राप्त आह। प्रदानवदिति। "यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इत्यस्यां त्रिपुरोडाशिन्यामिष्टाविन्द्रस्यैकत्वेऽपि राजत्वादिविशिष्टाकारभेदाद् देवताभेद इति प्रदानावृत्तिस्तद्वद्गुणिस्वरूपैक्येऽपि तत्तद्गुणविशिष्टाकारभेदादावर्त्तनीयमेवेति। तदुक्तं सङ्कर्षे "नाना वा देवता पृथग्ज्ञानादि" ति ॥ ४२ ॥ इति प्रदानाधिकरणम् ॥ १९ ॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३ । ३ । ४३ ॥

वाजसनेयिनाऽग्निरहस्ये "मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचिदि" त्यादिना मनश्चिदादीनग्नीन्साम्पादिकान् पठन्ति। तत्र संशयः- किमेते क्रियामयक्रत्वङ्गभूताः उत प्राधान्यज्ञापकलिङ्गभूयस्त्वाद्विद्यामयक्रत्वङ्गभूताः? इति।

---

फले विकल्प इत्याह। तत्र ज्ञानं विद्या साऽविद्यापेक्षया नाना भिन्ना तया यत्कर्म विद्यया श्रद्धया उपनिषदा रहस्यदेवताध्यानेन करोति। तद्वीर्यवत्तरं भवतीत्यर्थः। निगमयति। अतइति अनियमेनोपादेयत्वमिति। नियमेनोपादेयं ह्यङ्गम्। पशुकामनाऽस्ति चेत् गोदोहनोपसंहारः। नत्वन्यदा अतोऽङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्वम् अपितु पुरुषार्थत्वमिति निर्णीतं कर्मकाण्डे चतुर्थे लिप्सासूत्र इति भावः॥ ४१ ॥ इति तन्निर्धारणाधिकरणम्।

अथ प्रदानाधिकरणम्।

विषयवाक्यमुदाहरति। दहरविद्यायामिति। विमृशति। तत्रेति। गुणिन इति दहराकाशस्यात्मन इत्यर्थः। गुणचिन्तन इति। गुणाष्टकचिन्तन इत्यर्थः। गुणिचिन्तनं नाम आनन्दत्वादिविशिष्टस्वरूपचिन्तनम्। पूर्वपक्षं गृह्णाति। दहराकाशस्येति। समादधाति। इतिप्राप्त इति। सूत्रार्थं व्याकरोति। प्रदानवदिति। सङ्कर्षे=देवताकाण्डे॥ ४२ ॥ इति प्रदानाधिकरणम्।

अथ लिङ्गभूयस्त्वाधिकरणम्।

अग्निरहस्ये इति। "नैव वा इदमग्र आसीदित्यस्मिन् ब्राह्मणे "तद्धेदं मन एवासीदिति प्रथमोत्पन्नं मनः प्रकृत्य षट्त्रिंशत सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान् मनश्चित" इतिमनश्चिदादयोऽग्नयस्समाम्नाताः। षट्त्रिंशत्सहस्रादिनात्मपुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसङ्घाता अग्नित्वदृष्ट्या उपास्यमाना मनश्चितः एवमेव वाक्चिदादयोऽपि प्रत्येकं षट्त्रिंशत्सङ्ख्याकाः कर्मचितः वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः

तत्र सिद्धान्तं तावदाह—लिङ्गभूयस्त्वादिति। लिङ्गं सामर्थ्यं "तद्यत्किञ्चेमानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति, तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इत्येवमादिलिङ्गानां भूयस्त्वात् बाहुल्यात् विद्यारूपा एवैते। तद्धि लिङ्गं प्रकरणाद्बलीयस्तदप्युक्तं शेषलक्षणे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि" (जै० सू० ३।३।१३) ति समवाये समानविषयत्वेन द्वयोर्विरोधे परस्य दौर्बल्यम्। कुतः ? अर्थविप्रकर्षात् स्वार्थबोधने परस्य पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः ॥ ४३॥

अथ पूर्वः पक्षः—

## पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत् ॥३।३।४४॥

"पूर्वस्यैव क्रियामयस्येष्टकाभिरग्निं चिनुत" इति विहितस्येष्टकचितस्याग्नेरयं विकल्पः स्यात्तत्प्रकार इत्यर्थः। यथाऽसौ क्रत्वङ्गस्तथायमपीत्यर्थः। कुतः ? प्रकरणात्। "असद्वा इदमग्र आसीदि" त्यादिना पूर्वत्रेष्टकचितस्याग्नेः प्रकृतत्वात्तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसन्निधानात्तत्प्रकरणपठिता मनश्चिदादयोऽपि तद्विकल्परूपत्वेन क्रियारूपा एव स्युः। ननु प्रकरणस्य लिङ्गाद्दौर्बल्यमुक्तमिति चेत्सत्यं विधिवाक्यस्थस्यैव लिङ्गस्य प्रकरणाद्बलीयस्त्वं, नत्वर्थवादस्थस्येति गृहाण। विद्यारूपा अप्येते क्रियामयक्रत्वनुप्रवेशेन क्रियारूपतां लभन्ते, मानसवत्। "यथा द्वादशाहस्य दशमेऽहन्यनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाती" ति मानसी क्रिया क्रत्वङ्गमेवमत्रापीत्यर्थः ॥४४॥

---

देहव्यापारा वा अग्निचितो जाठराग्निव्यापारास्तन्मन एवात्मनः सम्बन्धिन अर्कोन्वेनीयान्। अपश्यदिति विषयवाक्यार्थः। "कर्मण्यग्न्याख्यायामि"ति सूत्रेण मनश्चीयत इत्यर्थे क्विप्। श्येनचिदादिशब्दवदसौ क्विवन्तो निष्पन्नः। साम्पादिकानिति। सम्पादितानीत्यर्थः। "तदर्हतीति" ठक्। सम्पादमर्हतीति साम्पादिकं तानीति। विचाराङ्गं संशयं दर्शयति। तत्रेति। सूत्रार्थं व्याचष्टे लिङ्गमिति। लिङ्गञ्च प्रकरणात् बलीय इत्यत्र जैमिनिसूत्रं प्रमाणयति। तदप्युक्तमिति। सूत्रार्थं निरूपयति। समवाय इति ॥ ४३॥

पूर्वपक्षात्मकमिदं सूत्रमिति स्फोरणायाह। अथ पूर्वपक्ष इति। सूत्रार्थं विवृणोति। पूर्वस्यैवेति। इष्टकाभिरग्निंश्चिनुत इत्युक्तक्रियामयाग्न्यधिकारे श्रवणादयमपि साम्पादिकाग्न्युपदेशस्तद्विषयो विकल्पोपदेशस्तथाच यथा क्रियाङ्गं क्रियामयोऽग्निस्तथा साम्पादिकाग्निरपि तदङ्गं स्यादित्यर्थमाह। यथेति। विकल्प इति व्याख्येयपदम्। प्रकरणमेवोपपादयति असद्वेत्यादिना। विधिवाक्यस्थं लिङ्गं प्रकरणाद्बलीयः अर्थवादस्थं वा। आद्यमङ्गीकरोति। सत्यमिति। न द्वितीय इत्याह। नत्वर्थवादस्येति। मानसाग्निविष्यर्थवादस्थलिङ्गानां स्वार्थप्रापकमानाभावाद्दौर्बल्यमित्यर्थः। प्रकृतलिङ्गस्य प्रकरणाबाधकत्वे फलितमाह। विद्यारूपेति। एतेन सूत्रस्थक्रियापदं व्याख्यातम्। कथं विद्यारूपाणामेतेषां क्रियारूपता तत्राह। मानसवदिति। अनया रसया पृथिव्या पात्रेण समुद्रं त्वा प्रजापतिदेवताकं मनोग्रहं गृह्यते इति ग्रहः सोमरसः मनसा रसत्वेन भावितमध्वर्युर्गृह्णातीत्यर्थः। द्वादशाहस्याद्यन्ताहर्द्वयं त्यक्त्वा मध्यस्य दशरात्रस्यैव द्विरात्रादिषु प्रकृतित्वम्। तद्धर्माणामेव तेष्वतिदेशात्। तस्य मध्यदिनानुष्ठेयस्य सदोच्चैरनुष्ठीयमानत्वात्। दशरात्रस्य दशमेऽहन्यथा एकादशेऽहनि मानसग्रहः श्रूयत इत्याशयः॥ ४४॥

## अतिदेशाच्च ॥ ३ । ३ । ४५ ॥

इतश्चैषां क्रियारूपत्वं, "षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः" इति पूर्वस्येष्टकचितस्याग्नेः कार्यं तेष्वतिदिश्यते। ततश्चेष्टकचितवत् तेषामपि क्रतुनिवर्त्तकत्वेन क्रत्वङ्गभूता एते क्रियारूपा एव ॥ ४५ ॥

इति प्राप्त आह—

## विद्यैव तु निर्द्धारणाद्दर्शनाच्च ॥ ३ । ३ । ४६ ॥

तुशब्दात्पक्षव्यावृत्तिरेवकारोऽवधारणे । मनश्चिदादयो विद्यैव, विद्यामयक्रत्वङ्गभूता एवेत्यर्थः । कुतः ? निर्धारणात् । तेषां साम्पादिकाग्नित्वेन विद्यारूपत्वे प्रसिद्धेऽपि 'ते ह ते विद्याचित एव' इतिविद्यया हैवैत एवंविदश्चिता भवन्ती" ति च निर्धारणं विद्यामयक्रत्वङ्गत्वमेषां विद्यारूपत्वं ख्यापयति । दर्शनाच्च । दृश्यते चात्रैवैषामङ्गी विद्यामयक्रतुः "ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्तः मनसाऽशंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमेवाक्रियत" इत्यादौ ॥ ४६ ॥

ननु न तेषामिह विद्यामयक्रत्वङ्गता सम्भवति विधिपदाश्रवणात्फलसम्बन्धाप्रतीतेश्चेष्टकचिताग्न्युपस्थापितक्रियामयक्रतुप्रकरणेन तद्बाधाच्चेत्याशङ्क्याह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३ । ३ । ४७ ॥

न प्रकरणेन तेषां विद्यामयक्रत्वङ्गता बाध्यते । कुतः ? श्रुत्यादेः प्रकरणाद्बलीयस्त्वात् । श्रुतिस्तावत् "ते हैते विद्याचित एवे" ति "तथा तान्हैतान् एवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्ती" ति लिङ्गं, तथा वाक्यमपि "विद्यया हैवैत एवंविदश्चिता भवन्ती" ति । एवंविदो मनआदिव्यापारेष्वग्नित्वं सम्पादयितुर्विद्यया विद्यामयक्रतुना सम्बद्धा एते

---

मनश्चिदादीनां क्रियारूपत्वे लिङ्गान्तरमाह । अतिदेशाच्चेति । सूत्रार्थं व्याचष्टे । इतश्चेति । अतिदेशादित्यर्थः । तदेव दर्शयति । षडिति । अतिदिश्यत इति क्रियाङ्गत्वसादृश्याददतिदेश इत्यर्थः । तेषाम्=मनश्चिदादीनाम् ॥ ४५ ॥

पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त आह इति । सूत्राक्षराणि व्याकरोति तुशब्दादिति । सिद्धान्तप्रतिज्ञामाह मनश्चिदादय इति । विद्याचित एवेत्येतच्छ्रुतिरेवोपपादयति अतश्श्रुतिमुदाहरति । विद्ययाहैवेत इति । दर्शनाच्चेति व्याख्येयपदम् । यत् किञ्च यज्ञे कर्म क्रियते=प्रधानभूतं कर्म क्रियते, यत् किञ्च यज्ञीयं कर्म=अङ्गभूतं कर्मेत्यर्थः ॥ ४६ ॥

अनन्तरसूत्रमवतारयितुं शङ्कते । नन्विति । विधिपदाश्रवणेऽपि फलसम्बन्धे सति विधिः कल्प्यते सोऽपि नास्तीत्याह । फलसम्बन्धाप्रतीतेश्चेति । सूत्रार्थं व्याचष्टे । न प्रकरणेनेति । श्रुतिस्तावदिति । विद्याशब्दश्रुतिरित्यर्थः । तेहैति । विद्यामात्रसम्पादितत्वात् विद्यारूपा एव मनश्चिदादय इत्यर्थः । लिङ्गं दर्शयति ? तथा तान् हैतानिति । सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन च मनसाऽनुसंहतस्य चयनस्य परिमितकालकर्तृ-

मनश्चिदादयश्चिता भवन्तीत्येषां विद्यामयक्रतुसम्बन्धमाचक्षाणं क्रियामयक्रत्वङ्गशङ्कां निरुणद्धि ॥ ४७ ॥

यच्चोक्तं "ते मनसैवाधीयन्ते" त्यादौ विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्च न तेषां विद्यामयक्रत्वङ्गता सम्भवतीति तत्राह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ३ । ३ । ४८ ॥

इष्टकचितसम्बन्धिक्रियामयक्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेनावगम्यते। कुतः ? अनुबन्धादिभ्यः। अनुबन्धा "मनसैषु ग्रहा अगृह्यन्ते" त्यादिनोक्ता यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयस्तेभ्यः। आदिशब्दात्पूर्वोक्तातिदेशश्रुत्यादिग्रहः। तत्र दृष्टान्तः प्रज्ञेति। यथा प्रज्ञान्तराणि शाण्डिविद्याप्रभृतीनि स्वस्वानुबन्धादिहेतुभिः क्रियामयात्क्रतोर्विद्यान्तरेभ्यश्च पृथगवतिष्ठन्ते, एवमयमपि। एवं चानुबन्धैः श्रुत्यादिना च पृथक्विद्यामयक्रतुनिश्चये विधिः परिकल्प्यते। दृष्टश्चानुवादसरूपे "यदेव विद्यया करोती" त्यादौ कल्प्यमानो विधिः। तदुक्तं "वचनानि त्वपूर्वत्वादि" ति। इष्टकचितागनेः स्वक्रतुद्वारेण यत्फलं तदेव तेषामपि स्वक्रतुद्वारेण फलं तेषामेकैक एव तावान्यावानसौ पूर्व" इत्यतिदेशात् ॥ ४८ ॥

यत्तूक्तं मानसवदिति तत्राह—

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥३।३।४९॥

न मानसग्रहसामान्यात्तुल्यत्वादपि मनश्चिदादीनां क्रियामयक्रत्वङ्गत्वं कल्प्यम्। कुतः ? उपलब्धेः। पूर्वोक्तश्रुत्यादिहेतुभ्यो विद्यारूपत्वोपलब्धेः। न हि किञ्चित्सादृश्यं कस्यचित्केनचिन्नास्ति, नच तावता वैषम्यनिवृत्तिः। मृत्युवत् यथा पूर्वस्मिन्मण्डलब्राह्मणसमाप्तौ "स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुष" इति "अग्निर्वै मृत्युरि" (बृ०।३।२।१०)ति चाग्न्यादित्यपुरुषयोर्न सादृश्यादेकतापत्तिः। यथा च "असौ वाव लोको गौतमाग्निरि" (छा०।५।४।१)ति न

---

क्रियामयेष्टकचिततुल्यकार्यतया क्रत्वनुप्रवेशासम्भवो विद्यामयक्रत्वनुप्रवेशे लिङ्गमित्यर्थः। विद्यामयः क्रतुः सर्वकालवर्तित्वेन सर्वभूतकर्तृत्वेन चानुसन्धीयते अतस्तादृशं चयनं तादृशक्रत्वन्वयीति भावः। वाक्यं दर्शयति। तथेति यथोक्तविद्यामयक्रतुमत्पुरुषस्य कृते हि एतानग्नीन् सर्वभूतानि चिन्वन्तीत्यर्थः ॥ ४७ ॥

सूत्रमवतारयितुं प्रागुक्तमनूद्यति। यच्चोक्तमिति। प्रतिज्ञावाक्यं दर्शयन् सूत्रार्थं विवृणोति। इष्टकचित इति। हेत्वर्थं व्याचष्टे। अनुबन्धा इति। दृष्टश्चानुवादसरूप इति फलसम्बन्धश्रवणाद्विधिकल्पनं श्रुतहानप्रसङ्गभयाद्धि क्रियते तदत्रापि तुल्यम्। सानुबन्धैः श्रुत्यादिभिर्विद्यामयक्रतोरवगतत्वात् श्रुतहानप्रसङ्गपरिहारार्थं विधिः कल्प्यत इति भावः। अधिकफलश्रवणमस्तीत्याह। फलमिति। फलकामनया कृतश्चेत् तत्फलप्राप्तिः। अन्यथा चेत् मुक्तिफलमितिभावः ॥ ४८ ॥

अनन्तरसूत्रमवतारयितुं प्रागुक्तार्थमनूद्यति। यत्तूक्तमिति। सूत्रार्थं व्याकरोति न सामान्यादिति।

ह्यग्नेर्लोकापत्तिर्लोकस्य वाऽन्यापत्तिस्तथाऽत्रापि क्रियारूपत्वविद्यारूपत्ववैषम्येऽपि मान-सत्वसामान्यं न विरुध्यते, विषमयोरपि साम्यदर्शनात् ॥ ४९ ॥

किञ्च पूर्वोत्तरब्राह्मणयोः केवलविद्याविधानात्तन्मध्यस्थस्यास्यापि ब्राह्मणस्य केवलविद्याविधिपरत्वमित्याह—

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥३।३।५०॥

परेण "च यं वाव लोक एषोऽग्निश्चित" इत्यनन्तरेण लोकपूर्णब्राह्मणेनास्य मन-श्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं तद्विधत्वं विद्यामयत्वं प्रतिपादितमत्रगम्यते। तेन हि "विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विन" इति केवलकर्मनिन्दापूर्वकं विद्यां प्रशंसता विद्यैव विधीयते, अतोऽग्निरहस्ये क्रिया एव विधीयन्ते इति नियमो नास्ति। एवं तर्हि विद्यामयमनश्चिदादीनां क्रियाग्निना सह पाठः किमर्थमि-त्यत आह। भूयस्त्वात्त्वनुबन्ध इति। मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वा-त्तेषां क्रियाग्निसन्निधावनुबन्धः कृतः, नतु कर्माङ्गतया, तस्मान्मनश्चिदादयोऽग्नयो विद्यामयक्रत्वङ्गभूता एवेति सिद्धम् ॥ ५० ॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥२०॥

## एक आत्मनः शरीरे भावात् ॥ ३ । ३ । ५१ ॥

पूर्वं "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इत्यनेन त्रयाणामप्युपास्योपासकोपा-सनानां स्वरूपस्य सर्वासु परविद्यासु ज्ञेयत्वमुक्तं, वक्ष्यते चोपासकस्यात्मतया परमात्मो-पास्यः, उपासकश्चोपास्यात्मकतयाऽनुसन्धेयः "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे" त्यनेन। तत्र संशय्यते, किमयं प्रत्यगात्मा शरीरे वर्त्तमानः ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविशिष्टस्वरूपोऽ-नुसन्धेयः उत प्रजापतिवाक्योक्तापहतपाप्मत्वादिगुणको यथाऽवस्थितरूपः? इति। तत्र ज्ञातृत्वादिविशिष्टमेव तत्स्वरूपमनुसन्धेयमित्येके मन्यन्ते। कुतः? आत्मनः शरीरे भावात्। शरीरे वर्त्तमानस्योपासितुरात्मनस्तथाभावात् ॥ ५१ ॥

---

हेत्वर्थं विवृणोति। उपलब्धेरिति। सत्यपि सादृश्ये यथास्यवैषम्यमव्यावृत्तमित्यत्र दृष्टान्तमादाय व्याचष्टे मृत्युवदिति। विभजते। यथेति ॥ ४९ ॥

पूर्वोत्तरब्राह्मणयोर्विद्याविधिपरत्वे तन्मध्यपातिनो ब्राह्मणस्यापि तथात्वमित्याह। पूर्वोत्तरब्राह्मणयोरिति। सूत्रार्थं व्याचष्टे। परेणेति। एषलोकः=भूः। आपः=समुद्राः। उपसंहरति। तस्मादिति ॥ ५० ॥ इतिलिङ्ग-भूयस्त्वाधिकरणम्।

अथ शरीरेभावाधिकरणम्।

पूर्वोत्तरयोरधिकरणयोः सङ्गतिं प्रदर्शयन्नाह। पूर्वमित्यादिना। तत्र सर्वविद्यासु भगवत एवोपास्यत्व-मुक्तम्। तथा प्रत्यगात्माऽप्यनुसन्धेय इति सङ्गतिः सर्वास्वित्यादिना सूचिता। सिद्धान्ते प्रत्यगात्मन उपास्य-कोटिनिक्षेपस्य वक्ष्यमाणत्वात्तदुपयोगित्वेनाह। वक्ष्यतेचेति। विचारोपयोगार्थमेव आत्मेतितूपगच्छन्तीति सूत्रोपादानम्। सूत्रद्वयोक्तार्थोपजीवनेनेदमधिकरणं प्रवर्त्तत इत्यर्थः। विचारहेतुं संशयं दर्शयति। तत्रेति। पूर्वपक्षं गृह्णाति। तत्र ज्ञातृत्वविशिष्टमेवेति ॥ ५१ ॥

नहि कर्मिणां कर्त्तृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपं तादृशं साधनानुष्ठानदशायामनुसन्धीयते तावतैव साधनानुष्ठानतत्फलयोः सम्भवात्। तथैवोपासकस्यापि देहस्थस्य यादृशं रूपं तावतैवोपासनानुष्ठानतत्फलयोः सिद्धेः। "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती" ति तु "तं यथा यथोपासत" इत्यनेनैकार्थ्यात्परमात्मविषयमित्येवं प्राप्ते सिद्धान्तमाह—

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥३।३।५२॥

तुशब्दोऽवधारणे। न ज्ञातृत्वादिविशिष्टस्वरूप एव प्रत्यगात्माऽनुसन्धेयः, अपितु सांसारिकस्वरूपान्मुक्तस्वरूपस्य यो व्यतिरेकः आविर्भूतापहतपाप्मत्वादिगुणत्वरूपः सोऽनुसन्धेयः। कुतः? तद्भावभावित्वात्। तद्भावस्यापहतपाप्मत्वाद्यवच्छिन्नयथावस्थितस्वरूपत्वस्य मुक्तौ भावित्वात्। अयम्भावः। "ऐतदात्म्यमिदं सर्वं तत्त्वमसि स त आत्माऽन्तर्याम्यमृत" इत्यादिश्रुतेः प्रत्यगात्मन आत्मतयैव परमात्मोपास्य इति प्रत्यगात्माऽप्युपास्यभूतपरमात्मात्मकत्वेनोपास्यकोटिनिविष्टः। अतो "यथा क्रतुरस्मिंल्लोके पुरुष" इति "तं यथा यथोपासते तथैव भवती" ति च न परमात्ममात्रविषयमपि तु प्रत्यगात्मात्मभूतोपास्यविषयमिति प्रजापतिवाक्योक्तापहतपाप्मत्वादिशिष्टं यथाऽवस्थितं स्वरूपमेव प्रत्यगात्मनोऽनुसन्धेयमन्यथा प्राप्योपास्ययोः प्रकारभेदाद्यथाक्रतुरित्यादि विरुध्येत। तत्र दृष्टान्तः। उपलब्धिवत्। ब्रह्मोपलब्धिवत्। यथा ब्रह्मोपलब्धिर्यथाऽवस्थितब्रह्मस्वरूपानुसन्धानयुक्तस्यैव, तथात्मोपलब्धिरपि यथावस्थितात्मस्वरूपानुसन्धानयुक्तस्यैव। कर्मिणान्तु "यजेत स्वर्गकाम" इत्यादिविधिषु देहादिव्यतिरिक्तकर्त्तृत्वाद्याकारप्रत्यगात्मस्वरूपविचारस्यैव कालान्तरभाविफलसाधनकर्माधिकारायापेक्षितत्वान्न ब्रह्मतादात्म्यापन्नतया प्रजापतिवाक्योदितापहतपाप्मत्वादिविशिष्टप्रत्यगात्मस्वरूपानुसन्धानस्य तत्र कर्माङ्गत्वमिति विशेषः ॥ ५२ ॥

इति शरीरे भावाधिकरणम् ॥ २१ ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥३।३।५३॥

---

तथाभावादिति ज्ञातृत्वकर्तृत्वादिविशिष्टस्य सत्वादित्यर्थः। फलसिद्ध्युपपत्तिं दर्शयति। नहीति। पूर्वपक्षमनूद्य सिद्धान्तयति इत्येवं प्राप्त इति। सूत्रार्थं व्याचष्टे। तुशब्द इति। अवधारणमेवोपपादयति न ज्ञातृत्वादिविशिष्टस्वरूप एवेति। व्यतिरेक इत्युक्ते धर्ममात्रस्यानुसन्धेयत्वशङ्का तन्निवृत्त्यर्थमाह। तद्भावस्य मुक्ताविति। प्रत्यगात्माऽपि उपास्यकोट्यन्तर्गतः उपास्यभूतपरमात्मकत्वेनेत्याह। अयम्भावइत्यादिना। जीवब्रह्मणोरभेदप्रतिपादकवाक्यमुदाहरति। ऐतदात्म्यमिति। फलितार्थमाह। अत इति। विपक्षे बाधकतर्कमाह अन्यथेति अपहतपाप्मत्वादिविशिष्टस्वरूपस्यानुसन्धेयत्व इत्यर्थः। दृष्टान्तेनोक्तार्थं परबुद्ध्यारूढं करोति तत्रदृष्टान्त इति। दृष्टान्तमेव विवृणोति। यथेत्यादिना। प्रागुक्तार्थं समाधातुमाह। कर्मिणान्त्विति ॥ ५२ ॥ इति शरीरेभावाधिकरणम्।

"ओमित्येतदक्षरमुद्गीथमुपासीत, लोकेषु पञ्चविधं सामोपासीत" (छा०।२।२।१) उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वाव लोक एषोऽग्निश्चित" इत्येवमाद्याः उद्गीथादिक्रत्वङ्गाश्रया उपासनाः प्रतिवेदं शाखाभेदेषु विधीयमानाः श्रूयन्ते। तत्र संशयः, ताः किं यासु पठिताः तच्छाखागतोद्गीथादिष्वेव नियताः उत सर्वशाखागतेषूद्गीथादिषु सम्बध्यन्ते ? इति। तत्र येन स्वरादिविशेषेण यस्यां शाखायामुद्गीथादयः पठ्यन्ते, तद्विशिष्टा एव भवेयुर्न शाखान्तरगतोद्गीथाद्याश्रयाः, सन्निधानादिति प्राप्ते ब्रूमः—अङ्गावबद्धास्त्विति। तुशब्दः पक्षव्यावृत्त्यर्थः। उद्गीथाङ्गप्रतिबद्धा उपासना न स्वशाखास्वेव व्यवस्थिताः, अपि तु प्रतिवेदं सर्वशाखासु सम्बध्यन्ते। हि यतः स्वरादिभेदेनोद्गीथव्यक्तिभेदेऽपि "उद्गीथमुपासीते" ति सामान्योद्गीथादिश्रुतिरविशिष्टा सती सन्निधिं बाधते। क्रतुमध्यगताश्चोद्गीथादयः प्रत्ययाश्रया न तत्र सन्निधिविशेषः, सर्वशाखाप्रभवत्वात् क्रतोः॥ ५३॥

## मन्त्रादिवद्वाऽविरोधः॥ ३। ३। ५४॥

चार्थे वाशब्दः। यथा च शाखान्तरविहितो मन्त्रः "कुटरुरसी" ति शाखान्तरेष्वपेक्ष्यते। कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वेति। आदिना कर्मगुणजातिसङ्ख्योदयो गृह्यन्ते। यथा मैत्रायणीयानां प्रयाजा न सन्ति, तथाऽप्यनूद्य गुणविधिर्भवति "ऋतवो वै प्रयाजाः समानत्र होतव्या" इत्याद्युदाहरणमूह्यम्। एवं च यथा मन्त्रादीनां क्रत्वङ्गभूतानामेकैकशाखावगतानां सर्वशाखासु क्रतोरेकत्वेन सर्वत्र सम्बन्धो न विरुध्यते, तद्वदिहापि न विरोधः॥ ५४॥ इत्यङ्गावबद्धाधिकरणम्॥ २२॥

---

अथ अङ्गावबद्धाधिकरणम्

विषयवाक्यमुदाहरति। ओमित्येतदक्षरमिति। उक्थमुक्थमिति इत्थं कर्माङ्गभूतं शास्त्रम् यत्प्रजा वदन्ति तदिदमेव येऽयं पृथिवी इत्युक्थे पृथिवीत्वदृष्टिविधिः नियत इति सामवेद एव ताण्डिशाखाप्रभृतयो बह्व्यः शाखाः तासु च शाखासु सर्वासु सामावयवोद्गीथाः स्वरवर्णविशेषादिभेदेन भिन्नाः। ताण्डिशाखायाञ्च अपूर्वादिगुणविशिष्टतया हिरण्ययप्राणाकाशादिदृष्टिविशिष्टतया चोद्गीथाद्युपासनानि विहितानि तानि च क्रतुमध्येऽनुष्ठेयानि तत्र यदा क्रत्वङ्गतया ताण्डिशाखागतोद्गीथः प्रयुज्यते तदा तस्मिन्नेव तच्छाखाविहिताप्त्यादिगुणविशिष्टोपासनं कर्त्तव्यम्, उत शाखान्तरोद्गतेप्युद्गीथे क्रत्वङ्गतया प्रयुज्यमान इतिभावः। पूर्वपक्षं गृह्णाति। तत्र येनेति। समाधत्ते इतिप्राप्ते ब्रूम इति। सूत्राक्षराणि विवृणोति तुशब्द इति॥ ५३॥

सूत्रं व्याचष्टे। चार्थे वाशब्द इति। यजुर्वेदिनां "कुक्कुटोऽसि" इति मन्त्रः तस्य तण्डुलपेषणार्थाश्मादाने विनियोगः 'कुटरुरसि, इति शाखान्तरे विहितमन्त्रः तस्यापि मन्त्रस्य विकल्पेन विनियोगात् सोऽपि प्राप्नोतीत्यर्थः। सूत्रस्थादिपदोपात्तान् ग्राहयति आदिनेति। मैत्रायणीयानां "समिधो यजति, तनूनपातं यजति इडं यजति, बर्हिर्यजति, स्वाहाकारं यजती" ति समिदादयः प्रयाजा नाम्नातास्तथापि तेषु सङ्ख्यादिगुणविधिराम्नायते द्वादश मासाः पञ्चर्तव इत्यादि हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तवः प्रसिद्धाः तथा चतुर्वत्पञ्चसङ्ख्याकाः प्रयाजाः समानत्र समानदेशे होतव्या इति यावत्। तत्र शाखान्तरोत्पन्नकर्मणां शाखान्तरे संग्रहो दृष्टोऽन्यथा तत्र गुणविध्ययोगादित्याशयेनाह। यथा मैत्रायणीयानामिति। फलितार्थं दर्शयति एवञ्चेति॥ ५४॥

इत्यङ्गावबद्धाधिकरणम्॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३ । ३ । ५५ ॥

छान्दोग्ये वैश्वानरविद्यायां व्यस्तस्य समस्तस्य च स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवत्वेन वैश्वानरात्मन उपासनं श्रूयते। तत्र संशयः—किं तत्रास्य व्यस्तस्योपासनं कर्त्तव्यम् उत व्यस्तस्य समस्तस्य च, अथ समस्तस्यैवेति ? किं तावत् प्राप्तम्, व्यस्तस्येति। यतः "औपमन्यव कं त्वमात्मानमुपास्से इति दिवमेव भगवो राजन्निति होवाच" (छा०५।१२।१) त्यादिना स्वर्लोकादिपृथिव्यन्तानां वैश्वानरात्मनो मूर्द्धादिपादान्तावयवत्वमभिधाय तत्र तत्र व्यस्तोपासनं तत्फलं च विहितम्, परत्र "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त" इति पूर्वोक्तस्यैव मूर्द्धाद्युपासनस्य समासेनोपसंहार इति युक्तमतो व्यस्तस्यैवेति प्रथमः पक्षः। एवमेव व्यस्तस्य समस्तस्य चाप्युपासनं कार्यम्। "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती" ति समस्तोपासनस्य व्यस्तोपासनफलेभ्यः फलान्तरविधानादिति द्वितीयः पक्षः। न त्वेतावता वाक्यभेदप्रसङ्गः, यथा भूमविद्योपक्रमे "नाम ब्रह्मेत्युपासीते" त्यादिवाक्यानां भूमविद्यापरत्वेऽपि नामाद्यवान्तरोपासनस्य तत्फलस्य च भूमविद्यास्तुत्यर्थमङ्गीकारस्तथेहापीत्येवं प्राप्त उच्यते—भूम्नइति। भूम्नः समग्रोपासनस्य ज्यायस्त्वं प्रशस्तता प्रमाणवत्त्वं, कथम् ? उपक्रमोपसंहारयोरेकवाक्यत्वात्। एवं सति प्रत्येकमवयवोपासनानां तत्तत्फलस्य च समस्तोपासनैकदेशानुवादमात्रत्वं निश्चेतव्यं, क्रतुवत् "यथा वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात" इति विहितस्यैव क्रतोरेकदेशो यदष्टाकपालो भवतीत्यादिनाऽनूद्यते। तथाहि दर्शयति। यथा न्याय उक्तोऽस्माभिस्तथा श्रुतिश्च "मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्यः" इत्यादिका व्यस्तोपासने दोषं ब्रुवन्ती, समग्रोपासनस्य ज्यायस्त्वं दर्शयति।

---

अथ भूमज्यायस्त्वाधिकरणम्।

विषयं दर्शयति। छान्दोग्य इति। विमृशति। तत्रेति। अस्य = वैश्वानरात्मनः। पूर्वपक्षं गृह्णाति। किन्तावदिति। तत्र ज्ञापकं लिङ्गं दर्शयति। औपमन्यवकमिति। व्यस्तोपासने फलविधिश्रवणात्तत्र फलविधिः कल्प्य इत्याह। तत्रेति। व्यस्तोपासनं विवक्षितञ्चेत् कथं समस्तस्योपसंहार इत्यत्राह परत्रेति। व्यस्तोपासनफलात् पृथक्फलनिर्देशाद्वाक्यभेदः। महावाक्यभेदमाशङ्क्य निषेधति। नत्वेतावतेति। अनेकार्थप्रतिपादने सत्यपि वाक्यैकत्वे दृष्टान्तमाह। यथा भूमविद्योपक्रम इति। समस्तोपासनं प्रधानप्रतिपाद्यं व्यस्तोपासनं प्रासङ्गिकमिति न विरोध इति भावः। पूर्वपक्षमनूद्य सिद्धान्तयति एवं प्राप्त इति। सूत्रार्थं व्याचष्टे भूम्न इति। अनुवादमात्रमिति। समुदायोपासनतत्फले विवक्षिते तदन्तर्गततदेकदेशोपासनतदेकदेशफलकथनमनुवाद इत्यर्थः। समस्तोपासनफले सर्वदेशसर्वकालवर्तिसमस्तभोग्यजातं ह्यन्तर्गतमिति दर्शयितुं फलैकदेशानुवादः कृतः ननु तथाऽनुष्ठेयमिति ज्ञापयितुम्, इतरथा वाक्यभेदात् व्यस्तोपासने प्रत्यवायकथनाच्च यथोक्त एवार्थ इतिभावः। समस्तोपासनं न्याय्यत्वादभिधेयं ननु व्यस्तोपासनम् तदुपासनेऽनर्थं ब्रुवती श्रुतिः मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति व्युत्पादयन् सूत्रखण्डं विवृणोति। तथाहि दर्शयतीत्यादिना। यदुक्तं नामोपासनासाम्यं तदपाकुर्वन्नाह। अतो न नामाद्युपासनसमत्वमिति। अतः = समस्तोपासनस्य ज्यायस्त्वात्। तत्र = भूमविद्यायाम्। तेषु = नामाद्युपासनेषु। दोषाश्रवणमिति। अनर्थाश्रवणमित्यर्थः। प्रत्युत नामाद्युपासनापेक्षया भूमोपासनस्यातिशयफलत्वं

अतो न नामाद्युपासनसमत्वं तत्र तेषु दोषाश्रवणात् ॥५५॥ इति भूमज्यायस्त्वाधिकरणम् २३

## नानाशब्दादिभेदात् ॥ ३ । ३ । ५६ ॥

अनन्तराधिकरणे सुतेजःप्रभृतीनां फलभेदश्रवणे सत्यपि समग्रोपासनस्य ज्यायस्त्वमुक्तम्। एवं शाण्डिल्यविद्याभूमविद्यादहरविद्योपकोशलविद्यावैश्वानरविद्यानन्दमयविद्याक्षरविद्यादिकानामपि ब्रह्मप्राप्तिरूपमोक्षैकफलानां सर्वासां किं समुच्चित्योपासनं ज्याय उत भेदेन ? इति संशये, किं तावद्युक्तम्, समुच्चित्योपासनं ज्यायोऽनन्तरन्यायेन, यथा वाऽग्निहोत्रादीनां समुच्चित्य प्रयोगस्तथाऽत्रापि। अपि च वेद्यस्य ब्रह्मण एकत्वात् वेद्यं हि रूपं विद्यायाः द्रव्यदैवतमिव यागस्य, अतो रूपाभेदादपि विद्यैक्यमिति प्राप्त उच्यते नानेति। भेदेनोपासनं कर्त्तव्यं, न समुच्चित्य प्रतिप्रकरणमुपासनाविधीनामन्योऽन्यनिराकांक्षत्वात्। कथं ? शब्दादिभेदात् "वेदोपासीत स क्रतुं कुर्वीते" ति "स भूमापहतपाप्मे" ति च शब्दभेदात्। आदिना शब्दान्तराभ्याससङ्ख्यासञ्ज्ञागुणप्रकरणनामधेयानि पूर्वकाण्डे दर्शितानि गृह्यन्ते। शब्दान्तरादिभिरत्र विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते "वेदोपासीत स क्रतुं कुर्वीते" ति स्वरूपाभेदेऽपि विधेयस्य पुरुषप्रयत्नस्य भेदहेतोर्गुणफलानुबन्धभेदात्तत्र स्वरूपं भिद्यते, यथेष्टिपशुसोमादीनाम्, अतो विद्याभेद इति स्थितम् ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥ २४ ॥

विद्यानां स्वरूपमुक्त्वाऽनुष्ठानप्रकारमाह—

## विकल्पोऽविशिष्टफलत्वात् ॥ ३ । ३ । ५७ ॥

किमासु ब्रह्मप्राप्तिफलासु शाण्डिल्यादिविद्यासु फलार्थिना समुच्चयेन प्रयोगोऽग्निहोत्रादिवद् ? अथवा विकल्पेन इति संशयः, समुच्चयेनाग्निहोत्रादिवदिति पूर्वः पक्षः।

---

श्रूयते "एष तु वा अतिवदति यः सत्येनातिवदति" इति। एतावता वैषम्यमुक्तं भवतीतिभावः ॥ ५५ ॥ इति भूमज्यायस्त्वाधिकरणम्।

अथ शब्दादिभेदाधिकरणम्।

प्राग्विद्याविशेषविषयकविचारः कृतः सम्प्रति सर्वासां विद्यानां विचार आरभ्यत इति सङ्गतिः। यथा पूर्वस्मिन्नधिकरणे सुतेजस्त्वप्रभृतीनां भिन्नश्रुतीनां समस्तोपासनस्य फलभेदेऽपि ज्यायस्त्वमेवं सर्वासां शाण्डिल्यादिविद्यानां फलैक्यात्समस्तोपासनं ज्यायः उत भेदेनेति विमृशति। अनन्तराधिकरण इति। रूपैक्यात् फलैक्याच्च समुच्चित्योपासनं कार्यमिति पूर्वपक्षयति किन्तावद्युक्तमिति। तत्र सदृष्टान्तं हेतुमाह। वेद्यमिति। पूर्वपक्षमनूद्य समाधत्ते। इतिप्राप्त इति। सूत्रार्थं विवृणोति भेदेनेति। सूत्रस्थादिपदं विवृणोति आदिनेति पूर्वकाण्ड। इति "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादि"ति जैमिनिसूत्रेण दर्शितमित्यर्थः। निगमयति। अत इति ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥

अथ विकल्पाधिकरणम्।

फलैक्यात्सर्वासां विद्यानां समुच्चय उत विकल्प इति विमृशति। किमास्विति। स्वर्गप्राप्तिहेतूनामग्निहोत्रदर्शपौर्णमासादीनां यथा समुच्चयस्तथा ब्रह्मैकफलकानां भिन्नानां शाण्डिल्यादिविद्यानां एकस्मिन् पुंसि

विकल्प इति सिद्धान्तः। कुतः? अविशिष्टफलत्वात्। अविशिष्टं हि सर्वासामासां परविद्यानां परब्रह्मभावापत्तिलक्षणं फलं, तस्य चैकयैव सिद्धत्वाद्विद्यान्तरसमुच्चये प्रयोजनाभावाच्च सर्वासां विकल्प एव, न समुच्चय इति ॥ ५७॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥३।३।५८॥

काम्यास्तु "स यो ह वै नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति य एतमेवं वायुं दिशां वत्सं वेद स न पुत्र! रोदं रोदिती" त्यादिकाः प्रतीकरूपाः ब्रह्मप्राप्त्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथाकामं यथाफलं यावन्ति फलानि प्रार्थयते तत्प्राप्तये समुच्चेतव्याः। यद्येकं फलमिच्छति तदैकमेव कुर्यादित्यनियमः। कुतः? पूर्वहेत्वभावात्, मोक्षफलकत्वहेत्वभावात् ॥ ५८ ॥ इति विकल्पाधिकरणम् ॥ २५ ॥

## अङ्गेषु यथाश्रयभावः ॥ ३। ३। ५९ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीते" त्यादिकानां कर्माङ्गेषूद्गीथादिष्वाश्रितानां प्रत्ययानां किमुद्गीथादिवत्क्रत्वर्थतया क्रतुषु नियमेनोपादानम्? उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति संशये, नियमेनोपादानमिति युक्तम्। ननु "तन्निर्धारणानियमः" इत्यत्राङ्गाश्रितानां गोदोहनादिवदनङ्गत्वमुक्तमिति चेत्सत्यम्, अङ्गान्यनुष्ठापयन्प्रयोगविधिर्यद्युपासनानि नानुष्ठापयेत्तर्हि तेषां तदाश्रितत्वं व्यर्थं स्यादित्याशङ्क्य पूर्वोक्तमेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैराक्षिपति। अङ्गेष्विति। अङ्गेषूद्गीथादिष्वाश्रितानामुपासनानां क्रतुषु, यथाश्रयभावः, उद्गीथादिवदङ्गभावः गोदोहनादिवदुद्गीथमुपासीतेत्युपासनविधौ फलसम्बन्धाश्रवणादुद्गीथस-

---

समुच्चयेन प्रयोग इति पूर्वपक्षयति। समुच्चयेनेति। ब्रह्मभावापत्तिलक्षणस्य फलस्यैकस्या द्विद्यातः प्राप्तिसम्भवे किं विद्यान्तरेणेति न समुच्चयः किन्तु विकल्प इति सिद्धान्तयति विकल्प इति ॥ ५७ ॥

मुक्तिव्यतिरिक्तफला विद्याः स्वर्गादिफलककर्म इव समुच्चेतव्या इत्याह। काम्यास्त्विति। नाम्नि ब्रह्मोपासकस्य फलबोधिकां श्रुतिमुदाहरति। स यो ह वै नामेति। सः प्रसिद्धोऽधिकारी नाम्नि ब्रह्मेत्युपास्ते नामवतो ह स लोकानभिसिद्ध्यतीति ग्राह्यम्। उत्तरत्र तथा श्रवणात्। फलान्तरमाह। यावदिति। यो नाम ब्रह्मेत्युपास्ते। अस्योपासकस्य नाम्नो यावद्गतं गमनमस्ति तत्र लोके यथायोग्यतानतिक्रमेण कामचारो भवतीति श्रुत्यर्थः। एवं वेत्तुः फलमाह। स एवमित्यादिना। योऽधिकारी एवमुक्तरीत्या एतं धर्मादिरूपं वायुं दिशां धर्मज्ञानातिदेशेन दिङ्नामकानां वायुरूपशाखानां वत्सं वेद स पुत्ररोदं पुत्रो भूत्वा रोदनं न रोदिति न करोतीत्यर्थः ॥ ५८ ॥

अथ यथाश्रमभावाधिकरणम्।

विचाराङ्गं संशयं दर्शयितुं विषयवाक्यमुदाहरति। ओमित्येतदक्षरमिति। किमुद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि उतानियमेन किं गोदोहनवत् पुरुषार्थमित्यर्थः। पौनरुक्त्येन चोदयति। तन्विति। परिहरति। सत्यमिति। सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तमतो न कृतमित्यर्थः। सूत्रार्थं विवृणोति। अङ्गेषूद्गीथादिष्विति। उद्गीथमिति। उद्गीथगता द्वितीया श्रुतिरुपासनस्य तच्छेषत्वे प्रमाणम्। व्रीहिगतप्रोक्षणादेरिवेत्यर्थः। "उद्गीथमुपासीते" तिविधिवाक्यादेवोद्गीथोपासनस्य अपापश्लोकश्रवणादिवत् क्रत्वङ्गत्वे

म्बन्धावगतक्रत्वङ्गता न विरुध्यते। एवं विधिवाक्येनैव क्रत्वङ्गत्वेऽवगते "यदेव विद्यया करोति तेनोभौ कुरुत" इति च वर्त्तमानफलसम्बन्धनिर्देशः "न स पापं श्लोकं शृणोती" तिवदर्थवादमात्रं स्यात्। अतो यथोद्गीथादीनामुपासनाश्रयक्रत्वङ्गतया प्रयोगविधिना नियमेनोपादानं, तथा तदाश्रितोपास्तीनामपि तद्द्वारा क्रत्वङ्गतया नियमेनोपादानम् ॥५९॥

## शिष्टेश्च ॥ ३ । ३ । ६० ॥

शिष्टिः शासनम्। उद्गीथमुपासीतेत्युद्गीथाङ्गतया प्रत्ययानां विधानं, ततश्चोपादाननियमः ॥ ६० ॥

## समाहारात् ॥ ३ । ३ । ६१

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती" ति दुरुद्गथं दुष्टमुद्गीथं वेदनहीनमुद्गाता स्वकर्मणि समुत्पन्नं वैगुण्यं होतृषदनात् होतृकर्मणः शंसनात्समादधातीत्यनेन समाधानं ब्रुवन्ती श्रुतिर्वेदनस्योपादाननियमं दर्शयति ॥ ६१ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ३ । ३ । ६२ ॥

इतश्च विद्यागुणस्य विद्याश्रयस्यौङ्कारस्य "तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायती" (छा० १।१।९) ति वेदत्रयसाधारण्यश्रवणाच्च तदाश्रितस्य प्रत्ययस्यापि साधारण्यमित्यभिप्रायः। तेनेति प्रकृतपरामर्शात्तेन सोपासनेन प्रणवेन वेदत्रयोक्तं कर्म प्रवर्त्तते इत्यर्थः। अत उपासनस्य प्रणवसहभावनियमदर्शनादुद्गीथाद्युपासनानामुद्गीथादिवदुपादाननियमो निश्चीयते ॥ ६२ ॥

## न वा तत्सहभावाऽश्रुतेः ॥ ३ । ३ । ६३ ॥

नवेति पक्षव्यावृत्तिः। नोद्गीथाद्याश्रिताः प्रत्ययाः क्रतुषूद्गीथादिवन्नियमेनोपसंहर्त्तव्याः। कुतः? तत्सहभावाऽश्रुतेः। क्रत्वङ्गभावाश्रवणात्। सहभावो हि क्रत्वङ्गभावः। "यदेव

---

निश्चिते "यदेव विद्यया करोती"ति श्रुतौ वर्त्तमाननिर्देशस्याऽर्थवादमात्रत्वम् अत उद्गीथादयः उपासनाश्रयाः क्रत्वङ्गत्वेन प्रयोगविधिनोपादेया इत्याह। एवमित्यादिना ॥ ५९ ॥

शासनमिति तदर्थमेव विवृणोति। उद्गीथमिति। विधानात् किमित्यत आह। ततश्चेति। विधानादित्यर्थः ॥ ६० ॥

होतृषदनादिति। होतुः सदनं स्थानम्। होता यत्र स्थितः शंसति तद्धोतृषदनं तेन च हौत्रं कर्म लक्ष्यत इत्याशयेनाह। होतृषदनात् होतृकर्मण इति ॥ ६१ ॥

उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः। समाहारो गम्यत इति। समाहारोऽनुवृत्तिः। सोपासनप्रणवानुवृत्त्योपासनानुवृत्तिर्गम्यत इत्यर्थः। तदुपपादयति तेनेति ॥ ६२ ॥

समाधत्ते। तत्परिहरतीति। सूत्राक्षराणि व्याकरोति नवेति पक्षव्यावृत्तिरिति। प्रतिज्ञावाक्यं दर्शयति

विद्यया करोति तदेव वीर्यवत्तरमि'' ति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साक्षात्साधनत्वमव-गम्यते। एवं क्रतुफलात्पृथक्फलसाधनतयाऽवगता विद्या किमाश्रित्य फलं कुर्यादित्यपेक्षा-याम् "ओमित्येतदक्षरमुद्गीथमुपासीते" त्युद्गीथमाश्रित्य कुर्यादिति क्रत्वङ्गभूतस्योद्गीथस्या-श्रयमात्रत्वं प्रतीयते। यथा "गोदोहनेन पशुकामस्यापः प्रणयेदि" त्यत्राप्प्रणयनमाश्रित्य गोदोहनं फलं साधयति प्रणयतिशब्दोपादानसामर्थ्यान्न तत्र गोदोहनस्य क्रत्वङ्गतानियमः, एवमत्रापि। अतः क्रतुफलात्पृथग्भूतफलसाधनतयाऽवगताया विद्याया न क्रत्वङ्गभाव उपपद्यते। अपि तु यथा क्रत्वधिकारिण एव पशुकामनानिमित्तं गोदोहनमधिकारान्तरमेवं क्रतुप्रयुक्तोद्गीथाद्याश्रयस्योपासनस्यापि क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वफलेच्छानिमित्त-मधिकारान्तरत्वमिति क्रतुषु तद्विकल्प एव। पर्णमयीवाक्ये तु पर्णतादीनां यदेव विद्ययेति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात् साधनभावो न श्रूयते। तत्र पर्णतायां जुहूसम्बन्धस्यावश्यंभावित्वात्तत्सम्बन्धः पूर्वं विधातव्यस्ततः क्रत्वङ्गभूतजुह्वाद्य-ङ्गतया तेषां क्रत्वर्थता न विरुध्यते तदङ्गानां फलान्तरसाधनत्वकल्पनानुपपत्तेस्तत्र फलश्रु-तिरर्थवादः। अन्यथा वाक्यभेदप्रसङ्गात्। इह तु वाक्यान्तरे स्ववाक्ये वा यत्फलमुक्तं तदेव युक्तमन्तरङ्गत्वादनारभ्याधीतत्वाच्च। प्रयोगवचनस्तु क्रत्वर्थानामुद्गीथादीनां सहभावनियमं विधत्ते। उद्गीथादिप्रत्ययास्तु क्रत्वङ्गाश्रया अपि गोदोहनादिवत्पुरुषार्था इति वैषम्यम्॥ ६३॥

## दर्शनाच्च॥ ३। ३। ६४॥

इतश्च प्रत्ययानामसहभावो दर्शनात्। "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभि-रक्षती" (छा० ४।१७।१०) ति ब्रह्मणो विद्वत्तया सर्वेषां पालनं ब्रुवती श्रुतिः प्रत्ययानामनियततां

---

नोद्गीथाश्रितेति "उद्गीथमुपासीत" इत्यत्र फलान्तरसाधनत्वस्य प्रतिपत्तिर्नास्तीत्यत आह। यदेवेति पृथक्-फलसाधनतयैव उद्गीथादिविद्या विहितेत्याह। एवमिति। यथा गोदोहनं किंसम्बन्धिपशुसाधनमित्यपेक्षायां प्रणयनसम्बन्धीति प्रणयनं सम्बन्धिमात्रतया प्रतीयते तथा किंविषयमुपासनं वीर्यवत्तरत्वसाधनमित्यपेक्षाया-मुद्गीथ आश्रयमात्रं भवतीत्याह। यथेति। ततः किमित्यपेक्षायामुपासनस्य क्रत्वङ्गत्वमयुक्तमित्याह। अतः क्रतुफलादिति। यथा क्रत्वधिकारिण एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने तद्वत्रापीत्याह यथेति। पर्णतावाक्ये वैषम्यमाह। पर्णमयीवाक्येत्विति। फलस्य वाक्यान्तरस्थत्वेन विलम्बः स्पष्टत्वं न कण्ठोक्तः फलसम्बन्धस्य विलम्बद्वयोपहतत्वेनाविरोधित्वादङ्गतया विनियोगात्। अङ्गत्वे सति पृथक्फलकल्पनायोगात्। तत्र फलश्रुतिरर्थवादः। अत्र पुनरन्यतरविलम्बसाम्यात् पृथक्फलसाधनत्वेनोपासनस्य पुरुषार्थतया क्रत्वर्थत्वा-भावान्नोपादाननियम इत्यर्थः॥ ६३॥

पूर्वसूत्रेण वादिनां पूर्वपक्षयुक्तयोऽपाकृताः। अत्र लिङ्गान्याह। इतश्चेति। "यजमानं सर्वांश्च ऋत्विजो-ऽभिरक्षति" इत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धाकरणादिभिरिति मन्तव्यम्। उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धितस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यामुद्गातृप्रभृतिवेदनानियमसिद्धिः। प्रापकानीति। आदावेव-कर्तृफलाप्रतिबन्धायोद्गीथोपासनं सङ्कल्पितं चेत् वेदनविरहितोद्गीथे समाधानं कर्तव्यमित्यर्थः। सोपासन-

दर्शयति । अनेन लिङ्गेन पूर्वोक्तसमाहारादिलिङ्गानि प्रायिकानीत्यवगम्यते ॥ ६४ ॥

इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायि श्रीमन्मुकुन्दचरणारुणपद्ममकरन्दभृङ्गेण जगद्विजयिश्रीद्श्रीकेशवकाश्मीरिभट्टेन सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायतृतीयपादविवरणम् ॥ ३ ॥

---

प्रणवसहभावनियमदर्शनमपि तथासङ्कल्पितकृतावेवेतिभावः ॥ ६४ ॥ इति यथाश्रयाभावाधिकरणम् ।

तृष्णानदी बहुलकामतरङ्गयुक्ता आव दुःखखचिता विषयोरुमीना ।
बुद्धिप्रनाशविलसद्बहुशैवलास्यां मग्नं समद्धरतु मां हरिदासनाम ॥

इति श्री श्री सनकसम्प्रदायानुगामिरसिकशेखरश्रीस्वामिहरिदासपदाश्रितानुयायिना विदुषा अमोलकरामेण सङ्गृहीतायां वेदान्तकौस्तुभप्रभाभावदीपिकाटीकायां तृतीयाध्यायस्य तृतीयपादव्याख्यानम् ।



# तृतीयाध्याये चतुर्थपादारम्भः ।

अथ पुरुषार्थाधिकरणम् ।

पूर्वस्मिन्पादे वेदनध्यानोपासनादिशब्दवाच्याया ब्रह्मविद्यायाः भेदाभेदविचारस्तदनुष्ठानप्रकारश्च निरूपितः । अथेदानीं विद्यायाः स्वातन्त्र्यं कर्मणस्तदङ्गत्वमिति निरूपयितुं विद्यातः पुरुषार्थः उत विद्याङ्गकात् कर्मणः ? इत्याशङ्क्य सिद्धान्तं तावदाह—

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ३ । ४ । १ ॥

पुरुषस्यार्थः प्रयोजनं सर्वमतो विद्यात एव स्यादिति भगवान्बादरायणो मन्यतेस्म । कुतः ? शब्दादितीति । इतिशब्दोऽवधारणार्थः । "तरति शोकमात्मवित् (छा०७।१।३) ब्रह्मविदाप्नोति परं ( तै० २।१।१ ), तमेव विद्वानमृत इह भवति तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्, एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तदि" त्यादिशब्दो विद्यात एव पुरुषार्थं ब्रुवन्दृश्यते ॥ १ ॥

अत्र पूर्वः पक्षः प्रारभ्यते—

## शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ ३ । ४ । २ ॥

यदुक्तं विद्यातः पुरुषार्थ इति नैतदुपपद्यते । उक्तश्रुतीनां क्रत्वङ्गकर्तृ स्वरूपयाथात्म्यवेदनविधानपरत्वात्कर्तृ संस्कारद्वारेणात्मज्ञानस्य कर्मशेषत्वात्तत्र फलश्रवणमर्थवाद-

---

अथ पुरुषार्थाधिकरणम् ।

विततविषयवल्ली जैह्मशैष्ण्यादिकेन दृढखचितसुमूला पालिता या रसेन ।
वहुभवजमविद्यावीजमस्याः प्रवृद्धं शमयतु हरिदासो दाववह्निप्ररूढः ॥ १ ।

पूर्वोत्तराधिकरणयोः सङ्गतिं प्रदर्शयन् पूर्वपादार्थं संक्षिपति । पूर्वस्मिन्निति । विद्याया अङ्गित्वे सति हि तदङ्गचिन्तनं कार्यम् तस्मादङ्गचिन्तनोपयोगित्वेन विद्याया अङ्गित्वं प्रथमाधिकरणे निरूप्यते किं विद्यातः पुरुषार्थ उत विद्याङ्गात् कर्मण इत्याह । अथेति । सूत्रार्थं व्याचष्टे । पुरुषस्येति । विद्यातः पुरुषार्थत्वं भवतीत्यत्र श्रुतिवाक्यान्युदाहरति । ।तरतिशोकमात्मविदिति ॥ १ ॥

प्रागुक्तार्थं दूषयितुमनूद्यति । यदुक्तमिति । उक्तश्रुतीनामिति । 'ब्रह्मविदाप्नोति परमित्यादि' प्रागुदाहृतश्रुतीनामित्यर्थः । कुत इत्यत आह । क्रत्वङ्गेति । व्रीह्यादेः प्रोक्षणादिवत् विद्या आत्मनश्शेषत्वेनावगता । "आत्मा ज्ञातव्यः" इति । अधीत्य स्नास्यन्निति ज्ञानमपि कर्मशेषत्वेनावगतम् । व्रीह्यादिशेषभूतप्रोक्षणादेः क्रतुशेषत्वं द्वारभूतव्रीह्यादेः क्रतुशेषत्वेनैव यथोपपद्यते तथात्मशेषभूतज्ञानस्य कर्मशेषत्वमात्मनः कर्मशेषत्वेनोपपद्यत इति

मात्रमिति जैमिनिराचार्यो मन्यतेस्म । तत्र दृष्टान्तः । यथान्येष्वितीति । तदुक्तं "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि" ति । तत्र द्रव्ये फलश्रुतिः "यस्य पर्णमयी जुहूर्भवती" त्याद्या, संस्कारे च "यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्याद्याः, । कर्मणि च "वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते" इत्याद्याः यथान्येषु द्रव्यादिषु पर्णमयीद्रव्ययजमानस्याञ्जनादिसंस्कारप्रयाजादिरूपेषु अपापश्लोकश्रवणादिश्रुतिरर्थवदस्तथाऽत्रापि पुरुषार्थश्रुतिरर्थवाद इत्यर्थः । ब्रह्मज्ञानं कर्माङ्गम् फलशून्यत्वे सति कर्माङ्गाश्रयत्वात्पर्णतादिवदित्यनुमानात् । नच कर्मण्यात्मज्ञानस्याप्रयोजकत्वमिति वाच्यम् । आत्मनो देहादिव्यतिरेकज्ञानमन्तरेण परलोकगामित्वानिश्चयाज्ज्योतिष्टोमादौ प्रवृत्तिरेव न स्यात् । तस्मात्क्रतुप्रवृत्तत्वात्मज्ञानस्योपकारकत्वात्कर्माङ्गत्वसिद्धिरित्यर्थः ॥ २ ॥

नच क्रतुगात्मनोऽन्यो मुमुक्षुवेद्यो मुक्तोपसृप्यो वेदान्तैरुपदिश्यते इति वाच्यम्, वेदान्तेष्वेव ब्रह्मज्ञानस्य कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्ता अपि देहातिरिक्तप्रत्यक्स्वरूपयाथात्म्यवेदनपरा इत्यवश्यमङ्गीकरणीयत्वात् । लिङ्गान्याह—

## आचारदर्शनात् ॥ ३ ॥ ४ ॥ ३ ॥

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे(बृ० ३।१।१) यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी" (छा० ५।११।५) त्यादिश्रुतिभ्यो जनककेकयादीनां ब्रह्मविद्यावतामपि कर्माचरणदर्शनात् ॥३॥

## तच्छ्रुतेः ॥ ३ ॥ ४ ॥ ४ ॥

---

ज्ञातव्य आत्मा क्रतुशेषभूत एव । कर्मशेषभूतत्वञ्च कर्मसु कर्तृभूतस्यात्मनः, सचात्मा जीव एवेति तत्स्वरूपप्रतिपादनपरं वेदान्तवाक्यजातमित्यर्थः । फलश्रुतेरर्थवादत्वे सूत्रितं दृष्टान्तं व्याचष्टे । यथेति । पर्णमयीद्रव्ये यजमानस्याञ्जनादिसंस्कारे प्रयाजादिकर्मसु च क्रमेण फलश्रुतिमाह । तत्र द्रव्य इति । सा च फलश्रुतिर्न फलपरा फलवत्क्रत्वर्थत्वात्पर्णतादेः फलशेषत्वायोगात् । अतः सार्थवाद एवेति पर्णमयत्वाधिकरणे समर्थितम् । तथात्मज्ञाने फलश्रुतिरर्थवाद इत्याह । तथात्रापीति । ब्रह्मज्ञानस्य कर्माङ्गत्वेऽनुमानं प्रमाणयति । ब्रह्मज्ञानमिति । नास्ति कर्मात्मज्ञानयोः प्रयोज्यप्रयोजकभाव इत्याशङ्क्यापाकरोति नचेति । देहातिरिक्तात्मज्ञानस्य यागादौ प्रवर्त्तकत्वात् अन्यथा तज्ज्ञानमन्तरा परलोकगामित्वानिश्चयात्तत्र प्रवृत्तिरेव न घटेत इत्याह । आत्मन इति । निगमयति । तस्मादिति ॥ २ ॥

"नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीरः" इत्यादिसूत्रैः प्रत्यगात्मनो भिन्नो मुमुक्षुभिः प्राप्यतया वेदान्तवेद्यः परमात्मोपदिश्यत इत्याशङ्क्य परिहरति । नचेति । वेदान्तेष्वेवेति । लिङ्गानुग्रहात्सामानाधिकरण्यमपि स्वरूपैक्यपरमित्याह । तदुपबृंहितेति । लिङ्गोपबृंहितेत्यर्थः । जनकइति। ईजे = यागं कृतवान् । ब्राह्मणान् सम्बोध्य ब्रह्मवित्केकयो राजा ब्रूते । अहं यक्ष्यमाण इति । यागं करिष्यमाणोऽस्मि वसन्तु भगवन्त इत्यर्थः । कर्मणो । विद्यायाश्च प्रसङ्गे कर्मणोऽनुष्ठानं तस्य प्राधान्येनैवोपपद्यते अतो विद्या कर्माङ्गमिति भावः ॥३॥

"यदेव विद्यया करोती"(छा० १।१।१०) ति श्रुतिरेव विद्यायाः कर्मशेषत्वमाह ॥ ४ ॥

## समन्वारम्भणात् ॥ ३ ॥ ४ ॥ ॥ ५ ॥

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः फलारम्भे समुच्चयश्रवणाच्च । ५ ।

## तद्वतो विधानात् । ३ ॥ ४ । ६ ॥

"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयान"(छा०८।१५।१)इत्यादौ वेदज्ञानवतोऽपि कर्मसु विनियोगदर्शनात् ॥६॥

## नियमाच्च । ३ । ४ । ७ ।

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः (ईशा० २), यावज्जीवमग्निहोत्रं जुहोती" (आप०३।१४।८) त्यादिनियमाच्च कर्मत एव फलम्, विद्यायास्तु कर्मशेषत्वम् ॥ ७ ॥

इति प्राप्ते आह—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । ३ । ४ । ८ ।

तुशब्दः पक्षव्यावृत्त्यर्थः । न विद्यायाः कर्मशेषत्वमुपपद्यते । कुतः ? अधिकोपदेशात् । कर्मकर्त्रात्मनः सकाशादत्यन्तविलक्षणस्यातिशयसाम्यशून्यस्य हेयगन्धास्पृष्टमाहात्म्यानन्ताचिन्त्यापरिमितसद्गुणार्णवस्य श्रीपुरुषोत्तमस्य वेदान्तैः प्रतिपाद्यमानत्वात्, तज्ज्ञानस्य कर्मानुपयोगात्प्रकरणाद्यभावाच्च कर्मशेषत्वं कल्पयितुमशक्यम्, "फलवत्सन्निधावफलं तदङ्गं प्रयोजवदि"ति न्यायात् । आत्मज्ञानं तु स्वप्रकरणगतेनैव "तन्महिमानमिति वीतशोक" इत्यादिश्रुतिप्रतिपादितेन फलेन निराकाङ्क्षम्, नान्यशेषत्वं प्रतिपद्यते । स्थितमेवं पुरुषार्थोऽत इति बादरायणस्य मतम् । कथम् ? तद्दर्शनात् "एष सर्वेश्वरः एष भूतपालः एष भूताधिपतिः, स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः,

---

विद्ययेति तृतीयाश्रुत्या कर्माङ्गत्वं गम्यत इत्यर्थः । ४ ॥

विद्याकर्मणोः साहित्यं दर्शयति "तं विद्याकर्मणी समन्वारभेते"इति । तं परलोकं गच्छन्तं विद्याकर्मणी अनुगच्छत इत्यर्थः ॥ ५ ॥

गुरोः कर्म शुश्रूषारूपं कुर्वन् । अतिशेषेण=निःशेषेण । अभिसमावृत्य=अभिसमावर्त्तनं कृत्वा गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन्नित्यर्थः ॥ ६ ॥

यावज्जीवं कर्मनियमोऽप्यत्र लिङ्गमित्याह । नियमाच्चेति । कुर्वन्नेवेहेति । शतं समाः=शतं सम्वत्सरान् कर्माणि नित्यनैमित्तिकानि कुर्वन्नेवेह लोके जिजीविषेत् जीवितुमिच्छेत् ब्रह्मविदोऽपि यावत्क्रियापूर्ति जीवितुमिच्छा भवतीति प्राप्तत्वादित्यर्थः ॥ ७ ॥ इमानि पूर्वपक्षसूत्राणि ।

उत्तरसूत्रमवतारयति । एवं प्राप्त इति । सूत्राक्षराणि व्याकरोति तुशब्द इति । अनुपपत्तिहेतुं प्रश्नपूर्वकमाह । कुत इति । अधिकोपदेशं दर्शयति । कर्मकर्त्रात्मन इत्यादिना । उक्तार्थं जैमिनिसूत्रेण प्रमाणयति

एतस्य वा अक्षरस्य प्रशासने गार्गि ( बृ० ३।८।९ ) भीष्मादवातः ( तै० २।८।१ ) यः सर्वज्ञः सत्यकामः सत्यसंकल्प'' इत्यादिश्रुतिभिः “अहं सर्वस्य प्रभवः, मत्तः परतरं नान्यत्, तपाम्यहमहं वर्षं पितामहस्य जगत''इत्यादिस्मृतिभिश्च सर्वेश्वरत्वादिस्वाभाविकाचिन्त्यानन्तकल्याणरूपधर्मैः श्रीपुरुषोत्तमस्यैवाखिलाविद्याद्यस्पृष्टमाहात्म्यसीम्नः परब्रह्मभूतस्य जीवादधिकतया वेद्यत्वेन प्रतिपाद्यमानत्वदर्शनात् । तादृशधर्माणां हेयसम्बन्धार्हे प्रत्यगात्मनि कथमप्यसम्भाव्यत्वात् । नच तत्त्वमस्यादिना तस्यैव तत्ताविधानादस्मदर्थसिद्धिरिति वाच्यम्, तस्य तदात्मकत्वादिभिस्तदपृथक्सिद्धत्वादेकत्वोक्तिः, न स्वरूपतः अभेद इति पूर्वमेव प्रतिपादितत्वात् । अखिल वेदान्तस्याशेषदोषास्पृष्टमाहात्म्ये ज्ञानैश्वर्यकारुण्यवात्सल्यगुणार्णवे ब्रह्मणि श्रीभगवति समन्वयेन ब्रह्मविद्यायां क्लेशकर्माद्यशेषहेयधर्माश्रयस्य क्षेत्रज्ञस्य प्रत्यगात्मनो गन्धोऽपि नास्ति ॥ ८ ॥

तस्मात्तद्भावापत्तिरूपनिःश्रेयसैकप्रयोजनमेवौपनिषदं ज्ञानम्, नाप्युक्तलिङ्गानां तत्र प्रामाण्यं, तेषामन्यपरत्वेनोक्तार्थासाधकत्वादित्याह—

## तुल्यन्तु दर्शनम् । ३ । ४ । ९ ।

न तावद्विद्यावतां कर्मानुष्ठानस्य विद्यायाः कर्माङ्गत्वे लिङ्गत्वमनैकान्तिकत्वात् । “एतद्ध स्म वै तद्विद्वांसः आहुरृषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवांचक्रिरे” इत्यादौ कर्मानाचरणस्यापि तुल्यत्वदर्शनात् कर्मानुष्ठानदर्शनं तु फलाभिसन्धिरहितस्य कर्मणो विद्याङ्गत्वात् ॥९॥

नापि “यदेव विद्यये”ति श्रुतिस्तत्परेत्याह—

## असार्वत्रिकी ॥ ३ । ३ ॥ १० ॥

सा हि प्रकृतोद्गीथविद्यामात्रपरा यदेवेति यच्छब्दस्यानिश्चितविशेषस्योद्गीथमुपा-

---

फलवदिति । सूत्रार्थस्तु प्राग्दर्शितः । वादरायणस्येत्यादि व्याचष्टे । स्थितमेवेति । तद्दर्शनादिति सूत्रखण्डम् । सर्वेश्वरत्वादिति । जुहूवत्कर्त्रात्मन. प्रत्यभिज्ञाने सति हि तद्द्वारा विद्यायाः कर्माङ्गत्वम् । वेदनोपदेशवाक्येषु जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावान्न तद्द्वारा विद्यायाः कर्माङ्गत्वमिति श्रूयमाणं फलमपि नार्थवादरूपम् । तस्माद्विद्यायाः पृथक्फलसाधनत्वेन न क्रत्वर्थत्वम् । किन्तु पुरुषार्थत्वमिति भावः ॥ ८ ॥

विद्यायाः कर्माङ्गत्वे लिङ्गानि दर्शितानि तान्यपि व्युदस्यन्त इत्याह । नापीति । अनैकान्तिकशब्देनानियतत्वमुच्यते । किमर्थाः=किंप्रयोजनाः । अङ्गित्वे ह्यनुष्ठानं नोपपद्यत इतिभावः । ब्रह्मविदां कर्मानाचरणदर्शनात् कथं कर्मानुष्ठानमुपपद्यत इत्यत आह । कर्मानुष्ठानदर्शनन्त्विति ॥ ९ ॥

परोक्तां श्रुतिमनूद्य तदुत्तरत्वेन सूत्रमवतारयति । नापीति । नहीति । यत्करोति तद्विद्ययेत्युक्ते विद्याया अङ्गत्वं विहितं स्यात् न तथान्वयः । यदेव विद्यया करोति तदेव वीर्यवत्तरमित्यन्वयः । तथासति यच्छब्दानूदितस्य विद्यया क्रियमाणस्य प्रापकप्रमाणाकाङ्क्षायां प्रकरणसन्निहितोद्गीथविद्या “यदेव विद्यया”इति विद्याशब्दं

सीतेति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। नहि यत्करोति तद्विद्ययेत्यन्वय इति भावः ॥१०॥

नापि "तं विद्याकर्मणी" (वृ०४।४।२) इति श्रुतेस्तत्परत्वं सम्भाव्यं तस्याविभक्ताधिकारिकत्वादित्याह—

## विभागः शतवत् ॥ ३ । ४ । ११ ॥

यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै, पञ्चाशदन्यस्मै तथा विद्याऽन्यस्मै, कर्म चाऽन्यस्मै, इति विभागो द्रष्टव्य इत्यर्थः। यद्वा विभक्तफलकत्वाद्विद्या स्वफलार्था समारभ्या, कर्म च स्वफलार्थमारभ्यमिति। यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं, रत्नार्थं शतमिति विभागस्तथाऽत्रापि ॥ ११ ॥

नाप्याचार्यकुलादित्यादिश्रुतिरुक्तार्थपरेत्याह—

## अध्ययनमात्रवतः ॥ ३ । ४ । १२ ॥

वेदाध्ययनमात्रवतः पुंसस्तद्विषयत्वात् नतु परविद्यावतः अध्ययनशब्दस्यस्याक्षरराशिग्रहणमात्रेणैव नैराकांक्ष्यादाधानवत्। ननु वेदमधीत्येत्यध्ययनविधिरेयार्थावबोधपर्यन्तमध्ययनं ज्ञापयतीति चेत्? एवमपि न विद्या कर्माङ्गम्, अर्थज्ञानाद्विद्याया अर्थान्तरत्वात्। यथा ज्योतिष्टोमादिकर्मस्वरूपज्ञानात्फलसाधनभूतकर्मानुष्ठानमर्थान्तरम्, तथा ब्रह्मस्वरूपविज्ञानाद्वेदनध्यानोपासनादिशब्दवाच्या पुरुषार्थहेतुभूता विद्याऽर्थान्तरम्, इति न कर्मसम्बन्धगन्धोऽपि तत्र ॥ १२ ॥

नापि यावज्जीवश्रुतिरुक्तार्थपरेत्याह—

## नाविशेषात् ॥ ३ । ४ । १३ ॥

न यावज्जीवश्रुत्या विद्यायाः कर्माङ्गत्वं निर्णेतुं शक्यम् तस्या अज्ञविद्वत्सामान्येन नियतविद्वद्विषयकत्वायोगादित्यर्थः ॥ १३ ॥

---

सङ्कोचयति अतोऽनुवादरूपत्वात् प्रमाणान्तरसापेक्षत्वेन स्वतोऽर्थनिश्चयसामर्थ्याभावात् विद्ययेति पदमेकसामर्थ्यरूपा श्रुतिर्न भवतीति भावः ॥ १० ॥

"तं विद्याकर्मणी समन्वारभेते" इति श्रुतेः विद्याकर्मणोः समुच्चयाद्विद्याकर्माङ्गमित्युक्तं परिहरन्नुत्तरसूत्रमवतारयति। नापीति। सूत्रं व्याचष्टे। यथेति। समन्वारम्भणश्रुतिः सांसारिकफलविद्याकर्मविषया। विद्या स्वफलप्रदानायाऽन्वेति कर्म च स्वफलप्रदानाय चेत्यर्थः ॥ ११ ॥

लिङ्गान्तरमनूद्य सूत्रमवतारयति। नापीति। सूत्रार्थं विवृणोति। वेदाध्ययनमात्रवत इति। तद्विषयत्वात् = वेदमधीत्येत्यध्ययन विधिविषयत्वात्। आधानवदिति। 'अग्नीनादधीते'त्यत्राधानेनाग्नेस्सम्पाद्यत्वमात्रमुक्तं नतूत्तरक्रतुविनियोगः। अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यात् तथात्रापीत्यर्थः। अर्थज्ञानपर्यन्तत्वं विधेरभ्युपगम्य शङ्कते नन्विति ॥ १२ ॥

"कुर्वन्नेवेह कर्माणि" तिश्रुतेः कर्माङ्गविषयत्वं पूर्वपक्षिणोक्तं तदपि परिहरति। नापीति। तस्याः = कुर्वन्नेवेह कर्माणीति श्रुतेः विद्वद्विषयनियमविधानपरत्वं नास्तीत्यर्थः ॥ १३ ॥

ननु सामान्यविषयकत्वेऽपि विदुषोऽपि तदन्तःपातित्वेन तन्नियमस्य तादवस्थ्यमिति-चेत्तत्राह—

## स्तुतयेऽनुमतिर्वा ॥ ३ । ४ । १४ ॥

वाशब्दोऽवधारणे । ब्रह्मविद्यास्तुतये कर्मणामनुज्ञामात्रत्वात् यावज्जीवं ब्रह्म-विद्यावति पुंसि कर्म कुर्वत्यपि विद्यासामर्थ्यात्कर्मलेपो नास्तीति । तस्याः श्रुतेर्विद्यासामर्थ्य-द्योतनार्थकत्वादित्यर्थः । "यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इत्यादिश्रुतेः, "सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् । इति मां योऽभिजानाति कर्मभिर्न स बध्यते, ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसे"त्यादिस्मृतेश्च ॥ १४ ॥

## कामकारेण चैके ॥ ३ । ४ । १५ ।

अपि चैके शाखिनो विदुषामिच्छानुरोधेन प्रजादिपरित्यागमामनन्ति । "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक" ( बृ० ४ । ४ । २२ ) इति विद्याया यदि कर्माङ्गत्वमभ्युपगतं स्यात्तर्हि तद्विरोधाद्गार्हस्थ्यत्यागविधानानुपपत्तिः ॥ १५ ॥

## उपमर्दञ्च ॥ ३ । ४ । १६ ॥

संसारबीजस्य कर्मण उपमर्दकत्वं विद्याया आमनन्ति । "भिद्यते हृदयग्रन्थि-श्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर" ( मु० २ । २ । ८ ) इत्यादि । "ज्ञानाग्निदग्धकर्माणं, ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत" इति स्मृतिश्च विद्यायाः कर्माङ्गत्वे न संगच्छेत ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३ । ४ । १७ ॥

---

उत्तरसूत्रशङ्कामाह । नन्विति । तदन्तःपातित्वेनेति । सामान्यविषयकत्वान्तःपातित्वेनेत्यर्थः । तन्नियमस्येति । विद्वन्नियमस्येत्यर्थः । तादवस्थ्यमिति । यावज्जीवं विदुषः कर्मानुष्ठाने उक्तश्रुतिर्नियमयतीति तादवस्थ्यमित्यर्थः । सूत्राक्षराणि व्याकरोति । वाशब्द इति । विद्यासामर्थ्यात् कर्मणामनुपमर्दो भवतीत्याह । यावज्जीवमित्यादिना । उक्तार्थं श्रुतिमुखेन प्रमाणयति । यथा पुष्करपलाश इति । अत्र विषये श्रीमुखवचनान्यपि प्रमाणयति । सर्वकर्माण्यपीति ॥१४॥

पूर्वपक्षिणोऽत्रानि लिङ्गान्युन्मथ्य स्वपक्षे हेत्वन्तरमाह । कामेति । श्रूयते च विदुषः गार्हस्थ्यत्याग-विधानम्, तच्च विद्यायाः कर्माङ्गत्वेऽनुपपन्नं तस्मादपि न विद्या कर्माङ्गमित्यर्थः ॥ १५ ॥

संसारबीजस्येति । यदि विद्यायाः कर्माङ्गत्वं स्यात्तदा क्षीयन्ते चास्य कर्माणीत्यादिश्रुतीनां कर्मोप-मर्दकत्वं न घटेत अतो विद्यायाः न कर्माङ्गत्वमित्यर्थः । विद्याया इति । नह्यङ्गेनाङ्गिन उपमर्द उपपद्यते तस्मा-दुपमर्दिका विद्योपमर्दनीयस्य कर्मणो नाङ्गमित्यर्थः ॥ १६ ॥

इतश्च विद्यायाः स्वातन्त्र्यम् । कथम् ? ऊर्ध्वरेतःसु निवृत्तग्राम्यधर्मेष्वाश्रमेषु ब्रह्मविद्याश्रवणात् । अग्निहोत्रादि कर्म च तेषु न श्रूयते । ते चाश्रमा वैदिके शब्दे दृश्यन्ते । "त्रयो धर्मस्कन्धाः ( छा० २ । २३ । १ ) ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ( छा० ५ । १० । १ ) तपःश्रद्धे ये ह्युपवसन्त्यरण्ये ( मु० १ । २ । ११ ) एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ( बृ० ४ । ४ । २२ ) ब्रह्मचर्यादेव प्रव्रजेदि" ( जा० ४ ) त्यादौ । यावज्जीवश्रुतिस्त्वविरक्तेषु कर्म विधत्ते ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ ३ । ४ । १८ ॥

यदुक्तं "त्रयो धर्मस्कन्धा" ( छा० २ । २३ । १ ) इत्यादिवैदिकशब्देषु तेषां दर्शनात्ते आश्रमाः सन्त्येवेति, तन्नोपपद्यते । यतः त्रयो धर्मस्कन्धाः इत्यादिवाक्येषु स्मृत्याचारप्रसिद्धानामाश्रमाणां सामोपासनविधिप्रकरणे वितायमाने ततोऽपकृष्य प्रकृतस्य स्वतन्त्रस्य प्रणवेन ब्रह्मोपासनस्य स्तुत्यर्थं परामर्शमात्रमनुवादमात्रं क्रियते, नतु ते विधीयन्त इति जैमिनिराचार्यो मेने । कुतः ? अचोदनात्, विधायकशब्दाभावात् । अपि चापवदति "वीरहा वा एष देवानां योऽग्निमुद्वासयते, 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी ( तै० १ । ११ । १ ) नापुत्रस्य लोकोऽस्ती" त्यादिका श्रुतिराश्रमान्तरम् । "ये चेमे ऽरण्ये श्रद्धां तप इत्युपासत" ( मु० १ । २ । ११ ) इत्यादि च देवयानविधिपरम्, न तत्राश्रमान्तरोपदेशसम्भवः । अतो नोर्ध्वरेतस आश्रमाः सन्तीति जैमिनिमतम् ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३ । ४ । १९ ॥

अनुष्ठेयमाश्रमान्तरमपि गृहस्थाश्रमवदिति भगवान्बादरायणो मन्यते । कुतः ? साम्यश्रुतेः । गार्हस्थ्येन तुल्यश्रवणादाश्रमान्तरस्य । "त्रयो धर्मस्कन्धा" ( छा० २ । २३ । १ ) इत्यत्र यथा श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृश्यते, एवमाश्रमान्तरमपि

---

विद्यायाः स्वातन्त्र्ये हेत्वन्तरमाह । इतश्चेति । तथापि कथं कर्माङ्गत्वं विद्याया व्यासिध्येत तत्राह । अग्निहोत्रादिकर्मचेति । धर्मस्कन्धा धर्माश्रया आश्रमाः । "यावज्जीवमग्निहोत्रं जुहोती"त्यादिना यावज्जीवमग्निहोत्रादीनां विधानाद्विद्यायाः कर्माङ्गत्वं वाच्यमित्याह । यावज्जीवश्रुतिस्त्विति ॥ १७ ॥

उक्तार्थमनूद्य पूर्वपक्षयति । यदुक्तमित्यादिना । निरासे हेतुमाह । यत इति । आश्रमाणां ब्रह्मोपासनस्य स्तुतयेऽनुवादमात्रं क्रियते ब्रह्मसंस्थोऽमृतत्वमेति इत्युपसंहारात् । ननु तेषां विधानमित्यर्थः ३ 'परामर्शमात्रमि'ति सूत्रखण्डम् । तन्तुं=सन्ततिम् । "येचेमेऽरण्य"इति श्रुतिराश्रमान्तरविधानपरेत्यत आह । येचेम इति । निगमयति । अत इति ॥ १८ ॥

अस्त्विह स्तुत्यर्थतयाऽनुवादः । सोऽपि प्रमाणान्तरतः प्राप्तिमपेक्षते । अन्यथा गृहस्थाश्रमोऽपि न सिध्येत । अतस्तस्य प्रमाणान्तरतः प्राप्तिरन्वेष्टव्येति स न्याय इतरेषामपि समानः, इति बादरायणमतं दर्श-

श्रुत्यन्तरविहितमेव परामृष्टमिति ॥ १९ ॥

## विधिर्वा धारणवत् ॥ ३ । ४ । २० ॥

वाशब्दोऽवधारणे । न परामर्शमात्रमाश्रमान्तराणां, किं तर्हि ? विधिरेवायं सर्वेषामाश्रमाणां धारणवत् । यथा दिष्टगताग्निहोत्रे श्रूयते "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती" त्यत्राधो धारणेन सहैकवाक्यताप्रतीतावपि तां भित्त्वोपरि धारणमपूर्वत्वाद्विधीयते । तदुक्तं शेषलक्षणे "विधिस्तु धारणेऽपूर्वत्वादि"ति । तद्वदिहाप्यप्राप्तत्वाद्विधिरुपगमनीयः । अपि च 'ब्रह्मचर्यं समाप्य गृही भवेद् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेदि" ति प्रत्यक्षैवाश्रमान्तरविधायिनी जाबालश्रुतिस्तामनपेक्ष्यैवाचार्येणेतरवाक्येष्वप्याश्रमप्राप्तिरवश्यमाश्रयणीयेत्येतदर्थं विचारः कृतः । तस्मात्सिद्धमूर्ध्वरेतःस्वपि विद्यादर्शनाद्विद्यात एव पुरुषार्थ इति । नन्वेवमपि प्रत्यगात्मज्ञानं विनाऽदृष्टस्वर्गादिफलके यागादिकर्मणि प्रवृत्तेरेवासम्भवादन्यथा कर्मश्रुतेर्बाधस्तत्रापि वैदिकत्वादनिष्ट एव । तस्माज्ज्ञानस्य कर्माङ्गत्वमवश्यमभ्युपेयमिति चेन्मैवमापाततोक्तेः । तथाहि-ज्ञानं तावद्द्विविधं, देहादिव्यतिरिक्तप्रत्यगात्मत्वंपदार्थविषयकं, प्रत्यगात्मब्रह्मतादात्म्यविषयकं चेति । तत्राद्यस्य देहादिविवेकज्ञानस्य कर्माङ्गत्वेऽपि ततोऽत्यन्तविलक्षणद्वितीयज्ञानस्य न कथमपि परांगत्वमिति राद्धान्तः । "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः, अक्षरात्परतः पर" इत्यादिविवेचकश्रुतेः । "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इत्यादिस्मृतेश्च सर्वात्मपरमात्मज्ञानं स्वतन्त्रमेव मोक्षफलकं, परमात्मनश्च तत्फलदातृत्वमिति सिद्धम् । ननु स्यादेतत्परमेश्वरस्य कर्मफलदातृत्वं यदि कर्मनिरपेक्षं स्यान्नतु तदस्ति, तस्य कर्मसा-

---

यति । अनुष्ठेयमिति ॥ १९ ॥

सूत्रं व्याचष्टे । वाशब्द इति । दिष्टाग्निहोत्रे=मृताग्निहोत्र इत्यर्थः। दिष्टाग्निहोत्रे श्रूयते "उपरिदेवेभ्यो धारयति" इत्येषोऽनुवादः । वर्त्तमानोपदेशात् हिशब्दोच्चारणाच्च उपरिधारणप्राप्तेः हविषोऽभ्यर्हितद्रव्यत्वात् प्रच्छादनं येन केनचित्प्राप्नोति ततः स्रुक्दण्डे समिधमुपसंगृह्याऽनुद्रवति इति वाक्यान्तरप्रतिपत्तौ समिन्नियस्यते तस्मादनुवाद इति प्राप्ते समिधो हविराच्छादनासमर्थत्वात् स्रुक्दण्ड इत्यनेन हविषः प्राक्देशस्य प्राप्तत्वेऽपि हविष उपर्य्यप्राप्तत्वाद्विधिरिति स्थितं तृतीये इत्यर्थः । उक्तेऽर्थे तार्तीयं सूत्रमुदाहरति । तदुक्तमिति । आश्रमान्तरविधायिकां श्रुतिमुदाहरति । अपिचेत्यादि । । सम्प्रति कृतां चिन्तामुद्घाटयति । अनपेक्ष्येति । शिष्यबुद्धिवैशद्यार्थं स्कन्धश्रुतिमादाय चिन्ता कृतेति भावः । अधिकरणार्थमुपसंहरति । तस्मादिति । ऊर्ध्वरेतसां ब्रह्मविद्याविधानेन विद्याया गृहस्थाश्रमधर्मं प्रत्यङ्गत्वाभावेन पृथक् फलसाधनत्वात् विद्यातः पुरुषार्थसिद्धिरित्यर्थः । स्वर्गसाधने यागादिकर्मणि प्रवृत्त्यन्यथानुपपत्त्या प्रत्यगात्मज्ञानस्य कर्माङ्गत्वमवश्यमभ्युपेयमित्याशङ्कते । नन्विति । विपक्षे बाधकतर्कमाह । अन्यथेति । प्रत्यगात्मज्ञानाभाव इत्यर्थः । परिहरति । मैवमित्यादिना । तदेवोपपादयति । तथाहीत्यादिना । देहादिव्यतिरिक्तात्मज्ञानस्य भवतु कर्माङ्गत्वं प्रत्यगात्मनि ब्रह्मतादात्म्यविषयकञ्च ज्ञानस्य न

पेक्षत्वस्य त्वयाऽप्यभ्युपगम्यमानत्वादन्यथा वैषम्यादिप्रसंगात्तस्मात्कर्मानुसारिफलदातुरीश्वरस्याभ्युपगमे गौरवमात्रत्वादन्वयव्यतिरेकाभ्यां कर्मण एवैकान्तफलहेतुत्वदर्शनात्कर्माभावे केवलेश्वरस्य फलादातृत्वाभावाच्चाप्रयोजक एवेश्वरः । दृश्यते च लोके कृष्यादिकर्मणः फलहेतुत्वं, तथा वैदिकेऽपि यागादौ तस्यैव स्वातन्त्र्यमनुमेयम् । यागादिकं वैदिकानुष्ठानं फलदानार्हं, कर्मत्वात्कृष्यादिवदित्यनुमानात् । न चाऽऽशु विनाशित्वात्तस्य कथं फलदातृत्वमिति वाच्यम् ? तस्य विनाशित्वेऽपि तज्जन्यादृष्टलक्षणसंस्कारस्य यावत्फलप्राप्तिस्थैर्यत्वाभ्युपगमात् । किञ्च "स्वर्गकामो यजेत "त्यादिविधिवाक्यमपि स्वर्गादिफलसिद्धये कर्मण एव विधानपरम्, नत्वीश्वरस्येति चेन्न । कर्मणो जडत्वेनाकिञ्चित्करत्वादिति पूर्वमेवोक्तम् । किञ्च तज्जन्यादृष्टस्यापि (अकिंचित्करत्वम्) जडत्वाविशेषात् । नाप्युक्तानुमानमत्र प्रमाणमाभासमात्रत्वात् । वृष्ट्याद्यभावेनोपलादिपातेन व्यभिचारदर्शनात् । नापि यजेदित्यादिशास्त्रस्य कर्ममात्रविधायकत्वम्, अपि तु परदेवताराधनपरत्वमेव । तथा च यज देवपूजायामिति धात्वर्थादेव कर्मणः पराङ्गत्वोपलब्धेः । "वायव्यं श्वेतमालभेत, भूतिकामो, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती" त्यादिषु कामिनः पुंसः सिसाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षितः । नातत्प्रकारत्वशङ्का युक्ता, एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वकल्पनं च न विदुषां सन्मानार्हमन्याय्यत्वाच्छ्रुतिविरुद्धत्वाच्च । ननु तर्हि देवा एव पुण्यकर्माणः क्षेत्रज्ञविशेषाः कर्मफलदातारः सन्तु, तेषामपि कर्म (द्वारा) ण एव परम्परया फलहेतुत्वसिद्धेस्तेषां जीवत्वसामान्येऽपि पुण्यकर्मबाहुल्यजन्यशक्त्यैव कर्मफलदातृत्वयोग्यत्वादितिचेन्न । कर्मवश्यानां तेषां पारतन्त्र्याविशेषेण तादृक्शक्त्यसम्भवात्तत्तदन्तर्यामिपरमपुरुष एव फलद इत्युक्तं "फलमत उपपत्तेरि" त्यत्र पूर्वमेव । "इष्टापूर्त्तं बहुधा जाय-

---

कथमपि कर्माङ्गत्वमिति बोधयितुं ज्ञानस्य द्वैविध्यं दर्शयति । ज्ञानं तावद् द्विविधमिति । प्रत्यगात्मनः सकाशात् परमात्मनः परत्वप्रतिपादिकां श्रुतिमुदाहरति । प्रधानक्षेत्रज्ञपतिरिति । कर्मसापेक्षस्येश्वरस्य कर्मफलदातृत्वांमात स्वीकारापेक्षया केवलस्य कर्मणस्तथात्वकल्पनेऽतीव लाघवमित्याशङ्कते । नन्विति । ननु तदस्ति=कर्मनिरपेक्षत्वमस्ति । तस्य=ईश्वरस्य अन्यथा=कर्मसापेक्षत्वानङ्गीकारे । तस्मादिति । वैषम्यादिवारणाय कर्मसापेक्षत्वादित्यर्थः । अन्वयव्यतिरेकाभ्यामिति । कर्मणः सत्त्वे फलप्राप्तिस्तदभावे तदभाव इत्यर्थः । उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति । दृश्यतेचेत्यादिना । तस्यैव=कर्मणः । अनुमानं दर्शयति । यागादिकमिति । कालान्तरभाविस्वर्गं प्रत्याशुविनाशिनो यागादिकर्मणः कथं कारणत्वमित्याशङ्क्य परिहरति । नचेति । तस्य=कर्मणः । तज्जन्येति । कर्मजन्येत्यर्थः । अचेतनस्य कर्मणस्तज्जन्यादृष्टस्य वा न फलजनकत्वम्, अचेतनस्य सचेतनाधिष्ठितस्यैव फलजनकत्वनियमादित्याशयेनोक्तां शङ्कां परिहरति । इतिचेन्नेति । व्यभिचारप्रदर्शनेनोक्तानुमानं परिहरति । नापीति । "स्वर्गकामो यजेत"इत्यादिवाक्यस्य कर्मपरत्वमाशङ्कितं तदप्यपाकरोति । "नापियजेदि"त्यादिशास्त्रस्येति । मानवमुद्दिश्यैव शास्त्रजातं फलसाधनान्युपदिशतीत्याह । वायव्यमिति । स्वार्जितपु-

मानं विश्वं बिभर्ति भुवनस्य नाभि, तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्यादिश्रुत्या तदात्मकत्वेन तत्सामानाधिकरण्योक्तेरिति संक्षेपः ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३ । ४ । २१ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत, स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः, इयमेवर्गग्निः साम अयं वाव लोकः एषोऽग्निश्चितः तदिदमेवोक्थमियमेव पृथिवी" ( छा० १ । १ । ३ ) त्येवञ्जातीयकानां वाक्यानां कर्माङ्गभूतोद्गीथादिस्तुतिमात्रं प्रयोजनमास्थेयम् उतोद्गीथादिषु रसतमत्वादिदृष्टिविधानम् ? इति संशयः । किं युक्तम् ? स्तुतिमात्रमिति । कुतः ? उपादानात् । उद्गीथाद्युपादानात् "इयमेव जुहुरादित्यः कूर्मः स्वर्गलोक आहवनीयः" इत्यादिवत् कर्माङ्गोद्गीथादिसम्बन्धितया रसतमत्वादेरुपादानात् तेषां स्तुतिमात्रं क्रियते, नतु रसतमत्वादिदृष्टिविशेषो विधीयते इति पूर्वः पक्षः । सिद्धान्तस्तु-नापूर्वत्वादिति । नेति पूर्वपक्षनिवृत्तिः । जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानेन रसतमत्वादेरप्राप्तत्वादुपासीतेति प्रत्ययो न स्तुतिमात्रमपि तु तद्दृष्टिविधिरेव । न च प्रदेशान्तरे विहितस्योद्गीथस्य प्रदेशान्तरे स्तुतिरुपयुज्यते । विधायकस्य पदसमूहस्यानन्तरं पुरस्तात्परस्ताद्वा समाम्नातोऽर्थवादस्तेनैकवाक्यतामेति । "यथा वायुर्वै क्षेपिष्ठे"

---

एवकर्मातिशयेनैव कर्मणः देवानां फलदातृत्ववाच्यमित्याशङ्कते । नन्विति । न देवानां फलप्रदशक्तिमत्त्वं कर्मवश्यानां तेषां परतन्त्रत्वादित्याशयेन परिहरति । नेति ॥ २० ॥ इति पुरुषार्थाधिकरणम् ।

अथ स्तुतिमात्राधिकरणम् ।

विषयवाक्यं दर्शयति । ओमित्येतदक्षरमिति । ओमितिनामकमक्षरम् । उद्गीथम्=उच्चत्वादुत् गीतत्वाद्गीः सर्वस्थानत्वात्थः, उच्चा गौ गीश्चासौ थश्चेत्युद्गीथं भगवन्तमुपासीत । सएवेति । अष्टमः पृथिव्यपेक्षयाष्टमत्वेनोक्तो य उद्गीथः स एव रसानां श्रेष्ठानां पृथिव्यादीनां सकाशाद्रसतमः श्रेष्ठतमः परमश्रेष्ठादपि श्रेष्ठतमः परमश्रेष्ठादपि श्रेष्ठतमाच्च यत्परमं तस्मादुत्तमः परार्ध्य आशयेन परार्द्धियुतत्वात् परार्ध्यः । एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाग्रस वाच ऋग्रसः ऋचः साम साम्न उद्गीथ रसः; इति पृथिव्यादीनां सप्तानां पूर्वं रसानां कीर्तितत्वात् उद्गीथस्याष्टमरसत्वमित्यर्थः । विचाराङ्गं संशयं दर्शयति । कर्माङ्गभूत इति । पूर्वपक्षं गृह्णाति । किंयुक्तमिति । जुहूः इयमेव पृथिवी इति स्तूयते चयनस्थः कूर्मं आदित्य इति स्तुतिः आहवनीयः । स्वर्लोक इति स्तुतिः । तथोद्गीथादीनां रसतमत्वादिगुणैः स्तुतिरित्यर्थः । सिद्धान्तयति । सिद्धान्तस्त्विति । "नापूर्वत्वादि"ति सूत्रखण्डम् तद्व्याख्यानम् । अप्राप्तत्वादिति । तदुपपादयति । जुह्वादिविधिवदिति । फलजुह्वादिप्रकरणस्थतया स्तावकत्वेनार्थवत्त्वम् । रसतमादिश्रुतीनान्तु क्रत्वङ्गविधिप्रकरणस्थत्वाभावात्फलवदपूर्वोपास्तिविधायकत्वमेव युक्तमित्यर्थः । अस्तु तर्हि विधायकशब्दशेषत्वेनैवोद्गीथादिश्रुतीनामपि स्तावकतयाऽर्थवादत्वं तत्रेत्याशङ्क्य परिहरति । नच प्रदेशान्तर इति । उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानान्न तेनोद्गीथादिश्रुतीनामेकवाक्यतेत्यर्थः । 'वायुर्वै क्षेपिष्ठे"त्यादिवदुद्गीथादिश्रुतीनां स्तुत्यर्थत्वेऽपि कस्मादर्थवत्त्वं न स्यादित्याशङ्क्याह । विधायकस्येति । उक्तार्थे

ति। तदुक्तं "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" १।३।७ इति ॥२१॥

## भावशब्दाच्च ॥ ३ । ४ । २२ ॥

भावो विधिः। "उद्गीथमुपासीत (छा० ।१।१।१) सामोपासीते" (छा० २।२।१) त्यादिविधिशब्दाचाप्युपासनविध्यर्थान्युद्गीथादिवाक्यानि ॥ २२ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३ । ४ । २३ ॥

"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम (कौषी० ३।१) जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस श्वेतकेतुर्हारुणेय आसे" त्यादयो वेदान्तेष्वाख्यानविशेषाः श्रूयन्ते। तेषु संशयः, किमेते पारिप्लवार्थाः उत तत्र तत्र विद्याविशेषप्रतिपादनार्था इति। तत्राख्यानानि शंसन्तीत्याख्यानसामान्यादाख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्तदर्था इति पूर्वः पक्षः। ततश्च मन्त्रवत्प्रयोगशेषत्वान्न विद्याप्राधान्यं वेदान्तानां न्याय्यमिति चेत्तन्न। कुतः? विशेषितत्वात् "पारिप्लवमाचक्षीते" त्युक्त्वा तत्रैव "मनुर्वैवस्वतो राजे" त्यादिना कानिचित् मन्वाद्याख्यानान्येव विशेष्यन्ते। अतस्तेषामेव तत्र विनियोगः, नाख्यानसामान्यात्सर्वस्य। अन्यथा विशेषणानर्थक्यम्। तस्मादाख्यानश्रुतयो विद्याविध्यर्था एव, न पारिप्लवार्था इति ॥ २३ ॥

## तथा चैकवाक्यतोपबन्धात् ॥ ३ । ४ । २४ ॥

यथा च "सोऽरोदीदि (यजु० १।५।१)" त्येवमादीनां विधिनैकवाक्य-

---

सूत्रकारसंमत्या द्रढयति। तदुक्तमिति ॥ २१ ॥

स्पष्टम् ॥ २२ ॥ इति स्तुतिमात्राधिकरणम् ॥

अथ पारिप्लवाधिकरणम्।

विषयोक्तिपूर्वकमाख्यानत्वसाम्याद्विद्यासन्निधेश्च संशयमाह। प्रतर्दनो ह वैति। पारिप्लवाः=आख्यानानि। अत्र पारिप्लवशब्देनाख्यानशंसनं विवक्षितम्। "एतेन दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनाभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत प्रथमेऽहनि। मनुर्वैवस्वतो राजा" इति पारिप्लवशब्दस्याख्यानाभिधायकत्वदर्शनात् कथमाख्यानानां पारिप्लवनामकशास्त्रार्थत्वं पूर्वपक्ष इति निरस्तम्। तत्र पूर्वपक्षं गृह्णाति। तत्राख्यानानीति। ननु पारिप्लववाक्येन विनियुक्तानामपि सन्निधेर्विद्यार्थत्वमपि स्यादित्यत आह। न विद्याप्राधान्यमिति। न्याय्यमिति। वेद्यार्थभेदादिति न्यायाविरुद्धमितिभावः। सूत्रस्य पूर्वपक्षभागं व्याख्याय सिद्धान्तभागं व्याख्यातुकामः तत् खण्डं दर्शयति। इतिचेत्तन्नेति। सर्वेषामाख्यानानां पारिप्लवप्रयोगे कुतो न विनियोग इतिजिज्ञासायां हेतुमवतारयन्नाह। कुत इति। यदि सर्वेषामाख्यानानां ग्रहणं स्यात्तदा "मनुर्वैवस्वतो राजा" इति वाक्यविशेषणमनर्थकमेव स्यात्। नचार्थवत्वे सम्भवति आनर्थक्यं युक्तम्। अतः सङ्कोच इतिभावः। तेषाम्=आख्यानविशेषाणाम्। तत्र=विद्यायाम्। विपक्षे बाधकतर्कमाह। अन्यथेति। सर्वेषामाख्यानानां ग्रहणे। निगमयति। तस्मादिति ॥ २३ ॥

उपबन्धः=अन्वयः। हिरण्यदक्षिणात्ववाक्येनैकवाक्यतयोपबन्धात्। "सोऽरोदीत्ये"वमादेः कर्मवि-

त्वादर्थवादता, तथा "द्रष्टव्य" इत्यादिविध्येकवाक्यतयोपबन्धात्सम्बन्धात्तत्प्रशंसार्थ-माख्यानमिति। अतो न पारिप्लवार्थत्वम् ॥ २४ ॥ इति पारिप्लवाधिकरणम् ॥

## अतएव चाग्नीन्धनाद्यनपेक्षा ॥ ३ । ४ । २५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गत्याऽधिकरणद्वयं चिन्तितम्, ऊर्ध्वरेतस आश्रमाः श्रुति-परिगृहीताः सन्तीत्युक्तमिदानीं तेषु यज्ञादिकर्माभावात्तदङ्गिका विद्याऽपि सम्भवति न वा ? इति संशये, न सम्भवतीति प्राप्ते आह अत एव चेति। यतो "यदिच्छन्तो ब्रह्मचर्यं चरन्ति, ( कठ० २। १५ ) एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति, ब्रह्मसंस्थोऽमृतत्वमेति, ये चेमेऽरण्ये श्रद्धां तप इत्युपासत" इत्यादिश्रुतिभिस्तेषां विद्यावत्त्वमवगम्यते। अत एव तेष्वग्नीन्धनाद्यनपेक्षा। अग्न्याधानसाध्यकर्मानपेक्षा विद्येति निश्चीयते ॥ २५ ॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३ । ४ । २६ ॥

यद्येवं केवला विद्या पुरुषार्थं साधयेत्तर्हि किं सर्वथाऽऽश्रमकर्मानपेक्षा उताश्रम-कर्माण्यपेक्षतेऽपीति संशये, विद्यायाः स्वातन्त्र्यात्सर्वथानपेक्षेति प्राप्त आह-सर्वापेक्षेति ? विद्या स्वोत्पत्तौ सर्वापेक्षा सर्वाणि यज्ञाद्योश्रमकर्माण्यपेक्षते। उत्पन्ना सती स्वफलमोक्षसिद्धौ तु निरपेक्षा। कुतः ? यज्ञादिश्रुतेः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति ( बृ० ४। ४। २२ ) यज्ञादयो विविदिषोत्पादनद्वारा विद्याङ्गतया विनियुज्यन्ते। यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीति। अतस्तदपेक्षाया इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमेव तदङ्गकमित्यर्थतोऽवगम्यते। तत्र दृष्टान्तः। अश्व-

---

दुष्यर्थत्वमित्यर्थः ॥ २४ ॥ इतिपारिप्लवाधिकरणम्।

अथाग्नीन्धनाधिकरणम्।

व्याख्यातयोरधिकरणयो :प्रासङ्गिकत्वमाह। स्तुतिप्रसङ्गादिति। अस्याधिकरणस्य प्रथमाधिकरणेन सङ्गतिमाह। ऊर्ध्वरेतस इति। सूत्रे चशब्दः शङ्काद्योतकः। अतःशब्दार्थमाह। यतइति ॥ २५ ॥ इत्यग्नीन्धनाधिकरणम्।

अथसर्वापेक्षाधिकरणम्।

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति तर्हि यज्ञादेर्विद्याङ्गत्वाभावात् तद्रहितस्य गृहस्थस्य विद्याधिकारः स्यादिति सङ्गतिः। आश्रमकर्माणि विद्याङ्गानि नवेति संशयं दर्शयति। यद्येवमित्यादिना। विद्याया न यज्ञापेक्षेति पूर्वपक्षं गृह्णाति। विद्याया इति। समादधाति। इतिप्राप्त इति। सूत्रार्थं व्याकरोति। विद्या स्वोत्पत्ताविति। विद्योत्पत्तिं प्रत्येव आश्रमकर्मणां जनकत्वं नतु विद्यया फलसिद्धौ सा स्वातिरिक्तमपेक्षत इत्याह। उत्पन्ना सतीति। उक्तव्यवस्थायां प्रश्नपूर्वकहेतुमाह। कुत इति। हेतुं विवृणोति। तमेतमित्यादिना। प्रत्ययार्थप्राधान्यविषयात्सामान्यन्यायादिष्यमाणसमभिव्याहारे इष्यमाणं प्रधानमिति विशेषन्यायः स्वर्गकामादिवाक्ये क्लृप्तो बलीयान्। अत इष्यमाणज्ञाने यज्ञादीनामङ्गत्वमित्याह। यज्ञादिभिरिति। यथा "अश्वेन जिगमिष"तीत्यत्र अश्व इष्यमाणगमनसाधनत्वेन प्रतिपाद्यत इति दृष्टान्तेनोक्तार्थं परबुद्ध्यारूढं करोति।

वदिति। यथाऽश्वो गमनसाधनभूतो गमनसिद्धयेऽपेक्ष्यते। सिद्धे च गमने स्वगृहादिप्राप्तौ नापेक्ष्यते, तद्वत् ॥ २६ ॥ इति सर्वापेक्षाधिकरणम्।

विद्योत्पत्तौ यज्ञादिबहिरङ्गसाधनमुक्तमथान्तरङ्गसाधनमाह—

## शमदमाद्युपेतः स्यात्तथाऽपितुतद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ ३।४।२७॥

यद्यपि यज्ञादिभिः स्वाश्रमविहितकर्मभिरेव शुद्धान्तःकरणस्य विद्या स्यात्तथाऽपि तु मुमुक्षुः शमदमाद्युपेतः स्यात्। कुतः? तदङ्गतया तद्विधेः। "तदस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि" (बृ० ४।४।२३)ति विद्याङ्गतया शमादीनां विधानाद्विहितानां च तेषां विद्यानिर्वृत्तयेऽवश्यानुष्ठेयत्वात्। विद्याया एकाग्रतानिष्पाद्यत्वाच्छमादिभिरेव तन्निष्पत्तिः। यज्ञादिकर्माण्यपि पापनिर्हरणद्वारेणैकाग्रतामापादयन्तीति भावः ॥ २७ ॥ इति शमदमाद्यधिकरणम्।

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३।४।२८ ॥

वाजसनेयिनां प्राणविद्यायां "न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति (बृ० ६।१।१४)" तथा छान्दोग्यानां "न ह वा एवंविदि किञ्चनानन्नं भवती" (छा० ५।२।१)ति प्राणविदः सर्वान्नभोजनानुमतिः श्रूयते। सा किं प्राणविद्यावतां सर्वदा कर्त्तव्या उत प्राणात्ययापत्ताविति विशये विशेषाश्रवणात्सर्वदेति प्राप्ते समाधत्ते सर्वेति। चशब्दोऽवधारणार्थः। प्राणात्यय एव सर्वान्नानुमतिः सर्वान्नभक्षणानुज्ञा, न सर्वदा। कुतः? तद्दर्शनात्, ब्रह्मविदामपि प्राणात्ययापत्तौ तथात्वश्रवणात्।

---

तत्र दृष्टान्त इति। तद्वदिति। उत्पत्तावेव ज्ञानस्य कर्मापेक्षा नतु फलोत्पत्तावित्यर्थः॥ २६॥ इतिसर्वापेक्षाधिकरणम्।

अथ शमदमाद्यधिकरणम्।

विद्योत्पत्तौ वहिरङ्गयज्ञादिसाधनं विधाय सम्प्रति तदुत्पत्तौ अन्तरङ्गशमादीन्यप्यपेक्षत इति सङ्गतिं प्रदर्शयन्नाह। विद्योत्पत्ताविति। ब्रह्मविद्यार्थी स्वाश्रमोचितकर्मसु प्रवृत्तोऽपि स विद्वान् शमाद्युपेतः स्यात् विद्याङ्गतया तेषामपि विधानात् निरन्तरस्मृतिसन्तानविद्योत्पतेश्चित्तसमाधानसाध्यत्वेन विद्यानिर्वृत्तये तेषामप्यनुष्ठेयत्वाच्चेत्यर्थः। विद्यानिर्वृतये = विद्यासिद्धये ॥ २७ ॥ इतिशमदमाद्यधिकरणम्।

अथ सर्वान्नानुमत्यधिकरणम्।

ब्रह्मविदां शमादयोऽनुष्ठेया इत्युक्तम्। तत्र भोजननियमरूपः शमविशेषोऽस्ति न वेति विचार्यत इति सङ्गतिः। प्राणविदः सर्वान्नानुज्ञानं विषयं वक्तुं शाखाद्वयस्थां श्रुतिं पठति। वाजसनेयिनामिति। जग्धं = भक्षितम्। विषयवाक्यार्थं संगृह्णाति। सर्वान्नभोजनानुमतिरिति। विमृशति। सा किं प्राणविद्यावतामिति। संशयमनूद्य पूर्वपक्षयति। विशेषाश्रवणादिति। सिद्धान्तयति। इतिप्राप्त इति। सूत्रार्थं व्याकरोति। चशब्द

किं पुनः प्राणविदः। "उषस्तिः किल चाक्रायणो ब्रह्मविदग्रेसगे मटचीहतेषु कुरुषु" (छा० १।१०।१) मटच्यो रक्तक्षुद्रपक्षिणस्तैर्हतेषु कुरुदेशस्थसस्येषु दुर्भिक्षदूषितेषु कुरुष्वित्यर्थः। इभ्यग्रामे वसन्ननशनेन प्राणसंशयापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकांक्षमाण इभ्यं कुल्माषान् खादन्तं भिक्षमाणस्तेनोच्छिष्टेभ्योऽन्ये न विद्यन्ते इति प्रत्युक्तः। पुनरपि "एतेषां मे देही" त्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान्प्रतिगृह्यानुपानप्रतिग्रहमिभ्येनार्थित उच्छिष्टं मे पीतं स्यादिति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनुयुक्तो 'न वा अजीविष्यमिमानखादन् (छा० १।१०।४) 'कामो म उदपानमिति कुल्माषाऽखादने स्वस्य प्राणसंशयापत्तिस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामचारं निषिद्धं स्यादित्युक्त्वा स्वभुक्तशेषं जायायै दत्त्वा तया च रक्षितान्दिनान्तरे पुनरपि प्राणसङ्कटे तया दत्तान्तानेवेभ्योच्छिष्टान्स्वोच्छिष्टांश्च चखादेति ब्रह्मविदां प्राणसङ्कट एव सर्वान्नानुमतिदर्शनादत्राविशेषदर्शनेऽपि प्राणात्यय एव प्राणविदोऽपि तथात्वमिति निश्चेयम् ॥ २८ ॥

## अबाधाच्च ॥ ३ । ४ । २९ ॥

"आहारशुद्धौ सत्त्वशुद्धिरि" (छा० ७ । २६ । २) त्याहारशुद्धिविधेरबाधादपि ब्रह्मविदां सर्वान्नीनत्वं प्राणसङ्कटविषयमेव। एवमतिशयितशक्तेर्ब्रह्मविदोऽपि ह्युच्छिष्टपरिग्रहभक्षणयोरापद्येव दर्शनादल्पशक्तेः प्राणविदः किं पुनरिति ॥ २९ ॥

## अपि च स्मर्य्यते ॥ ३ । ४ । ३० ॥

"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसे"ति प्राणसङ्कट एव सर्वान्नभक्षणं स्मर्यते ॥ ३० ॥

## शब्दाश्चातोऽकामकारे ॥ ३ । ४ । ३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नानुमतिः प्रणात्यय एवातोऽकामकारे यथेष्टा-

---

इति। आख्यायिकार्थमाह। चाक्रायण इति। इभमर्हतीति इभ्यो हस्तिपः। कुल्माष = माषविशेषः। न तावत्सर्वान्नानुमतौ विधिः श्रूयते। शब्दस्तु समानवचनाविरोधेन कल्पनीयः। सामान्यवचनानि च "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसे" त्यादीन्यापद्येव सर्वान्नानुमितिविषयाणि दृश्यन्ते। वैदिकश्च शब्दः कामकारनिवृत्तिप्रयोजनो दृश्यते। "तस्मात् ब्राह्मणः सुरां न पिबेदि"त्यादिः। अतस्तदनुसारेण प्राणविदोप्यापद्विषयैव सर्वान्नानुमितिरुच्यत इति कल्पनीयमितिभावः ॥ २८ ।

प्रागुपदर्शितसूत्रे ब्रह्मविदस्तथानुष्ठानदर्शनात् कैमुतिकन्याय उपपादितः। अत्र ब्रह्मविद्विषयवचनेन कैमुत्यमुपपादयन्नाह। आहारशुद्धाविति ॥ २९ ॥

आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिं प्रमाणयति। जीवितात्ययमापन्न इति ॥ ३० ॥

अतःशब्दार्थं व्याचष्टे। यत इति। "अकामकार"इति व्याख्येयपदम्। काठकवाक्यमुदाहरति।

चरणनिवृत्तौ कठसंहितायां श्रूयमाणशब्दश्चोपपद्यते "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा" इतीति पाप्मना संसृष्टो न भवामीति मत्वा सुरां न पिबतीत्यर्थः। "अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः। एतादृशोऽपि नाचारं श्रौतं स्मार्त्तं विवर्जयेदि"ति स्मृतिश्च। "तस्मान्न ह वा अस्यानन्नं जग्धमि" त्येवञ्जातीयकाः प्राणविद्यास्तुत्यर्था अर्थवादा एव, न शमादिवत् प्राणविद्याङ्गतया सर्वान्नभक्षणविधयः॥ ३१॥ इति सर्वान्नानुमत्यधिकरणम्॥ ७॥

## विहितत्वाच्चाश्रमकर्मापि॥ ३। ४। ३२॥

यज्ञादिश्रुतेरिति यज्ञाद्याश्रमकर्मणां विद्याहेतुत्वमुक्तमिदानीं तानि यज्ञादिकर्माणि केवलाश्रमनिष्ठेन मुमुक्षुणाप्यनुष्ठेयानि उत नेति चिन्त्यते, तत्र विद्याङ्गभूतानां तेषां केवलाश्रमस्याप्यङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति न केवलाश्रमधर्मा यज्ञादय इति प्राप्ते आह—आश्रमकर्मापीति। यज्ञादि आश्रमस्य कर्मापि केवलगृहस्थाश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्त्तव्यमेव। कुतः? विहितत्वात्। "यावज्जीवमग्निहोत्रं जुहोती" त्यादिना केवलाश्रमिणोऽपि जीवननिमित्ततया नित्यवद्विहितत्वात्॥ ३२॥

## सहकारित्वेन च॥ ३। ४। ३३।

"तमेतं वेदानुवचनेने" (बृ० ।४।४।२२) त्यादिना विद्यासाधनत्वेन विहितत्वाच्च विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयं यज्ञादिकर्म, नाप्यत्र नित्यानित्यसंयोगविरोधः कर्माभेदेऽपि संयोगभेदात् "एकस्य तूभयत्वे संयोगपृथक्त्वमि"ति न्यायात्। संयोगभेदो हि तुल्यबलवाक्यद्वयेन विनियोगपृथक्त्वं, तथा हि यावज्जीवादिवाक्यकल्पितो नित्यः संयोगो, न तस्य विद्याफलत्वं "तमेतं वेदानुवचनेने" त्यादिवाक्य-

---

तस्माद्ब्राह्मण इति। तथाच ब्राह्मणशब्दस्यासङ्कुचितवृत्तित्वात् ब्रह्मविदामपि इदं वाक्यं साधारणं किंपुनः प्राणविद इतिभावः। उक्तार्थं स्मृतिप्रमाणेन द्रढयति अतीतानागतज्ञानीति। श्रुतिस्मृतिसिद्धमर्थमुपसंहरति। तस्मादिति॥ ३१॥ इतिसर्वान्नानुमित्यधिकरणम्।

अथ विहितत्वाधिकरणम्।

पूर्वाधिकरणस्योत्तराधिकरणेन समं सङ्गतिं प्रदर्शयन्नाह। यज्ञादिश्रुतेरित्यादिना। विद्याङ्गभूतान्याश्रमकर्माणि केवलाश्रमिणाऽनुष्ठेयानि उत नेति विचार्य्यत इत्याह। यज्ञादिकर्माणीति। पूर्वपक्षमाह। तत्रेति। नित्यानित्यसंयोग इति। विद्यायाः कादाचित्कत्वात् तदङ्गतया कर्मणामनित्यत्वम्। "यावज्जीवविधिना तु नित्यत्वञ्चेति विरोध इत्यर्थः। सिद्धान्तयति। इतिप्राप्त इति। नित्यानि आश्रमकर्माणि विधीयन्ते यावज्जीवमग्निहोत्रं जुहोति। यावज्जीवं दर्शपौर्णमासाभ्यां यजेत" इति श्रुतिभ्यां नित्यहितोपायतयावश्यमनुष्ठेयानीत्यर्थः॥ ३२॥

समुच्चयव्यावृत्यर्थं विद्योत्पत्तिद्वारेणेत्युक्तम्। नित्यानित्यसंयोगविरोधं परिहरति। नापीति। कर्माभेदेऽपि संयोगभेदं न्यायेन दर्शयति। एकस्येति। वैल्वो वा खादिरो वा पालाशो वेत्येको नित्यः संयोगस्तेन क्रत्वर्थस्य खादिरत्वस्य खादिरं वीर्यकामस्येत्यपरः संयोगोऽनित्यः तेन पुरुषार्थतेत्येकस्य खादिरत्वस्योभयार्थत्वे

कल्पितस्त्वनित्यस्तस्य विद्याफलत्वं, यथैकस्यापि "दध्नो दध्ना जुहोती"ति नित्येन विनियोगेन क्रत्वर्थता दध्नेन्द्रियकामस्य जुहुयादित्यनित्येन विनियोगेन पुरुषार्थता तद्वत्। अतः सति वाक्यद्वये विनियुक्तविनियोगो न विरुध्यते ॥ ३३ ॥

ननु नित्याग्निहोत्रादिभ्यो भिन्ना एवापूर्वयज्ञादयो विविदिषायां विनियुज्यन्तां तत्र कुतो विनियुक्तविनियोगस्तत्राह—

## सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३ । ४ । ३४ ॥

सर्वथाऽपि विद्यासहकारित्वे आश्रमकर्मत्वेऽपि त एव यज्ञादयो धर्मा अनुष्ठेयाः। त एवेत्यवधारणेन कर्मस्वरूपभेदनिरासः। यथा "कुण्डपायिनामयने मासमग्निहोत्रं जुहोती"ति होमान्तरं तद्वदिह न भवतीत्यर्थः। कुतः? उभयलिङ्गात्। उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य तेषामेव विनियोगात् लिङ्गात् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३ । ४ । ३५ ॥

"धर्मेण पापमपनुदती" त्यादिना तैरेव यज्ञादिभिर्विद्यायाः अनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अत उभयत्र विनियोगाद्यज्ञादयस्त एव मुमुक्षूणां केवलाश्रमिणां चानुष्ठेयाः ॥ ३५ ॥ इति विहितत्वाधिकरणम्।

---

संयोगपृथक्त्वं हेतुस्तथा कर्मस्वभेदेऽपि संयोगभेदादुभयथात्वमित्यर्थः संयोगभेदार्थं दर्शयति। संयोगभेदोहीति। विनियोगः शेषत्वज्ञापकविधिः। तदेवोपपादयति। तथाहीत्यादिना। तस्येति। नित्यसंयोगस्येत्यर्थः। तस्य= अनित्यसंयोगस्य। उक्तन्यायार्थमुदाहरति। यथैकस्यापीति ॥ ३३ ॥

प्रकरणान्तरस्थेभ्यो नित्यकर्मभ्यो भिन्नान्येव कर्माणि विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते प्रकरणभेदस्य भेदकत्वात्कथं तत्र विनियुक्तविनियोग इत्याशङ्क्योत्तरसूत्रमवतारयति। नन्विति। प्रतिज्ञां व्याचष्टे सर्वथापीति। एवकारव्यावर्त्यं शङ्कया दर्शयति। त एवेति। भेदशङ्कानिवृत्तिं व्यतिरेकदृष्टान्तेन स्पष्टयति। यथेति। यथा कुण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धाग्निहोत्रात्कर्मान्तरत्वं तथा विविदिषन्तीति विद्यासंयुक्ततया विहितानामपि कर्मणां प्रकरणभेदादेव कर्मान्तरत्वशङ्कायां दृष्टान्ते जुह्वतीति होमविधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वेनाविधेयत्वादग्निहोत्रशब्दस्याख्यातपारतन्त्र्यादाख्यातस्य च जुहोतेः सन्निहितरूपवत्कर्म हित्वा व्यवहितनैयामिकाग्निहोत्रपरामर्शित्वायोगादाख्याताथवाचिनोऽग्निहोत्रशब्दस्यापि कर्मान्तरविषयत्वमेव युक्तम्। विविदिषावाक्ये तु विविदिषायामेव विधिश्रवणात् प्रसिद्धानामेव यज्ञादीनां यज्ञादिशब्दैरनुवादाद्विद्यासंयोगमात्रं विधीयते तेषामिति न कर्मान्तरतेत्यर्थः। उक्तमेवार्थं प्रश्नद्वारा हेतुमवतार्य्य स्फोरयति। कुत इत्यादिना ॥ ३४ ॥

"धर्मेण पापमपनुदती"त्यादिश्रुतिः प्रसिद्धयज्ञादिधर्मान्निर्दिश्य तैरनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। एवञ्च नित्यानि कर्माणि मुमुक्षुणा केवलाश्रमिणा च कर्तव्यानीत्यर्थः। अधिकरणार्थं निगमयति। अत उभयत्र विनियोगादिति। उभयत्र "तमेतं वेदानुवचनेन" इति श्रुतौ, "यावज्जीवमग्निहोत्रं जुहोति" इत्यत्र चेत्यर्थः ॥ ३५ ॥ इतिविहितत्वाधिकरणम्।

## अन्तरा चापि तु तद्दृष्टेः ॥ ३ । ४ । ३६ ॥

अथ चानाश्रमिणां विद्यायामधिकारोऽस्ति न वा ? इति विशये किं प्राप्तं, नास्तीति । कुतः ? तेषां विद्याऽसाधारणहेत्वाश्रमधर्माभावादिति प्राप्ते, इदमुच्यते । अन्तरा चापि त्विति । तुशब्दः पक्षं व्यावर्त्तयति । चशब्दो नियोगे । अन्तरा आश्रमधर्मान्तराले विनष्टदाराकृतदारत्वात् अनाश्रमित्वेन वर्त्तमानानामपि विद्यायामधिकारोऽस्त्येव । कुतः ? तद्दृष्टेः । दृश्यते हि उर्द्ध्वरेतसां रैक्वभीष्मसम्वर्तवाचक्नवीप्रभृतीनामपि ब्रह्मविद्यानिष्ठत्वम् । नच तेषां विद्यानुग्राहकधर्माभाव इति वाच्यम् । यज्ञहोमाद्यनैकान्तिकधर्माभावेऽपि जपोपवासदानदेवाराधनादीनामेकान्तिकानामाश्रमानियतानां विद्यानुग्राहकधर्माणां तेष्वपि सत्त्वात् ॥ ३६ ॥

## अपि च स्मर्य्यते ॥ ३ । ४ । ३७ ॥

"जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति विधुरादीनामनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते ॥३७॥

## विशेषानुग्रहश्च ॥ ३ । ४ । ३८ ॥

श्रूयते चानाश्रमनियतधर्मविशेषैस्तेषां विद्यानुग्रहः "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादि"ति । प्राग्जन्मानुष्ठितैरप्याश्रमधर्मैरिह विद्योदयः सम्भवति । "अनेकजन्मसंसिद्धस्ततो याति परांगतिमि"ति (गी० ६ । ४५) स्मृतेः ॥ ३८ ॥

तस्माद्विधुरादीनामप्यधिकारोऽस्त्येवेति । तथाऽप्याश्रमित्वानाश्रमित्वयोराश्रमित्वस्यैव वैशिष्ट्यमित्याह—

## अतस्त्वितरज्ज्यायो लिङ्गात् ॥ ३ । ४ । ३९ ॥

---

अथ विधुराधिकरणम् ।

आश्रमधर्माङ्गिका विद्येत्युक्तम् । अनाश्रमिणां विद्याधिकारः समर्थ्यत इति सङ्गतिः । मृतपत्नीका ये पुनः गुरुकुलादभिसमावृत्याकृतविवाहाः तेषामाश्रमान्तरस्थितानां विद्याधिकारोऽस्ति नवेति विद्यानुग्रहार्थं यज्ञाद्यभावात् साधारणधर्मसद्भावाच्चेति विमृशति । अथेति । नास्त्यधिकारः विद्यानुग्राहककर्माभावादिति पूर्वपक्षयति । किंप्राप्तमिति । नच साधारणधर्मैस्तदनुग्रहः । "यज्ञेन दानेने"त्यादिश्रुतौ आश्रमधर्माणामेव तदनुग्राहकत्वोक्तेरिति प्रश्नोत्तराभ्यामाह । कुतस्तेषामिति । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । सूत्राक्षराणि व्याकरोति । तुशब्द इति । प्रतिज्ञां विभजते । अनाश्रमित्वेनेति । हेतुं व्याचष्टे । ऊर्ध्वरेतसामिति ॥३६॥

"रैक्वादीनां ब्रह्मचर्य्येणोत्या"दिश्रुतिदृष्टेन साधारणधर्मजातेन "जप्येनैवरिव"तिस्मार्तप्रशंसावगतोत्कर्षेण जपयज्ञेन च विद्यानुग्रहोपादानं सम्भवतीत्याह । जप्येनैवेति ॥ ३७ ॥

"ब्रह्मचर्येण तपसा श्रद्धया विद्ययाऽऽत्मानमन्विष्ये"ति साधारणधर्ममात्रेणापि विद्यानुग्रहश्श्रूयत इत्याह । श्रूयतेचेत्यादिना ॥ ३८ ॥

अतोऽनाश्रमित्वादितरदाश्रमित्वमेव ज्यायो वरिष्ठं भूयोधर्मकाऽल्पधर्मकयोरतुल्यकार्यत्वात् । लिङ्गात् श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च । "तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चे" ति देवयानेन पथा गमनमाश्रमिणामेव दर्शयति । कथं गम्यते ? "ये चेमेऽरण्य" इत्यरण्यवासिनामेव ग्रहणात् "चत्वार आश्रमा" इति नियमात् । "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । सम्वत्सरमनाश्रमी स्थित्वा कृच्छ्रं समाचरेदि"ति निन्दावचनाच्चाश्रमित्वेनैव भाव्यम् । अपि च त्रिनष्टदारा अकृतदारा वा विधुरादयः केनचिद्धेतुनाऽऽश्रमप्रतिपत्त्यसम्भवे तेषामप्यपवर्गो जपादिसाधारणधर्मैर्विद्यानुग्रहादवगम्यते । तथाह याज्ञवल्क्यः "नाश्रमः कारणं धर्मे क्रियमाणो भवेद्द्विजः । अतो यदात्मनोऽपथ्यं परस्य न तदाचरेत्" । इतिहासे च "विद्यावृत्तिविनीतस्य निगृहीतेन्द्रियस्य च । आर्जवे वर्त्तमानस्य आश्रमैः किं प्रयोजनमि"ति ॥ ३९ ॥ इति विधुराधिकरणम् ।

अथ च नैष्ठिकवैखानसपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति न वेति विशये, अस्तीति विधुरादिवदनाश्रमधर्मैर्जपादिभिस्तेषामपि विद्यानुग्रहसम्भवादिति प्राप्ते, आह—

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ३ । ४ । ४० ॥

तुशब्दः पक्षनिषेधार्थः । तद्भूतस्य नैष्ठिकादिधर्मनिष्ठस्य नातद्भावः, । अनाश्रमितयाऽवस्थितिर्न सम्भवति । कुतः ? तद्रूपाभावेभ्यो नियमात् । तद्रूपा भावाः नैष्ठिकादिधर्माभावास्तेभ्यः शास्त्रैर्नियमात् नैष्ठिकादिबृहद्धर्मनिष्ठान्स्वाश्रमधर्मत्यागान्नियच्छन्ति शास्त्राणि । "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नि" ( छा० २ । २३ । १ ) ति नैष्ठिकस्य "अरण्यमीयान्न ततः पुनरेयादि" ति

---

अस्ति ब्रह्मविद्यायामधिकारो विधुरादीनामुभयोर्मध्ये आश्रमित्वस्यैवाधिक्यमित्याह । तस्मादिति । जप्येन तदनुग्रहादित्यर्थः । सूत्रार्थं व्याकरोति । अत इति । भूयोधर्मकेति । शङ्कां प्रत्यतुल्यकार्यत्वादित्यर्थः । तेन भूयोधर्माल्पधर्मयोः भक्तिप्रपत्त्योर्व्यभिचारादिति निरस्तम् । आश्रमित्वस्य ज्यायस्त्वे श्रुतिस्मृत्यनुगृहीतत्वं हेतुमाह । श्रुतिलिङ्गादिति । श्रुतौ पुण्यकृतत्वविशेषणाल्लिङ्गाच्च श्रेष्ठमाश्रमित्वमित्याह । तेनेति । उक्तश्रुतिलिङ्गेनेत्यर्थः । पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृदुच्यते । तैजसः = शुद्धसत्त्वः । आश्रमित्वस्य श्रेष्ठत्वे स्मार्त्तं लिङ्गमनुकूलयति । अनाश्रमीति ॥ ३९ ॥ इतिविधुराधिकरणम् ।

अथ तद्भूताधिकरणम् ।

विधुरादिवत् अनाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकार इति शङ्कया सङ्गतिः । किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति नवेति तेषां तदधिकारोपपादकप्रायश्चित्तसम्भवासम्भवाभ्यां संशये पूर्वपक्षः

वैखानसस्य "संन्यस्याग्निं न पुनरावर्त्तयेदि"ति परिव्राजकस्य। अतो विधुरादिवत्तेषामनाश्रमित्वासम्भवान्न ब्रह्मविद्याधिकारः। जैमिनेराचार्यस्याप्येतत्सम्मतम्। "किंच ब्रह्मचर्यं समाप्य गृही भवेदि" (जा० ४) त्याद्यारोहणविधिवदवरोहणविध्यदर्शनात् शिष्टाचाराभावाच्च ॥४०॥

नन्वधिकारलक्षणे "अवकीर्णी पशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" (जै० ६। ८। २२।) इति "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेते" त्यादिना प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तविधानात्कृतप्रायश्चित्तस्य ब्रह्मविद्यायामधिकारः स्यादित्याशङ्क्याह—

## नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ३। ४। ४१॥

आधिकारिकम् अधिकारलक्षणोक्तम् प्रायश्चित्तं नैष्ठिकधर्मच्युतानां न सम्भवति। कुतः? तेषां पतनस्मरणात् प्रायश्चित्तायोगात्। तथा च स्मृतिः "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महे"ति। अपिशब्दः प्रायश्चित्तस्योपकुर्वाणविषयकत्वद्योतनार्थकः ॥ ४१ ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ३। ४। ४२॥

अपि सम्भावनायाम्। एके त्वाचार्याः गुरुदारादिभ्योऽन्यत्र नैष्ठिकादिब्रह्मचर्यच्यवनस्य महापातकविलक्षणत्वादुपपातकत्वादुपकुर्वाणकवन्नैष्ठिकस्यापि प्रायश्चित्तभावं मन्यन्ते, ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च अशनवत्, यथा मध्वशनादिनिषे-

---

तेषामपि विद्याधिकारोऽस्ति। अनाश्रमित्वेऽपि विधुरादिवत्साधारणधर्मैर्विद्यानुग्रहसम्भवादित्याह। अथचेति। समादधाति। इतिप्राप्त इति। सूत्रं व्याचष्टे। तुशब्द इति। नियमशास्त्रं दर्शयति। ब्रह्मचर्य्येति ॥ ४० ॥

अग्रिमसूत्रमवतारयति। नन्विति। षष्ठेऽध्याये "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वादि"ति जैमिनिसूत्रम्। अवकीर्णिनां ब्रह्मचर्यप्रच्युतानां "ब्रह्मचार्य्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति स्मृतिविहितनैर्ऋतपशुरूपं प्रायश्चित्तं सिद्धं कृत्वा तत्राग्निर्विचारितः। तदधिकरणमित्थम्। यदाहवनीये जुहोतीति सर्वेषां होमानामाहवनीयाधारत्वविधेरवकीर्णिः यथाऽवकीर्णः। तया सह वा भार्यामधिगम्य वा अग्नीनाधाय आहवनीये अवकीर्णिपशुं करोतु इतिपूर्वपक्षं कृत्वा "जायापती अग्निमादधीयाताम्।"इत्याधानस्य दम्पतिकर्तृकत्वस्मरणेन परस्त्रिया सहाग्न्याधानासम्भवात्। "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" इत्यस्खलितब्रह्मचर्य्यस्य विवाहविधानेनाकृतप्रायश्चित्तस्य विवाहायोगाच्च अग्न्याधानासम्भवात् उपनयनहोत्रवत् लौकिकाग्नावेवावकीर्णिपशुरिति पूर्वाधिकरणे लौकिकाग्नावेव उपनयनहोमः समावर्त्तनानन्तरं श्रुतस्य दारपरिग्रहस्य उपनयनात्पूर्वमसम्भवेन अग्न्याधानरहितस्य माणवकस्याहवनीयाभावात् लौकिकाग्नावेवोपनयनहोम इति निरूपितम्। तदर्थं सूत्रे तद्वदिति परामृश्यते ॥ ४१ ॥

पूर्वपक्षसूत्रमिदम्। तदर्थं व्याचष्टे। अपि सम्भावनायामिति। सामान्यमुखेन प्रवृत्ता नैर्ऋतपशुश्रुतिरुपकुर्वाणमात्रविषयत्वेन न सङ्कोचयितुं शक्या बाधकाभावात्। "आरूढो नैष्ठिकं धर्ममि"ति स्मृत्या विशेषविषयाऽपि बाधितुं न शक्यते श्रुतेस्सामान्यमुखेन नैष्ठिकरूपविशेषपर्य्यवसानं शीघ्रप्रवृत्तिकम्। स्मृतेर्न-पश्यामी'ति प्रायश्चित्तदर्शनाभावेन प्रायश्चित्ताभावानुमानं तेन श्रुत्यनुमाने विलम्ब इति विशेषसंभावात्। अतो

घस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानं, तदुक्तं स्मृतिकर्तृभिः "उत्तरेषां चैतदविरोधी"ति। उपकुर्वाणब्रह्मचारिणि उक्तो धर्म उत्तरेषां चाश्रमिणां स्वाश्रमाविरोधी भवतीत्यर्थः। तथात्रापि ब्रह्मचर्यच्यवने प्रायश्चित्तसम्भवादस्ति विद्यायोग्यता। एवं यतिवनस्थयोरपि प्रमादाद् ब्रह्मचर्यभङ्गे प्रायश्चित्तमूह्यम् ॥ ४२ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ३ । ४ । ४३ ॥

ऊर्द्ध्वरेतस उपपातकित्वे महापातकित्वे वोभयथाऽपि स्वाश्रमप्रच्युतत्वाच्छिष्टैस्ते बहिःकार्याः। कुतः? "आरूढो नैष्ठिकमि" त्यादिस्मृतेः। आचारात्, वर्जयन्ति हि तान् शिष्टाः विद्योपदेशसहभोजनादिव्यवहारेषु। यद्यपि किल्बिषनिर्हरणाय कैश्चिद्वाक्यैस्तेषु प्रायश्चित्तमुपदिश्यते, तथापि कर्माधिकारापादनी शुद्धिस्तेषां न सम्भवति तद्धेतुप्रायश्चित्ताभावात् "प्रायश्चित्तं न पश्यामी"ति स्मृतेरित्यर्थः। अतः प्रायश्चित्ते कृतेऽपि तादृशशुद्ध्यनुरूपयोग्यताभावाद्ब्रह्मविद्याधिकारासम्भव इति भावः। जपादिना पारमार्थिकफलभाक्त्वेऽपि व्यवहारयोग्यता नास्तीति राद्धान्तः ॥ ४३ ॥ इति तद्भूताधिकरणम्।

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३ । ४ । ४४ ॥

अङ्गाश्रितान्युद्गीथाद्युपासनानि किं स्वामिनो यजमानस्य कर्माणि उत ऋत्विजः? इति विशये किं युक्तं, स्वामिन इति। कुतः? फलश्रुतेः। "यदेव विद्यये"ति

---

नैष्ठिकानां तावन्मध्वशन इव प्रायश्चित्तमस्तीत्यर्थः। उक्तार्थं स्मृतिवचसा प्रमाणयति। तदुक्तमिति। स्मृतिवचनस्यार्थं विवृणोति। उपकुर्वाणब्रह्मचारिणि इत्यादिना। "उत्तरेषाञ्चैतदविरोधि"इत्यत्रैतच्छब्दः पूर्वोक्तधर्मान् प्रायश्चित्तञ्च परामृशति। स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः गृहस्थादिष्वनापातार्थः इतिभावः ॥ ४२ ॥

सिद्धान्तसूत्रमाह। बहिस्त्विति। सूत्रार्थं व्याचष्टे। ऊर्द्ध्वरेतस इति। अतिदेशवचनेन प्रायश्चित्तं प्राप्तं पतनस्मृतिश्चास्ति तयोः कथं विरोधः परिह्रियत इत्यत्राह। यद्यपीति। कर्मशक्तिस्त्रिधा प्रत्यवायकरी वैदिकधर्माधिकारप्रतिबन्धकरी सजातीयकर्मरुचिकरी चेति। तत्र कानिचित्प्रायश्चित्तानि शक्तित्रयविनाशकानि, कानिचिदन्यतमशक्तिविनाशकानि अतिदेशपतनस्मृतिविरोधेऽतिदेशस्मृतिः प्रत्यवायजननशक्तिविनाशकं प्रायश्चित्तमाह पतनस्मृतिस्तु वैदिककर्मानधिकारशक्तिविनाशकप्रायश्चित्ताभावमाह। "येन शुद्ध्ये"दित्युक्तत्वात्। तस्मादविरोधः। अतोऽतिदेशसिद्धप्रायश्चित्तेन नरकानुभवलाघवे सत्यपि पतनस्मृतिवचनान्न ब्रह्मविद्याधिकार इत्यर्थः ॥ ४३ ॥ इतितद्भूताधिकरणम्।

अथ स्वाम्यधिकरणम्।

विचाराङ्गं संशयं दर्शयति। अङ्गाश्रितानीति। दहराद्युपासनागोदोहनाद्यन्यतरन्यायविषयकत्वानवधारणं संशयोत्थानवीजं द्रष्टव्यम्। विशये=सन्देहे। ऋत्विक्परिक्रयस्याङ्गार्थत्वात् पृथक्फलवदुपासनं प्रधानमिति फलार्थिना यजमानेनैवोपासनं कार्यम्। गोदोहनादेः पृथक्फलत्वेऽपि ऋत्विक्कर्तृकप्रणयनाद्याश्रितस्य पृथक्कृत्य यजमानेनोपादातुमशक्यत्वान्न यजमानकर्तृत्वम्। उपासनानान्तु क्रियारूपाणामुद्गीथादिभ्यः पृथक्कृत्य

क्रतुवीर्यवत्तरत्वफलस्य यजमानाश्रयत्वश्रवणाद्दहरोपासनादिष्विव स्वामिन एवैषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते स्म ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३ । ४ । ४५ ॥

क्रत्वङ्गत्वेन क्रत्वधिकृतस्यैवोद्गीथाद्युपासनेऽधिकारात् क्रतोश्च साङ्गस्यार्त्विज्यत्वेनैतदपि गोदोहनादिवदङ्गाश्रयत्वेनार्त्विज्यमङ्गं कुर्वतः ऋत्विजः कर्मैवेत्यौडुलोमिराचार्यो मन्यते स्म । किं कारणम् ? तस्मै हि यजमानफलसाधनभूतसाङ्गक्रत्वनुष्ठानाय हि ऋत्विक् परिक्रीयते । क्रतुप्रयोगान्तःपातीनि चोद्गीथाद्युपासनानीति ऋत्विजैव निर्वर्त्यानि । यत्तूक्तं फलस्य यजमानाश्रयत्वश्रवणादिति । नैष दोषः । शास्त्रफलं प्रयोक्तरीति न्यायेन तस्य तद्गामित्वात् । यजमानेन हि स्वगामिफलकसाङ्गप्रयोगकरणाय ऋत्विजां दक्षिणया क्रीतत्वात्कर्तृत्वेऽपि न तेषां फलभाक्त्वमतः क्रयणद्वारा कर्तृत्वभोक्तृत्वसामानाधिकरण्यमप्युपपद्यते । भृत्यकर्तृके युद्धे राजा युध्यते इतिवदिति भावः । तस्मादङ्गोपासनान्यृत्विक्कर्माणीति सिद्धम् ॥ ४५ ॥ इति स्वाम्यधिकरणम् ।

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३। ४। ४६।

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्वि-

---

यजमानेन कर्तुं शक्यत्वात् प्रधानत्वाच्च याजमानत्वमेव युक्तम् । औद्गात्रसमाख्यादिकन्तु "शास्त्रफलं प्रयोक्तरी"ति न्यायविरोधान्नादरणीयमिति भावः ॥ ४४ ॥

सिद्धान्तसूत्रमाह । आर्त्विज्यमिति । सूत्रार्थं विवृणोति । क्रत्वङ्गत्वेनेति । उपासनं फलसाधनत्वेन प्रधानं सदपि ऋत्विक्कर्तृकमेव साङ्गप्रधानकरणायैव ऋत्विक्परिक्रयणात् प्रधानं याजमानमङ्गमार्त्विज्यमिति विभागाभावात् । यागदानादिकन्तु प्रधानमिति कृत्वा न यजमानेन क्रियते किन्तु यजमानद्रव्यगतस्वत्वत्यागात्मकं तदस्वामिना ऋत्विजा कर्तुं न शक्यमिति तेन क्रियते । अतएवाङ्गं सदपि दक्षिणादानं यजमानेन क्रियते यजमानफलसाधनकर्मकरणार्थस्य दक्षिणादानस्य यजमानद्रव्येण कर्तव्यत्वात्तद्गतस्वत्वत्यागस्यान्येन कर्तुमशक्यत्वात् । शास्त्रफलं प्रयोक्तरीत्यौत्सर्गिकन्यायस्य ऋत्विक्परिक्रयशास्त्रानुसारेण फलभाजो यजमानस्य प्रयोजककर्तृत्वविषयतया तत्रैव पूर्वतन्त्राधिकरणे निर्णीतत्वात् । तस्मादुद्गात्रादिसमाख्ययापि अनुग्रहलाभादुद्गातृशाखाद्याम्नातमुद्गीथाद्युपासनमुद्गात्रादिभिरेव कार्यमिति भावः । सूत्रस्थं तस्मा इति पदमवतारयितुं पृच्छति किंकारणमिति । यजमानेत्यादिना तच्छब्दव्याख्यानम् । ततः किमित्यत आह । क्रतुप्रयोगान्तःपातीनीति । प्रागुक्तार्थं दूषयितुमनूद्यति । यत्तूक्तमिति । तस्य=फलस्य । तद्गामित्वात्=यजमानगामित्वात् । अत्र उद्गातृकर्तृकमेवोपासनं यजमानगामिफलजनकमिति स्पष्टं प्रतीतेः । ऋत्विजां परिक्रीततया यजमानस्य प्रयोजककर्तृत्वसम्भवेन "शास्त्रफलं प्रयोक्तरी"ति न्यायस्याविरुद्धत्वादितिभावः । अधिकरणार्थं निगमयति । तस्मादिति ॥ ४५ ॥ इति स्वाम्यधिकरणम् ।

अथ सहकार्यन्तराधिकरणम् ।

यज्ञादीनां विद्यासहकारिणां निरूपणानन्तरं सङ्गतिविशेषप्राप्तां सर्वान्नानुमत्यादिचिन्तां कृत्वा पुनरपि

बाथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण" (बृ० ३।५।१) इति बृहदारण्यके कहोलप्रश्ने श्रूयते। तत्रेदं चिन्त्यते। किमत्र बाल्यपाण्डित्यवन्मौनमपि विद्याङ्गतया विधीयते उतानूद्यत इति विशये किं तावत्प्राप्तम्? अनूद्यत इति। मौनं च ज्ञानं तच्च पाण्डित्येन गतमित्येवं प्राप्ते, ब्रूमः—सहकार्य्यन्तरविधिरिति। विधीयत इति विधिः, सहकार्यन्तरस्य विधिः सहकार्यन्तरविधिः। तद्वतो विद्यावतः। सहकार्यन्तरं मौनं विधीयते विध्यादिवत्। विधीयत इति विधिस्तेन यज्ञदानप्रभृत्याश्रमधर्माः शमदमादयश्च गृह्यन्ते। आदिशब्दाच्छ्रवणमननग्रहः। आश्रमधर्मवत् शमदमादिवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयं मौनं विद्यायाः सहकार्यन्तरं विधीयते। यद्यपि बाल्ये एव विधेः पर्यवसानं, तथाऽप्यपूर्वत्वान्मुनित्वमपि विधेयम्। न च त्रयाणां विधाने वाक्यभेदो दोष उपरिधारणवदिष्टत्वाद्वाक्यभेदस्य। ननु पाण्डित्यग्रहणादेव सिद्धं मौनं, नेत्याह। पक्षेणेति। मुनिशब्दस्य मननान्मुनिरिति व्युत्पत्त्या प्रकृष्टमननशीले पक्षेण प्रसिद्धेः "मुनीनामप्यहं व्यासः" (गी १०।३७) इति "वाल्मीकिर्मुनिपुङ्गव" इति च प्रयोगदर्शनात्। प्रकृष्टमननं च श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनालम्बनस्य परमात्मस्वरूपगुणादेरनवरतध्यानरूपं भगवदनुग्रहासाधारणं कारणं निदिध्यासनाख्यम्। ततश्चैवं वाक्यार्थः। यस्मात्पूर्वे ब्राह्मणा आत्मानं विदित्वा पुत्रैषणादेर्व्युत्थाय भिक्षाचर्य्यं चरन्ति, तस्मादधुनातनोऽपि ब्राह्मणो विद्यावान् विद्यानिष्पत्तये पाण्डित्यं निर्विद्य, साङ्गवेदाध्ययनजा बुद्धिः पण्डा तद्वान्पाण्डितस्तस्य कृत्यं श्रवणापरपर्यायं पाण्डित्यं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेत् श्रवणजज्ञानस्य बालभावेन मननेनासम्भावनानिरासेन, बालस्य भावेन वा दम्भादिरहितशुद्धचित्तत्वेन स्थातुमिच्छेत्। बाल्यं च पाण्डित्यं च निर्विद्य एवं श्रवणमनने कृत्वाऽनन्तरं

---

विद्यायामेव सहकार्यन्तरं निरूप्यत इति सङ्गतिः। संशयोत्थापकं विषयवाक्यमुदाहरति। तस्माद्ब्राह्मण इति। विचाराङ्गं संशयं दर्शयति। तत्रेति। मौनस्य पाण्डित्यरूपत्वतदर्थान्तराभ्यां संशय इतिभावः। मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात्। पाण्डित्यं निर्विद्येति विहितमेव ज्ञानम"थ मुनिरि"त्यत्रानूद्यत इति पूर्वपक्षं गृह्णाति किन्तावदिति। सिद्धान्तयति। इत्येवं प्राप्त इति। सूत्रार्थं विवृणोति। विधीयत इत्यादिना। यथा "यज्ञेन दानेने"त्यादिना 'शान्तो दान्त'इत्यादिना च यज्ञादिशमादिश्च विद्यासहकारी विधीयते, यथाच श्रवणं मननञ्चादिपदग्राह्यं गृह्यते तथा 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये''त्यादिना पाण्डित्यं बाल्यं मौनमिति त्रयं विद्यायास्सहकार्यन्तरं विधीयत इत्याह। विद्ध्यादिवत्र्विधीयते इति विधिस्तेनेत्यादिना। वाक्यभेदप्रसङ्गाद्बाल्य एव विधिरित्युक्तं तत्राह। यद्यपीति। 'अमौनञ्च मौनञ्च निर्विद्य' इति श्रवणमननवदनुष्ठेयत्वोक्तेर्मौनस्य विधेयतेत्याह। तथापीति। इष्टापत्त्या वाक्यभेदं परिहरति। नचेति। मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात् पाण्डित्यशब्देनैव मौनं 'पाण्डित्यं निर्विद्ये'ति विहितमेव ज्ञानमथमुनिरित्यत्रानूद्यत इति तदंशेऽपूर्वत्वमसिद्धमिति शङ्कते। नन्विति। 'पक्षेणे'ति सूत्रखण्डम्। पण्डितशब्दस्य ज्ञानमात्रार्थत्वान्मुनिशब्दस्य प्रकृष्टमननशीलगामित्वादर्थभेदान्न पण्डितशब्देन मुनिशब्दस्य प्राप्तार्थतेति भावः। पक्षेणेति। प्रकृष्टमननशील इति पक्षेण प्रयोगः पाक्षिकप्रयोग इत्यर्थः। यद्वा पक्षः परिग्रहः 'पक्ष परिग्रहे' इति धातुः। आदरेण स्वीकारः। तेन

मुनिः स्यात्, परब्रह्मण्यनवरतध्यानशीलो भवेत्। तत्परिपाकाय एवममौनं मौनेतरं सहकारिकलापं मौनं च निदिध्यासनं यथावल्लब्ध्वाऽनन्तरं ब्राह्मणो भवति, निष्पन्नविद्यो भवतीत्यर्थः। ततो भगवदनुग्रहेण तत्साक्षात्कारं लभत इति भावः। नच श्रवणादेरेव साक्षान्मोक्षहेतुत्वमस्तु, किमनुग्रहाङ्गीकारेण गौरवादिति वाच्यम्, तेषां व्यभिचारदर्शनात्। अस्य त्वन्वयव्यतिरेकाभ्यामव्यभिचारित्वश्रवणादवश्याभ्युपगम इत्यर्थः। "शृण्वन्तोऽपि बहवो यं न विदुः, नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः, तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं" इत्यादिश्रुतेः। न च "ततस्तु तं पश्यति निष्कलं ध्यायमान" इति ध्यानस्यैव तत्साक्षात्कारं, प्रतिप्रधानोपायत्वश्रवणात्तद्बाधः स्यादिति वाच्यम्। अविरुद्धत्वात्। ध्यानस्य करणत्वेन भगवत्प्रसादस्य व्यापारत्वेनाङ्गीकारादुभयोः सामञ्जस्यमन्यथा प्रसादश्रुतेर्बाधप्रसङ्गात्। अतः सर्वाश्रमस्थस्य विदुषो यज्ञादिस्वाश्रमधर्मवत्पाण्डित्यादित्रितयं विद्यायाः सहकार्यन्तरं विधीयते॥४६॥

ननु यदि सर्वाश्रमस्थविदुषां स्वस्वाश्रमधर्मसहकारिणी पाण्डित्यादिसहकारिणी च विद्या ब्रह्मप्राप्तिकेत्युच्यते, तर्हि कथं छान्दोग्ये "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे" इत्यारभ्य "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते" इति गृहस्थेनोपसंहार इत्याशङ्क्याह—

## कृत्स्नभावात्तु गृहिणोपसंहारः॥ ३। ४। ४७॥

तुशब्दः शङ्कोच्छेदार्थः। गृहिणोपसंहाराच्चास्यैव यथोक्तविद्यानुष्ठानाद्ब्रह्मप्राप्तिरिति

---

हि गमनं प्रकृष्यते, प्रकर्षश्च मननस्य स्नेहपूर्वकतया चिरविरहितनायिकानायकविषयस्यैव निरन्तरमनुवर्त्तमानत्वरूपमुपासनालम्बनस्य शुभाश्रयस्य भगवद्विग्रहादेः पुनः पुनः संशीलनम्, तदपि विद्यानिष्पत्यर्थमेव। सति ह्यस्मिन् उपासनाकालेऽपि तद्विषयचित्तैकाग्र्यात् विद्या दृढा भवति। यस्योपासनाव्यतिरिक्तकालेषु चिन्तान्तरावेशः तस्योपासनकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशात् न विद्या दृढाभवेदितिभावः। प्रकृष्टमननशब्दार्थं निर्वक्ति। प्रकृष्टमननञ्चेति। विषयवाक्यस्यार्थं विवृणोति। ततश्चैवमिति। श्रुतिबोधितश्रवणमननादितः मुक्तिसम्भवे किं भगवदनुग्रहेणेत्याशङ्क्य परिहरति। नचेति। तेषाम्=श्रवणमननादीनाम्। अस्य=भगवदनुग्रहस्य। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। शृण्वन्तोऽपीति। अनेन श्रवणादीनां व्यभिचारित्वं स्फोरितं भगवदनुग्रहस्याव्यभिचारित्वञ्च। श्रुत्यर्थस्तु प्रागुपदर्शितदिशावसेयः। श्रीभगवत्स्वरूपविषयकसाक्षात्कारं प्रति ध्यानस्यैव प्रधानोपायत्वं श्रूयते भगवदनुग्रहस्य कारणत्वे तद्बाधः प्रसज्येत इत्याशङ्क्य परिहरति। नचेति। भगवद्विषयकसाक्षात्कारं प्रति ध्यानस्य कारणत्वमङ्गीकुर्मः भगवदनुग्रहस्य तु तद्व्यापारतया स्वीकारान्न किञ्चिदनुपपन्नमित्याशयेनाविरुद्धत्वादित्यस्यार्थं विवृणोति। ध्यानस्येति। उभयोः=ध्यानभगवदनुग्रहयोः। विपक्षे बाधकतर्कमाह। अन्यथेति। भगवदनुग्रहस्य व्यापारत्वेनास्वीकारे। प्रसादश्रुतेरिति। "यमेवैष वृणुते तेन लभ्य" इति प्रागुदाहृतश्रुतेरित्यर्थः। सूत्रार्थं निगमयति। अत इत्यादिना॥ ४६॥

"कुटुम्बे शुचौ देशे"इत्यादिना गृहस्थाश्रमधर्मैर्मुक्तिरिति छान्दोग्योपनिषदुपसंहारो दृश्यत। इति

नाभिप्रेयतें, अपि तु कृत्स्नभावात् कृत्स्नानां धर्माणां तत्र सत्त्वात्तेनोपसंहारः। सन्ति हि गृहस्थं प्रति कर्त्तव्यतयोपदिष्टा बहुलायासा बहवो यज्ञादयः स्वाश्रमधर्माः, आश्रमान्तर-धर्माश्च यथासम्भवमहिंसेन्द्रियसंयमादयः। तस्मात्तत्र धर्मबाहुल्यात्तेनोपसंहारः सर्वाश्रमधर्म-प्रदर्शनार्थः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये "अथ भिक्षाचर्यं चरन्ती" ति पारिव्राज्यैकान्तधर्मभिक्षाचरण-पूर्वकः। अथ मुनिरिति मौनोपदेशः सर्वाश्रमधर्मप्रदर्शनार्थ इत्याह—

## मौनवदितरेषामप्युपदेशात् ॥ ३। ४। ४८ ॥

"यथा बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ती"त्यादौ पारिव्राज्यं मौनमुपदिष्टं, तद्वदितरेषां नैष्ठिका-दिधर्माणामपि "त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्म-चार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेती"त्यादावुपदेशात्। तत्र हि सर्वाश्रमसाधारणेन ब्रह्मसंस्थशब्देन सर्वेषामप्याश्रमिणां ब्रह्मप्राप्तिरुपदिश्यते। तथा जाबालोपनिषदि च "ब्रह्मचर्यं समाप्य गृही भवेदि"त्यादिना चत्वार आश्रमा उपदिश्यन्ते। अतः सुष्ठूक्तं "यज्ञादिसर्वाश्रमधर्मवन्मौ-नं तृतीयं विद्यायाः सहकार्यन्तरं विधीयत" इति ॥ ४८ ॥ इति सहकार्यन्तरविध्यधि-करणम् ॥

## अनाविष्कुर्वन्नन्वयात्। ३। ४। ४९ ॥

"बाल्येन तिष्ठासेदि" ( बृ० ३। ५। १ ) त्यत्र किं बालचरितं बाल्यं विदुषो-पादेयम् उत जितेन्द्रियतया दम्भदर्पादिराहित्यं भावशुद्धिमात्रं बाल्यमिति विशये

---

गृहस्थाश्रमधर्मा एव विद्यासहकारिण इति तदाशयोऽवसीयते। अतो गृहस्थानां यज्ञदानादितदर्थद्रव्यार्जनादि-बहुव्यापारव्यग्रचेतसां मुक्तिरूपमालम्बनसंशीलनं न घटते। 'अतः अथ मुनिरि'ति पाण्डित्यानुवाद इत्येवोचित-मित्याशयेनोत्तरसूत्रमवतारयितुं शङ्कते। नन्विति। सूत्राक्षराणि व्याकरोति। तुशब्द इति। नहि गृहस्था-नामेव विद्या कृत्स्नेष्वप्याश्रमेषु विद्यासद्भावे श्रुतीनामुदाहृतत्वात् अतो गृहस्थेषु कृत्स्नानां धर्माणां सत्त्वात्तेनो-पसंहार इत्यर्थः। तमेवोपपादयति। सन्तिहीत्यादिना। सूत्रार्थं निगमयति। तस्मादिति ॥ ४७ ॥

अनन्तरसूत्रार्थं स्फुटीकुर्वन्नाह। "अथ भिक्षाचर्य्यं चरन्तीति। सूत्रस्थमौनशब्दार्थं दर्शयितुं श्रुतिं पठति। यथा बाल्यञ्चेति। इतरेषामिति व्याख्येयपदम्। उक्तश्रुत्यर्थं संक्षिपति। तत्रहीत्यादिना। तत्र= छान्दोग्ये। उक्तार्थं जाबालोपनिषद्वाक्येन प्रमाणयति। तथा जाबालोपनिषदि चेति। यज्ञादिसर्वाश्रम-धर्मवत् बाल्यपाण्डित्ययोस्तृतीयं मौनं विधेयमिति प्रदर्शयन्नधिकरणार्थं निगमयति। अत इति ॥ ४८ ॥ इति-सहकार्यन्तरविद्ध्यधिकरणम्।

अथ इत्यैहिकाधिकरणम्।

अथ "बाल्येन तिष्ठासेदि"त्यत्र विधेयं बाल्यं बालकर्मरूपं कीदृशमिति विचार्यते। संशयं दर्शयति

तिष्ठन्मूत्रपूरीषादि कर्म बाल्यमिति पूर्वः पक्षः। राद्धान्तस्तु बालो यथा स्वाभिजनाद्यनाविविष्कुर्वन् दम्भदर्पादिरहितो वर्त्तते, तथा विद्वानपि पाण्डित्यप्रयुक्तस्वमाहात्म्याद्यनाविष्कुर्वन् दम्भदर्पादिराहित्येन बाल्येन वर्त्तेत। कुतः? अन्वयात्। तस्यैव विद्यान्वययोग्यत्वात्। कामचारादेस्तु "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः, नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयादि"त्यादिभिर्विद्योत्पत्तिविरोधित्वावगमात् ॥ ४९ ॥ इति अनाविष्काराधिकरणम् ॥ १३ ॥

अथ विद्योत्पत्तिकालश्चिन्त्यते—

## ऐहिकमप्रस्तुते प्रतिबन्धे तद्दर्शनात् ॥ ३ । ४ । ५० ॥

किं पूर्वोक्तसाधनैः सिध्यती विद्येहैव जन्मनि सिध्यति उत जन्मान्तर इति संशयः। तत्र किं युक्तम्? इहैवेति। कुतः? दृष्टार्थत्वाद्विद्यायाः। नहि कश्चित्परत्र मे विद्या जायतामिति कामयमाना विद्यासाधनेषु प्रवर्त्तते। अतो यस्मिन् जन्मनि विद्यायां यतते; तत्रैव तत्फलेन भवितव्यमिति प्राप्ते, ब्रूमः। ऐहिकं विद्याफलं प्रतिबन्धेऽप्रस्तुते सति विद्याविरुद्धफलं देशकालविशेषापेक्षं फलोन्मुखं कर्म प्रतिबन्धशब्दवाच्यं तस्मिन्न विद्यमाने सतीत्यर्थः। प्रस्तुते तु तस्मिन् जन्मान्तरे विद्यासिद्धिः। कुतः? तद्दर्शनात्। "मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्, ब्रह्मप्राप्ता विरजोऽभूद्विमृत्युरि"त्यादिश्रुतिर्ह्यैहिकीं विद्यासिद्धिं दर्शयति। "गर्भस्थ एव वामदेवः प्रतिपेदे" इत्यादिस्तु जन्मान्तरसाधनजां, जन्मान्तरे स्मृतिश्च "अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण! गच्छति। अनेकजन्मसंसिद्धस्ततो याति परां गतिमि" त्यादिका, अतोऽस्मिन् जन्मनि जन्मान्तरे वा प्रबलकर्मान्तरप्रतिबन्धक्षयानन्तरमेव विद्या सिध्यतीति सिद्धम् ॥ ५० ॥ इत्यैहिकाधिकरणम्

अथ सम्पन्नविद्यस्य मोक्षकालश्चिन्त्यते—

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ३ । ४ । ५१ ॥

---

बाल्येनेति। सिद्धान्तयति। राद्धान्तस्त्विति। स्वाभिजनाद्यनाविष्कुर्वन्=स्वाभिजनः शुद्धयादीत्यर्थः। ४९ ॥

इत्थमङ्गचिन्ता कृता अथाङ्गिनिष्पत्तिसमयश्चिन्त्यत इति सङ्गतिं प्रदर्शयन्नाह। विद्योत्पत्तिकाल इति। संशयं दर्शयति। किं पूर्वोक्तसाधनैरिति। प्रश्नपूर्वकं पूर्वपक्षं गृह्णाति। तत्र किमिति। पूर्वपक्षमनूद्य सिद्धान्तयति। इतिप्राप्त इति। सूत्रार्थं व्याचष्टे। ऐहिकमिति। इह जन्मनि भवम् ऐहिकमित्यर्थः। असति प्रतिबन्धे इहैव जन्मनि विद्यासिद्धिः। प्रबलकर्मान्तरप्रतिबन्धे तु देहान्तरे तथेति भावः ऐहिकीं विद्यासिद्धिं दृष्टान्तेन परबुद्ध्यारूढं करोति। तद्दर्शनादिति। हेतुं विवृणोति। मृत्युप्रोक्तामिति। सूत्रार्थं निगमयति। अतइति ॥ ५० ॥ इत्यैहिकाधिकरणम्।

किं यस्मिन् शरीरे विद्योदयस्तच्छरीरपात एव मोक्षः ? उत शरीरान्तरपात इति विशये विद्यासिद्धौ तत्फलस्यावश्यकत्वात्तच्छरीरपात एवेति पूर्वः पक्षः। राद्धान्तस्तु यथा साधनसम्पन्नस्येह जन्मन्येव विद्या सिध्यतीति न नियमः। अपि तु प्रतिबन्धनाशोत्तरमेव। एवं विद्यासम्पन्नस्य मुक्तिरेव फलं तस्याऽनियमः प्रारब्धकर्मणि सति शरीरान्तरपाते, तदभावे तच्छरीरपात एवेति। कुतः ? तदवस्थावधृतेः। विद्यावतोऽपि "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति छान्दोग्ये प्रारब्धक्षयोत्तरमेव मोक्षकालविनिश्चयादित्यर्थः। पदाभ्यासोऽध्यायसमाप्तिद्योतकः ॥ ५१ ॥ इति मुक्तिफलाधिकरणम्।

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुणपद्ममकरन्दभृङ्गेण जगद्विजयिश्री६श्रीकेशवकाश्मीरिभट्टेन सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायचतुर्थपादविवरणम् ॥४॥

---

अथ मुक्तिफलाधिकरणम्।

निष्पन्नायां विद्यायां तत्फलभूतमुक्तिः कालान्तरे सम्पन्ना भवति आहोस्वित् यच्छरीरावच्छेदेन विद्यासम्पन्ना तच्छरीरावसान एवेति विचार्य्यते। अमुमर्थं प्रदर्शयन्नाह। अथेति। विमृशति। एवमित्यादिना। तत्र पूर्वपक्षयति। विद्यासिद्धाविति। सिद्धान्तयति। राद्धान्तस्त्विति। इह जन्मन्येव साधनसम्पन्नस्य विद्यासम्पत्तिरिति नियमो नास्ति तथैव विद्यासम्पन्नस्य सद्यो मुक्तिरेवेत्यपि नियमो नास्तीत्याह। यथासाधनसम्पन्नस्येति ॥ ५१ ॥

या त्वपवर्गफला परविद्या सा स्यात्कर्मानन्तरमेव।
नहि भगवत्प्रीत्यतिशयहेतौ सम्भवति प्रतिबन्धकमस्मिन् ॥ १ ॥
तत्रापि ब्रह्मविदपचारः प्रायः सम्भवति प्रतिबन्धः।
तद्यदि विचारहितमकारि प्रतिबन्धं न कथं बलिना स्यात् ॥ २ ॥

इतिमुक्तिफलाधिकरणम्।

राधाकृष्णपदारविन्दयुगलध्यानैकतानात्मनः।
श्यामीभूततनोर्हरेः सुरुचिभिः निःसीमप्रेम्णो निधेः ॥
वात्सल्यादिगुणाकरस्य महतः सौन्दर्यसारश्रियः।
शामाचार्य्यगुरोर्नमामि चरणं संसारतापच्छिदम् ॥

इतिश्रीनिवृत्तिपथाधिरुढश्रीसनकसम्प्रदायानुगामिरसिककुलमण्डनश्रीस्वामिहरिदासपदाश्रिताश्रितानुयायिना विदुषा अमोलकरामेण सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाभावदीपिकाटीकायां तृतीयाध्यस्य तुर्य्यपादः ।



# अथ चतुर्थोऽध्यायः

## प्रथमः पादः ।

मोक्षोपायाभियुक्तानां भजतां तत्पदाम्बुजम् ॥
तनोति परमं श्रेयो यस्तं कृष्णमहं भजे ॥१॥
संगृहीतानि मोक्षस्य साधनानि तृतीयके ।
चरमेऽस्मिन्फलं प्राह भगवान्बादरायणः ॥२॥

एवं तृतीयेऽध्याये ससाधनविद्याविचारो वृत्तः । अथेदानीं चतुर्थेऽस्मिन्नध्याये विद्यायाः फलचिन्ता वर्त्तिष्यते, प्रसङ्गप्राप्तं चान्यदपि किञ्चित् । तत्र तावदिदं चिन्त्यते । "आत्मा वा अरे ! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ० ४ । ५ । ६ ), सोऽन्वेष्टव्यः स विजिज्ञासितव्य" ( छा० ८ । ७ । १ ) इत्यादिना ब्रह्मदर्शनाय विधीयमानानि श्रवणादीनि श्रूयन्ते । तानि किं सकृत्कर्त्तव्यानि उतासकृदावर्त्तनीयानि इति संशये, किं तावत्प्राप्तं, सकृदिति । असकृदावृत्तौ प्रमाणाभावादिति प्राप्त, उच्यते—

**आवृत्तिरसकृदुपदेशात् ॥ ४ । १ । १ ॥**

तान्यसकृदावर्तनीयानि । कुतः ? उपदेशात् । वेदनोपासनपर्य्यायेण निदिध्या-

---

अथ आत्मत्वोपासनाधिकरणम् ।

परानन्दाकारो भुवि करुणयाविष्कृततनुः ।
निजानां भक्तानां सकलदुरितौघक्षयकरः ॥
समानप्रीतानां समगुणगणानां हरिविदाम् ।
तनोऽव्याद्विघ्नेभ्यः कमलनयनो भावनिपुणः ॥ १ ॥

मोक्षसाधननिरतानां श्रीकृष्णपदाम्बुजसंसेवनवतां भक्तानां यः श्रीकृष्णः भगवद्भावापत्तिरूपं निःश्रेयसं तनोति विस्तारयति तं श्रीकृष्णमहं सेव इति प्रथमश्लोकार्थः । द्वितोयेन श्लोकेन तृतीयतूर्याध्याययोरर्थं संक्षिपति । संगृहीतानीति । निःश्रेयससाधनं तृतीयेऽध्याये निरूप्य तूर्येऽध्याये फलमेव प्रधानतो निरूपयतीतिभावः । पूर्वोत्तराध्याययोः सङ्गतिं प्रदर्शयति । एवमित्यादिना । कथं तर्हीहार्चिरादिवचनमित्याशङ्क्य फलोक्तिप्रसङ्गेन तदुक्तिरपि भविष्यतीत्याह । प्रसङ्गप्राप्तमिति । आदौ तावद्विद्यायां विचारणीयाः केचन विशेषा विचार्य्यन्ते इत्याह । तत्र तावदिति । प्रथमाधिकरणस्य विषयमनूद्य संशयं विचारहेतुं दर्शयति । आत्मा वारे द्रष्टव्य इति । प्रश्नपूर्वकं पूर्वपक्षं गृह्णाति । किन्तावदिति । पूर्वपक्षमनूद्य समाधत्ते । इतिप्राप्त उच्यत इति । सूत्रार्थं विवृणोति । तानीत्यादिना । आवृत्तौ हेत्वभावमाशङ्क्य हेतुमवतार्यं व्याचष्टे । कुत इत्यादिना । तस्य=निदि-

सनशब्देनोपदेशात् । तस्य च निरन्तरध्यान एव शक्तत्वात् । अयमर्थः "ततस्तु तं पश्यति निष्कलं ध्यायमान" इत्यादिना ब्रह्मापरोक्षासाधारणोपायत्वेन श्रूयमाणं ध्यानं सकृत्कृतं ब्रह्मदर्शनाय न क्षमं भवति, किन्त्वसकृदेवेति । १ ॥

## लिङ्गाच्च ॥ ४ । १ । २ ॥

लिङ्गं स्मृतिः । स्मर्यते चायमेवार्थः "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनरि" त्यादिना ॥ २ ॥ इत्यावृत्त्यधिकरणम् ।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४ । १ । ३ ॥

यस्य ध्यानं नैरन्तर्येण निर्णीतं सोऽशेषदोषासंस्पृष्टमाहात्म्यः सार्वज्ञ्याद्यसंख्येय-स्वाभाविकसद्गुणशक्तिवैभवः सर्वात्मा परब्रह्माख्यः श्रीमुकुन्दः किं स्वस्मादन्यत्वेनानु-सन्धेयः उत स्वस्यात्मत्वेनेति संशये, किं तावद्युक्तम्, बहुशो भेदोपपादनादन्यत्वेनेति प्राप्त, आह-आत्मेतीति । स ममात्मैवाहं च तदात्मक इति तादात्म्यसम्बन्धेनैव ध्येयः । कुतः ? यतः "एष मे आत्मा एष सर्वभूतान्तरात्मे" ति पूर्वे महान्तोऽभ्युपगच्छन्ति । "एष ते आत्मा सर्वान्तर एष ते आत्माऽन्तर्याम्यमृतः, ऐतदात्म्यमिदं सर्वं, तत्त्वमसी ( छा० ६ । ८ । ७ )" त्यादिना शिष्यांस्तथैव ग्राहयन्ति च । "अहमात्मा गुडाकेश !, क्षेत्रज्ञं चापि मां विद्धि, वासुदेवः सर्वमिति, अखिलमिदमहं च वासुदेवः वासुदेवात्मकान्याहुरि" त्यादि-स्मृतेश्च ॥ ३ ॥ इति आत्मत्वोपासनाधिकरणम् ।

## न प्रतीकेन हि सः ॥ ४ । १ । ४ ॥

---

ध्यासनस्य । "ध्यै चिन्तायामि"ति धातुः । असकृदावृतत्वं विच्छेदेऽप्युपपद्यत इति तद्व्यावृत्त्यर्थमाह । अयमर्थः असकृदेवेति । अनवरतस्मृतिसन्तानरूपं ध्यानमितिभावः ॥ १ ॥

लिङ्गशब्दं व्याकरोति । लिङ्गं स्मृतिः । तद्रूपप्रत्ययैकात्मा सन्ततिश्चान्यनिस्पृहा, तद्ध्यानं षड्भिरङ्गैर्निष्पाद्यते तथा" इति स्मृत्यनुसारेणचासकृदावर्त्तनीया विद्येति ॥ २ ॥

विद्यायां विशदतरावभासरूपफलार्थापत्तिप्रसूतमावृत्तिगुणकत्वं निरूपितम् । तदनन्तरं मुक्तावपि भगवत्पारतन्त्र्यरूपफलार्थापत्तिप्रसूतं भगवतः स्वात्मत्वेनानुसन्धेयत्वं निरूप्यत इति सङ्गतिः । विद्यास्वीश्वरः स्वात्मत्वेनानुसन्धेयः किं पृथक्त्वेनेति वा संशयं दर्शयति । यस्य ध्यानमिति । पूर्वपक्षं गृह्णाति । किन्ता-वदिति । बहुशो भेदोपपादनादिति । "पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्तेनामृतत्वमेति" "अधिकन्तु भेदनिर्देशात्, अधिकोपदेशान्नेतरोऽनुपपत्ते"रिति श्रुतिसूत्राभ्यां भेदस्योपपादनादित्यर्थः । राद्धान्तमाह । एवं प्राप्त इति । तत्क्रतुन्यायेन मुक्तावपि भगवत्पारतन्त्र्यसिद्ध्यर्थं स्वात्मत्वेनानुसन्धानं कार्यम् । तथैव पूर्वेऽप्यु-पासितारोऽनुसन्दधते । "त्वंवा अहमस्मि भगवो देवतेऽहं वै त्वमस्तो"ति तथैव शाखायन्तर्यामिब्राह्मणादीन्युपदि-शन्तीत्यर्थः ॥ ३ ॥ इत्यात्मत्वोपासनाधिकरणम् ।

"मनो ब्रह्मेत्युपासीत" (छा० ३।१८।१) इत्यादिप्रतीकोपासनेष्वप्यात्म-त्वेनानुसन्धानं कर्त्तव्यम् उत नेति संशये, ब्रह्मोपासनत्वाविशेषादात्मत्वेनानुसन्धेय इति प्राप्ते, उच्यते-न प्रतीके आत्मत्वानुसन्धानं कर्त्तव्यम्। न हि सः प्रतीक उपासितुरात्मा, प्रतीकोपासने हि मनोनामादिप्रतीकस्योपासनं नतु परब्रह्मणः, तस्य तत्र तत्तद्दृष्ट्या-ऽनुसन्धानमात्रत्वात्। प्रतीकोपासनं ह्यब्रह्मणि ब्रह्मदृष्ट्यानुसन्धानं तत्रोपास्य (स्य) प्रती-कस्योपासितुरात्मत्वाभावाच्च तथाऽनुसन्धातुं योग्यम्॥ ४॥

ननु मनआदेरचेतनाल्पशक्तेरुपास्यत्वाश्रवणस्यान्याय्यत्वादत्रापि मनआदिदृष्ट्य-ब्रह्मैवोपास्यमिति चेत्तत्राह—

## ब्रह्मदृष्टिरुत्कर्षात्॥ ४।१।५॥

मनआदिषु ब्रह्मदृष्टिरेव कर्त्तव्या, न ब्रह्मणि मनआदिदृष्टिः। कुतः? उत्कर्षात्। ब्रह्म हि मनआदिभ्य उत्कृष्टं, अपकृष्टे ह्युत्कृष्टदृष्टिरभ्युदयाय भवति। उत्कृष्टे त्वपकृष्ट-दृष्टिः प्रत्यवायकरी, राजनि भृत्यदृष्टिरिव। "नेदं ब्रह्म यदिदमुपासत" इत्यादिना प्रती-कस्य ब्रह्मत्वनिषेधश्रवणात् विश्वात्मत्वाद्यसम्भवाच्च तादात्म्यविधानशास्त्रविरोधाच्च॥ ५॥ इति प्रतीकाधिकरणम्।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः॥ ४।१।६॥

"य एवासौ तपति तमुद्गीथमुपासीत (छा० १।३।१)" इत्यादिकर्माङ्गा-श्रयषूपासनेषु किं कर्माङ्ग उद्गीथादावादित्यादिदृष्टिः कर्त्तव्या उतादित्यादिषूद्गीथादि-दृष्टिरिति संशये, तत्रादित्यादिषूद्गीथादिदृष्टिरिति। कुतः? फलसाधनभूतकर्माङ्गतयोद्गीथा-

---

अथ प्रतीकाधिकरणम्।

आत्मत्वेनोपासनमुक्तं प्रतीकोपासनेष्वपि तच्छङ्कया सङ्गतिः। विषयवाक्यप्रदर्शनमुखेन संशयं दर्शयति। मनोब्रह्मेति। स्वतन्त्रोपास्यत्वदृष्टिविशेषत्वाभ्यां संशय इतिभावः। समाधत्ते। उच्यत इति। 'न प्रतीक' इति सूत्रखण्डम्। 'नहि स' इति व्याख्येयपदम्। तस्य=ब्रह्मणः। तत्र=मनसि। प्रतीकोपासनं व्याचष्टे। प्रतीकेति॥ ४॥

अचेतनस्य मनसः फलप्रदानाशक्तस्योपास्यत्वायोगात्। ब्रह्मैवोपास्यमित्याशङ्क्यानन्तरसूत्रमवता-रयति। नन्विति। मनसि ब्रह्मदृष्टिर्विधेया ब्रह्मण उत्कृष्टत्वात्। अपकृष्टे ह्युत्कृष्टबुद्धिरभ्युदयाय भवति। यथा राजभृत्ये राजबुद्धिः। उत्कृष्टेत्वपकृष्टबुद्धिरनर्थायैव स्यात्। तस्मान्मनस उपास्यत्वादात्मत्वेनानुसंधानं कार्यम्। प्रतीकस्य ब्रह्मत्वं निषिद्धमतस्तन्निषेधकं वाक्यमुदाहरति। नेदंब्रह्मेति॥ ५॥ इतिप्रतीकाधिकरणम्।

अथादित्यादिमत्यधिकरणम्।

उत्कृष्टदृष्टिर्निकृष्टे कर्त्तव्येत्युक्तम्। तदोद्गीथादिदृष्टिरादित्यादौ कर्त्तव्येति शङ्कया सङ्गतिः। विषय-वाक्यमुदाहरन् संशयमाह। यएवासौ तपतीति। उद्गीथादावादित्यदृष्टिर्विधेया उतादित्यादावुद्गीथदृष्टिरित्य-न्यतरोत्कर्षानवधारणात्संशये पूर्वपक्षः। आदित्यादावुद्गीथदृष्टिर्विधेया फलवत्कर्माङ्गतया फलवत्त्वादित्याह।

दीनामफलेभ्य आदित्यादिभ्य उत्कृष्टत्वान्निकृष्टे ह्युत्कृष्टदृष्टिः कर्त्तव्या न्याय्यत्वादिति प्राप्त उच्यते—आदित्यादिमतयश्चेति । आदित्यादिदृष्टय एव कर्माङ्ग उद्गीथादौ कर्त्तव्याः । कुतः ? उपपत्तेः । कर्मणामपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेत्यादित्यादेरेवोत्कृष्टत्वोपपत्तेः ॥ ६ ॥ इत्यादित्यादिमत्यधिकरणम् ।

## आसीनः सम्भवात् ॥ ४ । १ । ७ ॥

किमिदं ब्रह्मदर्शनासाधारणोपायतया वेदान्तशास्त्रै विहितं ध्यानवेदनज्ञानप्रत्ययादिशब्दवाच्यमुपासनमासीनः शयानो गच्छंस्तिष्ठन्वा कुर्यादित्यनियम उतासीन एवेति नियमः ? इति संशयः । तत्र विशेषाश्रवणादनियम इति प्राप्ते प्रतिब्रूते—आसीन एवोपासनमनुतिष्ठेत् । कुतः ? सम्भवात् । उपासनं ह्येकाग्रतया साध्यमैकाग्रचित्तता चासीनस्यैव सम्भवति, शयनादीनां लयविक्षेपहेतुत्वात् ॥ ७ ॥

## ध्यानाच्च ॥ ४ । १ । ८ ॥

निदिध्यासितव्य इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रतावश्यं भाविनी । अन्यथा ध्यानासिद्धेः । ध्यानं हि विजातीयप्रत्ययानालम्बनत्वे सति ध्येयाकारैकस्मृतिसन्ततिरूपं, तदेव परिपाकापन्नं ध्रुवास्मृतिपराभक्तिशब्दाभिधेयं "सत्त्वशुद्धौ ध्रुवा स्मृतिः(छा० ७।२६।२), मद्भक्तिं लभतेपरामि" (गी० १८।५४)ति श्रुतिस्मृतिभ्याम् । तथा च स्थितौ गमने च विक्षेपात् शयाने लयाच्च दुःसाध्यमिति भावः ॥ ८ ॥

## अचलत्वञ्चापेक्ष्य ॥ ४ । १ । ९ ॥

तच्च ध्यानं नैश्चल्यसापेक्षं तदभावे तदसिद्धेः "ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः ध्यायन्तीवापो ध्यायन्तीव पर्वता ( छा० ७ । ६ । १ )" इत्यत्राचलत्वम-

---

तत्रेति । अफलेभ्य इति । न विद्यते फलं येषां त इत्येवं बहुव्रीहिणा अफलशब्दोऽफलसाधनार्थक इत्यर्थः । राद्धान्तयति । उच्यत इति । सूत्रे चशब्दोऽवधारणे । उद्गीथादिष्वादित्यदृष्टिर्विधेया कर्मणामादित्यादिदेवताराधनद्वारेणैव फलसाधनतयाऽऽदित्यादीनामुत्कृष्टत्वोपपत्तेरित्यर्थः ॥ ६ ॥ इति आदित्यादिमत्यधिकरणम् ।

अथ आसीनाधिकरणम् ।

अवान्तरसङ्गतिमाह । किमिदमिति । किमासीनश्चिन्तयेत् उतासीनः शयानस्तिष्ठन् गच्छन्वेति । किं गमनादिषु ध्यानं सम्भवति नवेति । सम्भवति चेदासनानियमो न सम्भवति चेत्तन्नियम इति पूर्वपक्षं गृह्णाति । तत्रेति । सिद्धान्तयति । इतिप्राप्ते प्रतिब्रूतइति ॥ ७ ॥

ध्यानादिति भावप्रधाननिर्देश इत्यभिप्रायेणोक्तं ध्यानरूपत्वादिति । ध्यानशब्दार्थं विवृणोति । ध्यानं हीति । तदेव=ध्यानमेव । उक्तार्थं श्रीमुखवचनेन प्रमाणयति । मद्भक्तिमिति ॥ ८ ॥

तदभावे=नैश्चल्याभावे । तदसिद्धेः=ध्यानासिद्धेः । आपइति । स्थिरं तडागादिजलं विवक्षितं

पेत्यैव ध्यायतीति प्रयोगो दृश्यते, तथाभूतं नैश्चल्यमासीनस्यैव सम्भवति, नान्यस्येत्यर्थः ॥९॥

## स्मरन्ति च ॥ ४ । १ । १० ॥

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये" ( गीता ६ । ११ ) इत्यादिना स्थिरसुखासने स्वस्तिकासनेनोपविश्य निमीलितनयनो निरतिशयानन्दे परमात्मनि चित्तमावेशयेदिति स्मरन्ति ॥ १० ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४ । १ । ११ ॥

नात्र कश्चिद्देशकालादिनियमः, किन्तु यत्र देशे काले च चित्तैकाग्र्यं स्यात्तत्रैव ध्यानं कुर्यात् । ननु वैदिकारम्भेषु प्रायेण दिगादिनियमो दृश्यते । उपासनस्यापि वैदिकत्वाविशेषात्तत्रापि दिगादिनियमेन भवितव्यमिति चेत्तद्वदत्र विशेषस्याश्रवणात् । नन्वाम्नायते देशविशेषनियमः श्वेताश्वतरैः" "समे शुचौ शर्करावह्निवालुकाविवर्जिते । शब्दजलाश्रयादिभिः मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेदि" ( श्वे० २ । १० ) त्यादिनेति चेत्सत्यम् । तैरपि चित्तैकाग्रतैकान्तदेश एवोच्यते, नतु देशविशेषो नियम्यते, मनोऽनुकूल इति वाक्यशेषादित्यर्थः ॥ ११ ॥ इत्यासीनाधिकरणम् ॥ ५ ॥

## आप्रायणात्तत्रापि हि दृष्टम् ॥ ४ । १ । १२ ॥

तदिदं मोक्षासाधारणसाधनं ध्यानमेकस्मिन्नहनि कार्यम् उताप्रायणात्प्रत्यहमावर्त्तनीयमिति संशयः । तत्रैकस्मिन्नेवाहनि कृत्वोपरमेत्, आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वात् । "यावदायुषमि" ति वचनं तु विधिशब्दाभावाद्विद्यायाः फलत्वेनोप-

---

निश्चलत्वमात्रेण सादृश्यं विवक्षितम् । निश्चलत्वमैकाग्र्यात् भवति तच्चासीनस्यैव गत्यादौ विजातीयप्रत्ययेन चलनसम्भवादित्यर्थः ॥ ९ ॥

स्मरन्तिचेति । न केवलमर्थसामर्थ्यात् वचनादपि तत्सिद्धिरित्यर्थः । चैलाजिनकुशोत्तरमिति । चैलं सर्वोत्तरम् । अजिनं कुशापेक्षया उत्तरं कुशा भूतलापेक्षया उत्तरा इत्यर्थः ॥ १० ॥

शर्कराः = सूक्ष्मपाषाणाः । उदाहृतवचनमप्येकाग्रतोपयोगिनं देशमाह नतु देशविशेषं नियच्छति 'मनोऽनुकूल'इति वाक्यशेषात् । एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् । एकाग्रतानुकूलो यो देशः कालश्च स एवोपासनस्य योग्यो नतु तत्र विशेषोऽस्तीति भावः ॥ ११ ॥ इत्यासीनाधिकरणम् ।

अथ आप्रायणाधिकरणम् ।

पूर्वाह्णादिकालनियमवदेव तावत्कालपर्यन्तमुपासना कार्येति कालेयत्तानियमस्याप्यश्रवणात् । 'सकृत्कृते कृतश्शास्त्रार्थं' इति न्यायादेकस्मिन्नेव दिने कार्या नतु यावदायुषमित्याशयेन संशयपूर्वपक्षौ दर्शयति । यदिदमित्यादिना । 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्त्तते' इतिश्रुतिः विद्यायाः फलत्वेनोपसंहारपरेत्याह । यावदायुषमिति । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । यावदायुषं कर्मा-

संहारपरमिति प्राप्ते, ब्रूमः-आप्रायणादिति। आमरणान्नैरन्तर्येणानुष्ठेयम्, नत्वल्पकालानुष्ठेयम्। कुतः? तत्रापि हि "आप्रायणान्मध्ये यः कालस्तत्राप्युपासनं दृष्टं, "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इत्यप्राप्तत्वेनानुवादासम्भवाद्विधिरेवायमिति। तथा "अथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैति एवं क्रतुर्ह्यमुं लोकं प्रेत्याभिसम्भवती"(छा०३।१४।१) त्यग्निरहस्ये शाण्डिल्यविद्यायां श्रवणात्। अत्र क्रतुशब्दो मानसव्यापारपरः, क्रतुमयो ध्यानप्रधान इत्यर्थः॥ १२॥ इत्याप्रायणाधिकरणम्।

तदेवं विद्यासाधनानुष्ठाने प्रयत्नाधिक्यज्ञापनाय फलाध्यायेऽपि विद्यासाधनशेषं विचार्येदानीं तत्फलचिन्तनायारभते—

## तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥४।१।१३॥

छान्दोग्ये श्रूयते "तद्यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवम्विदि पापं कर्म न श्लिष्यते (छा० ४।१४।३)" "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छा० ५।२४।३)" इति। तत्र संशयः, किमत्र प्राप्तविद्यस्य विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयमाणावुपपद्येते न वेति? किं युक्तम्? नोपपद्येते इति। कुतः? "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमि" ति भोगेनैव कर्मक्षयश्रवणादश्लेषविनाशश्रुतिः कथञ्चिद्विद्यास्तुत्यर्थतया नेया, नहि विद्या पापप्रायश्चित्तत्वेन विधीयते, अपि तु "ब्रह्मविदाप्नोति परं, ब्रह्मवेद ब्रह्मैव भवती"ति ब्रह्मापरोक्षसाधनतया विधीयत इति प्राप्ते उच्यते—तदधिगम इति। एवम्भूतेन ध्यानपरि-

---

नुष्ठानस्यापुनरावृत्तिफलकत्वमुच्यमानं विद्यां प्रति स्वरूपोपकारकत्वेनैवोपपादनीयमिति तदुक्तिसामर्थ्याद्विद्याया अपि यावदायुषमनुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति तद्बलात् 'आप्रायणान्तमोङ्कारमभिध्यायीते'ति श्रुत्यन्तरदर्शनाच्च यावदायुषमनुष्ठेयमिति सिद्धान्तः॥ १२॥ इति आप्रायणाधिकरणम्॥

अथ तदधिगमाधिकरणम्।

फलाध्याये विद्यासाधनसंशोधनमसङ्गतमित्याशङ्कां परिहरन्नग्रिमसूत्रमवतारयति तदेवमित्यादिना। फलाध्याये साधनसम्बद्धानुष्ठानक्रमः साधनानुष्ठाने यत्नाधिक्याय विचारित इत्यर्थः। विषयवाक्यमुदाहरति। छान्दोग्य इति। उक्तवचनेन श्रूयमाणौ पापाश्लेषविनाशौ ब्रह्मविद्याकाले भवितुमर्हतो नवेति अभुक्तकर्मक्षयशास्त्रविरोधाविरोधाभ्यां संशयो जायते तं दर्शयति। तत्रेति। न ब्रह्मविद्यायाः फले तौ "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति शास्त्रेण कर्मणां भोगैकनाश्यत्वावगत्या तयोर्विद्याफलत्वकल्पनायोगात्। नच तत्सामान्यशास्त्रं विद्याविनाश्यपापातिरिक्तकर्मविषयं स्यादिति वाच्यम्। विद्यायाः पापविश्लेषविनाशार्थत्वेन विधेरश्रुततया तत्सङ्कोचककल्पकाभावात्। नच तथाविधिकल्पनम् ब्रह्मप्राप्तिसाधनत्वेन विहितायाः विद्यायाः फलान्तरानपेक्षत्वात्। पापाश्लेषविनाशश्रवणस्य विद्याप्रशंसार्थत्वेनोपपत्तेरित्याशयेन पूर्वपक्षयति किंयुक्तं नोपपद्यत इतीति। विद्यालाभे सति उत्तरपूर्वाघयोरश्लेषविनाशौ भवत एवेति सिद्धान्तयति। उच्यत इति। सूत्रार्थं व्याचष्टे। एवम्भूतेनेति। नच ब्रह्मप्राप्तिफलकविद्यार्थवादस्तथा व्यपदेशोऽभुक्तकर्मक्षयशास्त्रानुरोधादिति वाच्यम्। भोगं विना कर्मक्षयाभावे भोगार्थं शरीरं ग्राह्यं तस्मिन्नपि शरीरे कर्मान्तरार्जनमवर्जनीयमित्यनिर्मोक्षापत्त्या मोक्षशास्त्रैरेव पापाश्लेषविनाशयोरपेक्षितत्वात्। पापाश्लेषविनाशाभुक्तकर्मक्षयशास्त्रयोर्भिन्नविषयत्वे विरोधाभावाच्च। तथाहि—अभुक्त-

पाकेन ध्रुवास्मृत्याख्यज्ञानाधिगमे सिद्धे सति उत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते । तत्रोत्तरभाविनः क्रियमाणस्य पापस्याश्लेषः तत्प्राग्भूतस्य सञ्चितस्य तस्य नाशः । कुतः ? तद्व्यपदेशात् । "एवंविदि पापं कर्म न श्लिष्यते एवं हास्य सर्वे पाप्मानः प्रदूयन्त" इत्यादिव्यपदेशात् । "नाभुक्तं क्षीयते कर्मे"ति शास्त्रं हि कर्मणां फलजनने सामर्थ्यं द्रढयति । "एवम्विदि पापं कर्म न श्लिष्यत" इत्यादि तु विद्यायास्तत्सामर्थ्यनिवारणशक्तिपरमिति द्वयोः शास्त्रयोर्भिन्नविषयत्वान्न विरोधः । यथाप्तेजसोः शीतजननतन्निवारणशक्तिविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यमेवमिहापीति ॥ १३ ॥ इति तदधिगमाधिकरणम् ।

नन्वत्र पापस्यैवाश्लेषविनाशश्रवणात्पुण्यं तु विदुषा भोक्तव्यमेव, सुकृतस्य शास्त्रीयत्वात्तत्फलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावाच्चेति चेत्तत्राह—

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४ । १ । १४ ॥

इतरस्यापि पुण्यस्य कर्मणः शास्त्रदृष्ट्या संसरणहेतुत्वसाम्यादेवमघवदश्लेषविनाशौ विद्यया स्याताम् । "उभे सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मानो ऽतो निवर्त्तन्ते तत् सुकृतदुःकृते विधुनुते" इत्यादि श्रुत्या मुमुक्षोर्मोक्षविरोधित्वेनानिष्टफलत्वात्पुण्यमपि पाप्मशब्देन व्यपदिश्यते "उभे उ हैवैष एते तरती ( बृ० ४ । ४ । २२ )" त्यादौ पापवत्पुण्यस्यापि प्रणाशव्यपदेशाच्च । पाते तु, तुशब्दोऽवधारणे शरीरपाते विदुषो मुक्तिरेवेत्यर्थः ॥१४॥ इतीतराधिकरणम् ।

## अनारब्धकार्य्ये एव तु पूर्वे तदवधेः ॥ ४ । १ । १५ ॥

पूर्वयोरधिकरणयोः पुण्यपापयोर्विद्यानिमित्तो विनाशोऽवगतः, सक्रिमविशेषेण-

---

कर्मक्षयशास्त्रं कर्मणां फलजननशक्तिं प्रतिपादयति । पापविनाशाश्लेषशास्त्रे तु प्राचीनकर्मणां फलजननसामर्थ्यविनाशशक्तिमागामिकर्मणां फलजननसामर्थ्योत्पत्तिप्रतिबन्धशक्तिञ्च प्रतिपादयतः अतो न तत्र विरोधशङ्कास्तीत्याह । नाभुक्तमिति । अग्निजलयोरौष्ण्यतन्निवारणशक्तिवदिति दृष्टान्तेनोक्तार्थं परबद्धयारूढं करोति । यथाप्तेजसोरिति । अश्लेषवचनं प्रामादिकपापमात्रविषयं नतु विनाशवचनवत् सर्वपापविषयम् । "नाविरतो दुश्चरितादि" त्यादिशास्त्रैराप्रायणमहरहानुष्ठेयाया विद्याया दुश्चरितविरतिनिष्पाद्यत्वावगमात् । "अपिचेत्पातकं किञ्चिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यत्कर्म समाचरेति" दिति स्मृतेरितिभावः ॥ १३ ॥ इतितदधिगमाधिकरणम् ।

अथ इतराधिकरणम् ।

अश्लेषविनाशवचनयोः पापग्रहणात् न पुण्यस्याश्लेषविनाशावित्याशङ्क्यानन्तरसूत्रमवतारयति । नन्विति । 'इतरस्याप्यसंश्लेष' इति प्रतिज्ञानिर्देशः, एवमिति न्यायातिदेशः । पापवत्पुण्यस्यापि विनाशाश्लेषातिदेशादितियावत् । एवंशब्दं विवृणोति । एवमघवदिति । एवंशब्देन पूर्वसूत्रानुकृष्टव्यपदेशशब्दार्थमुपपादयन् पुण्यस्यापि पाप्मशब्दवाच्यत्वे श्रुतिं दर्शयति उभे इति । उभयोः पृथगभिधाने श्रुतिमाह । तत्सुकृतेति । पापवत्पुण्यस्यापि विनाशबोधिकां बृहदारण्यस्थां श्रुतिं प्रमाणयति । उभेहैवेष इति । सूत्रखण्डं व्याचष्टे । पातेत्विति ॥ १४ ॥ इति इतराधिकरणम् ।

अथ अनारब्धकार्याधिकरणम् ।

अवान्तरसङ्गतिमाह । पूर्वयोरिति । स इति । उक्तः सुकृतदुष्कृतयोर्विद्याविनाश इत्यर्थः । किं

रब्धकार्ययोरनारब्धकार्ययोश्च भवति उत विशेषेणानारब्धकार्ययोरेवेति चिन्त्यते । तत्र "सर्वे पाप्मानः प्रदूयन्त" इति विद्याशक्तेरविशेषात्तदविशेष इति पूर्वपक्षी मन्यते, तत्राचक्ष्महे—पूर्वे पुण्यपापरूपे कर्मणी अनारब्धकार्ये एव विनश्यतः । कुतः ? तदवधेः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य ( छा० ६ । १४ । २ )" इत्युत्पन्नविद्यस्यापि शरीरपातावधिश्रवणादन्यथा सर्वविनाशे शरीरस्थित्यनुपपत्तेः ॥ १५ ॥ इति अनारब्धकार्याधिकरणम् ।

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४ । १ । १६ ॥

अग्निहोत्रादि नित्यनैमित्तिकस्वाश्रमकर्म विदुषा किं कर्तव्यम् उत नेति संशयः । तत्र विद्यासामर्थ्यात् धर्माधर्मयोरश्लेषविनाशविधानादाश्रमकर्मणोऽपि सुकृतत्वसाम्येन तत्फलाश्लेषान्न कर्त्तव्यमिति प्राप्ते, प्रत्युच्यते—अग्निहोत्रादि त्विति । तुशब्दः सुकृतान्तरसाम्यशङ्कां निरस्यति । अग्निहोत्रादि स्वाश्रमकर्मविदुषाऽपि तत्कार्याय विद्योत्पत्तिरूपकार्यायैव कर्त्तव्यम्, कुतः ? तद्दर्शनात् । दृश्यते ह्यग्निहोत्रादीनां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" ( बृ० ४ । ४ । २२ ) त्यादिना विद्योत्पत्तिफलत्वं, विद्या चाप्रायणादहरहरगधेयातिशयोत्पाद्यैव, तदुत्पत्त्यर्थमाश्रमकर्माण्यहरहः कर्त्तव्यमितरथाऽशुद्धान्तःकरणस्य विद्योत्पत्त्यसम्भवात् ॥ १६ ॥

यद्यग्निहोत्रादिसुकृतं विद्योत्पत्त्यर्थं विद्योत्पत्तेः पूर्वकृतं च सुकृतदुष्कृतं विद्यया विनष्टं भुक्त्यवशिष्टं च प्रवृत्तफलं तर्हि "तस्य प्रिया ज्ञातयः सुकृतमुपयन्ती"ति कौषीतकिवचनस्य, "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यामि"ति शाट्यायनिवचनस्य च को

---

पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः प्रारब्धफलेऽनारब्धफले । उत विशेषेणानारब्धफले इत्यर्थः । 'सर्वे पाप्मानः प्रदूयन्ते, तस्य तावदेव चिरम्' इति श्रुतिद्वयविरोधात्संशय इति भावः । सर्वश्रुत्यविरोधादशेषयोः पुण्यपापयोर्विनाशः । 'तस्य तावदेव चिरमि'ति श्रुत्युक्तं तदनन्तरदेहधारणन्तु कुलालचक्रभ्रमणन्यायेन संस्कारानुवृत्त्या भविष्यतीति पूर्वपक्षमाह । तत्रेति । संस्कारानुवृत्त्या चेत् क्षीणायुषामप्यविदुषामपि तथा देहधारणं प्रसज्येत । अतो देहधारणार्थे प्रारब्धे सुकृतदुष्कृते विहायान्येषां पुण्यपापानां विद्यया विनाशः । एवञ्च प्रारब्धवशादेव विदुषामपि सुखदुःखभोगोपपत्तिरिति सिद्धान्तयति । तत्राचक्ष्महे इत्यादिना । विलम्बश्रुत्यनुरोधेनानारब्धफल एव नश्यत इति सिद्धयतीत्यर्थः । विपक्षे बाधकतर्कमाह । अन्यथेति ॥१५॥ इतिअनारब्धकार्याधिकरणम् ।

अथ अग्निहोत्राधिकरणम् ।

इतरस्याप्येवमश्लेष इत्यधिकरणे विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः । अतोऽग्निहोत्रादीनां नित्यनैमित्तिकादीनां स्वाश्रमधर्माणामपि सुकृतत्वाविशेषेण फलश्लेषादनिच्छतोऽननुष्ठानं प्राप्तं नहि निष्फलं कश्चिच्चिकीर्षति । यदि नित्यनैमित्तिकानां फलवत्त्वं स्यात् तदानीमश्लेषवचनमेव निर्विषयं स्यात् तस्य विषयान्तरकल्पनेऽपि तेषां फलमपि न प्रपश्याम इत्यभिप्रेत्य विमृश्य पूर्वपक्षयति । अग्निहोत्रादीति । विदुषाप्याश्रमधर्मत्वेन ते विद्यार्थिनोऽनुष्ठेया विद्यारूपकार्यायैव तदुपदेशादिति राद्धान्तमाह । इतिप्राप्ते प्रत्युच्यत इति । सूत्राक्षराणि विवृणोति । तुशब्द इति । दृश्यत इति । अग्निहोत्रादीनां विद्योत्पत्तिफलकत्वमिति योजना । विद्यायांश्चाप्रायणादभ्यासाधेयातिशयायाहरहरुपाद्यत्वमित्याह । विद्याचेति । तदुत्पत्यर्थमिति । विद्योत्पत्त्यर्थमित्यर्थः । बाधकतर्कमाह । इतरथेति । आश्रमकर्मणामहरहरनुष्ठेयत्व इत्यर्थः ॥ १६ ॥

विषय इत्याशङ्क्याह—

**अतोऽन्यापि ह्येकेषामुभयोः ॥ ४ । १ । १७ ॥**

अतोऽग्निहोत्रादेरन्यापि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यपापकर्मणोः प्रबलकर्मान्तरप्रतिबद्धफला साध्वसाधुकृत्याऽस्त्येव । यतः काम्यं कर्म फलाय क्रियते, प्रतिपिद्धं चाचर्यते तद्विषयमेकेषां शाखिनां "तस्य प्रिया ज्ञातयः सुकृतमि"त्यादिवचनं, तद्विषयैव विद्ययाश्लेषविनाशश्रुतिरपि, काम्यकर्मणो विद्यां प्रत्यनुपकारकत्वात् ॥ १७ ॥

अनुष्ठितस्य कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

**यदेव विद्ययेति हि ॥ ४ । १ । १८ ॥**

हि यतो "यदेव विद्यया करोति तदेव वीर्यवत्तरमि ( छा० १।१।१० )" त्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्वकथनमनुष्ठितस्य केवलस्य कर्मणः कर्मान्तरेण फलप्रतिबन्धं सूचयति । अत आरोग्यान्नादिसिद्धये विदुषाऽनुष्ठितप्रबलकर्मान्तरप्रतिबद्धफलपुण्यकर्मविषयं "सुहृदः साधुकृत्यामि"त्यादि ॥ १८ ॥ इत्यग्निहोत्राधिकरणम् । १० ॥

**भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ ४ । १ । १९ ॥**

विदुषा प्रारब्धे पुण्यपापे कर्मणी किं विद्यायोनिशरीरभोग्ये उत शरीरान्तरभोग्ये अपीति संशये, किं युक्तम्, तच्छरीरभोग्ये इति, "यावन्न विमोक्ष्येऽथ सम्पत्स्ये"( छा० ६ । १४ । २ ) इति श्रुतेरिति प्राप्ते, आह—भोगेनेति । तुशब्दः शङ्कानिरासार्थः । इतरे प्रवृत्तकार्ये पुण्यपापरूपे कर्मणी स्वप्रवृत्तफलभोगेन क्षपयित्वाऽथ तत्फलसमाप्त्यनन्तरं ब्रह्म सम्पद्यते । प्रारब्धं कर्म यदि ह्येकशरीरे भोग्यं तर्हि तच्छरीरावसाने मोक्षः, अनेकशरीर-

---

यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था विद्योत्पत्तेः प्राचीनं च विद्योदयकाले स्थितं प्रारब्धफलव्यतिरिक्तं सर्वं सुकृतं विद्यया विनष्टं प्रारब्धफलञ्च भोगेन नाश्यं तर्हि 'सुहृदस्साधुकृत्यामित्य'स्य को विषय इत्याशङ्क्यानन्तरसूत्रमवतारयति । यथेत्यादिना । विद्योत्पत्त्यर्थाया अग्निहोत्रादिसाधुकृत्यायाः, विद्योत्पत्तेः प्राचीनायाश्च साधुकृत्यायाः अन्याऽपि विदुषा कृता देहधारणार्था वृष्ट्यन्नाद्यादिफलास्साधुकृत्यास्तत्र या प्रबलकर्मान्तरप्रतिबन्धात् प्रागभुक्तफलास्ति सा तस्या विषयः विद्यारहितकर्मणां प्रबलकर्मान्तरप्रतिबन्धसम्भवस्य यदेव विद्यया करोतीति श्रुत्यावगतत्वादित्यर्थः ॥ १७ ॥

अनन्तरसूत्रसङ्गतिमाह । अनुष्ठितस्येति । पूर्वोक्तं स्मारयतीति । 'पृथक्प्रतिबन्धफलमि'ति सूत्रेण कण्ठोक्तं स्मारयतीत्यर्थः । सूत्रस्थहिशब्दः 'पृथक्प्रतिबन्धफलमि'त्यत्र हिशब्दवन्नोपपत्तिप्रसिद्धिद्योतकः किन्तूपपादितप्रसिद्धिद्योतकः ॥ १८ ॥ इति अग्निहोत्राधिकरणम् ॥

अथ इतरक्षपणाधिकरणम् ।

प्रारब्धकार्ययोः पुण्यपापयोः भोगेनैव विनाशः नतु विद्ययेत्युक्तम् । ते किं विद्यायोनिशरीरावसान एवेति नियमः उत शरीरान्तरावसानेऽपीत्यनियम इति संशयं दर्शयति । विदुषा इति । 'यावन्न विमोक्ष्य'इति श्रुत्या शरीरमात्रावधिश्रवणात् । विद्यायोनिशरीरावसान एवेति पूर्वपक्षं प्रश्नपूर्वकं गृह्णाति । किं युक्तमित्यादिना । समाधत्ते । इतिप्राप्त इति । सूत्रार्थं व्याचष्टे । तुशब्द इति । प्रारब्धस्यैकदेहमात्रभोग्यत्वे तथैवा-

भोग्यं चेदनेकशरीरावसान इति राद्धान्तः। "नाभुक्तं क्षीयते कर्मे"ति श्रुतिः प्रारब्धकर्मविषयैव। आरब्धफलयोर्भोगेनैव क्षपयितव्यत्वाभिप्रायेण "यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति चोच्यते। शरीरमतन्त्रं तदवधिनियमाश्रवणात्कर्मविषयौ बन्धमोक्षौ। अयं भावः—विदुषो विद्यामाहात्म्यात्सञ्चितक्रियमाणयोरश्लेषविनाशौ, प्रारब्धस्य तु कर्मणो भोगेन विनाशः। तत्र प्रारब्धस्य विद्यायोनिशरीरेणेतरशरीरैर्वा भुक्त्वा विनाशान्मोक्ष इति सङ्क्षेपः॥ १६॥ इतीतरक्षपणाधिकरणम्॥ ११॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुणपद्ममकरन्दभृङ्गेण जगद्विजयिश्री६श्रीकेशवकाश्मीरिभट्टेन सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायप्रथमपादविवरणम्॥ १॥

---

नैकदेहभोग्यत्वे तु तदवसाने पुण्यपापे इति तदनन्तरब्रह्मसम्पत्तिः। 'धूत्वा शरीर'मित्येकवचनं न विवक्षितम्। 'विधूय पापमिति' तत्रैव दर्शनात् 'तस्य तावदेव चिरमि'तिश्रुतौ। यावन्न विमोक्ष्य इति प्रारब्धकर्ममोक्ष एवोक्तः। नतु विद्यायोनिशरीरविमोक्षः। तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलञ्च पुण्यपापरूपं सर्वकर्म विद्यामाहात्म्याद्विदुषि स्वस्वफलाजनकं भवति। विद्यारम्भोत्तरकालमनुष्ठितं च विद्यार्थकर्मव्यतिरिक्तसर्वकर्मफलाजननासमर्थं भवति। तदिदं विदुषः सुहृद्द्विषतोस्संक्रामति, प्रारब्धत्वेकेनानेकेनवा देहेन भुक्तं क्षीयते तदनन्तरं ब्रह्मसम्पत्तिरिति सर्वमनवद्यमितिभावः॥ १६॥

इतिश्रीसनन्दनसम्प्रदायानुयायिश्रीरसिकजीवनश्रीस्वामिहरिदासपद्माश्रितानुयायिना विदुषा अमोलकरामेण संगृहीतायां वेदान्तकौस्तुभप्रभाया-भावदीपिका टीकायां चतुर्थाध्यायस्य प्रथमपादः।



# अथ चतुर्थाऽध्याये द्वितीयपादारम्भः ।

अथ वागधिकरणम् ।

## वाङ्मनसि दर्शनात् शब्दाच्च ॥ ४ । २ । १ ॥

अथेदानीं विद्वद्गतिप्रकारचिन्तनार्थं प्रथमं तावदुत्क्रान्तिश्चिन्त्यते "अस्य सोम्य ! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि" ( छा० ६ । ८ । ६ ) ति सम्पत्तिः श्रूयते। तत्र संशयः। किं वाग्वृत्तिर्मनसि सम्पद्यते । उत वागेवेति? तत्र वाचो मनःप्रकृतिकत्वाभावात्स्वरूपलयस्तत्र न सम्भवतीति वागादीनां मनोऽधीनवृत्तिकत्वाद्वाग्वृत्तिमात्रमिति पूर्वः पक्षः । राद्धांते तु वाक्स्वरूपस्यैव लयो बोध्यः । कुतः ? दर्शनात् । वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिदर्शनात् । "वाङ् मनसि सम्पद्यते" इति शब्दाच्च । अन्यथा शब्दस्वारस्यभङ्गः स्यात् । नहि वृत्त्युपरमे तत्र प्रमाणान्तरेण वागिन्द्रियमवगम्यते । येन वृत्तिसम्पत्तिः कल्प्या, अप्रकृतौ लयाभावात्सम्पत्तिशब्दः संयोगाभिप्रायः ॥ १ ॥

---

श्रीराधिकाधीशपदानुगानां स्वान्ते कृपाभक्तिसुदीप्तिदक्षः ।
राकापतिर्लोकविलक्षणोऽसौ गोपाल आर्य्यस्तमहं भजेऽयम् ॥१॥

अथ वागधिकरणम् ।

इह पादे विदुषो मूर्धन्यनाड्योत्क्रान्तिरूपमर्चिरादिगत्या ब्रह्मप्राप्तिहेतुत्वेन विद्याफलभूतं चिन्तनीयम् । तत्र मूर्द्धन्यनाडीप्रवेशपर्यन्तोत्क्रान्तिर्विद्वदविदुषोः साधारणीति सा प्रथमं विचार्य्यते उपासनस्यर्चिरादिगतिचिन्तायां गत्युपक्रमत्वेन तस्यापि चिन्तनीयत्वादित्याह । अथेदानीमिति । विषयवाक्यमुदाहरति । अस्येति । संशयं दर्शयति । तत्रेति । कारणे हि लयः, न वाचो मनःकारणं तत्प्रवृत्तेरेव कारणं मन इति वृत्तिविषया सम्पत्तिरित्याह । तत्र वाच इति । सिद्धान्तयति । राद्धान्तेत्विति । वाक्शब्दस्य वृत्तिपरत्वे लक्षणा स्यात् । स्वरूपपरत्वे न, तथा सम्पत्तिशब्दो लयवाची संयोगवाची च । लयवाचित्वे प्रसिद्धिप्राचुर्य्यात् संयोगवाचित्वमस्वरसमिति चेत् पूर्वपक्षिणाऽपि लयवाचित्वं प्रयुक्तम् । उपादाने हि लयः वाग्वृत्तेर्वागेवोपादानम् । मनस्तु निमित्तम् । एवं वाक्छब्दसम्पत्तिशब्दयोरुभयोरपि लाक्षणिकत्वादस्वारस्यप्रसङ्गः पूर्वपक्षे । अस्माकन्तु सम्पत्तिशब्दास्वारस्यमेव न वाक्छब्दलक्षणेति विशेष इतिभावः । प्रवृत्तव्यापारं मनो निवृत्तव्यापारं वागिन्द्रियं तत्र प्रवृत्तकार्ये मनसि निवृत्तस्वकार्यं वागिन्द्रियमन्तर्गतं भवितुमर्हतीत्याह । वागिन्द्रिय इति । यद्यन्निवृत्तस्वकार्यं तत्तत्प्रवृत्तस्वकार्येऽन्तर्गतम्भवतीति व्याप्तिरस्ति । अतो वृत्तिमात्रसम्पत्याऽपि वागिन्द्रियोपरमे मनःप्रवृत्तिदर्शनमुपपद्यत इत्यत आह । वाङ्मनसि सम्पद्यत इति शब्दाच्चेति । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । वृत्तिमात्रसम्पत्तावित्यर्थः । स्वारस्यभङ्गादिति । वाक्स्वरूपसम्पत्तावेव वाङ्मनसि सम्पद्यत इति शब्दस्य स्वारस्यं नतु वृत्तिमात्रसम्पत्तावित्यर्थः । स्वारस्यभङ्गमेवोपपादयति । नहीत्यादिना । यदुक्तं वाचो मनःप्रकृतिकत्वाभावात् स्वरूपलयस्तत्र न सम्भवतीति तं समादधाति । अप्रकृताविति । वाङ्मनसि सम्पद्यत इति वाक्ये सम्पत्तिशब्द इत्यर्थः । मनसा वाक् संयुज्यते नतु तत्र लीयत इतिभावः ॥ १ ॥

## अत एव सर्वाण्यनु ॥ ४ । २ । २ ॥

अत एवोक्तहेतुभ्यां दर्शनशब्दाभ्यामेव वाचमनु सर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते । कोऽसौ शब्दः ? "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैर्यच्चित्तस्तेनैष प्राणमायाती" (प्र०३।६) ति प्रश्नोपनिषदि श्रुतेः । दर्शनं च पूर्ववद्बोध्यम् ॥२॥ इति वागधिकरणम् ॥ १ ॥

## तन्मनः प्राण उत्तरात् ॥ ४ । २ । ३ ॥

"मनः प्राण" इतिश्रुतौ किं प्राणशब्दः अपां वाचकः उत प्राणस्यैवेति संशये "अन्नमयं हि सोम्य ! मनः आपोमयः प्राण" (छा०६।५।४) इति मनसोऽन्नमयत्वस्य प्राणस्य चाम्मयत्वस्य श्रवणात् । "अद्भ्यः पृथिवी" त्यपामन्नप्रकृतित्वेन तत्र लयस्यापि सम्भवादब्वाचक इति प्राप्ते, राद्धान्तः । तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते तेन संयुज्यत इत्यर्थः । कुतः ? उत्तरात् । "मनः प्राण" इति वाक्यशेषात् । किञ्च "अन्नमयं हि सोम्य ! मनः आपोमयः प्राण" इति श्रुत्याऽन्नादिना मनःप्राणयोराप्यायनस्यैव विवक्षितत्वान्न तदुपादेयत्वं, मनसोऽहङ्कारोपादेयत्वात् प्राणस्य चाकाशोपादेयत्वान्न तत्रावन्नजत्वशङ्कावकाश इत्यर्थः ॥ ३ ॥ इति मनोऽधिकरणम् ॥ २ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ । २ । ४ ॥

---

वाचि दर्शितं न्यायं चक्षुरादिष्वतिदिशति । अतएवेति । अतश्शब्दार्थं व्याचष्टे । उक्तहेतुभ्यामिति ! तादृशं जिज्ञासते । कोऽसौ शब्द इति । तस्मादिति । यस्माद्धेतोस्तेजस एवोदानशब्दितोन्नयनहेतुत्वं तस्मादेवोपशान्ततेजा अपगतदेहौष्ण्यः संमुमूर्षुर्जीवो यच्चित्तो यस्मिंश्चित्तं यस्य स यच्चित्तः । यत्काम इति यावत् । यादृशमनुष्यदेवादिजन्मकामो भवति तत्कामनावशेन पुनर्भवशब्दितां पुनरुत्पत्तिं प्राप्तुं वाङ्मनसि सम्पद्यते मनसा संश्लेषमापन्नैर्वागादिभिर्दशभिरिन्द्रियैः सहितं प्राणं संमुमूर्षुर्जीव आयातीति श्रुत्यर्थः । पूर्ववदिति । वागिन्द्रिये उपरतेऽपीत्यादिनोक्तमित्यर्थः ॥ २ ॥ इति वागधिकरणम् ।

अथ मनोऽधिकरणम् ।

विषयवाक्यप्रदर्शनपुरस्सरं संशयं दर्शयति । मनःप्राण इत्यादिना । प्राणस्यान्नप्रकृतिकत्वबोधिकां श्रुतिमुदाहरति । अन्नमयं सोम्य इति । प्राणस्यचाप्प्रकृतिकत्वं श्रुतिमुखेन दर्शयति । आपोमयः प्राण इति । तत्रेति । स्वकारण इत्यर्थः । लयस्यापि सम्भवादिति । स्वकारणपृथिवीद्वारेणान्नमयस्य मनसः प्राणशब्दलक्षिताप्सु लय इत्यर्थः । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । मनोऽहङ्कारप्रकृतिकं प्राणवायुराकाशप्रकृतिक इति तयोर्नास्ति कथमपि प्रकृतिविकृतिभावः । तस्मात् "अन्नमयं हि सोम्ये"त्यादिश्रुतौ मनसोदनीयेन प्राणस्याद्भ्यश्चाप्यायनमात्रं विवक्षितमिति सकलबाह्येन्द्रियसंयुक्तं मनः स्वव्यापारोपरमपूर्वकं प्राणेन संसृज्यते इत्येव तदर्थो ग्राह्य इत्याह । किञ्चेत्य दिना ॥ ३ ॥ इतिमनोऽधिकरणम् ।

प्राणः किं तेजसि सम्पद्यते उत जीवे इति संशये तेजसीति पूर्वपक्षः। राद्धान्तस्तु स प्राणो, देहेन्द्रियाधिपे जीवात्मनि संयुज्यते। कुतः? तदुपगमादिभ्यः। श्रूयन्ते हि प्राणस्य जीवोपगमादयः "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठितः स्यामि" त्यादिषु। नच प्राणस्तेजसीति श्रुतिविरोधः, तस्या जीवविशिष्टप्राणविषयत्वात्। यथा गङ्गायमुनयोर्वैशिष्ट्येन समुद्रलयेऽपि यमुनायाः पृथक्समुद्रलयोक्तावप्यविरोधस्तद्वदन्यथोक्तश्रुतिविरोधात् ॥ ४ ॥ इति अध्यक्षाधिकरणम् ॥ ३ ॥

## भूतेषु तच्छ्रुतेः ॥ ४ । २ । ५ ॥

प्राणस्तेजसीति जीवविशिष्टः प्राणः किं तेजोमात्रे संयुज्यते उत संहतेषु तेजःप्रभृतिभूतेष्विति संशये तेजसीति श्रुतेस्तेजोमात्रे इति प्राप्ते, आह—भूतेष्विति। कुतः? तच्छ्रुतेः। "पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय" इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात् ॥ ५ ॥

ननु तेजआदिष्वेकैकस्मिन् क्रमेण सम्पत्तावप्युक्तश्रुतिरुपपद्यत इति चेत्तत्राह—

## नैकस्मिन्दर्शयतो हि ॥ ४ । २ । ६ ॥

नैकस्मिन्नेव प्राणः संयुज्यते, एकैकस्याकार्यक्षमत्वात्। दर्शयतो हि कार्याक्षमत्वं श्रुतिस्मृती। "नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति नामरूपव्याकरणार्हत्वाय त्रिवृत्करणमुपदिश्यते। "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः। समेत्यन्योऽन्यसंयोगं परस्परसमाश्रयाः

---

अथाध्यक्षाधिकरणम्।

विमृश्य पूर्वपक्षं दर्शयति। प्राण: किमित्यादिना। वागिन्द्रियमनस्संयुक्तः प्राणो जीवे सम्पद्यते इति सिद्धान्तयति। राद्धान्तस्त्विति। "प्राणस्तेजसी"ति श्रुतिविरोधमाशङ्क्य परिहरति। नचेति। प्राणस्य जीवेन संयुज्य जीवेन सह सम्पत्तिरस्तीत्याह। तस्या इत्यादिना। 'प्राणस्तेजसी'ति श्रुत्येत्यर्थः। अन्येन संयुज्य पदार्थान्तरसम्बन्धेनान्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह। यथेति। विपक्षे बाधकतर्कमाह। अन्यथेति। उक्तार्थानङ्गीकारे। उक्तश्रुतिविरोधादिति। प्राणस्तेजसीति श्रुतिविरोधादित्यर्थः॥ ४॥ इत्यध्यक्षाधिकरणम्।

अथ भूताधिकरणम्।

संशयं दर्शयति। प्राणस्तेजसीति। जीवविशिष्टः प्राण इति। संहतेष्विति। भूतान्तरसंसृष्टेषु। तेजोमात्रे संयुज्यत इति पूर्वपक्षं कृत्वा सर्वेषु भूतेषु सम्पद्यते इति सिद्धान्तयति। इतिप्राप्ते इति। हेतुं विवृणोति। पृथिवीमय इति ॥ ५ ॥

तेजःप्रभृतिषु क्रमिकसञ्चारेण "प्राणस्तेजसीति" श्रुतेरुपपत्तिरित्याशङ्क्यानन्तरसूत्रमवतारयति। नन्विति। पञ्चीकृतेषु त्रिवृत्कृतेषु वा भूतेष्वेकैकमेव कार्यसमर्थं न वत्रिवृत्कृतमेकैकं कार्यक्षमम्। 'आपः पुरुषवचसो भवन्ति' इत्यत्र त्रिवृत्कृतानामेवापां कार्यकरत्वदर्शनादित्याशयेन समाधत्ते। इतिचेत्तत्राह इति। सूत्रार्थं

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति । तथा च प्राणस्तेजसीति जीवद्वारा भूतान्तरसंसृष्टे तेजसि प्राणः संयुज्यत इत्यर्थात्तेजःप्रभृतिभूतेष्वेव प्राणसम्पत्तिरिति ॥ ६ ॥ इति भूताधिकरणम् ।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४ । २ । ७ ॥

किं सेयमुत्क्रान्तिर्ज्ञाज्ञयोः समाना उताज्ञस्यैव इति विशये "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इति बृहदारण्यके विदुषोऽत्रैवामृतत्वप्राप्तिश्रुतेरुत्क्रान्त्यभावादज्ञस्यैवेति पूर्वः पक्षः । राद्धान्तस्तु आङ् मर्यादायाम्, सृतिरर्चिरादिका गतिः यावत्सृत्युपक्रमे मूर्द्धन्यनाडीप्रवेशस्ततः प्राक् ज्ञाज्ञयोः समानैवेयमुत्क्रान्तिः । तदनन्तरं त्वस्ति विशेषः । "विद्वांश्चेन्मूर्द्धन्यनाडीं प्रतिपद्यते, अविद्वांश्चेत्पितृयानं नरकद्वारं वा प्रतिपद्यते । तथाहि—छन्दोगैराम्नायते "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ती"ति । एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरावश्यकी । सा च पूर्वत्र समानाऽपि प्रवेशे विशेषवती श्रूयते "तस्य हैतस्य हृदयाग्रं प्रद्योतते तेनप्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरप्रदेशेभ्य" इति । अत्र मूर्द्ध्न उत्क्रान्तिर्विद्वद्विषया, चक्षुरादिभ्य उत्क्रान्तिरितरविषया, शतं चैकेति श्रुत्यैकार्थ्यात् । यत्तूक्तम्—विदुषो ऽत्रैवामृतत्वप्राप्तिश्रुतेरुत्क्रान्त्यभाव इति । तत्रोच्यते । अमृतत्वं चानुपोष्येति । "अमृतत्वमेति अमृतो भवती"त्यादिनाऽमृतत्वं हि अनुपोष्यैव उपदाहे देहेन्द्रियादिसम्बन्धमदग्ध्वैव पूर्वोत्तराघविनाशाश्लेषमात्रमुच्यते, देहादिसम्बन्धनाशस्याग्रे भविष्यमाणत्वात् । अत्र "ब्रह्म समश्नुत" इति श्रुतिस्तूपासनसमय एव ध्रुवास्मृत्याख्यब्रह्मानुभूतिविषया, ध्रुवास्मृतेर्वृहत्त्वा-

---

व्याचष्टे । नैकस्मिन्निति । उक्तश्रुतिस्मृतिभ्यामेकैकस्य कार्याक्षमत्वदर्शनात् । 'अतस्तेजःशब्दो भूतान्तरसंसृष्टं तेजोऽभिधत्ते इति सर्वेषु भूतेषु सम्पत्तिरिति सिद्धान्त इत्यर्थः ॥ ६ ॥ इतिभूताधिकरणम् ।

अथासृत्युपक्रमाधिकरणम् ।

एवमुत्क्रान्तिप्रकारो निरूपितः । किमियमुत्क्रान्तिः विद्वदविदुषोस्समाना उताविदुष इति विमृशति । सेयमुत्क्रान्तिरिति । अविदुष एवेति पूर्वपक्षयितुं श्रुतिं तावदुदाहरति । अथेति । विदुषोऽपि 'तयोर्ध्वमायन्नमृतत्वमेती'ति नाडीविशेषप्रवेशरूपगत्युपक्रमात्प्रागुत्क्रान्तिस्समाना उत्क्रमणार्थनाडीप्रवेशदशायामेव हि विद्वदविदुषोर्विशेषः श्रूयते इति सिद्धान्तयति । राद्धान्तस्त्विति । सूत्रार्थं विवृणोति । आङ्मर्यादायामित्यादिना । मूर्द्धन्यनाडीद्वाराऽर्चिरादिमार्गं विद्वानेव प्राप्नोति नान्य इतिविशेषमाह । विद्वांश्चेन्मर्द्धन्यनाडीमिति । उक्तार्थं श्रुतिप्रमाणेन द्रढयति । छान्दोगैरित्यादिना । विष्वगिति । अन्या नाड्यः विश्वग्वितताः ताश्चामुमुक्षूणामुत्क्रमणार्था इत्यर्थः । तेन प्रद्योतेन = प्रकाशेन । मूर्ध्नो निष्क्रामत एव उर्ध्वया नाड्या प्रकाशितद्वारया निष्क्रमणमित्यर्थः । अवशिष्टसूत्रावयवव्यावर्त्यां शङ्कामाह । यदुक्तमिति । सूत्रावयवमुत्तरत्वेनावतार्य्य व्याकरोति । तत्रोच्यत इति । 'ब्रह्म समश्नुत' इत्युक्तिरप्युपासनाकाले भगवत्प्रीत्यात्मकब्रह्मानुभूतिविषयेत्याह । अत्र ब्रह्मेति ।

दन्यथाऽमृतत्वं चानुपोष्येति विरुध्येत। लिङ्गशरीरदाहाभावे परमोक्षानुपपत्तेः। तस्य हि देशविशेषं गत्वैव लयश्रवणात्। "इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती" ति श्रुतेः गतिश्रुतिश्च विरुध्येत। अतो गतिश्रुत्यविरोधाय "यदा सर्वे प्रमुच्यन्ते" इत्यनेनामृतत्वसाधनभूतोपासननिष्पत्तिरेवोच्यते। हृदि स्थिताः कामा यदा प्रमुच्यन्ते तदैवोपासननिष्पत्तेर्मर्त्योऽमृतो भवति पूर्वोत्तराघरहितो भवति। अत्र कामप्रमोचपूर्वकमोचोपासने स्थितो मर्त्यो ब्रह्म समश्नुते। ब्रह्मविषयकानवच्छिन्नानुभूत्या स्थितो भवतीत्यर्थः॥ ७॥

उक्तमेव विशदयति—

## तदाऽपीतेः संसारव्यपदेशात्॥ ४। २। ८॥

तदमृतत्वमदग्धदेहसम्बन्धस्यैव मन्तव्यम्। कुतः? आपीतेरिति। अपीतिरप्ययो ब्रह्मप्राप्तिः अर्चिरादिगत्या देशविशेषं गत्वा यावत् ब्रह्म न प्राप्यते तावद्देहसम्बन्धरूपसंसारस्य व्यपदेशात् "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्। (क०. ५।७) तस्य तावदेव चिरं धूत्वा शरीरमकृतं कृताऽऽत्मा ब्रह्मलोकमभिसम्भवामी" त्यादिना॥ ८॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः॥ ४। २। ९॥

इतश्च मरणसमये विदुषो न देहसम्बन्धो दग्धः, यतः सूक्ष्मं शरीरमनुवर्त्तते। कुतः? प्रमाणतस्तथोपलब्धेः। देवयानेन पथा गच्छतो विदुषश्चन्द्रमसा सम्वादलक्षणप्रमाणादपि सूक्ष्मशरीरस्य सद्भावोपलम्भात् "तं प्रतिब्रूयात्सत्यं ब्रूयादि" ति श्रुतेः॥ ९॥

---

अवश्यंचैवमभ्युपेयमित्याह। अन्यथेति। उक्तश्रुतेरुक्तविषयानङ्गीकार इत्यर्थः। तस्य=लिङ्गशरीरस्य। उक्तार्थे श्रुतिं प्रमाणयति। इमाः षोडशकला इति। 'अत्र ब्रह्मसमश्नुत इत्यस्योक्तार्थानङ्गीकारे। अर्चिरादिमार्गेण ब्रह्मप्राप्तिपर्यन्तदेहसम्बन्धलक्षणसंसारस्य 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी'त्यादिश्रुतिषु व्यपदेशात् सूक्ष्मशरीरानुवृत्तेश्च इन्द्रसम्वादरूपप्रमाणेनावगमाच्चेत्येतत्सर्वं विरुध्येत इत्याह। गतिश्रुतिश्चेति। विरोधं परिहरति। अत इत्यादिना। श्रुत्यर्थं विवृणोति। अत्रेत्यादिना॥ ७॥

अनन्तरसूत्रमवतारयति। उक्तमेवेति। सूत्रार्थं व्याचष्टे। तदमृतत्वमिति। ब्रह्मणः सर्वगतत्वादत्रैव ब्रह्म प्राप्तमितिशङ्काया व्यावृत्त्यर्थमाह। अर्चिरादिगत्येति॥ ८॥

पूर्वसूत्राभिप्रेतसूक्ष्मशरीरसम्बन्धे प्रमाणमिहोच्यत इत्याह। इतश्चेति। सूक्ष्मशरीरानुवृत्तिश्चन्द्रसम्वादरूपप्रमाणेनावगम्यते। श्रूयते हि पथि चन्द्रसम्वादो "ये वै केचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्युपक्रम्य 'एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः तं यः प्रत्याह तमतिसृजते अथ य एवं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्वापुरुषो वा अन्यो वैतेषु स्थानेषु प्रत्यजायत यथाकर्म यथाविद्यं तमागतं पृच्छति। कोऽसीति। तं प्रति ब्रूयादित्यादिश्रुतयो द्रष्टव्याः॥ ९॥

## नोपमर्देनातः ॥ ४ । २ । १० ॥

अत उक्ताद्धेतुकलापात् "अथ मर्त्योऽमृतो भवती" ति श्रुतिर्न देहसम्बन्धोपमर्देनामृतत्वं वक्तुं समर्था ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ४ । २ । ११ ॥

जीवदवस्थायां स्थूलदेहे संस्पर्शेन योऽयमूष्मोपलभ्यते सोऽस्यैव सूक्ष्मशरीरस्य गुणो, न च स्थूलस्य । कुतः ? उपपत्तेः ? सति तस्मिन् ऊष्मोपलब्धेस्तस्मिन्विनिर्गते तु मृतशरीरे ऊष्मानुपलब्धेश्चेत्यन्वयव्यतिरेकाभ्यां तस्यैवोपपन्नत्वात् । अतः सूक्ष्मदेहयुक्तो विद्वानप्युत्क्रामतीति ॥ ११ ॥

एवमुत्क्रान्तिं निरूप्य तद्विवादं निराकरोति—

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ ४ । २ । १२ ॥

ननु यदुक्ता विदुष उत्क्रान्तिः, साऽनुपपन्ना । कुतः ? "अथाऽकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती" (बृ० ४।४।६) त्यादिकाएवश्रुतेर्विदुष उत्क्रान्तिप्रतिषेधदर्शनादिति प्राप्ते, सिद्धान्तो नेति । नाऽयं निषेधो विदुष उत्क्रान्तेः, कथं तदुक्तश्रुतेर्गतिरित्यत्राह—शारीरादिति । तया श्रुत्या शारीरात्प्राणानामुत्क्रान्तिर्निषिध्यते, न शरीरात् । तस्याकामयमानस्य विदुषः प्राणाः स्वस्मान्नोत्क्रामन्ति देवयानेन गमनात्सहैव तिष्ठन्ति । तत्र हेतुः—स्पष्टो ह्येकेषामिति । हि यस्मादेकेषां माध्यन्दिनशाखिनां पाठे न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । "ब्रह्मैव सन् ब्रह्माप्येती"ति पञ्चमीप्रयोगाच्छारीरात्प्राणानामुत्क्रान्तिनिषेधः स्पष्टः श्रूयते इत्यर्थः । अत्रैवान्तर्यामिणि परमात्मन्येवेत्यर्थः । यदि च शरीरादुत्क्रान्तिः प्रतिषिध्येत तर्हि "स उच्छ्वयत्याध्मात्याध्मातो मृतः शेत" (बृ० ३।२।११) इति नोपपद्येत । उच्छ्वयनादीनां

---

सूत्रार्थं विवृणोति । अत इति । 'यदा सर्वे प्रमुच्यन्ते' इति श्रुतिर्न शरीरेन्द्रियबन्धोपमर्दविषया सूक्ष्मशरीरस्य जीवेन सह गतेश्चन्द्रसम्वादाथं 'तदनन्तरप्रतिपत्तावि'ति सूत्रोक्तन्यायेनावश्यकत्वादित्यर्थः ॥१०॥

सूक्ष्मदेहसद्भावे मानमौष्ण्यलिङ्गकानुमानमप्याह । अस्यैवेति । सूत्रं विवृण्वन्ननुमानं स्फोरयति । जीवदवस्थायामिति । औष्ण्यस्य सूक्ष्मदेहे व्यभिचारमाशङ्क्योपपत्तेरिति योजयति । उपपत्तेरिति । अन्वयव्यतिरेकाभ्यां स्थूलशरीरातिरिक्तं स्वाश्रयमूष्मा गमयतीत्युक्तं भवति । तस्यैवेति । सूक्ष्मशरीरस्यैवेत्यर्थः ॥११॥

अनन्तरसूत्रमवतारयति । एवमिति । सूत्रस्य शङ्काभागं विवृण्वन्नाह शङ्कते । नन्विति । विषयमाह । अथ कामयमान इति । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । 'शारीरादिति' सूत्रखण्डम् । तया श्रुत्या="न तस्य प्राणा उत्क्रामन्ती"ति श्रुत्या । शारीरात्=जीवात् । तत्रेति । प्राणानां सहस्थितावित्यर्थः । स्पष्टोह्येकेषामिति व्याख्येयपदम् । व्याचष्टे । हि यस्मादित्यादिना । "अत्रैव समवलीयन्त" इतिश्रुतिस्थमत्रपदं विवृणोति । अत्रैवेत्यादिना । शारीरात्प्राणानामुत्क्रान्तिर्निषिद्धा अमुमर्थं तर्केणोपपादयति । यदिचे-

देहधर्मत्वेन प्रत्यक्षविरोधश्च स्यादतः शारीरात्प्रतिषेधो युक्तो विवक्षिताऽर्थोपपत्तेः। किञ्च, न तस्येति षष्ठीप्रयोगेऽपि सम्बन्धसामान्यप्रतीत्या विदुषः सम्बन्धिप्राणोत्क्रान्तिनिषेधो युक्त एव। न चोत्क्रमणस्यापादाननिरूप्यत्वनियमात् षष्ठीश्रवणविरोधः। अपादानं तु शरीरमेव न शारीर इति वाच्यम्। अपादानापेक्षायामश्रुताच्छरीरात्सम्बन्धितया श्रुतस्य शारीरस्यैव सन्निहितत्वेनापादानतया ग्रहणेऽपि दोषायोगात्। किञ्च जीवसम्बन्धितया ज्ञातानां प्राणानां सम्बन्धसामान्यवाचिकायाः षष्ठ्या अपादानत्वरूपसम्बन्धविशेषपरत्वमपि समञ्जसम्, विशेषस्य सामान्यानतिरेकित्वात्। नटस्य शृणोतीतिवत्। अन्यथा श्रुतत्यागाश्रुतकल्पनापत्तेः। किञ्च, विदुषः शरीरवियोगकाले प्राणवियोगस्यापि प्राप्तत्वात्तस्यैव निषेधः, अप्राप्तस्य निषेधायोगात्। किञ्च "इमाः षोडशकला" इत्यादिना विदुषो गत्यनन्तरं देशान्तरे प्राणवियोगश्रवणाच्च। ननु पूर्वत्रार्त्तभागप्रश्ने "अपपुनर्मृत्युं जयती"ति विद्वांसं प्रस्तुत्य "याज्ञवल्क्येतिहोवाच यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो नेतीति पृष्टे नेति होवाच याज्ञवल्क्यो "ऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मात्याध्मातो मृतः शेते" इति विदुषः उत्क्रान्तिनिषेधः श्रवणाद्विद्वानिहैवामृतत्वं प्राप्नोतीति चेन्न। तत्र प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्शनेन तस्य विद्वद्विषयकत्वाभावात्। तत्राह प्रश्नपूर्वकं "प्राणो वै ग्रहः सोपानेनातिग्रहेण गृहीत" इत्यादिना ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावो "ऽग्निर्वै मृत्युः सोऽपामन्नम्" त्यनेनाऽपामग्न्यन्नत्वम् "अपपुनर्मृत्युं जयती" त्यनेन चापामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजयः नेतिहोवाच याज्ञवल्क्य इत्यादित्रयेण च म्रियमाणस्य जीवस्य प्राणपरित्यागो मृतस्य नामवाच्यकीर्त्त्यनुवृत्तिस्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः वर्णिता

---

त्यादिना। "यत्रायं पुरुषो म्रियते, उदस्मात्प्राणाः क्रामन्त्याहो ने"त्यार्त्तभागप्रश्ने नेतिहोवाच याज्ञवल्क्यो "ऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातोमृतश्शेत इति प्राणोत्क्रान्त्यपादानस्याध्मानेन वायुपूरणेन दृतिवदुच्छ्वसनस्य शरीरधर्मस्य कीर्तनात् जीवात्प्राणानामुत्क्रान्तेरप्रसक्तत्वेन तत्प्रतिषेधोऽनुपपन्न इत्यर्थः। तस्येति काण्वपाठे सम्बन्धसामान्यविहितया षष्ठ्या शरीरसम्बन्धिप्राणानामुत्क्रान्त्यपादानं शरीरमेवेत्याशङ्क्य षष्ठ्या उपकरणोपकरणित्वलक्षणसम्बन्धपरत्वमभ्युपगम्य परिहरति। नचेति। अपादानजिज्ञासायामश्रुतशरीरकल्पनामपेक्ष्य श्रुतस्य प्रत्यगात्मनोऽपादानताग्रहणं न्याय्यमित्यर्थः। अश्रुतस्य धर्मिणस्तस्यापादानत्वस्य चोभयोः कल्प्यत्वादपि सिद्धरूपस्यैव धर्मिण अपादानत्वकल्पनं युक्तमितिभावः। षष्ठ्या एवापादानपरतामाह। किञ्चेति। सम्बन्धसामान्यविहिता षष्ठी "नटस्य शृणोती"तिवदपादानार्थेति मुच्यमानाञ्च विश्लिष्यन्त इति तदर्थं इत्याह। सम्बन्धसामान्यवाचिकाया इति। अन्यथेति। उक्तार्थस्यानङ्गीकार इत्यर्थः। प्राणवियोगोऽपि निषेद्धुं शक्यत इत्याह। किञ्चेति। "न तस्य प्राणा उत्क्रामन्तीति" श्रुत्या प्राणानामुत्क्रान्तिर्निषिद्धा तत्प्रतिषेधो नोपपद्यत इत्याशयेनाह। अप्राप्तस्येति। प्रसक्तस्य हि प्रतिषेधः। अत्र तदभावान्न निषेधोपपत्तिरित्यर्थः। हेत्वन्तरमाह। किञ्चेति। पुनः शङ्कते। नन्विति। प्रश्नप्रतिवचनयोर्न ब्रह्मविद्याप्रसङ्गो दृश्यते येनोक्तापत्तिस्स्यादित्याशयेनोक्तशङ्कां परिहरति। इतिचेन्नेति। तत्रत्यं विषयमुपपादयति। तत्राह प्रश्नपूर्वकमिति। ग्रहातिग्रहरूपेणेति। अपामग्न्यन्नत्वम् अग्नेरपां भक्षकत्वानुसन्धानं विहितं फलविशेषाय "उदस्मात्प्राणाः क्रामन्ती"त्या-

इति नात्र विदुषः प्रसङ्गः। अविदुषस्तु प्राणानुत्क्रान्तिवचनं स्थूलदेहवत्प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्तीति प्रतिपादयति ॥ १२ ॥

## स्मर्य्यते च ॥ ४। २। १३ ॥

"सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै। जगाम भित्त्वा मूर्द्धानं दिवमभ्युत्पपात ह। उद्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम्, ब्रह्मलोकमतिक्रम्य तेन याति परां गतिमि" त्यादिस्मृतिश्च विदुषो मूर्द्धन्यनाड्योत्क्रान्तिं ब्रवीतीति सिद्धा विदुषोऽप्युत्क्रान्तिः ॥ १३ ॥ इत्यासृत्युपक्रमाधिकरणम् ॥५॥

सेन्द्रियः सप्राणो जीवात्मोत्क्रान्तिसमये तेजःप्रभृतिभूतसूक्ष्मेषु संयुज्यते इत्युक्तं तत्राशङ्क्य परिहृतं च। तानि पुनर्विदुषो वागादीन्द्रियाणि प्राणो भूतसूक्ष्माणि च किं परदेवतायां समवलीयन्ते उत यथाकर्म यथाविद्यं गच्छन्तीति संशये, यथाकर्म यथाविद्यमिति पूर्वपक्षः। तदानीं पुण्यादिफलभोगाभावेन सम्पत्तेर्निष्प्रयोजनत्वादिति प्राप्ते आह—

## तानि परे तथा ह्याह ॥ ४। २। १४ ॥

तानि विदुषो वागादिप्राणभूतानि परे परस्मिन्सर्वात्मनि ब्रह्मणि सम्पद्यन्ते तदुपादेयत्वात्। कुतः? तथा ह्याहेति। हि यतः "तेजः परस्यां देवतायामि"ति श्रुतिरेव परमात्मानं तथा सुषुप्तिप्रलययोरिव विश्रामस्थानत्वेनाह ॥ १४ ॥ इति परसम्पत्त्यधिकरणम् ॥

---

दिना जीवस्य प्राणापरित्यागकथनम्। अपपुनर्मृत्युं जयति मृत्युशब्दवाच्यमग्निमपजयति। उदस्मादित्यादि अविद्वद्विषयञ्चेत् कथं प्राणानुत्क्रान्तिवचनमित्यत्राह। अविदुषस्त्विति ॥ १२ ॥

"ऊर्ध्वमेक" इतियाज्ञवल्क्यस्मृतिवचनम्। तेषां नाडीविशेषाणां मध्ये यः सूर्य्यमण्डलं भित्वोर्ध्वं स्थितः तेन मूर्द्धसम्बन्धिनाडीविशेषाणां मध्येऽपि सूर्यमण्डलपर्य्यन्तप्रसृतनाडीविशेषेण ब्रह्म लोकातीतं परमं पदं प्राप्नोतीत्यर्थः। तस्य याज्ञवल्क्यवचनस्योदाहरणेन "चक्षुषो मूर्ध्नो वेत्यवि" द्वद्विषये मूर्धग्रहणं मूर्द्धसम्बन्धिनाड्यन्तरविषयमित्यपि सूचितम् ॥ १३ ॥ इत्यासृत्युपक्रमाधिकरणम्।

अथ परसम्पत्त्यधिकरणम्।

'सकरणग्रामस्सप्राणश्शरीरेन्द्रियाध्यक्षो जीव उत्क्रान्तौ भूतसूक्ष्मेषु सम्पद्यत' इत्युक्तम्, सैषा सम्पत्तिर्विदुषो विद्यते इत्याशङ्क्य परिहृतञ्च। तानि जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यञ्च जीवेन सह स्वकार्याय गच्छन्ति उत परमात्मनि सम्पद्यन्त इति चिन्त्यत इत्याह। सइन्द्रिय इति। यथाविद्यं यथाकर्मेति 'नपुन्सकादन्यतरस्याम्' इतिटजभावे रूपम्। पूर्वपक्षमनूद्य सिद्धान्तयति। इतिप्राप्त आह इति। सूत्रं व्याचष्टे। तानीति। श्रुतोपपत्तये च फलं परमात्मनि सम्पत्या सुषुप्तिप्रलययोरिव विश्रामरूपं कल्पनीयम्। परमात्मनि नित्यान्तरावस्थितस्यापि जीवस्य तदानीं विश्रामहेतुस्तत्संसर्गविशेषश्शास्त्रैकसमधिगम्य एवं तेजः परस्यां देवतायामित्यस्य पूर्वार्धपरत्वसम्भवात् न सर्ववस्तुसाधारणधारकतानुवादकत्वं कल्पनीयमित्याशयः ॥ १४ ॥ इतिपरसम्पत्त्यधिकरणम्।

## अविभागो वचनात् ॥ ४ । २ । १५ ॥

सेयं परमात्मनि विद्वत्प्राणादिसम्पत्तिः किं मनःप्रभृतिषु वागादिसम्पत्तिवत्संयोगरूपा उत समुद्रे नद्यादिसम्पत्तिवत्तादात्म्यापत्तिरूपेति विशये 'वाङ्मनसि सम्पद्यत' इति श्रुतस्यैव सम्पत्तिपदस्य "तेजः परस्यामि" त्यत्रानुषङ्गाद्विशेषादर्शनाच्च संयोगापत्तिरूपेति पूर्वः पक्षः। राद्धान्तस्तु सर्वात्मनो भगवतः परब्रह्मणः सर्वाधारत्वात्सर्वकारणत्वाच्च तत्र विद्वत्प्राणादीनां सम्पत्तिरविभागस्तादात्म्यापत्तिरूपैव। कुतः? वचनात् "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति परमात्मनि प्राणादिकलानां सम्पत्तिमुक्त्वा "भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवती" (प्र० ६।५)ति तासां नामरूपभेदोक्तेरित्यर्थः। अयमभिप्रायः, स्थूलदेहादुत्क्रम्य देवयानेन गतो विद्वान् प्राकृतमण्डलं भित्वा प्रकृतिविष्णुपदसीम्नोर्विवेचनहेतुभूतां सरिद्वरां विरजां यावत्प्राप्नोति तावत्सूक्ष्मशरीरमनुवर्त्तते। तत्र सूक्ष्मशरीरं परस्यां देवतायां हित्वा दिव्याप्राकृतानादिसिद्धामानवनीतब्राह्मयालङ्कारैरलङ्कृतो विष्णुलोकं परं पदं प्रविश्य परं ब्रह्माधिगच्छतीति ॥ १५ ॥ इति अविभागाधिकरणम् ॥ ७ ॥

एवं सृत्युपक्रमावधिं विद्वदविदुषोः सामान्यत उत्क्रान्तिं निर्णीयाथेदानीं विदुषः प्रतिज्ञातं विशेषं दर्शयितुमारभ्यते—

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४ । २ । १६ ॥

"शतं चैका च हृदयस्य नाड्य" इति श्रुतौ शताधिकया मूर्द्धन्यनाड्या मूर्द्धस्थानान्निष्क्रमणं श्रूयते। तत्रास्ति संशयः, शताधिकया विदुषो निष्क्रमणमन्याभिस्त्वितरस्येति

---

अथ अविभागाधिकरणम्।

संशयपूर्वपक्षावुच्येते। सेयमित्यादिना। सिद्धान्तयति। राद्धान्तस्त्विति। सूत्रार्थं व्याकरोति। तत्रेत्यादिना। तत्र = ब्रह्मणि। अस्य परिद्रष्टुरनुभवितुर्भोक्तुर्जीवस्य भोगोपकरणभूता इमाः षोडशाऽपि कलाः पुरुषं वासुदेवं प्राप्यास्तं गच्छन्ति। यथा शिलातलं प्राप्य क्षुरधाराः कुण्ठिता भवन्ति तथा भोगाधायका न भवन्तीत्यर्थः। तत्र हेतुमाह। पुरुषायणा इति। पुरुषसङ्कल्पाधीनस्वरूपस्थितिप्रवृत्तिका इति श्रुत्यर्थः। भेदप्रतिपादिकां श्रुतिमुदाहरति। भिद्येते चासामिति। तासां=कलानाम्। फलितार्थं दर्शयति। अयमभिप्राय इति ॥ १५ ॥ इत्यविभागाधिकरणम्।

अथ तदोकोऽधिकरणम्।

अवान्तरसङ्गतिं दर्शयति। एवमिति। विशेषमिति। गत्युपक्रमे विदुषो मूर्धन्यनाड्योत्क्रान्तिनियमरूपं विशेषमित्यर्थः। विषयवाक्यमुदाहरति। शतञ्चैकेति। श्रुत्यर्थं दर्शयति। शताधिकयेति। संशयमाह। तत्रेति = विषयवाक्ये। अत्र मूर्द्धन्यब्रह्मनाड्यैव विदुषो गतिर्नान्येषां तथा गतिरिति नियन्तु

नियमः सम्भवति उत नेति ? तत्र नाडीनामतिसूक्ष्मत्वाद्दुर्विवेचनतया पुरुषेण गृहीतुमशक्यत्वान्न नियमः। तयोर्द्ध्वमायन्निति तु यादृच्छिकीं तथागतिमनुवदतीति प्राप्ते, उच्यते—तदोक इति। विद्वान्देहादुत्क्रम्य शताधिकया शतादतिरिक्तयैकशततम्या हृदयादुद्गतया ब्रह्मरन्ध्रं प्राप्तया सूर्य्यरश्मिभिरेकीभूतया सुषुम्णाख्यनाड्यैव निष्क्रामति। नच तेन सा विवेक्तुमशक्या, यतोऽयं विद्वान् परमात्माराधनभूतविद्याया उपासनायाः सामर्थ्यात्प्रभावात् विद्याङ्गभूतगतेरातिवाहिकैस्तत्पदप्राप्तेरनुचिन्तनयोगाच्च प्रीतेन हृदि स्थितेन परमात्मनाऽनुकम्पितो भवति। ततश्च तस्योपसंहृतवागादिवर्गस्योच्चिक्रमिषोर्जीवस्यौकःस्थानं हृदयम् "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामती" ति श्रुतेः अग्रज्वलनं प्रकाशिताग्रं भवति। एवं तेन हार्देन परमात्मना प्रकाशितं द्वारं सुषुम्णामूलं यस्मै तादृशो विद्वांस्तां विजानातीति तया तस्य गतिर्युक्तैवेति ॥ १६ ॥ इति तदोकोऽधिकरणम् ॥

## रश्म्यनुसारी ॥ ४ । २ । १७ ॥

छांदोग्ये "ऽथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" (छा० ८।६।५) इत्याद्युक्त्वा पुनः "तयोर्द्ध्वमायन्नमृतत्वमेती" (छा० ८।६।६) त्युक्तं ततो हि मूर्द्धन्यनाड्या निष्क्रामन् रश्मीननुसृत्यादित्यमण्डलं गच्छतीति गम्यते। तत्रेयं विचिकित्सा, किं मूर्द्धन्यनाड्या निर्गतो विद्वान् रश्म्यनुसार्य्येव गच्छतीति नियमः संभवति उत नेति। तत्र रात्रौ मृतस्य विदुषो रात्रिरश्म्य-

---

न शक्यते नाडीनामुत्क्रमणक्लेशक्षुभितहृदयेन जीवेन विवेक्तुमशक्यत्वादिति पूर्वपक्षयति। तत्र नाडीनामिति। "तयोर्ध्वमायन्निति" श्रुतिः कदाचिद्यादृच्छिकं विदुषो मूर्द्धन्यनाड्या निष्क्रमणं तस्याः स्तुत्यर्थमनुवदतीति पूर्वपक्षः। शताधिकतया मूर्धन्यनाड्यैव विद्वानुत्क्रामति नान्य इति नियमस्सम्भवत्येवेति सिद्धान्तमाह। इतिप्राप्त-उच्यत इति। सूत्रं व्याचष्टे। तदोकइति! नच नाडीनां दुर्दर्शत्वम्। "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती" ति निष्क्रमणकाले हृदयाग्रप्रकाशश्रवणाद्विदुषो विद्यासामर्थ्यस्य विद्यानुष्ठानकाले तच्छेषगतिचिन्तनाभ्यासस्य विद्याराधितपरमपुरुषप्रसादस्य चाधिकस्य सत्त्वाच्चेत्याह। नचेति। तेन = विदुषा। सा = नाडी। निरासे सौत्रं हेतुमाह। अत इति। विद्यासामर्थ्यादित्यर्थः। तदेव सौत्रं हेतुं व्याचष्टे। विद्वानित्यादिना। सौत्रं द्वितीयं तच्छेषगत्यनुस्मृतियोगं विवृणोति। विद्याङ्गभूतगतेरिति। हार्दानुगत इति सूत्रावयवं व्याकरोति। प्रीतेनेति। ततश्चेति। पुरुषोत्तमानुग्रहादित्यर्थः। "तदोक" इति सूत्रभागं व्याचष्टे। तस्येत्यादिना। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। स एता इति। तत्प्रकाशितद्वार इतिभागं विवृणोति। तेनहार्देनेति ॥ १६ ॥ इति तदोकोऽधिकरणम्।

अथ रश्म्यधिकरणम्।

विदुषो हृदयात् ब्रह्मनाड्या निर्गत्यादित्यरश्मीननुसृत्य तन्मण्डलगतिः श्रूयते। अमुमर्थं विशदीकरणाय प्रकरणशोधनपूर्वकं विषयवाक्यमुदाहरति। छान्दोग्य इत्यदिना। ततः = उक्तश्रुतिवाक्यतः। विचाराङ्गं संशयं दर्शयति। तत्रेयं विचिकित्सेति। रश्मिभिरेवेत्यवधारणं नोपपद्यते निशि मृतस्यादित्यरश्म्यनुसरणासम्भवादिति पूर्वपक्षमाह। तत्रेति। निश्यपि विद्वान्सूर्यरश्म्यनुसारी गच्छति ग्रीष्मे दिवा सौरातपोष्मप्रकर्षे सत्येव निशि

नुसरणासम्भवादनियम इति प्राप्ते, राद्धान्तः रश्म्यनुसार्येव गच्छति। कुतः? विशेषाश्रुतेः। "अथैतैरेवे" त्यवधारणाच्च। निश्यपि सूक्ष्मा रश्मयः सन्त्येवातिनिदाघकाले निश्यूष्मोपलब्धेः। हेमन्तादौ तु हिमाभिभवात् दुर्दिन इव तदनुपलब्धिः। श्रूयते च सर्वदा शिरारश्मिसम्बन्धः "तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चामुञ्च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता" इति ॥ १७ ॥ इति रश्म्यनुसार्यधिकरणम् ॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ ४ । २ । १८ ॥

इदमत्र विचार्यते—निशि मृतेन विदुषा ब्रह्म प्राप्यते न वेति। तत्र "दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितमि" ति रात्रिमरणस्य गर्हितत्वेनाधोगमनहेतुत्वान्न निशि मृतस्य ब्रह्मप्राप्तिः सम्भवतीति चेत्तन्न। विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात् उत्तरपूर्वयोः पुण्यापुण्ययोर्भगवदीयध्रुवास्मृत्याख्यज्ञानेनैवाश्लेषविनाशात्प्रवृत्तफलकर्मसम्बन्धस्य च यावच्चरमदेहभावित्वाद्बन्धहेत्वभावेन न तत्र कालादिप्रतीक्षापेक्षेति विदुषो निशि मरणेऽपि ब्रह्मप्राप्तिरविरुद्धेति। दर्शयति च श्रुतिरेवैतत्। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति। "दिवा चे"ति वचनं त्वज्ञविषयम् ॥१८॥ इति निशाधिकरणम् ॥

## अतश्चायनेऽपि दक्षिणे ॥ ४ । २ । १९ ॥

अतः पूर्वोक्तहेतोरेव दक्षिणायनेऽपि मृतस्य विदुषो ब्रह्मप्राप्तिरविरुद्धा। ननु

---

निकतादिषूष्मदर्शनेन तस्य सूर्यरश्मिसम्बन्धित्वावगत्या रात्रावपि तत्सत्त्वावगमात्। एवञ्च रश्मिवाक्यमप्यर्थवद्भवतीति राद्धान्तमाह। इतिप्राप्ते राद्धान्त इति। तदनुपलब्धेः = रश्म्यनुपलब्धेः। प्रतायन्ते = सन्तता भवन्ति। आदित्यान्निसृता नाडीषु सम्बद्धाः नाडीभ्यो निःसृताः सन्तानभूता सत्यः आदित्ये सम्बद्धा इति वाक्यार्थः ॥ १७ ॥ इति रश्म्यधिकरणम्।

अथ निशाधिकरणम्।

विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति नवेति चिन्त्यते नास्त्येव निशामरणस्य निन्दितत्वात्। निन्दितेन परमपुरुषार्थप्राप्त्ययोगादित्याशयेन संशयपूर्वपक्षौ दर्शयति। इदमत्र विचार्य्यत इति। विदुषो निशि मृतस्यापि ब्रह्मप्राप्तिर्भवत्येव ननु निशामरणनिन्दया गर्हितगतिप्राप्तिः। कर्मसम्बन्धस्य विद्यादेहावसानत्वेन बन्धहेत्वभावादित्याशयेनोक्तां शंकां परिहरति। तन्नेति। अनारब्धकर्मणां प्राचीनकर्मणां विद्यया विनाशादुत्तरकर्मणामश्लेषात्। प्रारब्धकार्यस्य कर्मणश्चरमदेहावधित्वात्। निशामरणनिन्दावचनमविद्वद्विषयमितिभावः ॥ १८ ॥ इति निशाधिकरणम्।

अथ दक्षिणायनाधिकरणम्।

सूत्रार्थं विवृणोति। अतइति। अतिदेशाधिकरणस्येयमधिका शङ्का तदेवाह। नन्वित्यादिना।

"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती" ति चन्द्रप्राप्तिश्रवणाच्चन्द्रं प्राप्तानां च अथैतमेवाध्वानं पुनर्निवर्त्तन्ते" इति पुनरावृत्तेरावश्यकत्वात्। किञ्च भीष्मादीनां ब्रह्मविद्यावदग्रवर्त्तिनामप्युत्तरायणप्रतीक्षादर्शनात्कथं दक्षिणायने मृतस्य ब्रह्मप्राप्तिरिति चेन्न। ब्रह्मविद्याविधुराणां पितृयानेन पथा चन्द्रं गतानामेव पुनरावृत्तिर्न विदुषां, तेषान्तु चन्द्रप्राप्तावपि "तस्माद्ब्रह्मणो महिमानमाप्नोती" ति वाक्यशेषाद्दक्षिणायनमृतानां चन्द्रं गतानामपि ब्रह्मप्राप्तिरविरुद्धा। चन्द्रसायुज्यवचनं तु ब्रह्मप्रेप्सोर्विश्रामस्थानमात्रविषयम्, आवृत्तिवचनं चाविद्वद्विषयम् भीष्मादीनामुत्तरायणादिप्रतीक्षा तु स्वस्य स्वच्छन्दमरणशक्तिप्रदर्शनार्थमुत्तरायणप्रशंसार्थं वेत्यविरोधः ॥ १९ ॥

ननु "यत्र काले त्वनावृत्तिमि" त्युपक्रम्य "एकया यात्यनावृत्तिमन्यया वर्तते पुनरि"त्यन्तमहरादिकालविशेषः स्मृतौ मुक्तये निर्दिश्यते, तत्कथं रात्रौ दक्षिणायने वा मृतो मुक्तिं लभेतेत्यत्रोच्यते—

## योगिनः प्रतिस्मर्यते स्मार्त्ते चैते ॥ ४ । २ । २० ॥

योगिनो ब्रह्मनिष्ठान्प्रति हेयोपादेयतया पितृयानदेवयानाख्यसृतिद्वयं तत्र स्मर्यते, नतु विदुषः कालविशेषो नियम्यते। यत एते सृती स्मार्त्ते स्मृतिविषयभूते योगाङ्गतयाऽहरहः स्मरणार्हे "नैते सृती पार्थ! जानन्योगी मुह्यति कश्चने" त्युपसंहारवाक्यात् "यत्र काले त्वि' त्यत्र कालशब्दोऽहरादिसम्वत्सरान्तकालाभिमान्यातिवाहिकदेवतापरः, अग्निधूमयोः कालत्वासम्भवात्। तया च तदुपलक्षितो मार्ग उच्यते। यत्र यस्मिन्काले कालाभिमानिदेवतोपलक्षितमार्गे इत्यर्थः ॥ २० ॥ इतिदक्षिणायनोधिकरणम् ॥

---

दक्षिणायने मृतस्यापि विदुषो ब्रह्मप्राप्तिर्न सम्भवति तस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति चन्द्रप्राप्तानां पुनरावृत्तिवचनात् श्रीभीष्मादीनामुत्तरायणकालप्रतीक्षाविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधाच्चेति शङ्काग्रन्थार्थः। तत्र ब्रह्मप्राप्तिरेव प्रतिपिपादयिषिता "ब्रह्मणो महिमानमाप्नोती" ति वाक्यशेषात्। तत्रोत्तरायणमृतस्यादित्यलोके दिव्यभोगो दक्षिणायनमृतस्य पित्र्यभोगश्च मार्गे विश्रान्तिहेतुत्वेन विवक्षित इतियोजनीयम्। अन्यथा विदुष उत्तरायणमृतस्यापि ब्रह्मप्राप्तिर्नास्तीति तत्सिद्धिप्रसङ्गात्। स्वच्छन्दमृत्युनां श्रीभीष्मपितामहादीनान्तु धर्मप्रवर्त्तनायैवोत्तरायणप्रतीक्षा इत्याशयेनोक्तां शङ्कां परिहरति। इतिचेन्नेति ॥ १९ ॥

विदुषो मुमूर्षून्प्रति पुनरावृत्त्य पुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते अतो दक्षिणायनमृतस्य न ब्रह्मप्राप्तिरित्याशङ्क्यानन्तरसूत्रमवतारयति। नन्वित्यादिना। नात्र मुमूर्षून्प्रतिमरणकालविशेषः सस्मर्यते। किन्तु योगनिष्ठैः स्मर्तव्यदेवयानपितृयाणाख्ये गती स्मर्येते। तथाह्युपसंहारः। "नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुने"त्याशयेन सिद्धान्तयति। अत्रोच्यत इति। स्मार्त्ते इति सौत्रं पदं तद्व्याचष्टे। स्मृतीति ॥ २० ॥ इतिदक्षिणायनाधिकरणम्।

न तथापि दक्षिणायनमृतस्य सा तस्य चन्द्रसायुज्योक्तेः।<br>
भीष्मस्य ब्रह्मविदोऽप्युदगायनागमनिरीक्षणस्याप्युक्तेः ॥ १ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्य श्री श्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणा-
रुणपद्ममकरन्दभृङ्गेण जगद्विजयिश्रीद्श्रीकेशवकाश्मीरिभट्टेन
सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्म-
सूत्रवृत्तौ चतुर्थाध्यायद्वितीयपादवि-
वरणम् ॥ २ ॥

---

मैवं तस्यापि स्यात्पूर्वोक्ताद्वह्नहेत्वभावादेव ।
तस्यैन्दवसायुज्यं कालविशेषा पथीन्दुतः पूजाप्तिः ॥ २ ॥
अतएव वाक्यशेषे ब्रह्मप्राप्तिस्तत्र वर्ण्यते तस्य ।
भीष्मस्य तत्प्रतीक्षा माहात्म्यख्यापनायैव ॥ ३ ॥

इतिश्रीसनकसम्प्रदायानुयायिरसिकप्राणधनश्री१०८स्वामिहरिदासपदाश्रिताश्रितानु-
यायिना विदुषा अमोलकरामेण सङ्गृहीतायां वेदान्तकौस्तुभप्रभा-
भावदीपिकायां चतुर्थोऽध्यायस्य द्वितीयपादः



# अथ चतुर्थाऽध्याये तृतीयपादारम्भः ।



## अथ अर्चिराद्यधिकरणम्

### अर्चिरादिना तत्प्रथितेः ॥ ४ । ३ । १ ॥

उत्क्रान्तिमारभ्य नाडीविशेषेणोत्क्रम्य रश्म्यनुसारी सन्देवयानेन पथा गतो विद्वान्परं ब्रह्म आप्नोतीति स्थितम्, तदानीं गच्छतस्तस्य सा सृतिरेका अनेका वेति चिन्त्यते। तत्र श्रुतिष्वनेकविधा सृतिः श्रूयते। तथा हि बृहदारण्यकेऽर्चिरादिनैका। "त य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ् ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयती" ( बृ० ६ । २ । १५ ) ति। पुनस्तत्रैवान्या "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभे खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छती" ( बृ० ५ । १० । १ ) ति। कौषीतक्याम्नाये त्वपरा " स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमि" (कौ १ । ३) ति। छान्दोग्ये च "अथ यदुचैवास्मिंशव्यं कुर्वन्ति यदुच नार्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ् ङेति मासांस्तान्मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयत्येष

---

अथ अर्चिराद्यधिकरणम् ।

पादसङ्गतिमाह । उत्क्रान्तिमारभ्य इति। ब्रह्मप्राप्तिफलो विदुषो मार्गं इह पादे चिन्त्यते। प्रकृतविषयं शोधयति। तदानीं गच्छतस्तस्येति। किं विद्वानर्चिरादिमार्गेण गच्छति उत मार्गान्तरेण। किं सर्वासु विद्यास्वेको मार्ग आम्नायते उत नाना मार्गा इति संशयः। नानामार्गं व्युत्पादयति। तथाहीत्यादिना। पुनस्तत्रैवेति। बृहदारण्यके। अन्याः=वाय्वादिकाः। तत्र परिजिहीते इति। स्वावयवान् विगमय्यच्छिद्रं करोति। यथा रथचक्रस्य च्छिद्रमित्यर्थः। नीरन्ध्रतया मार्गमावृत्य स्थितो वायुः स्वावयवप्रहाणे रथचक्रप्रमाणं च्छिद्ररूपं मार्गं ददातीत्यर्थः। आडम्बरं वाद्यविशेषः। कौषीतकीवाक्ये अग्निलोकादिका गतिः श्रूयत इत्याह। कौषीतक्येति। छान्दोग्ये अर्चिरादिका गतिरित्याह। छान्दोग्य इति। शव्यम्=शवयोग्यं संस्कारम्। साध्वर्थे यत्। शवं संस्कारं कुर्वन्ति यदि वा न कुर्वन्ति अर्चिषमेव तेऽभिसम्भवन्ति प्राप्नुवन्तीत्यर्थः। क्रमभेदः क्रमिभेदश्च विवक्षितः। क्रमाश्रयपदार्थानां देवलोकवायुलोकादीनां प्रतिशाखं भेदेनाम्नानादिति भावः। संशयं

देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" इत्यर्चिः प्रथमैका, तथा तत्रैव नाडीरश्मिसम्बन्धेनान्या "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत" ( छा० ८ । ६ । ५ ) इति । "सूर्यद्वारेण ते विरजाः प्रयान्ती" ( मु० १।२।११ ) ति च क्वचिदन्या । इह अस्ति संशयः । किमेता नानाविधा ब्रह्मलोकसृतयः श्रुतिभिः प्रतिपाद्यन्ते उतार्चिरादिकैकैव सृतिरिति । तत्रान्योऽन्यनिरपेक्षत्वाद्भिन्नप्रकरणत्वाद्भिन्नोपासनाशेषत्वात् अथैतैरेवेत्यवधारणानुरोधाच्च नानाविधा इति प्राप्ते, अभिदध्महे । अर्चिरादिनेति । अर्चिरादिरेक एव मार्गोऽनेकविशेषणविशिष्टः सर्वश्रुतिभिः प्रतिपाद्यते । तेनैव विद्वान्ब्रह्म गच्छति । कुतः ? तत् प्रथितेः । प्रथितिः प्रसिद्धिः । तस्यैव सर्वत्र प्रसिद्धत्वात् । पञ्चाग्निविद्याप्रकरणे "ये चेमेऽरण्ये श्रद्धां तप इत्युपासत" इति विद्यान्तरशालिनामप्यर्चिरादिमार्गेणैव गत्यभिधानात् । "द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयादि"ति स्मृतेः । "पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ । दुर्जनाः पितृयानेन देवयानेन मोक्षिण" इति मोक्षधर्मे च स्मरणात् । श्रुत्यन्तरोक्तानामेकदेशानां विद्यागुणोपसंहारवच्छ्रुत्यन्तर उपसंहारात्स एव सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यते । प्रकरणभेदेऽपि विद्यायाः प्राप्तव्यस्य चैकत्वादनेकमार्गकल्पनमनर्थकम् । सम्भवत्येकवाक्यत्वे वाक्यभेदस्यायुक्तत्वादेतैरेवेत्यवधारणस्यापि रश्मिप्राप्तिपरत्वादेकैयं सृतिरिति स्थितम् ॥ १ ॥ इत्यर्चिराद्यधिकरणम् ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४ । ३ । २ ॥

सर्वप्रकरणेष्वर्चिरादिमार्ग एकस्तेनैव विद्वानागच्छतीत्युक्तमथ श्रुत्यन्तरोक्तानां मार्गपर्वणां केन क्रमेण संनिवेश इति चिन्त्यते ध्यानोपयोगात् । तत्र वाजसनेयिपाठे मासाऽऽदित्ययोर्मध्ये देवलोकः श्रूयते । छान्दोग्यपाठे तु तयोर्मध्ये सम्वत्सरस्तावुभावुभयत्रोपसंहार्यौ

---

दर्शयति । इह अस्ति संशय इति । नानाविद्यासु नानामार्गाम्नानादनियम इति पूर्वपक्षमाह । तत्रान्योन्यनिरपेक्षत्वादिति । अर्चिरादिकेनैव मार्गेण विद्वान् गच्छतीति सिद्धान्तमाह । इतिप्राप्त इति । सूत्रं व्याकरोति । अर्चिरादिरेक एवेति । प्रत्यभिज्ञानं दर्शयति । पञ्चाग्निविद्याप्रकरण इति । अन्यत्रोक्तानां गुणानामन्यत्रोपसंहारस्य करणात् भवत्यत्र विद्यागुणोपसंहारन्याय इत्याह । श्रुत्यन्तरोक्तानामिति । सएव=अर्चिरादिमार्ग एव । सर्वत्र=बहुषु प्रदेशेष्वित्यर्थः । परविद्यासु ब्रह्मप्रत्यभिज्ञानेऽपि गुणानन्त्यादुपसंहारो न शक्यत इति विद्यैक्यासम्भवः । मार्गान्वयिनां पदार्थानां द्वादशसङ्ख्यान्तर्भूतत्वात् चिन्तायोग्यतयाऽन्यादिप्रत्यभिज्ञानुगुण्येन मार्गैक्यमिति भेदः । "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत" इत्यत्रावधारणस्यायोगव्यवच्छेदानुवादकत्वात् एकस्य वाक्यस्य रश्मिप्रापणे तदितरव्यवच्छेदे च तात्पर्यायोग इत्याशयेनाह । एतैरेवेत्यवधारणस्येति ॥ १ ॥ इत्यर्चिराद्यधिकरणम् ।

अथ वाय्वधिकरणम् ।

अर्चिरादिनैकेनैव मार्गेण सर्वे विद्वांसो गच्छन्तीत्युक्तं तस्मिन्मार्गे छान्दोगा मासादित्ययोरन्तराले संवत्सरमधीयते 'मासेभ्यः संवत्सरं संवत्सरादादित्यमिति'। वाजसनेयिनस्तु तयोरन्तराले देवलोकमधी-

द्वयोर्मार्गैक्यात्। तत्राऽपि मासादूर्ध्वं सम्वत्सरस्ततो देवलोकः सन्निवेशयितव्यः। "अर्चिषो ऽहरह्न आपूर्यमाणपक्षमि" ( छा० ५ । १० । १, २ ) त्यादावधिककालानां न्यूनकालेभ्य उत्तरोत्तरसन्निवेशदर्शनात्, माससम्वत्सरयोः सम्बन्धस्य प्रसिद्धत्वाच्च। "यदा ह वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुमागच्छती" (बृ० ५।१०।१) त्यत्र तु वाजसनेयिन आदित्यात्पूर्वं वायुं पठन्ति। कौषीतकिनस्तु "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकमि" (कौ० १।३)त्यग्निलोकशब्दितार्चिषः परं वायुं पठन्तीति वायुस्थानानिश्चयात्तं किमर्चिरात्मकाग्नेरनन्तरं विद्वानभिगच्छेदुतसम्वत्सरादनन्तरमिति संशये, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकमि" ति पाठबलादर्चिषोऽनन्तरो वायुरिति प्राप्त, उच्यते। वायुमब्दादिति। अब्दात्सम्वत्सरादूर्ध्वमादित्यादर्वाञ्चं वायुमभिसम्भवति। कुतः? अविशेषविशेषाभ्यामिति। "स वायुलोकमि" त्यविशेषेण वायुरुपदिष्टः पदार्थमात्रनिर्देशात् "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुलोकमागच्छति तस्मै तत्र विजिहीते यथा चक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छती" ति विशेषेणोपदिष्टः। ऊर्ध्वशब्दः क्रमवाची, तेन विशेषो गम्यते। एवं सति बृहदारण्यकोक्तदेवलोकशब्देनापि वायुरेव ज्ञातव्यः। कौषीतकिनां वायुलोकशब्दश्च वायुश्चासौ लोकश्चेति वायुमेवाभिधत्ते। वायुश्च देवानामावासभूतः "योऽयं पवत एष एव देवानां गृहा" इति श्रुतेः। केचित्तु सम्वत्सराद्देवलोकं देवलोकाद्वायुलोकमिति श्रुत्यन्तरवशाद्देवलोकोऽप्यत्र मध्ये निवेशयितव्यः। वायुमब्दादिति तु छन्दोगश्रुत्यपेक्षयोक्तं सूत्रे वायुपदं देवलोकपूर्वकवायुपरमिति वदन्ति। तन्मते त्रयोदशपर्वा ब्रह्मलोकपद्धतिः॥ २॥ इति वाय्वधिकरणम्।

एवं कौषीतकिभिरग्न्यनन्तरं पठितस्य वायोः स्थानमुक्त्वमथ वाय्वनन्तरं पठितस्य वरुणस्य किं विद्युत उपरि निवेश उत वायोरुपरि इति संशये "स वायुलोकं स वरुणलोकमि" ति पाठक्रमेण वायोरुपरि वरुणनिवेश इति प्राप्ते, राद्धान्तमाह—

---

यते "मासेभ्यो देवलोकं देवलोकादादित्यमि"ति मार्गैक्यात्तावुभावपि उभयत्रोपसंहार्यौ। तयोः पञ्चम्यभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि मासानन्तरं सम्वत्सरो निवेशनीय इति संशयं वक्तुं विषयं शोधयति। तत्रेत्यादिना। अन्यत्रादित्यात्पूर्वं वायुः श्रुतः कौषितकीवाक्येऽग्नेः परत्वेन वरुणात् पूर्वत्वेन वायुः पाठक्रमसिद्धः। तत्र पाठक्रमात् बलीयसा वाजसनेयोक्तश्रौतक्रमेण पाठक्रमप्राप्तस्याग्न्यनन्तरत्वस्य बाधितत्वादादित्यात् पूर्वं एव वायुः प्राप्तः देवलोकश्च प्राप्तः तत्र सन्देहो जायत इत्याह। यदाह वै पुरुष इति। तत्र पूर्वपक्षमाह। स एतमित्यादिना। सिद्धान्तमाह। उच्यत इति। सूत्रार्थं व्याचष्टे। अब्दादिति. अविशेषविशेषाभ्यां = सामान्यविशेषाभ्यामित्यर्थः। देवलोकशब्दः सामान्यशब्दः। वायुशब्दो विशेषः। लोकपरत्वव्यावृत्यर्थमाह। वायुश्चासाविति। भगवत्पादश्रीशङ्करमतं दर्शयति। केचित्त्वित्यादिना। देवलोकवायुलोकयोस्सामान्यविशेषरूपेणैकार्थत्वे सम्भवत्यर्थभेदकल्पनानुपपत्तिः। देवलोकादूर्ध्वं वायोर्निवेशे सति "देवलोकादादित्यमि"ति श्रौतक्रमभङ्गः, देवलोकस्य सूत्रेणानिरूपितत्वम्, वायोरब्दादूर्ध्वं निवेशपरत्वादस्य सूत्रान्तराभावश्चेत्यस्वरसस्तन्मते द्रष्टव्यः॥ २॥ इतिवाय्वधिकरणम्।

## तडितोऽधिवरुणः सम्बन्धात् ।४।३।३॥

"स वरुणलोकमि" ति कौषीतकिश्रुत्युक्तो वरुणः "चन्द्रमसो विद्युतमि" ति छान्दोग्यश्रुत्युक्तायास्तडितोऽध्युपरिष्टान्निवेशयितव्यः। कुतः ? सम्बन्धात्। विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोः सम्बन्धस्य लोके वेदे च प्रसिद्धत्वात्, पाठक्रमादार्थक्रमस्य बलीयस्त्वात्। "यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्यथापः प्रपतन्ति। विद्योतते स्तनयति वर्षिष्यति वा" (छा० ७।११।१) इति श्रुतेः। अपि-चेश्वरो वरुणः, वरुणाच्चोपरीन्द्रप्रजापती निवेश्यौ, स्थानान्तराभावात्पाठसामर्थ्याच्च। एवं च सति "तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयती" (छा० ४।१५।५) त्यमानवस्य विद्युत्पुरुषस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते। तदेवमर्चिरादिप्रजापत्यन्तो द्वादशपर्वा ब्रह्मलोकमार्ग इति सिद्धम्॥ ३॥ इति वरुणाधिकरणम्॥ ३॥

## आतिवाहिकास्तल्लिङ्गात्॥ ४। ३। ४॥

---

अथ वरुणाधिकरणम्।

"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इतिकौषीतकिनां वचनम्। तत्र पाठक्रमानुसारेण वरुणादीनां सन्नि-वेश इत्याह। एवमित्यादिना। तत्र पूर्वपक्षं गृह्णाति। सवायुलोक इति। सिद्धान्तमाह। इतिप्राप्त इति। सूत्रं व्याचष्टे। स वरुणलोकमित्यादिना। विद्युत इति। विद्युच्च वरुणाभिमानविषयं जलञ्च मेघोदरस्थं तत्र विद्युतः स्फुटतरदृश्यत्वात् सलिलस्य तथा दृश्यत्वाभावाच्च सलिलस्य विद्युत उपरि स्थितिर्गम्यते, एवमभि-मानविषययोः सम्बन्धानुरूपमभिमानिदेवतयोरपि सम्बन्धो न्याय्य इति तडिदभिमानिन ऊर्ध्वं जलाभिमानी वरुण इतिभावः। ननु द्युपर्जन्यपृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः तडित्ततोऽप्यधस्तात् तडित्पुरुषस्योपरि वरुणो मेघोदरे तडित्सम्बन्धोऽस्तु तेन पाठक्रमं बाधित्वा कथं तदुपरि वरुणस्य निवेशः। कथं वेन्द्रप्रजापत्यो-स्तत्रावकाश इत्यत्राह। पाठक्रमादिति। आर्थक्रमस्य मेघोदरवर्तित्वलक्षणसामर्थ्यरूपार्थक्रमस्येत्यर्थः। पाठ-क्रमात् बलीयस्त्वेन वरुणस्य तडिदुपरि निवेशः। कौषीतकिपाठक्रमानुरोधादिति भावः। लोकप्रसिद्धिमनु-कूलयति। यदाहीति। विद्युत्प्रादुर्भावानन्तरवृष्टेर्दृष्टत्वात्कार्यकारणभावस्तयोरस्तीत्यर्थः। तत्रैव श्रुतिं सम्वादयति। विद्योतत इति। अपां विद्युद्योगेऽपि वरुणस्य किमायातं तदाह। अपाञ्चेति। वायोरनन्तराधीतस्यापि वरु-णस्य विद्युदानन्तर्यवदिन्द्रप्रजापत्योर्वरुणानन्तराधीतयोरपि स्थानान्तरं वाच्यमित्याशङ्क्याह। वरुणाच्चेति। तर्हि तयोर्मार्गपूर्वत्वेन सङ्गतिरेव माभूदित्याशङ्क्याह। पाठेति। आगन्तूनामन्ते निवेशयितव्यरूपान्मीमांसा-सिद्धन्यायाच्चेन्द्रप्रजापत्योर्वरुणोपरि निवेशः। तडितो गमयितृत्वाव्यवधानाय वरुणस्य तडितः पूर्वं निवेशः। तथासति मेघोदरसम्बन्धरूपार्थक्रमोऽपि स्यादिति चेन्न। तथासतीन्द्रप्रजापत्यार्यथापाठं वरुणतडिन्मध्यनिवेशे आर्थक्रमभङ्गात् तडिदानन्तर्ये वरुणेन्द्रप्रजापतीनां पाठक्रमभङ्गप्रसङ्गस्तस्मात्पाठक्रमानुरोधेनार्थक्रमानुविधाने सम्भवति न पाठक्रमो युक्तः। तडितो गमयितृत्वमव्यवहितमिति न श्रुतं तस्मात्तस्य गमयितृत्वं व्यवधानसह-मित्ययमेव क्रम इत्याशयेनाह। एवञ्च सतीत्यादिना॥ ३॥ इति वरुणाधिकरणम्।

किमर्चिरादयो विदुषो ब्रह्मप्रेप्सोर्भोगस्थानानि ? किम्वा मार्गचिन्हानि ? किं वा ऽतिनेतारः पुरुषाः ? इति संशयः। तत्र मार्गचिन्हानीति तावत्प्राप्तं, तत्सरूपत्वेन निर्देशात्। यथा हि लोके किञ्चित् गङ्गादितीर्थं प्रविष्टासमानं तन्मार्गज्ञा अनुशिंषन्ति। अतो निर्गत्यामुं ग्रामं याहि, ततो नगरं, ततो गिरिं, ततो नदीं, ततस्तीर्थं प्राप्स्यसीति। अथवा भोगस्थानानि, अहरादेः कालविशेषत्वेन प्रसिद्धेर्मार्गचिन्हत्वानुपपत्तेः। एते एव लोका यदहोरात्राण्यर्द्धमासा ऋतवः सम्वत्सरा" इत्यहरादीनां लोकत्वोक्तेः। कौषीतकिनां च "अग्निलोकमागच्छती"त्यादिना लोकशब्दानुविधानेनार्चिरादीनां पाठात्। लोकशब्दस्य च भोगस्थानेषु प्रसिद्धत्वादर्चिरादेरचेतनत्वाच्च भोगभूमय एवार्चिरादय इति प्राप्ते, प्रतिब्रूमः। आतिवाहिका इति। अतिवाहे भवास्तत्र परमात्मना नियुक्ता आतिवाहिका देवताविशेषा एवैते भवितुमर्हन्ति। कुतः ? तल्लिङ्गात्। उपसंहारे "स एतान् ब्रह्म गमयती"ति वैद्युतपुरुषस्य गन्तॄणां गमयितृत्वदर्शनात्। पूर्वेषां चाविशेषनिर्दिष्टानां स एव सम्बन्धस्तेऽप्यमानवा इति निश्चीयते। अन्यथोपसंहारे प्राप्तमानवत्वनिवृत्त्यर्थममानव इति विशेषणं न प्रकल्पते। गंतॄणां च सूक्ष्मशरीरपरिवेष्टितानां स्वातन्त्र्येण गमनानुपपत्तेः। उपपत्तौ वा विभूतिविस्ताराय परेण नीयमानत्वमुक्तम्। "अग्निलोकमि"त्यादिलोकशब्दोऽपि मध्ये भोगाभावाद्गमयितृत्वे एवोपपद्यते ॥ ४ ॥

ननु वैद्युतादूर्द्ध्वं आब्रह्मप्राप्तेरमानवस्य गमयितृत्वं श्रुतं, न वरुणादीनाम्। अतः कथं तेषामातिवाहिकत्वमित्यत आह—

---

अथ आतिवाहिकाधिकरणम्।

अर्चिरादीनां क्रमो निरूपितः तेषां स्वरूपं चिन्त्यते। किमर्चिरादयो मार्गचिह्नभूता उत भोगभूमयः। अथवा विदुषामतिवोढार इत्याह। किमर्चिरादय इति। पूर्वपक्षमाह। तत्रेति। उक्तेऽर्थे निर्देशसाम्यं हेतुमाह। तत्स्वरूपत्वेनेति। उक्तमेव हेतुं दृष्टान्तेन स्पष्टयति। यथेति। पूर्वपक्षान्तरमाह। अथवेति। अहरादीनां कालविशेषत्वात् कथं मार्गचिह्नत्वमित्याह। अहरादेरिति। भोगभूमित्वस्यावाचकाः शब्दा इत्याह। एत एवलोका इति। लोका अहरादिशब्दवाच्या इत्यर्थः। अहरादिकालविशेषाणां लोकशब्दवाच्यत्वमुक्तं स्यात् न भोगभूमीनामहरादिशब्दवाच्यत्वमित्यत्राह। कौषीतकिनाञ्चेति। लोकशब्दाभिधानमनुवृत्तिः "तस्मै तत्र विजिहीषते"त्यपि लोकसाधकहेतुरर्थसिद्धः। फलितार्थमाह। लोकशब्दस्येति। अर्चिरादिशब्दानामचेतनेष्वग्न्यादिषु रूढत्वादपि न तेषामतिवाहकतेत्याह। अचेतनत्वादिति। पूर्वपक्षमनूद्य सिद्धान्तयति। एवं प्राप्ते प्रतिब्रूम इति। प्रतिज्ञां दर्शयन् सूत्रं व्याचष्टे। अतिवहे भवा इति। तत्र हेतुं प्रश्नपूर्वकमादाय व्याचष्टे। कुत इति। उक्तार्थमेव विवृणोति। "स एतानिति" इतिश्रुतौ अमानवपुरुषस्य श्रूयमाणो यः प्राप्यप्रापकभावसम्बन्धः स एव पूर्वेष्वर्चिरादिष्वपि सम्बन्ध इत्यवगमात् सामान्यतो निर्दिष्टस्य सम्बन्धस्य विशेषपर्य्यवसानापेक्षत्वादित्याह। पूर्वेषाञ्चेति। स एवसम्बन्धः=प्राप्यप्रापकभावसम्बन्धः। ते=आतिवाहिकाः। विपक्षे बाधकतर्कमाह। अन्यथेति। तेषां मानवत्वे। नन्वचेतनानामतिवाहिकत्वानुपपत्तिः अर्चिरादीनां तदभिमानिदेवतापरत्वात् ॥ ४ ॥

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४ । ३ । ५ ॥

ततो विद्युत उपरिष्टाद्वैद्युतेन विद्युल्लोकपर्य्यन्तागतेनैवामानवेनातिवाहिकेनाब्रह्म-प्राप्तेर्विद्वान्नीयते । कुतः ? तच्छ्रुतेः "स एतान्ब्रह्म गमयती" ( छा० ४ । १५ । ५ ) ति तस्यैव गमयितृत्वश्रवणात् । तान्वैद्युतात्पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयती"ति श्रुत्य-न्तराच्चामानवो विद्युल्लोकमागतो वैद्युत उच्यते, वरुणादयस्तु साधु गम्यतामिति साहित्ये-नोपकारकाः, अतस्तेषामप्यातिवाहिकत्वमिति । एतदुक्तं भवति, विद्वान्देहादुत्क्रम्य मूर्द्धन्य-नाड्या विनिःसृत्य रश्मीनारुह्य यदा गन्तुमिच्छति तत्रार्चिषोऽभिमानिनातिवाहिकेन सम्मु-खमेत्य निरतिशयसन्मानेनोपचारैः समभ्यर्च्यातिवाह्य दिनं नीतस्तेनापि पूर्वोक्तरीत्या शुक्ल-पक्षं नीतः, ततश्चोक्तरीत्या क्रमात् पक्षोत्तरायणसम्वत्सराभिमानिभिर्वायुं देवलोकरूपं नीतस्तेनापि सन्मानेन समभ्यर्च्य स्वरश्मिच्छिद्रं दत्त्वा तन्मार्गेण सूर्यमण्डलं नीतस्तथैव सूर्येण स्वरश्मिच्छिद्रं दत्त्वा तेन सूर्यमण्डलं भित्त्वा चन्द्रमसं, तेन विद्युल्लोकं, तदभिमानि-देवताविशेषेण वरुणलोकं, तत इन्द्रलोकं, ततः प्रजापतिलोकं ततः प्राकृतमण्डलं भित्त्वा परधामसीमानं सरिद्वरां विरजामेति "स आगच्छति विरजां नदीं तां मनसैवात्येती"ति श्रुतेः ततः सूक्ष्मशरीरं परदेवतायां हित्वा तत्रामानवान्पुरुषान्स्वस्यातिवाहनार्थमागतान्पश्यति । तैः सह सङ्कल्पमात्रेण तां तीर्त्वा विष्णुलोकं प्रविश्य ब्रह्मभावमधिगच्छतीति यावत् ।

सन्ति चात्र सङ्ग्रहश्लोकाः

"विद्वान् विनिष्क्रम्य सुषुम्णया तया नाड्या समारुह्य सवितृरश्मीन् ॥
ततश्च वह्निं प्रथमं प्रयाति ततो दिनं पक्षमुपैति शुक्लम् ॥ १ ॥
तथोत्तरं प्राप्य बुधोऽयनं ततः सम्वत्सरं देवनिवासवायुम् ॥
सूर्यं च सोमं च ततश्च वैद्युतं जलेशमिन्द्रं च ततः प्रजापतिम् ॥ २ ॥
स तत्र तत्राखिललोकपालैः समर्चितो याति समस्तलोकान् ॥
अतीत्य देवैश्च समागतैरसौ ह्यमानवैर्याति सरिद्वरां बुधः ॥ ३ ॥
विहाय लिङ्गं परदेवतायां सङ्कल्पमात्रेण तरेच्च तां नदीम् ॥
ततोऽकृतं विग्रहमभ्युपेत्य ह्यलङ्कृतो ब्रह्मसमैश्च भूषणैः ॥ ४ ॥

---

यद्येतेऽतिवाहिकास्तदा कथं विद्युदनन्तरं श्रुतानामिन्द्रादीनामतिवाहकत्वोपपत्तिरित्याशङ्क्यानन्तर-सूत्रमवतारयति । नन्विति । तेषाम्=वरुणादीनाम् । ततश्शब्दस्य पश्चाद्भावपरत्वव्यावृत्त्यर्थं व्याचष्टे । ततो विद्युत इति । तर्ह्यतिवाहिकेषु वरुणादीनामन्वयः कथमित्यत्राह । वरुणादयस्त्विति । वरुणादीनामपि तदनुग्राहकत्वेनातिवाहिककोट्यन्तर्भावोपपत्तिरित्यर्थः । समुदिताधिकरणार्थं विवृणोति । एतदुक्तं भवतीत्या-दिना । यदुक्तं तदेतद्भवतीत्यर्थः । उक्तार्थं प्रमाणयितुं पुराणश्लोकानुदाहरति । सन्तिचात्र सङ्ग्रहश्लोका इति ॥ ५ ॥ इत्यतिवाहिकाधिकरणम् ।

द्वाःस्थैः समागम्य परस्परं मुदा ह्यलौकिकं स्थानमसौ प्रपश्यन् ॥
समागतो भागवतैश्च मार्गे समानशीलैर्भगवत्प्रपन्नैः ॥ ५ ॥
ततश्च पश्यन्मणिमण्डपेऽसौ स्थूणासहस्रादिविराजमाने ॥
दिव्ये महारत्नमये महात्मा सिंहासनस्थं पुरुषोत्तमं हरिम् ॥ ६ ॥
लक्ष्म्यादियुक्तं परमेशितारमादित्यवर्णं तमसः परात्परम् ॥
सुनन्दमुख्यैश्च सुदर्शनादिभिर्नमस्कृतं स्वाञ्जलिसम्पुटैश्च ॥ ७ ॥
सहस्रसूर्यादिप्रभातिरस्करद्युभिः किरीटादिसमस्तभूषणैः ॥
विभूषिताङ्गं जगतां पतिं गुरुं वेदान्तवेद्यं द्रुहिणादिवन्द्यम् ॥ ८ ॥
मुक्तोपसृप्यं च मुमुक्षुमृग्यं विश्वस्य हेतुं स्वजनैकजीवनम् ॥
विज्ञानमानन्दमयस्वरूपं स्वभावतोऽपास्तसमस्तहेयम् ॥ ९ ॥
समस्तकल्याणगुणाकरं प्रभुं विज्ञानमूर्त्तिं परधामसंस्थम् ॥
दृष्ट्वा मुकुन्दं भगवन्तमाद्यं कृष्णं सदानन्दमयं वरेण्यम् ॥ १० ॥
दूरान्नमस्कृत्य पदारविन्दयोर्नमो नमो भूय उदाहरन्मुदा ॥
ततश्च कृष्णेन कृपार्द्रया दृशाऽवलोकितः श्रीमुखपङ्कजेन सः ॥ ११ ॥
गिरा परानन्दनिदानभूतया सम्भावितो याति हि ब्रह्मभावम् ॥
पुनर्न संसारगतिं समेति वै विमुक्तमायार्गल एष मुक्तः ॥ १२ ॥
प्रदर्शितेयं श्रुतिभिः परा गतिः संक्षेपतो मन्दधियां हिताय ॥
स्वसम्प्रदायानुगुणा मयेरिता श्रुतिस्मृतिन्यायप्रमाणसङ्घैः ॥ १३ ॥
यया गतो याति परेशभावं हरेः पदं मुक्तसमस्तबन्धः ॥
मुमुक्षुभिः सा परिशीलनीया मुकुन्दपादाम्बुजगन्धलुब्धैः ॥ १४ ॥

इत्यातिवाहिकाधिकरणम् ॥ ४ ॥

## कार्य्यं बादरिरस्य गत्युपपत्तेः ॥ ४ । ३ । ६ ॥

"अथ स एतान्ब्रह्म गमयती"ति श्रुत्यार्ऽचिरादिना ब्रह्मप्राप्तिर्विधीयते, सा किं कार्यभूतहिरण्यगर्भब्रह्मविषयिका उत परब्रह्मविपयिकेति संशये किं युक्तम्, कार्यं ब्रह्मैवा-र्चिरादिर्गमयति । कुतः ? अस्य कार्यब्रह्मण एव देशविशेषवर्त्तित्वेन तत्रैव गत्युपपत्तेर्गन्तृग-

---

अथ कार्याधिकरणम् ।

अवान्तरसङ्गतिमाह । अथेति । गमयितृनिरूपणानन्तरं गन्तृनिरूपणमिति सङ्गतिरितिभावः । संशयं दर्शयति । सा किं कार्यभूतेति । साधारणे ब्रह्मशब्दे कार्यविषयत्वं गतेरहेतुकमिति शङ्कते । कुतइति । अस्येति व्याख्येयपदम् । कार्यं हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः नहि परिपूर्णं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तर-

न्तव्यत्वसम्भवादिति बादरिराचार्यो मन्यते ॥६॥

**विशेषितत्वाच्च ॥ ४ । ३ । ७ ॥**

"ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती" ( बृ० ६ । २ । १५ ) ति लोकशब्दबहुवचनाभ्यां तस्य विशेषितत्वाच्च ॥ ७ ॥

ननु नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्कथं कार्यब्रह्मोपस्थापकत्वमन्यथा "स एतान्ब्रह्माणं गमयती"ति निर्देष्टव्यं स्यादत आह—

**सामीप्यात्तु तद्व्यपदेशः ॥ ४ । ३ । ८ ॥**

तुशब्दः शङ्कोच्छेदार्थः । "यो ब्रह्माणं विदधाती"ति तस्य पूर्वजत्वेन परब्रह्मसामीप्याद्ब्रह्मत्वोक्तिः ॥ ८ ॥

ननु "नावर्त्तन्त" इति "अमृतत्वमेती"ति कथमस्यापुनरावृत्त्यादिश्रवणं सङ्गच्छेत ? कार्यब्रह्मगतस्य "आब्रह्मभुवनाल्लोकाः पुनरावर्तिन" इति पुनरावृत्तिस्मरणादिति चेत्तत्राह—

**कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४ । ३ । ९ ॥**

चतुर्मुखप्राप्तावप्यपुनरावृत्तिर्नानुपपन्ना, कार्यस्य हिरण्यगर्भलोकस्यात्यये महाप्रलये सतीत्यर्थः । तदध्यक्षेण चतुर्मुखेन विदुषा सह स्वयमपि तत्राधिगतविद्योऽतः कार्यब्रह्मणश्चतुर्मुखात्परं मूलभूतं ब्रह्म प्राप्नोति । कुतः ? अभिधानात् । "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति ब्रह्मणा सह परप्राप्त्यभिधानात् ॥ ९ ॥

**स्मृतेश्च ॥ ४ । ३ । १० ॥**

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं

---

गतिरुपपद्यते नित्यप्राप्तत्वादितिभावः ॥ ६ ॥

"पुरुषो मानव एत्य ब्रह्मलोकान् गमयतीति, प्रजापतेस्सभां वेश्म प्रपद्य" इतिच बहुवचनान्तेन लोकशब्देन लोकविशेषु तत्रापि प्रजापतिशब्दवाच्यहिरण्यगर्भसभायां वर्त्तमानं हिरण्यगर्भमुपासीनानेव नयतीति विशेषितत्वाच्चेत्यर्थः ॥ ७ ॥

अनन्तरसूत्रमवतारयति । नन्विति । सूत्रेण परिहरति । अतआह इति । सूत्राक्षराणि व्याकरोति । तुशब्दइति ॥ ८ ॥

ब्रह्मशब्देन कार्यब्रह्मग्रहणे अर्चिरादिना हिरण्यगर्भं प्राप्तस्य "तयोर्ध्वमायन्नमृतत्वमेती"ति । "इमं मानवमावर्त्तं नावर्त्तन्ते, इतिचामृतत्वापुनरावृत्त्युक्त्योर्विरोधः स्यादित्याशङ्क्यानन्तरसूत्रमवतारयति । नन्विति । सूत्राक्षराणि योजयति । चतुर्मुखस्येत्यादिना । अयमर्थः कथमवगत इत्यत्राह । ते ब्रह्मलोके त्विति । परामृतात्=परामृतं प्राप्य "ल्यब्लोपे पञ्चमी"ति पूर्वपक्षिणोऽभिप्रायः ॥ ९ ॥

उक्तार्थं स्मृतिप्रमाणेन द्रढयति । स्मृतेश्चेति । तामेवोदाहरति । ब्रह्मणा सहेति । प्रतिसञ्चरो महाप्रलयः तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्यान्तोऽधिकारावसानं तदा कृतात्मानः शुद्धधियो ब्रह्मलोकनिवासिन-

पदमि" ति स्मरणाच्च तथावगम्यते इति पूर्वः पक्षः ॥ १० ॥

## परं जैमिनिर्मुख्यत्वात् ॥ ४ । ३ । ११ ॥

जैमिनिराचार्यस्तु परं ब्रह्मैवार्चिरादिगणो विद्वांसं गमयतीति मन्यते स्म । कुतः ? मुख्यत्वात् । 'ब्रह्म गमयती"त्यत्र परं ब्रह्मैव ब्रह्मशब्दाभिधेयं, तस्यैव शक्यत्वेन नपुंसकब्रह्मशब्दस्य तत्रैव वृत्तेरन्यथा गौणत्वप्रसङ्गः । "यत्परः शब्दः स शब्दार्थ" इति न्यायात् । शब्दप्रमाणकैः शब्दानां योऽर्थः प्रतीयते स ग्रहीतव्यो, गौणो लाक्षणिकश्च न शब्दनिमित्तः प्रमाणान्तरापेक्षत्वात् ॥ ११ ॥

## दर्शनाच्च ॥ ४ । ३ । १२ ॥

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतौ परस्यैव प्राप्यत्वं स्पष्टं दृश्यते ॥ १२ ॥

ननु "प्रजापतेः सभां वेश्म प्रपद्य" ( छा० । ८ । १४ । १ ) इति श्रुत्या कार्यब्रह्मपरत्वमेव पूर्वश्रुतस्य ब्रह्मशब्दस्येति चेत्तत्राह—

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ ४ । ३ । १३ ॥

नायं ब्रह्मविषयः प्रतिपत्त्यभिसन्धिः सम्प्राप्तिसङ्कल्पः । किन्तु परब्रह्मविषय एव । "नामरूपयोर्निर्वहिते" ( छा० ८ । १४ १ ) ति परस्यैवाधिकारात् । वाक्यशेषे "यशोऽहं सम्भवामि ब्राह्मणानामि"ति तस्याभिसन्धातुः सर्वाविद्याविमोक्षसर्वात्मभावाभिसन्धानात् "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी" त्यभिसम्भाव्यमानस्य ब्रह्मलोकस्याकृतत्वश्रवणात् सर्वबन्धविनिर्मु-

---

स्तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्तीति योजना ॥ १० ॥

ब्रह्मशब्दस्य मुख्यार्थानुरोधमाश्रित्य परस्यैव ब्रह्मणो गन्तव्यत्वमाह । परमिति । तत्र प्रतिज्ञां विभजते । जैमिनिरिति । मुख्यत्वमुपपादयन्नाह । ब्रह्म गमयतीत्यत्र परं ब्रह्मैवेति । तत्रैवेति । परब्रह्मण्येवेत्यर्थः । विपक्षे बाधकतर्कमाह । अन्यथेति । ब्रह्मशब्दस्य कार्यब्रह्मपरत्व इत्यर्थः । उक्तार्थं महर्षिजैमिनिसूत्रेण प्रमाणयति । यत्पर इति । सूत्रार्थं व्याचष्टे । शब्दप्रमाणकैरिति ॥ ११ ॥

इतश्च मुख्यमेव ब्रह्म गन्तव्यमित्याह । दर्शनाच्चेति । । दर्शनं विभजते । परमिति । अस्याः श्रुतेरर्थोऽग्रे स्फुटीभविष्यति ॥ १२ ॥

उत्तरसूत्रमवतारयितुं शङ्कते । नन्विति । सूत्रं व्याचष्टे । नायं कार्यब्रह्मविषय इति । प्रपद्य इति प्रत्यभिसन्धिः । तच्छब्देन विवक्षितार्थं दर्शयति । सम्प्राप्तिरिति । परब्रह्मोपपादकानि वाक्यान्युदाहरति । नामरूपयोरिति । "यशोऽहं भवानि ब्राह्मणानामि"ति वाक्येऽविद्यानिवृत्तिपूर्वकसर्वात्मकत्वकीर्तनात् परब्रह्मैवार्चिरादिना गतस्य प्राप्यं कार्यब्रह्मपरत्वे सर्वात्मकत्वकीर्तनानुपपत्त्या च परप्रकरणविच्छेदः स्यादित्याशयेनाह । वाक्यशेष इति । परब्रह्मविषयत्वे छान्दोग्यवाक्यमुदाहरति । अश्वइवरोमाणीति । एतदधिकरणार्थं विशेषरूपेण व्युत्पा-

क्तिश्रवणाच्च परं ब्रह्मैव प्राप्यमर्चिरादिना गतस्येति। एतदुक्तं भवति "स एतान् ब्रह्म गमयती"ति ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वं, प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम्। नच गत्यनुपपत्तिः प्रमाणम्, परब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्ट-देशगतस्यैव निःशेषाविद्यानिवृत्तिः शास्त्रादवगम्यते। यथा विद्योत्पत्तौ वर्णाश्रमादिधर्मापेक्षा विविदिषाश्रुतेः, तथा निःशेषाविद्यानिवृत्तिरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिश्रुतिभ्योऽवगम्यते। नच लोकशब्दवहुवचनाभ्यां विशेषणाभ्यां हिरण्यगर्भस्यैव प्रतीतिरिति वाच्यम्, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयसमासेनाविरोधात्। अर्थैक्यनिश्चये बहुवचनस्यापि पाशवहुत्ववदुपपत्तेः। "यथादितिः पाशान् प्रमोमोक्तेतानि"ति एकस्मिन्पाशे बहुवचनं प्रयुज्यते, तद्वत्। केचित्तु निर्गुणब्रह्मविदो हि गतिर्नोपपद्यते, ब्रह्मणः सर्वगतत्वान्न हि प्राप्तमेव प्राप्यते। किन्तु यः परिच्छिन्नो ग्रामादिः, स गत्वा प्राप्यते। तस्मात्सगुणब्रह्मविद एव सगुणासु विद्यासु गतिश्रुतिरित्याहुस्तदयुक्त-मित्याहुरन्येऽसम्भवात्। तथाहि यदि निर्गुणायां गतिरनुपपन्ना तर्हि सगुणास्वपि समाना-नुपपत्तिः, तत्रापि ब्रह्मैवोपास्यते, तस्यानेकत्वाभावात्। सर्वगतस्य ये गुणास्ते सर्वगता एव, यथाकाशस्य परममहत्त्वं, यस्य हि संसारातिनिवृत्तिहेतवोऽपहतपाप्मत्वादयो गुणाः स परमात्मोच्यते। यस्यैते न सन्ति, स संसारी सत्त्वादिगुणयोगात्। नहि सगुणं ब्रह्मोपास्य-मानमब्रह्म भवति, नच निर्गुणं वस्तु विद्यते, न ह्युष्णप्रकाशादिप्रत्याख्यानेऽग्निर्नाम भवति नापि द्रव्यप्रत्याख्याने गुणो नामास्ति। उभयात्मकं तद्वस्तु "विज्ञानमानन्दं ब्रह्म,आनन्दो ब्रह्म" ति शतगुणोत्तरक्रमेणानन्दप्रतिपादनात्। यदि चैतन्यमात्रं ब्रह्म, आनन्दगुणोपदेशोऽनर्थकः स्यात्। न चाकस्मादर्थवादकल्पना युक्ता। यथाश्रुतार्थग्रहणे किं नामानुपपन्नम्। अस्थू-

---

दयति। एतदुक्तं भवतीत्यादिना। तत्पुरुषोऽमानव स एतान् ब्रह्म गमयति। इत्ययं निर्देशः परब्रह्मपरत्व एवो-पद्यते नतु कार्यब्रह्मपरत्वे, तथासति ब्रह्माणं गमयतीति निर्देष्टव्यं स्यात्। नापि लक्षणावृत्त्या कार्यब्रह्मपरत्वं वक्तुं शक्यं प्रमाणान्तरेण कार्यत्वस्य निश्चेतुमशक्यत्वादित्यर्थः। गत्यनुपपत्तिः प्रमाणमित्याशङ्क्य परिहरति। नचेति। विद्यानिष्पत्तिरिति। विद्यास्वमाहात्म्यात् सूक्ष्मशरीरहेतुरनुवर्त्तते। तस्या निष्पत्तिः कार्यकरत्वावस्थापत्तिः। यद्वा निष्पत्तिर्नितरां विकासः। सा गतिः सापेक्षेत्यर्थः। नित्यत्वेऽपि कालविशेषापेक्षावत् सर्वगतत्वेऽपि देशविशेषा-पेक्षा युक्तेतिभावः। नित्यमुक्ततया कालविशेषापेक्षा न चेत् शास्त्रवैयर्थ्यम् प्रत्यक्षविरोधश्च स्यात्। उत्क्रान्त्यनु-पपत्त्या न गतिरिति चेत् विदुष उत्क्रान्त्यादिप्रतिषेधादेस्तु पूर्वमेव परिहृतत्वादित्याशयः। प्रागुक्तार्थमनूद्य परि-हरति। नचेति। कर्मधारयसमासेनेति। अन्यथा लक्षणा स्यादितिभावः। ब्रह्मलोकानित्यत्र बहुवचनं कथमु-पपद्यत इत्यत आह। अर्थैक्यनिश्चय इति। तद्वदिति। परब्रह्मणः सर्वशक्तिमतः वासुदेवस्य स्वेच्छापरिकल्पिता अनन्ताः लोकाः सन्त्येव श्रुतिस्मृतीतिहासपुराणप्रमाणसिद्धा इत्यर्थः। श्रीशङ्करपादानां व्याख्यानं दूषयितु-मुपन्यस्यति। केचित्त्विति। तदपाकरोति। तदयुक्तमिति। असम्भवमेवोपपादयति। तथाहीत्यादिना। तत्रापि=निर्गुणायामपि। तस्य=परब्रह्मणः। सर्वगतस्य परब्रह्मण एव निरवधिककल्याणगुणाकरस्य सर्वा-न्तरात्मत्वात्सर्वात्मकत्वकीर्त्तनं श्रुत्युक्तमुपपद्यते नत्वेतेऽपहतपाप्मत्वादयो गुणा अन्यत्रोपपादयितुं शक्यन्ते तदेवा-

लादिश्रुतिस्तु प्रपञ्चनिवारणपरा। अयं तु "स एको ब्रह्मण आनन्द" इत्यसाधारणगुण उत्कर्षापकर्षरहितो व्यपदिष्टः, यदि च श्रुतं नाद्रियते, अपवर्गोऽप्यर्थवादः किं न स्यादत एव सर्वज्ञत्वं सर्वशक्तित्वं सृष्टिकर्तृत्वमित्येते गुणाः परस्यासाधारणाः न केनचित्प्रतिषेद्धुं शक्यन्ते। गुणकृतं कार्यकृतं वा नानात्वं च दर्शितं, तच्चास्माकं न दोषाय, प्रत्युतालङ्कारो भिन्नाभिन्नात्मवस्तूपगमादतः सगुणब्रह्मविदोऽपि गतिरनुपपन्ना तद्भावापन्ने नहि प्राप्तमेव प्राप्यते इति त्वदुक्तेनैव हेतुना। तथात्वे गत्यादिश्रुतयः कूपे प्रवेशयितव्याः। किञ्च संसारिणोऽपि स्वरूपतो गतिर्नोपपद्यते। तस्यापि लिङ्गशरीरगमनादेव गमनम्। ननु च संसारी जीवो नाम परमात्माभासस्तस्य परिच्छिन्नत्वाद्गतिरुपपद्यते। अत्रोच्यते—कोऽयमाभासो नाम किं वस्तुभूतः अथावस्तुभूत इति। यदि तावदवस्तुभूतस्तस्य स्वर्गापवर्गयोरधिकाराभावः, शशविषाणवत्। अथ वस्तुभूतस्तत्राणुमध्यमपरिमाणत्वं च भवता नेष्यते। यच्चाणुत्वं तदौपाधिकमित्यभ्युपगतं, तथात्वे च लिङ्गशरीरस्यैव गतिर्न स्वरूपस्येति गतिश्रुतीनां बाध एव। स्वरूपेण जीवस्य गत्यनुपपत्तेः, शरीरस्यैव फलप्राप्तिप्रसङ्गाच्च। न चास्माभिरियं गतिः पठिता अपि तु श्रौतमानसिद्धा। नापि सगुणविद्यायामेव श्रुता, अपितु निर्गुणायामपि। "तद्धैतदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजायन्ते त एव पुनरावर्तन्ते तथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्ते एतद्वै प्राणानामायतनम् एतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्त्तन्ते" इति प्रश्ने, मुण्डके च "सूर्यद्वारेण ते विरजाः प्रयान्ती"ति। ऐतरेयके च "अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदि" त्यादिश्रवणात्। तथा च श्रुतिमुखेनैव सिद्धा विदुषां गतिरिति। ननु वाजसनेयके "तेषामिह न पुनरावृत्तिरि"ति इहेति

---

चिरादिना गतस्य प्राप्यमित्यर्थः। उभयात्मकमिति। द्रव्यगुणात्मकम्। तद्वस्तु=ब्रह्मवस्तु। उक्तार्थं श्रुतिमुखेन प्रमाणयति। विज्ञानमानन्देति। यथाग्नेरौष्ण्यं स्वाभाविकत्वादपरिहार्य्यं तथा ब्रह्मणः कल्याणगुणाः स्वाभाविका एवेत्यर्थः। आनन्दबोधकश्रुतीनामर्थवादत्वमाशङ्क्य परिहरति। नचेति। "अस्थूलादि"श्रुतीनामुपपत्तिमाह। अस्थूलादिति। फलितार्थं दर्शयति। अत एवेति। ब्रह्मणः सर्वज्ञत्वसृष्टिकर्तृत्वादिगुणवत्वे गुणकृतं सृष्ट्यादिकार्यकृतं वा नानात्वं प्रसज्येत इत्यत आह। गुणकृतमिति। निगमयति। अत इति। तद्भावापन्ने=ब्रह्मभावापन्ने। तथात्वे=प्राप्तस्य प्राप्यत्वे। तस्येति। संसारिण इत्यर्थः। परमात्माभासत्वेन संसारिणो जीवस्य गतिमुपपादयन्नाशङ्कते। नन्विति। तस्य=संसारिजीवस्य। समाधत्ते। अत्रोच्यत इति। द्विधा विकल्पयति। कोऽयमाभास इति। तस्य=अवस्तुभूतस्य। भवता नेष्यत इति। "अथान्य एव जीवो ब्रह्मणः सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति। व्यापित्वे गमनानुपपत्तिः। मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः। अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः। प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे "विस्तरेण पुरस्तादि"ति स्वकीयभाष्येणेत्यर्थः। तथात्वे=औपाधिकत्वे। नहि स्वमनीषया ह्येतत्तर्कितं किन्तु शास्त्रेण सिद्धमित्याह। नचास्माभिरिति। निर्गुणविद्यायां पठितानि गतिप्रतिपादकवाक्यान्युदाहरति। तद्धैतदिष्टापूर्त्त इत्यादिना।

विशेषणादिह कल्पेऽनावृत्तिः कल्पान्तरे त्वावृत्तिः स्यादिति चेन्न । असम्भवात्तथाहि यथा "राजसूये ब्रह्मणो गृहे महिष्या ग्रह" इत्येवमादिना द्वादशहवींषि विहितानि प्रत्येकं कर्त्तव्यानीति "तत्र श्वोभूते निर्वपेदि" त्युक्तं एकस्मिन्कृते पुनरपि श्वोभूते इत्युपतिष्ठते "श्वोभूतवदनुवादादि" ति सूत्रात् । तद्वदत्रापीह कल्पेऽनावृत्तिः कल्पान्तरेऽपि बोध्या, आकृतिनिर्देशस्य सर्वकल्पव्यापनात् । अपि चेह युगेऽवान्तरे कल्पेऽन्यस्मिन्वेत्यनध्यवसानादाकृतिवादो युक्तः अर्थवादसम्भवात्, ग्रहैकत्ववद्वाक्यभेदात्सदाऽनावृत्तिर्विधीयते युगपत्सर्वकल्पानावृत्तिरेवावतिष्ठते, तत्रास्मिन्नेव कल्पेन कल्पान्तर इत्यपरस्मिन्नर्थे विद्यमाने वाक्यभेदो दुर्निवारः । यथा "ग्रहं सम्मार्ष्टी" ति संमार्गे विधीयमाने सर्वग्रहेषु प्राप्तिः, तत्रैकमिति पुनर्विधीयमाने वाक्यभेदस्तथा प्रकृतेऽपि बोध्यम् । किञ्चाऽमुत्रानावृत्तिर्न विधीयते तदानीमिहेति पदं किं विशेषणं स्यात् । तस्मादिहपदमनुवादोऽत एव काण्वानामिहपदं न पठ्यते । तस्मादर्चिरादिना गत्वा परमात्मनि लिङ्गप्रलयो, न प्रागिति गतिश्रुतिसामर्थ्यान्निश्चीयते । "परेऽव्यये सर्वे एकीभवन्ती" ति "पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति" श्रुतिभ्यः इत्यादिना तदपि न रमणीयं, स्वोक्तिविरोधात् । तन्मतेऽपि न तावद्भेदः स्वाभाविकः किन्त्वौपाधिक एव । मोक्षे भेदानङ्गीकारात्तथात्वे चोपाधेरेव गत्यादिसिद्धिर्न स्वरूपस्य । तथैव मोक्षोऽपि विरुद्धः स च पूर्वमेव विस्तृतः । सिद्धान्ते तु भेदस्यापि स्वाभाविकत्वेनाणुपरिमाणस्य च श्रुतिमानसिद्धत्वेन पारमार्थिकत्वाद्बन्धमोक्षयोरुत्क्रान्तिगत्यागतीनां च सामञ्जस्यं विरोधाभावात् । अपुनरावृत्तिरपि त्रिविधकर्मणो निःशेषनाशेन जन्मकारणाभावादेव । निःकारणमेव पुनरावृत्त्यङ्गीकारे मुक्तस्य पुनः संसारापत्तिस्तत्रापि समाना । नच तस्यापि कर्मशेषोऽगीङ्कार्य इति वाच्यम्, प्रमाणाभावात् । "तत्र प्रयाता गच्छन्ति ब्रह्म

---

फलितार्थं दर्शयति । तथाचेत्यादिना । कार्यब्रह्मप्राप्तानां पुनरावृत्तिरस्ति । "तेषामिह न पुनरावृत्ति" रिति वाजसनेयके इहशब्दश्रवणात्तस्य कल्पविषयत्वात् । कल्पान्तरेचावृत्तिरिति पूर्वपक्षमाह । नन्विति । परिहरति । नेति । असम्भवमेवोपपादयति । तथाहीत्यादिना "श्वोभूते निर्वपेदि" ति श्वोभावस्यैव सर्वकल्पानामिहशब्दार्थत्वाविशेषात् । अन्यथा अनावृत्तिः स्यात् इह स्यादिति वाक्यभेदः स्यात् । एकया यात्यनावृत्तिमन्यया वर्त्तते पुनरित्युक्तवैषम्याभावप्रसङ्गाच्चेत्याशयेनाह । यथा राजसूय इति । दार्ष्टान्ते योजयति तद्वदिति । तत्र हेतुमाह । आकृतिनिर्देशस्येति । आकृतिवादस्य युक्तत्वं व्यवस्थापयति । अपिचेत्यादिना । वाक्यभेदं विवृणोति तत्रेति । तेषामिह न पुनरावृत्तिरितिवाक्य इत्यर्थः । दृष्टान्तेन वाक्यभेदं परबुद्ध्यारूढं करोति । यथा ग्रह सम्मार्ष्टीति । ग्रहं=पात्रम् । श्रुतिवाक्यस्थमिहेति पदं न विशेषणमिहानावृत्तेरनभिधानात् किन्त्वनुवादकमित्याह किञ्चेति । अतएव=इह पदस्यानुवादपरत्वादेव । तस्मात् परब्रह्मप्राप्त्यर्थं गत्युपदेशसामर्थ्यादयमर्थो भवति । यथा विद्याकर्मवशादर्चिरादिना गतस्य सत्यलोकमतिक्रम्य परं जगत्कारणं ब्रह्मलोकमालोकं स्वयंप्रकाशकमिति यावत् प्राप्तस्य तत्रैव लिङ्गं प्रलीयते नतु गतिमेवंभूतां विना लिङ्गप्रविलय इति । अतएव श्रुतिः "पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति" भामतीग्रन्थः । तं सङ्क्षेपणानूद्यति । तस्मादित्यादिना भामतीकारोक्तमपाकरोति । तदपि न रमणीयमिति । तथात्वे=औपाधिकत्वे । स्वसिद्धान्तेन बन्धमोक्षादिकं व्युत्पादयति । सिद्धान्तेत्विति ।

ब्रह्मविदो जना" इत्यर्चिरादिना गतस्य ब्रह्मप्राप्तिविधानादित्यलं प्रासङ्गिकेन ॥ १३ ॥

एवं पक्षद्वयं दर्शयित्वा स्वमतेन निर्णयमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ ४ । ३ । १४ ॥

"ये नाम ब्रह्मेत्युपासीते"त्यादिश्रुत्युक्तनामादिप्रतीकं ब्रह्मदृष्ट्योपासते ते प्रतीकालम्बनास्तान्वर्जयित्वा ये परं ब्रह्मोपासीना ये च पञ्चाग्निविद्यावन्तः प्रकृतिवियुक्तं प्रत्यगात्मस्वरूपं ब्रह्मात्मकत्वेनोपासीनास्तानुभयविधानमानवः पुरुषः परं ब्रह्म नयतीति भगवान्बादरायणो मन्यते स्म । कुतः ? उभयथा दोषात् । तत्र कार्योपासकान्नयतीति पक्षे "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्याद्याः श्रुतयो विरुध्येरन् । परं ब्रह्मोपासीनानेव नयतीति पक्षे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ती" ति पञ्चाग्निविदामप्यर्चिरादिगतिविधायकश्रुतिगणो विरुध्येत, अत उभयस्मिन्पक्षे दोष इत्यर्थः । तस्मादुक्तलक्षणोभयविधान्नयतीत्याह—तत्क्रतुश्चेति । यथोपासीनस्तथैव प्राप्नोति । परमात्मक्रतुः परमात्मानं प्रतिपद्यते, परमात्मकतया प्रकृतिवियुक्तप्रत्यगात्मक्रतुः तादृशस्वरूपप्राप्तिपूर्वकपरमात्मानं प्रतिपद्यते । "यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति तं यथायथोपासते तदेव भवति" इत्यादिश्रुतेः पञ्चाग्निविद्यावतामप्यर्चिरादिगतिविधानादर्चिरादिना गतस्य परब्रह्मप्राप्त्यपुनरावृत्तिविधानाच्च तत्क्रतुन्यायेन प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपोपासनं सिद्धम्, ननु प्रती-

---

अपुनरावृत्तिरपि जन्मकारणाभावप्रयोज्या नत्वहेतुकी तथासति मुक्तस्य पुनः संसारापत्तिरित्याह । अपुनरावृत्तिरिति ॥ १३ ॥

अनन्तरसूत्रमवतारयति । एवमिति । सूत्रार्थं व्याचष्टे ये नाम ब्रह्मेत्यादिना । कार्यमुपासीनान् नयतीति । नायं पक्ष इति । हिरण्यगर्भोपासीनानामर्चिरादिगतिरनुपपन्ना अर्चिरादिना गतस्य परब्रह्मप्राप्तेः । नहि हिरण्यगर्भोपासकस्य परब्रह्मप्राप्तिः यथोपासनं हि फलं तस्मादर्चिरादिना परब्रह्मोपासक एव गच्छति न कार्योपासक इत्यर्थः । उदाहृतश्रुतिवाक्यप्रतिपन्नयोरन्यतरस्य प्रतीकालम्बनत्वात् । अप्रतीकालम्बनान् नयतीति प्रतिज्ञानं व्याहतमित्यत्राह । पचाग्नीति । तत्र प्रतिपन्नयोरुभयोरप्यप्रतीकालम्बनत्वं साधयितुं सूत्रकारस्तत्क्रतुश्चेत्युक्त्वा नत्यर्थः "तत्क्रतुश्चेति" सूत्रखण्डं तद्विवृणोति । यथोपासीन इति । परमात्मक्रतुशब्दार्थं विवृणोति । परमात्मकतयेति । उक्तार्थे श्रुतिं प्रमाणयति । यथेति । 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धां तप इत्युपासते' इत्यत्र पञ्चाग्निविद्यानिष्ठस्यार्चिरादिगतिश्रवणात् । तया गतस्य ब्रह्मप्राप्त्या पुनरावृत्तिश्रवणात् फलस्य च यथोपासनाभावित्वात् । अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पञ्चाग्निविद्यानिष्ठो ब्रह्मोपासक एव । तत्र "तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धां तप उपासते, इति विभागान्यथानुपपत्त्या तत्क्रतुन्यायेन प्रकृतिवियुक्तब्रह्मात्मकस्वरूपोपासनं सिद्ध्यतीत्याशयेनाह । पञ्चाग्निविद्यावतामिति । "मनो ब्रह्मेत्युपासीत स यो नाम ब्रह्मेत्युपास्ते" इत्यादिषु प्रतीकोपासनेषु, ब्रह्मोपासनायाः सत्वात् कथमर्चिरादिगतेर्निषेध इत्याशङ्कते । नन्विति । मनआदिषु ब्रह्मदृष्टिः

कालम्बनोपासनाऽस्यपि ब्रह्मोपासनस्य सत्त्वात्कथमर्चिरादिगत्यभावः इति चेन्न। तत्र तत्क्रतुविरहात्। नामादिप्राणपर्यन्तप्रतीकोपासनासु प्रतीकस्यैव प्राधान्येन ब्रह्मणस्तु विशेषणत्वान्न तेषां ब्रह्मोपासकत्वमतो नार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च सम्पद्यते॥ १४॥

## विशेषं च दर्शयति॥ ४। ३। १५॥

न प्रतीकेषु ब्रह्मोपासनमस्तीत्युक्तम्, श्रुतिरपि "यावन्नाम्नो गतं तत्रास्य कामचारो भवति वाग्वाव नाम्नो भूयसी यावद्वाचो गतं तत्रास्य कामचारो भवती"त्यादिका नामादिप्रतीकोपासनस्य गतिनिरपेक्षं परिमितञ्च फलमुपासनातारतम्यञ्च दर्शयति। तस्मात्प्रतीकोपासकभिन्नान्पूर्वोक्तोभयविधान्विदुषोऽमानवः पुरुषः परं ब्रह्म नयतीति गतिश्रुतिभिस्तेषामेव गतिरपुनरावृत्तिश्च सम्पद्यत इति राद्धान्तः। एवं च "ब्रह्मणा सह ते सर्वे" इति वचनं नार्चिरादिना गतानां गतिप्रकारविषयम्, अर्चिरादिना गतानां देहावसानसमय एव पुण्यापुण्ययोर्नाशात्, चतुर्मुखलोकप्राप्तितद्वासतत्रस्थभोगानुभवहेत्वभावात् तत्क्रतुन्यायविरोधात्तदानीमेव ब्रह्मप्राप्तिश्रुतिविरोधाच्च। तद्वचनं तु पुण्यकर्मविशेषेण सत्यलोकं प्राप्तानां "तदुपर्यपि बादरायणः सम्भवादि"ति न्यायेन तत्रैव निष्पन्नविद्यानां गतिप्रकारविषयम् "ते ब्रह्मलोके तु परान्तकाले"इति तु वाक्यं ब्रह्मलोकशब्दस्य कर्मधारयसमासेन ब्रह्मविषयमेव, ब्रह्मण्युपास्ये वर्त्तमानाः परान्तकाले चरमदेहावसानसमये परामृतात्परस्माद्ब्रह्मण उपासनप्रीताद्धेतोः परिमुच्यन्ति "सर्वेऽस्माद्बन्धाद्विमुच्यन्ते' इति "वेदान्तविज्ञानसुनिश्चितार्था"इति प्रकरणादधिगम्यते। येतु दुराग्रहमाश्रित्य सगुणनिर्गुणतया ब्रह्मभेदं वदन्तो निर्गुणब्रह्मविदो गत्यनुपपत्तिं सगुणब्रह्मविदश्च गत्या कार्यब्रह्मप्राप्तिमभ्युपगच्छन्ति, ते उपेक्षणीयाः, बादरिपक्षान्तःपातित्वात्सूत्रकारपक्षविरोधात्, श्रुतिहीनत्वाच्च। नहि ब्रह्मभेदे कार्यब्रह्मप्राप्तौ च

---

प्रतीकोपासना तत्र मनआदीनामेव मुख्यता ब्रह्मणस्तु गौणत्वमतो नामादिषु ब्रह्मदृष्ट्योपासकानां ब्रह्मोपासकत्वविरहात् नार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च सम्पन्ना भवतीत्याशयेनोक्तशङ्कां परिहरति। इतिचेन्नेति॥ १४॥

नामादिप्राणपर्य्यन्तप्रतीकोपासनायां नास्ति ब्रह्मोपासनमिति सूत्रकाराणामाशयः। श्रुतिरपि तथैवाभिदधातीत्याह। न प्रतीकेष्वित्यादिना। यावन्नाम्नो गतम्=देवादिनाम्नो गोचर इत्यर्थः। निगमयति। तस्मादिति=विशेषदर्शनादित्यर्थः। पूर्वोक्तोभयविधानिति। परं ब्रह्मोपासीनान्। प्रकृतिवियुक्तं प्रत्यगात्मस्वरूपं ब्रह्मात्मकतयोपासीनाश्चेत्यर्थः। तेषाम्=उभयविधोपासकानाम्। ब्रह्मणा ते सर्वे इत्यादिवचनं नार्चिरादिगतपुरुषविषयम्। अपितु चतुर्मुखलोकस्थयोगिविषयम्। इत्याह। एवञ्चेति। उभयविधोपासकानामर्चिरादिमार्गेण गतानां ब्रह्मभावापत्तिसिद्धे चेत्यर्थः। हेतुचतुष्टयेनोक्तार्थं द्रढयति। अर्चिरादिना गतानामित्यादिना। तद्युक्तवचनं किं निष्प्रयोजनकमित्यत आह। तद्वचनन्त्विति। 'ब्रह्मणा ते सर्वे"इत्यादिवचनमित्यर्थः। तत्रैव=चतुर्मुखलोके। उक्तवचनस्यार्थं विवृणोति। ब्रह्मलोकशब्दस्येत्यादिना। अत्यन्ताभेदवादिनां मतं सङ्क्षेपेणानूद्य दूषयति। ये तु दुराग्रहमाश्रित्येति। उपेक्षणीयत्वे हेतुत्रयं दर्शयति। बादरिपक्षान्तःपातित्वादित्यादिना। चतुर्मुखलोकप्राप्तिरेव विद्याफलं तत्राप्रलयात् भोगः तल्लोकनाशे सृज्यताहेतुकर्माभावाद्

श्रुतिरुपलभ्यते इति भावः ॥ १५ ॥ इतिकार्याधिकरणम् ॥ ५ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्य श्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणा-
रुणपद्ममकरन्दभृङ्गेण जगद्विजयिश्रीकेशवकाश्मीरिभट्टेन
सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्र-
वृत्तौ चतुर्थाध्यायतृतीयपाद-
विवरणम् ॥३॥

---

मोक्ष इति बादरिमतम्। श्रुतिहीनत्वमेव विवृणोति। नहीत्यादिना ॥ १५ ॥ इतिकार्याधिकरणम्।

श्रीराधापादपद्मगन्धनिरतो गाम्भीर्य्यधैर्य्याकरः।
श्रीवृन्दावनकेलिकौतुकमना निस्सीमभावोदयः॥
दम्पत्योः प्रेयकेलिवर्णनरतः श्रीभट्टदेवः सुधी।
रेजे नीलसरोजसुन्दररुचिः पीयूषपाथोनिधिः॥

इतिश्रीसनन्दनादिसम्प्रदायानुगामिरसिकजीवनप्राणधनश्रीस्वामिहरिदासपदाश्रिताश्रितानुयायिना
विदुषा अमोलकरामेण सङ्गृहीतायां वेदान्तकौस्तुभप्रभाभावदीपिका—
टीकायां चतुर्थाध्यायस्य तृतीयपादः ॥ ३ ॥



# अथ चतुर्थाऽध्याये चतुर्थपादारम्भः ।



अथ सम्पद्याविर्भावाधिकरणम् ।

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ ४ । ४ । १ ॥

एवमुत्क्रान्तिगतिगन्तव्या निर्णीताः । अथेदानीं गन्तव्यं प्राप्तस्य स्वरूपं निर्णीयते । इदं हि छान्दोग्ये प्रजापतिवाक्ये श्रूयते । "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ( छा० ८ । १२ । ३ ) इति । तत्र संशय्यते । किं परं ज्योतिरुपसम्पन्नस्य स्वर्गिवदागन्तुकरूपेण सम्बन्धरूपाभिनिष्पत्तिरत्राभिप्रेता उत स्वाभाविकस्वरूपाविर्भावरूपेति । किं पुनः प्रतिभाति ? आगन्तुकरूपेण सम्बन्धरूपेति । अभिनिष्पत्तेरुत्पत्तिपर्यायत्वात् । मोक्षशास्त्रस्य च पुमर्थावबोधित्वात् । सुषुप्त्यादावात्मस्वरूपस्यापुरुषार्थत्वदर्शनात् । स्वरूपाविर्भावस्य मोक्षस्वरूपत्वे मोक्षशास्त्रस्यापुरुषार्थविषयत्वापत्तेरतो देवादिवदागन्तुकावस्थान्तरप्राप्तेरेवाभिनिष्पत्तिपदार्थत्वं स्वीकार्यमिति प्राप्ते, ब्रूमः—सम्पद्येति । परं ज्योतिरुपसम्पद्य प्रत्यगात्मा स्वस्वरूपेणैवाविर्भवति, नतु केनचिदागन्तुकेन । कुतः ? स्वेन शब्दात् । स्वेन रूपेणेति विशेषणादन्यथा स्वशब्दोक्तिवैयर्थ्यात् । अभिव्यक्तिरेवात्राभिनिष्पत्तिः ॥ १ ॥

---

अथ सम्पद्याविर्भावाधिकरणम् ।

यो लोकं निखिलं पुनाति प्रवणः प्रेमोल्लसन्मानसः ।
कारुण्येन जनार्दनो गुणनिधिः विज्ञः सतामग्रणीः ॥
भक्ताभीप्सितपूर्तिपालनपटुः पाखण्डदावानलः ।
तस्याहं शरणं व्रजामि चरणावाचार्य्यचूडामणेः ॥ १ ॥

पूर्वोत्तरपादयोः सङ्गतिं प्रदर्शयन्नाह । एवमित्यादिना । संशयोत्थापकं विषयवाक्यमुदाहरति । इदं हि छान्दोग्य इति । अत्र वाक्ये अभिनिष्पत्तिस्वेनशब्दौ संशयोत्थापकौ विद्येते अतः संशयं दर्शयति । तत्रेति । निरुक्तवाक्ये विमृश्य पूर्वपक्षमाह । किं पुनः प्रतिभातीति । मुक्तस्यागन्तुकरूपेण सम्बन्ध अस्माच्छरीरादित्यादिवाक्ये प्रतिपाद्यत इति । पूर्वपक्षप्रतिज्ञायां हेतून् दर्शयति । अभिनिष्पत्तेरिति । मोक्षशास्त्रस्येति । तद्बोधकशास्त्रस्य पुरुषार्थपर्य्यवसानमुपपन्नं भवतीत्यर्थः । शरीरकरणव्यापाररहितायां सुषुप्तौ केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो न दृश्यत इत्याह । सुषुप्तादाविति । स्वरूपाविर्भावस्य मोक्षत्वे मोक्षबोधकशास्त्रस्य न पुरुषार्थपर्य्यवसायिता स्यादित्याह । स्वरूपाविर्भावस्येति । फलितार्थं दर्शयति । अतइति । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । सूत्रार्थं वक्तुं सूत्रमुपादत्ते । सम्पद्येति । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । आगन्तुकविशेषपरिग्रह इत्यर्थः । "परं ज्योतिरुपसम्पद्याभिनिष्पद्यते" इत्येतत्सम्बन्धादेव तदसाधारणसिद्धं नह्यन्यस्य रूपेणान्यो निष्पद्यते अतस्तत्सम्बन्धादेव तदसाधारण्यं सिद्धमिति स्वेनपदमनर्थकं स्यादित्यर्थः ॥ १ ॥

ननु स्वरूपस्य नित्यप्राप्तत्वात्कोऽत्र विशेष इति चेत्तत्राह—

## मुक्तः प्रतिज्ञानात् ॥ ४ । ४ । २ ॥

सर्वबन्धविनिर्मुक्त एवात्र स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते । कुतः ? प्रतिज्ञानात् । य आत्मेत्युपक्रम्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी" (छा० ८ । ६ । ३, ८ । १० । ४, ८ । ११ । ३)ति भूयो भूय उक्त्वा "एष सम्प्रसाद" इत्यादि "निष्पद्यते" इत्यन्तं प्रजापतिनाऽभिधानात् । कर्मसंज्ञकाविद्यासङ्कुचितज्ञानादिधर्मकस्य नित्यप्राप्तत्वेऽपि तद्रूपबन्धविनिर्मुक्तस्याविर्भूतापहतपाप्मत्वादिगुणकदम्बकस्य जाग्रदाद्यवस्थातीतस्य स्वरूपस्याप्राप्तत्वादिह त्वपरिच्छिन्नज्ञानापहतपाप्मत्वादिगुणाश्रयस्य स्वरूपस्याभिनिष्पत्तिरिति विशेषस्य सत्त्वात् ॥ २ ॥

यत्तूक्तं सुषुप्त्यादावात्मस्वरूपस्यापुरुषार्थत्वदर्शनादित्यादि स्वीकार्यमित्यन्तं तत्रोत्तरम्—

## आत्मा प्रकरणात् ॥ ४ । ४ । ३ ॥

स्वरूपेणैवापहतपाप्मत्वादिगुणकोऽयमात्मा नागन्तुकधर्मकः । कुतः ? प्रकरणात् "य आत्माऽपहतपाप्मे" (छा० ८ । ७ । १) त्यादिना प्रजापतिविद्यायां श्रवणात् । प्रकरणञ्चेदं जीवात्मविषयमित्युक्तं पुरस्तात् "उत्तराच्चेदाविर्भूतस्वरूपस्त्व" त्यत्र । अतो नोक्तदोषः । सुषुप्तौ तु कर्मणाऽपहतपाप्मत्वादेस्तिरोभावेनात्मयाथात्म्याप्रकाशादपुरुषार्थत्वम् । तथाचापहतपाप्मत्वादिगुणानां परं ज्योतिरुपसम्पन्नस्याविर्भावमात्रत्वान्न जन्यत्वादिकल्पनावकाशस्तथा च स्मर्यते शौनकेन । "यथा न क्रियते ज्योत्स्ना मलप्रक्षाल-

---

उत्तरसूत्रमवतारयितुं शङ्कते । नन्विति । मुक्त इति प्रतिज्ञाभागं विवृणोति । सर्वबन्धविनिर्मुक्त इति । तथाच पूर्वसिद्धायास्तिरोधाननिवृत्तेर्वाचकत्वादभिनिष्पत्तिशब्दो नानर्थक इति भावः । तथाभूतार्थः कथमवगत इत्याह । कुत इति । आत्मेत्युपक्रम्येति । जाग्रदाद्यवस्थासूच्यमानासु प्रत्यगवस्थम् । "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्युक्तं तत्र 'एतं त्वेव तेऽनुव्याख्यास्यामीति प्रतिपर्य्यायमुक्तस्यैतच्छब्दस्य प्रकृतपरामर्शित्वात् "य आत्मेत्या" दिना प्रकृतस्यापहतपाप्मत्वादिगुणकत्वादपहतपाप्मत्वादीनाञ्च जाग्रदाद्यवस्थस्यासम्भवात् । गुणाष्टकयुक्तस्वाभाविकरूपकथनमेव प्रतिज्ञातं श्रोतुराशयपरीक्षार्थं जाग्रदादिकथनम् । तस्मात् व्याख्यास्यामीत्युक्तं व्याख्यारूपं स्वाभाविकमेवेत्यर्थः । बद्धावस्थातो मुक्तावस्थायां विशेषं दर्शयति । कर्मसंज्ञकेति । तद्रूपबन्धविनिर्मुक्तस्येति । कर्मसम्बन्धरूपबन्धविनिर्मुक्तस्येत्यर्थः ॥ २ ॥

स्वाभाविकस्वरूपाविर्भावस्य मुक्तित्वे मोक्षशास्त्रस्य ह्यपुरुषार्थप्रतिपादकत्वं स्यात् । दृश्यते च सुषुप्तौ केवलस्यात्मस्वरूपस्यापुरुषार्थत्वमिति यत् प्रागाशङ्कितं तदेवानूद्योत्तरत्वेनाग्रिमसूत्रमवतारयति । यत्तूक्तमित्यादिना । सूत्रं व्याचष्टे । स्वरूपेणैवेति । परमात्मविषयं हीदं वाक्यमित्यत्राह । प्रकरणञ्चेदमिति । संसारदशायां स्वाभाविकानन्दस्य तिरोहितत्वादौपाधिकरूपसम्बन्धसापेक्ष आनन्दयोगो भवति अतएव सुषुप्तौ-चानन्दायोगो नत्वानन्दस्यौपाधिकाकारहेतुत्वस्वाभाव्यात् तिरोधाननिवृत्तौ स्वाभाविकानन्द आविर्भवतीति ।

नान्मरणे: । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ १ ॥ यथोदपानखननान्क्रियते न जलान्तरम् ॥ सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥ २ ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ ३ ॥ इत्यादि । तस्माज्ज्ञानानन्दादिगुणानां ब्रह्मापत्तौ कर्मणः प्रतिबन्धकस्य नाशे आविर्भावोऽविरुद्धः । न च भौतिकज्योतिरेवात्र श्रूयत इति वाच्यम्, "तद्देवा ज्योतिषां ज्योतिरि" (बृ० ४ । ४ । १६) ति श्रुत्यन्तरे ज्योतिःशब्दस्य ब्रह्मवाचकत्वदर्शनात् । विस्तृतं चैतत् "ज्योतिर्दर्शनादि"त्यत्रेति संक्षेपः ॥ ३ ॥ इति सम्पद्याविर्भावाधिकरणम् ।

## अविभागेन दृष्टत्वात् ॥ ४ । ४ । ४ ॥

अथ स्वस्वरूपाभिनिष्पन्नो मुक्तः प्रत्यगात्मा किं परब्रह्मणो विभागेन स्वात्मानमनुभवति उताविभागेनेति विचिकित्सायां "परमं साम्यमुपैति, सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता, मम साधर्म्यमागता" इत्यादिश्रुतिस्मृतिभ्यो मुक्तस्य परमात्मना साम्यसाहित्यादिदर्शनाद्विभक्तमनुभवतीति पूर्वः पक्षः । राद्धान्तस्तु "ऐतदात्म्यमिदं सर्वं, तत्त्वमसि, एष सर्वभूतान्तरात्मा, अयमात्मा ब्रह्म" इत्यादिश्रुतिभ्योऽविभागेन ब्रह्मात्मकतया ब्रह्मापृथक्सिद्धमात्मानमनुभवति । कुतः ? दृष्टत्वात् । "आत्मेति तूपगच्छन्ती"त्युक्तन्यायेन स्वात्मनोऽप्यात्मतया "अहं ब्रह्मास्मी" त्युपासनेन यथावस्थितस्य ब्रह्मात्मकस्य स्वस्वरूपस्य दृष्टत्वात् । नच तथात्वेऽत्यन्ताभेद एव सिद्ध इति वाच्यम्, ब्रह्मात्मीयस्य तदात्मकत्वतदपृथक्त्वाद्यनुभवितृरूपस्यापि सत्त्वात् "ऐतदात्म्यमिदं सर्वमि" त्यादिघटकश्रुत्योभयत्वस्य सूपपन्नत्वात् ॥ ४ ॥ इति अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

---

स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य नापुरुषार्थावबोधित्वमित्याशयेनाह । सुषुप्ताविति । फलितार्थं दर्शयति । तथाचेत्यादिना । उक्तार्थं श्रीशौनकवचनेनापि द्रढयति । तथा स्मर्यत इति । ज्ञानानन्दादिरूपस्य स्वाभाविकजीवस्वरूपस्य कर्मसम्बन्धेन सङ्कुचितस्वरूपस्य कर्मबन्धक्षये सति विकासरूपाविर्भावो न स्वरूपत उत्पत्तिरित्युपसंहरन्नाह । तस्मादिति । परं ज्योतिरिति । ज्योतिश्शब्दस्य भौतिकपरत्वशङ्कायामात्मविषयत्वप्रतिपादकं "आत्मा प्रकरणादि"ति सूत्रं परे व्याचक्षते तन्मतमाशङ्क्य परिहरति । नचेति । निर्णीतञ्चैतद्दहराधिकरणे "ज्योतिर्दर्शनादित्यत्रे"त्याह । तदेव ज्योतिषामिति ॥ ३ ॥ इति सम्पद्याविर्भावाधिकरणम् ।

अथाविभागेन दृष्टत्वाधिकरणम् ।

साम्यसाहित्यपरमसाम्यश्रुतिभ्यां तत्त्वमस्यादिश्रुतिभिश्च संशयो जायते तं दर्शयति । अथस्वस्वरूपाभिनिष्पन्न इत्यादिना । विचिकित्सा = संशयः । पृथग्भूतमेवानुभवतीति पूर्वपक्षयितुं श्रुतिं तावदुदाहरति । परमं साम्यमुपैतीति । परब्रह्मप्राप्त्या निवृत्ताविद्यस्य स्वात्मनो यथावस्थितस्य स्वेनदृष्टत्वात् स्वात्मस्वरूपमविभागेन ब्रह्मात्मकतया ब्रह्मापृथक्सिद्धमनुभवतीति सिद्धान्तयति । राद्धान्तस्त्विति । तथात्वे = अविभक्तत्वे । उक्तशङ्कानिरासे हेतुमाह । ब्रह्मात्मीयस्येति । उभयत्वस्येति । भिन्नाभिन्नत्वस्येत्यर्थः । ४॥ इति अविभागेनदृष्टत्वाधिकरणम् ।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४ । ४ । ५ ॥

प्रत्यगात्मा परं ज्योतिरुपसम्पद्य स्वाभाविकेन स्वस्वरूपेणाविर्भवतीत्युक्तम्, तत्र कीदृशं तत्स्वरूपमितीदानीं चिन्त्यते। किमपहतपाप्मत्वादिगुणकमेवास्य स्वाभाविकं स्वरूपम् अथाभयरूपम्, उत चैतन्यमात्रम् इति संशये, प्रथमं तावत् प्राप्तमपहतपाप्मत्वादिगुणकमित्याह ब्राह्मेणेति। ब्राह्मेणापहतपाप्मत्वादिसत्यसङ्कल्पत्वावसानेन गुणेन विशिष्टः सन्नयमाविर्भवतीति जैमिनिराचार्यो मन्यते स्म। अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मगुणा उक्तास्तेषां प्रजापतिवाक्ये प्रत्यगात्मन्यपि "य आत्माऽपहतपाप्मे" (छा०।८।७।१) त्यादिनोपन्यासात्। आदिना "जक्षन् क्रीडन् रममाणः" इत्यादिश्रुत्युक्ता जक्षणादयः सर्वज्ञत्वादयश्च गृह्यन्ते। अपहतपाप्मत्वादिसर्वज्ञत्वसर्वेश्वरत्वादिरूपब्राह्मधर्मसम्पन्नचैतन्यस्वरूपाविर्भावो मोक्ष इति जैमिनेर्मतम् ॥ ५ ॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४ । ४ । ६ ॥

चिति चिद्रूपे ब्रह्मण्युपसन्नो मुक्तस्तन्मात्रेण चैतन्यमात्रेण स्वरूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते स्म। कुतः? तदात्मकत्वात्। "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरे! अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे" (बृ० ४ । ५ । १३) त्यादि सावधारणश्रुत्या तावन्मात्रात्मकत्वाद्विज्ञानमात्रस्वरूपत्वादस्य प्रत्यगात्मनः अपहतपाप्मादिशब्दास्त्वविद्यात्मकविकारसुखदुःखादिधर्मेभ्यस्ततस्य व्यावृ-

---

अथ ब्राह्माधिकरणम्।

प्रथमाधिकरणेन सङ्गतिं दर्शयति। प्रत्यगात्मेति। विचाराङ्गं संशयं दर्शयति। किमपहतपाप्मत्वादिगुणकमेवेति। एवकारेण स्वप्रकाशत्वव्यावृत्तिः। चैतन्यमात्रमिति। मात्रशब्देनांशतो जाड्यव्युदासः। उभयरूपमिति। सूत्रार्थं विवृणोति। ब्राह्मेणेति। अपहतपाप्मत्वादेः कथं ब्राह्मत्वमित्यत्राह। अपहतपाप्मत्वादय इति। 'उपन्यासादिभ्य'इति सूत्रखण्डं व्याख्यातुमाह। तेषां प्रजापतिवाक्ये इति। तेषाम्=अपहतपाप्मत्वादीनाम्। सूत्रस्थादिशब्दार्थं विवृणोति। आदिनेति। अत एभ्य उपन्यासादिभ्य न जीवस्य चैतन्यमात्रस्वरूपाविर्भावनं सम्भवति किन्तु अपहतपाप्मत्वादिधर्मसम्पन्नचैतन्यस्वरूपाविर्भाव इत्याह। अपहतपाप्मत्वादीति ॥ ५ ॥

सूत्रं व्याचष्टे। चितिचिद्रूप इति। प्रत्यगात्मनः चैतन्यमात्रस्वरूपत्वे किं मानमित्यत आह। स यथेति। सैन्धवघन इति। यद्यपि "मूर्त्तौघनः" (अ० ३।३।७७) इति मूर्त्तिशब्दवाच्यकाठिन्यार्थे हन्तेरप् घनआदेशो भवति तथापि "सैन्धवघन"इत्यत्र काठिन्यधर्मशब्देन तद्विशिष्टो धर्मी लक्ष्यते तथा सैन्धवघनशब्देन सिन्धुदेशोद्भवलवणपिण्डः काठिन्यविशिष्ट उच्यते। अनन्तरः=अन्तरङ्गव्यतिरिक्तः। अबाह्यः=बहिरङ्गव्यतिरिक्तः दृष्टान्तदार्ष्टान्तयोः कृत्स्नशब्द एकदेशजडत्वशङ्कानिरासार्थः। प्रज्ञानघनः=प्रकृष्टसुखात्मकज्ञानैकरूप इतिश्रुत्यर्थः। प्रत्यगात्मनो विज्ञानघन एव इत्यवधारणाद्विज्ञानमात्रस्वरूपत्वम्। अतो न तत्र सन्ति अपहतपाप्मत्वादयो गुणाः, ते च शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इत्याह। अपहतपाप्मत्वादिशब्दा

त्तिपराः कथञ्चित्तत्रैव नेयाः। "अनश्वाद्व्यावृत्तोऽश्व" इत्यादिवदपहतपाप्माऽपहतपाप्मतो व्यावृत्तो मुक्तजीव इत्यर्थः। चैतन्यमात्रस्वरूपेणाभिनिष्पत्तिर्मोक्ष इत्यौडुलोमेर्मतम् ॥ ६ ॥

अथ सूत्रकारः स्वमतमाह—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ४ । ४ । ७ ॥

एवमपि चैतन्यमात्रस्वरूपत्वनिरूपणे सत्यपि पूर्वभावात्पूर्वोक्तब्रह्मभावादपहतपाप्मत्वादिसम्पन्नविज्ञानस्वरूपाविर्भावादविरोधं मोक्षस्वरूपं भगवान्बादरायणो मन्यते। कुतः ? उपन्यासात्। प्रजापतिवाक्ये अपहतपाप्मत्वादीनामपि विज्ञानघनस्वरूप एव मुक्तजीवे उपन्यासात्प्रतिपादनात्। नच विज्ञानघन एवेत्यवधारणं गुणान्तरं न सहते, यथा सैन्धवघनस्य रसघन एवेत्यवधारणं रसाश्रयद्रव्यं रूपस्पर्शादिगुणान्तरं सहते। "रसघन एवे" त्यवधारणप्रयोजनं तु रसवत् द्रव्यान्तरस्वभावव्यावृत्तिः द्रव्यान्तरेषु ह्याम्रादिफलेषु त्वगादिप्रदेशभेदाद्रसभेदः। सैन्धवघनस्तु सर्वत्रैकरसः। एवमत्रापि जडवस्तुव्यावृत्त्या सर्वत्र स्वप्रकाशोऽयमात्मेति स्वप्रकाशताऽवधारणं क्रियते। विज्ञानघन एवेति अपहतपाप्मत्वादिसम्पन्नविज्ञानघनीभूतस्वरूपाविर्भावपूर्वकत्वे सति श्रीभगवत्स्वरूपगुणादिविषयकानवच्छिन्नानुभूत्या स्थितिर्मोक्ष इति श्रीसूत्रकारसिद्धान्तः। एवं च न केनापि वाक्येन विरोधः। तथाहि "परं ज्योतिरुपसम्पद्ये" ति वाक्यं यावदात्मवृत्त्यनवच्छिन्नब्रह्मानुभवितृत्वं ब्रह्मभावपदार्थं वदति। परञ्ज्योतिःशब्दाभिधेयं परब्रह्मभूतं श्रीपुरुषोत्तममुपसम्पद्य साक्षात्स्वात्मत्वेनानुभूय, स्वेन रूपेण तत्स्वरूपगुणादिविषयकानवच्छिन्नानुभवितृत्वरूपेण तदात्मकतयाऽवति-

---

इति। आदिशब्दादुपेक्षाग्रहणम्। कथञ्चिदिति। व्यावृत्तिद्वारकमित्यर्थः। तत्रैव = प्रत्यगात्मनि। उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति। अतश्चादिति ॥ ६ ॥

सूत्रकारस्य सिद्धान्तमुपन्यस्यतीत्याह। अथेति। विज्ञानमात्रप्रतिपादनपरत्वापातप्रतीतिं विज्ञानएवेत्यादिवाक्यस्याभ्युपगम्य परिहरति। एवममपीत्यादिना। "पूर्वभावादि" ति सूत्रखण्डं व्याख्येयपदम्। हेतुं व्याचष्टे। उपन्यासादिति। विज्ञानघन एवेत्यवधारणाद्विज्ञानमात्रमेवास्य प्रत्यगात्मनः स्वरूपमिति पूर्वपक्षे यदुक्तं तत् परिहरति। नचेति। गुणान्तरं न सहते इति नचेति योजना। गुणान्तरं सहत इत्यर्थः। उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति। यथा सैन्धवघनस्येति। लवणपिण्डस्येत्यर्थः। रसघन एवेत्यत्रैवकारेण प्रमाणान्तरसिद्धानां रूपस्पर्शादीनां व्यावृत्तिः कर्त्तुं न शक्यते किन्तु द्रव्यान्तरस्वभावव्यावृत्तिरित्यर्थः। द्रव्यान्तरस्वभावव्यावृत्तिमेव स्पष्टयति। द्रव्यान्तरेष्विति। आम्रफले त्वगादिप्रदेशभेदेन रसो भिद्यते सैन्धवघने तथा नास्ति तस्य सर्वत्रैकरसरूपत्वादिति व्यावृत्तिबोधनाय रसघन एवेत्यत्रैवकार उपात्त इत्यर्थः। विज्ञानघन एवेत्यत्रावधारणेन कृत्स्नोऽप्यात्मा जडव्यावृत्तः स्वप्रकाश इति बोध्यत इत्याह। एवमत्रापीति। विज्ञानघन एवेत्यत्रापीत्यर्थः। प्रत्यगात्मनः कृत्स्नस्य विज्ञानघनत्वेऽपि अपहतपाप्मत्वसत्यसङ्कल्पत्वादयो धर्माः श्रुत्यन्तरविहिता न विरुद्ध्यन्ते यथा सैन्धवघनस्य रसघनत्वेऽपि रसनेन्द्रियावगताश्चक्षुर्ग्राह्याः रूपरसकाठिन्यादयो धर्माः न विरुद्ध्यन्त इत्याशयेन फलितार्थं दर्शयति। अपहतपाप्मत्वसम्पन्न इति। तुल्यप्रमाणकानां वेदान्तवाक्यानां परस्परं वाध्यवाधकभावः कल्पयितुं न शक्यस्तस्मात्सर्वेषां वाक्यानां न विरोध इत्याह। एवञ्चेति। परं ज्योतिरूपसम्पद्येति

च्छते इति श्रुत्यर्थः। "निरञ्जनः परमं साम्यमुपैती"त्यत्र परमं साम्यं भावपदेनाभिधीयते, परमं साम्यं च स्वरूपेण गुणादिना च सादृश्यम्। तथा च ज्ञानस्वरूपत्वात्स्वरूपसादृश्यम्, अपरिच्छिन्नज्ञानधर्मकत्वाद्गुणसादृश्यं च, तत्त्वं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, नियन्तृत्वस्वातन्त्र्यवत्त्वाभावेन ब्रह्मभिन्नत्वे सति सार्वज्ञ्याद्यपहतपाप्मत्वादि भूयो ब्रह्मगत-धर्मवत्त्वाल्लक्षणसमन्वयः। "सर्वं हि पश्यः पश्यती"ति सार्वज्ञ्यश्रुतेः। नच "स्वराड् भवती"ति श्रुतिविरोध इति वाच्यं, स्वाराज्यसाम्यस्य ब्रह्मादिवन्दनीयत्वस्य तत्र सत्त्वात्। नापि "नारायणो सायुज्यमाप्नोती"ति श्रुतिविरोध इति वाच्यम्, तस्या अपि त्वदभिप्रेता-र्थपरत्वाभावात्। सह युज्यत इति सयुक् सयुजो भावः सायुज्यं नित्यसम्बन्ध इत्यर्थः। भगवता नित्यसम्बन्धोऽत्र भावपदार्थः। न चैक्यमेव तदर्थ इति वाच्यम्। सायुज्यस्य शक्यार्थाभावात्। ननु "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैती" ति श्रुतिविरोध इति चेन्न। तत्रापि भेदस्य सत्त्वात्। नहि जले निक्षिप्तं जलान्तरं स्वरूपैक्यं भजते। किन्तु नित्ययोगमेव, सावयवद्रव्य-त्वात्। नद्यादीनां प्रावृषादिऋतुविशेषे वृद्धिह्रासदर्शनात्। नच समुद्रे वृद्धिह्रासादर्शनादेकमेवेति वाच्यम्। सावयवद्रव्यत्वेन नदीदृष्टान्तेन च तत्राप्यनुमातुं शक्यत्वात्। तत्तरङ्गेषु भेद-दर्शनाच्च। "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमे"ति श्रुत्यन्तरेण सादृश्यस्यैव लाभाच्च। श्रुत्यर्थस्तु तत्त्वप्रकाशिकायां विस्तृतस्तत्रैव द्रष्टव्यः। नच "ब्रह्म वेद ब्रह्मैव भवती"ति सावधारणश्रुतिविरोध इति वाच्यम् बृहज्ज्ञानगुण-

---

श्रुत्यर्थमविरोधेन दर्शयति। तथाहीत्यादिना। "निरञ्जनः परमं साम्यमुपैति" इति श्रुतौ साम्यशब्दार्थं निर्वक्ति। निरञ्जन इत्यादिना। जीवब्रह्मणोः ज्ञानस्वरूपत्वेन स्वरूपसादृश्यमित्याह। तथाचेत्यादिना। सादृश्यस्य लक्षण-माह। तत्वं नामेत्यादिना। तत्त्वम्=सादृश्यम्। सादृश्यलक्षणसमन्वयप्रकारमाह। नियन्तृत्वेति। नियमनकर्तृत्वं स्वातन्त्र्यञ्च ब्रह्मवृत्ति तदभावो जीवात्मनीत्यर्थः। प्रत्यगात्मनि श्रुतिप्रमाणेन सार्वज्ञ्यं दर्शयति। सर्वंहीति। पश्यः=ब्रह्मदर्शी। प्रत्यगात्मनि नियन्तृत्वस्वातन्त्र्ययोरसत्वे श्रुतेर्विरोध इत्याशङ्क्य परिहरति। नचेति। तत्र=मुक्तात्मनि। सायुज्यशब्दस्यैक्यमर्थंइत्यभिप्रायेण श्रुतिविरोधमाशङ्क्य परिहरति। नापीति। तस्याः=श्रुतेः। त्वदभिप्रेतार्थपरत्वाभावात्=ऐक्यार्थपरत्वाभावात्। सायुज्यशब्दस्य शक्यार्थं दर्शयति। सह युज्यत इति। तदर्थः=सायुज्यशब्दार्थः। सायुज्यशब्दस्य निरुक्तार्थकत्वे-श्रुतिविरोधं शङ्कते। नन्विति। नदीसमुद्रजलयोर्वस्तुतो नैक्यमपितु नित्ययोग एवमिहापि मुक्तस्य परमात्मना पूर्वमुक्तात्मभिरपि नैक्यमपितु परमसाम्यमित्या-शयेनोक्तशङ्कां व्युदस्यति। इतिचेन्नेति। तत्रापि=मुक्तावपि। तदेवोपपादयति। नहीत्यादिना। अनुमातुं शक्यत्वादिति। समुद्रं प्रविष्टं जलं वृद्धिह्रासादिमत् सावयवद्रव्यत्वात् नदीजलवदिति प्रयोगः। यथोदक-मिति। यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति न कथञ्चिद्विसदृशमित्थं विजानतो मननशीलस्यात्मापि परमात्मज्ञानेन विशुद्धः सन् विशुद्धेन परमात्मना समानो भवति। गौतमेति। प्राप्य वैभवं सूचयन्सहर्षं सम्बो-धयति। इति श्रुत्यर्थः। "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतिविरोधमाशङ्क्य परिहरति। नचेति। तत्तायाः=सादृश्यस्य। विपक्षे बाधकतर्कमाह। अन्यथेति। सादृश्यार्थकत्वानङ्गीकारे जीवब्रह्मणोरत्यन्ताभेदानङ्गीकारे

योगेन तत्तायास्तत्रापि सुवचत्वात्। अन्यथा "ब्रह्मविदाप्नोति परमि" ति कर्मकर्तृबोधकश्रुतिबाधस्य तत्रापि साम्यात्। ननु "ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!" इत्यादिवाक्येऽन्तःप्रवेशोक्तेरन्तःप्रविष्टस्य भेदानुपलब्धेरभेदसिद्धिरिति चेन्न। श्रीभगवतो विश्वरूपविग्रह एव प्रवेशस्य विवक्षितत्वात्। भिन्नस्यैव प्रवेशघटनाच्च "तत्रैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्। मम देहे गुडाकेशे"ति श्रीमुखोक्तेः। "पश्यामि देवांस्तव देव! देहे" इति श्रोतुरर्जुनस्यानुभवपूर्वकोक्तेश्च। अयमभिप्रायः-प्रवेशो नाम स्वस्य चेतनाचेतनात्मकविश्वस्य च ब्रह्मात्मकत्वात् "ऐतदात्म्यमिदं सर्वमि" ति श्रुतेस्तत्तादात्म्यानुभवपूर्वकं विश्वरूपे भगवति तच्छक्त्यात्मनाऽवस्थानं, विश्वरूपस्य ब्रह्मणः श्रीपुरुषोत्तमस्य जगदाधारत्वात्सर्वं जगत्सर्वदैव तत्रावतिष्ठते। परापरात्मकशक्तिरूपत्वाद्विश्वस्येति निर्विवादम्। "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूतामि"ति श्रीमुखोक्तेः। तथैव सर्वाधिकारिकाणामधिकाररूपाः शक्तयोऽपि तस्यैवैकान्ततया तत्रैव तासामवस्थानात्सृष्टिसमये तत्तदधिकारयोग्यतापन्नान् पुण्यात्मनो ब्रह्मरुद्रादिपदव्यारोहणार्हान् जीवविशेषान् तत्तद्भौतिकैकदेशकार्यरूपजगत्सर्जनसंहरणादियोग्याभिः स्वासाधारणशक्तिभिर्युनक्ति। प्रलयसमये च तान्विश्वाधिकारिणो ब्रह्मादींस्ताभिर्वियुनक्ति। परन्तु तासां शक्तीनां स्वाभाविकत्वनित्यत्वादिभिस्तत्र नित्यावस्थानात् स्थितिरव्यभिचारिणी। तथा चोक्तं विष्णुधर्मे "ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः। एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा। जगत्कार्यावसाने तु वियुज्यन्ते च तेजसे" त्यादिना। तथैव मुक्तानामपि विश्वरूपे भगवति तदात्मकत्वस्वरूपाविर्भावपूर्वकं तच्छाश्वत्यनुभूत्याऽवस्थानमप्यविरुद्धम्, तच्छक्तित्वाविशेषादिति वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैस्तथैवोक्तत्वात्। "सर्वः श्रीभगवद्गीतैकादशाध्यायोऽत्र प्रमाणत्वेनानुसन्धेय इति तत्सिद्धं मोक्षावस्थायामपि (स्वरूपभेदा-

---

ब्रह्मविदाप्नोति परमितिश्रुत्यैकस्य कर्तृत्वकर्मत्वबोधने विरोधः स्पष्ट एव। अत्यन्ताभेदवादी शङ्कते। नन्विति। परिहरति। नेति। उक्तार्थं श्रीमुखवचनेन प्रमाणयति। तत्रैकस्थमिति। प्रवेशशब्दार्थं विवृणोति। अयमभिप्राय इत्यादिना। विश्वस्य परापरात्मकशक्तिरूपत्वे श्रीमुखवचनं प्रमाणयति। अपरेयमितस्त्वन्यामिति। तस्य=ब्रह्मणः। तत्रैव=ब्रह्मण्येव। तासाम्=शक्तीनाम्। उक्तार्थं प्रमाणयति। तथाचोक्तमित्यादिना। उक्तार्थमाचार्यवचसा द्रढयति। वेदान्तरत्नमञ्जूषायामिति। तथैवोक्तत्वादिति। तच्छक्त्यात्मनानुभूत्याऽवस्थानस्योक्तत्वादित्यर्थः। भेदज्ञानान्मुक्तिर्भवतीत्यत्र श्रुतिं प्रमाणयति। जुष्टमित्यादिना। स्वस्मादन्यं सर्वनियन्तारं यदा पश्यति तदा तन्महिमानमिति। एति गुणाभावश्छान्दसः। वैलक्षण्यं द्योतयति। जुष्टम्=ब्रह्मादिसेव्यम्। यद्वा ईशत्वेऽपि दयालुत्वं व्यनक्ति। जुष्टमिति। भक्तैः प्रीतं स्वीयानां प्रीतिविषयम्। नन्वन्यशब्दस्य देहादिभेदपरत्वाभ्युपगमे क्षत्यभावान्न प्रत्यग्भेदपरत्वमुदाहृतवाक्यस्येतिचेत्तत्राह। पृथगित्यादिना। आत्मानं प्रेरितारं प्रेरयितारञ्च पृथक् मत्वा तेन जुष्टो भगवताप्रीतः सन्नमृतत्वं मृत्युरूपसंसारनिवृत्तिलक्षणं मोक्षमेति प्राप्नोतीति श्रुत्यर्थः उक्तार्थं श्रीपराशरवचसा प्रमाणयति। तथाचाह पराशरइति। श्लोकार्थं विवृणोति। भगवत्प्राप्तिरिति। अत्यन्ताभेदवादिनां मतं दूषयितुमनूद्यति। केचित्त्वित्यादिना। केचिदित्य-

वस्थायामपि ) स्वरूपभेदावस्थानं, भेदज्ञानादपि मोक्षश्रवणात् । "जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती" त्यादिभिः । तथैवोक्तं सिद्धान्तसेतुकायां श्रीसुन्दरभट्टपादैः 'श्रीभगवदनवच्छिन्नानुभूत्या स्थितिर्भगवत्प्राप्तिः, सैव भगवद्भावापत्तिरिति । तथा चाह पराशरः "निरस्तातिशयाल्हादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तकी मते" ति भगवत्प्राप्तिर्भेषजं संसाररोगस्येति योजना । तामेव विशिनष्टि-निरस्तेति । निरस्तोऽतिशयाल्हादो यस्मात्तथाभूतेन सुखेन भावो भवनमवस्थानमेकमसाधारणं लक्षणं यस्याः सा कालादिपरिच्छेदरूपव्यभिचारशून्यत्वं दर्शयन्नाह—एकान्ताऽत्यन्तिकीति । एकान्ता केवलभगवच्छब्दवाच्यैकविषयिकाऽतएवात्यन्तिकी निरतिशयेति यावत् । तत्र शास्त्रं प्रमाणयति । मतेति । शास्त्रमुखेनेति शेष इति संक्षेपः । केचित्तु प्रतिबिम्बो जीवः बिम्बस्थानीयो हीश्वरः, उभयानुस्यूतं शुद्धं चैतन्यमिति मुक्तस्य यावत्सर्वमुक्तिसर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणगणाढ्येश्वरभावापत्तिरिष्यते । यथाऽनेकेषु दर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सत्येकस्य प्रतिबिम्बस्योपाधिविलये बिम्बभावापत्तिस्तथैकस्मिन्प्रतिबिम्बे विद्योदयेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानस्यावश्यम्भावात् । नच मुक्तस्याविद्याभावात्सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिरिति वाच्यम्, तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यायाः सत्त्वात् । नहीश्वरस्येश्वरत्वं सार्वज्ञ्यादिगुणवैशिष्ट्यं च स्वाविद्याकृतं, तस्य निर्गुणनिरञ्जनत्वात् । किन्तु बद्धपुरुषाविद्याकृतमेवेति राद्धान्तः । सूत्रकारोऽपि "एवमप्युपन्यासादि" ति सिद्धान्तसूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्योपन्यासाद्यवगतस्य मायामयस्य बद्धपुरुषव्यवहार दृष्ट्या सम्भवान्न श्रुतिद्वयविरोध इत्यविरोधं वदन्नुक्तसिद्धान्तमेव मेने । भाष्यकारश्च सूत्रत्रयमुक्तार्थपरत्वेन व्याकुर्वन्नीश्वरभावापत्तिं स्पष्टमनुमेने । भामतीप्रबन्धप्रभृतयश्च श्रुत्युपबृंहितमिदं सूत्रजातं भगवतो भाष्य-

---

स्याहुरितिपरेणान्वयः । उभयानुस्यूतम्—बिम्बप्रतिबिम्बानुस्यूतम् । उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति । यथानेकेष्विति । अखण्डचिन्मात्रज्ञानान्मुक्तस्याज्ञानाभावात् कुत अज्ञानिकधर्मयोग इत्याशङ्क्य परिहरति । नचेति । ये ईश्वरधर्मास्त एव चिदात्मनि मुक्तैर्जीवान्तरैर्व्यवह्रियन्ते इत्याशयेनाह । तदविद्याभावेऽपीति । मुक्तात्मन्यविद्याभावेऽपीत्यर्थः । राद्धान्त इति । मायावादिनां राद्धान्त इत्यर्थः । अद्वैतमतानुसारेण सूत्रार्थं विवृणोति । वस्तुदृष्ट्येति । "एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्योपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं वादरायण आचार्यो मन्यते" इति श्रीशाङ्करीयंभाष्यम् । परिहरति । तत्तुच्छमिति । असम्भवमेव विवृणोति । तथाहीत्यादिना । उभयोः परेशजीवयोर्निरवयवत्वान्नीरूपत्वाच्च प्रतिबिम्ब एव तावन्न सिद्ध्यतीत्याह । न तावदिति । पूर्वमेव निरस्तत्वादिति । सावयवस्य रूपादिमतो वस्तुनः प्रतिबिम्बो दृश्यते नतु रूपादिहीनस्य, तथासति रसादीनामपि शब्दादौ कालादौ वा कालादीनामपि रसादौ प्रतिबिम्बत्वापत्तेः जीवेश्वरयोरतथात्वान्न बिम्बप्रतिबिम्बभावस्तयोरुपपादयितुं शक्यत

कारस्योदाहृतं वचनजातञ्च तथैवानुवर्त्तते। तस्मान्मुक्तानामीश्वरभावापत्तेरवश्याभ्युपेयत्वादसम्भव एव प्रतिबिम्बेश्वरवादे दोषः—तदाहुः कल्पतरु काराः, "न माया प्रतिबिम्बस्य विमुक्तैरुपसृप्यते" इत्याहुस्तत्तुच्छमसम्भवात्। तथाहि न तावत्परेशजीवयोर्बिम्बप्रतिबिम्बभावः सम्भवति, पूर्वमेव निरस्तत्वात्। नापि मुक्तस्य यावत्सर्वमुक्तिसार्वज्ञादिसम्पन्नेश्वरभावेनावस्थानं पुनर्भावान्तरापत्तिरिति वक्तुं शक्यते, अनुपपन्नत्वात्, तथाहि मुक्तस्येश्वरभावापत्तिः स्वरूपेण विवक्षिता सार्वज्ञादिधर्मेण वा नाद्यः, स्वरूपनाशापत्तेः। "स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्या स्वरूपापत्तेरेव विधानात्, नतु स्वरूपनाशस्य। एतदुक्तं भवति—ईश्वरभावापत्तिः किं जले निक्षिप्तजलवदेकीभावेन पृथग्ग्रहणायोग्यत्वमात्रं वा? जीवस्वरूपबाधो वा? आद्ये, इष्टापत्तिस्तवाभिप्रेताद्वैतभङ्गश्च। अन्त्ये, स्वरूपनाशापत्तिरिति किञ्च बिम्बप्रतिबिम्बरूपौ ईशजीवौ वस्तुरूपौ मिथ्याऽनिर्वचनीयौ वा? शशशृङ्गवत्तुच्छौ वा? नाद्यः, परपक्षप्रवेशात्। नापि द्वितीयः, बन्धमोक्षादिप्रतिपादनस्य वैयर्थ्यात्। वस्तुभूताद्वितीयनिर्विशेषस्य बन्धानर्हत्वेन बद्धस्य चावस्तुत्वेन को बद्धो मुक्तश्चेति प्रश्नस्य निरुत्तरत्वात्। अत एव न तृतीयः, "मे माता वन्ध्ये"ति वच्छास्त्रप्रणयनादौ वाक्यमूकत्वापत्तेः। नापि सार्वज्ञादिधर्मेणेति द्वितीयः, विकल्पासहत्वात्। को वाऽत्र भावपदार्थः? सार्वज्ञकल्पाश्रयत्वं वा? सार्वज्ञाद्याश्रयत्वं वा? नाद्यः, अनङ्गीकारादपसिद्धान्तापत्तेः। परपक्षप्रवेशाच्च। नान्त्यः, प्रमाणाभावादसम्भवाच्चान्यथाऽनेकेश्वरत्वापत्तेः। किञ्च नहि भगवदीयैश्वर्यस्य मायामयत्वे पुनर्निवृत्तौ च मानमस्ति। यतस्तन्निवृत्त्या पुनर्भावान्तरापत्तिः सुवचा स्यात्। न च "भूयश्चान्ते विश्वमायानिवृत्तिरि" ति श्रुतिरेवात्र मानमिति वाच्यं

---

इत्यर्थः। प्रागुक्तार्थं दूषयितुमनूद्यति। नापि मुक्तस्येति। तदेवोपपादयति। तथाहीत्यादिना। आद्यपक्षं निरस्यति। नाद्यइति। एतदुक्तं भवतीति। यदुक्तं तदेतद्भवतीत्यर्थः। द्विधा विकल्पयति। ईश्वरभावापत्तिरिति। पृथग्ग्रहणायोग्यस्वरूपमाद्यविकल्पमिष्टापत्त्या परिहरति। नाद्यइति। तवेति। पृथग्ग्रहणायोग्यत्वस्यातिरिक्तस्य ब्रह्मणस्सत्वाददूैतव्याघात इत्यर्थः। परपक्षप्रवेशादिति। बिम्बप्रतिबिम्बरूपौ ईशजीवौ अवस्तुरूपौ मायावादिनां मते सम्प्रति तयोः वस्तुत्वाङ्गीकारे परपक्षे प्रवेश इत्यर्थः। द्वितीयपक्षोक्तदोषं तृतीयकल्पेऽतिदिशति। अतएवेति। को बद्धोमुक्तश्चेति प्रश्नस्य निरुत्तरत्वादेवेत्यर्थः। मुक्तस्येश्वरभावापत्तिः स्वरूपेण विवक्षिता सार्वज्ञ्यादिधर्मेणवा इति विकल्पद्वयं प्रागभिहितम्। तत्र एतावता प्रबन्धेनाद्यविकल्पं निरस्तं सम्प्रति द्वितीयविकल्पं निरस्यति। नापि सार्वज्ञादिधर्मेणेति। आद्यपक्षं निरस्यति। नाद्यइति। अनङ्गीकारादिति। सार्वज्ञ्यसदृशरूपस्य भावस्य त्वयानङ्गीकारादित्यर्थः। तथास्वीकारे आपत्तिं दर्शयति। अपसिद्धान्तापत्तेरिति। दोषान्तरमप्याह। परपक्षप्रवेशाच्चेति। प्रमाणाभावेन द्वितीयपक्षं व्युदस्यति। नान्त्य इति। बाधकतर्कमुपन्यस्यति। अन्यथेति। मुक्तस्य सार्वज्ञ्याद्याश्रयत्व इत्यर्थः। अनेकेश्वरत्वापत्तेरिति। सार्वज्ञ्याद्याश्रय ईश्वरः। मुक्तजीवानां च सर्वेषां सार्वज्ञ्याद्याश्रयत्वे ईश्वरस्यानेकत्वापत्तिस्तथासति "एकमेवाद्वितीयं ब्रह्मे"त्यादिवेदान्तानां ब्रह्मण एकत्वप्रतिपादकानां बाधः प्रसज्येत इति भावः। नास्ति भगवदीयैश्वर्यस्य मायामयत्वे मानं येन तन्निवृत्तिरुपपद्येत इत्याह। किञ्चेति। "भूयश्चान्ते विश्वमाया निवृत्तिरि"ति श्रुतिं मानमाशङ्क्य

तस्याः परमेश्वरभावापत्तिरूपमोक्षप्रतिबन्धकीभूतविश्वमायानिवृत्तिविधानपरत्वात् । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति श्रीमुखोक्तेः । एताभ्यां श्रुतिस्मृतिभ्यां भगवदनुग्रहसहकृतसाधनपरिपाकेन जीवानामेव भगवन्मायातरणं प्रतिपाद्यते; तत्रैव तयोः प्रामाण्यञ्च सूपपन्नम्, नतु भगवतः स्वाभाविकनित्यसार्वज्ञ्यादिनिवृत्तौ । तथात्वे ऽनाप्तत्वप्रसङ्गात् । एतेन यदुक्तं परमेश्वरस्यैश्वर्यं सार्वज्ञ्यादिसत्यसङ्कल्पत्वादिवैशिष्ट्यं च बद्धजीवाविद्याकल्पितं न स्वाभाविकं, तस्य निर्विशेषत्वात् । नत्वीश्वराविद्याकृतं तस्य निरञ्जनत्वात् इति, तदपि निरस्तं, स्वबुद्धिपरिकल्पितत्वेन प्रमाणशून्यत्वात् । प्रत्युत तत्प्रत्यनीकस्वाभाविकत्वश्रवणात् "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी" ति । यदप्युक्तं सिद्धान्तसूत्रस्य वस्तुदृष्ट्या चिन्मात्रत्वे ऽपि पूर्वोक्तगुणकलापस्योपन्यासाद्यवगतस्य मायामपश्येत्यादिना विवक्षितार्थपरत्वं, तदपि स्वकपोलकल्पितं, सूत्रार्थस्य पूर्वमेवोक्तत्वात् । किन्तु यदि चैतन्यमात्रोपत्तिरेव मोक्षस्वरूपमभिप्रेतं, तदौडुलोमिपक्षानुगामित्वमेव भवतां प्रेष्टं, किं पुनः सूत्रकारसिद्धान्तेन । सूत्रकृद्भिः कुत्रापि पारमेश्वरीयैश्वर्यादिधर्माणां मायिकत्वानभिधानादपि तु "विवक्षितगुणोपपत्तेश्च सर्वधर्मोपपत्तेश्चे" त्यादिसूत्रैरुपपन्नतयाऽत्यादरेणाभ्युपगमात् । नापि तस्य त्वदभिप्रेतनिर्विशेषत्वयोगः, ईशत्वनिर्विशेषत्वयोः सामानाधिकरण्यासम्भवात् । अन्यथा सर्वप्रमाणाविषयत्वेन शशशृङ्गसाम्यापत्तेः । प्रमाणविषयत्वे च सविशेषत्वस्यावश्यम्भावित्वाच्चेति संक्षेपः ।

एकविंशतिप्रकारकदुःखध्वंसो मोक्ष इति गौतमीयानामभ्युपगमः । तथाहि 'तदत्यन्तविमोक्षो ऽपवर्ग' इति, अत्र तच्छब्देन सूत्रोपात्तानामेकविंशतिप्रकारदुःखानां परामर्शः । तानि च शरीरं षडिन्द्रियवर्गः षड्विषयाः षड्बुद्धयः, सुखं, दुःखं, चेति । आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखतत्प्रागभावासमानकालिकत्वम्, इदानीमस्मदीयदुःखध्वंसस्य

निषेधति । नचेति । तस्याः=श्रुतेः । उक्तार्थं श्रीमुखवचनेनापि द्रढयति । मामेवेति । श्रुतिस्मृत्योरर्थं संक्षिपति । एताभ्यामिति । तयोः=श्रुतिस्मृत्योः । भगवतः स्वाभाविकसार्वज्ञ्यानिवृत्तौ प्रामाण्यं नतु इति योजना । तथात्वे=स्वाभाविकनित्यसार्वज्ञ्यादिनिवृत्तौ प्रामाण्ये एतेनेति । तस्य निरस्तमित्यनेनान्वयः । प्रागुक्तार्थं दूषयितुमनूद्यति । यदुक्तमित्यादिना । स्वबुद्धिपरिकल्पितत्वेन प्रमाणशून्यत्वादिति । न च मूलविद्याया एकत्वात्तन्नाशे कुतो जीवान्तरं येन मुक्तात्मनि सार्वज्ञ्यादयो धर्माः व्यवह्रियेरन् इति वाच्यम् । न वयं तन्नाशे जीवान्तरव्यवहारं ब्रूमः, किन्तु तदंशनाशेन अंशारब्धाध्यात्मिकशरीराभिमानिनो मुक्तौ अंशान्तरोपाधिकाः जीवा व्यवहरन्ति इतिवदामः । तर्हि नानाविद्यापक्ष एव कुतो नाद्रियते । जीवभेदस्यावश्यकत्वादिति चेन्न प्रकृतिनानात्वं प्रतिजीवं प्रपञ्चभेद इत्याद्यप्रामाणिकानेकार्थगौरवादिति । सर्ववृद्धसम्मत एकविद्यापक्षः श्रेयान् । अंशभेदेन च बन्धमुक्तिव्यवस्थितमित्यपि न समीचीनं । श्रौतस्मार्तप्रमाणशून्यत्वात् । स्वकल्पनामात्रत्वात् निराश्रयाविद्यायोगेन जीवसिद्धावविद्यासिद्धिस्तत्सिद्धौ तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयाच्च । किञ्चाज्ञानस्यानादित्वे नित्यशुद्धत्वहानिप्रसक्तेरित्यादिकं दूषणं परपक्षगिरिवज्रे दर्शितम् । तत्प्रत्यनीकेति ।

सुषुप्तिकाले दुःखासमानकालिकत्वसत्त्वात्प्रागभावेति उपान्त्यदुःखध्वंसस्य तत्प्रागभावासमानकालिकत्वाद्दुःखेति। तत्र शरीरेन्द्रियविषयबुद्धीनां दुःखसाधनत्वाद्दुःखत्वं, दुःखस्य स्वरूपतः पूर्वापरदुःखसम्वलितत्वात्सुखस्यापि दुःखत्वमिति। दुःख जन्म प्रवृत्ति दोष मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" १।१।२। इति सूत्रादिति। तन्न, तस्य पुरुषार्थत्वाभावात्। पुरुषव्यापारासाध्यत्वात्। अतीतस्य स्वविरोधिगुणान्तरनाश्यत्वात्। आगामिनः स्वकारणनाशेन नाश्यत्वात्। वर्त्तमानस्य स्वोत्पन्नगुणनाश्यत्वात्। किञ्च नित्यसुखाभिव्यक्तिमुक्तिर्न दुःखप्रहाणिमात्रं, नैतावन्मात्रमुद्दिश्य प्रवृत्तिः सम्भवति, प्रवृत्तिसामान्यं प्रतीष्टसाधनताज्ञानस्य प्रवर्त्तकत्वात्। नन्वनिष्टाभावसाधनताज्ञानमपि प्रवर्त्तकमिति चेन्न, अनिष्टाभावस्यापीष्टसिद्धावेव विनियोगात्। कण्टकविद्धपादस्य कण्टकापनयने प्रवृत्तिर्न केवलं कण्टकाभावोद्देशेन। किन्तु यथेष्टप्रचाररूपेष्टसिद्ध्यर्थमिति प्रसिद्धम्। तस्मान्मुक्तौ नित्यसुखानुभवोऽप्यकामेन त्वयाऽभ्युपगन्तव्य इति दिक्।

अथ दुःखनिवृत्तिमात्रं मोक्षः, आनन्दादिशब्दाश्च दुःखाभावमात्रावलम्बिनो यदि च सुखरागेणवर्त्तेत ततो बन्ध एव स्यात्, रागस्य बन्धहेतुत्वात्। देहेन्द्रियमनसां निवृत्तौ विज्ञानोत्पत्तिहेत्वभावान्मुक्तो निःसंज्ञपाषाणकल्पो ऽवतिष्ठते, इति वैशेषिका आहुस्तत्तुच्छमसम्भवात्। तथाहि यदुक्तं रागोबन्धहेतुरिति तदयुक्तं, शास्त्रादयं विभागो गम्यते। यथा स्वदारगमनं धर्माय, परदारगमनं चाधर्माय, तथाविधविषयको रागो बन्धहेतुः।

---

तद्विरोधिन इत्यर्थः। सिद्धान्तसूत्रस्य यद्व्याख्यानं परैः कृतं तदपाकर्त्तुमनूद्यति। यदप्युक्तमिति। पारमार्थिकचैतन्यमात्रस्वरूपस्य मुक्तित्वमभिप्रेतञ्चेत् तदौडुलोमिमतानुप्रवेशो भवतां न सूत्रकारमतानुयायित्वमित्याह। किन्तु यदीति। नहि सूत्रकारेण ब्रह्मणो धर्माः सार्वज्ञ्यत्वादयः मायिकत्वेनोपन्यस्ताः प्रत्युत सर्वधर्मोपपत्तेश्चेत्यादिना तत्र धर्मा एवाभिहिताः। इत्याह सूत्रकृद्भिरिति बाधकतर्कमाह अन्यथेति। सामानाधिकरण्य स्वीकारे तत्र तावदक्षपादाभिमतमोक्ष लक्षणं दूषयितुं तन्मतसिद्धं मोक्षलक्षणमाह। एकविंशति दुःखध्वंस इति। उक्तार्थं तन्मताभिमतसूत्रेण प्रमाणयति। तथाहीत्यादिना। सूत्रार्थं विवृणोति। अत्र तच्छब्देनेति। तानीति। एकविंशतिदुःखानीत्यर्थः। षड्बुद्धय इति। घ्राणजरासनस्पार्शनचाक्षुषश्रौत्रमानसाः इत्यर्थः। दुःखध्वंस आत्यन्तिकत्वं निर्वक्ति। आत्यन्तिकत्वञ्चेति। स्वपदेन दुःखध्वंसो ग्राह्यः दुःखध्वंससमानाधिकरणदुःखतत्प्रागभावसमानकालीनत्वमेवास्मदीयदुःखध्वंसेऽस्ति तदन्यत्वस्यापवर्गकालीनास्मदीयदुःखध्वंसे शुकदेववामदेवप्रभृतीनामात्मनि च सत्वाल्लक्षणसमन्वयः। पदानां कृत्यं दर्शयति। इदानीमिति। एकविंशतिदुःखान्तर्गतानां शरीरेन्द्रियविषयबुद्धीनां कथं दुःखपदवाच्यत्वमित्यत आह। तत्र शरीरेन्द्रियबुद्धीनामिति। उक्तार्थमक्षपादसूत्रेण द्रढयति। दुःखजन्मेति। तत्वज्ञानेन विरोधितयापहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावाद्दुःखाभावादपवर्ग इति सूत्रार्थः। परिहरति। तन्नेति। तस्य=दुःखध्वंसस्य पुरुषव्यापारासाध्यत्वमुपपादयति। अतीतस्येति। योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वमिति तेषां सिद्धान्तस्तमवलम्ब्याह। स्वविरोधीति, आगामिन इति। दुःखस्येत्यर्थः। स्वकारणनाशेन = दुःखकारणनाशेन। भट्टमतमवलम्ब्याह। किञ्चेति। मुक्तावपि नित्यसुखसाक्षात्कार इति तदर्थः। एत-

निरतिशयानन्दपरब्रह्मविषयकश्च रागो मोक्षहेतुः। नाप्यानन्दादिशब्दो दुःखाभाववचनः, शतगुणोत्तरक्रमेणोत्कर्षापकर्षौ प्रतिपाद्य निरतिशयस्य ब्रह्मानन्दस्योपदेशात्। "यतो वाचो निवर्त्तन्ते ऽप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"तिमन्त्रात्। नहि निरूपाख्यस्याभावस्योत्कर्षापकर्षौ सम्भवतः। लोके ऽपि दुःखतारतम्यं सुखतारतम्यञ्च परस्परविलक्षणं प्रत्यक्षेणानुभूयते। किञ्च यदि पाषाणकल्प एव मोक्षो ऽभीष्टस्तर्हि पाषाणादीनामेव मुक्तत्वमभ्युपगन्तव्यं देवानां प्रियैस्तर्कनिपुणैः, किं कल्पशब्दप्रयोगप्रयासेनेति संक्षेपः।

साङ्ख्यास्तु चैतन्यस्वभाव आत्मा तस्य द्रष्टुः स्वरूप चैतन्यमात्रे ऽवस्थानमसम्प्रज्ञातयोगनिष्पत्तौ मोक्ष इति मन्यन्ते, तच्चिन्त्यं ब्रह्मानन्दाभावे निरतिशयानन्दापत्त्यभावात्।

पातञ्जलास्तु असतो ब्रह्मभावस्य योगानुष्ठानाज्जन्ममोक्ष इत्याहुस्तदपि चिन्त्यं, असतो जन्मायोगात्, शशशृङ्गादावतिव्याप्तेश्च "ब्रह्मैव सन्ब्रह्माप्येती"ति श्रुतिविरोधाच्च। पञ्चक्लेशादिध्वंसश्चास्मत्पक्षे ऽपि समान एवेत्यलं प्रासङ्गिकेन।

तस्मात्पूर्वोक्तलक्षणो भगवद्भावापत्तिरेव मोक्ष इति सिद्धम्। स च मोक्षो भगवदनुग्रहैकलभ्यतत्साक्षात्कारैकलभ्यः साक्षात्कारश्च प्राप्तध्रुवस्मृतीनां भुक्तप्रारब्धकर्मणामेव। "यमे-

---

न्मात्रमुद्दिश्येति। दुःखध्वंसमात्रमुद्दिश्येत्यर्थः। तत्र हेतुमाह। प्रवृत्तिसामान्यं प्रतीति। प्रवृत्तिप्रत्यनिष्टाभावसाधनताज्ञानं कारणमिति शङ्कते। नन्विति! परिहरति। नेति। उक्तार्थं दृष्टान्तेन द्रढयति। कण्टकविद्धपादस्येति। मुक्तौ नित्यसुखस्य साक्षात्कार इति निगमयति। तस्मादिति। वैशेषिकमतं दूषयितुमुपन्यस्यति। अथेति। यदि दुःखनिवृत्तिमात्रस्य मुक्तिपदवाच्यत्वं तदा मुक्तावानन्दादिशब्दप्रयोगः कथमुपपद्येत इत्यत आह। आनन्दादिशब्दाश्चेति। तन्मतमपाकरोति। तत्तुच्छमिति। असम्भवमेवोपपादयति। तथाहीत्यादिना। प्रागुक्तार्थं दूषयितुमनूद्यति। यदुक्तमिति। धर्माधर्मादिनिश्चयः शास्त्रादेवावगन्तुं शक्यते कस्य रागस्यबन्धहेतुता कस्य मोक्षहेतुता वेति निश्चयः शास्त्रादेवेत्याह। शास्त्रादय विभाग इति। आनन्दशब्दस्य दुःखाभाववाचकत्वं यत्प्रागुक्तं तदप्यपाकरोति। नापीति। नहि दुःखाभावस्योत्कर्षापकर्षत्वं प्रतिपद्येमहि इत्याह। शतगुणोत्तरमिति। वेदान्तैः ब्रह्मणो निरतिशयानन्दत्वमुपदिष्टमानन्दस्य दुःखाभाववाचकत्वे तन्नोपपद्येत इत्यर्थः। तत्र श्रुतिं प्रमाणयति। यतो वाच इति। ननु दुःखाभावस्यैवोत्कर्षापकर्षौ स्यातामत आह। नहिनिरूपाख्यस्येति। निर्वचनानर्हस्येत्यर्थः। वैशेषिकमुपहसन्नाह। किञ्चेति। इतिवैशेषिकमतस्य निराकरणम्।

साङ्ख्यानां मतं दर्शयति। साङ्ख्यास्त्विति। तस्य = आत्मनः मोक्षस्य साधनमाह। असम्प्रज्ञातयोगनिष्पत्ताविति तन्मतेऽस्वरसं दर्शयति। तच्चिन्त्यमिति। ब्रह्मानन्दाभावेनेति। यदि ब्रह्मानन्दः स्यात्तदा तस्य निरतिशयानन्दत्वं वक्तुं शक्यं साङ्ख्यानां मते ब्रह्मानन्दस्यासत्वात् कथं तस्य निरतिशयत्वं प्रतिपद्येमहि तथाच शतगुणोत्तरं क्रमेणोत्कर्षापकर्षौ प्रतिपाद्यमाना निरतिशयानन्दब्रह्मानन्दबोधिकाः श्रुतयो बाध्येरन् इत्थञ्च साङ्ख्यमतस्याश्रौतत्वान्नादरणीयं तत् विद्वद्भिरितिभावः। पातञ्जलमतमुपन्यस्यति। पातञ्जलास्त्विति। तदपि निरस्यति। तदपिचिन्त्यमिति। चिन्ता बीजं दर्शयति। असत इति। पातञ्जलपक्षोऽपि श्रुतिविरुद्धत्वान्नोपादेय इति भावः। निगमयति। तस्मादिति। प्रागुदाहृतमोक्षलक्षणानामश्रौतत्वात् दुष्टत्वाच्चेत्यर्थः। सच = भगवद्भावापत्तिरूपः। भगवदनुग्रहैकलभ्यो यस्तत्साक्षात्कारस्तेन लभ्य इत्यर्थः भगवत्साक्षात्कारश्च केषां भवतीत्यत आह साक्षात्कारश्चेति।

वैष वृणुते तेन लभ्यः, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे, यदा पश्यः पश्यते रुक्मवर्णमि"त्यादिश्रुतिभ्यः। तस्मिन्निति सर्ववेदान्तप्रसिद्धे ब्रह्मणि श्रीपुरुषोत्तमे दृष्टे साक्षादनुभूते सति हृदयग्रन्थिः अनादिकर्मनिरूपितमायासम्बन्धः "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वि"ति श्रीमुखोक्तेर्भिद्यते ध्वंसमापद्यते स्वयमेवेति कर्मकर्तृप्रयोगः साधनान्तरनिरपेक्षत्वसौकार्यद्योतनार्थः सूर्यप्रकाशे तमोवत् तत्कार्यभूताः सर्वसंशयाः आत्मपरमात्मसाधनफलसम्बन्धादिविषयकाः स्वयमेव छिद्यन्ते "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष"इतिश्रुत्यन्तरात्। तत्र हेतुमाह—क्षीयन्ते चास्येति। अस्य भगवत्प्रसादैकविषयस्य चरमजन्मनो विदुषः साक्षाद्द्रष्टुः सञ्चितक्रियमाणप्रारब्धाख्यानि सर्वकर्माणि पुण्यापुण्यरूपाणि क्षीयन्ते। क्षयमापद्यन्ते। परमेश्वरं विशिनष्टि—परावर इति। लोकदृष्ट्या मनुष्यादिभ्यः परे उत्कृष्टा ब्रह्मरुद्रादयः अवरे निकृष्टा यस्मात् तस्मिन्नित्यर्थः। ननु कर्माणीत्यत्र कर्मपदं प्रारब्धेतरद्विविधकर्मपरमेव, नच बहुवचनविरोधइति वाच्यम्, एकैकस्यापि सञ्चितादिकर्मणोऽसङ्ख्यत्वात् अन्यथा साक्षात्कारसमय एव विदुषो देहपातप्रसङ्गात्, जीवन्मुक्त्यभावप्रसङ्गाच्चेति चेन्न, इष्टापन्नत्वात्। नच तथात्वे "तदधिगमे उत्तरपूर्वाघयोरि"ति सूत्रबाधस्तत्र प्रारब्धेतरस्यैव कर्मणो विनाशोक्तेरि"ति वाच्यं, तस्य निदिध्यासनपरिपाकध्रुवास्मृत्याख्यपरोक्षज्ञानविषत्वेन पूर्वमेव व्याख्यातत्वात्। नच परोक्षज्ञानेन तथात्वासम्भवः। श्रुतिप्रमाणसिद्धत्वात् "स्मृतिलम्भ"इति पूर्वोक्तश्रुतेः। किञ्चापरोक्षज्ञानान्मूलाज्ञाननिवृत्तिरभिप्रेता।

---

भगवत्साक्षात्कारस्य भगवदनुग्रहैकलभ्यत्वे श्रुतिं प्रमाणयति। यमेवैष इति। मोक्षस्य भगवत्साक्षात्कारलभ्यत्वं श्रुतिमुखेन द्रढयति। भिद्यत इति। श्रुत्यर्थं व्याचष्टे। तस्मिन्नित्यादिना। सञ्चितक्रियमाणप्रारब्धाख्यानि सर्वकर्माणि क्षीयन्त इति यत् प्रारव्याख्यातं तदसहमानः प्रत्यवतिष्ठते प्रतिवादी। नन्विति। विपक्षे बाधकतर्कमाह। अन्यथेति। कर्मणोऽनन्तत्वानङ्गीकारे इष्टापत्त्या परिहरति इतिचेन्नेति इष्टापन्नत्वात्=जीवन्मुक्त्यभावस्येष्टत्वादित्यर्थः। तथात्वे=सर्वकर्मक्षयपरत्वे। तस्येति। उक्तसूत्रस्येत्यर्थः। पूर्वमेव व्याख्यातत्वादिति। एवम्भूतेन ध्यानपरिपाकेन ध्रुवास्मृत्याख्यज्ञानाधिगमे सिद्धे सति उत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते। तत्रोत्तरभाविनः क्रियमाणस्य पापस्याश्लेषः तत्प्राग्भूतस्य सञ्चितस्य तस्य नाशः। कुतः तद्व्यपदेशात्। एवंविदि पापकर्म न श्लिष्यते एवं हास्य सर्वे पाप्मानः प्रदूयन्ते इत्यादिव्यपदेशात्। नाभुक्तं क्षीयते कर्मे"ति शास्त्रं हि कर्मणां फलजनने सामर्थ्यं द्रढयति "एवंविदि पापंकर्म न श्लिष्यत" इत्यादि तु विद्यायास्तत्सामर्थ्यनिवारणशक्तिपरमिति द्वयोः शास्त्रयोर्भिन्नविषयत्वान्न विरोध इत्यर्थः। तथात्वासम्भव इति०। सर्वकर्मक्षयत्वासम्भव इत्यर्थः। तत्र हेतुमाह श्रुतिप्रमाणसिद्धत्वादिति। श्रुतिमुदाहरति। श्रुतिलम्भ इति। अपरोक्षज्ञानान्मूलाज्ञानं निवर्त्तते नवेति विकल्पयति। किञ्चेति। आद्यपक्षं व्युदस्यति। नाद्य इति। कारणनाशे=मूलाज्ञाननाशे कारणमन्तरैव कार्यस्य स्थितिर्भविष्यतीत्यत आह। भावरूपकार्यस्येति नहि मृदमन्तरा घटादीनां स्थितिरुपलभ्यत इत्यर्थः। विश्वं प्रति कथं कारणत्वमुररीक्रियत इत्याह। सोपादानञ्चेदिति आद्यपक्षं निरस्यति नाद्यइत तदुपादानत्वासम्भवात्=विश्वोपादानत्वासम्भवात्। विपक्षे बाधकतर्कमुपन्यस्यति। अन्यथेति। ब्रह्मण उपादानकारणत्वे। ततः किमित्यत आह। अनिर्मोक्षप्रसङ्ग इति अन्यद्वा कारणमिति द्वितीयपक्षमपा-

न वेति ? नाद्यः, कारणनाशे कार्यस्थित्ययोगात् । भावरूपकार्यस्य निरुपादानस्थित्यदर्शनात् । सोपादानं चेत् ? किमत्रोपादानं ब्रह्मैव ? अन्यद्वा ? नाद्यः ब्रह्मणोऽकारणत्वेन तदुपादानत्वासम्भवात् । अन्यथा कारणस्य नित्यत्वेन कार्यस्यावश्यम्भावात् । अनिर्मोक्षप्रसङ्गाद्दुर्वारः । न द्वितीयः, अविद्यातत्कार्याभ्यामन्यस्याभावात् । तस्मान्मूलाविद्यानाशे तत्कार्यस्य प्रारब्धस्याप्यवस्थातुमशक्यत्वम्, तन्तुनाशे पटस्येव । नच प्रारब्धजन्यभोगनिर्वाहकतया कियत्कालमविद्याया अनुवृत्त्यङ्गीकार इति शङ्कनीयं, विद्याया अविद्योपमर्दकत्वस्वभावहानिप्रसङ्गात् । "यस्मिन्सत्याग्रमक्षणे यस्य सत्त्वं यद्व्यतिरेके च यस्याभावस्तत्साध्यमि"ति लक्षणोक्तेः । तथा च यस्मिन्ब्रह्मापरोक्षज्ञाने सत्यविद्यानिवृत्तेः सत्त्वं तद्व्यतिरेके चाविद्यानिवृत्त्यभाव इति सिद्धान्तभङ्गाच्च, नच प्रारब्धभोगोत्तरकाल एव तथाभूतः स्वभावो ब्रह्मसाक्षात्कारस्येति वाच्यम्, एकस्य स्वभावद्वयासम्भवात् । नचावरणविक्षेपशक्तिमत्या मूलाविद्याया ब्रह्मसाक्षात्कारेणावरणशक्तिनाशेऽपि प्रारब्धकर्मजन्यवर्त्तमानदेहनिर्वाहाय विक्षेपशक्त्यंशानुवृत्तिरिति वाच्यम्, एकस्या अविद्याया युगपत्स्थितिनिवृत्त्योर्विरुद्धत्वात् । नच शक्तिनिवृत्तिमात्रमेव विवक्षितं, शक्तिशक्तिमतोरभेदात् । भेदे च मूलाज्ञानानिवृत्तिप्रसङ्गः । निवर्त्तकाभावात् । नच प्रारब्धनिवृत्तिरेव तन्निवर्त्तिकेति वाच्यं, कार्यनाशस्य कारणनाशकत्वायोगात् । अतिव्याप्तिप्रसङ्गात्प्रमाणशून्यत्वाच्च । नच पूर्वज्ञानमेव तन्निवर्त्तकमिति वाच्यं, तस्य शक्तिनिवृत्तावेवोपक्षीणत्वात् । नच स्वरूपात्मकज्ञानमेव तन्निवर्त्तकमिति वाच्यं, तस्य

---

करोति न द्वितीय इति । कारणनाशे कार्यस्य स्थितिर्भवितुं नार्हतीति निगमयति । तस्मादिति । प्रारब्धजन्यभोगाय कियत्कालमविद्या अनुवर्त्तत इत्याशङ्क्य परिहरति । नचेति । यदि कियत्कालमविद्यानुवृत्तिः स्वीक्रियते तदाविद्याया अविद्योपमर्दकत्वस्वभावो व्याहन्येत इति लक्षणप्रदर्शनपुरस्सरमाह । विद्याया इति । दण्डसत्त्वे घटसत्त्वं दण्डाभावे घटाभाव इत्यन्वयव्यतिरेकाभ्याश्रीयते घटं प्रति दण्डस्य कारणत्वमित्यर्थः । लक्षणार्थं विवृणोति । तथाचेति । एकस्य=ब्रह्मसाक्षात्कारस्य स्वभावद्वयासम्भवात्=ब्रह्मसाक्षात्कारस्यानन्तरक्षण मेवाविद्यानिवर्त्तकत्वस्वभाव एकः । अपरश्च प्रारब्धभोगोत्तरकाल एवाविद्यानिवर्त्तकत्वस्वभावो ब्रह्मज्ञानस्येत्यर्थः । मूलाविद्याया अंशद्वयमावरणशक्तिरूपं विक्षेपशक्तिरूपञ्च आद्यं ब्रह्मज्ञानेन निवर्त्तते द्वितीयस्य प्रारब्धकर्मजन्यवर्त्तमानदेहनिर्वाहायानुवृत्तिरित्याशङ्क्य परिहरति । नचेति । नचैकदा एकत्र विरुद्धधर्मद्वयं स्थातुं शक्नोतीत्याह । एकस्या इति । मूलाविद्याया आवरणशक्तिर्निवर्त्तते इत्याशङ्क्य परिहरति । नचेति । शक्तिशक्तिमतोरभेदादिति तयोरभेदे तच्छक्तिनाशे शक्तिमत्याःमूलाविद्याया अपि नाशः स्यात् तथासति मोक्षव्यवस्थानुपपन्नेत्यर्थः । शक्तिशक्तिमतोर्भेदाङ्गीकारे च ब्रह्मसाक्षात्कारेणावरणशक्तिनाशेऽपि मूलाज्ञानं न निवर्त्तेत तन्निवर्त्तकस्य कारणस्यासत्त्वात्तथाच बन्धमोक्षव्यवस्थानुपपन्नेत्याशयेनाह । भेदेचेति । प्रारब्धनिवृत्तेरेवमूलाज्ञाननिवर्त्तकत्वमाशङ्क्य परिहरति । नचेति कार्यनाशस्येति । नहि कारणनाशकत्वं कार्यनाशे दृष्टं प्रमाणश्रुतं वा प्रत्युतासमवायिकारणनाशस्यैव कार्यनाशकत्वं तार्किकैरभ्युपेतमित्यर्थः । कार्यनाशाधीननाशप्रतियोगित्वमविद्यालक्षणमेतावता फलितं तच्च गुणेऽतिव्याप्तं तत्रापि घटनाशाधीननाशप्रतियोगित्वस्य सत्त्वादित्याशयेनाह । अतिव्याप्तिप्रसङ्गादिति कार्यनाशो हि कारणनाशक इत्यत्र मानं नह्युपलभ्यत इत्याह । प्रमाणशून्यत्वादिति । पूर्वजातस्य ब्रह्मापरोक्ष-

तदविरोधित्वाभ्युपगमात् । अन्यथापसिद्धान्तापत्तेः । द्वितीये, ज्ञानेनाविद्यानिवृत्त्य-भावपक्षे ज्ञानस्यैव वैयर्थ्यापत्तिः, अनिर्मोक्षप्रसङ्गश्च । तमेव विदित्वाऽतिमृत्युमेती" त्यादिश्रुतिप्रकोपश्च । तदर्थशास्त्रारम्भवैयर्थ्यञ्च । किञ्च विरोधिसाक्षात्कारोदये सर्वथा लेशतोऽप्यविद्यानुवृत्त्यसम्भव एवेत्यकामेन त्वयाङ्गीकरणीयम् अन्यथा कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयेन सविलासाऽविद्यानिवृत्तिरिति सिद्धान्तभङ्गः स्यात् । एतेन क्षालितलशुन-भाण्डानुवृत्तिलशुनवासनाकल्पा ऽविद्यासंस्कारानुवृत्तिरिति पक्षोऽपि निरस्तो, दोषसाम्यात् । नहि सूर्योदये लेशतोऽपि तमोऽनुवृत्तिः केनचिदनुमत्तेन दृष्टा श्रुता चोपपन्ना वेति भावः ननु दग्धपटन्यायेनानुवृत्तामूलाविद्येवेति चेन्न, अनिर्मोक्षप्रसङ्गस्य पूर्वमेवोक्तत्वात् दृष्टान्त-वैषम्याच्च । दग्धपटस्याच्छादनादिकार्यकारित्वासम्भवात् । अस्य तु पूर्ववत्सर्वकार्यकारित्वस्य प्रत्यक्षप्रमाणसिद्धत्वात् । न चान्यदृष्ट्यैव तस्य कार्यकारित्वमिति वाच्यं, तर्हि द्वैतस्य सत्त्वं तव श्रीमुखेनैव सिद्धम्, अद्वैतभङ्गात्, शास्त्रप्रमाणशून्यत्वाच्च । किञ्च का वा ऽविद्यानिवृत्तिः ? आत्मस्वरूपैव ? तदन्या वा ? नाद्यः तस्य पूर्वमेव सिद्धत्वेन ज्ञानस्य वैयर्थ्यप्रसङ्गात् । द्वितीये, सती वा ? असती वा ? उभयात्मिका वा ? अनिर्वाच्या वा ? नाद्या, अद्वैतभङ्गात् । न द्वितीया, ज्ञानसाध्यत्वायोगात् । निवर्त्याभावान्निवर्तकस्य ज्ञानस्य दिवसे दीपस्येवान्धकाराभावाद्वैयर्थ्यमेव । नापि तृतीया, इतरेतरविरोधात् । नापि चरमा, अनिर्वाच्यस्य सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः, ज्ञाननिवर्त्यत्वापत्तेश्च । नच प्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेत्यानन्दबोधोक्तेरिति वाच्यं प्रमाणशून्यत्वात् । तस्माज्जीवन्मुक्तेरिति परिभाषामात्रैव जन्मान्धस्य कमलनयनसमा-ख्यावत् दरिद्रस्य लक्ष्मीनिध्यादिसमाख्यावच्चोपहासमात्रत्वात्प्रारब्धेन कर्मणा निबद्ध्यमानानां

---

ज्ञानस्यैव मूलाज्ञाननिवर्त्तकत्वमाशङ्क्य परिहरति । नचेति । तन्निवर्तकत्वम्=मूलाज्ञाननिवर्त्तकत्वम् । तस्येति । पूर्वज्ञानस्येत्यर्थः । मूलाविद्याया आवरणशक्तिनिवर्त्तकत्वेन तस्य चारितार्थ्यमित्यर्थः । स्वरूपात्मकज्ञानस्यैव मूलाविद्यानिवर्त्तकत्वमाशङ्क्य निषेधति । नचेति । तस्य=स्वरूपात्मकज्ञानस्य । तदविरोधित्वात्=अविद्या-ऽविरोधित्वात् । परिहरति नेति । पूर्वमेवेति । मूलाज्ञानानिवृत्तिप्रसङ्गात्तस्यनिवर्तकाभावादित्यादिग्रन्थेनेत्यर्थः । दृष्टान्तवैषम्यमेवोपपादयति दग्धपटस्येत्यादिना चैत्रदृष्ट्यैव मुक्तस्य कार्यकारित्वमाशङ्क्य परिहरति । नचेति । विकल्पयति । किञ्चेति । आद्यपक्षं निरस्यति । नाद्यइति । तस्य=आत्मस्वरूपस्य । आत्मस्वरूपात् मुक्ते-र्भिन्नत्वे चतुर्धा विकल्पयति । द्वितीये इत्यादिना । अविद्यानिवृत्तिरूपमुक्तेः सद्रूपत्वेआत्मस्वरूपान्यत्वे ऽद्वैतभङ्गप्रसङ्गः स्यादित्याह । नाद्यइति । मुक्तेरसद्रूपत्वं निरस्यति नद्वितीयेति नह्यसतो ज्ञानसाध्यत्वं दृष्टचरं श्रुतम्वेत्याह । ज्ञानसाध्यत्वायोगादिति । निवर्त्तकस्य ज्ञानस्य दृष्टान्तेन वैयर्थ्यमापादयति निवर्त्याभावा दिति । मुक्तेरसद्रूपत्वात् निवर्त्यत्वमेव नास्ति सुतरां निवर्त्तकज्ञानस्य वैयर्थ्यमित्यर्थः । सद्रूपाऽसद्रूपेति तृतीयकल्प-मपाकरोति । नापि तृतीयेति इतरेतरविरोधादिति । अज्ञाननिवृत्तिरूपमुक्तेः सद्रूपत्वेऽसद्रूपत्वं नोपपद्यते । तस्या असद्रूपत्वे सद्रूपता व्याहन्येत सत्वासत्वयोः परस्परविरोधादित्यर्थः । तूर्यपक्षं निरस्यति । नापीति । साद्यनिर्वाच्यत्वमज्ञानोपादानत्वव्याप्यमिति नियममभिप्रेत्याह । अनिर्वाच्यस्येति । तदुपादानाज्ञानानुवृत्त्या-पत्तेरिति =अनिर्वाच्यरूपाविद्यानिवृत्तिकारणीभूताज्ञानोपादानानुवृत्त्यापत्तेरित्यर्थः । ज्ञानेनाविद्यानिवृत्यनिर्वाच्यरूपा

तत्कार्यभूतकाममात्सर्यादिवह्निप्रज्वलतां सतां मुक्ता वयमित्यज्ञजनवञ्चकतामात्रत्वाच्च। ननु "तस्य तावदेव चिरमि"ति श्रुतिसिद्धत्वाज्जीवन्मुक्तेः कथमप्रामाण्यमिति चेत्? गतत्रपाणां न किमप्यशोभनं, श्रुतौ "यावन्न विमोक्ष्य" इतिमोक्षाभावं "चिरमि"ति कालव्यवधानं "सम्पत्स्य" इति भविष्यन्निर्देशञ्च कण्ठ वेणोच्चार्य्यमाणमपश्यतां यथाकामं प्रजल्पतां किमप्याश्चर्यं नास्तीति भावः। ननु जीवन्मुक्त्यनङ्गीकारे उपदेष्टृभावेन वेदान्तसम्प्रदायोच्छेदापत्तिः। सा च तवा ऽप्यनिष्टतमा, अज्ञस्योपदेष्टृत्वाचार्यत्वाद्यसम्भवात्। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन" इति श्रीमुखात्तेः। अन्यथा चाऽऽर्याणामनाप्तत्वप्रसङ्गेन तदुक्तसिद्धान्तस्याप्रामाण्यमावयोः समानं स्यादिति चेन्न, आवयोः सामान्याभावात्। अस्मत्सिद्धान्ते सम्प्रदायप्रवर्त्तकानां नित्यमुक्तश्रीपुरुषोत्तमपरिजनावतारत्वात् श्रीभगवदवतारवत् "स एकधा भवति त्रिधा भवती"ति श्रुतेरुक्तलक्षणध्रुवास्मृतिमत आचार्यस्योपदेष्टृत्वसम्भवान्नोक्तदोषावकाशः। ननु तव मते ऽविद्यानिवृत्तिः किमात्मिकाऽभिप्रेतेति? चेच्छृणु! अनादिमायासम्बन्धो वा तत्प्रयुक्तानादिकर्मात्मको बन्धो वा वेदान्तसाध्यज्ञानप्रागभावो वा ऽविद्याशब्दवाच्यस्तस्य निवृत्तिर्ध्वंसाभावः। सच यावदात्मवृत्त्यनवच्छिन्नैकरसब्रह्मसाक्षात्कारानुभूतिसमानाधिकरणभावरूपानन्दलक्षणे धर्मविशेषस्तदाऽऽश्रयो मुक्त इति यावत्। किञ्चोक्तलक्षणानुभूतेरंशत्रयत्वे ऽपि न केनाप्यंशेनानित्यत्वादिकल्पनावकाशः, क्रियाजन्यत्वाभावात्। तथा हि क्रिया तावच्चतुर्विधा उत्पादनप्रापणसंस्कारविकारभेदात्। तत्रोत्पादनं नाम प्रागभावप्रतियोगित्वे सत्युत्तरकालीनसत्तायोगः, यथा कटादेः प्रापणं च प्राप्तिक्रियायोगः, यथा रूपादिसाक्षात्कारः, संस्करणं च वस्तुनि योग्यताविशेषसम्पादनं तद्द्विविधं, गुणाधानं मलापकर्षणञ्च। तत्र गुणविशेषसम्बन्धरूपं गुणाधानं यथोपनयना-

---

मुक्तिस्तत्कारणीभूताज्ञानमन्तरा न सम्भवति अतोऽज्ञानं मुक्तावपि वर्त्तते तन्निवृत्त्यर्थं पुनर्ज्ञानस्यापेक्षा ततोऽज्ञानस्य निवृत्तिः सा चानिर्वाच्यरूपाऽज्ञानोपादानसापेक्षा पुनर्ज्ञानस्यापेक्षेत्येवंप्रकारेणाऽज्ञानानुवृत्त्यापत्तेरितिभावः। पञ्चमप्रकारपक्षमाशङ्क्य निषेधति नचेति फलितार्थं निगमयति। तस्मादिति। जीवन्मुक्तौ श्रुतिं प्रमाणतयोपन्यस्य शङ्कते। नन्विति। उपहसन्समाधत्ते। गतत्रपाणामिति। सम्प्रदायोच्छेदान्यथानुपपत्त्या जीवन्मुक्तिः कल्पनीयेत्याशङ्कते। नन्विति। उक्तार्थं श्रीमुखवचनेन साधयति। उपदेक्ष्यन्तीति। विपक्षे बाधकतर्कमाह। अन्यथेति। जीवन्मुक्त्यनङ्गीकारे आवयोः समानता नास्तीत्याशयेनोक्तां शङ्कामपनुदति। इतिचेन्नेति। साम्याभावमेवोपपादयति। अस्मत्सिद्धान्त इत्यादिना। अत्यन्ताभेदवादी प्रत्यवतिष्ठते। नन्विति स्वसिद्धान्तमवलम्ब्याविद्यापदार्थं निर्वक्ति। अनादिमायासम्बन्धो वेति तस्येति। अविद्यापदार्थस्येत्यर्थः। अभावस्य भावरूपतामवलम्ब्याह। यावदात्मवृत्तिरिति। उक्तलक्षणानुभूतेराश्रयविषयस्वरूपात्मकांशत्रयवत्त्वादनित्यत्वापत्तिरित्याशङ्कां परिहरन्नाह। किञ्चेति न केनाप्यंशेनेति। आश्रयेण विषयेण स्वरूपेणाचेत्यर्थः। अंशत्रयेषु क्रियाजन्यत्वाभावं व्युत्पादयितुं तावत् क्रियायाः चातुर्विध्यमाह। तथाहीत्यादिना। उत्पादनक्रियायाः लक्षणमाह। प्रागभावप्रतियोगित्वे सतीति। कटोत्पत्तेः पूर्वं कटस्य प्रागभावो वर्त्तते तत्प्रतियोगित्वस्य कारणोत्तरकालीनसत्तायोगित्वस्य कटादौ सत्त्वाल्लक्षणसमन्वयः। प्रापणार्थं दर्शयति प्रापणञ्चेति तमुदाहरति।

दियोगः, राज्याद्यभिषेको वा। दोषध्वंसलक्षणं द्वितीयं, यथा दर्पणादिमलनिराकरणम्, विक्रिया च परिणामादिमत्त्वं, यथा दुग्धादीनां दध्याद्यवस्थापत्तिरिति विवेकः। अंशत्रैविध्यं च आश्रयविषयस्वरूपभेदात् तत्र न तावदाश्रयतो ऽस्याः क्रियाजन्यत्वमाश्रयस्तावत्प्राप्तः क्षेत्रज्ञः। स च नोत्पाद्यः अजत्वात्। यन्नैवं तन्नैवं,कटादिवदित्यनुमानात्।"न जायते म्रियते वा विपश्चिदि" त्यादिश्रुतेः! "न जायते म्रियते वा कदाचिदि" त्यादिश्रुतेश्च। नापि प्राप्तिक्रियायोग्यत्वं स्वरूपत्वेन नित्यप्राप्तत्वात् स्वस्य प्राप्तेःप्रमाणनिरपेक्षत्वाच्च। आत्मा नाप्यः, नित्यप्राप्तत्वात् स्वस्वरूपत्वात्, प्रमाणान्तरानपेक्षत्वाच्च। यन्नवं तन्नैवं, रूपादिवदित्यनुमानात्। नहि कस्यचित् स्वप्राप्तौ प्रमाणापेक्षा, संशयाद्यभावात्। नायं विकारार्हः षड्विकारशून्यस्वरूपत्वात्। जीवात्मा न विकार्य्यः षड्विकारहीनत्वात्, यन्नैन्नं तन्नैवं, दध्यादिवदित्यनुमानात्। अविकार्यो ऽयमुच्यते" इति श्रीमुखोक्तेश्च। नाप्ययमात्मा संस्कार्यः, ज्ञानादिनित्यगुणाश्रयत्वात्। गुणाधानानर्हत्वात्, राजादिवत्। "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् अविनाशी वा अरे! आत्माऽनुच्छित्तिधर्म्मा ज्ञो ऽत एवे" त्यादिशास्त्राच्च नित्यनिर्दोषविज्ञानरूपत्वेन मलापकर्षणानर्हत्वात्। यन्नैवं यन्नैवं, दर्पणादिवदित्यनुमानात्। "य आत्मा ऽपहतपाप्मे" त्यादिश्रुतेश्च। नन्वात्मनो ऽनाद्यविद्यायोगोऽभिप्रेतो? न वा? नाद्यः, अविद्यासम्पर्के सति तथाभूताया दोषापकर्षणसंस्कार्यताया अवश्यम्भावा त्तथात्वे चासंस्कार्यत्वसिद्धान्तभङ्गात्। न द्वितीयः, बन्धमोक्षव्यवस्थानुपपत्तेः तत्प्रतिपादकश्रुतिव्याकोपाच्च। बन्धमोक्षाभ्युपगमसिद्धान्तभङ्गाच्चेति चेन्न, स्वरूपे पूर्वोक्त-

---

यथेति। संस्करणं लक्षयति। संस्करणञ्चेति तद् विभजति। तद् द्विविधमिति गुणाधानं लक्षयति। गुणविशेषेति। तदुहदारति। यथेति मलापकर्षणं द्वितीयं निर्वक्ति। दोषध्वंसलक्षणमिति। तदुदाहरति। यथेति। अंशत्रैविध्यमाह। अंशत्रैविध्यञ्चेति। अस्याः=उक्तलक्षणाया अनुभूतेः अनुभूतेराश्रयमाह। आश्रयस्तावदिति। तत्रोत्पाद्यत्वाभावमनुमानेन व्युत्पादयति। सच नोत्पाद्य इति सच क्षेत्रज्ञ इत्यर्थः। यन्नैवं तन्नैवमिति। घटादौ साध्यस्योत्पाद्याभावस्याभावो वर्त्तते तत्रैवाजत्वहेतोरभावश्चेत्यर्थः। जीवात्मनः श्रुतिस्मृतिसूत्रैरजत्वं साधयन् तदुपन्यस्यति। न जायत इति। प्राप्तिक्रियायोग्यत्वं निरस्यति नापीति अनुमानमाह। आत्मा नाप्य इति। विकारार्हत्वमपि व्युदस्यति। नापीति। प्रयोगं दर्शयति। जीवात्मेति। यन्नैवं तन्नैवमिति यत्र साध्यं नास्ति तत्र हेतुरपि नास्तीत्यर्थः। उक्तार्थं प्रमाणेन द्रढयति। अविकार्य इति। आत्मनः संस्कार्यत्वमपाकरोति। नापीति। उक्तार्थं शास्त्रप्रमाणेन समर्थयति। नहिविज्ञातुरिति। आत्मन्यनाद्यविद्यायोगोऽस्ति नवेति विकल्पयति। नन्विति। आद्यपक्षमपाकरोति नाद्यइति। तथाभूताया इति। वस्तुनि योग्यताविशेषसम्पादनरूपाया इत्यर्थः तथात्वे=दोषापकर्षणसंस्कार्यत्वे आत्मनोऽविद्यासम्बधाभावात्मकं द्वितीयकल्पमपाकरोति। न द्वितीयइति परिहरति। नेति। स्वरूपे=आत्मनि तद्धर्मभूतज्ञानम्=जीवात्मनो धर्मभूतज्ञानम्। सैवेति अनादिकर्मात्मिकाविद्यासङ्कुचितावस्थेत्यर्थः। उक्तार्थं श्रीमुखवचसा प्रमाणयति। अज्ञानेनेति फलितार्थमाह। तस्मादिति। विषयतोऽप्यस्याः क्रियायोगित्वं निरस्यति। नापीति। अस्याइति। निरुक्तानुभूतेरित्यर्थ तत्तायोगः=अनित्यत्वायोगः तस्य=ब्रह्मणः वासुदेवस्य अस्याः=अनुभूतेः तस्याः=अनुभूतेः

प्रकारेण सर्वदोषसंसर्गाभावे ऽपि तद्धर्मभूतज्ञानमनादिकर्मात्मिकाविद्यया सङ्कुचितं, घटस्थदीपप्रभेव। सैव बद्धावस्थेति भण्यते। "अज्ञानेनावृतं ज्ञानमि" ति श्रीमुखोक्तेः। भूयो भगवत्प्रसादादुक्तलक्षणबन्धनस्य तत्सच्चात्कारेण ध्वंसे सति पूर्वोक्तलक्षणो मोक्षः, इति सर्वं समञ्जसमिति भावः। तस्मादाश्रयतो ऽस्याः क्रियाजन्यत्वासम्भवान्न तत्तार्हत्वमिति सिद्धम् नापि विषयतोऽस्यास्तत्तायोगः, विषयश्चास्याः परब्रह्मभूतो भगवान्वासुदेवः। तस्य क्रियाजन्यत्वाभावे विवाद एव नास्ति, सर्वास्तिकानां सम्मतत्वात्सर्वशास्त्रसिद्धत्वात्। नापि स्वरूपतो ऽस्यास्तत्तायोगः सम्भावनार्हः, तस्याः शाश्वतत्वात्। नहि "विज्ञातुरि" ति श्रुतेः आत्मनिष्ठा ब्रह्मविषयकानुभूतिः शाश्वती, स्वाभाविकत्वात् क्रियाजन्यत्वाभावा-च्चात्मवदित्यनुमानात्। "आनन्दं ब्रह्मणो विद्वानि"ति मन्त्राच्च। ननु ब्रह्मानुभूतिः शाश्वती चेत्तर्हि सर्वैरप्युपलभ्येत, नतु तदस्ति, तस्मान्न तथेति योग्यानुपलब्धिप्रमाणबाध्य-त्वात्तत्साध्यस्य, अन्यथा सर्वमोक्षप्रसङ्गः। किञ्च तस्याः मानसक्रियारूपध्यानजन्यत्वेनो-क्तहेत्वोरुभयोरप्यभासत्वं ब्रह्मानुभूतिर्न शाश्वती, मानसव्यापारात्मकध्यानजन्यत्वात् बाह्यक्रियाजन्यस्वर्गादिवदित्यनुमानादिति चेन्न, शङ्काविषयासिद्धेः। तथा हि शङ्काविषयो ऽत्र नित्यमुक्तो बद्धमुक्तश्च तयोर्नित्यानुभूतिलक्षणमोक्षस्य निर्विवादत्वात्। बद्धस्य त्वत्रा-विषयत्वात्कथमुक्तशङ्कागन्धावकाशः। अन्यथा ब्रह्मणो ऽपि सर्वस्य बाह्याभ्यन्तरव्यापकत्वेन प्राकृतैरनुपलब्ध्या ऽसत्त्वं किमिति न शङ्क्यते देवानाम्प्रियैः। नच ब्रह्मणः "सत्यं ज्ञानं सदेव सौम्येदमग्र" इत्यादिशास्त्रसिद्धत्वान्नोक्तशङ्कावकाश इति वाच्यम्, प्रकृते ऽपि तुल्यत्वात् "सदा पश्यन्ति सूरय" इत्यादिनित्यमुक्तानां "सर्वं पश्यः पश्यती" त्यादिना

---

अनुभूतेः शाश्वतत्वेश्रुतिं प्रमाणयति। नांह विज्ञातुरिति। अनुमानेनाप्युक्तार्थं साधयति। आत्मनिष्ठेति। योग्यानुपलब्धिप्रमाणेनोक्तानुमानं दूषयितुमाशङ्कते नन्विति नतु तदस्तीति। न सर्वैरप्युपलब्धिरस्तीत्यर्थः। तस्मादिति। सर्वोपलब्ध्यभावादित्यर्थः। न तथेति। ब्रह्मानुभूतिः न शाश्वतीत्यर्थः। तत्साध्यस्येति। शाश्व-तीत्वरूपसाध्यस्येत्यर्थः। अन्यथेति। ब्रह्मानुभूतेः सर्वोपलभ्यत्वे इत्यर्थः। स्वाभाविकत्वक्रियाजन्यत्वाभावयोः हेत्वोराभासत्वं दर्शयति। किञ्चेति। तस्याः = अनुभूतेः अनुमानप्रयोगं दर्शयति। ब्रह्मानुभूतिरिति परिहरति नेति शङ्काविषयासिद्धेरिति तदेवोपपादयति। तथाहीत्यादिना। तयोः = नित्यमुक्तबद्धमुक्तयोः। अन्यथेति। बद्धजीवाभिप्रायेणाशङ्क्यमान इत्यर्थः। निश्चीयते ब्रह्मणः सत्यत्वं वेदान्तवाक्यैः कथं तस्यासत्वं वक्तुं शक्यत इत्याशङ्क्य परिहरति। नचेति तुल्यत्वादिति। तदेवोपपादयति 'सदा पश्यन्ति सूरय" इति यत्प्रागुक्तं तदनूद्य दूषयति। यदप्युक्तमिति तत्प्रतिबन्धकेति। मोक्षप्रतिबन्धकत्वस्य विक्षेपावरणनिवर्तकत्वं नैवोपक्षीणत्वा दित्यर्थः। तज्जन्यत्वम् = ध्यानजन्यत्वम् ध्यानजन्यत्वहेतोः स्वरूपासिद्धत्वमाह प्रत्युत इति वृत्तेरिति वेदान्त-वाक्यजन्यवृत्तेरित्यर्थः। तस्याः = वृत्तेः दोषस्तुल्यएवेति। "यत्रोभयोः समो दोषः परिहारस्तयोः समः। नैकस्तत्र पर्य्यनुयोक्तव्य "स्तादृगर्थविचारणे" इतिमहदुक्तेः फलितार्थं दर्शयन्निगमयति। तस्मादिति। शङ्कते। नन्विति। तस्य = ब्रह्मणः तथात्वे = उपास्यत्वे उक्तार्थं श्रुतिमुखेन प्रमाणयति। यद्वाचानभ्युदितमिति। तस्येति। "यद्वाचानभ्युदितमित्या" दिवचन इत्यर्थः। परिहरति। इतिच्चेन्नेति। तस्य = यद्वाचानभ्युदि

बन्धमुक्तानां च ब्रह्मानुभूतेस्तथात्वश्रवणात् । यदप्युक्तं मोक्षस्य मानसक्रियात्मकध्यानजन्यत्वेन हेत्वोराभासत्वमिति, तत्तुच्छं, ध्यानस्य तत्प्रतिबन्धकनिवर्त्तनेनैवोपक्षीणत्वान्न तज्जन्यत्वं मोक्षस्येति नोक्तदोषः, प्रत्युत ध्यानजन्यत्वादिति त्वत्प्रयुक्तहेतोरेव स्वरूपासिद्धत्वेनाभासत्वसिद्धिः । किञ्च त्वदुक्तहेतोस्त्वत्पक्षेऽपि व्याप्तिर्वक्तुं शक्या, दोषसाम्यात् । तथाहि त्वत्पक्षे वृत्तेः प्रत्यक्षहेतुत्वेन तस्या अपि मानसव्यापारत्वसाम्येन दोषस्तुल्य एव । तस्मान्न केनाप्यंशेनात्र विकारित्वजन्यत्वादिशङ्कावकाश इति सिद्धम् । ननु ध्यानस्य ब्रह्मसाक्षात्कारहेतुत्वे ब्रह्मण उपास्यत्वप्रसङ्गः, उपास्यस्यैव ध्येयत्वात्तथात्वे च ब्रह्मत्वहानिप्रसक्तिः । "यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिनोपास्यस्य कण्ठरवेण ब्रह्मत्वनिषेधश्रवणादिति चेन्न, तस्य प्रतीकाद्युपासनाविषयनिषेधपरत्वात् । तथाहि लोकवेदयोः "आरोप्यस्यैव निषेधविषयत्वं, न प्रमाणसिद्धस्य वस्तुनः" इति न्यायस्य सर्वसम्मतत्वात् । यथा नद्यादिजले गङ्गात्वमारोप्य नेयं गङ्गेति निषेधसम्भवो, न साक्षाद्भागीरथ्यां विष्णुपादोदक्यां तस्याः प्रत्यक्षागमप्रमाणसिद्धत्वात् । यथा वा पञ्चाग्निविद्यायां पुरुषादावुपासनार्थमग्नित्वमारोपितं रूपकेण छन्दोगैस्तन्निषेधश्चेदनर्हत्वाभावात्सम्भवत्येव, नतु प्रत्यक्षप्रमाणसिद्धे हवनीयाग्नौ तत्स्पर्शावकाशो वक्तुं शक्यः प्रामाणिकत्वात् । एवं प्रकृतेऽपि अतद्वस्तुषु "नाम ब्रह्मेत्युपासीत मनो ब्रह्मेत्युपासीते" त्यादिश्रुत्योपासनार्थं नामादिप्रतीकेष्वारोपितब्रह्मत्वस्यैव निषेधान्न सर्वेश्वरे साक्षाद्ब्रह्मणि

---

तमित्यादिवाक्यस्यचेत्यर्थः प्रतीकाद्युपासनाविषयेति । "नामब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासीत" इत्यादिश्रुतिबोधितोपासना प्रतीकोपासनेत्यर्थः । उक्तन्यायं दृष्टान्तेन परबुद्ध्यारूढं करोति । यथेति । तस्याः = भागीरथ्याः । तन्निषेध इति । अग्नित्वनिषेधः । अनर्हत्वाभावादिति । अर्हत्वादित्यर्थः । तत्स्पर्शावकाश इति । निषेधस्पर्शावकाश इत्यर्थः दार्ष्टान्ते योजयति । एवमिति तत्स्पर्शावसर इति निषेधस्पर्शावसर इत्यर्थः । तज्जिज्ञासार्थम् = ब्रह्मजिज्ञासार्थम् । तर्हि स्वार्थत्यागपरार्थकल्पनाप्रसक्तेर्मुख्यार्थबाधोऽवश्यंभावी ब्रह्मेति सामान्यनिर्देशादिति चेत्तत्राह । तच्चेति । मनोवागादिष्वारोपितब्रह्मत्वनिषेधकथनञ्चेत्यर्थः । नश्रुतार्थत्यागाश्रुतकल्पनेति । कुतः । नेदमित्यत्रपठितेदंकारपदेनैवोक्तार्थस्य द्योतमानत्वात् । नहि शास्त्रैकगम्यस्य ब्रह्मण इदङ्कारनिर्देशविषयत्वमितिभावः । वाक्यार्थञ्चाह । इदङ्कारास्पदेति । इदङ्कारनिर्देश्यो यः प्रपञ्चस्तद्विजातीयं ब्रह्मेति मनोवागादिप्रपञ्चाध्यस्तं ब्रह्म न भवति । तस्य मनआदीनां सर्वपदार्थाना मन्तर्यामितया तद्भिन्नत्वात् मनआदेश्च दृश्यत्वाच्च तस्य द्वैलक्षण्यञ्च । तस्मिन्नेव वाक्ये "यद्वाचानभ्युदितं येन वागभ्युद्यते इत्यादिना कण्ठरवेणैव पाठात् । वागभ्युद्यत इत्यनेनैव वागध्यस्तस्यैव निषेधविषयतालाभाच्च व्यतिरेके दोषमाह । इतरथेति । वेदस्यापि भ्रान्तत्वेऽप्रामाण्यापातात् सर्वप्रमाणोच्छेदप्रसङ्ग इतिभावः । भवेदेतत् वेदस्याप्रामाण्यापातभयात् तत्प्रमितस्य ब्रह्मणो निषेधागोचरत्वमिति । तथापि ब्रह्मणउपास्यत्वे मोक्षे मुक्तेन सशरीरेणैव भाव्यमिति वाच्यम् एवंहि मुक्तशरीरनिषेधपराणां श्रुतीनामप्रमाण्यस्य तवापि तौल्यमेवेति तात्पर्येणाशङ्कते । नन्वित्यादिना । शरीरत्वप्रसङ्ग इति । शरीराभावे उपासनानुपपत्तेरितिभावः । तथात्वेचेति । शरीरत्वे सति नहवै इति मोक्षस्वरूपविषयकप्रमाणबाधे. तत्प्रमेयस्य मोक्षस्यैवासिद्धेरिति शङ्कानिष्कर्षः । निषेधवाक्यानां विषयस्य सत्वान्न बाध इत्याशयेनोत्तरमाह । इतिचेन्नेति । कर्मजन्यप्राकृतशरीरपरत्वादिति । तद्योगतोऽसि नो मार्गे । सिद्धे मोक्षे

श्रीवासुदेवे तत्स्पर्शावसरः सर्ववेदान्तसिद्धत्वात्तज्जिज्ञासार्थमेव शारीरकशास्त्रारम्भाच्च। तच्च नेदं ब्रह्मेतीदङ्कारेणैव द्योत्यमानं, नात्र श्रुत्यागाश्रुतकल्पनोद्भावनावकाशः, इदङ्कारास्पदसर्वप्रपञ्चात्यन्तविलक्षणं ब्रह्मेति श्रुत्यर्थः। इतरथा प्रमाणसिद्धस्यापि निषेधयोगे ब्रह्मस्वरूपस्यापि निषेधविषयत्वं शक्यते वक्तुं, तुल्ययोगक्षेमात्। ननु ब्रह्मण उपास्यत्वे मोक्षे सशरीरत्वप्रसङ्गस्तथात्वे च "नह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इत्यन्वयव्यतिरेकश्रुतेर्मोक्षेऽपि दुःखानुभवो दुर्वारस्तथात्वे च कथमिव नित्यानवच्छिन्नानन्दापत्तिसम्भव इति चेन्न, उक्तश्रुतेः कर्मजन्यप्राकृतशरीरविषयकत्वात्। अप्राकृतशरीरस्य श्रुतिप्रमाणसिद्धत्वात्। "जक्षन् क्रीडन् रममाण" इति श्रुतेः। अन्यथापरमेश्वरेऽपि तत्सम्भावना कल्पनीया पण्डितम्मन्यैर्वैदिकाभिमानिभिः। तथात्वे च सार्वज्ञनित्यत्वानन्दत्वाद्यसम्भवेनेश्वरत्वस्यैव नाशात् "यः सर्वज्ञः एष सर्वेश्वरः सत्यकामः य आत्माऽपहतपाप्मे" त्यादिश्रुतिकदम्बलक्षणं "सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञानबलादिमान् अन्यूनश्चाप्यवृद्धश्च स्वाधीनोऽनादिमान्वशी। कामतन्द्राभयक्रोधकामादिभिरसंयुतः निरवद्यः, परः प्राप्तेनिरधिष्ठोऽक्षरक्रमः। वेदाहं समतीतानि, मत्तः परतरं नान्यत् अतोऽस्मि लोके वेदे च, सर्वस्य चाहं हृदी"त्यादिस्मृतिकदम्बलक्षणं च तत्प्रतिपादकं सर्वमपि वेदान्तशास्त्रं दत्ततिलाञ्जलि स्यात् तथात्वे च बाह्यपक्षात्को विशेषः, शून्यस्य सत्तायास्तैरप्यङ्गीकृतत्वादित्यलं प्रासङ्गिकविस्तरेण ॥७॥ इति ब्राह्माधिकरणम् ॥११॥

---

शरीराभावस्तदभावेचोपसनाभाव एव तत्साधनाभावादिति चेत्तत्राह। अप्राकृतशरीरस्येति। दिव्याप्राकृतशरीरे श्रुतिं प्रमाणयति। जक्षन्क्रीडन्नित्यादि व्यतिरेके दोषमाह। अन्यथेति। शरीरमात्रस्य दुःखादिसम्बन्धनियमस्वीकारे तत्सम्भावना=कर्मजन्यसुखदुःखसम्भावना तथात्वे=ईश्वरस्य कर्मजन्यसुखदुःखादिमत्वे तथाच सुखादीनां पुण्यादिकर्मकार्यत्वात् कर्मणश्चाज्ञानरूपत्वात् सार्वज्ञ्याज्ञत्वयोः परस्परात्यन्तविरुद्धत्वादिति भावः। ननु भवेदेतदस्माकं मते ज्ञानाज्ञानयोरविद्याकल्पितत्वादिति चेन्न तत्राप्यज्ञाने कल्प्यमाने जीवसाम्यापत्तेः। भवत्वेवं तत्रापि विक्षेपादिदर्शनात् विक्षेपादेश्चाज्ञानत्वप्रसिद्धेरितिचेत्तत्राह। तथात्वेचेति। ईश्वरस्य जीवसाम्यापत्तौ सत्यां स्वरूपप्रतिपादकशास्त्रबाधापत्तौ तवापि सिद्धान्तभङ्गस्तुल्य एव। अयंभावः। ज्ञानाज्ञानयोरविद्याकल्पितत्वादित्युक्तम्। तत्पृच्छयते। सा कल्पनाकारणीभूताऽविद्या जीवनिष्ठा ब्रह्मनिष्ठा वा नाद्यः भवतां जीवस्य प्रतिबिम्बस्वरूपत्वेन जडत्वात्। ब्रह्मभिन्नानङ्गीकाराच्च। नापि द्वितीयः। तस्य स्वयंप्रकाशत्वेन प्रकाशतमसोरिवात्यन्तविरुद्धत्वात्। ब्रह्मणोऽप्याविद्यकत्वे च जीववत्तदभावप्रसङ्गाच्च। किञ्चाविद्या सहेतुका निर्हेतुका वेति १। आद्ये तस्यापि कारणान्तरकल्पनेऽनवस्थापत्तेः। द्वितीये मुक्तानां भूयोऽपि बन्धप्रसङ्गात्। अस्माकन्तु कर्मसंस्कारादेरनादित्वेऽपि भगवत्कृपाकटाक्षेणोक्तरीत्या तत्सम्बन्धनिवृत्तेर्नासमञ्जसमिति। "नह वैशरीरस्ये" तिश्रुत्यर्थस्तु प्रकृतिकार्यभूतोभयशरीरस्य सतः सुखदुःखयोर्नाशो नास्तीति प्राकृतशरीसम्बन्धरहितं मुक्तं सुखदुःखे न स्पृशतः। अशरीरं शरीरेष्वित्यादिवाक्यं ब्रह्मस्वरूपपरत्वं तथाहि आत्मानमन्तर्यामिणं मत्वा धीरो न शोचति कीदृशं महान्तं निरतिशयवृहद्ब्रह्मेति यावत् विभुं विभुपरिमाणकम् अनवस्थेषु क्षणभङ्गुरेषु शरीरेषु ब्रह्मादिस्थावरान्तेषु। तन्नियामकत्वेन स्थितमिति। श्रुतिवाक्यमुदाहरति। यः सर्वज्ञ इति। श्रीमुखवचनमुदाहरति। वेदाहमिति तथात्वेचेति। श्रुतिस्मृतिवाक्यानामप्रामाण्य इत्यर्थः। बाह्यादिति वेदस्मृतिबाह्यात् सुगतादिमतादिति यावत्। तैः=बाह्यैः ॥ ७ ॥ इति ब्राह्माधिकरणम्।

मुक्तस्य श्रीपुरुषोत्तमानुग्रहादाविर्भूतसत्यसङ्कल्पत्वमुक्तमथ तदेव निरूपयति—

## सङ्कल्पादेव तच्छ्रुतेः ॥ ४ । ४ । ८ ॥

एवं हि मुक्तमधिकृत्य छान्दोग्ये श्रूयते "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती" ( छा० ८ । ५ । १२ ) त्यादि । तत्र संशयः, किमत्र मुक्तस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षात्सङ्कल्पात् ? उत परमात्मन इव सङ्कल्पमात्रादेव भवती ? ति तत्र किं युक्तं, निमित्तान्तरसहितादिति लोके राजादीनां सत्यसङ्कल्पतयोक्तानामपि कार्यनिष्पत्तौ प्रयत्नान्तरसापेक्षत्वदर्शनात् । सङ्कल्पादेवेत्यवधारणं तु विज्ञानघनएवेतिवद्भविष्यतीति प्राप्ते, आह—सङ्कल्पादेवेति । सङ्कल्पमात्रादेवास्य तत्प्राप्तिः । कुतः ? तच्छ्रुतेः । "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" (छा० ८।२।१) इत्यवधारणेन सङ्कल्पादेव पित्रादिसमुत्थानश्रवणात् । अन्यथा ऽवधारणबाधः । नचेह सत्यकामत्वाद्युपन्यासवन्मुक्तस्य प्रयत्नान्तरसापेक्षत्वे वाक्यान्तरं दृश्यते, येनावधारणस्य विज्ञानघन एवेतिवद्व्यवस्था स्यात् । लोके हि सत्यसङ्कल्पत्वाभावादेव प्रयत्नान्तरापेक्षत्वं, नहि परमात्मव्यतिरिक्तः कश्चित्सत्यसङ्कल्पो ऽस्ति । मुक्तस्य तु तत्प्रसादात्तत्साम्यमुपगतस्य तथात्वमस्त्येवेति ॥ ८ ॥

## अत एवानन्याधिपतिः ॥ ४ । ४ । ९ ॥

---

अथसङ्कल्पाधिकरणम् ।

पूर्वाधिकरणस्योत्तराधिकरणेन समं सङ्गतिं प्रदर्शयन्नाह । मुक्तस्येति । विषयवाक्यमुदाहरति । एवंहि मुक्तमधिकृत्येति । स तत्रेति । सः प्राप्तनिजानन्दाविर्भावस्तत्र भगवल्लोके तदनुग्रहेणैव पर्येति परितो गच्छति जक्षन् भक्षन् हसन्वा ज्ञातिभिः सह मुक्तैः उपजनं स्वसमीपवर्त्तिजनं स्वस्वेदं शरीरञ्च न स्मरन् रममाणः पर्येतीत्यर्थः । केवलं हयंनुसन्धानेनैव परमसुखभोक्तॄणां तेषामुपजनदर्शनादिकमपि नास्तीतिभावः । सयदीति । स मुक्तः यदि पितृलोककामो भवति तदास्य मुक्तस्य सङ्कल्पादेव पितरः समुत्तिष्ठन्ति । संसारान्मुक्ताः सन्तः पुरतः स्थिता भवन्तीत्यर्थः । संशयं दर्शयति । मुक्तस्येति । प्रयत्नशब्दः सङ्कल्पव्यतिरिक्तव्यापारपरः । सत्यसङ्कल्पत्वं किं प्रयत्नान्तरसापेक्षम् उत नेत्यर्थः । पूर्वपक्षं गृह्णाति । तत्र किं युक्तमिति । लौकिकदृष्टान्तेन परबुद्ध्यारूढं करोति । लोक इत्यादिना । विज्ञानघन एवेति । विज्ञानघन एवेत्यत्रावधारणार्थः । कृत्स्नोऽप्यात्मा जडव्यावृत्तः स्वप्रकाश इति यद्यपि प्रागुक्तं तथाप्यत्रविशेषणसङ्गतैवकारत्वेन शङ्खः पाण्डुर एवेत्यत्र एवकारस्य पाण्डुरत्वायोगव्यवच्छेदकत्ववत् एतस्यापि विज्ञानत्वायोगव्यवच्छेदपरत्वेन ज्ञानत्वायोगे सर्वत्रव्यवच्छिन्ने तद्व्यतिरिक्तजाड्यव्यवच्छेदस्य फलीभूतस्य प्रतिपादकतया प्रागुक्तग्रन्थस्यान्ययोगव्यवच्छेदे तात्पर्याभावात् सङ्कल्पादेवेत्येवकारस्तु अयोगव्यवच्छेदपर एवेतिभावः । पूर्वपक्षमनूद्य सिद्धान्तयति । इतिप्राप्त इति । विपक्षे बाधकतर्कमाह । अन्यथेति । सत्यसङ्कल्पस्य प्रयत्नान्तरसापेक्षत्वे मुक्तस्य विज्ञानघनत्वेऽपहतपाप्मत्वसत्यसङ्कल्पत्वादयो धर्माः वाक्यान्तरेण सत्यकामः सत्यसङ्कल्प इतिवाक्येन उपन्यस्ताः तथा मुक्तस्य प्रयत्नान्तरसापेक्षत्वाभिधायिवाक्यं न दृश्यते येनतद्वद्दुनिर्धारणमुपपद्येत इत्याह । नचेति । येन=अवधारणवाक्येन । नास्ति भगवद्व्यतिरिक्तस्य सत्यसङ्कल्पता इत्याह । लोकेति ॥ ८ ॥

अत एव परमात्मानुग्रहाविर्भूतसत्यसङ्कल्पादेव हेतोर्मुक्तोऽनन्याधिपतिः, श्रीवासुदेवेतराधिपतिशून्यः। "स स्वराड् भवती" ति श्रुतेः स्वेनान्तरात्मना परब्रह्मणा राजते इति स्वराट्, न चात्राधिपतिसामान्यनिषेधदर्शनात्सङ्कोचे मानाभावाच्च कथमुक्तार्थसिद्धिरिति शङ्क्यम्, अन्यपदसन्निवेशस्यैव सङ्कोचे दृढप्रमाणत्वादन्यथा ऽनधिपतिरित्येव सूत्रितं स्यादित्यर्थः ॥ ९ ॥ इति सङ्कल्पाधिकरणम्।

अथ तस्य दिव्यविग्रहवत्त्वप्रदर्शनायारभ्यते। तत्रैवं विशय्यते, किं मुक्तस्य देहेन्द्रियादियोगो ऽस्ति ? उत नास्ति ? आहोस्विद्यथासङ्कल्पमस्ति च नास्ति चेति। तत्र प्रथमं बादरिपक्षमाह—

## अभावं बादरिराह ह्येवम् ॥ ४ । ४ । १० ॥

मुक्तस्य न सन्ति देहादयो ऽन्यथा दुःखादियोगस्याप्यनपहतिप्रसङ्गात्। हि यतो मुक्तस्यैवं शरीराद्यभावं "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत (छा० ८।१२।१२)" इत्यन्वयव्यतिरेकश्रुतिराहेति बादरिराचार्यो मन्यते ॥१०॥

## भावं जैमिनिर्विकल्पामननात् ॥ ४ । ४ । ११ ॥

मुक्तस्य शरीरादिभावं जैमिनिराचार्यो मन्यते। कुतः ? विकल्पामननात् "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विंशतिरि" ( छा० ८ । २६ । २ )ति हि भूमविद्यायां मुक्तस्य त्रिविधः कल्प आम्नायते। नहि विविधशरीरमन्तरैकस्याछेद्यस्याणुपरिमाणस्यात्मनो वैविध्यं सम्भवति। अशरीरत्वश्रुतिस्तु कर्मजन्यशरीराभावपरेत्युक्तं पुरस्तात् ॥ ११ ॥

---

सूत्रार्थं व्याचष्टे। अतएवेति। उक्तार्थे श्रुतिं प्रमाणयति। स स्वराड्भवतीति। श्रीवासुदेवेतराधिपतिशून्यइति यद्व्याख्यातं तदाधिपति। अधिपतिसामान्यनिषेधदर्शनादिति ॥ ९ ॥ इतिसङ्कल्पाधिकरणम्।

अथ अभावाधिकरणम्।

अनन्तरसूत्रमवतारयति। अथेति। तस्य=मुक्तस्य। किंमुक्तस्य देहेन्द्रियाणि न सन्ति उत सन्ति उत यथासङ्कल्पं सन्ति न सन्ति चेति संशयं दर्शयति। किं मुक्तस्येति। अन्यथेति। मुक्तस्य शरीरसम्बन्ध इत्यर्थः। सति शरीरसम्बन्धे दुःखादियोगोऽप्यावश्यक इति मुक्तस्याशरीरत्वमिति बादरिमतम् ॥ १० ॥

विकल्पामननादिति। विविधः कल्पो विकल्पः वैविध्यमित्यर्थं श्रुतिमुखेन दर्शयति। स एकधेति। द्विधाशब्दादीनां धर्मिभेद एव स्वारस्यं "तदण्डमकरोत् द्विधा"इत्यादिप्रयोगात्। द्रव्यत्वपृथिवीत्वादिजातिसंयोगादिगुणपरिस्पन्दरूपक्रिया सहस्रान्वितेऽपि घटे द्विधा त्रिधासहस्रधाऽभूदिति प्रयोगाभावाच्च तथाप्यात्मनि स्वरूपभेदासम्भवात् शरीरद्वारत्वमित्यर्थः। तर्ह्यशरीरत्वश्रुतिः कथमित्यत्राह। अशरीरत्वश्रुतिस्त्विति। प्रियाप्रियहेतुतया शरीरस्य निषेधात् प्रियाप्रिययोश्च कर्मफलत्वात् कर्मकृतशरीरविषयो निषेध इत्यर्थः। अतः शरीरत्वश्रुतेर्निवारकाभावात् कादाचित्कहेत्वन्तरानुक्तेश्च सर्वदा सशरीरत्वं फलितमिति सूत्राभिप्रायः ॥ ११ ॥

अथ स्वमतेन सिद्धान्तमाह—

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४ । ४ । १२ ॥

अतः सङ्कल्पादेवेति श्रुतेः "यद्वा मनसैवैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इत्यशरीरस्यैव भोगश्रुतेः "स एकधा भवती" ति सशरीरत्वश्रुतेश्चेत्युभयविधश्रवणाद्धेतोर्मुक्तस्य शरीरादिभावाभावोभयविधं भगवान्बादरायणो मन्यते। तथात्वे चोभयश्रुतिर्नो विरुद्ध्यते। तत्र दृष्टान्तमाह। द्वादशाहवदिति। यथा द्वादशाहमृद्धिकामा उपेयुः द्वादशाहेन प्रजाकामं याजयेदि" ति उपैतियजतिभ्यां सङ्कल्पभेदेन द्वादशाहस्य सत्रत्वमहीनत्वं च भवति। तद्वत् शरीरादिमत्त्वं तदभावश्च भगवत्सङ्कल्पाधीनं मुक्तस्येति ज्ञेयम्, तस्य सत्यसङ्कल्पत्वयोगेऽपि शरीरादिसर्जने प्रवृत्त्यभावादित्यर्थः॥ १२॥

ननु देहाद्यभावे कथं भोगसिद्धिरिति ? चेत्तत्राह—

## तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४ । ४ । १३ ॥

स्वसृष्टतन्वाद्युपकरणाभावे भगवत्सृष्टैरुपकरणैरेवं मुक्तस्य सर्वभोगोपपत्तेः सन्ध्यवत्स्वप्नवत्. यथास्वप्ने पूर्वोक्तरीत्या परमेश्वरसृष्टैः शरीरेन्द्रियैर्बद्धजीवो भुङ्क्ते, तद्वन्मुक्तोऽपीत्यर्थः। नच स्वप्ने जीव एव स्रष्टेति वाच्यं, पूर्वमेव विस्तरशो निरस्तत्वात्। तस्माल्लीलाप्रवृत्तपरमेश्वरसृष्टैरेव पितृलोकादिभिर्मुक्तस्यापि लीलारसास्वादः सूपपन्न इत्यर्थः॥१३॥

---

सिद्धान्तसूत्रमवतारयति। अथेति। अतः पदं व्याचष्टे। अतः सङ्कल्पादेवेतिश्रुतेरिति। प्रकारान्तरेणातश्शब्दार्थं विवृणोति। यद्वेति। ततः किमित्यत्राह। तथात्वेति। मुक्तस्य सशरीरत्वेऽशरीरत्व इत्यर्थः। उभयश्रुतिः=सशरीरत्वाशरीरत्वश्रुतिः। "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति अशरीरत्वप्रतिपादिका श्रुतिः। स एकधा भवति त्रिधा भवति पञ्चधा भवतीति श्रुतिर्मुक्तस्य शरीरत्वबोधिका। उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति। तत्रदृष्टान्तमाह इति। प्रायणीयोऽतिरात्रः प्रथममहः पृष्ठ्यः षडहः। त्रयश्छन्दोमा अविवाक्यमेकमहः। उदयनीयोऽतिरात्रश्चरममहः। इत्येवरूपोऽहर्गणो द्वादशाहः सच उपैतियजतिचोदनाभ्यां सत्ररूपोऽहीनश्च, अहीनेहि 'एको द्वौ बहवो वा हीने न यजेरन्' इतिकर्तृगतसङ्ख्यानियमाभावः। तथा न दीक्षिता याजयेरन् इति याजकेषु दीक्षितत्वप्रतिषेधः। इत्येवमादयो धर्मा व्यवस्थिताः। सत्रे "गृहपतिसप्तदशाश्चतुर्विंशतिपरमाः स्वयमृत्विजा ब्राह्मणास्सत्रमुपेयुः" इति सप्तदशसङ्ख्याया अन्यूनत्वनियमः। दीक्षितानामेव परस्परयाजकत्वमित्यादयो धर्मा व्यवस्थिताः। ततश्च यथाद्विरूपत्वं द्वादशाहस्य। एवं मुक्तस्यापि स देहत्वं विदेहत्वञ्च प्रामाणिकमित्येवं रूपद्वये प्रामाणिके सति यथेच्छावशेनाहीनसत्रान्यतरपरिग्रहः। एवं सङ्कल्पवशेन सदेहत्वविदेहत्वान्यतरपरिग्रह इतिभावः। १२॥

अनन्तरसूत्रमवतारयति। नन्विति। भगवत्सृष्टैः=अद्वारकसृष्टैरित्यर्थः। सत्यसङ्कल्पोऽपि स्वयं न सृजति यथा स्वप्न इत्याह। यथास्वप्न इति। पूर्वमेवेति। "अथ रथान् रथयोगान् पथः सृजते सहि कर्त्ता" इत्यारभ्य अथवेशान्तान् रथयोगान् पुष्करिण्यस्स्रवन्त्यस्सृजत सहि कर्ता इत्यादिना स्वप्नेचेश्वरस्य सृष्टैः रथाद्युपकरणैः प्रत्यगात्मा भुङ्क्ते तथा मुक्तोऽपीत्यर्थः॥ १३॥

## भावे जाग्रद्वत् ॥ ४ । ४ । १४ ॥

स्वसृष्टतन्वादिपितृलोकादिभावे जाग्रत्पुरुषभोगवन्मुक्तस्य लीलारसभोगोपपत्तिः। यथा परमेश्वरो लीलारसार्थं वसुदेवादिपितृलोकं सृजते। सृष्ट्वा च तैर्मनुष्यधर्मलीलारसं भुङ्क्ते। तथा मुक्तानामपि पितृलोकादिकं स्वलीलार्थं स्वयमेव सृष्ट्वा, स्वसृष्टैकदेश-मुक्तपितृलोकादिकं तान्भोजयति। कदाचिच्च मुक्ता अपि परमात्मप्रसादेनाविर्भूतसत्य सङ्कल्पवत्तया परमात्मलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमनवद्यम् ॥१४॥

अथ मुक्तात्मनो ऽणुपरिमाणत्वे ऽपि धर्मभूतज्ञानेनानेकशरीरव्यापकतामाह—

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ ४ । ४ । १५ ॥

यथा प्रदीप एक एवैकस्मिन्प्रदेशे स्थितो ऽपि स्वप्रभया ऽनेकदेशेष्वाविशति। तथा ऽसौ स्वरूपेणाणुत्वे ऽपि धर्मभूतचैतन्येनानेकशरीरेषु व्याप्य, तद्गतभोगादिकमनुभव-तीति। तथाहि दर्शयति श्रुतिः। "स चानन्त्याय कल्पते" इति ज्ञानसङ्कोचासङ्कोचाभ्यां बद्धमुक्तयोर्विशेषो बोध्यः। तत्र बद्धस्य भोगे तत्तत्कर्मैव नियामकं, मुक्तस्य तु परमात्म-सङ्कल्पायत्तस्वेच्छैवेति भावः ॥ १५ ॥

ननु "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति श्रुत्या ज्ञानसामान्यनिषेधात्कथं मुक्तस्य सर्वज्ञत्वमिति चेत्तत्राह—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४ । ४ । १६ ॥

नहीदं वाक्यमुक्तविषयं, यत्स्वाप्ययसम्पत्त्योरन्यतरापेक्षं तत्। तत्र स्वाप्ययः सुषुप्तिः "स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" (छा० ६।८।१) इति श्रुतेः सम्प-

---

सूत्रार्थं विवृणोति। स्वसृष्टतन्वादीति। ननु मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभावादन्यपरत्वं ब्रह्मणि भोग्यतावैकल्यं पित्रादीच्छया अकर्मकर्तृत्वञ्च न स्यादिति शङ्कायामाह। परमेश्वरोऽपीति। पितृ-लोकादिसृष्टेः भगवल्लीलान्तर्गतत्वे निदर्शनं दशरथादिसृष्टिः तदन्तर्गतत्वादेव पित्रादिसृष्टावपि मुक्तस्य न ब्रह्मानुभवादन्यपरत्वं ब्रह्मसम्बन्धिलीलाविशेषस्यानुकूलत्वं ब्रह्मणः प्रियतमत्वातिशयनिबन्धनम्। अतएव न ब्रह्मणः प्राप्यत्ववैगुण्यं मुक्तात्मनां पित्रादीच्छया अकर्मकर्तृत्वं भगवतो वासुदेवकल्पनेच्छाया इवोपपन्न-मित्यर्थः ॥ १४ ॥

उत्तरसूत्रमवतारयति। अथमुक्तात्मन इति। संसारदशायां सर्वाङ्गीणसुखानुभवोपपादकैकैकदेह-व्याप्तियोगस्यैव मुक्तिदशायामनेकदेहव्याप्तियोग्यस्य धर्मज्ञानविकासस्य सद्भावात् "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवस्स विज्ञेयस्सचानन्त्याय कल्पत इति धर्मभूतज्ञानविकासेनापरिच्छेदरूपानन्त्यं श्रूयत इतिभावः ॥ १५ ॥

अनन्तरसूत्रशङ्कामाह। नन्विति। सूत्रं व्याचष्टे। नहीदं वाक्यमिति। "प्राज्ञो नात्मना सम्प-रिष्वक्त" इति श्रुतेः सुषुप्तिमरणान्यतरावस्थाविषयत्वम्। तयोरेव हि ज्ञानाभावः प्रसिद्ध इत्यर्थः। तत्र =

त्तिश्चोत्क्रान्तिर्मरणमिति यावत्। "वाङ्मनसि सम्पद्यत" इत्यारभ्य "तेजः परस्यां देवतायामि" ति श्रवणात्। हि यतः सुषुप्तिमरणयोर्जीवस्य विशेषज्ञानाभाववत्त्वं, मोक्ष-दशायां सर्वज्ञत्वञ्च, श्रुत्यैवाविष्कृतम्। तथाहि छान्दोग्ये "नाह खल्वयं सम्प्राप्त्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी"ति सुषुप्तौ विशेषज्ञानाभावं निरूप्य तत्रैव वाक्ये मुक्तमधिकृत्य "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान्पश्यन्रमते य एते ब्रह्मलोके"इति सर्वज्ञत्वमाह "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश" इति श्रुत्यन्तरात्। मरणे च "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती" ( बृ० २।४।१४) ति विशेषज्ञानाभावमाह। विनश्यति न पश्यतीत्यर्थः एवञ्च "प्राज्ञेनात्मने" ति श्रुतेः सुषुप्तिमरणयोरन्यतरविषयकत्वान्न मुक्तपरत्वमिति मुक्तस्य ज्ञानानन्त्यमुपपन्नम् ॥१६॥ इति अभावाधिकरणम् ॥ ५ ॥

## जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥४।४।१७॥

मुक्तैश्वर्यं किं जगत्सृष्ट्यादिव्यापाररूपम्? उत परमात्मस्वरूपगुणाद्यनुभवरूपमिति? संशये, किं तावद्युक्तं? साम्यश्रुतेर्जगत्सृष्ट्यादिव्यापाररूपमिति प्राप्ते, आह। जगदिति। मुक्तस्यैश्वर्यं जगत्सृष्टिस्थितिनियमनरूपव्यापारेतरं भवितुमर्हति। कुतः? प्रकरणात्। सृष्ट्यादिनिर्णयेषु सर्वत्र परस्यैव प्रकृतत्वात्। "सदेव सौम्येदमग्र आसीत् तदैक्षत बहु स्यां प्रजायेय, यतो वा इमानि भूतानि जायन्ते ब्रह्म वा इदमग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीदि"त्यादिश्रुतेः॥ १७॥

किञ्च तत्र तत्र जगद्व्यापारप्रकरणे मुक्तस्यासन्निहितत्वादपि न तस्य सृष्ट्यादि-कर्तृत्वमिति—

---

तयोर्मध्ये। 'स्वाप्यय'इति व्याख्येयपदं शेषं तस्य व्याख्यानम्। "सता सोम्य तदा सम्पन्नो भवती"त्यादिभिः स्वापे ब्रह्मसम्पत्ति शब्दस्य भूरिप्रयोगविषयत्वं नतु मृताविव्यतस्तत्र प्रमाणं दर्शयति। वाङ्मनसि सम्पद्यत इत्यादिना। अस्य वाक्यस्य मरणविषयत्वप्रकाशनाय वाङ्मनसीत्यादिकमुक्तम् तेजः परस्यां देवतायामिति च सुषुप्तिमरणयोः ब्रह्मसम्पत्तिश्चानुसन्धेया। सुषुप्तौ विशेषज्ञानाभावबोधिकां श्रुतिमुदाहरति। नाहख-ल्वयमेवमिति। मुक्तौ सर्वज्ञत्वबोधिकां श्रुतिमाह। स वाएष एतेनेति। मृतिदशायां विशेषज्ञानाभावसमर्पिकां श्रुतिं पठति। एतेभ्योभूतेभ्य इति। फलितार्थं दर्शयति। एवञ्चेति ॥ १६ ॥ इत्यभावाधिकरणम्।

अथ जगद्व्यापारवर्ज्जाधिकरणम्।

विचाराङ्गभूतं संशयमाह। मुक्तैश्वर्यमिति। प्रश्नपूर्वकं पूर्वपक्षं गृह्णाति। किं तावद्युक्तमिति। साम्यश्रुतेरिति=परमसाम्यमुपैतीतिश्रुतेरित्यर्थः। पूर्वपक्षमनूद्यसिद्धान्तयति। इतिप्राप्तआह इति। प्रतिज्ञां दर्शयति। मुक्तस्येति। हेतुवाक्यमवतारयति। कुत इति। तदर्थं विवृणोति। सृष्ट्यादीति। प्रकरणगतां कतिपयश्रुतिमुदाहरति। सदेवेत्यादिना। जगत्कारणत्वस्य ब्रह्मलक्षणश्रुत्या जगत्स्रष्टुरेकत्वश्रुत्याचविरोधात्। जगत्सृष्ट्यादिवर्जमेवमुक्तैश्वर्य्यम्। तस्माद्यथाप्रकरणं सर्वेश्वरासाधारणं निखिलजगद्व्यापार इतिभावः। असन्निहितत्वादिति सूत्रखण्डं व्याचष्टे। किञ्चेत्यादिना ॥ १७ ॥

## प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥४।४।१८॥

प्रत्यक्षं श्रुतिः। ननु "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती" (छा० ७।२५।१) ति छान्दोग्ये "आप्नोति स्वाराज्यं (तै० १।६।२), सर्वेऽस्मै देवा बलिमावहन्ती" (तै०१।५।३) ति तैत्तिरीयके च मुक्तस्य प्रत्यक्षेण श्रुत्या जगद्व्यापारोपदेशात्तद्वर्जनं न युक्तिमिति चेत्तन्न। कुतः? आधिकारिकमण्डलस्थोक्तेः। आधिकारिका लोकनियमनाधिकारे नियुक्ता हिरण्यगर्भादयस्तेषां मण्डलानि लोकास्तत्स्थभोगा मुक्तानुभवविषया इति तया श्रुत्योच्यते॥ १८॥

एवं तर्हि बद्धमुक्तयोः को वा विशेष इति चेत्तत्राह—

## विकारावर्त्ति च तथाहि स्थितिमाह ॥४।४।१९॥

चशब्दोऽवधारणे। विकारे जन्मादिषट्केन वर्त्तत इति विकारावर्त्ति जन्मादिविकारशून्यं निखिलदोषास्पृष्टमाहात्म्यं निरतिशयकल्याणगुणाब्धिसविभूतिकं ब्रह्मैव मुक्तोऽनुभवति। तद्विभूत्यन्तर्गतत्वेन हिरण्यगर्भादिभोगानुभवोऽप्यविरुद्धस्तदाश्रितत्वात्सर्वस्येति भावः। तथाहि मुक्तस्थितिमाह श्रुतिः। "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये निरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति, रसो वै स, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि" त्याद्याः सविभूतिकब्रह्मानुभवितृत्वेनैव सर्वानुभवितृत्वान्मुक्तस्य "तस्य सर्वेषु लोकेषु कामचारो भवती" (छा० ७।२५।२) त्याद्युच्यते ।१९॥

## दर्शतयश्चैवं प्रत्यक्षानुमाने ॥ ४ । ४ । २० ॥

परस्यैव जगत्कारणत्वसर्वनियन्तृत्वादिव्यापारस्वान्तन्त्र्यं, न मुक्तस्य। तस्य तु परब्रह्मानुभवितृत्वमेवेत्येवं श्रुतिस्मृती दर्शयतः। "एष सर्वेश्वरः एषः भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय एतस्य वा अक्षरस्य प्रशासने गार्गी" त्यादिश्रुतिः

---

सूत्रस्य पूर्वपक्षभागं विवृणोति। प्रत्यक्षं श्रुतिरिति। श्रुतिमुदाहरति। ननु स स्वराडिति। मुक्तस्यैश्वर्यं न जगद्व्यापारवर्जमिति पूर्वपक्षं कृत्वा समाधत्ते। तन्नेति। सर्वलोक सञ्चारोऽपि न नियमार्थः। किन्तु-तत्तल्लोकगतभोगप्राप्त्यर्थः कामान्निकामकामीतिविशेषणादितिभावः॥ १८॥

उत्तरसूत्रमवतारयति। एवमिति। संसारिवन्मुक्तोऽपि भोगान् भुङ्क्तेचेत् को वा तयोर्विशेष। मुक्तस्य जन्मवृद्ध्यादिविकारवत् क्षुद्रभोगलिप्सयालोकपरिभ्रमणे तद्योग्य ब्रह्मानन्दस्य निरतिशयत्वहानिरितिभावः। सूत्राक्षराणि व्याचष्टे। च शब्दइति। नहि संसारिवत् मुक्तस्य तत्तल्लोकानुभवालौकिकसुखतयेष्यते। किन्तु-सविभूतिकब्रह्मानन्दानुप्रविष्टतयेत्यर्थः। श्रुतिवाक्यमुदाहरति। यदेति॥ १९॥

मुक्तस्यब्रह्मानुभवितृत्वमेव नतु नियन्तृत्वादिकं जगत्कारणत्वन्तु लक्ष्मीपतित्ववदसाधारणम्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"। "अप एव ससर्जादौ तासु वीर्यमवासृजदि" त्यादि श्रुतिस्मृतिभ्यां तथैव प्रति-

"अहं सर्वस्य प्रभवः, मत्तः परतरं नान्यदि" त्यादिका स्मृतिः ॥ २० ॥

इतश्च जगद्व्यापारेतरं मुक्तैश्वर्यमित्याह—

## भोगमात्रसाम्यलिङ्गाच्च ॥ ४ । ४ । २१ ॥

यथा सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयस्य परमात्मनः स्वविभूत्यनुभवानन्दरूप-भोगः सदैकरसस्तथा तन्मात्रभोगः सविभूतिब्रह्मयाथात्म्यानुभवितॄणां मुक्तानामपि समः। नतु स्वरूपेण ते ब्रह्मसमास्तेषामणुपरिमाणकत्वादतो भोगमात्रसाम्याल्लिङ्गात् जगद्व्यापार-वर्ज्जं मुक्तानामैश्वर्यमिति निश्चीयते। "ब्रह्मविदाप्नोति परमि" त्युपक्रम्य "सो ऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"ति "परमं साम्यमुपैती" त्यादिश्रुतिभ्यः मात्र-पदान्मुक्तगम्यैश्वर्यस्य स्वतन्त्रताव्यावृत्तिरपि बोध्यते ॥ २१ ॥

तत्र पुनरावृत्तिशङ्कां वारयति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४ । ४ । २२ ॥

एवं परब्रह्मोपासनया विमुक्तनिःशेषाविद्यार्गलस्य तल्लोकं गतस्य तद्भावमापन्नस्य न तस्मात्पुनरावृत्तिर्भवति। कुतः? शब्दात्। "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्त्तते एतदमृतम-भयमेतत्परायणमेतस्मान्न पुनरावर्त्तते अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामा-नाप्त्वा ऽमृतः समभवत् तयोर्द्ध्वमायन्नमृतत्वमेति इह न पुनरावृत्तिरि" त्यादिपरविद्या-प्रकरणगतश्रुतिभ्यः "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते, तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गे ऽपि नोपजायन्ते प्रलये न व्यथन्ति चे" त्यादिस्मृतिभ्यश्च। अयम्भावः यथा परमात्मा सर्वज्ञः सर्वकारणं सर्वसद्गुणसमुद्रः सर्वनियन्तेति शब्दादवगम्यते, तथा निवृत्तसर्वाविद्यस्य परब्रह्मभावापन्नस्य मुक्तस्यापि न पुनरावृत्तिरिति शब्दादेवावगम्यते। परमात्मा ऽपि तादृशं स्वातिप्रियं ज्ञानिनं

---

पादनादित्यर्थः ॥ २० ॥

परमसाम्यश्रवणं सविभूतकब्रह्मानन्दानुभवरूपभोगसाम्यमात्रविषयं सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिते"ति तन्मात्र श्रवणात् एवं ब्रह्मासाधारणं जगद्व्यापारं मुक्ताः "सत्यसङ्कल्पा अपि कथमाशासेरन् ते च तेषां सत्यसङ्कल्पत्वादिगुणा मुक्तावपि भगवत्परतन्त्रा इति "तस्य चानित्यत्वादि"ति द्वितीयाध्यायसूत्रेण प्रतिपादितम्। मुक्तानां सत्यसङ्कल्पताऽपि भगवत्परिचरणोपयोगिस्वदेह पित्राद्युपकरण सृष्टिमात्रविषयतेतिसर्वेश्वरस्य भगवतः पुरुषोत्तमस्यैव जगत्सृष्ट्यादिव्यापार इत्यर्थः ॥ २१ ॥

मुक्तानामैश्वर्यं यदि परमेश्वराधीनं तदा तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिः स्यादित्याशयनोत्तरसूत्रम-

लब्ध्वा न कदाचिदपि स्वस्मात्स्वलोकाच्च वियोक्तुमिच्छतीति स्वयमेवाह "प्रियोहि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इत्यादिना। सूत्रावृत्तिः शास्त्रपरिसमाप्तिद्योतनार्था ॥२२॥ इति जगद्व्यापारवर्ज्जाधिकरणम्।

---

वतारयति। तत्र पुनरावृत्तीति। सूत्रार्थं विवृणोति। एवं परब्रह्मोपासनयेति। श्रुतिवाक्यान्युदाहरति। एतेन प्रतिपद्यमाना इमं मानवमिति ॥ २२ ॥

संग्रहकारिकाः

ऐश्वर्य्यं मुक्तिभाजामपि निखिलजगद्व्यापृतिव्यापकं स्या,
दाम्नाता ब्रह्मणा यत्परमसदृशता सत्यसङ्कल्पताच।
कामान्निकामरूपीसकलभुवनसञ्चारशालीस्वराडि,
त्यादिष्टं यत्ततोऽपिस्फुटमिहजगतान्तादधीन्यप्रतीतिः ॥

मैवं ब्रह्मप्रकरणगताः सृष्टिसंहारमुख्याः। सम्बध्यन्ते कथमपि न तैः सन्निधान प्रसङ्गे। तत्तल्लोकप्रथितविषयाभोगभोगैकभावं नैवाचष्टे नियमपितृतां लोकसञ्चार सूक्तिः। हेयाअपि मुक्तानां विकारलोकं स्थिता भूशंभोगाः। ब्रह्मविभूतितयास्तु भोग्यास्सविभूतिकं तदनुभवति। मुक्तानां सत्यसङ्कल्पतोक्ता तत्सङ्कल्पाधीनसत्तैव साऽपि। ते चान्ये ये तद्गुणास्सर्वएतेऽप्यापद्यन्ते सर्वदातादधीन्यम्। इतिजगद्व्यापारवर्ज्जाधिकरणम्।

वृन्दारण्य निविष्टं विलुठितमाभीरवारनारीभिः।
सत्यचिदानन्दघनं ब्रह्म नराकारमालम्बे ॥ १ ॥
चिदानन्दाकारं जलदरुचिसारं श्रुतिगिरां,
व्रजस्त्रीणां हारं भवजलधिपारं कृतधियाम्।
विहन्तुं भूभारं विदधदवतारं मुहुरहो,
अहो बारम्बारं भजत कुशलारम्भकृतिनः ॥ २ ॥
लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्या-
ंसे देव्याः, पुलकनिविडे सन्निविष्टान्यबाहुः।
मेघश्यामो जयति ललितं मेखलादत्तवेणुः,
गुञ्जापीडस्फुरितचिकुरो राधिकाभावमग्नः ॥ ३ ॥
नक्षत्राणामिव शशधरः शोभमानः कलाभिः,
श्रीकालिन्द्याः विशदपुलिने सैकतेऽस्मिन्सुरम्ये।
किं भक्तानां परमरसिकोभावुको भावपूर्णः,
तस्मिन्नत्रैसजलजलदः किं रविर्लोकचक्षुः ॥ ४ ॥
विद्वन्मानस हंसकः सुरतरुः प्रेम्णां चयो मूर्तिमान्,
राशिं किं महसामहोसुमनसां मूर्त्तं परं भावुकः।

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्य श्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुण-
पद्ममकरन्दभृङ्गेण जगद्विजयि श्रीद श्रीकेशवकाश्मीरिभट्टेन सङ्गृहीतायां
श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायचतुर्थपाद-
विवरणम् ॥ ४ ॥

---

श्रीस्वामीहरिदासएवसुकृतं कारुण्यरत्नाकरः,
प्रेमार्द्रोरसिको गुरुर्विजयतां पीयूष वर्षः कृतिः ॥ ५ ॥
उपलभ्यवहून् ग्रन्थान् पूर्वाचार्य्योक्तिभिर्मुदा ।
कृतामोलकरामेण प्रभाटीका सतां मुदे ॥ ६ ॥

इतिश्रीसनन्दनसम्प्रदायानुयायिनिखिलरसिककमलकुलभानु श्रीस्वामिहरिदासपदाश्रिताश्रिता-
नुगामिना विदुषाअमोलकरामेण सङ्गृहीतायां वेदान्तकौस्तुभप्रभाभाव-
दीपिकायां टीकायां चतुर्थाध्यायेचतुर्थपादः समाप्तः ।



